वामनजयादित्यविरचिता

# काशिका

## न्यास - पदमञ्जरी - भावबोधिनी - सहिता

चतुर्थो भागः

सम्पादकौ
डा. जयशङ्कर लाल त्रिपाठी
डा. सुधाकर मालवीयः

तारा प्रिण्टिंग वर्क्स

वामनजयादित्यविरचिता

# का शि का

## न्यास - पदमञ्जरी - भावबोधिनी - सहिता

चतुर्थो भागः

[ ३.३—४.१ ]

सम्पादकौ

डा. जयशङ्कर लाल त्रिपाठी

डा. सुधाकर मालवीयः

तारा प्रिंटिंग वर्क्स

प्राच्यभारतीग्रन्थमाला—२०

*Prācyabhāratīgranthamālā—20*

# का शि का

डॉ० जयशङ्कर लाल त्रिपाठी

डॉ० सुधाकर मालवीयः

*Prācyabhāratīgranthamālā—20*

# KĀŚIKĀ

(A COMMENTARY ON PĀṆINI'S GRAMMAR)

of

VĀMANA & JAYĀDITYA

with

NYĀSA or VIVARAṆAPAÑJIKĀ

of

JINENDRABUDDHI

and

PADAMAÑJARĪ

of

HARADATTA MIŚRA

with

BHĀVABODHINĪ

Hindi Exposition by Dr. JAYA SHANKAR LAL TRIPATHI

*Critically Edited by* :

**Dr. Jaya Shankar Lal Tripathi**
Vyākaraṇācārya (Goldmedalist), M. A., Ph, D., D. Litt.,

**and**

**Dr. Sudhakar Malaviya**
Sahityācārya, M. A., Ph. D.,

Department of Sanskrit, Banaras Hindu University

*Foreword by*

**Prof. Biswanath Bhattacharya**
*Mayūrabhañja Professor & Head, Department of Sanskrit, Banaras Hindu University*

Volume IV

[Adhyāyas 3.3—4.1]

TARA PRINTING WORKS

VARANASI

1987

प्राच्यभारतीग्रन्थमाला—२०

श्रीमद्वामन-जयादित्यविरचिता

पाणिनीयाष्टाध्यायीसूत्रवृत्तिः

# का शि का

श्रीजिनेन्द्रबुद्धिविरचितया 'न्यास'परपर्यायकाशिकाविवरणपञ्जिकाख्यया

विद्वद्वरश्रीहरदत्तमिश्रविरचित-'पदमञ्जरी'-समाख्यया च व्याख्यया सहिता

डॉ० जयशङ्करलालत्रिपाठिविरचितया 'भावबोधिनी' हिन्दीव्याख्यया च विभूषिता

संपादकौ

डॉ० जयशङ्कर लाल त्रिपाठी

व्याकरणाचार्यः ( लब्धस्वर्णपदकः ), एम० ए०, पी-एच्० डी०, डी० लिट्०

डॉ० सुधाकर मालवीयः

साहित्याचार्यः, एम० ए०, पी-एच्० डी०

संस्कृत-विभागः, काशी हिन्दू विश्वविद्यालयः

प्रस्तावकः

डॉ० विश्वनाथ भट्टाचार्यः

मयूरभञ्ज प्रोफेसर, विभागाध्यक्षः, संस्कृत-विभागः, कला-संकायः

काशी हिन्दू विश्वविद्यालयः

## चतुर्थो भागः

( ३.३—४.१ अध्यायात्मकः )

तारा प्रिंटिंग वर्क्स

वा रा ण सी

१९८७ तमः खिष्टाब्दः ]

[ २०४४ तमो वैक्रमाब्दः

प्रकाशकः
तारा प्रिंटिंग वर्क्स
कमच्छा
वाराणसी–२२१०१० (उ० प्र०)

*Published by*
Tara Printing Works
Kamachha
Varanasi-221010 (U. P.)

प्रथमं संस्करणम्
मूल्यम् रू० ८५.००
( षडशीतिरूप्यकाणि )

*First Edition*
Price : Rs. 85.00
(Rupees Eightyfive only)

मुद्रकः
तारा प्रिंटिंग वर्क्स
कमच्छा, वाराणसी

*Printed at*
Tara Printing Works
Kamachha, Varanasi

## PUBLISHERS' NOTE

We have the pleasure in presenting the fourth volume of Kāśikā with Nyāsa and Padamañjarī along with the new Hindi exposition Bhāvabodhinī by Dr. Jaya Shankar Lal Tripathi.

The learned editors of the present edition—Dr. Jaya Shankar Lal Tripathi and Dr. Sudhakar Malaviya of the Sanskrit Department, Banaras Hindu University have taken great pains and care in editing the text and the Hindi exposition. They have provided, in addition to the Hindi exposition, critical notes and references which, we are sure, will render this edition more useful and valuable than all the earlier editions.

The whole work shall be completed in ten Volumes as follows :—

| *Volume* | *Adhyāya/Pāda* | *to* | *Adhyāya/Pāda* |
|---|---|---|---|
| I | 1 | — | 1/2 |
| II | 1/3 | — | 2/2 |
| III | 2/3 | — | 3/2 |
| IV | 3/3 | — | 4/1 |
| V | 4/2 | — | 5/1 |
| VI | 5/2 | — | 6/1 |
| VII | 6/2 | — | 6 |
| VIII | 7 | | |
| IX | 8 | | |
| X | Indices | | |

We hope that the present edition shall be appreciated and warmly welcomed by students and scholars alike.

शब्दार्थ-सम्बन्ध-निमित्त-तत्त्वं
वाच्या विशेषेऽपि च साध्वसाधून् ।
साधु-प्रयोगानुमितांश्च शिष्टान्
न वेद यो व्याकरणं न वेद ॥

आपः पवित्रं परमं पृथिव्या-
मपां पवित्रं परमं च मन्त्राः ।
तेषां च सामर्ग्यजुषां पवित्रं
महर्षयो व्याकरणं निराहुः ॥

## FOREWORD

Writing a foreword for the *Fourth* Volume of the *Kāśikavṛtti* provides me with a great pleasure and a sense of academic achievement. Dr. Jaya Shankar Lal Tripathi, a senior colleague and Dr. Sudhakar Malaviya, the Senior Research Assistant in the Department of Sanskrit have undertaken the publication of the renowned *Vṛtti* on Paninian *Aṣṭādhyāyī* by Vāmana and Jayāditya along with the two well known Commentaries—*Nyāsa* by Jinendrabuddhi and *Padamañjarī* by Haradatta. I congratulate them for undertaking such an ambitious project which, when completed, will meet a long-felt need of providing a thoroughly dependable edition of the basic texts of *Aṣṭādhyāyī* and *Kāśikā* along with two most important commentaries.

In addition to the meticulous care taken by the editors in printing the text as flawlessly as possible, they have provided useful critical notes and references whenever necessary and extensive indices to render the edition almost indispensible for the students following especially the *Sūtra-Vṛtti-Bhāṣya* mode of grammatical study and researchers in general. Dr. Tripathi has also added a Hindi rendering of the *Vṛtti* which happens to be a pioneering effort. Translation of *Śāstras*, especially of one like the *Vyākaraṇa* where extreme precision is the soul of style, is a difficult and different job. I am happy to note that Dr. Tripathi with his firm grounding in the Śāstra has given an exposition which, apart from being faithful to the text, has done full justice to the purport as well.

Publication of the *Kāśikā* as planned is a stupendous work and the learned editors happen to be ideally qualified to fulfill the same. While congratulating both of them, I only hope and pray that they succeed in bringing out all the ten volumes as early as possible. I am sure that the entire Sanskritic world will welcome the grand scholarly venture.

**BISWANATH BHATTACHARYA**
*Professor & Head, Department of Sanskrit*

*Banaras Hindu University*
*September 26, 1984*

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ।।

(वा० प० १.१)

आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।
प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः ।।

(वा० प० १.११)

अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् ।
तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ।।

(वा० प० १.१३)

# सम्पादकीयम्

देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ।। (ऋ० ८.१००.११)

विश्वस्य प्राचीनतमास्वखिलासु भाषासु संस्कृतं सर्वा अपि अतिशेते इत्यत्र न कस्यापि वैमत्यम् । अस्य वैशिष्ट्यस्य कारणेषु अस्या व्याकरणं प्रामुख्यं भजते । येनाद्यापीयं भाषाऽक्षुण्णरूपेण विराजमाना सर्वान् सम्मोहयति । तत्र सत्सु बहुषु व्याकरणेषु शिवप्रसादादधिगतवैशिष्ट्यं पाणिनीयं व्याकरणं लौकिक-वैदिकोभय-शब्दानां नियामकम् । अस्य वैशिष्ट्यस्य सर्वविदिततया न तत्र किमपि लेखनीयमवशिष्टम् ।

महर्षिः पाणिनिः (ख्रि० पू० ५०० वर्षकालिकः) स्वकीययाऽद्भुत-प्रतिभया सकलशब्दशास्त्रसमुद्रं समुन्मथ्याष्टस्वध्यायेषु नवनीतमिवापेक्षितं सर्वं व्याकरणं सूत्ररूपेण प्रोक्तवान् । अत्र सूत्रे उक्तानुक्तदुरुक्तार्थान् विवेचयता समीक्षणत्वेन वार्त्तिकानि कात्यायनेन (ख्रि० पू० ३०० वर्षकालिकेन) विरचितानि । सूत्राणि वार्त्ति-काणि चैतदुभयमपि संक्षिप्तरूपेण व्याकरणसिद्धान्तान् प्रत्यपादयत्, येनाभिप्रायबोधने काठिन्यमन्वभूयत । अतो महर्षिणा पतञ्जलिना (ख्रि० पू० १५०) अनुपमे स्वकीये महाभाष्ये सरलया भावगम्भीरया च शैल्या विशदरूपेण विषयाणां प्रतिपादनमकारि । अस्यां स्थितौ एकत्र पाणिनेः संक्षिप्ता शैली, अपरत्र च महाभाष्यकारस्य अतिविस्तृता बहुपरिश्रम-साध्या च शैली । अत्र मध्यममार्गेण व्याकरणशास्त्रस्य सर्वेषां विषयाणां परिज्ञानाय कैश्चिद् वृत्तिकारैः प्रयासो व्यधायि । तत्र वामन-जयादित्याभ्यां (ख्रि० ७००) महाभाष्यसमाश्रिता, सरलरीत्या सोदाहरणसूत्रव्याख्यानप्रतिपादनपरापेक्षितभावप्रकाशिका **'काशिका'** नाम्नी वृत्तिर्विरचिता । सा चेदानीमियं वृत्तिः पाणिनीयाष्टाध्याय्या उपलब्धवृत्तिषु प्राचीनतमा । अस्यां प्रतिसूत्रम्-अनुवृत्त्युदाहरण-प्रत्युदाहरणानि शङ्कासमाधानपुरःसराणि समुपलभ्यन्ते ।

अथेदानीं सप्रश्रयं सामोदं च विद्वज्जनसमक्षं प्रस्तूयते—आचार्यजिनेन्द्रबुद्धिपादविरचितया **न्यासा**-परपर्याय 'काशिकाविवरणपञ्जिकाख्यया' श्रीविद्वद्वरहरदत्तमिश्रविरचितया **पदमञ्जरी**समाख्यया व्याख्यया च सहितायाः, अथ च **भावबोधिनी**त्याख्यया हिन्दीव्याख्यया च विभूषितायाः—**'काशिका'** नाम वृत्तेः तृतीयाध्यायस्य तृतीयपादतः चतुर्थाध्यायस्य प्रथमपादपर्यन्तः चतुर्थोभागः ।

काशिकावृत्तेः वामनजयादित्ययोः प्रणेतृत्वविषये विचिकित्सन्ति विद्वांसः—केन कियानंशो विरचित इति । अत्र विषये मतत्रयं दृश्यते—१. आदितः पञ्चाध्यायाः जयादित्येन शेषास्त्रयो वामनेन विरचिता इति । २. आदितश्चतुर्थाध्यायपर्यन्ता वृत्तिः जयादित्येन विरचिता शेषा च वामनेनेति । ३. सम्पूर्णा वृत्तिः पृथक्-पृथक् विरचिता इति । परम् अन्येन केनचित् एकत्र निवेशिता । अस्मिन् विषये गवेषणात्मको विचारः प्रथमभागस्य भूमिकायां द्रष्टव्यः ।

संस्करणस्यास्य वैशिष्ट्यानि—१. न्यास-पदमञ्जरी-समाश्रिता सकलकाशिकावृत्तेः विशदा 'भाव-बोधिनी' नामधेयाऽभिनवापूर्वा हिन्दीव्याख्या । तत्र च सूत्राणां विस्तृतव्याख्यानं प्रदर्श्य प्रक्रियाज्ञानसौकर्याय प्रकृति-प्रत्ययादिनिर्देशपुरस्सरं व्युत्पादनम्, अथ च 'विमर्श' इत्येतदन्तर्गतं गम्भीरविषयविवेचनं जिज्ञासु-शङ्का-समाधानाय समायोजितम् । २. काशिकावृत्तावुपलब्धानामुद्धरणानामाकरग्रन्थेभ्यः संशोधनं विधाय मूलस्थान-निर्देशपुरस्सरं संयोजनम् । ३. वृत्तावुदाहरणत्वेनोद्धृतानां वैदिकपाठानां स्वराङ्कनसहिता प्रस्तुतिः । ४. न्यासस्य पदमञ्जर्याश्च विविधपाठानां समीक्षणपूर्वकं सम्पादनम् । ५. टीकाद्वये उपलब्धानामुद्धरणानां बाहुल्येन मूलनिर्देशः ।

तत्र तावत् तत्तत्पाठसंशोधनार्थं यानि पुस्तकानि प्रयुक्तानि दृष्टानि वास्माभिः नामग्राहं तानि निर्दिश्यन्ते—

(i) **काशिकामूलपाठसमीक्षार्थम्**—

(क) हस्तलिखितो ग्रन्थः सरस्वतीभवनपुस्तकालयस्थः। १, ३-४ अध्यायाः। क्रमसंख्या ३८०९९। लिपिकालः १८३८।

(ख) हस्तलिखितो ग्रन्थः सरस्वतीभवनपुस्तकालयस्थः ('काशिका' पदमञ्जरी-सहिता)। क्रमसंख्या ३८०५६।

(ग) पण्डितपत्रस्याधारेण काश्यां तारायन्त्रालये मुद्रितं द्वितीयं संस्करणम्। पं० बालशास्त्रिभिः संशोधितम्।

(घ) 'काशिका' चौखम्बासंस्कृतसीरीजमुद्रितः ग्रन्थः। पं० ब्रह्मदत्तजिज्ञासुमहोदयैः सम्पादितः १९५२।

(ङ) काशीस्थतारायन्त्रालये मुद्रितः न्यास-पदमञ्जरीसहिता 'काशिका' ग्रन्थः। १९६५-६७ ख्रि०।

(च) 'काशिका' ग्रन्थः संस्कृतपरिषद्, उस्मानियाविश्वविद्यालयतः मुद्रितः। डा० आर्येन्द्रशर्ममहोदयैः सम्पादितः।

(ii) **'न्यास'मूलपाठसमीक्षार्थम्**—

(क) हस्तलिखितो ग्रन्थः, सरस्वतीभवनपुस्तकालयस्थः। प्रथमाध्यायः। क्रमसंख्या ३८१११। लिपिकालः १५२१।

(ख) वारेन्द्र-रिसर्च-सोसायटी, राजशाही, बंगालतः मुद्रितः। श्रीश्रीशचन्द्रचक्रवर्तिभिः सम्पादितः। १९१३-१९२५।

(ग) काशीस्थतारायन्त्रालये मुद्रितं संस्करणम्। १९६५-१९६७ ख्रि०।

(iii) **पदमञ्जरीमूलपाठसमीक्षार्थम्**—

(क) हस्तलिखितो ग्रन्थः सरस्वतीभवनपुस्तकालयस्थः। क्रमसंख्या ३७९५८। लिपिकालः १७३२ (१५३३)।

(ख) हस्तलिखितो ग्रन्थः, काशीहिन्दूविश्वविद्यालयीयसंस्कृतविभागस्थः।

(ग) काशीस्थ 'मेडिकल-हाल' यन्त्रालये मुद्रितं संस्करणम्। १९५२ वैक्रमाब्दः (१८९५ ई०)।

(घ) काशीस्थमासिकपण्डितपत्रिकायां मुद्रिता पदमञ्जरी, Vols. X-XXI, १८८८-१८९९ ख्रि०।

सुविदितमेव हि इदमस्य ग्रन्थस्याध्येतॄणां यत्—अस्मिञ्च्छास्त्रे निबद्धानि गम्भीरवाक्यान्यतिक्लिष्टानि। तथापि श्रीगुरुचरणेभ्योऽखिलविद्यापारंगतेभ्यः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य व्याकरणविभागाध्यक्षचरेभ्यः पण्डितप्रकाण्डेभ्यः श्रीमद्भ्यो मुरलीधरमिश्रमहोदयेभ्यः, श्रीमद्भ्यो भूपेन्द्रपतित्रिपाठिमहोदयेभ्यः, श्रीमद्भ्यो भूपनारायण झा महोदयेभ्यः, श्रीमद्भ्यो रामप्रसादत्रिपाठिमहोदयेभ्यः, श्रीमद्भ्यः कालिकाप्रसादशुक्लमहोदयेभ्यः यदुपलब्धं तदेवास्य संस्करणस्योपजीव्यम्।

काशीहिन्दूविश्वविद्यलयीयसंस्कृतविभागाध्यक्षाः प्राच्य-प्रतीच्योभयविधविद्यापारंगताः सूक्ष्मसमीक्षकाः श्रद्धेयाः गुरुकल्पाः डॉ० विश्वनाथ-भट्टाचार्यमहोदयाः अस्य ग्रन्थस्य प्रास्ताविकं विलिख्य अस्मान् भृशमनुगृहीतवन्त इति तेषां कृतज्ञतां प्रकटयामः।

काशीस्थ-तारायन्त्रालयाधिपतीनां दुर्लभप्राचीनसंस्कृतग्रन्थरत्नानां प्रकाशने रतानां श्रीरमाशङ्करपण्ड्या महोदयानामाभारोऽस्माभिः हृदयेन स्वीक्रियते यैः सौष्ठवसम्पन्नं सत्वरञ्चैतत् संस्करणं विद्वत्समक्षमुपस्थापितम्।

**यच्छास्त्रं निकषो सदैव विदुषां सूक्ष्मेक्षकाणां धियां यच्चाश्रित्य बुधैर्व्यधायि विपुलो व्याख्याप्रपञ्चः पुरा।**
**तत्राराजत 'काशिका'ऽतुलगुणैस्सम्मोहयन्ती बुधान् तामाश्रित्य भवेदियं कृतिरलं सन्तुष्टये वै सताम्॥**

नवरात्रम्, आश्विनशुक्लः, २०४१ वैक्रमाब्दः
३.१०.१९८४

जयशङ्करलाल त्रिपाठी
सुधाकरमालवीयः

# भूमिका

भारतीय मनीषियों ने शब्दशास्त्र का सूक्ष्म चिन्तन प्राचीन काल से ही आरम्भ कर दिया था। उनके गम्भीर अनुशीलन के फलस्वरूप प्रातिशाख्य ग्रन्थों एवं पाणिनीय जैसे विभिन्न व्याकरणों का प्रणयन हुआ। शब्दानुशासन का विस्तृत और विशाल रूप सुदीर्घ वैदिक युग से ही प्राप्त होता है। गोपथ ब्राह्मण में पाणिनीय व्याकरण में प्रयुक्त अनेक पारिभाषिक शब्दों का विवेचन उपलब्ध होता है। निरुक्त, वाल्मीकीय रामायण और महाभारत एवं महाभाष्य से यह स्पष्टरूप से ज्ञात होता है कि अत्यन्त प्राचीन युग में ही 'व्याकरणशास्त्र' का प्रचलन आरम्भ हो गया था।

सम्प्रति पाणिनीय अष्टाध्यायी ही सर्वाङ्गपूर्ण और सर्वविद्वज्जनों द्वारा समादृत है। किन्तु अष्टाध्यायी के ही अध्ययन से यह ज्ञात होता है कि उनके भी पहले शाकटायन, आपिशलि, काश्यप, गार्ग्य, गालव, भारद्वाज, स्फोटायन आदि दस आचार्य हो चुके थे। उनके अपने सम्प्रदाय भी थे। जिनमें दो सम्प्रदाय १. ऐन्द्र और २. शैव प्रमुख रहे हैं। ऐन्द्र व्याकरण अत्यन्त विस्तृत था। शैव अर्थात् माहेश्वर सम्प्रदाय का प्रतिनिधित्व पाणिनीय व्याकरण करता है।

पाणिनि (प्रायः ५०० ई० पू०) ने अपने समय में विद्यमान संस्कृत भाषा के शब्दों के लिए सूत्र रूप में नियमों का प्रणयन किया। प्रायः ई० पू० ३०० में कात्यायन ने पाणिनीय सूत्रों पर वार्त्तिकों की रचना की। सूत्र एवं वार्त्तिकों का अत्यन्त सारगर्भित और संक्षिप्त रूप होने से उन पर समय-समय पर विभिन्न आचार्यों ने व्याख्यायें लिखीं। इनमें पतञ्जलि (प्रायः १५० ई० पू०) का महाभाष्य सर्वोत्कृष्ट कृति है।

पाणिनीय व्याकरण अत्यन्त संक्षिप्त होने से इसका विकास तीन क्रमों में परिलक्षित होता है। १. अष्टाध्यायी-क्रम, २. प्रक्रियाक्रम और ३. दार्शनिक क्रम।

**अष्टाध्यायी-क्रम** के अन्तर्गत अष्टाध्यायी में विद्यमान सूत्रों के ऊपर उसी क्रम से व्याख्यायें लिखीं गईं। इनमें वृत्ति-ग्रन्थ और भाष्य आते हैं। सम्प्रति पतञ्जलि का 'महाभाष्य' एवं वामन-जयादित्य की 'काशिका' तथा भट्टोजि दीक्षित का 'शब्द कौस्तुभ' आदि अष्टाध्यायी क्रम के प्रमुख ग्रन्थ हैं।

**प्रक्रिया-क्रम** का उद्भव ग्यारहवीं शती में हुआ। इस क्रम के अन्तर्गत अष्टाध्यायी के ही सूत्रों को शब्द-रूप-साधन की दृष्टि से अलग-अलग प्रकरणों में शब्द-साधन की प्रक्रिया के अनुसार लिखा गया है। यही पद्धति लोकप्रिय हो गई। किन्तु पुरातन क्रम अष्टाध्यायी का ही है। इस प्रक्रिया-क्रम के अन्तर्गत धर्मकीर्ति (वि० सं० ११४०) का 'रूपावतार' विमल सरस्वती (वि० सं० १४००) की 'रूपमाला', रामचन्द्राचार्य (वि० सं० १४८०) की 'प्रक्रियाकौमुदी' आदि विशिष्ट रचनाएँ हुईं। इनकी अनेक व्याख्यायें भी लिखीं गई। इस क्रम का सबसे महत्त्वपूर्ण ग्रन्थ भट्टोजि दीक्षित (ई० १५६०) का 'वैय्याकरण-सिद्धान्त-कौमुदी' है।

**दार्शनिक-क्रम** के अन्तर्गत शब्दार्थ-सम्बन्ध की मीमांसा की गई। अर्थविहीन शब्द के साधुत्व का निर्णय सम्भव नहीं है। अतः अर्थ पर भी विचार करना अत्यन्त अपेक्षित था। इसी दिशा में गम्भीर चिन्तन अन्ततः दर्शन का रूप धारण कर लेता है। इसीलिए व्याकरण भी दर्शन माना गया, और इसमें प्रमुख रूप से **'स्फोटवाद'** की चर्चा की गई। इसके सबसे प्राचीन आचार्य स्फोटायन हैं। इनके पश्चात् पतञ्जलि के महाभाष्य में विकीर्ण रूप से दार्शनिक पदार्थों की चर्चा की गई है। व्यवस्थित रूप से विवेचन भर्तृहरि के वाक्यपदीय, कौण्डभट्ट के वैय्याकरणभूषण और नागेशभट्ट की वैय्याकरण-सिद्धान्त-मञ्जूषा आदि अनेक ग्रन्थों में प्राप्त होता है।

**काशिका**—वामन और जयादित्य (ई० ७००) ने सम्मिलित रूप से अष्टाध्यायी के सूत्रों पर विस्तृत वृत्ति लिखी जो 'काशिका' नाम से प्रसिद्ध है। अष्टाध्यायी पर लिखी गई वृत्तियों में यह अत्यन्त प्राचीन है।

काशिकावृत्ति पाणिनि-व्याकरण में होने वाले परिवर्तनों के सम्बन्ध में, अपनी जानकारी के परिमाण में एवं सापेक्ष दृष्टि से अपनी स्पष्टता के लिए प्रशंसनीय है। यह वृत्ति इत्सिङ्ग (I-tsing) की भारत यात्रा से पहले लिखी गई थी। काशिका में उद्धरणों का समायोजन अनुसन्धाता के लिए सबसे महत्त्वपूर्ण विशेषता है। उन्होंने वैदिक उद्धरणों का सङ्कलन करते हुए वेद की विभिन्न शाखाओं, जैसे काठक और मैत्रायणी संहिताओं एवं पैप्पलाद संहिता से भी उद्धरण संग्रहीत किए हैं। अनेक ऐसे वार्त्तिकों का संग्रह है जो महाभाष्य में उपलब्ध नहीं हैं; जैसे प्रस्तुत चतुर्थ भाग में—१. उच्चयस्य प्रतिषेधो वक्तव्यः (पृ० ३७), २. ऋकारल्वादिभ्यः (पृ० ६७), ३. अङ्गगात्रकण्ठेभ्यः० (पृ० ३५९), ४. चटकाच्चेति वक्तव्यम् (पृ० ४६६), ५. त्यदादीनां० (पृ० ४८७), ६. दासाच्छन्दसि (पृ० ३२९), ७. यूनश्च कुत्सायाम् (पृ० ४९९), ८. वनो न दृशः (पृ० २८४), ९. श्रदन्तरो० (पृ० ७८), १०. श्वशुरयो० (पृ० ३७६), ११. स्त्रियामपत्ये लुग्वक्तव्यः (पृ० ४६६)। इनके उत्स का अनुसन्धान करना चाहिए। इसके अतिरिक्त कई सूत्रों में वार्त्तिकों का सम्मिश्रण करके अनवधानता भी सूचित होती है, जैसे 'टिड्ढाणञ्०' आदि सूत्र (पृ० २९६) और 'अध्यायन्याय' और सूत्र (पृ० ९२) इनके विषय में विशेष विवरण विमर्श में देखना चाहिए।

**न्यास**—आचार्य जिनेन्द्रबुद्धि ने ७००ई० के लगभग 'काशिका' पर 'न्यास' नामक प्रसिद्ध टीका लिखी। सम्भव है माघ द्वारा उल्लिखित 'न्यास' (२.११२) इसी टीका की ओर संकेत करता हो। न्यास की भी टीकाओं का उल्लेख मिलता है।

**पदमञ्जरी**—विद्वद्वर पं० हरदत्त मिश्र ने प्राय ९०० ई० में काशिका पर 'पदमञ्जरी' नामक अत्यन्त विद्वत्तापूर्ण टीका लिखी। यह टीका विषय की प्रौढ़ता के लिए अत्यन्त प्रसिद्ध है। इसमें काशिका के पाठभेदों पर भी गम्भीर एवं समीक्षात्मक विचार प्रस्तुत किया गया है, जैसे 'प्रमादपाठोऽयम्....सुभूयते इति पाठः' (पृ० ९५-९६)। अनेक स्थलों पर इन्होंने वृत्तिकार वामन-जयादित्य पर आक्षेप भी किया है, जैसे 'विचित्रा हि वृत्तेः कृतिर्वृत्तिकारेण' (पृ० ९२, १२१)। इन्होंने वृत्ति में जिसके उदाहरण नहीं हैं, उन्हें भी देने का प्रयास किया है, जैसे 'त्वं सुतस्य' पीतये (ऋ० १.५.६)। इस प्रकार मन्त्र में पा धातु से भी क्विन् प्रत्यय होने की बात का संग्रह पदमञ्जरीकार के गम्भीर चिन्तन का सूचक है।

काशिका का **प्रस्तुत संस्करण** संस्कृत के विद्यार्थियों, अनुसन्धित्सुओं एवं अन्य जिज्ञासु पाठकों के अष्टाध्यायी-सम्बन्धी पद पदार्थ-ज्ञान की आवश्यकताओं को ध्यान में रखकर तैयार किया गया है। इस संस्करण में सम्पूर्ण काशिका वृत्ति की न्यास और पदमञ्जरी के आधार पर की गई प्रथमतः **'भावबोधिनी'** हिन्दी व्याख्या प्रकाशित की जा रही है। इसमें सूत्र का विस्तृत व्याख्यान है। यहाँ प्रायः प्रत्येक शब्द की पाणिनि-सम्मत प्रकृति-प्रत्ययादि निर्देशपुरस्सर व्युत्पत्ति का स्फुट प्रदर्शन और विशेषतः लिखित 'विमर्श' के अन्तर्गत गम्भीर विषयों का स्पष्टीकरण है।

काशिका के प्रस्तुत चतुर्थ भाग में अष्टाध्यायी के तृतीय अध्याय के तृतीय पाद से लेकर चतुर्थ अध्याय के प्रथम पाद तक का मूल न्यास और पदमञ्जरी के साथ समाविष्ट है। इसमें ४७१ सूत्रों की व्याख्या की गई है। प्रस्तुत संस्करण में प्रत्येक सूत्र के साथ तीन प्रकार से संख्याओं का निर्देश है—(क) प्रथम संख्या (अर्थात् ९९८, सूत्र से पहले) अष्टाध्यायी के सम्पूर्ण सूत्रों की संख्या सूचित करती है। (ख) सूत्र के बाद आने वाली संख्या उस सूत्र का अष्टाध्यायी के क्रम में आने वाले पाद के अन्तर्गत सूत्र की संख्या का द्योतक है (ग) अन्तिम कोष्ठक में (अर्थात् ३४८९) लिखित संख्या निर्णय सागर से प्रकाशित 'सिद्धान्तकौमुदी' के सूत्रक्रम की परिचायक है।

विजयादशमी
अश्विन शुक्ल २०४१ वि०, वाराणसी-२२१००५

**डा० जयशङ्कर लाल त्रिपाठी**
**डा० सुधाकर मालवीय**

# काशिकायाः चतुर्थभागस्थ-विषयाः

## तृतीयाध्यायस्य तृतीयः पादः



## तृतीयाध्यायस्य चतुर्थः पादः

## चतुर्थाध्यायस्य प्रथमः पादः



—: ० :—

## संकेत-सूची

| | | |
|---|---|---|
| अथर्व० (अ० वे०) | — | अथर्ववेद (शौनकीय) |
| उ० सू० | — | उणादि सूत्र |
| ऋ० | — | ऋग्वेद |
| ऋ० खि० | — | ऋग्वेद खिल |
| आश्व० गृ० | — | आश्वलायन गृह्यसूत्र |
| का० वा० | — | कात्यायन वार्त्तिक |
| काठ० सं० | — | काठक संहिता |
| ग० सू० | — | गणसूत्र |
| गो० ब्रा० | — | गोपथब्राह्मणम् |
| तै० आ० | — | तैत्तिरीय आरण्यकम् |
| तै० ब्रा० | — | तैत्तिरीय ब्राह्मणम् |
| तै० सं० | — | तैत्तिरीय संहिता (कृष्णयजुर्वेद) |
| धा० पा० | — | धातु पाठ |
| नि० | — | निरुक्त (यास्क) |
| प० | — | परिभाषा |
| पा० सू० | — | पाणिनीयसूत्र |
| पै० सं० | — | पैप्पलाद संहिता (अथर्ववेद) |
| फि० सू० | — | फिट् सूत्र |
| बृ० सं० | — | बृहत संहिता (वाराहमिहिर) |
| मनु० | — | मनुस्मृति |
| म० भा० | — | महाभाष्य |
| मै० उ० | — | मैत्रायणी उपनिषद् |
| मै० सं० | — | मैत्रायणी संहिता (यजुर्वेद) |
| वंश ब्रा० | — | वंश ब्राह्मणम् |
| वा० | — | वार्त्तिक (कात्यायन) |
| वा० प० | — | वाक्यपदीय (भर्तृहरि) |
| वा० रा० युद्ध० | — | वाल्मीकीय रामायण युद्धकाण्ड |
| वा० सं० | — | वाजसनेयि संहिता |
| व्या० प० | — | व्याडि परिभाषा |
| शां० श्रौ० | — | शाङ्खायन श्रौतसूत्र |
| शा० प० | — | शातातप परिभाषा |

अल्पाक्षरमसंदिग्धं सारवद् विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥ १ ॥
उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते ।
तं ग्रन्थं वार्तिकं प्राहुर्वार्त्तिकज्ञा मनीषिणः ॥ २ ॥
सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥ ३ ॥

न्यास-पदमञ्जरी-'भावबोधिनी'-हिन्दी-व्याख्यासहिता

# काशिकावृत्तिः

## अथ तृतीयाध्याये तृतीयः पादः

**उणादयो बहुलम् ॥ १ ॥**

'वर्तमाने' इत्येव, 'संज्ञायाम्' इति च। उणादयः प्रत्यया वर्तमानेऽर्थे संज्ञायां विषये बहुलं भवन्ति। यतो विहितास्ततोऽन्यत्रापि भवन्ति। केचिदविहिता एव प्रयोगत उन्नीयन्ते। 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' ( उ० सू० १.१ ) कारुः, वायुः, पायुः, जायुः, मायुः, स्वादुः, साधुः, आशुः।

न्यासः

**उणादयो बहुलम्** ॥ **वर्त्तमान इत्येवेति**। 'वर्त्तमाने लट्' इत्यतो वर्त्तमान-ग्रहणमनुवर्त्तत इति दर्शयति। **संज्ञायामिति**। वर्त्तत इति 'पुवः संज्ञायाम्' इत्यतः।

**बाहुलकमित्यादि**। 'ला आदाने', बहूनर्थाल्लातीति बहुलम्। 'आतोऽनुपसर्गे कः'। बहवः पुनरर्थाः क्वचित्प्रवृत्त्यादयः। तथा चोक्तम्—

क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥ इति।

बहुलस्य भावो बाहुलकम्। 'द्वन्द्वमनोज्ञादिभ्यश्च' इति मनोज्ञादित्वाद्वुञ्। बह्वर्थादानं बहुलशब्दस्य प्रवृत्तिनिमित्तमिति तत्रैवायं भावप्रत्ययः। तद् बाहुलकं प्रकृतेस्तनुदृष्टेरुक्तम्। प्रत्ययमनादिं कृत्वा यः पूर्वमुपादीयते शब्दः, सा प्रकृतिरित्युच्यते। प्रत्ययात् पूर्वं क्रियत इति प्रकृतिः। प्रकर्षेण = नियमेन प्रत्ययः क्रियते तस्या इति वा प्रकृतिः। **प्रकृतेरिति**। जातौ षष्ठ्येकवचनम्। **तनुदृष्टेरिति**। कर्मणि ल्यब्लोपे पञ्चमी। तनुदृष्टिं वीक्ष्य बाहुलकमुक्तमिति। 'विभाषा गुणेऽस्त्रियाम्' इत्यनेन त्विह पञ्चमी न भवति; अस्त्रियामिति प्रतिषेधात्।

पदमञ्जरी

**उणादयो बहुलम्** ॥ **वर्त्तमाने इत्येवेति**। 'वर्त्तमाने लट्' इत्यतो वर्त्तमानग्रहणानुवृत्तेरविच्छेदमेवकारेण दर्शयति। **संज्ञायामिति चेति**। 'पुवः संज्ञायाम्' इत्यतः॥

'उणादयः' इत्येव सूत्रमुणादीनां शास्त्रान्तरपरिपठितानां साधुत्वानुज्ञानार्थमस्तु, किं बहुलग्रहणेन ? तत्राह—**बाहुलकमिति**। 'ला आदाने', बहूनर्थान् लाति -बहुलम्, तस्य भावो बाहुलकम्, मनोज्ञादित्वाद् वुञ्। तत्पुनर्बह्वर्थादानं बहुलशब्दप्रवृत्तिनिमित्तम्। बहवः पुनरर्थाः—क्वचित्प्रवृत्तिः, क्वचिदप्रवृत्तिरिति वक्ष्यमाणलक्षणाः। **प्रकृतेरिति**। जातावेकवचनम्। तनुशब्दोऽत्र वृत्तिविषये गुणमात्रवचनः। प्रकृतीनां तानवम्=

भावबोधिनी

'वर्तमान [ काल ] में' और 'संज्ञा अर्थ में' ये ही [ अनुवृत्ति होते हैं ]। वर्तमान [ काल ] अर्थ में संज्ञा-विषय में उण् आदि प्रत्यय बहुलरूप से होते हैं। जिनसे इन प्रत्ययों का विधान किया गया है उनसे भिन्न में भी ये होते हैं। न विधान किये गये भी कुछ प्रत्ययों को प्रयोग से कल्पित = अनुमानित कर लिया जाता है। 'कृ, वा, पा, जि, मि, स्वद, साध् और अश्—धातुओं से उण् प्रत्यय होता है' ( उ० सू० १।१ )। कारुः [ करोति इति–इस विग्रह में √कृ धातु से उण् = उ प्रत्यय और ऋ की वृद्धि आर् करने पर कारु बनता है इसका अर्थ है—शिल्पी ], वायुः

**बाहुलकं प्रकृतेस्तनुदृष्टेः, प्रायसमुच्चयनादपि तेषाम्।**

**कार्यसशेषविधेश्च तदुक्तं, नैगमरूढिभवं हि सुसाधु [ १ ]**

**न्यासः**

अथ वा 'विभाषा गुणे' इति योगविभागादिह पञ्चमी वेदितव्या। तनुशब्दः शरीरवचनोऽप्यस्ति, गुणवचनोऽपि; इह तु गुणवचनः, प्रकृतेरल्पत्वं नाम यो गुणस्तस्य वाचकः। दर्शनं दृष्टिः = उपलब्धिः, तनोर्गुणस्य दृष्टिस्तनुदृष्टिः। ततो गुणो नित्यं गुणिनमपेक्षत इति गमकत्वात् तनुशब्दस्य प्रकृतिमपेक्षमाणस्यापि दृष्टिशब्देन समासो भवति। अयं त्वर्थः--प्रकृतेर्गुणस्य, [तनोः] तयोर्दर्शनादिति।

अथवा तनुर्दृष्टिर्यस्याः प्रकृतेः सा तनुदृष्टिः। अत्र पक्षे यद्यपि तनुगुणो दृष्टेर्विशेषणम्, तथाप्यसौ दृष्टेः प्रकृतेरपि विशेषणत्वेन प्रतीयत एव। प्रकृतेस्तनुत्वादेव हि तद्दृष्टितनुत्वं भवति। उणादिषु पञ्चपाद्यां स्वल्पाः प्रकृतयो दृश्यन्ते, ततोऽन्याभ्योऽपि च प्रकृतिभ्यः प्रत्यया दृश्यन्ते, तस्माद् बहुलग्रहणाद् भवन्ति। यथा हि 'हृषेरुलच्' इति 'हृषु अलीके' इत्यस्मादुलजुक्तः, तथा 'शकि शङ्कायाम्' इत्यतोऽपि भवति--शङ्कुलेति। किञ्च, **प्रायसमुच्चयनादपि तेषां तदुक्तमिति** सम्बन्धः। **तदिति**—बाहुलकं परामृश्यते। तेषामुणादीनां प्रायेण बाहुल्येन समुच्चयनं = ग्रहणं विधानं वा प्रायसमुच्चयनम्। 'तृतीया' इति योगविभागात् समासः। अपिशब्दः समुच्चये। न केवलं प्रकृतेस्तनुदृष्टेस्तद् बाहुलकमुक्तम्, अपि तु प्रायसमुच्चयनादपि तेषामेतदुक्तं भवति। न केवलं प्रकृतयस्तन्व्यः पठिताः, अपि तु प्रत्यया अपि प्रायेण समुच्चिताः, न सर्वे, तदर्थं बाहुलकमिति। बाहुलकाद् व्यविहिता अपि ते चेत् प्रत्यया उन्नीय विधीयन्ते। तथा हि 'अर्त्तेः क्युरुच्च' इत्यर्त्तिधातुः पठितः, फिडफिड्डौ तु प्रत्ययौ न विहितौ; तथापि ऋफिडऋफिड्डशब्दयोर्दर्शनात् तावपि च विधीयेते।

**कार्यसशेषविधेश्च तदुक्तमिति**। चशब्दः समुच्चये। पूर्वोक्तकारणद्वयादेतस्मात् तद्बाहुलकमुक्तम्। विधानं विधिः = कारणम्, सह शेषेण वर्त्तते यो विधिः स सशेषः, सशेषश्चासौ विधिश्च सशेषविधिः, कार्याणां सशेषविधिः, कार्यसशेषविधिः। तस्माच्च बाहुलकमुक्तम्। एतदुक्तं भवति—प्रकृतेः प्रत्ययाश्रितानि कार्याणि न

**पदमञ्जरी**

अल्पत्वं दृष्ट्वा तद् बाहुलकमुक्तम्, तेनापठिताभ्योऽपि प्रकृतिभ्य उणादयो भवन्ति, यथा—हृषेरुलजुक्तः शकेरपि भवति-शङ्कुलेति। तथा तेषामुणादीनां पञ्चपाद्यां प्रायेण समुच्चयनं कृतम्, न तु साकल्येन; बहुलवचनात्त्वविहिता अपि भवन्ति, यथा—अर्तेः फिडफिड्डौ भवतः--ऋफिडः, ऋफिड्ड इति। **कार्यसशेषविधेश्च**। कार्याणि च सशेषाणि विहितानि, न निःशेषाणि। बहुलवचनात्त्वविहितान्यपि भवन्ति। [षण्ड इत्यत्र] 'षणु दाने', 'ञमन्ताड्डः' 'धात्वादेः षः स' इति सत्वं न भवति, कृते वा सत्वे षत्वं भवति। स्यादेतत्--यावत्यः प्रकृतयः पञ्चपाद्यामुपात्ताः, यावन्तश्च प्रत्ययाः, यावन्ति च कार्याणि विहितानि, तावन्त्येव भवन्तु, मा भूदन्येषां बहुलग्रहणेन

**भावबोधिनी**

[ = पवन, वाति-इस अर्थ में √वा धातु से उण् = उ प्रत्यय करने पर 'आतो युक् चिण् कृतोः' ( पा० सू० ७।३।३३ ) से युक् = य् आगम होता है—वा + य् + उ = वायु ], पायुः [ पाति – इस विग्रह में पा + उण्, युक् = य् आगम; गुदा अर्थ है। ] जायुः [ = औषधि, जयति इस विग्रह में √जि+उण्=उ, 'अचो ञ्णिति' (पा. सू. ७।२।११५) से इ की वृद्धि ऐ, और ऐ का आय् आदेश होकर--जायु बनता है। ], मायुः [=पित्त-√मि+उण् शेष प्रक्रिया पूर्ववत्] स्वादुः ( खाने योग्य ), साधुः ( सज्जन ), आशुः ( शीघ्र चलने वाला )।

['उणादयो बहुलम्' पा. सू. ३।३।१ में 'बहुल' के उल्लेख की उपयोगिता सिद्ध करने के लिये महाभाष्य में श्लोक रूप में वार्तिक प्रस्तुत किये गये हैं। जिन्हें काशिकाकार ने भी उद्धृत किया है—] कुछ प्रकृतियों से उणादि प्रत्ययों

**नाम च धातुजमाह निरुक्ते, व्याकरणे शकटस्य च तोकम् ।**

न्यासः

निःशेषाणि पञ्चपाद्यां दर्शितानि, इष्यन्ते चादर्शितान्यपि तानि । अतस्तत्सिद्ध्यर्थं तद् **बाहुलकमुक्तम्** । तेन ऋफिड, ऋफिड्ड—इत्यत्र गुणप्रतिषेधः सिद्धो भवति । एवमादि तावत् प्रत्ययाश्रितं कार्यं **सिद्धं भवति** । **'षणु दाने'**, 'ञमन्ताड्डः' इति षण्डः । अत्र 'धात्वादेः षः सः' इति सत्वं न भवति । सत्यपि वा सत्वे पुनः षत्वमेव क्रियत इत्येवमादि प्रकृत्याश्रितमपि कार्यं बाहुलकाद्भवति । **नैगमरूढिभवं हि सुसाध्विति** । निगमः = छन्दः, तत्र भवा नैगमाः, ऋगयनादिपाठादण् । निगमस्य वेमे नैगमाः । रूढिः = प्रसिद्धिः; भवन्तीति भवाः, रूढौ भवाः । 'सप्तमी' इति योगविभागात् समासः । लोकप्रसिद्धा इत्यर्थः । नैगमाश्च रूढिभवाश्च नैगमरूढिभवम् । 'सर्वो द्वन्द्वो विभाषैकवद्भवति' इत्येकवद्भावः, 'स नपुंसकम्' इति नपुंसकलिङ्गता । हिशब्दो यस्मादर्थे । यस्मादेतदेव बाहुलकमनेकार्थस्य साधकम्, तस्मान्नैगमं रूढिभवं सुष्ठु साधु भवति; व्याकरणे बहुलग्रहणेन संस्कृतत्वात् । अन्यथाऽसंस्कृतत्वाद् गाव्यादिशब्दानामिव तस्यासाधुत्वं स्यात् ।

अन्यैरपि प्रमाणपुरुषैर्नैगमरूढिभवानां व्युत्पाद्यत्वमभ्युपेतमिति दर्शयितुमाह—**नाम च धातुजमित्यादि** । **निरुक्त** इति । निरुक्ते शास्त्रे । **नामेति** । प्रातिपदिकम्; तस्य हीयमन्याचार्यसंज्ञा । धातोर्जातत्वाद्धातुजम् । धातुग्रहणमुपलक्षणम्. प्रत्ययागमादयोऽपि गृह्यन्ते । निरुक्तकारः स्वशास्त्रे निरुक्ते प्रातिपदिकं धातुजमाह; धातुप्रत्ययादिविभागेन व्युत्पादितत्वात् । चशब्दोऽवधारणे, भिन्नक्रमश्च । धातुजमेवेत्येवं द्रष्टव्यम् । न केवलं निरुक्तकार एवेह, अपि तु—**व्याकरणे शकटस्य च तोकम्** । तोकशब्दोऽपत्यपर्यायः । व्याकरणेऽपि यः शकटस्य पुत्रः शाकटायनः सोऽपि नाम धातुजमेवाह । तदेवं निरुक्तकार-शाकटायनदर्शनेन त्रयी शब्दानां प्रवृत्तिः—

पदमञ्जरी

संग्रह इति ? तत्राह—**नैगमरूढिभवं हि सुसाध्विति** । निगमः = छन्दः, तत्र भवा नैगमाः । निगमशब्दः थाथादिस्वरेणान्तोदात्त इति 'बह्वचोऽन्तोदात्ताट्ठञ्' इति ठञि प्राप्ते ऋगयनादिपाठादण् । रूढिः = प्रसिद्धिः, तत्र भवा रूढिभवाः = संज्ञाशब्दाः, तेषां साधुत्वमनुपात्तानां प्रकृत्यादीनां बहुलग्रहणेन संग्रहे सति भवति, नान्यथा । हिशब्दो हेतौ । यस्मादेवं तस्माद् बाहुलकमुक्तमित्यर्थः ।

अन्यैरप्याचार्यैर्नैगमरूढिभवानां प्रकृत्यादिविभागेन व्युत्पादनं कृतम्, अतोऽस्माभिरपि तत्कर्त्तव्यमेवेत्यभिप्रायेणाह-**नाम चेति** । निरुक्तकारो हि **यास्क आचार्यः** स्वशास्त्रे [निरुक्ते] निरुक्तैः सर्वमेव नाम धातुजमाह ।

भावबोधिनी

का विधान देखा जाता है, उन [ अन्य शास्त्रों में प्रस्तुत ] उण् आदि प्रत्ययों का समुच्चय प्रायेण देखा जाता है और सम्पूर्ण कार्यों का भी सूत्रों द्वारा प्रदर्शन नहीं किया गया है, अतः सभी का ग्रहण कराने के लिये 'बहुल' शब्द का उल्लेख है । [ शंका हो सकती है कि सभी प्रकृतियों से उणादि क्यों नहीं है ? सभी प्रत्ययों का समुच्चय क्यों नहीं है ? और सभी कार्यों का सूत्रों से साधन क्यों नहीं होता है ? उत्तर है—] नैगम = वेद में होने वाले और रूढ़ि से बनने वाले प्रसिद्ध संज्ञा शब्दों का साधुत्व किस प्रकार किया जा सकेगा—इसके लिये 'बहुल' का ग्रहण ही एक मात्र मार्ग है ॥

**विमर्श**—समस्या यह है कि अन्य शास्त्रकारों ने अनेक प्रकृति शब्दों से अनेक प्रत्ययों का विधान किया है । परन्तु पाणिनि ने केवल एक सूत्र द्वारा 'बहुल' के बल से सभी कार्यों का संकेत कर दिया है । अतः बहुल के उल्लेख की उपयोगिता सिद्ध करना आवश्यक है ? यहाँ वार्त्तिककार ने चार वार्त्तिकों द्वारा बहुलग्रहण की सार्थकता सिद्ध की है—(१) बाहुलकं प्रकृतेस्तनुदृष्टेः—अर्थात् प्रकृतिशब्दों की अल्पता है, अन्य शास्त्रकारों ने भी कुछ थोड़ी सी ही प्रकृतियों से उणादि प्रत्यय किये है, सभी से नहीं । (२) प्रायसमुच्चयनादपि तेषाम्—और उन उण् आदि प्रत्ययों का भी प्रायः [ अंशतः ] समुच्चय कर लिया है, पूर्णरूप से नहीं किया है । (३) कार्यसशेषविधेश्च तदुक्तम्—सभी कार्यों का भी सूत्रों से विधान नहीं किया है, कुछ कार्य शेष भी हैं । इसलिये पाणिनि ने 'बहुलम्' के द्वारा निर्वाह किया है जिसका स्वरूप यह है—क्वचित् प्रवृत्तिः, क्वचिदप्रवृत्तिः, क्वचिद् विभाषा, क्वचिदन्यदेव । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥

**यन्न विशेषपदार्थसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् [ २ ]**

**न्यासः**

जातिशब्दाः, गुणशब्दाः, क्रियाशब्दा इति; न सन्ति यदृच्छाशब्दा इति। अथवा – जातिगुणशब्दानामपि क्रियाशब्दत्वमेव; धातुजत्वात्। ततश्चैकैव शब्दानां प्रवृत्तिः—क्रियाशब्दा इति।

अथ यदि प्रकृतिविशेषं प्रत्ययविशेषञ्चोपादाय न व्युत्पादितं शब्दरूपम्, तस्य कथं धातुजत्वं वेदितव्यम्, न हि प्रकृतिप्रत्ययानवधारणे धातुजत्वं शक्यं निश्चेतुमित्यत आह—यन्नेत्यादि। अर्थशब्दः प्रयोजनवाची, पदमर्थः प्रयोजनं यस्य प्रकृत्यादेः सः पदार्थः। कथं पुनः पदमर्थः प्रकृत्यादेर्भवति ? तदुद्दिश्य तदुपादानात्। पदं हि व्युत्पादयिष्यामीत्येवमर्थं प्रकृत्यादेरुपादानम्। कस्मात् ? प्रकृतिः प्रत्ययश्च पदार्थः, तस्य विशेषः पदार्थविशेषः। समुत्थानं समुत्थः=प्रादुर्भावः, 'सुपि स्थः' इत्यत्र योगविभागेन भाव एव कप्रत्ययः। पदार्थविशेषात् समुत्थः=प्रादुर्भावो यस्य तत् पदार्थविशेषसमुत्थम्। यद् एवंविधं न भवति शब्दरूपं, प्रत्ययतः प्रकृतितश्च तदूह्यम्। धातुजत्वेनापि तदुक्तं भवति—यस्य प्रतिपदोक्ता प्रकृतिप्रत्ययविशेषानासादितात्मा निर्वृत्तिस्तस्य प्रकृतिविशेषात् प्रत्ययविशेषाच्च धातुजत्वं निश्चेतव्यमिति।

ननु च तथाविधस्य प्रकृतिप्रत्ययविशेषस्यापरिज्ञानादेवाशक्यं धातुजत्वं निश्चेतुमिति मत्वा परेण चोदितम्, तत् कथं प्रत्ययतः प्रकृतेश्च तदूह्यमित्युक्तं युज्यते ? नैषः दोषः, एवं हि ब्रुवताऽनेन प्रकृतिप्रत्ययावेवं तावद्व्यूहितव्यौ, ततस्ताभ्यां तच्छब्दरूपमित्येतदप्यर्थादुक्तं भवति। न ह्यनवधारिताभ्यां प्रकृतिप्रत्ययाभ्यां शक्यं धातुजत्वं कस्यचिन्निश्चेतुमिति किमत्रायुक्तम् ? यत्र प्रसिद्धप्रत्ययावयवेन शब्दान्तरेण कस्यचिद् भागस्य

**पदमञ्जरी**

**तोकमित्यपत्यं नाम। शकटस्य तोकम्—शाकटायनः। यन्नेति।** पदमर्थः प्रयोजनमस्य व्युत्पाद्यत्वेनेति **पदार्थः**=प्रकृत्यादिः, पदार्थश्चासौ विशेषश्च—पदार्थविशेषः, तस्मात्समुत्थितं **पदार्थविशेषसमुत्थम्**। यदेवंविधं न भवति, प्रकृत्यादिविशेषोपादानेनाव्युत्पादितमित्यर्थः, तद्धातुजत्वेनोह्यम्। कथमूह्यम् ? **प्रत्ययतः प्रकृतेश्च**। यत्र शब्दरूपे परभागः प्रत्ययत्वेन प्रसिद्धेन केनचित्सदृशः श्रुतः, तत्र तं भागं प्रत्ययं कल्पयित्वा परिशिष्टो भागः प्रकृतित्वेनोह्यते। 'हृषेरुलच्' इति प्रत्ययं दृष्ट्वा शङ्किः प्रकृतिरूह्यते, तेन सिद्धं शङ्कुलेत्यस्य धातुजत्वम्। यत्र तु पूर्वो भागो धातुत्वेन प्रसिद्धेन केनचित्सदृशस्तत्र तं भागं प्रकृतिं कल्पयित्वा परिशिष्टो भागः प्रत्ययत्वेनोह्यः। यथा—ऋफिडः, ऋफिड्डु इति, फिडफिड्डौ प्रत्ययौ।

**भावबोधिनी**

अर्थात् १. न प्रवृत्त होने वाले नियम का कहीं पर प्रवृत्त होना, २. कहीं सम्भव भी नियम का प्रवृत्त न होना, ३. कहीं विकल्प से होना और कहीं पर कुछ और-ही होना—इस प्रकार ( विभिन्न प्रयोगों ) का विधान देखकर आचार्यों ने चार प्रकार का 'बाहुलक' कहा है।

कोई यह शंका कर सकता है कि ऋषि लोग तो तत्त्वद्रष्टा होते है तब उन्होंने सभी प्रकृति शब्दों से, सभी प्रकार के उणादि प्रत्यय और सभी प्रकार के कार्यों का विधान क्यों नहीं किया है ? उत्तर में चौथा वार्त्तिक है—(४) नैगमरूढिभवं हि सुसाधु अर्थात् निगम=वेद में होने वाले और रूढि=प्रसिद्धि से होने वाले संज्ञा शब्दों का साधुत्व सिद्ध करने के लिये पाणिनि ने 'बहुल' ग्रहण का आश्रय लिया है। कारण यह है कि संस्कृत के विशालतम वाङ्मय के प्रत्येक शब्द की प्रकृति का, उनसे होने वाले प्रत्ययों का और उनके लिये अपेक्षित सूत्रादि—विहित कार्यों का प्रतिपादन कर सकना ब्रह्मा की भी शक्ति से बाहर है। अतः लक्ष्यानुसार प्रकृति की, प्रत्यय की और प्रक्रिया की छूट देने के लिये पाणिनि ने एक ही सूत्र से 'बहुल' के बल पर सब कुछ करने का मार्ग प्रस्तुत कर दिया है [ १ ]

( अनु० )—[ सभी नाम=संज्ञा शब्दों में प्रकृति-प्रत्यय कल्पना है— ] निरुक्त के आचार्यों ने नाम=प्रातिपदिक शब्दों को धातुज अर्थात् धातु से ही प्रत्यय करके होने वाला कहा है। वैयाकरणों में शकट के पुत्र शाकटायन ने भी नाम शब्दों को धातुज ( धातु+प्रत्यय से बनने वाला ) कहा है। [ परन्तु पाणिनि इस पक्ष के ही समर्थक नहीं हैं। इसलिये

**संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।**
**कार्याद् विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥ ३ ॥ (म० भा० ३।३।१वा० १-७)**

**न्यासः**

सारूप्याधिगमोऽस्ति तत्र प्रत्ययं दृष्ट्वा परिशिष्टो भागः प्रकृतित्वेनोत्प्रेक्षितव्यः। यथा-'उषिकुषिगार्तिभ्यस्थन्' इति थन्प्रत्ययान्तमोष्ठादिकं प्रसिद्धप्रत्ययावयवम्। तेन च डित्थडवित्थशब्दयोः किञ्चित् सारूप्यमस्ति, तथैषामिव हि तेषां थशब्दोऽवयवो विशिष्टदेशवर्त्ती विद्यते। तत्र थन्प्रत्ययान्ते शब्दरूपे यो दृष्टः थशब्दः प्रत्ययसंज्ञकस्तत्-साहश्याद् डित्थडवित्थशब्दस्थं थशब्दं प्रत्ययमवधार्य ततः परिशिष्टस्तयोर्भागो डिड्डुविदिति च धातुत्वेनोह्यः। ततश्चैवं सूत्रं कर्त्तव्यम्—डीङस्थण् डिड्डुविच्चेति। 'डीङ् विहायसा गतौ' इत्यस्मात् थन्प्रत्ययः, डीङश्च डिड्डुविदित्येतावादेशौ भवतः। यत्र तु शब्दरूपे निर्ज्ञातधात्ववयवेन शब्दान्तरेण किञ्चिद् भागगतं सारूप्यमस्ति, तत्र प्रकृतिं दृष्ट्वा परिशिष्टो भागः प्रत्ययत्वेनोहितव्यः, यथा—ऋतमिति दृष्टं शब्दरूपं प्रसिद्धप्रकृत्यवयवम्, तेन ऋफिडशब्दस्य ऋफिड्डुशब्दस्य च किञ्चिद् भागगतं सारूप्यमस्ति, उभयेषां तेषामृकारादित्वात्। तत्र निष्ठा-प्रत्ययान्त ऋतशब्दे य ऋकारावयवो धातुसंज्ञकस्तत्साहश्याद्दफिडऋफिड्डुशब्दस्थश्च ऋवर्णं धातुमवधार्य ततः परिशिष्टस्तयोर्भागः फिड इति फिड्डु इति च प्रत्ययत्वेनोह्यः। ततश्चैवं सूत्रं कर्त्तव्यम्—'अर्त्तेः फिडफिड्डौ' इति, 'ऋ गतौ' इत्यस्मात् फिडफिड्डौ प्रत्ययौ भवतः। ऋफिडः, ऋफिड्डुः। गुणः पूर्वोक्तात् कारणान्न भवति। अथ वा—कितावेवैतौ प्रत्ययौ विधातव्यौ। एवं प्रकृतिप्रत्ययावूहित्वा तस्य शब्दरूपस्य धातुजत्वमूहितव्यम्। यत् प्रकृतिप्रत्ययविशेषावयवानुगतं न तद्धातुजत्वं व्यभिचरति, यथा—कर्त्तव्यम्, करणीयमित्येवमादयः शब्दाः। **ऊह्यमिति**। अनुज्ञातव्यम्।

न यत्र क्वचिदूहः कर्त्तव्यः, अपि तु विशिष्ट एव विषय इति दर्शयन्नाह—**संज्ञास्वित्यादि**। य एते निरूढाः साधुत्वेन शब्दास्तेष्वेव संज्ञातः सूहः कर्त्तव्यो नान्यत्र। **धातुरूपाणीति**। कल्पयितव्यानीति शेषः। **प्रत्ययाश्च ततः परे इति**। कल्पयितव्या इति शेषः। **कार्याद्**=गुणाभावादिकाद्। **विद्यात्**=जानीयाद्। **अनूबन्धं**=ककारादिकम्। एतदनन्तरोक्तं शास्त्रमुणादिषु। शास्त्रोपनिबन्धनत्वाच्छास्त्रविषयत्वाद्वा शास्त्रमित्युक्तम्।

यदि तर्ह्यत्र सूत्रे 'संज्ञायाम्' इत्यनुवर्त्तते 'वर्त्तमाने' इति च, बहुलग्रहणं च क्रियते, तत् किमर्थमुणादिषु 'वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च' इति वर्त्तमानग्रहणम्, 'धृषेर्धिष च संज्ञायाम्' इति संज्ञाग्रहणम्, बहुल-

**पदमञ्जरी**

स चायमूहोऽनादिप्रयुक्तास्वेव संज्ञासु, न सर्वत्रेत्याह—**संज्ञास्विति**। **कार्याद्**=गुणप्रतिषेधादिकाद्, **अनूबन्धं**=ककारादिकं **विद्यात्**। तेन फिडफिड्डौ कितावूह्यौ। एतदेवानन्तरोक्तमूहात्मकं शास्त्रमुणादिष्वनुक्तेषु ॥ १ ॥

**भावबोधिनी**

उणादि के विषय में दो पक्ष प्रचलित हैं—(१) व्युत्पत्तिपक्ष और (२) अव्युत्पत्तिपक्ष। ] जो विशेषपदार्थ = प्रकृत्यादि से विहित नहीं है वह प्रकृति से और प्रत्यय से कल्पित कर लेना चाहिये अर्थात् अपेक्षित शब्दरूप सिद्ध करने के लिये प्रकृति को देखकर प्रत्यय की कल्पना और प्रत्यय को देखकर प्रकृति की कल्पना कर लेनी चाहिये [ २ ]

[ उपर्युक्त ऊह = कल्पना केवल प्रसिद्ध संज्ञा शब्दों के विषय में ही है सर्वत्र नहीं। ] प्रसिद्ध संज्ञावाचक शब्दों में धातुरूपों की और उनसे परे प्रत्ययों की और [ गुण-वृद्धि-विधान या निषेधादि ] कार्यों के अनुसार अनुबन्ध की कल्पना करनी चाहिये। उणादि में यह अनुशासन है। [ अनूबन्ध शब्द में 'अनु' उपसर्ग का दीर्घ 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' पा० सू० ६। ३। १२२ से हुआ है। ] [ ३ ]

**विमर्श**—शाकटायनाचार्य ने पञ्चपादी उणादि सूत्रों की कल्पना करके शब्दों की सिद्धि की है। परन्तु उन्होंने भी समस्त संज्ञा शब्दों की प्रकृति प्रत्यय और कार्य की उपपत्ति नहीं की है। अतः पाणिनि का पक्ष है जब कुछ शब्दों में आवश्यकतानुसार प्रकृति की, प्रत्यय की और गुणवृद्धि-निषेध-विधानादि के लिये अपेक्षित अनुबन्धों की कल्पना करनी

**भूतेऽपि दृश्यन्ते ॥ २ ॥**

**पूर्वत्र वर्त्तमानाधिकाराद् भूतार्थमिदं वचनम् । भूते काले उणादयः प्रत्यया दृश्यन्ते । वृत्तमिदं वर्त्म । चरितं तदिति चर्म । भसितं तदिति भस्म । दृशिग्रहणं प्रयोगानुसारार्थम् ॥**

**भविष्यति गम्यादयः ॥ ३ ॥**

**भविष्यति काले गम्यादयः शब्दाः साधवो भवन्ति । प्रत्ययस्यैव भविष्यत्कालता विधीयते, न प्रकृतेः ।**

**न्यासः**

मन्यत्रापि' इति बहुलग्रहणञ्च क्रियते ? 'भूतेऽपि दृश्यन्ते' इति वचनाद् भूतेऽपि पृषदादयो भवन्तीत्याशङ्कानिवृत्त्यर्थम् । वर्त्तमानग्रहणं प्रकृताया एव संज्ञाया अनुवृत्तेर्दृढीकरणार्थम् । पुनः संज्ञाकरणं बहुलवचनादसंज्ञायामपि भवन्तीत्याशङ्कानिवृत्त्यर्थं वा । अस्यैव बहुलस्य स्मरणाथ पुनर्बहुलग्रहणम् । एवं हि विस्मरणशीलानामनुग्रहः कृतो भवति ॥ १ ॥

**भूतेऽपि दृश्यन्ते ॥ पूर्वत्र वर्त्तमानादिति ।** अथ पूर्वत्र वर्त्तमानग्रहणं कस्मान्न निवर्त्तितम्, युक्तं हि तत् तत्र निवर्त्तयितुम्, तथा हि—तस्मिस्तत्र निवृत्ते सतीदं न कर्त्तव्यम् ? नैतदस्ति; अवश्यमेतत् कर्त्तव्यम्, यस्मात् केचिद् भूत एवेष्यन्ते । यदि च पूर्वत्र वर्त्तमानग्रहणानुवृत्तिर्न स्याद् भविष्यत्यप्युणादयो न स्युः । 'भविष्यति गम्यादयः' इत्येकं तु नियमार्थं विज्ञायेत—भविष्यत्येव गम्यादय इति । तस्मात् पूर्वत्रानुवर्तयितव्यं वर्तमानग्रहणम् । **वर्त्मेति ।** 'आतो मनिन्' इत्यनुवर्तमाने 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन्प्रत्ययः । 'नेड् वशि कृति' इतीट्प्रतिषेधः । **भस्मेति ।** 'भस भर्त्सनदीप्त्योः' । **दृशिग्रहण**मित्यादि । विशिष्टप्रयोगमनुसृत्य यत्र शिष्टाः प्रयुञ्जते तत्र भूते प्रत्ययः कर्तव्यः, न तु सर्वत्रेति दृशिग्रहणेनायमर्थः प्रतिपादित इति दर्शयति ॥ २ ॥

**भविष्यति गम्यादयः ॥ प्रत्ययस्यैवेत्यादि ।** एवं हि भविष्यति गम्यादयः साधवो भवन्ति, यदि प्रत्ययस्यैव भविष्यत्कालता विधीयते, अथ तु प्रत्ययस्यान्यकालता स्यान्न ते भविष्यति साधवः स्युः । तस्मात् प्रत्ययस्यैवानेन प्रकारेण भविष्यत्कालता विधीयते । **ग्रामं गमीति ।** 'गमेरिनिः' इतीनिप्रत्ययः, 'सौ' इति दीर्घः । 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठ्यां प्रतिषिद्धायां ग्रामशब्दात् 'कर्मणि द्वितीया' । **आगामीति ।** 'गमेरिनिः' इति वर्त्तमाने 'आङिणित्' इतीनिः णित्वादुपधावृद्धिः । प्रस्थायीत्यादि । 'ष्ठा गतिनिवृत्तौ' । 'बुध बोधने',

**पदमञ्जरी**

**भूतेऽपि दृश्यन्ते ॥ पूर्वत्र वर्तमानाधिकारादिति ।** तत्रैव वर्तमानग्रहणं न निवर्त्तितम्, बाहुल्येन वर्तमाने भवन्ति, क्वचिदेव भूते भवन्तीति किल विवेकप्रदर्शनायेति भावः । उदाहरणेषु 'ताभ्यामन्यत्रोणादयः' इति संप्रदानापादानव्यतिरिक्ते कारके मनिन् प्रत्ययः, 'नेड् वशि कृति' इतीट्प्रतिषेधः ॥ २ ॥

**भविष्यति गम्यादयः ॥** यथा 'स्यदो जवे' इत्युक्ते जवशब्दपर्यायः स्यदशब्दो भवति, तथेहापि भविष्यच्छब्दपर्याया गम्यादयः प्राप्नुवन्तीत्याशङ्क्याह—**प्रत्ययस्यैवेत्यादि ।** प्रकृत्यर्थगता भविष्यत्कालता प्रत्ययस्यैव

**भावबोधिनी**

आवश्यक है तो सर्वत्र यह सम्भव है । अतः केवल एक सूत्र में 'बहुल' के बल से सभी कार्यों को करने का मार्ग बना दिया है । अतः जैसे दृष् धातु से उलच् होता है, उसी प्रकार शक् से भी उलच् होकर शङ्कुला आदि बनते हैं ॥ १ ॥

पूर्व सूत्र में [ 'वर्तमाने लट्' पा० सू० ३ । २ । १२३ ] वर्तमान का अधिकार है, अतः भूतकाल अर्थ में विधान के लिये यह सूत्र है । भूतकाल अर्थ में भी उणादि प्रत्यय देखे जाते हैं । उदा०—वृत्तम् इदम्-वर्त्म (वृत् + मनिन्—गुण, रपर करने पर वर्त्म बना—बीता हुआ ), चरितं तद्—चर्म ( चर् + मनिन्—चमड़ा ), भसितं तद्—भस्म ( भस् + मनिन्—राख ) । सूत्र में 'दृश्यन्ते' का उल्लेख प्रयोग का अनुसरण करके सिद्धि करने के लिये है ॥ २ ॥

भविष्यत्काल अर्थ में गमी आदि शब्द साधु होते हैं । अर्थात् इन शब्दों से भविष्यत्काल अर्थ की प्रतीति होती है । प्रत्यय की ही भविष्यत्कालता का विधान किया जा रहा है, प्रकृति को नहीं । उदा०—गमी ग्रामम्

**गमी ग्रामम् । आगामी । प्रस्थायी । प्रतिरोधी । प्रतिबोधी । प्रतियोधी । प्रतियोगी । प्रतियायी । आयायी । भावी ॥ * अनद्यतन उपसंख्यानम् * ॥ ( म० भा० ३।३।३।वा० १ ) श्वो गमी ग्रामम् ॥**

**यावत् पुरानिपातयोर्लट् ॥ ४॥**

**'भविष्यति' इत्येव । यावत् पुराशब्दयोर्निपातयोरुपपदयोर्भविष्यति काले धातोर्लट् प्रत्ययो भवति ।**

**न्यासः**

युज समाधौ', 'या प्रापणे'—एभ्यः 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । यातितिष्ठत्योः 'आतो युक् चिण्कृतोः' इति युक् । युजः 'चजोः कुः घिण्ण्यतोः' इति कुत्वम् । **भावीति** । 'आङि णित्' इति वर्त्तमाने 'भुवश्च' इतीनिः, णित्त्वाद् वृद्धिः ।

**अनद्यतन उपसंख्यानमिति** । किं पुनः कारणं न सिध्यति ? भविष्यतीति लृटायं निर्देशः क्रियते, तेन च लृट एव विषये भविष्यत्सामान्ये स्यात्, न भविष्यदनद्यतने, ततो लुटो न विषयः, लृटा बाधितत्वात् । तस्मादनद्यतन उपसंख्यानं कर्तव्यम् । उपसंख्यानशब्दस्य चेह प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम् - बहुलग्रहणमिहानुवर्त्तते, तेनानद्यतनेऽपि भविष्यतीति ।

एते च गम्यादयो लुड्लृटोरुभयोरपि बाधकाः, अपवादत्वात् । अपवादत्वं तु येन नाप्राप्तिन्यायेन । ननु च वासरूपविधिना लुड्लृटावपि प्राप्नुतः, तद्विधौ 'भविष्यति गम्यादयः' इत्यनुवृत्तेः ? सत्यम्; अस्यामप्यनुवृत्तौ पक्षे प्राप्नुत एवेति चेत् ? नैतदस्ति; एवं ह्यनुवृत्तिरपार्थिका स्यात् ॥ ३ ॥

**यावत् पुरानिपातयोर्लट्** ॥ यावद् भुङ्क्त इति । 'भुजोऽनवने' इत्यात्मनेपदम् । 'श्नसोरल्लोपः' इत्यकारलोपः ।

**पदमञ्जरी**

द्योत्यत्वेन विधीयते, न पुनः प्रकृत्यर्थपरित्यागेन समुदायस्येत्यर्थः । **न प्रकृतेरिति** । न प्रकृतेरपीत्यर्थः । गम्यादिषु केचिदुणादयः, केचिदष्टाध्यायीगताः । **गमी, आगामीति** । 'गमेरिनिः' 'आङि णिच्च' इतीनिः । **भावी, प्रस्थायीति** । अस्मिन्नेवाधिकारे 'भुवश्च' 'प्रात्स्थः' इतीनिः, णित्त्वाद् वृद्धिर्युक्च । रुधिबुधियुधियातिभ्यः प्रतिपूर्वेभ्यो ग्रहादिनिः । अस्मादेव निपातनादित्यन्ये । 'सुप्यजातौ' इत्यन्ये । **प्रतियोगीति** । संपृचादिसूत्रेण घिनुणि 'चजोः कुः घिण्ण्यतोः' इति कुत्वम् । णिनि प्रत्यय एव न्यङ्क्वादिपाठादस्मादेव निपातनाद्वा कुत्वमित्यन्ये ।

**अनद्यतन उपसंख्यानमिति** । किं पुनः कारणं न सिद्ध्यति ? लृटायं निर्देशः क्रियते लृट् चानद्यतने लुटा बाध्यते, तेन लृट एव विषये एते स्युः । न वा वाक्यार्थत्वाद् गम्यादयः शब्दा विशेषे यत्सामान्यं तदाश्रयेण प्रवर्त्तन्ते । अनद्यतनाख्यस्तु विशेषः श्वःशब्दमहिम्ना गम्यते । विशेषविवक्षायां तु लुडेव भवति--श्वो गन्ता ग्राममिति । वाऽसरूपविधिना च लृडपि भवति । तेन भविष्यति, गमिष्यतीत्यादयः प्रयोगा उपपद्यन्ते ॥ ३॥

**यावत्पुरानिपातयोर्लट्** ॥ 'पुरा' इत्यविभक्तिको निर्देशः, कर्मधारयो वा । निपातनाद्विशेषणस्य परनिपातः । निपातौ चैतौ निश्चयं द्योतयतः । एतयोश्च प्रयोगे वर्त्तमाने लट् न भवति; भविष्यत्कालतया वर्तमानकालताया बाधनात् ।

**भावबोधिनी**

( भविष्य में गाँव जानेवाला, गम्+इन् ) आगामी ( आङ्गम्+इन्, णित् हो जाने से उपधावृद्धि होने से - आगामी—भविष्य में आने वाला) । प्रस्थायी (जाने वाला) । प्रतिरोधी (प्रतिरोध करने वाला) । प्रतिबोधी ( ज्ञान करने वाला) । प्रतियोधी (बदले में युद्ध करने वाला) । प्रतियोगी (प्रतियोग करने वाला) । प्रतियायी (विपरीत जाने वाला) । आयायी ( आने वाला ) । भावी ( होने वाला ) । [ यहाँ सभी में भविष्यत्काल अर्थ भी प्रतीत होता है । ] * अनद्यतन = 'आज से भिन्न भविष्यत्काल अर्थ में ही इन्हें कहना चाहिये ।' * उदा०—'श्वो गमी ग्रामम्' (कल गाँव जायेगा ।) ॥ ३ ॥

भविष्यति की ही अनुवृत्ति समझना चाहिये । यावत् और पुरा इन दो निपात शब्दों के उपपद रहने पर भविष्यत्काल अर्थ में धातु से लट् लकार ( प्रत्यय ) होता है । उदा०—यावद् भुङ्क्ते [ निश्चित ही खायेगा ] ।

**यावद् भुङ्क्ते । पुरा भुङ्क्ते । निपातयोरिति किम् ? यावद्दास्यति तावद्भोक्ष्यते । करणभूतया पुरा व्रजिष्यति ॥**

**विभाषा कदाकर्ह्योः ॥ ५ ॥**

**कदा, कर्हि—इत्येतयोरुपपदयोर्विभाषा भविष्यति काले धातोर्लट् प्रत्ययो भवति । कदा भुङ्क्ते, कदा भोक्ष्यते, कदा भोक्ता । कर्हि भुङ्क्ते, कर्हि भोक्ष्यते, कर्हि भोक्ता ॥**

न्यासः

**यावद्दास्यति तावद् भोक्ष्यत** इति । यत् परिमाणमस्य, तत् परिमाणमस्येति 'यत्तदेतेभ्यः परिमाणे वतुप्' 'दृग्दृशवतुषु' इत्यनुवर्त्तमाने 'आ सर्वनाम्नः' इत्यात्वम् । **पुरा व्रजिष्यतीति** । 'पॄ पालनपूरणयोः' । 'भ्राजभास' इत्यादिना क्विप्, 'उदोष्ठ्यपूर्वस्य' इत्युत्वम्, करणे तृतीयैकवचनम् । ननु चाव्युत्पन्नावेव यावत्पुराशब्दौ निपातौ, तौ च व्युत्पादितौ, तत्र लक्षणप्रतिपदोक्तपरिभाषयैव तयोर्निपातयोर्ग्रहणं भविष्यति, तत् किमर्थं निपातग्रहणम् ? मन्दबुद्धीनां प्रतिपत्तिगौरवपरिहारार्थमित्येके । अस्याः परिभाषाया अनित्यत्वज्ञापनार्थमित्यपरे । अनित्यत्वज्ञापनस्य तु प्रयोजनमुत्तरत्र वक्ष्यते ॥ ४ ॥

**विभाषा कदाकर्ह्योः ॥ कदा भोक्तेति** । लुट् । ननु च भविष्यतीत्यनुवृत्तेर्लृट एव विषये भवितव्यम्, न लुटः । ततो लृडेव पक्षे युक्त उदाहर्तुम्, तत् कथं लुडप्युदाहृतः ? एवं मन्यते—'अनद्यतने लुट्' इत्यत्र 'विभाषा कदाकर्ह्योः' इत्यस्यानुवृत्तेर्लृटो विषये विभाषा लुटा भवितव्यमिति । **कर्हि भोक्ष्यत** इति । लृट् । ननु च कर्हिशब्दः 'अनद्यतने र्हिलन्यतरस्याम्' इत्यनद्यतने व्युत्पादितः, तदसौ यत्र प्रयुज्यते तत्रानद्यतन एव कालः सम्भवति, तत् कुतो लृटः प्राप्तिः, 'अनद्यतने लुट्' इति लुटैव पक्षे भवितव्यम् ? नैतदस्ति, यस्माद् भोक्ष्यत इत्येतत् पदं भविष्यत्काल एव वर्त्तते । अनद्यतनकालावगतिस्तु कर्हिशब्दसन्निधाने सति वाक्याद् भवति । न च वाक्यगम्येऽर्थे लृट् भवति । तथा हि पदमिह संस्क्रियते, न च पदसंस्कारे वाक्यगम्योऽर्थ उपयुज्यते । तस्माद् भविष्यत्सामान्ये विवक्षिते लृड् भवति, भविष्यति विशेषेऽप्यनद्यतने विवक्षिते लुडिति ॥५॥

पदमञ्जरी

**यावद्दास्यतीति** । यत्परिमाणमस्य 'यत्तदेतेभ्यः परिमाणे वतुप्', 'आ सर्वनाम्न' इत्यात्वम् । **पुरा व्रजिष्यतीति** । 'पॄ पालनपूरणयोः' 'भ्राजभास' इत्यादिना क्विप्, 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । अस्य तृतीयान्तत्वं द्योतयितुं **करणभूतये**त्युक्तम् । प्रतिपदोक्तत्वादेव निपातयोर्ग्रहणे सिद्धे निपातग्रहणं लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वज्ञापनार्थम् । तेन 'आतां पुग्णौ' इत्यत्र लाक्षणिकस्याप्याकारान्तस्य पुग्भवति, 'क्रीङ्जीनां णौ' - क्रापयति, जापयतीति ॥ ४ ॥

**विभाषा कदाकर्ह्योः** ॥ 'अनद्यतने लुट्' इत्यत्राप्ययं योगोऽनुवर्त्तनीयः, तेन लुड्विषयेऽपि पक्षे लड् भवति । अतएव पक्षे लुडप्युदाहृतः । एतच्च पूर्वयोगेऽपि द्रष्टव्यम् । **कर्हि भोक्ष्यते इति** । ननु च कर्हिशब्दोऽनद्यतनविषयः, तत्प्रयोगे लुडेव भवितुमर्हति, न लृट्; न वा वाक्यर्थत्वात् । भोक्ष्यत इति पदं भविष्यत्सामान्ये वर्त्तते, अनद्यतनावगतिस्तु कर्हि-शब्दाधीना । न च वाक्यार्थः पदसंस्कार उपयुज्यते ॥ ५ ॥

भावबोधिनी

पुरा भुङ्क्ते ( निश्चित खायेगा ) [ यहाँ यावत् और पुरा ये दोनों निपात हैं, जो निश्चय अर्थ द्योतित करते हैं । ] निपात के ही उपपद रहने पर—इसका क्या फल है ? यावद् दास्यति तावद् भोक्ष्यते । ( जितना देगा उतना खायेगा । यहाँ परिमाणवाची वतुप् प्रत्ययान्त प्रयोग है, निपात नहीं है । ) करणभूतया पुरा व्रजिष्यति ( करणभूत पुर् = नगरी से जायगा । यहाँ पुर् का तृतीयान्त एकवचन प्रयोग है । निपात नहीं है । ) ॥ ४ ॥

कदा तथा कर्हि इन दो शब्दों के उपपद रहने पर भविष्यत्काल अर्थ में धातु से लट् प्रत्यय विकल्प से होता है । [ पक्ष में यथाप्राप्त लुट् और लृट् भी होते हैं । ] उदा०—कदा भुङ्क्ते ( लट् है । कब खायेगा ? ) पक्ष में—कदा

**किंवृत्ते लिप्सायाम् ॥ ६ ॥**

**'विभाषा' इति वर्त्तते। किमो वृत्तं किंवृत्तम्। वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात्। डतरडतमौ चेति परिसंख्यानं स्मर्यते। किंवृत्ते उपपदे लिप्सायां भविष्यति काले धातोर्विभाषा लट् प्रत्ययो भवति। लिप्सा = लब्धुमिच्छा, प्रार्थनाभिलाषः। कं भवन्तो भोजयन्ति। कं भवन्तो भोजयितारः। लब्धुकामः पृच्छति— कतरो भिक्षां दास्यति, ददाति, दाता वा। कतमो भिक्षां दास्यति, ददाति, दाता वा।**

**लिप्सायामिति किम्? कः पाटलिपुत्रं गमिष्यति ॥**

**न्यासः**

**किंवृत्ते लिप्सायाम्** ॥ **किमो वृत्तमित्यादि**। किं पुनः किमो वृत्तमित्याह—**वृत्तग्रहणेनेत्यादि**। तदित्यनेन किंशब्दः सम्बध्यते—किमेतच्छब्दरूपं विभक्त्यन्तं वृत्तग्रहणेन प्रतीयात्। डतरडतमौ च 'किंयत्तदोनिर्धारणे द्वयोरेकस्य डतरच्', 'वा बहूनां जातिपरिप्रश्ने डतमच्' इत्येतौ प्रत्ययौ किंशब्दसम्बन्धिनावेव वृत्तग्रहणे प्रतीयात्। प्रत्ययग्रहणपरिभाषया चेह डतरडतमान्तं प्रतीयादित्येषोऽर्थो वेदितव्यः। **परिसंख्यानमिति**। नियम इत्यर्थः। तेन किंतराम्, किंगौ, किंपुरुषः—इत्येवमादिषु पदेषु न भवति; तेषां किंवृत्तत्वस्य परिगणनेन निरस्तत्वात्। **भोजयन्तीति**। हेतुमण्ण्यन्ताल्लट्। **भोजयितार इति**। लुट्। 'लुटः प्रथमस्य डारौरसः' इति झे रसादेशः, 'रि च' इति सकारलोपः। **लब्धुकामः पृच्छतीति**। उदाहरणेषु लिप्सायां गम्यमानत्वात् ॥ ६ ॥

**पदमञ्जरी**

**किंवृत्ते लिप्सायाम्** ॥ **किमो वृत्तं किंवृत्तमिति**। वर्त्ततेऽस्मिन्निति वृत्तम्, 'क्तोऽधिकरणे च' इत्यधिकरणे क्तः। अस्मादेव निपातनाद् 'अधिकरणवाचिना च' इति षष्ठीसमासप्रतिषेधाभावः, शेषषष्ठ्या वा समासः। यत्र किंशब्दोऽवयवत्वेन वर्त्तते तत्सर्वं किंवृत्तम्। ततश्च कीदृशः, किमीयः, किन्तरामित्यादावतिप्रसङ्गात्परिगणनम्। **वृत्तग्रहणेनेति**। **तदिति**। शब्दरूपापेक्षं नपुंसकत्वम्। **डतरडतमौ चेति**। डतरडतमान्तं किंशब्दरूपमित्यर्थः। **कं भवन्तो भोजयितार इति**। अस्यापि 'अनद्यतने लुट्' इत्यत्रानुवृत्तिरिति भावः। एवमुत्तरेष्वपि योगेषु द्रष्टव्यम् ॥ ६ ॥

**भावबोधिनी**

भोक्ष्यते, कदा भोक्ता ( लृट् और लुट् भी होते हैं। ) कर्हि भुङ्क्ते। ( कब खायेगा? ) पक्ष में—कर्हि भोक्ष्यते, कर्हि भोक्ता ( लृट् और लुट् भी होते हैं। ) ॥ ५ ॥

पूर्वसूत्र से 'विभाषा' की अनुवृत्ति होती है। किम् का बना हुआ अर्थात् 'किम्' शब्द अवयव रूप से जिसमें है ऐसे समस्त विभक्त्यन्त और डतर आदि प्रत्ययान्त रूप लिये जाते हैं। वृत्त के ग्रहण से किम् यह विभक्त्यन्त समझना चाहिये, और डतर तथा डतम ( प्रत्ययान्त )—इस परिसंख्यान का स्मरण किया जाता है, अर्थात् विभक्त्यन्त और डतरान्त डतमान्त ही किम् शब्द का ग्रहण होता है। 'किंवृत्त उपपद रहने पर लिप्सा ( प्राप्त करने की इच्छा ) में भविष्यत्काल अर्थ में विकल्प से लट् प्रत्यय होता है। लिप्सा = प्राप्त करने की इच्छा, प्रार्थन = याचना की अभिलाषा। उदा०—कं भवन्तः भोजयन्ति (आप लोग किसे खिलायेंगे।) कं भवन्तः भोजयितारः, कं भवन्तः भोजयिष्यन्ति। [ यहाँ लुट् और लृट् भी होते हैं। पहले के उदाहरण में लट् हुआ है। ] प्राप्त करने का इच्छुक पूछता है—कतरो भिक्षां ददाति, दास्यति, दाता ( कौन भीख देगा? ) कतमो भिक्षां ददाति, दास्यति, दाता ( कौन भीख देगा ) [ यह भीख पाने के इच्छुक व्यक्ति का वाक्य है। ] लिप्सा = प्राप्त करने की इच्छा में—यह किस लिये है? कः पाटलिपुत्रं गमिष्यति। ( कौन पटना जायेगा। यहाँ लिप्सा नहीं है। अतः लट् नहीं होता है। ) ॥ ६ ॥

## लिप्स्यमानसिद्धौ च ।। ७ ।।

**'विभाषा' इत्येव । लिप्स्यमानात् सिद्धिः = लिप्स्यमानसिद्धिः, लिप्स्यमानसिद्धौ गम्यमानायां भविष्यति काले धातोर्विभाषा लट् प्रत्ययो भवति । अकिंवृत्तार्थोऽयमारम्भः । यो भक्तं ददाति स स्वर्गं गच्छति, यो भक्तं दास्यति स स्वर्गं गमिष्यति, यो भक्तं दाता स स्वर्गं गन्ता । ( म० भा० ३।३।७ ) लिप्स्यमानाद्भक्तात्स्वर्गसिद्धिमाचक्षाणो दातारं प्रोत्साहयति ।।**

## लोडर्थलक्षणे च ।। ८ ।।

**लोडर्थः प्रैषादिर्लक्ष्यते येन स लोडर्थलक्षणो धात्वर्थः, तत्र वर्त्तमानाद्धातोर्भविष्यति काले विभाषा**

**न्यासः**

**लिप्स्यमानसिद्धौ च ।।** लिप्सायामेव सत्यां सम्भवति, नासत्याम् । अतो यत्र लिप्स्यमानसिद्धिर्गम्यते तत्रावश्यं लिप्सया भवितव्यम्, तथा च पूर्वेणैव सिद्धम्, तत् किमर्थोऽयमारम्भ इत्यत आह--**अकिंवृत्तार्थोऽयमारम्भ** इति । यद्येवम्, पूर्वसूत्र एव किंवृत्तग्रहणमकृत्वा प्रत्ययो विधेयः, एवं हीदं नारब्धव्यं भवति ? नैतदस्ति; एवं हि यथा लिप्स्यमानसिद्धौ गम्यमानायां किंवृत्तं चाकिंवृत्तं च भवति तथा यत्रापि लिप्स्यमानसिद्धिरहितं लिप्स्यमानं गम्यं तत्रापि स्यात् । किंवृत्त एव तत् तत्रेष्यते, तस्मात् पूर्वयोगे किंवृत्तग्रहणं कर्तव्यम् । तस्मिंश्च सतीदमप्यकिंवृत्तार्थमारब्धव्यम् । **दातारं प्रोत्साहयतीति** । भक्तदानविषयेऽस्य प्रोत्साहं जनयतीत्यर्थः ।। ७ ।।

**लोडर्थलक्षणे च ।। प्रैषादिरिति** । आदिशब्देन विधिनिमन्त्रणामन्त्रणाधीष्टादयो गम्यन्ते । **आगच्छतीति** । 'इषुगमियमां छः' इति च्छत्वम् । **अध्ययनप्रैषस्येति** । अध्ययनविषयः प्रैषोऽध्ययनप्रैषः, शाकपार्थिवादित्वा-

**पदमञ्जरी**

**लिप्स्यमानसिद्धौ च ।।** 'लिप्स्यमानसिद्धौ' इति षष्ठीसमासः । वृत्तौ तु वस्तुमात्रमदर्शि । **लिप्स्यमानात्सिद्धिरिति** । अस्मादेव निपातनाद्वा पञ्चमीसमासः । लिप्स्यमानं भक्तादि तन्निमित्ता या स्वर्गादेः सिद्धिस्तस्यामित्यर्थः । ननु च यत्र लिप्स्यमानस्य सिद्धिर्गम्यते, लिप्सापि तत्र भवति, ततश्च पूर्वेणैव सिद्धं नार्थ एतेन ? तत्राह—**अकिंवृत्तार्थोऽयमारम्भ इति** । पूर्वे सूत्रे किंवृत्तग्रहणं लिप्स्यमानसिद्धिरहिते लिप्सामात्रे किंवृत्त एव यथा स्याद्, अकिंवृत्ते मा भूदित्येवमर्थम् ।। ७ ।।

**लोडर्थलक्षणे च ।। अध्ययनप्रैषस्येति** । 'कर्तृकरणे कृता बहुलम्' इत्यत्र साधनं कृतेति वा पादहारकाद्यर्थमिति वचनात् सप्तमीसमासः ।। ८ ।।

**भावबोधिनी**

पूर्व सूत्र से विभाषा अर्थात् विकल्प की अनुवृत्ति होती है । लिप्स्यमान = चाही गई वस्तु से सिद्धि—लिप्स्यमानसिद्धि है । चाही गई वस्तु से अन्य पदार्थ की सिद्धि = उपलब्धि प्रतीयमान रहने पर भविष्यत्काल अर्थ में धातु से लट् प्रत्यय विकल्प से होता है । किंवृत्त [ विभक्त्यन्तादि किम् ] से रहित स्थलों के लिये प्रस्तुत सूत्र बनाया गया है । उदा०—यो भक्तं ददाति स स्वर्गं गच्छति ( जो भात देगा वह स्वर्ग जायगा ) । यो भक्तं दास्यति स स्वर्गं गमिष्यति । यो भक्तं दाता सः स्वर्गं गन्ता । [ यहाँ लट् के साथ पक्ष में लृट् और लुट् भी होते हैं । ] यहाँ लिप्स्यमान = अभीप्सित पदार्थ भात से स्वर्गसिद्धि = स्वर्ग प्राप्ति कहने वाला याचक दाता को ( भात दान करने के लिये ) प्रोत्साहित करता है ।। ७ ।।

लोट् का अर्थ प्रैष=प्रेरणा आदि जिससे लक्षित होता है वह लोडर्थ-लक्षण धात्वर्थ है, ऐसी लोडर्थ को लक्षित कराने वाली धातु के अर्थ में विद्यमान धातु से भविष्यत्काल में विकल्प से लट् प्रत्यय होता है । उदा०—

**लट् प्रत्ययो भवति । उपाध्यायश्चेदागच्छति, उपाध्यायश्चेदागमिष्यति, उपाध्यायश्चेदागन्ता, अथ त्वं छन्दोऽधीष्व; अथ त्वं व्याकरणमधीष्व । उपाध्यायागमनमध्ययनप्रैषस्य लक्षणम् ॥**

**लिङ् चोर्ध्वमौहूर्त्तिके ॥ ९ ॥**

**'भविष्यति' 'विभाषा' 'लोडर्थलक्षणे' इति सर्वमनुवर्त्तते । ऊर्ध्वमौहूर्त्तिके भविष्यति काले लोडर्थलक्षणार्थे वर्तमानाद्धातोर्विभाषा लिङ् प्रत्ययो भवति, चकाराल्लट् च । ऊर्ध्वं मुहूर्ताद्भवः, ऊर्ध्वमौहूर्त्तिकः । निपातनात्समासः, उत्तरपदवृद्धिश्च । भविष्यतश्चैतद्विशेषणम् । ऊर्ध्वं मुहूर्त्ताद् = उपरि मुहूर्त्तस्य, उपाध्यायश्चेदागच्छेत् उपाध्यायश्चेदागच्छति, उपाध्यायश्चेदागमिष्यति उपाध्यायश्चेदागन्ता, अथ त्वं छन्दोऽधीष्व; अथ त्वं व्याकरणमधीष्व ॥**

**न्यासः**

दुत्तरपदलोपी समासः । अथ त्वं छन्दोऽधीष्वेति । अत्र 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' इति लोट्, स च प्रैषोऽध्ययनविषयः । तस्योपाध्यायागमनं ह्यपेक्ष्याध्ययने प्रैषतेत्यस्योपाध्यायागमनस्य प्रैषं प्रति निमित्तभावः ॥ ८ ॥

**लिङ् चोर्ध्वमौहूर्त्तिके ॥ निपातनात् समास** इत्यादि । ऊर्ध्वमौहूर्त्तिकशब्दस्योच्चारणमेव निपातनम् । ऊर्ध्वं मुहूर्त्तादिति विगृह्यास्मादेव निपातनात् समासः । ततः 'बह्वचोऽन्तोदात्तात्' इति ठञ्, तत उत्तरपदवृद्धिः; सा ह्यत एव निपातनात् । भविष्यतः प्रकृतत्वात् तस्यैवोर्ध्वमौहूर्त्तिकग्रहणं विशेषणं विज्ञायत इत्याह—**भविष्यतश्चैतदित्यादि** । ऊर्ध्वमौहूर्त्तिकशब्दश्चायं वर्तमानस्य प्रत्यासन्ने वर्त्तते । ऊर्ध्वमौहूर्त्तिके वर्तमानसमीप इत्यर्थः । **आगच्छेदिति** । यासुट्, 'अतो येयः' इतीयादेशः, 'आद्गुणः', 'लोपो व्योर्वलि' इति यकारस्य लोपः, 'लिङः सलोपोऽनन्त्यस्य' इति सकारस्य ॥ ९ ॥

**पदमञ्जरी**

**लिङ् चोर्ध्वमौहूर्त्तिके ॥ निपातनात् समास उत्तरपदवृद्धिश्चेति** । ठञ्प्रत्ययश्चाध्यात्मादित्वात् । 'बह्वचोऽन्तोदात्तात्' इत्यत्र तु 'व्याख्यातव्यनाम्नः' इति वर्त्तते । **उपाध्यायश्चेदागन्तेति** । ऊर्ध्वमौहूर्त्तिकेऽनद्यतनत्वं सम्भवतीति चिन्त्यम् ॥ ९ ॥

**भावबोधिनी**

उपाध्यायश्चेत् आगच्छति, उपाध्यायश्चेत् आगन्ता, उपाध्यायश्चेत् आगमिष्यति, अथ त्वं छन्दोऽधीष्व, अथ त्वं व्याकरणमधीष्व । [ उपाध्याय यदि आ जावें तो तुम वेद पढ़ना, तुम व्याकरण पढ़ना । ] यहाँ उपाध्याय का आगमन अध्ययनविषयक प्रैष=प्रेरणा का लक्षण है । [ अर्थात् लोडर्थ प्रेरणा का विषय है 'अध्ययन करना' । इसको लक्षित कराने वाला है 'उपाध्याय का आगमन' । अतः आङ्पूर्वक गम् धातु से विकल्प से लट् और पक्ष में लुट् तथा लृट् दोनों होते हैं ] ॥ ८ ॥

**इस सूत्र में, 'भविष्यति', 'विभाषा,' 'लोडर्थलक्षणे'**—इन सब की अनुवृत्ति होती है । मुहूर्त = दो घड़ी से ऊपर के भविष्यत्काल में, लोडर्थ को लक्षित कराने वाले धात्वर्थ में वर्तमान धातु से विकल्प से लिङ् प्रत्यय होता है और चकार के बल से लट् भी होता है । मुहूर्त = दो घड़ी से ऊपर = बाद में होने वाला—ऊर्ध्वमौहूर्त्तिक है । इसमें निपातनात् समास और उत्तरपद की वृद्धि होती हैं । यह ऊर्ध्वमौहूर्त्तिक भविष्यत् का विशेषण है अर्थात् मुहूर्त के बाद वाले भविष्यत् काल में यह विधान करता है । उदा०—ऊर्ध्वं मुहूर्त्तात्=उपरि मुहूर्तस्य उपाध्यायश्चेद् आगच्छेत्, उपाध्यायश्चेद् आगच्छति, उपाध्यायश्चेद् आगमिष्यति, उपाध्यायश्चेद् आगन्ता; अथ त्वं छन्दोऽधीष्व, अथ त्वं व्याकरणम् अधीष्व । [ मुहूर्त्त = दो घड़ी के बाद यदि उपाध्याय आजावें तो तुम वेद पढ़ना, तुम व्याकरण पढ़ना ।

**विमर्श**—ऊर्ध्वं मुहूर्तात् भवः—इस अर्थ में समासविधायक कोई सूत्र न होने के कारण निपातन का आश्रयण लिया गया है । इसके अतिरिक्त आदि वृद्धि न करके उत्तरपद को वृद्धि करने के लिये भी निपातन ही अवलम्बन है।

**तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ॥ १० ॥**

**'भविष्यति' इत्येव । क्रियार्थायां क्रियायामुपपदे धातोर्भविष्यति काले तुमुन्-ण्वुलौ प्रत्ययौ भवतः । भोक्तुं व्रजति, भोजको व्रजति । भुजिक्रियार्थो व्रजिरत्रोपपदम् । क्रियायामिति किम् ? भिक्षिष्य इति अस्य जटाः । क्रियार्थायामिति किम् ? धावतस्ते पतिष्यति दण्डः । अथ किमर्थं ण्वुल् विधीयते, यावता 'ण्वुल्तृचौ' (३।१।१३३)**

न्यासः

**तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ॥ भिक्षिष्य इति अस्य जटा इति ।** लृट्, अनुदात्तेत्वादात्मनेपदम्, उत्तमपुरुषैकवचनम्, इट्, टेरेत्त्वम्, 'अतो गुणे' पररूपत्वम् । अत्रास्ति भिक्षिक्रियार्थमुपपदं जटाशब्दः, न तु जटाशब्दः क्रियावचनः, जटानां द्रव्यत्वात् । **धावतस्ते पतिष्यति दण्ड इति ।** 'धावु गतिशुद्धयोः' लट्, तस्य शत्रादेशः, षष्ठ्येकवचनम् । अथ वा 'सृ गतौ' इत्यस्य पाघ्रादिसूत्रेण धावादेशः । अस्त्यत्र धावतिक्रियोपपदम्, न तु क्रियार्थः । अर्थशब्दो ह्ययं प्रयोजनवचनः, यच्च यदुद्दिश्य प्रवर्त्तते तत् तस्य प्रयोजनं भवति, न चासौ दण्डपतनमुद्दिश्य धावति, किं तर्हि ? कार्यान्तरार्थम् ।

**अथेत्यादि चोद्यम् । सामान्येन विहित एवेति ।** भविष्यत्यन्यत्र च काले क्रियायां क्रियार्थायामुपपदेऽन्यत्र चाविशेषेण विधानात् । **लृटेत्यादि** परिहारः । 'लृट् शेषे च' इति लृटं वक्ष्यति, तेन विशेषविहितेन लृटा बाध्यते, तन्मा भूतस्य बाधेति पुनरिह विधीयते । अथ तुमुन् क्रियार्थोपपदेन बाध्यत इत्येतत् कस्मान्नोक्तम् ? भिन्नार्थत्वात् । न हि भिन्नार्थयोर्बाध्यबाधकभावो भवति, भिन्नार्थौ च ण्वुल्तुमुनौ । तथा हि—कर्त्तरि ण्वुल्, तुमुन् पुनर्भावे । कथं ज्ञायते ? 'तुमर्थे सेसेन्' इत्यत्र तुमर्थग्रहणात् । यदि तुमुन् 'कर्त्तरि कृत्' इत्यतो वचनात् कर्त्तरि स्यात्, ततः सेसेन्प्रभृतयोऽपि तत्रैव भविष्यन्तीति तुमर्थग्रहणं न कुर्यात्, कृतवांश्च, ततस्तुमर्थग्रहणादवसीयते—तुमुन् कर्त्तरि न भवति । न चान्यार्थो निर्दिश्यते, तत्रानिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति

पदमञ्जरी

**तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ॥ भिक्षिष्य इति अस्य जटा इति ।** अत्र भिक्षणक्रियार्थत्वं जटानाम्, न तु क्रियात्वम्; द्रव्यत्वाज्जटानाम् । **धावतस्ते पतिष्यति दण्ड इति ।** अस्त्यत्र धावनक्रियोपपदम्, न त्वसौ दण्डपातनार्थं धावति, किं तर्हि ? धावतोऽर्थात् पतिष्यति दण्डः । उद्देशेन हि तादर्थ्यं विविच्यते, न तु हेतुत्वमात्रेण तादर्थ्यम् । **अथेत्यादि चोद्यम् ।** परिहरति—**लृटा क्रियार्थोपपदेनेति ।** तुमुना तु बाधो नाशङ्कनीयः; भिन्नार्थत्वात्—कर्त्तरि ण्वुल्, तुमुन् पुनर्भावे । कथम् ? 'तुमर्थे सेसेन्' इत्यत्र तुमर्थग्रहणात् । यदि हि 'कर्त्तरि कृत्' इति वचनात् कर्त्तरि तुमुन् स्यात्तद्वदेव सेसेन्प्रभृतयोऽपि कर्त्तरि भविष्यन्ति । अतस्तुमर्थग्रहणात् कर्त्तुस्तावदयमपकृष्यते । न चान्योऽर्थो निर्दिश्यते, अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति । कश्च धातोः स्वार्थः ? भाव एव । लृट् तु यद्यपि भावकर्मणोश्चरितार्थस्तथापि क्रियायां क्रियार्थायामुपपदे भविष्यति काले च विधानाद्विशेषविहितः ।

भावबोधिनी

इसमें विभाषा की अनुवृत्ति होती है, साथ ही 'च' का भी प्रयोग है । अतः 'च' के बल से लिङ् के साथ लट् का ज्ञान होता है और 'विभाषा' के बल से भविष्यत्काल-सूचक, लुट् तथा लृट् होते हैं । इस प्रकार यहाँ चार लकारों का प्रयोग होता है । ऊपर के उदाहरण में उपाध्याय का आगमन अध्ययनविषयक प्रैष = प्रेरणा का लक्षण है । अतः आङ्पूर्वक गम् धातु से (१) लिङ्, (२) लट्, (३) लुट् और (४) लृट् ये चार लकार होते हैं । लुट् के प्रयोग में अनद्यतन भविष्यत् का ध्यान रखना चाहिये ॥ ९ ॥

'भविष्यति' की ही [ अनुवृत्ति होती है ] । क्रियार्थक क्रिया उपपद रहने पर धातु से भविष्यत्काल में तुमुन् और ण्वुल् ये दो प्रत्यय होते हैं । [ जो कोई क्रिया किसी दूसरी क्रिया के लिये की जाती है वह पहले वाली क्रिया 'क्रियार्थक क्रिया' होती है । वहाँ भविष्यत्काल वाली क्रिया से ये प्रत्यय होते हैं । ] उदा०—भोक्तुं

**इति सामान्येन विहित एव, सोऽस्मिन्नपि विषये भविष्यति ? लृटा क्रियार्थोपपदेन बाध्येत। वाऽसरूपविधिना सोऽपि भविष्यति ? एवं तर्ह्येतज्ज्ञाप्यते—क्रियायामुपपदे क्रियार्थायां वाऽसरूपेण तृजादयो न भवन्तीति। तेन कर्त्ता व्रजति, विक्षिपो व्रजतीत्येवमादि निवर्त्यते ॥**

**न्यासः**

भाव एव तुमुन् भवतीति विज्ञायते। यदुक्तम्—लृटा क्रियार्थोपपदेन बाध्यत इति, तद् विघटयितुमाह—**वाऽसरूपविधिनेत्यादि। एवं तर्हीत्यादि।** एतेन ज्ञापकार्थतां ण्वुल्विधानस्याचष्टे। यदि हि क्रियायामुपपदे क्रियार्थायां वाऽसरूपेण तृजादयः स्युर्ण्वुलपि तृजार्थाभिधायित्वाद् वाऽसरूपविधिना भविष्यतीति पुनरिह तन्न विदध्यात्, विहितवांश्च; ततस्तेन ण्वुल्विधानेनास्मिन् विषये वाऽसरूपेण तृजादयो न भवन्तीत्ययमर्थो विज्ञाप्यते। **तेनेत्यादिना** ज्ञापनस्य प्रयोजनं दर्शयति। **कर्त्तेति** तृच्। **विक्षिप** इति 'इगुपधज्ञाप्रीकिरः कः'। तुमुनो नकार आद्युदात्तार्थः, उकार उच्चारणार्थः। ण्वुलो लकारो लिति प्रत्ययात् पूर्वस्योदात्तार्थः, णकारो वृद्धयर्थः ॥ १० ॥

**पदमञ्जरी**

ण्वुल्विधौ तु कर्त्तरीति न श्रूयते, अतोऽसौ विशेषविहितेन लृटा बाध्यते। अथ वा किं न एतेन विशेषविहित इति, द्वयोः सावकाशत्वेऽपि परत्वाल्लृट् ण्वुलं बाधेत। पुनश्चोदयति—**वाऽसरूपविधिनेति**। परिहरति—**एवं तर्हीति**। नन्वसति प्रयोजने ज्ञापकं भवति, अस्ति चात्र प्रयोजनम्, किम् ? 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठीप्रतिषेधो भविष्यदधिकारविहितस्याकस्य प्रयोगे यथा स्यात्; 'वर्षशतस्य पूरकः' 'पुत्त्रपौत्त्राणां दर्शक' इत्यत्र मा भूदिति ? एवं मन्यते—पदान्तरसन्निधानादत्र भविष्यत्कालत्वं गम्यते। यदा हि बालविषयमेतत्प्रयुज्यते तदा तस्यामवस्थायां वर्षशतपूरणस्य पुत्त्रपौत्त्रदर्शनस्य चासम्भवात्तावन्तमसौ कालं जीविष्यतीत्यर्थाद् गम्यते, न त्वत्र पदार्थो भविष्यत्कालत्वमिति। स्थिते त्वस्मिन् ण्वुल्विधाने 'वर्षशतस्य पूरकः' इत्यादौ भविष्यत्कालस्य पदार्थत्वेऽपि न दोष इत्यभिप्रायेण 'अकेनोर्भविष्यदाधमर्ण्ययोः' इत्यत्रोक्तम्—भविष्यदधिकारविहितस्याकस्येदं ग्रहणम्, तेन 'वर्षशतस्य पूरकः' 'पुत्त्रपौत्त्राणां दर्शक' इत्यत्र न भवतीति ॥ १० ॥

**भावबोधिनी**

व्रजति। भोजको व्रजति। [ खाने के लिये जाता है। ] भोजनक्रिया के लिये यहाँ व्रज=गमन क्रिया उपपद है। [ अतः भविष्यत्कालिक भोजन क्रियावाचक भुज् धातु से तुमुन्=तुम्, और ण्वुल्=वु=अक प्रत्यय करने पर भोक्तुम् तथा भोजकः रूप होते हैं ]। क्रिया रहने पर ही [ ये प्रत्यय होते हैं— ] इसका क्या फल है ? भिक्षिष्ये इति अस्य जटाः। [ भीख मागूँगा इसके लिये इस व्यक्ति की जटायें हैं। यहाँ 'जटा' क्रिया नहीं अपितु द्रव्य है। अतः प्रत्यय नहीं होते।] क्रियार्थक ( क्रिया ) रहने पर—इसका क्या फल है ? धावतः ते पतिष्यति दण्डः [ दौड़ने वाले तुम्हारा डण्डा गिर जायगा ]। [ यहाँ धावन क्रिया तो है परन्तु वह दण्ड-पतन-क्रियार्थ नहीं है। यहाँ धावन तो दण्डपतन का हेतु है न कि उद्देश्य। अतः प्रत्यय नहीं होते हैं। ]

शङ्का—इस ण्वुल् का विधान क्यों किया जा रहा है, क्योंकि 'ण्वुल्तृचौ' ३।१।१३३ इस सूत्र द्वारा सामान्य रूप से ण्वुल् किया ही गया है, वह इसके विषय में भी हो ही जायगा ? क्रियार्थ उपपद वाले लृट् से उस ण्वुल् का बाध हो जायगा। (अतः इससे पुनः ण्वुल् का विधान किया गया है। यह भी समाधान नहीं किया जा सकता क्योंकि) 'वाऽसरूपोऽस्त्रियाम्' ( ३।१।९४ ) [ असरूप प्रत्यय विकल्प से होते हैं ] इस सूत्र के बल से वह ण्वुल् भी हो जायगा ? इसलिये [ प्रस्तुत सूत्र से ण्वुल् का विधान व्यर्थ होकर ] यह ज्ञापित करता है—क्रियार्थक क्रिया उपपद रहने पर वाऽसरूपविधि द्वारा तृच् आदि नहीं होते हैं। [ यहाँ आदि पद से सामान्य ण्वुल् का भी ग्रहण होता है ] इस कारण 'कर्त्ता व्रजति, विक्षिपः व्रजति—( भविष्य में करूँगा, इस लिये जाता है, भविष्य में फेकूँगा, इसलिये जाता है ) आदि प्रकार के प्रयोगों की निवृत्ति हो जाती है।

**भाववचनाश्च ॥ ११ ॥**

**'भविष्यति' इत्येव । 'भावे' ( ३।३।१८ ) इति प्रकृत्य ये घञादयो विहितास्ते च भाववचनाः भविष्यति काले क्रियायामुपपदे क्रियार्थायां भवन्ति । किमर्थमिदम्, यावता विहिता एव ते ? क्रियार्थोपपदे विहितेनास्मिन् विषये तुमुना बाध्येरन् । वाऽसरूपविधिश्चात्र नास्तीत्युक्तम् । अथ वचनग्रहणं किमर्थम् ? वाचका यथा**

**न्यासः**

**भाववचनाश्च ॥ भाववचना** इति । ब्रुवन्तीति वचनाः, बहुलवचनात् कर्त्तरि ल्युट् । भावस्य वचना भाववचनाः । भाववचनत्वं पुनस्तेषां भावाधिकारे विधानादिति दर्शयितुमाह—**भाव इति प्रकृत्येत्यादि** । प्रकृत्य = अधिकृत्येत्यर्थः । **घञादय** इति । आदिशब्देनाजबादीनां ग्रहणम् । **किमर्थमिदमित्यादि** चोद्यम् । **क्रियार्थोपपदे विहितेनेत्यादि** परिहारः । स्यादेतत्—वाऽसरूपविधिना ते भविष्यन्ति । अत आह— **वाऽसरूपविधिश्च नास्तीत्युक्तमिति** । एतच्च पूर्वसूत्र उक्तम् । **अथेत्यादि** । भाव इत्येतावद्वक्तव्यम्; एवं ह्युच्यमाने सतीदमेव घञादीनां विधायकं स्यात्, ततश्च ते धातुमात्रादविशेषेण प्रसज्येरन्; विशेषानुपादानात् । वचनग्रहणादयमर्थो लभ्यते—भावे ये विहिताः प्रत्ययास्ते तथा भवन्ति यथा भावस्य वाचका भवन्तीति । यथा च ते भावस्य वाचका भवन्ति तथा प्रश्नपूर्वकं दर्शयितुमाह—**कथञ्चेत्यादिना** । **नासामञ्जस्येनेति** । न व्यतिकरेण, नानियमेनेत्यर्थः ।

**पदमञ्जरी**

**भाववचनाश्च** ॥ वक्तीति वचनः, 'कृत्यल्युटो बहुलम्' इति कर्त्तरि ल्युट्, करण एव वा—भाव उच्यते येन स भाववचनः । अत्र पुरुषाः कर्त्तारः । भावाधिकारविहिता एव भाववचना भवन्तीत्याह—**भाव इति प्रकृत्येति** । **तुमुना बाध्येरन्निति** । लृट् तु भावकर्मकर्तृषु त्रिषु विधानादसमानार्थ । किञ्च, धात्वर्थस्य सिद्धतायां घञादयः, शुद्धे तु धात्वर्थे लकारः, अतोऽप्यसमानार्थत्वम् । इह 'भावे' इत्येतावद्वक्तव्यम्, एवमपि ह्युच्यमाने भावे ये विहितास्ते क्रियायां क्रियार्थायामुपपदे भवन्तीत्यर्थो लभ्यत एव, तदपार्थकं वचनग्रहणमिति मत्वा पृच्छति—**अथेति** । **वाचका यथा स्युरिति** । वचनग्रहणे हि सति भाववचनाः सन्तो घञादयोऽस्मिन्विषये

**भावबोधिनी**

**विमर्श**—'ण्वुलतृचौ' ३।१।१३३ इस सामान्य सूत्र से ण्वुल् करने के बाद पुनः प्रस्तुत सूत्र से ण्वुल् करने का क्या लाभ ? आगे 'लृट् शेषे च' ३।३।१३ में 'क्रियार्थायां क्रियायाम्' की अनुवृत्ति होने से परत्वात् उस ण्वुल् का बाध कर लेगा । अतः इससे पुनः विधान किया गया है जिससे बाध न हो सके—ऐसा उत्तर ठीक नहीं है । क्योंकि 'वाऽसरूपोऽस्त्रियाम्' ३।१।९४ यह सूत्र असरूप प्रत्ययों का विकल्प प्रतिपादित करता है । अतः हर स्थिति में पहले वाला ण्वुल् सिद्ध है । यह ण्वुल् व्यर्थ है । व्यर्थ होकर यह एक ज्ञापन करता है—'क्रियार्थ क्रिया उपपद रहने पर वाऽसरूप नियम से तृच् आदि नहीं होते हैं ।' आदि पद से सामान्य ण्वुल् भी लिया जाता है । अतः 'करिष्यामि इति व्रजति'—इस अर्थ में कर्त्ता व्रजति—आदि प्रकार के प्रयोग नहीं होते हैं । ऐसे प्रयोगों का निवारण करने के लिये ही इस सूत्र द्वारा पुनः ण्वुल् का विधान किया गया है ॥ १० ॥

( अनु० ) –'भविष्यति' की ही अनुवृत्ति [ होती है ] । 'भावे' ( ३।३।१८ ) इसके प्रकरण में जिन घञ् आदि का विधान किया गया है वे भाववचन क्रियार्थक क्रिया उपपद रहने पर भविष्यत् काल में होते हैं ।

चूंकि उन प्रत्ययों का विधान किया ही गया है अतः इस सूत्र का क्या प्रयोजन ? क्रियार्थक क्रिया उपपद रहने पर विधान किये गये तुमुन् द्वारा वर्त्तमान विषय में उन घञादि का बाध होने लगेगा और वाऽसरूपोऽस्त्रियाम्' ३।१।९४ यह विधि यहाँ प्रवृत्त नहीं होती है यह ( पूर्व सूत्र में ) कहा जा चुका है । [ अतः इस सूत्र से उनका विधान आवश्यक है । ]

**स्युः। कथं च वाचका भवन्ति? याभ्यः प्रकृतिभ्यो येन विशेषणेन विहिता यदि ताभ्यस्तथैव भवन्ति, नासामञ्जस्येनेति। पाकाय व्रजति। भूतये व्रजति। पुष्टये व्रजति॥**

**अण् कर्मणि च॥ १२॥**

**'भविष्यति' इत्येव। चकारः सन्नियोगार्थः। धातोरण्प्रत्ययो भवति भविष्यति काले कर्मण्युपपदे क्रियायां**

**न्यासः**

तत्र केचिदाहुः—वचनग्रहणाद् यैरेव विधिवाक्यैर्भाव एषां विधानं तैरेव क्रियायामुपपदे क्रियार्थायां भवन्ति, एवञ्च ते वाचका भवन्ति, नान्यथेति। अन्ये त्वाहुः—एतदेव सूत्रं विधायकम्; वचनग्रहणसामर्थ्यात्। अनेनापि तथैषां विधानं भवति यथा स्वैर्विधिवाक्यैः। यदि भावे हि तद्विधिः, नान्यस्मिन्नपि विषये भविष्यति। तत् तस्मात् पुनर्विधीयत इति॥ ११॥

**अण् कर्मणि च। कर्मण्यणित्यादि॥** 'तुमुन्ण्वुलौ' इत्यादि सूत्रे ज्ञापितमेतद्—वाऽसरूपविधिरिह नास्तीति। तेन यद्यपि विशेषेणाण् विहितः, तथापि वाऽसरूपविधेरभावात् क्रियार्थोपपदे न ण्वुला बाधितः, तस्मात् पुनर्विधीयते। **सोऽपवादत्वाण्ण्वुलं बाधत** इति। नाप्राप्ते ण्वुलीतरस्यारब्धत्वात्, विशेषविहितत्वाच्च।

**पदमञ्जरी**

भवन्तीत्यर्थो भवति, भावस्य वाचकाः सन्तो भवन्तीत्यर्थः। एतदेव प्रश्नपूर्वकं विवृणोति—**कथं चेति। याभ्यः प्रकृतिभ्य इति**। इवर्णान्तेभ्योऽच्, ऋवर्णान्तेभ्य उवर्णान्तेभ्यश्चाबिति। एवम् **येन विशेषणेनेति**। 'हस्तादाने चेरस्तेये', 'श्रिणी भुवोऽनुपसर्गे' इत्यादिना। असामञ्जस्यम् = व्यतिकरः, अन्योऽन्यविषयावगाहनमिति यावत्। पाकायेत्यादौ 'तुमर्थाच्च भाववचनात्' इति चतुर्थी॥ ११॥

**अण् कर्मणि च॥ चकारः सन्नियोगार्थ इति**। अन्यथा पर्यायेण स्यात्—कदाचित्क्रियार्थायामेव क्रियायामुपपदे, कदाचित्कर्मण्येव केवले; वचनं तु भविष्यति काले कादीनामपवादानां बाधनार्थं स्यात्। चकारात्तु सन्नियोगार्थात्समुदायस्यैव प्रत्ययोत्पत्तिं प्रति निमित्तत्वम्। उपपदसंज्ञा तु प्रत्येकमेव भवति; प्रत्येकं सप्तमीनिर्देशात्। तेन केवलस्यापि कर्मणः समासो भवति। **काण्डलावो व्रजतीति। सोऽपवादत्वात् ण्वुलं बाधत इति**। ण्वुल्विधाने च क्रियायां क्रियार्थायामुपपदे वाऽसरूपेण तृजादयो न भवन्तीति ज्ञापितम्, न पुनरस्मिन् प्रकरणे

**भावबोधिनी**

वचन-ग्रहण का क्या फल है? जिससे ये प्रत्यय वाचक हो जायँ। किस प्रकार से वाचक होते हैं? जिन प्रकृतिभूत शब्दों ( धातुओं ) से जिस विशेषण के साथ [ भाव में प्रत्यय ] विहित हैं, उन प्रकृतिभूत शब्दों से उस विशेषण के साथ ही होते हैं, अन्य विशेषण के साथ नहीं होते हैं, [ इस प्रकार उन अर्थों के वाचक बन जाते हैं। जैसे क्रियार्थक क्रिया उपपद रहने पर ये प्रत्यय होते हैं तो इस अर्थ के वाचक होते हैं। ब्रुवन्ति इति वचनाः, कर्ता अर्थ में निपातनात् ल्युट् = अन होता है। भावस्य वचनाः—भाववचनाः = भाव = सिद्धावस्थापन्न धात्वर्थ के वाचक ]। उदा०—पाकाय व्रजति ( भोजन बनाने के लिये जाता है )। भूतये व्रजति ( सम्पत्ति के लिये जाता है )। पुष्टये व्रजति ( पुष्टि के लिये जाता है )।

विमर्श—इनमें क्रियार्थक क्रिया 'व्रजति' यह उपपद है। अतः भविष्यत्कालिक क्रियावाची √पच् से घञ् होकर पाकः बनता है। और 'तुमर्थाच्च भाव-वचनात्' २।३।१५ से चतुर्थी होती है। इसी प्रकार भू और पुष् धातुओं से 'स्त्रियां क्तिन्' ३।३।९४ से क्तिन् = ति प्रत्यय होता है। चतुर्थी पूर्ववत् होती है॥ ११॥

( अनु० )—भविष्यति की ही [ अनुवृत्ति होती है ]। चकार [ क्रियायां क्रियार्थायाम्-के ] सन्नियोग=समुच्चय के लिए है। क्रियार्थक क्रिया और कर्म उपपद रहने पर भविष्यत् काल अर्थ में धातु से अण् प्रत्यय होता है। 'कर्मण्यण्' ( ३।२।१ ) [ कर्म उपपद रहते धातुमात्र से अण् होता है ]। इससे सामान्यरूप से विहित ( किन्तु ) 'वाऽसरूपोऽस्त्रियाम्' ( ३।१।९४ ) की प्रवृत्ति न होने से ण्वुल् द्वारा बाधित अण् का पुनः ( इस सूत्र से )

**च क्रियार्थायाम्। 'कर्मण्यण्' ( ३।२।१ ) इति सामान्येन विहितो वाऽसरूपविधेरभावात् ण्वुला बाधितः पुनरण् विधीयते, सोऽपवादत्वाद् ण्वुलं बाधते, परत्वाच्च कादीन्। तेनापवादविषयेऽपि भवत्येव—काण्डलावो व्रजति, अश्वदायो व्रजति, गोदायो व्रजति। कम्बलदायो व्रजति॥**

## लृट् शेषे च ॥ १३ ॥

**'भविष्यति' इत्येव। शेषः = क्रियार्थोपपदादन्यः। शेषे शुद्धे भविष्यति काले चकारात् क्रियायां चोपपदे क्रियार्थायां धातोर्लृट् प्रत्ययो भवति। करिष्यामीति व्रजति। हरिष्यामीति व्रजति। शेषे खल्वपि—करिष्यति, हरिष्यति॥**

### न्यासः

**कादीनिति।** बाधत इति सम्बन्धः। आदिशब्देन टगादीनां ग्रहणम्। **तेनापवादविषयेऽपि भवतीति।** अपवादाः सामान्यविहितस्याणः कादयः, तद्विषयेऽपि भवति। 'अण् कर्मणि च' इत्यस्याऽनाकारान्तक्रियोपपदोऽवकाशः—काण्डलावो व्रजतीति; 'आतोऽनुपसर्गे कः' इत्यस्याकारान्तः क्रियोपपदोऽवकाशः—गोद इति; इह ह्युभयं प्राप्नोति—गोदायो व्रजतीति; परत्वादण् भवति। तथा 'गापोष्टक्' इत्यस्यावकाशः—सुरापः शोधुपः, अणः स एव; इहोभयं प्राप्नोति—सुरापायो व्रजति, शीधुपायो व्रजतीति॥ १२॥

**लृट् शेषे च॥ चकारादित्यादि।** एतेन क्रियायां क्रियार्थायामित्यस्यानुकर्षणार्थश्चकार इति दर्शयति। **करिष्यामीति।** 'ऋद्धनोः स्ये' इतीट्॥ १३॥

### पदमञ्जरी

वाऽसरूपविधिर्नास्तीति। तेन योऽयम् 'तुमुन्ण्वुलौ' इति ण्वुल्; सोऽस्याणो विषयेऽपि वाऽसरूपविधिना भवत्येव—एधानाहारको व्रजतीति। तथा च 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति भविष्यदधिकारविहितस्याकस्य भविष्यति प्रयोगे कर्मणि षष्ठी प्रतिषिद्धयते। **परत्वाच्च कादीनिति।** ननु चापूर्वविधानात्प्रतिप्रसववचनस्य लाघवमस्तीति अण्विषय एव ण्वुलं बाधित्वाण् स्यान्नापवादविषये? एवं मन्यते—इह कर्मणीति न वक्तव्यं वचनग्रहणानुवृत्तेरेव यो वचनेऽण् सोऽस्मिन्विषये भवतीति वचनव्यक्त्या कर्मण्येवोपपदेऽण् सिद्धः, तत्र पुनः कर्मग्रहणं कर्ममात्रपरिग्रहार्थमित्यपवादविषयेऽपि भवतीति। एवं च परत्वादिति कोऽर्थः? उत्कृष्टत्वादाधिक्यादित्यर्थः। अन्ये तु विप्रतिषेधमेव व्याचक्षते॥ १२॥

**लृट् शेषे च॥ शेषः क्रियार्थोपपदादन्य उच्यते इति।** क्रिया क्रियार्थोपपदं यस्मिन् भविष्यति काले ततोऽन्यो भविष्यदित्यर्थः। **चकारादिति।** यदि तर्हि शेषे चाशेषे च भवति लृडित्येवास्तु, क्रियायां क्रियार्थायामिति निर्वर्त्तिष्यते, तेन सर्वत्र भविष्यति? एवमपि शेष एव स्यात्, अशेषे तु तुमुन्ण्वुलौ बाधकौ स्याताम्। वाऽसरूपविधिना लृडपि भविष्यति। तदेतत् 'शेषे च' इति वचनं चिन्त्यप्रयोजनम्। **करिष्यामीति व्रजतीति।** इतिशब्दः परस्परसम्बन्धज्ञापनार्थः॥ १३॥

### भावबोधिनी

विधान किया जाता है। अतः यह अण् ( निरवकाश होने से ) अपवाद बनकर ण्वुल् का बाध करेगा और पर होने से 'क' आदि का बाध करेगा। इस कारण अपवाद के विषय में भी यह अण् होता ही है। उदा०—काण्डलावो व्रजति [ काण्ड = शाखा को काटेगा, इसलिए जाता है। इस अर्थ में प्राप्त ण्वुल् का बाध करके अण् होता है। काण्ड + लू + अण् वृद्धि आदि करने पर काण्डलावः बनता है। ], अश्वदायः व्रजति [ अश्व देगा—इसलिए जाता। यहाँ भी अण् होने पर 'युक् = य् का आगम होता है—अश्व + दा + य् + अण् ]। गोदायः व्रजति (गाय देगा—इसलिए जाता है)। कम्बलदायः व्रजति ( कम्बल देगा—इसलिए जाता है )॥ १२॥

भविष्यति की ही ( अनुवृत्ति ) होती है। शेष = क्रियार्थक उपपद से रहित [ तथा चकार के बल से क्रियार्थक उपपद रहने पर भी होता है। ] शेष=शुद्ध भविष्यत् काल में और चकार के बल से क्रियार्थक क्रिया उपपद रहने पर धातु

**लृटः सद्वा ॥ १४ ॥**

**लृटः स्थाने सत्संज्ञौ शतृशानचौ वा भवतः। व्यवस्थितविभाषेयम्। तेन यथा लटः शतृशानचौ, तथाऽस्यापि भवतः। अप्रथमासमानाधिकरणादिषु नित्यम्। अन्यत्र विकल्पः—करिष्यन्तं देवदत्तं पश्य, करिष्यमाणं देवदत्तं पश्य। हे करिष्यन्, हे करिष्यमाण। अर्जयिष्यमाणो वसति।**

**प्रथमासमानाधिकरणे विकल्पः—करिष्यन् देवदत्तः, करिष्यमाणो देवदत्तः। करिष्यति, करिष्यते ॥**

**न्यासः**

**लृटः सद्वा ॥** सत्संज्ञाविति। 'तौ सत्' इति संज्ञाविहितत्वाच्छतृशानचौ सत्संज्ञकौ। कथं पुनर्लृटः शतृशानचौ भवत इत्याह—**अप्रथमासमानाधिकरणेत्यादि**। प्रथमासमानाधिकरणे विकल्पेन यथा लटः शतृशानचौ, तथा लृटोऽपि व्यवस्थितविभाषया सत्संज्ञकौ भवतः। अप्रथमासमानाधिकरणादिषु नित्यं भवतः—करिष्यन्तं पश्य, करिष्यमाणं पश्य, हे करिष्यन्, हे करिष्यमाण, अर्जयिष्यन् वसति, करिष्यद्भक्तिः, करिष्यमाणभक्तिः, करिष्यद्रूपः करिष्यमाणरूप इत्यप्रथमासमानाधिकरणे। **प्रथमासमानाधिकरणे** तु विकल्पः—करिष्यति देवदत्तः, करिष्यन् देवदत्तः; करिष्यते देवदत्तः, करिष्यमाणो देवदत्त इति। लृडिति वर्त्तमाने पुनर्लृड्ग्रहणं स्थानिनिर्देशार्थम्; इतरथा हि प्रत्ययान्तरत्वं सत्संज्ञकयोर्विज्ञायेत। लृण्मात्रस्य यथा स्यादित्येवमर्थं वा। तेन योऽनद्यतने लृट् तस्यापि भवतः—श्वोऽग्नीनाधास्यमानेनेति। 'अभिज्ञावचने लृट्' इत्यस्य न भवतः; भविष्यतीत्यधिकारात्, अस्य च भविष्यत्कालविहितत्वात्। अनद्यतने पुनर्लृडुत्तरसूत्रेऽनद्यतन इति योगविभागाद् भवतीति वेदितव्यम्। लृटष्टकारष्टेरेत्त्वार्थः, ऋकारः 'स्यतासी लृलुटोः' इत्यत्र विशेषणार्थः ॥ १४ ॥

**पदमञ्जरी**

**लृटः सद्वा ॥** 'लृटः' इति वचनं स्थानिनिर्देशार्थम्, अन्यथा सत्संज्ञकौ प्रत्ययौ स्वतन्त्रौ स्यातां न त्वादेशौ। **अप्रथमासमानाधिकरणादिष्विति**। आदिशब्देन 'सम्बोधने च' 'लक्षणहेत्वोः क्रियायाः' इत्यस्मिन्विषये, तथा 'प्रत्ययोत्तरपदयोश्च'—करिष्यतोऽपत्यं कारिष्यतः, कारिष्यमाणिः; करिष्यतो भक्तिः करिष्यद्भक्तिः, करिष्यमाणभक्तिः; करिष्यन्तो भक्तिरस्य करिष्यद्भक्तिः, करिष्यमाणा भक्तिरस्य करिष्यमाणभक्तिः; करिष्यत्तरः, करिष्यमाणतरः, [ करिष्यत्तमः ] करिष्यमाणतमः; करिष्यद्रूपः, करिष्यमाणरूपः; करिष्यत्कल्पः, करिष्यमाणकल्पः। कथं 'श्वोऽग्नीनाधास्यमानेन' इत्यनद्यतने शतृशानचौ भवतः? उक्तोऽत्र परिहारः—'व्यत्ययो बहुलम्' इति कालव्यत्ययेन लृट्। अथ वा—उत्तरत्रानद्यतन इति योगविभागः, 'लृटः सद्वा' इत्येव अनद्यतने यो लृट् तस्यापि सत्संज्ञकौ भवतः। केन पुनरनद्यतने लृट् भवति? एतदेव ज्ञापयति—भवत्यनद्यतने लृडिति, यदयमनद्यतने लृटः सत्संज्ञकौ शास्ति ॥ १४ ॥

**भावबोधिनी**

से लृट् प्रत्यय होता है। उदा०—करिष्यामि इति व्रजति ( करूँगा, इसलिए जाता है। ) हरिष्यामि इति व्रजति [ हरण करूँगा, इसलिए जाता है। इनमें क्रियार्थक व्रज-क्रिया उपपद रहने से √कृ और √हृ से लृट् होता है। ] शेष=शुद्ध भविष्यत् में भी लृट् होता है। उदा०—करिष्यति ( करेगा )। हरिष्यति ( हरण करेगा ) ॥ १३ ॥

लृट् के स्थान पर सत् संज्ञा वाले शतृ और शानच् विकल्प से होते हैं। यह व्यवस्थित विभाषा है। इसलिए [ जैसे लट् के स्थान पर शतृ और शानच् होते हैं उसी प्रकार ] इस लृट् के स्थान पर भी सत्संज्ञक शतृ और शानच् होते हैं। अप्रथमा-समानाधिकरण आदि में नित्य ही होते हैं। अन्य स्थलों पर विकल्प होता है। उदा०—करिष्यन्तं देवदत्तं पश्य (जो करेगा ऐसे देवदत्त को देखो), करिष्यमाणं देवदत्तं पश्य [अर्थ पूर्वोक्त ही है। इनमें अप्रथमान्त अर्थात् द्वितीयान्त का सामानाधिकरण्य = समानार्थता है। ] हे करिष्यन्! हे करिष्यमाण! ( हे भविष्य में करने वाले )। अर्जयिष्यमाणो वसति ( पैदा करेगा इसलिए रहता है। ) प्रथमासमानाधिकरण में विकल्प होता है—करिष्यन् देवदत्तः, करिष्यमाणः देवदत्तः। ( भविष्य में करने वाला देवदत्त ) पक्ष में लृट्—करिष्यति। करिष्यते।

## अनद्यतने लुट् ॥ १५ ॥

**'भविष्यति' इत्येव । भविष्यदनद्यतनेऽर्थे वर्त्तमानाद् धातोर्लुट् प्रत्ययो भवति । लृटोऽपवादः । श्वः कर्ता । श्वो भोक्ता । 'अनद्यतने' इति बहुव्रीहिनिर्देशः, तेन व्यामिश्रे न भवति — अद्य श्वो वा गमिष्यतीति ।**

**⁂ परिदेवने श्वस्तनी भविष्यदर्थे वक्तव्या ⁂ । ( म० भा० ३।३।१५ वा० २ ) इयं नु कदा गन्ता, या एवं पादौ निदधाति । अयं नु कदाऽध्येता, य एवमनभियुक्तः ॥**

**न्यासः**

**अनद्यतने लुट्** ॥ **अनद्यतन इति बहुव्रीहिनिर्देश** इति । अद्य भावो नास्यास्मिन्नित्यनद्यतनः । **तेनेत्यादिना** बहुव्रीहिसमासाश्रयणस्य फलं दर्शयति । एतच्च 'अनद्यतने लङ्' इत्यत्र व्याख्यातप्रायमिति तत एवावगन्तव्यम् । **अद्य श्वो वा गमिष्यतीति** । अद्य श्वश्च गमिष्यतीत्यर्थः । **परिदेवन** इत्यादि । भविष्यदनद्यतने लुडुक्तो भविष्यत्सामान्ये न प्राप्नोति, इष्यते च, एतदर्थमिदमुच्यते । परिदेवनम् = अनुशोचनम् । **श्वस्तनीति** । लुट इयमन्याचार्यसंज्ञा । **वक्तव्येति** । व्याख्येया । तत्रेदं व्याख्यानम् — 'लृट् शेषे च' इत्यतश्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः । ततः परिदेवने श्वस्तनी भविष्यत्यर्थे भविष्यतीति । अन्यस्त्वयं नु कदा गन्तेत्यादावनद्यतन एव काले लुडिति दर्शयन्नाह — पदमन्वाख्यायते व्याकरणे च, तच्च पदं गन्तेत्यादिकमनद्यतन एव वर्त्तते । तस्य यदाऽनद्यतने भविष्यत्सामान्ये वा वृत्तिः, सार्थात् प्रकरणाद्वा भवतीति वाक्यार्थेऽवतिष्ठते । न च वाक्यार्थः पदसंस्कारस्य निमित्तम्, किं तर्हि ? पदार्थः । तस्मादनद्यतने लुडित्येव सिद्धमिति । अनेन तु न्यायेन परिदेवने श्वस्तनीत्यादि सम्यगेतत् । लुटोऽपि टकारष्टेरेत्त्वार्थः, उकारः 'लुटः प्रथमस्य डारौरसः' इति विशेषणार्थः ॥ १५ ॥

**पदमञ्जरी**

**अनद्यतने लुट्** ॥ **अनद्यतन इति बहुव्रीहिर्निर्देश इति** । 'अनद्यतने लङ्' इत्यत्रैवैतद्व्याख्यातं तत एवावधार्यम् । **परिदेवने इति** । परिदेवनम् = अनुशोचनम् । **श्वस्तनीति** । लुटः पूर्वाचार्यसंज्ञा । **भविष्यन्त्यर्थ इति** । भविष्यन्तीति लृटः संज्ञा, तस्या अर्थे भविष्यत्सामान्य इत्यर्थः । **भविष्यदर्थ इति** वा पाठः । भविष्यत्सामान्यरूपेऽर्थ इत्यर्थः । **या एवमिति** । विलम्बितम् । **अनभियुक्तः** = परिचयरहितः ॥ १५ ॥

**भावबोधनी**

**विमर्श** - लृट् के स्थान पर होने वाले शतृ शानच् को लट् के स्थान पर होने वालों के समान कहा गया है । वहाँ 'लटः शतृशानचावप्रथमासमानाधिकरणे' ( ३।२।१२४ ); 'सम्बोधने च' ( ३।२।१२५ ) और 'लक्षणहेत्वोः क्रियायाः' ( ३।२।१२६ ) इन तीन सूत्रों से चार अर्थों में इन प्रत्ययों का विधान है—(१) अप्रथमासामानाधिकरण्य (२) सम्बोधन. (३) लक्षण = क्रियापरिचायकत्व और (४) हेतु । समानम्=अधिकरणम् अर्थः ययोस्ते समानाधिकरणे । अर्थात् जहाँ प्रथमान्त के समान अर्थवाचकता नहीं है वहीं प्रत्यय होते हैं । चूंकि सत् संज्ञा वैकल्पिक है अतः दोनों स्थितियों में ये होते हैं । काशिकाकार ने तीन के ही उदाहरण दिये हैं । लक्षण = ज्ञापन का उदाहरण नहीं है । सामान्य उदाहरण यह है—शयानाः भुञ्जते यवनाः । यह लट् के स्थान का है । चूंकि यह व्यवस्थितविभाषा है । अतः प्रथमासमानाधिकरण में विकल्प होने से लृट् और शतृशानच् दोनों होते हैं—करिष्यन् देवदत्तः, करिष्यति देवदत्तः ॥१४॥

भविष्यति की ही अनुवृत्ति होती है । भविष्यत् अनद्यतन अर्थ में वर्तमान धातु से लुट् प्रत्यय होता है। यह लृट् का अपवाद है । उदा०—श्वः कर्ता ( कल करेगा ) । श्वो भोक्ता (कल खायेगा) । [न विद्यतेऽद्यतनं यस्य तद्—] अनद्यतनम्—यह बहुव्रीहि समास का उल्लेख है । अतः अद्यतन-मिश्रित स्थल पर लुट् नहीं होता है, जैसे — अद्य श्वो वा गमिष्यति । ( आज अथवा कल जायेगा ) ।* 'परिदेवन = अनुशोच अर्थ में भविष्यत्काल में लुट् होता है ( वा० )' । [ पूर्वाचार्यों ने लुट् के लिये 'श्वस्तनी' यह प्रयोग किया है । ] उदा०—इयं नु कदा गन्ता या एवं पादौ निदधाति ( यह कब जायेगी

**पदरुजविशस्पृशो घञ् ॥ १६ ॥**

'भविष्यति' इति निवृत्तम् । इत उत्तरं त्रिष्वपि कालेषु प्रत्ययाः । **पदादिभ्यो धातुभ्यो घञ् प्रत्ययो भवति** । पद्यतेऽसौ पादः । रुजत्यसौ रोगः । विशत्यसौ वेशः । **॥ स्पृश उपताप इति वक्तव्यम् ॥** ( म० भा० ३।३।१६ वा० १ ) स्पृशतीति स्पर्शः उपतापः । ततोऽन्यत्र पचाद्यच् भवति– स्पर्शो देवदत्तः । **स्वरे विशेषः ॥**

**सृ स्थिरे ॥ १७ ॥**

**सर्त्तेर्धातोः स्थिरे कर्त्तरि घञ् प्रत्ययो भवति** । **स्थिर इति कालान्तरस्थायी पदार्थ उच्यते, स चिरं**

**न्यासः**

**पदरुजविशस्पृशो घञ्** ॥ पदेर्ल्युट्तृचोरपवादो घञ् विधीयते, रुजिविशिभ्यामिगुपधलक्षणस्य कस्य, स्पृशेश्च पचाद्यचः । **पाद** इति । 'अत उपधायाः' इति वृद्धिः । यद्येवं पदमिति न सिध्यति ? न तु खलु न सिध्यति, 'अनुदात्तं पदमेकवर्जम्' इति निपातनात् । **स्पृश उपतापे इति वक्तव्यमिति** । उपतापः = रोगः, तत्र स्पृशेर्घञ्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—'लृटः सद्वा' इत्यतो वाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा । तेन स्पृशेरुपताप एव कर्त्तरि भवति, नान्यत्रेति । **स्वरे विशेष** इति । अचि हि सत्यन्तोदात्तत्वं भवति, घञि तु पदस्याद्युदात्तत्वं स्यात् । घञो ञकारो वृद्ध्यर्थः, आद्युदात्तार्थश्च । घकारः 'चजोः कु घिण्ण्यतोः' इति कुत्वार्थः ॥ १६ ॥

**सृ स्थिरे** ॥ **सर्त्तेर्धातोरिति** । 'सृ गतौ' इत्यस्माद् धातोः । **स्थिरे कर्त्तरीति** । एतेन स्थिरग्रहणं प्रत्ययार्थस्य कर्त्तुर्विशेषणं न तूपपदमिति दर्शयति । **घञ् प्रत्ययो भवतीति** । तृजाद्यपवादः । कः पुनरयं स्थिरो नामेत्याह—**स्थिर इति कालान्तरस्थायीत्यादि** । तत्रैवोपपत्तिमाह—**स चिरमित्यादि** । सर्त्तेर्धातोर्गतिरर्थः । स च कालान्तरस्थायिन एव कर्तुः सम्भवति, नात्मलाभसमनन्तरनाशिनः । तस्मात् कालान्तरस्थाय्येव गते-

**पदमञ्जरी**

**पदरुजविशस्पृशो घञ्** ॥ **पद्यतेऽसाविति** । करणस्यात्र कर्तृत्वेन विवक्षा । पदमित्येतत्तु 'खनो घ च' इत्यत्र साधयिष्यते । **रोग इति** । 'चजोः कु घिण्ण्यतोः' इति कुत्वम् । **स्पृश उपतापे इति** । उपतापः = रोगः ॥ १६ ॥

**सृ स्थिरे** ॥ 'सृ' इत्यविभक्तिको निर्देशः । **सर्त्तेरिति** । 'सृ गतौ', 'सृ सृ गतौ' इति द्वयोरपि ग्रहणम् । **स्थिरे कर्त्तरीति** । एतेन स्थिरग्रहणं प्रत्ययार्थस्य कर्त्तुर्विशेषणं नोपपदमिति दर्शयति । एतच्चार्धर्चादिषु सार-शब्दपाठाद्विज्ञायते । ननु स्थिरशब्दस्तिष्ठतेर्गतिनिवृत्तिवाचिन उणादिषु किरच्प्रत्ययान्तो निपातितः, सर्त्तिस्तु

**भावबोधिनी**

जो इस प्रकार ( धीरे-धीरे ) पैर रख रही है । ) 'अयं नु कदा अध्येता य एवम् अनभियुक्तः' । ( यह कब पढ़ेगा जो इस प्रकार परिचयशून्य या अभ्यास शून्य है ) ॥ १५ ॥

भविष्यति - इसकी निवृत्ति होती है । यहाँ से लेकर तीनों कालों में प्रत्यय होते हैं । पद आदि चार धातुओं से घञ् प्रत्यय होता है । [ यहाँ सामान्य विधान होने से 'कर्तरि कृत्' ( ३।४।६७ ) के अनुसार कर्ता अर्थ होता है । ] उदाहरण —पद्यते असौ—पादः ( चलने वाला = पैर ) । रुजति असौ—रोग ( कष्ट देने वाला = रोग ) । विशति असौ - वेशः ( प्रवेश करने वाला ) । 'स्पृश धातु से उपताप = रोग अर्थ में ही कहना चाहिये ।' स्पृशति इति स्पर्शः = उपताप = रोगविशेष । इससे भिन्न अर्थों में ( 'नन्दिग्रहि-पचादिभ्यो ल्युणिन्यचः' ( ३।१।१३४ से ) पचादिगणीय मानकर अच् प्रत्यय समझना चाहिये । स्पर्शः देवदत्तः ( स्पर्श करने वाला देवदत्त ) । स्वर में अन्तर होता है । ( घञ् में ञित् होने से आद्युदात्त और अच् में चित् होने से अन्तोदात्त होता है ) ॥ १६ ॥

स्थिर = चिरस्थायी कर्त्ता वाच्य रहने पर 'सृ' धातु से घञ् प्रत्यय होता है । स्थिर—इससे कालान्तर = आगे समय तक रहने वाला पदार्थ कहा जाता है । वह चिरकाल तक रहता हुआ चलता है, उड़ता है, इसलिये धात्वर्थ का

**तिष्ठन् कालान्तरं सरतीति धात्वर्थस्य कर्त्ता युज्यते। चन्दनसारः। खदिरसारः। स्थिरे इति किम्? सर्त्ता, सारकः। ❀ व्याधिमत्स्यबलेष्विति वक्तव्यम् ❀। ( म० भा० ३।३।१७ वा० १ ) अतीसारो व्याधिः। विसारो मत्स्यः। सारो बलम्॥**

**भावे॥ १८॥**

**भावे वाच्ये धातोर्घञ् प्रत्ययो भवति। पाकः। त्यागः। रागः। क्रियासामान्यवाची भवतिः, तेनार्थ-**

**न्यासः**

र्धात्वर्थस्य कर्त्ता युज्यत इत्येवेह स्थिरशब्देनोच्यते। यदि कालान्तरस्थायिन एव गतिः सम्भवति स्थिरग्रहण-मनर्थकम्, न ह्यस्थिरः सर्त्यर्थस्य कर्त्तोपपद्यते? नानर्थकम्; प्रकर्षेण यः सरति तत्र कर्त्तरि प्रत्ययो यथा स्यादित्येवमर्थत्वात्। अत एव स चिरं तिष्ठन् कालान्तरं सरतीति वृत्तौ चिरग्रहणं कृतम्। **चन्दनसार** इति। षष्ठीसमासः। ❀ **व्याधिमत्स्यबलेष्विति वक्तव्यमिति**। अस्थिरार्थोऽयमारम्भः। एषु व्याध्यादिषु त्रिष्वपि घञ् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं त्विहापि चकारानुवृत्तिमाश्रित्य कर्त्तव्यम्। **अतीसार** इति। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घत्वम्॥ १७॥

**भावे॥ राग** इति। 'रञ्जेश्च' 'घञि च भावकरणयोः' इत्यनुनासिकलोपः। ननु च 'भावे' इति भवति-नायं घञन्तेन निर्देशः क्रियत इति भवतिविषय एव प्रत्ययार्थनिर्देशः कृतो भवति, ततश्च भवतेर्यो भाव-स्तस्मिन्नेव वाच्ये प्रत्ययः स्यात्, स च भवतेरेवोत्पद्यमानेन प्रत्ययेन शक्योऽभिधातुम्, अतस्तत एव प्रत्ययेन भवितव्यम्, तत् कथं पाकस्त्यागो राग इति पचादिभ्यो भवति? अत आह—**क्रियासामान्यवाचीत्यादि**।

**पदमञ्जरी**

गतिवचनः, तत्कथं सरणस्य स्थिरकर्त्ता युज्यते? इत्याह—**स्थिर इति कालान्तरस्थायीत्यादि**। यतः कालान्तर-गमनं सम्भवति, ततश्च सर्त्तेर्धातोरर्थस्य कर्त्ता युज्यत इत्यर्थः। 'तिष्ठन्निति' च हेतौ शतृप्रत्ययः। **खदिरसार इति** खदिरास्थि, तत् दृढत्वात् स्थिरम्। **अतीसारो व्याधिरिति**। शरीरान्तरावस्थितं रुधिरादिद्रव्यमतिशयेन सारयतीति कृत्वा। अन्तर्भावितण्यर्थोऽत्र सरतिः। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः। **विसारो मत्स्य इति**। विविधं सरतीति कृत्वा। **सारो बलमिति**। सारयति=चेष्टयतीति कृत्वा। अत्राप्यन्तर्भावितण्यर्थः सरतिः। बलवान्हि चेष्टते, सारशब्द उत्कर्षे पुंल्लिङ्गः, न्यायादनपेते नपुंसकलिङ्ग इति च दृश्यते॥ १७॥

**भावे॥**

नित्यानामेव शब्दानां साङ्कर्यस्य निवृत्तये।
अन्वाख्यानाद्भावशब्दे घञि नान्योऽन्यसंश्रयः॥

**राग इति**। 'रञ्जेश्च' 'घञि च भावकरणयोः' इति नलोपः। कथं पुनः पाकादिरुदाहरणं भवति, यावता भवतिनार्थनिर्देशः क्रियमाणोऽस्तिभवतिविद्यतिविषय एव कृतो भवति, न पचादिविषयः? तत्राह—

**भावबोधिनी**

कर्त्ता बनना ठीक है। उदाहरण—चन्दनसारः। ( चन्दन की गन्ध, √सृ + घञ् = अ, ऋ की वृद्धि रपर, षष्ठीसमास चन्दनस्य सारः—चन्दनसारः ) इसी प्रकार खदिरसारः। ( कत्था की खुशबू )। स्थिर = कालान्तरपर्यन्त स्थायी—इसके ग्रहण का क्या फल है? सर्त्ता। सारकः। ( चलने वाला ) इनमें स्थिरता प्रतीत न होने पर घञ् न होकर तृच् और ण्वुल् ये सामान्य प्रत्यय ही होते हैं। 'व्याधि, मत्स्य और बल—इन अर्थों में भी यह प्रत्यय होता है।' [ यह वार्त्तिक अस्थिर पदार्थों के लिये घञ् के विधानार्थ है। ] उदा०—अतीसारः = रोगविशेष ( अति + सृ + घञ्, ऋ की वृद्धि रपर, उपसर्ग के इ का दीर्घ, यहाँ ण्यर्थ अन्तर्भूत है। ) विसारः = मछली। सार=बल अर्थात् ताकत॥ १७॥

भाव=सिद्धावस्थापन्न—धात्वर्थ वाच्य रहने पर धातु से घञ् प्रत्यय होता है। उदा०—पाकः, त्यागः, रागः ( पच् + घञ्, त्यज् + घञ्, रञ्ज् + घञ् इनमें उपधावृद्धि कुत्व और नलोप आदि होता है। ) भवतिः = भू धातु

**निर्देशः क्रियमाणः सर्वधातुविषयः कृतो भवति। धात्वर्थश्च धातुनैवोच्यते। यस्तस्य सिद्धता नाम धर्मः, तत्र घञादयः प्रत्यया विधीयन्ते। पुंल्लिङ्गैकवचनं चात्र न तन्त्रम्। लिङ्गान्तरे वचनान्तरेऽपि चात्र प्रत्यया**

**न्यासः**

क्रियासामान्यं हि सर्वं धात्वर्थानुगतं भवतेरर्थः। तेन क्रियासामान्यवाचिनाऽर्थनिर्देशः क्रियमाणः सर्वधातुविषयः कृतो भवति, अतः पचादिभ्योऽपि प्रत्ययो भवतीत्यभिप्रायः। ननु धात्वर्थः पूर्वापरीभूतोऽपरिनिष्पन्नः, ततो यदि तत्र वाच्ये प्रत्ययो भवति, तस्यासत्त्वभूतत्वाल्लिङ्गसंख्याभ्यां प्रत्ययार्थस्य सम्बन्धो न सिध्यति, तत आह—**धात्वर्थश्चेत्यादि**। एवकारः प्रत्ययव्यवच्छेदार्थः। धातुनैवोच्यते धात्वर्थः, न तु प्रत्ययेन। कथं तर्हि घञादयो विधीयन्त इत्यत आह—**यस्तस्येत्यादि**। तस्य धात्वर्थस्य सिद्धता=निष्पन्नता नाम यो धर्मस्तत्र घञादयः प्रत्यया विधीयन्ते, ततो युक्तः प्रत्ययार्थस्य लिङ्गसंख्यायोगः। तस्य यो धर्मस्तस्य सत्त्वभूतत्वादित्यर्थः। भाव इति—इह पुंल्लिङ्गेनायं निर्देश एकवचनेन च। तेन पुंल्लिङ्ग एव भावे एकवचन एव प्रत्ययाः स्युः। **न लिङ्गान्तरयुक्ते नापि वचनान्तरे**। एवञ्च सति 'स्त्रियां क्तिन्' इत्यत्र 'भावे' 'स्त्रियाम्' इति चैतयोः सामानाधिकरण्यं नोपपद्यते, वैयधिकरण्यं हि स्यात्। ततः स्त्रियां भावे क्तिन्प्रत्ययो न स्यात्, अर्थान्तर एव कर्मादौ स्यात्। भावे च पुंल्लिङ्गे पाकौ पाका इत्यत्रैकवचनं स्यात्।

यथाजातीयकं ह्यर्थमुपादातुं समर्थो भावशब्दस्तथाजातीयकेऽर्थे प्रत्ययेन युक्तं भवितुं नान्यत्रेत्यत आह—**पुंल्लिङ्गमेकवचनञ्चात्र न तन्त्रमिति**। सर्वलिङ्गसंख्यासम्बन्धयोग्यं प्रातिपदिकार्थसामान्यनिमित्तं प्रत्यय-

**पदमञ्जरी**

**क्रियासामान्यवाची भवतिरिति**। सत्ताख्यं सामान्यमपि भवतिना साध्यत्वेनाभिधीयत इति क्रियासामान्यवाची भवतिर्भवति। **तेनार्थनिर्देशः क्रियमाण इति**। हेतौ शानच्, यस्मात्सामान्यवाचिनार्थनिर्देशः क्रियते, न विशेषवाचिना पचादिना; तस्मात्सर्वधातुविषयः कृतो भवति सामान्यस्य, सर्वेष्वेव विशेषेषु भावात्, षण्डादिषु गोत्ववत् विशेषरूपाश्रयनिषेधस्याभावाच्च। इह भावो धात्वर्थः, स च पूर्वापरीभूतोऽपरिनिष्पन्नः, तस्य घञ्वाच्यस्य कथं लिङ्गसङ्ख्यायोग इत्याह—**धात्वर्थश्चेति**। यथा पचति पाचक इत्यादौ प्रकृतिभागेन क्रियोच्यते, प्रत्ययभागेन तु तदीयं साधनम्; तथा पाकादिषु प्रकृतिभागः साध्यरूपमर्थमाह, प्रत्ययभागस्तु तस्यैव सिद्धरूपतां द्रव्यधर्मैर्लिङ्गसङ्ख्याकारकशक्तिभिः सम्बन्धयोग्यमाकारमाहेत्यर्थः। उक्तं च—

आख्यातशब्दे भागाभ्यां साध्यसाधनवर्त्तिता।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः॥
साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।
सत्त्वभावस्तु यस्तस्याः स घञादिनिबन्धनः॥इति॥ (वा० प० ३.८.४७-४८)

बहुवक्तव्योऽयमर्थः। इह 'भावे' इति पुंल्लिङ्गेनायं निर्देशः क्रियते, एकवचनेन च; तत्र पुंल्लिङ्ग एव, भावे एकवचन एव च प्रत्ययाः स्युर्न लिङ्गान्तरे, न च सङ्ख्यान्तरे; ततश्च 'स्त्रियां क्तिन्' इत्यत्र स्त्रियां भाव

**भावबोधिनी**

क्रियासामान्य का वाचक है। इसलिये किया जानेवाला अर्थ का निर्देश, सभी धातुओं के विषय में, किया हुआ हो जाता है। धातु का अर्थ तो धातु द्वारा ही कहा जाता है, किन्तु उसका जो सिद्धत्व नामक धर्म है, उस धर्म अर्थ में घञादि प्रत्यय होते हैं। इस सूत्र में पुंल्लिङ्ग और एकवचन तन्त्र=अनुशिष्ट=विवक्षित नहीं हैं। अन्य लिङ्गों और अन्य वचनों में भी यहाँ प्रत्यय होते ही हैं। उदा०—पक्तिः (पच्+क्तिन् स्त्रीलिङ्ग), पक्वम् (पच्+क्त नपुंसकलिङ्ग) पचनम् (पच्+ल्युट्=अन नपुंसकलिङ्ग) पाकौ, पाकाः (द्विवचन और बहुवचन)।

**विमर्श—**भू धातु का अर्थ है क्रियासामान्य। प्रस्तुत सूत्र सभी धातुओं से भाव=धात्वर्थसामान्य में घञादि का विधान करता है। धातु से क्रिया की प्रतीति साध्यत्वरूप से ही होती है। परन्तु इन प्रत्ययों के योग में सिद्धत्वरूप से

भवन्त्येव—पक्तिः, पक्वम्, पचनम् । पाकौ, पाका इति ॥

## अकर्तरि च कारके संज्ञायाम् ॥ १९ ॥

कर्तृवर्जिते कारके संज्ञायां विषये धातोर्घञ् भवति । प्रास्यन्ति तं प्रासः । प्रसीव्यन्ति तं प्रसेवः । आहरन्ति तस्माद् रसमित्याहारः । मधुराहारः । तक्षशिलाहारः ।

### न्यासः

निमित्तत्वेनोपादीयते, तदेव प्रधानम्, न लिङ्गं नापि वचनम् । तत्र प्रातिपदिकार्थसामान्यं विना लिङ्गवचनाभ्यां न शक्यं निर्द्देष्टुमिति नान्तरीयकत्वात्[1] तयोरुपादानम् । प्रतीते तु तस्मिन् प्रातिपदिकार्थसामान्यचरितार्थत्वाल्लिङ्गवचने परित्यज्येते । यथा पलालादयो धान्यार्थमुपात्ताश्चरितार्थाः कार्यपरिसमाप्तौ, अन्यत्र तु त्यज्यन्ते; तद्वत् । तस्माल्लिङ्गान्तरे च प्रत्यया भवन्त्येव । पक्तिरिति । भावे 'स्त्रियां क्तिन्' । पक्वमिति । 'नपुंसके भावे क्तः' । पचनमिति । 'ल्युट् च' इति ल्युट् । अत्रापि यदि भावे पुंल्लिङ्गस्तन्त्रं स्यात्, ततो भावनपुंसकशब्दयोः सामानाधिकरण्यानुपपत्तेर्वैयधिकरण्यं स्यात्, ततश्च भावे नपुंसके ल्युण्न स्यात्, अर्थान्तर एव तु स्यात् । भावे च पुंलिङ्गे पचनमित्यस्य तुल्यत्वाच्चोद्यपरिहारस्योपन्यासः; अन्यथा ह्यन्यदेव भावग्रहणमधिकृत्य ल्युटो विधानादिदमिहानुपन्यसनीयमेव स्यात् । पाकावित्यादिकं वचनान्तरे भावप्रत्ययस्योदाहरणम् ॥ १८ ॥

अकर्त्तरि च कारके संज्ञायाम् ॥ प्रास इति 'असु क्षेपणे', प्रसेव इति 'षिवु तन्तुसन्ताने', उभयत्र प्यत्र कर्मणि घञ् । आहार इति । हृञ् हरणे' । मधुराहार इति । कर्मधारयः, षष्ठीतत्पुरुषो वा । मेष इति । 'मिष स्पर्द्धायाम्', पचाद्यच् । कर्त्तव्य इति । कर्मणि तव्यः ।

### पदमञ्जरी

इति सामानाधिकरण्येन सम्बन्धासम्भवात्—स्त्रियामकर्त्तरि कारके क्तिन् प्रत्ययः स्यात्, भावे तु पुंसीव 'नपुंसके भावे क्तः' इत्यत्र 'अकर्त्तरि च कारके' इत्यस्य निवृत्तत्वान्नपुंसके कर्त्तरि क्तः स्याद्भावे तु पुंसि, द्वित्वबहुत्वयोश्च पाकौ पाका इत्यादौ प्रत्यया न स्युरित्यत आह—पुंल्लिङ्गमेकवचनं चातन्त्रमिति ।

> न विना लिङ्गसङ्ख्याभ्यां सत्त्वभूतोऽर्थ उच्यते । (वा० पा० ३.१.५१)
> इत्यतन्त्रमुपादानं तयोर्न तु विवक्षितम् ॥
> धान्यार्थिनामुपादानं पलालादेर्यथा मतम् ।
> शब्दसंस्कारमात्रं तु तन्निर्देशप्रयोजनम् ॥ १८ ॥

अकर्तरि च कारके संज्ञायाम् ॥ प्रासः=कुन्तः, प्रसेवः=सूच्या प्रसेवनेन निष्पाद्य आवपनविशेषः । मधुराहार इति । कर्मधारयः, षष्ठीसमासो वा । मेष इति । पचादिषु पाठमनपेक्ष्यैतदुदाहृतम्, तथा च 'इगुपधज्ञाप्री' इत्यत्रोक्तम्—देवसेवमेषादयः पचादिषु द्रष्टव्या इति । न हि पाठे सति द्रष्टव्यत्ववचनमुपपद्यते । अथ वा—प्रत्युदाहरणदिगियं दर्शिता । इदं तु प्रत्युदाहरणम्—बिभर्त्यसौ भर्त्तेति ।

### भावबोधिनी

होने लगती है । जब किसी क्रिया की आकाङ्क्षा नहीं उठती है, कारक की आकाङ्क्षा उठती है तब साध्यत्वेन प्रतीति मानी जाती है और जब क्रिया की आकाङ्क्षा उठती है तब सिद्धत्वरूप से प्रतीति मानी जाती है । अतः इन प्रत्ययों के प्रयोगस्थलों में द्विविध प्रतीति होती है । अतः सिद्धत्व धर्म की प्रतीति कराने के लिये इन प्रत्ययों का विधान है ॥ १८ ॥

कर्ता से भिन्न कारक में संज्ञाविषय में धातु से घञ् प्रत्यय होता है । उदा०—प्रास्यन्ति तम्—प्रासः [ जिसे फेंकते हैं, वह प्रास = भाला आदि अस्त्र ], प्रसीव्यन्ति तम्—प्रसेवः ( जिसे सिलते हैं, थैला आदि ) । आहरन्ति तस्मात् रसम्—इति आहारः ( जिससे रस ग्रहण करते हैं, भोजन ) । मधुराहारः, तक्षशिलाहारः ( यहाँ समास है ) ।

---

१. ''अन्तरशब्दो गहादिषु पठ्यते, स च विनार्थे वर्त्तते—अन्तरे भवमन्तरीयम् । तत्र नञ्समासे कृते पृषोदरादित्वाद् भाष्यकारवचनप्रमाण्याद् वा नलोपाभावः, ततः स्वार्थे कन्प्रत्ययः ।''—इति म० भा० ३।३।१८ (पा०) सूत्रे कैयटः ।

**अकर्त्तरीति किम् ? मिषत्यसौ मेषः । संज्ञायामिति किम् ? कर्त्तव्यः कटः ।**

**चकारः संज्ञाव्यभिचारार्थः । को भवता दायो दत्तः । को भवता लाभो लब्धः । कारकग्रहणं पर्युदासे**

**न्यासः**

**चकारः संज्ञाव्यभिचारार्थं** इति । चकारोऽयं भिन्नक्रमः संज्ञायामित्यस्यानन्तरं द्रष्टव्यः, तदनेन चार्थो द्योत्यते । 'संज्ञायाञ्च' इति चार्थं द्योतयन्नसौ संज्ञाव्यभिचाराय भवति, तेनासंज्ञायामपि च भवति । यद्येवम्, संज्ञाग्रहणमकृत्वा सामान्येनैव प्रत्ययो विधेयः; तत्रायमप्यर्थः—संज्ञाव्यभिचारार्थश्चकारो न कर्त्तव्यो भवति ? सत्यमेतत्; तथापि बाहुल्येन संज्ञायां भवति, असंज्ञायां तु क्वचिदेवेत्यमुमर्थं सूचयितुं संज्ञाग्रहणं कृतम् । दीयत इति **दायः** । कर्मणि घञ्, पूर्ववद् युक् । **लाभ** इति । कर्मण्येव घञ् । **कारकग्रहणमित्यादि** । पर्युदासे हि 'अकर्त्तरि' इत्युक्ते कारकग्रहणमन्तरेणापि नञिवयुक्तन्यायेन कर्त्तुरन्यत्र तादृशे कारक एव कर्मादौ प्रतीति-र्भवति, यथा—अब्राह्मण इति ब्राह्मणसदृशे क्षत्रियादौ । तस्मात् पर्युदासे विनापि कारकग्रहणेन कारक एव प्रत्ययो लभ्यत इति कारकग्रहणं न कर्त्तव्यम् । प्रसज्यप्रतिषेधे तु कर्त्तव्यम्, तत्र हि क्रियाप्रतिषेधमात्रं प्रतीयते, न सदृशं वस्त्वन्तरम् ! तत्र यदि 'अकर्त्तरि संज्ञायाम्' इत्येतावदुच्येत, कर्त्तरि न भवतीत्येषोऽर्थः प्रतीयेत । एवञ्च विधायकस्य वाक्यान्तरस्याभावात् कर्मादिषु प्रत्ययो न स्यात् । क्व तर्हि स्यात् ? 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति' स्वार्थे । ननु च विहितः स्वार्थे पूर्वेणैव ? नैतदस्ति; 'धात्वर्थस्य हि सिद्धता नाम यो धर्मस्तत्र घञादयो विधीयन्ते' इत्युक्तम्[1] । तस्मात् प्रसज्यप्रतिषेधे कारकग्रहणं कर्त्तव्यम् । यदि हि पर्युदासे

**पदमञ्जरी**

**चकार इत्यादि** । चकारोऽयं भिन्नक्रमः—'संज्ञायां च' इति, तेनासंज्ञायामपि घञ् भवति । यद्येवम्, मा भूत्संज्ञायामिति, मा च भूच्चकारः 'अकर्त्तरि कारके' इत्येवास्तु ? सत्यम्; बाहुल्येन संज्ञायां भवति, क्वचिदेवासंज्ञायामिति सूचयितुं संज्ञाग्रहणं कृतम् । **दाय इति** । दीयमानं सर्वमुच्यत इति नेयं संज्ञा, एवं **लाभ** इत्यत्रापि, उभयत्र कर्मणि घञ् । **कारकग्रहणमित्यादि** । पर्युदासे हि नञिवयुक्तन्यायेन कर्तुरन्यस्मिंस्तत्सदृशे कारक एव प्रतीतिर्भवति, यथा—अब्राह्मण इति क्षत्रियादौ । तस्मात्पर्युदासे कारणग्रहणं न कर्त्तव्यम् । प्रसज्यप्रतिषेधे तु वाक्यभेदेन संज्ञायां घञ् भवति, कर्त्तरि तु न भवतीत्येषोऽर्थो भवति । तत्र प्रथमे वाक्येऽर्थ-निर्देशाभावाद् 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' इति स्वार्थ एव स्यात् । ननु च विहितः स्वार्थे पूर्वेणैव ? नेत्याह; धात्वर्थस्य हि सिद्धताख्ये धर्मे घञादयो भवन्तीत्युक्तम्',[1] इह तु साध्यरूपे शुद्धे प्रकृत्यर्थे स्यात् । ननु च कर्त्तरि प्रतिषेधसामर्थ्यादनिर्दिष्टार्थोऽपि घञ् धात्वर्थसम्बन्धिनि कारक एव विज्ञास्यते ? नैतदस्ति; असति हि

**भावबोधिनी**

कर्ता-कारक से भिन्न रहने पर—इसका क्या लाभ है ? मिषति असौ—मेषः ( √मिष् स्पर्धायाम्, जो स्पर्धा करता है, मेंड़। यहाँ कर्ता कारक है। अतः यहाँ घञ् न होकर अच् होता है। ) संज्ञा में हो – इसका क्या लाभ ? कर्त्तव्यः कटः । [ संज्ञा न होने से घञ् न होकर 'तव्यत्' होता है। संज्ञा का तात्पर्य रूढि है। ]

चकार संज्ञा के व्यभिचार के लिये है अर्थात् संज्ञा = रूढि न रहने पर भी यह प्रत्यय होता है। जैसे—को भवता दायः दत्तः (आपने कौन सा दाय=हिस्सा दिया)। को भवता लाभः लब्धः ( आपको कौन सा लाभ मिला ? यहाँ दीयतेऽसौ दायः और लभ्यते असौ–लाभः–ये शब्द रूढि नहीं है तो यहाँ भी घञ् होता है )। ( नञ् का ) पर्युदास मान लेने पर 'कारके' का ग्रहण नहीं करना चाहिये ( क्योंकि 'तद्भिन्न तत्सदृश का ग्रहण होने पर कारक की स्वतः प्रतीति सम्भव है। ] फिर भी जो 'कारके' का ग्रहण किया गया है वह प्रसज्य-प्रतिषेध स्थल में भी नञ्समास होता है—इसको ज्ञापित करने के लिये है, जैसा कि 'आदेच उपदेशेऽशिति' ६।१।४५ में है [ अर्थात् जैसे—शिति न भवति—यह अर्थ

---

१. द्र० इतः पूर्वम्, पृ० २१, २२।

**न कर्त्तव्यम् । तत्क्रियते प्रसज्यप्रतिषेधेऽपि समासोऽस्तीति ज्ञापनार्थम्—'आदेच उपदेशेऽशिति' ( ६।१।४५ ) इति । इत उत्तरं 'भावे' 'अकर्त्तरि च कारके' इति च द्वयमनुवर्त्तते ॥**

न्यास:

कारकग्रहणमन्तरेणापि सिध्यति, स एवाश्रयिष्यते; तत् किमर्थं कारकग्रहणं क्रियते ? इत्यत आह—**तत् क्रियत** इत्यादि । यदि तर्हि पर्युदास एवैष नञ्समास स्यात् कारकग्रहणमनर्थकं स्यात्, विनापि हि तेन कारक एव प्रत्ययो लभ्यते । प्रसज्यप्रतिषेधे तु सति कारकग्रहणमर्थवद् भवति, न हि तत्र विनापि तेन कारके प्रत्ययो लभ्यते । इदञ्चानन्तरमेव प्रतिपादितम् । तस्मात् कारकग्रहणेन प्रसज्यप्रतिषेधेऽपि समासोऽस्तीति ज्ञाप्यते । तेन 'आदेच उपदेशेऽशिति' इत्यत्र प्रसज्यप्रतिषेधे समासो लभ्यते । ततश्च यदुक्तम्—'अनैमित्तिकमात्त्वं शिति प्रतिषेधः' इति, तदुपपन्नं भवति । किं पुनः कारणं तत्र प्रसज्यप्रतिषेध आश्रीयते ? प्रागेव प्रत्ययोत्पत्तेरनिमित्तक आत्त्वे कृते सुग्ल सुम्लः इति 'आतश्चोपसर्गे' इति को यथा स्यात् । पर्युदासे तु तत्राश्रीयमाणे शितोऽन्यत्र तृजादौ प्रत्यये परभूत आत्त्वेन भवितव्यम् । ततश्च ग्लायतिप्रभृतिभ्य आकारान्तलक्षणः प्रत्ययो न स्यात् । ननु चाचार्यप्रवृत्तिर्ज्ञापयति - भवन्त्येजन्तेभ्य आकारान्तलक्षणः प्रत्यय इति, यदयं कबाधनार्थम् 'ह्वावामश्च' इत्यणं शास्ति, तस्मादशितोति पर्युदासेऽप्याश्रीयमाणे ज्ञापकादेजन्तस्याकारान्तलक्षणः प्रत्ययः सिध्यत्येव ? नैतदस्ति; कर्मोपपदविषयमेवैतज्ज्ञापकं विज्ञायते । तस्मादशितीत्यत्र प्रसज्यप्रतिषेध एवाश्रयितुं युक्तः । तस्य चास्तित्वमिह कारकग्रहणेन ज्ञाप्यते । किं पुनः कारणं प्रसज्यप्रतिषेधो न सिध्यति, यतस्तदस्तित्वज्ञापनं प्रतिपन्नं क्रियते ? असामर्थ्यं कारणम्; सामर्थ्ये हि सति समासेन भवितव्यम्, न च तत् प्रसज्यप्रतिषेधे । तथा हि—तत्र नञ् क्रियया सम्बद्धः, नोत्तरपदेन ॥ १९ ॥

पदमञ्जरी

प्रतिषेधे 'कर्त्तरि कृत्' इति वचनान्नायमनिर्दिष्टार्थः स्याद् । अतः प्रसज्यप्रतिषेधार्थं कारकग्रहणम् । पर्युदासे तु न कर्त्तव्यम् । यद्येवम्, स एवाश्रयिष्यते, किं कारकग्रहणेन ? तत्राह—**तत्क्रियत इति** । किं पुनः कारणं प्रसज्यप्रतिषेधे प्रयत्नलभ्यः समासः ? असामर्थ्यात्तत्र हि नञः क्रियया सम्बन्धः, कर्त्तरि न भवतीति न कर्तृशब्देन । **आदेच उपदेशेऽशितीति** । अत्र यदि 'अशिति' इति पर्युदासः स्यात्, तदा शितोऽन्यत्र तृजादौ प्रत्यये परत आत्वेन भवितव्यम् । ततश्च सुग्लः, सुम्ल इत्यत्र 'आतश्चोपसर्गे' इति को न स्यात्, प्राक् प्रत्ययोत्पत्तेरनाकारान्तत्वात् । प्रतिषेधे त्वनैमित्तिकमात्वम्, शिति तु प्रतिषेध इति सिद्धमिष्टम् ॥ १९ ॥

भावबोधिनी

उसमें है, उसी प्रकार 'कर्तरि न भवति' यह अर्थ यहाँ है । ) इससे आगे 'भावे' तथा 'अकर्तरि च कारके. इन दोनों की अनुवृत्ति होती है ।

**विमर्श** यह सूत्र वहाँ धातु से घञ् करता हैं जहाँ कर्ता कारक नहीं है, और रूढि = संज्ञा है । परन्तु 'च' के बल से यह माना जाता है कि 'संज्ञायाम्' यह प्रायिक ही है सार्वत्रिक नहीं । इसीलिये रूढि-स्थलों से भिन्न में भी घञ् का प्रयोग होते देखा जाता है । जैसे—लभ्यतेऽसौ लाभः, दीयतेऽसौ दायः । लाभ और दाय संज्ञा = रूढि शब्द नहीं हैं तो भी यहाँ घञ् हुआ है ।

नञ् के दो अर्थ हैं—पर्युदास और प्रसज्य-प्रतिषेध । तद्भिन्न तत्सदृश में पर्युदास माना जाता है । अकर्तरि—इसमें कर्ता-भिन्न और कर्ता के सदृश दूसरा कारक हो होता है । अतः कारक की प्रतीति स्वतः हो जाती है । फिर भी 'कारके' का पुनः ग्रहण प्रसज्यप्रतिषेधस्थल में भी नञ्समास ज्ञापित करता है । सामान्यतया पर्युदास में ही समास होता है । प्रसज्यप्रतिषेध का सम्बन्ध क्रिया के साथ होता है ॥ १६ ॥

## ९७७. परिमाणाख्यायां सर्वेभ्यः ॥ २० ॥ ( ३१९० )

**परिमाणाख्यायां गम्यमानायां सर्वेभ्यो धातुभ्यो घञ् प्रत्ययो भवति। एकस्तण्डुलनिश्चायः। द्वौ शूर्पनिष्पावौ—( म० भा० )। 'कॄ विक्षेपे' ( धा० पा० १४१० )—द्वौ कारौ। त्रयः काराः। सर्वग्रहणमपोऽपि बाधनार्थम्। पुरस्तादपवादन्यायेन ( व्या० प० ९ ) ह्यचमेव बाधेत, नापम्।**

**न्यासः**

**परिमाणाख्यायां सर्वेभ्यः॥ एकस्तण्डुलनिश्चाय** इति। 'ग्रहवृदृनिश्चिगमश्च' इत्यपि प्राप्ते घञ्। द्वौ शूर्पनिष्पावाविति। अत्रापि 'ऋदोरप्' इत्यपि प्राप्ते। 'इदुदुपधस्य चाप्रत्ययस्य' इति विसर्जनीयस्य षत्वम्। **द्वौ काराविति**। 'कॄ विक्षेपे'। ननु च **द्वौ शूर्पनिष्पावावित्यत्र** 'निरभ्योः पुल्योः' इत्यनेन घञ् सिद्धः, तत् किमर्थमिदमिहोक्तम्? एवं मन्यते—अन्यार्थे सर्वग्रहणे क्रियमाणे परिमाणाख्यायां वाऽन्यत्रैव सिद्धम्, निष्पूर्वादपि ह्यप्प्रत्ययो युक्तः, 'निरभ्योः पूल्वोः' इत्यस्य तु यत्र परिमाणाख्या न गम्यते सोऽवकाश इति। कः पुनस्तेन वानेन वा घञि सति विशेषः? को न्यायो वाख्यायते? न कश्चित्। ननु च धातोरिति सामान्यमधिकृतम्, न धातुविशेष इति, अन्तरेणापि सर्वग्रहणं धातुमात्राद् घञ् भविष्यति, तत् किमर्थं सर्वग्रहणमित्याह—**सर्वग्रहणमित्यादि**। किं पुनः कारणमसति सर्वग्रहणेऽपो बाधा न सिध्यतीत्याह—**पुरस्तादित्यादि**। 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' ( व्या० प० ९ ) इति। सति सर्वाग्रहणे घञनन्तरमचमेव बाधेत, नापम्। सर्वग्रहणे तु सत्यपमपि बाधते। तस्मादपोऽपि बाधा यथा स्यादिति सर्वग्रहणम्।

**पदमञ्जरी**

**परिमाणाख्यायां सर्वेभ्यः। परिमाणाख्यायामिति**। भावसाधनः परिमाणशब्दः, आख्यानमाख्या = उक्तिः, परिच्छित्तेरुक्तौ सत्यामित्यर्थः। कस्य पुनः परिच्छित्तिः? प्रत्ययार्थस्य = भावस्य कर्तृवर्जितस्य कारकस्य च। परिमाणाख्यायां गम्यमानायामिति वृत्तेरप्ययमेवार्थः। **तण्डुलनिचाय इति**। निचीयते राशीक्रियते इति निचायः = राशिः, तण्डुलानां निचाय इति षष्ठीसमासः। अत्र राश्येकत्वेन परिच्छित्तिर्गम्यते। अत्रएरचि प्राप्ते घञ्। प्रायेण तु **निश्चाय इति** पाठः, तत्राप्यर्थः स एव, 'ग्रहवृदृनिश्चिगमश्च' इत्यपि प्राप्ते घञ्। **शूर्पनिष्पावाविति**। निष्पूयते = शोद्धयते तुषाद्यपनयनेन यस्तण्डुलादिः। शूर्पेण निष्पावः—शूर्पनिष्पाव इति 'कर्तृकरणे कृता बहुलम्' इति समासः। अत्र शूर्पसङ्ख्यया परिच्छित्तिः। यद्यप्यत्र 'निरभ्योः पूल्वोः' इति घञ् सिध्यति, तथापि सर्वापवादार्थसर्वग्रहणोपादानेनैव घञ् भवितुमर्हतीत्यस्योपन्यासः। **काराविति**। 'कॄ विक्षेपे' कर्मणि घञ्, विक्षिप्तो धान्यादिः = कारः, अत्रापि सङ्ख्यया परिच्छित्तिः। ननु च धातोरिति सामान्याधिकारादन्तरेणापि सर्वग्रहणं धातुमात्राद् घञ् भविष्यति, नार्थः सर्वग्रहणेन? तत्राह—**सर्वग्रहणमिति**। किं पुनः कारणमपो बाधनं यत्नसाध्यमित्यत आह—**पुरस्तादिति। निश्चय इति**। अत्र न केनचिदियत्ता गम्यते। ननु च परिमाण-

**भावबोधिनी**

परिमाण = माप की आख्या=कथन प्रतीत होने पर सभी धातुओं से घञ् प्रत्यय होता है। उदा०—एकः तण्डुलनिश्चायः ( चावलों का एक परिमाण-विशेष )। द्वौ शूर्पनिष्पावौ ( दो सूपों से भूसी आदि निकाले गये चावल )। कॄ विक्षेप = बिखेरना। द्वौ कारौ। त्रयः काराः।

[ इनमें √चि से 'ग्रहवृदृनि० ( ३।३।५८ ) से अप् प्राप्त था। उसका अपवाद घञ् प्रत्यय, आदिवृद्धि करके निश्चाय बनता है। तण्डुल के साथ उसका षष्ठीसमास होता है। निष्पूयते=तुषाद्यपनयनेन शोध्यते इति निष्पावः—तण्डुलादिराशिः, यहाँ कर्म में घञ् प्रत्यय होता है। शूर्पेण निष्पावः—यहाँ 'कर्तृकरणे कृता बहुलम्' २।३।३२ से समास हुआ है। यहाँ द्वित्वसंख्या का अन्वय शूर्प के माध्यम से निष्पाव में होता है। [ कीर्णः = विक्षिप्तः—कारः = धान्यादि। भाष्य में तण्डुलनिचायः यह पाठ है। यहाँ न्याससंमत पाठ रखा गया है। ]

परिमाणाख्यायामिति किम् ? निश्चयः । आख्याग्रहणं रूढिनिरासार्थम् । तेन संख्यापि गृह्यते, न प्रस्थाद्येव । घञनुक्रमणमजपोर्विषये, स्त्रीप्रत्ययास्तु न बाध्यन्ते—एका तिलोच्छ्रित्तिः, द्वे प्रसूती (म० भा०, प्रसृती) ।

न्यासः

ननु च परिमाणशब्दोऽयं प्रस्थादिषु रूढो न संख्यायाम्, तत् कथं परिमाणाख्यायां प्रत्ययो विधीयमान एकस्तण्डुलनिश्चाय इत्यादौ संख्यायां गम्यमानायां भवतीत्यत आह—**आख्याग्रहणमित्यादि** । आख्याग्रहणमिह रूढेर्निरासस्त्यागो यथा स्यादित्येवमर्थं कृतम् । तेन रूढौ त्यक्तायां संख्यापि गृह्यते । आख्याग्रहणसामर्थ्याद्धि परिमाणशब्दः क्रियाशब्दो जायते । परिमीयते = परिच्छिद्यते येन तत् परिमाणम्, संख्ययापि च परिमीयत इति परिमाणम्, अतो युक्तं तस्यापि ग्रहणम् । यदि सर्वग्रहणात् परमप्ययं घञ् बाधते, स्त्रीप्रत्ययानपि बाधेतेत्यत आह—**घञनुक्रमणमित्यादि** । अजपोर्विषये यद् घञन्तं तस्यानुक्रमणं = विधानम् । तस्मादजपावेव घञा बाध्येते इत्यभिप्रायः । अत एवाह—**स्त्रीप्रत्ययास्तु न बाध्यन्त** इति । कुतः पुनरयमर्थो लभ्यते ? '**सर्वेभ्यः**' इति पञ्चम्यन्तेन निर्देशात् । पञ्चम्यन्तनिर्देशे हि सर्वशब्दो धातुसमानाधिकरणो विज्ञायते । तेन प्रकृत्याश्रयस्यापवादस्य सर्वग्रहणाद् बाधा भवति, नार्थाश्रयस्य । यदि त्वर्थाश्रयोऽप्यपवादी बाधितुमिष्टः स्यात्, तदा सर्वस्मिन्निति सर्वशब्दं सप्तम्यन्तमुच्चारयेत् । **एका तिलोच्छ्रित्तिरिति** । श्रिञ उत्पूर्वात् 'स्त्रियां क्तिन्', 'स्तोः श्चुना श्चुः' इति चुत्वम्, 'शश्छोऽटि' इति च्छत्वम् ।

पदमञ्जरी

शब्दस्य प्रस्थादिषु रूढत्वात् प्रस्थस्तण्डुलनिश्चाय इत्यादावेव युक्तं भवितुम्, न तु द्वौ शूर्पनिष्पावावित्यत्र ? इत्यत आह—**आख्याग्रहणं रूढिनिरासार्थमिति** । प्रस्थादिषु जिघृक्षितेषु परिमाण इत्येव वक्तव्यं किमाख्याग्रहणेन ? आख्याग्रहणात्तु मात्रचो लोपो विज्ञायते, परिमाणमात्रस्याख्यायामुक्तौ सत्यामिति । तेन परिमाणशब्दः क्रियाशब्द उपजायते—परिमितिः = परिमाणम्, परिच्छित्तिरिति, सङ्ख्ययापि परिच्छित्तिर्भवति । एवञ्चोन्मानादावपि यथाभिधानं घञ् भवति । यदि तर्हि सर्वग्रहणात् परमप्ययं घञपं बाधते, स्त्रीप्रत्ययानपि बाधेत, तत्राह—**घञनुक्रमणमजपोर्विषय इति** । एतच्च 'सर्वेभ्यः' इति पञ्चमीनिर्देशाल्लभ्यते । पञ्चम्यन्तो हि सर्वशब्दो धातुशब्देन समानाधिकरणो भवति, तेन प्रकृत्याश्रय एवापवादो बाध्यते, नार्थाश्रयः । **तिलोच्छ्रित्तिरिति** । कर्मणि भावे वा क्तिन् । ऊर्ध्वीकृतो राशिः ।

भावबोधिनी

सूत्र में 'सर्व' का ग्रहण ( 'ऋदोरप्' ३।३।५७ से होने वाले ) अप् प्रत्यय का बाध करने के लिये है । 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इस न्याय से केवल अच् का ही बाध करता, अप् का नहीं । [ अतः सर्वग्रहण से अच् और अप् दोनों का बाध करता है । ] परिमाण की आख्या में—इसका क्या लाभ ? निश्चयः [ यहां घञ् नहीं होता है । ] आख्या का ग्रहण रूढि का निराकरण करने के लिए है । इसलिए संख्या का भी ग्रहण होता है, न कि केवल प्रस्थादि का ही । अच् और अप् के विषय में ही घञ् होता है, स्त्रीप्रत्यय ( 'स्त्रियां क्तिन्' ३।३।९४ से विहितों ) का बाध नहीं होता है । उदाहरण—एका तिलोच्छ्रित्तिः । उच्छ्रीक्रियते=ऊर्ध्वीक्रियते -- इत्युच्छ्रित्तिः ऊर्ध्वं कृतः राशिः तिलानाम् उच्छ्रित्तिः — षष्ठीसमास है । द्वे प्रसृती [—प्रस्नियते इति प्रसृतिः ] । ( भाष्य में कहीं 'श्रुती' और कहीं 'प्रसूती' पाठ है । ) * 'कर्ता अर्थ में दार और जार शब्द कहना चाहिये और णिलोप कहना चाहिए ।' दारयन्ति—इति दाराः (स्त्री), जरयन्ति इति – जाराः ( उपपति ) । [ इनमें णिजन्त से घञ् प्रत्यय होने पर णि का लुक् हो जाता है । यहां णि का लोप करने पर स्थानिवद्भाव होने से घञ् को मानकर होने वाली वृद्धि नहीं हो पाती ।

❀ **दारजारौ कर्तरि णिलुक् च** ❀ ( म० भा० ३।३।२० वा० ४ ) **दारयन्तीति दाराः**[1] । **जरयन्तीति जाराः** ॥

**९७८. इङश्च ॥ २१ ॥ ( ३१९१ )**

**इङो धातोर्घञ् प्रत्ययो भवति । अचोऽपवादः । अध्यायः । उपेत्यास्मादधीयते—उपाध्यायः ।**

**न्यासः**

**दारजारावित्यादि** । दारजारशब्दौ निपात्येते । किमत्र निपात्यते ? 'दॄ विदारणे', 'जॄष् वयोहानौ'—आभ्यां हेतुमण्ण्यन्ताभ्यां कर्त्तरि तृजादिषु प्राप्तेषु घञि णिलुक् । ननु च 'णेरनिटि' इति णिलोपे हि सति 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्संज्ञायां सत्यां णिलोपे कृतेऽपि प्रत्ययलक्षणेन जोर्यतेर्मितां ह्रस्वत्वं प्रसज्यते । अस्तु तर्हि मितां ह्रस्वत्वम्, पुनर्घञाश्रया वृद्धिर्भविष्यतीति चेद् ? अयुक्तमेतत्; न हि घञाश्रया वृद्धिः प्राप्नोति, 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावे सति णिचा व्यवहितत्वात् । लुकि तु सति तस्यापरनिमित्तत्वादसति स्थानिवद्भावे घञमाश्रित्य वृद्धिर्भवति । न च प्रत्ययलक्षणेन ह्रस्वत्वं प्रसज्यते; 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधात् । तस्माल्लुग् वक्तव्यः ॥ २० ॥

**इङश्च ॥ अचोऽपवाद इति** । 'एरच्' इति प्राप्तस्योत्तरस्यापीवर्णान्ताद् घञ् विधीयमानोऽच एवापवादो वेदितव्यः । **अध्याय इति** । कर्मणि घञ् ।

**तदन्ताच्च वा ङीषिति** । योऽयमपादाने घञ् तदन्तान् ङीष् प्रतिपाद्यः । तत्रेदं प्रतिपादनम्—'वोतो गुणवचनात्' इत्यत्र वेति योगविभागः कर्त्तव्यः, तेनापादाने स्त्रियामिङो यो घञ् विहितस्तदन्तान् ङीष् भविष्यतीति । यदा च पुंयोगो न विवक्ष्यते तदा ङीष् प्रतिपाद्यः । यदा तूपाध्यायस्य स्त्रीति पुंयोगो विवक्ष्यते तदा 'पुंयोगादाख्यायाम्' इत्येव ङीष् सिद्धः । उपेत्याधीयतेऽस्या उपाध्यायी ।

**पदमञ्जरी**

**णिलुक्चेति** । णिलोपे सति तस्य स्थानिवद्भावाद् घञाश्रया वृद्धिर्न स्यादिति लुग्विधीयते, तस्य परनिमित्तकत्वात् क्विलुगुपधात्वेति प्रतिषेधाद्वा स्थानिवत्त्वाभावाज्जारशब्दः सिध्यति । **जरयन्तीति** । 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वाद् ह्रस्वत्वम् । जारः = प्रच्छन्नपतिः ॥ २० ॥

**इङश्च ॥ उपाध्याय इति** । उपेत्यस्मादधीयत इति अपादाने घञ् । अध्याय इत्यत्र कर्मणि घञ् ।

**अपादाने स्त्रियामिति** । 'घञनुक्रमणमजपोर्विषये' इति वचनात् स्त्रियामप्राप्तो घञ् विधीयते । **उपाध्याया, उपाध्यायीति** । या स्वयमध्यापयति तस्यामेतद्रूपम् । पुंयोगे तु नित्यमेव ङीष् भवति । अत्र च 'उपाध्यायमातुलाभ्यां वा' इति वचनात्पक्षे आनुगागमः—उपाध्यायी, उपाध्यायानी ।

**भावबोधिनी**

किन्तु णिलुक् परनिमित्तक नहीं है अतः स्थानिवद्भाव नहीं होता है ] ॥ २० ॥

[ कर्तृभिन्नकारक संज्ञाविषय में और भाव अर्थ में ] इङ् धातु से घञ् प्रत्यय होता है । यह [ 'एरच्'—३।३।५६ से विहित ] अच् का अपवाद है । उदा०-अध्यायः [ अधीयते यः सः —कर्म में घञ्, अधि + इ + घञ् = अ, जित् होने से 'इ' की वृद्धि और आय् करने पर अधि + आय् + अ यण्, अध्याय=अध्ययन । ] उपेत्य अस्माद् अधीयते—जिसके पास जाकर पढ़ा जाता है । [ अपादान में घञ् । यहाँ भी उप + अधि + इ + घञ् प्रक्रिया पूर्ववत् है । ] [ यहाँ भाव और कर्ता से भिन्न कारक अर्थ है । * 'अपादान कारक में स्त्रीलिङ्ग में घञ् कहना चाहिये और घञन्त से ङीष् विकल्प से कहना चाहिये ।'* उदा०-उपाध्याया, उपाध्यायी [ जिस स्त्री के पास जाकर पढ़ा जाता है । ] 'वायु, वर्ण और निवृत = आवरण अर्थों में '√शॄ' धातु से घञ् होता है ।' उदा० - शारः = वायु [ शॄ + घञ् = अ,

---

१. ''अचि प्राप्ते घञ्, दारा इत्यचाऽपि सिध्यति । घञापि 'घञोऽन्त उदात्तः' इति स्वरसिद्धिः'' इत्यधिकं वा पाठः ।

❀ अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष् ❀। ( म० भा० ३।३।२१ वा० १ ) उपाध्याया, उपाध्यायी । ❀ शॄ वायुवर्णनिवृतेषु ❀। ( म० भा० ३।३।२१ वा० २ ) शारो वायुः । शारो वर्णः । शारो निवृतम् ॥ गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः । ( म० भा० ३।३।२१ )

**९७९. उपसर्गे रुवः ॥ २२ ॥ ( ३१९२ )**

**उपसर्गे उपपदे रौतेर्धातोर्घञ् प्रत्ययो भवति । अपोऽपवादः । संरावः । उपरावः । उपसर्ग इति किम् ? रवः ॥**

**९८०. समि युद्रुदुवः ॥ २३ ॥ ( ३१९४ )**

**समि उपपदे यु, द्रु, दु – इत्येतेभ्यो धातुभ्यो घञ् प्रत्ययो भवति । संयावः । संद्रावः । संदावः । समीति किम् ? प्रयवः ॥**

**न्यासः**

शॄ वायुवर्णनिवृतेष्विति । 'शॄ हिंसायाम्'—अस्माद्वाय्वादिषु वाच्येषु घञ् प्रतिपाद्यः । प्रतिपादनं तु तमेव चकारमनुक्तसमुच्चयार्थम्, 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणं वाश्रित्य कर्त्तव्यम् । निवृतम्=निवारणम् । शीतादिदुःखोपशमहेतुर्निवारणमुच्यते ।

अकृतनीशार इति । अकृतशीतनिवारण इत्यर्थः । पूर्ववदुपसर्गस्य दीर्घत्वम् ॥ २१ ॥

**उपसर्गे रुवः ॥ अपोऽपवाद इति** । 'ऋदोरप्' इति प्राप्तस्य । उत्तरसूत्रेणाप्युवर्णान्ताद् घञ् विधीयमानोऽप एवापवादो वेदितव्यः ॥ २२ ॥ **समि युद्रुदुवः** ॥ २३ ॥

**पदमञ्जरी**

शॄ वायुवर्णनिवृतेष्विति । 'शॄ' इत्यविभक्तिको निर्देशः । **शारो वायुरिति** । करणे घञ्[1] । **शारो वर्ण इति** । चित्रीकरणमत्र धात्वर्थः—चित्रीक्रियतेऽनेनाश्रय इति, अत्रापि करणे घञ् । वर्णान्तरसंपृक्तश्चेद्वर्णः शारः । निव्रियते आव्रियतेऽनेन शरीरमिति निवृतमावरणमुच्यते, 'कृत्यल्युटो बहुलम्' इति करणे क्तः । **नीशार इति** । पूर्ववद्दीर्घः । **अकृतनीशार इति** । अकृतप्रावरण इत्यर्थः । 'प्रदक्षिणप्रसव्यगामिनां शाराणाम्' इति वार्त्तिककारप्रयोगादक्षेष्वपि शार इति भवति ॥ २१ ॥

**समि युद्रुदुवः** ॥ संयावः = पिष्टविकारोऽपूपविशेषः, सम्यूयते = मिश्रीक्रियते गुडजीरकादिभिरिति कृत्वा ॥ २३ ॥

**भावबोधिनी**

वृद्धि, रपर ] । शारः = वर्ण, चितकबरा रंग । शारः निवृतम् = आवरण [ निव्रियते = आव्रियतेऽनेन—यहाँ बाहुलक से करण में क्त हुआ है । ] 'गाय या बैल के समान अकृतनीशार = वस्त्रादिहीन व्यक्ति शिशिर ऋतु में प्रायः कृश = दुर्बल हो जाता है ॥ २१ ॥

[ कर्ता से भिन्न कारक में संज्ञाविषय में और भाव में ] उपसर्ग उपपद रहने पर √'रु' धातु से घञ् होता है । यह अप् का अपवाद है । उदा०-संरावः, उपरावः [ दोनों का अर्थ है—आवाज, सम् अथवा उप उपसर्गसहित √'रु' धातु से घञ्=अ, वृद्धि, आव् होते हैं । ] उपसर्ग रहने पर—इसका क्या फल है ? रवः । [ यहाँ घञ् नहीं होता, रु + अप्, गुण, अवादेश ] ॥ २२ ॥

[ कर्ता से भिन्न कारक में संज्ञाविषय में और भाव अर्थ में ] सम् उपपद रहने पर यु, द्रु और दु—इतनी धातुओं से घञ् प्रत्यय होता है । उदा०-संयावः [ संयूयतेऽसौ इस अर्थ में सम् + यु + घञ्, वृद्धि आदि होती है । संयावः = हलुवा मालपूआ ] सन्द्रावः [ सम् + द्रु + घञ्, भागना ] । संदावः [ सम् + दु + घञ्, भागना ] सम् उपपद हो—इसका क्या फल है ? प्रयवः [ यहाँ घञ् नहीं होता । प्र + यु + अप् ] ॥ २३ ॥

---

१. कैयटस्तु 'कर्मणि' इत्याह ।

### ९८१. श्रिणीभुवोऽनुपसर्गे ॥ २४ ॥ ( ३१९५ )

श्रि, णी, भू—इत्येतेभ्यो धातुभ्योऽनुपसर्गेभ्यो घञ् प्रत्ययो भवति। अजपोरपवादः। श्रायः। नायः। भावः। अनुपसर्ग इति किम्? प्रश्रयः। प्रणयः। प्रभवः। कथं प्रभावो राज्ञः? प्रकृष्टो भाव इति प्रादिसमासो भविष्यति। कथं च नयो राज्ञः? 'कृत्यल्युटो बहुलम्' (३।३।११३) इत्यज् भविष्यति ॥

### ९८२. वौ क्षुश्रुवः ॥ २५ ॥ ( ३१९६ )

वावुपपदे क्षु, श्रु—इत्येताभ्यां धातुभ्यां घञ् प्रत्ययो भवति। अपोऽपवादः। विक्षावः। विश्रावः।
वौ—इति किम्? क्षवः। श्रवः ॥

### ९८३. अवोदोर्नियः ॥ २६ ॥ ( ३१९७ )

अव, उत्—इत्येतयोरुपपदयोर्नयतेर्धातोर्घञ् प्रत्ययो भवति। अवनायः। उन्नायः।
'कथम् उन्नयः पदार्थानाम्?' 'कृत्यल्युटो बहुलम्' (३।३।११३) इत्यज् भविष्यति ॥

**न्यासः**

**श्रिणीभुवोऽनुपसर्गे ॥ अनुपसर्गेभ्य इति।** अविद्यमान उपसर्ग एषामिति बहुव्रीहिः 'अनुपसर्गेभ्यः' इति पञ्चम्यन्तेन विवरणं कुर्वन् सूत्रेऽनुपसर्ग इति सुब्व्यत्ययेन पञ्चम्यर्थे एषा सप्तमीति दर्शयति।

**कथं प्रभावो राज्ञ इति।** अनुपसर्गवचनादिह प्रशब्द उपसर्ग उपपदे न भवितव्यमिति भावः। **कथं नयो राज्ञ इति।** अनुपसर्गाद् घञात्र भवितव्यमिति मन्यते ॥ २४ ॥

**वौ क्षुश्रुवः ॥ विक्षाव इति।** 'टुक्षु शब्दे' ॥ २५ ॥

**अवोदोर्नियः ॥ उन्नाय इति।** 'यरोऽनुनासिकेऽनुनासिको वा' इति वानुनासिकः। **कथमुन्नयः पदार्थानामिति।** उच्छब्दोपपदत्वाद् घञात्र भवितव्यमित्यभिप्रायः ॥ २६ ॥

**पदमञ्जरी**

**अवोदोर्नियः ॥** अधो नयनमवनायः, ऊर्ध्वं नयनमुन्नायः, उन्नयस्तु उत्प्रेक्षा ॥ २६ ॥

**भावबोधिनी**

उपसर्गरहित श्रि, णी और भू—इन धातुओं से घञ् प्रत्यय [ कर्ताभिन्न कारक संज्ञाविषय में और भाव अर्थ में ] होता है। यह अच् और अप् दोनों का अपवाद है। उदा०—श्रायः [ सहारा, √श्रि + घञ्, वृद्धि आदि ]। नायः [ ले जाना, √नी + घञ्, ] भावः [ होना, √भू + घञ्, इनमें इवर्णान्त से अच् और उवर्णान्त से अप् प्राप्त है। उनका अपवाद यह है। ] उपसर्गरहित हो—इसका क्या फल है? प्रश्रयः [ महत्त्व। प्र + श्रि + अच् ]। प्रणयः [ प्रेम प्रणी + अच्, ]। प्रभवः [ उत्पत्तिस्थान प्रभू + अप्, ]। परन्तु 'राजा का प्रभाव' यह कैसे बनेगा? प्रकृष्टः भावः प्रभावः—इस प्रकार प्रादिसमास करना होगा। [ पहले भाव बनाकर तब 'प्र' का समास करना चाहिये। ] 'राज्ञः नयः' राजा की नीति—यह कैसे होगा? 'कृत्य और ल्युट् प्रत्यय बहुल रूप से होते हैं' (३।३।११६) इसके अनुसार अच् होने पर [ नी + अच्, गुण अयादेश नयः ] बनता है ॥ २४ ॥

[ कर्तृभिन्न कारक संज्ञाविषय में और भाव में ] वि उपसर्ग-युक्त √क्षु तथा √श्रु इन धातुओं से घञ् प्रत्यय होता है। यह अप् प्रत्यय का अपवाद है। उदा०—विक्षावः [शब्द करना, विक्षि + घञ्]। विश्रावः [ अतिप्रसिद्ध होना, विश्रि + घञ् ]। 'वि उपसर्ग हो' इसका क्या फल है? क्षवः। श्रवः [ यहाँ क्षु + अप्, श्रु + अप् ] होता है ॥ २५ ॥

[ कर्ता से भिन्न कारक में संज्ञाविषय में और भाव अर्थ में— ] अव तथा उत् इन दो [ उपसर्गों ] के उपपद रहने पर √नी धातु से घञ् प्रत्यय होता है। उदा०-अवनायः [ नीचे गिराना, अव + √नी + घञ् = अ, ई की वृद्धि और आय् आदेश होता है ]। उन्नायः [ उन्नति=ऊपर उठाना, उत् + नी + घञ् = अ, शेषकार्य पूर्ववत्, त् का अनुनासिक न् ]।

पदार्थों का उन्नय = उत्प्रेक्षा—यह प्रयोग कैसे होता है? 'कृत्यल्युटो बहुलम्' (३।३।११३) इससे अच् = अ

**९८४. प्रे द्रुस्तुस्रुवः ॥ २७ ॥ ( ३१९८ )**

प्रशब्दे उपपदे द्रु, स्तु, स्रु—इत्येतेभ्यो धातुभ्यो घञ् प्रत्ययो भवति। प्रद्रावः। प्रस्तावः। प्रस्रावः। प्र इति किम् ? द्रवः। स्तवः। स्रवः ॥

**९८५. निरभ्योः पूल्वोः ॥ २८ ॥ ( ३१९९ )**

'पू' इति पूङ्पूञोः सामान्येन ग्रहणम्। 'लूञ् छेदने'। ( धा० पा० १४८४ ) यथासंख्यमुपसर्गसम्बन्धः। निरभिपूर्वयोः पूल्वोर्धात्वोर्घञ् प्रत्ययो भवति। निष्पावः। अभिलावः। निरभ्योरिति किम् ? पवः। लवः ॥

**९८६. उन्न्योर्ग्रः ॥ २९ ॥ ( ३२०० )**

'गॄ शब्दे', ( धा० पा० १४९९ ) 'गॄ निगरणे' ( धा० पा० १४११ )—द्वयोरपि ग्रहणम्। उन्न्योरुपपदयोः 'गॄ' इत्येतस्माद्धातोर्घञ् प्रत्ययो भवति। उद्गारः समुद्रस्य। निगारो देवदत्तस्य। उन्न्योरिति किम् ? गरः ॥

**न्यासः**

**प्रे द्रुस्तुस्रुवः** ॥ २७ ॥

**निरभ्योः पूल्वोः** ॥ **सामान्येन ग्रहणमिति**। विशेषानुपादानात्। **यथासंख्यमुपसर्गसम्बन्ध इति**। निसोपसर्गेण पुवः सम्बन्धः, अभिना लूञः। ननु च पूञ्पूङ्लूञस्त्रयो धातवः, उपसर्गौ द्वौ, अतो वैषम्याद् यथासंख्येन न भवितव्यम् ? पूरूपमुत्सृष्टानुबन्धसामान्यमेकमेव, ततो नास्ति वैषम्यमित्यदोषः ॥ २८ ॥

**उन्न्योर्ग्रः** ॥ 'ॠदोरप्' इति प्राप्तस्यायमपवादः। उत्तरत्रापि ॠकारान्ताद् घञ् विधीयमानोऽप एवापवादो वेदितव्यः। **द्वयोरपि ग्रहणमिति**। विशेषानुपादानात् ॥ २९ ॥

**पदमञ्जरी**

**निरभ्योः पूल्वोः** ॥ निष्पावः=कोशी धान्यविशेषः, निष्पूयते शूर्पादिभिरिति कृत्वा ॥ २८ ॥

**उन्न्योर्ग्रः** ॥ उद्गारः=अतिप्रवृद्धः शब्दः; निगारोः=भक्षणम् ॥ २९ ॥

**भावबोधिनी**

प्रत्यय होगा। [इस कारण 'ई' की वृद्धि न होकर गुण होता है। और अय् आदेश होता है] ॥ २६ ॥

[ कर्तृभिन्न कारक में संज्ञाविषय में और भाव में ] प्र उपसर्गपूर्वक [ =उपपद रहने पर ] √द्रु, √स्तु और √स्रु—इन तीन धातुओं से घञ् प्रत्यय होता है। उदा०—प्रद्रावः [ तेज दौड़ना, प्र + √द्रु + घञ् = अ, उकार की वृद्धि और आव् आदेश ]। प्रस्तावः [ प्रस्ताव, प्र + √स्तु + घञ् = अ, वृद्धि, आव् आदेश ]। प्रस्रावः [ बहना, प्र + √स्रु + घञ् = अ ]।

प्र—इसके ग्रहण का क्या लाभ है ? द्रवः, स्तवः, स्रवः [ इनमें अप् प्रत्यय है। अतः 'उ' कार का गुण होता है ] ॥ २७ ॥

'पू' इससे पूङ् और पूञ् इन दोनों धातुओं का सामान्यरूप से ग्रहण होता है। √लूञ् छेदन अर्थ में है। यहाँ उपसर्ग का सम्बन्ध यथासंख्येन होता है अर्थात् निर् का √पू के साथ और अभि का √लू के साथ सम्बन्ध होता है। [ कर्तृभिन्न कारक में, संज्ञाविषय में और भाव में ] निर् उपसर्गपूर्वक √पू से और अभि उपसर्गपूर्वक √लू से घञ् प्रत्यय होता है। उदा० - निष्पावः [ पवित्र करना, निर् + √पू + घञ् = अ, ऊकार की वृद्धि और आव् आदेश, रेफ का विसर्ग और 'इदुदुपधस्य चाप्रत्ययस्य' ( ८।३।४१ ) से विसर्ग का ष ]। अभिलावः [ पूर्णरूप से काटना, अभि √ + लू + घञ् ]। निर् और अभि [ उपपद ] रहने पर—इसका क्या फल है ? पवः। लवः [ यहाँ घञ् नहीं किन्तु अप् होने से गुण और अवादेश होता है ॥ २८ ॥

'गॄ शब्दे' 'गॄ निगरणे' अर्थात् शब्द करना अर्थवाली और निगरण = भोजन करना अर्थ वाली—दोनों √ गॄ धातुओं का ग्रहण होता है। [ कर्तृभिन्न कारक में, संज्ञाविषय में तथा भाव में ] उत् तथा नि [ उपसर्ग ] उपपद

## ९८७. कॄ धान्ये ॥ ३० ॥ ( ३२०१ )

**'उन्यो.' इति वर्त्तते। 'कॄ' इत्येतस्माद्धातोरुन्न्योरुपपदयोर्घञ् प्रत्ययो भवति, धान्यविषयश्चेद् धात्वर्थो भवति। विक्षेपार्थस्य किरतेर्ग्रहणम्, न हिंसार्थस्य; अनभिधानात्। उत्कारो धान्यस्य। निकारो धान्यस्य।**

**धान्ये इति किम्? भैक्ष्योत्करः। पुष्पनिकरः॥**

**न्यासः**

**कॄ धान्ये**॥ धान्यमिह प्रकृत्यर्थो वा स्यात्? प्रत्ययार्थो वा स्यात्? प्रकृत्यर्थस्तावन्नोपपद्यते; धान्यस्य द्रव्यत्वात्, धातोश्च क्रियावाचित्वात्। प्रत्ययार्थस्तूपपद्यते धान्यम्; किन्तु प्रत्ययेनाभिहितत्वादुत्कारो धान्यस्येति धान्यशब्दस्य प्रयोगो न प्राप्नोति। अथापि प्रयोगः स्यात्? एवमपि प्रत्ययार्थेऽन्तर्भूतत्वाद् षष्ठी नोपपद्यते—उत्कारो धान्यस्येति। सामानाधिकरण्यमेव प्रत्ययान्तेन स्यात्, एवं हि प्रत्ययार्थो भवति यदि प्रत्ययान्तेन सामानाधिकरण्यं भवति, यथा—दृतिहरिः पशुरिति। तस्मान्नेदम् प्रत्ययार्थः, नापि प्रकृत्यर्थः, अपि तु प्रकृत्यर्थविशेषणमिति मत्वाह—**धान्यविषयश्चेदित्यादि**। **विक्षेपार्थस्येति**। 'कॄ विक्षेपे' इत्यस्य। **न हिंसार्थस्येति**। 'कॄ हिंसायाम्' इत्यस्य ग्रहणं न भवति। किं कारणमित्याह—**अनभिधानादिति**। शब्दशक्तिस्वाभाव्यादुत्कारनिकारशब्दाभ्यां धान्यविषयो विक्षेप एवाभिधीयते, न हिंसा। यस्य चार्थः प्रत्ययान्तेनाभिधीयते तस्यैव ग्रहणं युक्तम्, नेतरस्य। **उत्कारो धान्यस्येति**। विक्षेपो धान्यस्येत्यर्थः॥ ३०॥

**पदमञ्जरी**

**कॄ धान्ये**॥ धान्यमिह प्रकृत्यर्थो वा स्यात्प्रत्ययार्थस्य वा कारकस्योपाधिः? प्रकृत्यर्थस्तावन्नोपपद्यते; धान्यस्य द्रव्यत्वात्, धातोश्च क्रियावाचित्वात्। प्रत्ययार्थोपाधित्वे तु प्रत्ययेनाभिहितत्वादुत्कारो धान्यस्येति धान्यशब्दस्य प्रयोगो न प्राप्नोति। अथापि विस्पष्टप्रतिपत्त्यर्थं प्रयोगः स्यात्। एवमपि प्रत्ययार्थेऽन्तर्भूतत्वाद्धान्ये षष्ठी न स्यात्, दृतिहरिः पशुरितिवत्सामानाधिकरण्यमेव तु स्यात्। तस्मान्नायं प्रत्ययार्थस्योपाधिः, नापि प्रकृत्यर्थः; किन्तु प्रत्ययार्थस्य विषयत्वेन विशेषणमित्याह—**धान्यविषयश्चेदिति**। उपपदत्वमपि न भवति, व्याख्यानात्। **अनभिधानादिति**। शब्दशक्तिस्वाभाव्यात्। उत्कारनिकारशब्दाभ्यां धान्यविषयो विक्षेप एवाभिधीयते, न हिंसा। सापि धान्यस्य कीदृशीति चिन्त्यम्॥ ३०॥

**भावबोधिनी**

रहने पर √गॄ धातु से घञ् प्रत्यय होता है। उदा०—उद्गारः समुद्रस्य [ समुद्र की गर्जना ], निगारः देवदत्तस्य [ देवदत्त का भोजन। नि + गॄ + घञ् = अ, ॠ की वृद्धि और रपर ]। उत् और नि—[ इनके उपपद ] रहने पर—इसके ग्रहण का क्या फल है? गरः। [ यहाँ घञ् न होकर अप् होने से गुण होता है। शब्द और भोजन ये अर्थ हैं ]॥ २९॥

पूर्वसूत्र से उत् और नि की अनुवृत्ति होती है। [ कर्तृभिन्न कारक में संज्ञाविषय में ] उत् तथा नि उपसर्गों से युक्त √कॄ धातु से घञ् प्रत्यय होता है, यदि धान्य [ अन्नादि ]—विषयक धात्वर्थ रहता है तो। यहाँ विक्षेप = बिखेरना अर्थ वाली √कॄ का ग्रहण है, हिंसा अर्थवाली का नहीं, क्योंकि उसका अनभिधान है। उदा०—उत्कारः धान्यस्य [ धान्य = अनाज को इकट्ठा करके ऊपर उछालना ], निकारो धान्यस्य [ धान्य को बिखेरना। नि + कॄ + घञ् = अ, ॠ की वृद्धि और रपर ]।

धान्य [ विषय ] रहने पर—इसके ग्रहण का क्या फल है? भैक्ष्योत्करः, पुष्पनिकरः [ भिक्षा इकट्ठी करना, फूल बिखेरना, यहाँ अप् प्रत्यय और गुण होता है ]॥ ३०॥

९८८. यज्ञे समि स्तुवः ॥ ३१ ॥ ( ३२०२ )

यज्ञविषये प्रयोगे संपूर्वात् स्तौतेर्घञ् प्रत्ययो भवति। संस्तावश्छन्दोगानाम्। समेत्य स्तुवन्ति यस्मिन् देशे छन्दोगाः स देशः 'संस्तावः' इत्युच्यते। यज्ञ इति किम्? संस्तवश्छात्रयोः ॥

९८९. प्रे स्त्रोऽयज्ञे ॥ ३२ ॥ ( ३२०३ )

'स्तृञ् आच्छादने' ( धा० पा० १२५३ )—अस्माद्धातोः प्रशब्दे उपपदे घञ् प्रत्ययो भवति, न चेद्यज्ञविषयः प्रयोगो भवति। शङ्खप्रस्तारः। अयज्ञ इति किम्? बर्हिष्प्रस्तरः[1] ॥

९९०. प्रथने वावशब्दे ॥ ३३ ॥ ( ३२०४ )

'स्तृञ् आच्छादने' ( धा० पा० १२५३ )—अस्माद्धातोर्विशब्द उपपदे घञ् प्रत्ययो भवति प्रथने

न्यासः

यज्ञे समि स्तुवः ॥ समेत्य स्तुवन्ति यस्मिन् देशे इत्यादिना संस्तावशब्दस्याधिकरणसाधनत्वं दर्शयति ॥ ३१ ॥

प्रे स्त्रोऽयज्ञे ॥ बर्हिष्प्रस्तर इति। 'इदुदुपधस्य चाप्रत्ययस्य' इति विसर्जनीयस्य षत्वम् ॥ ३२ ॥

प्रथने वावशब्दे ॥ तृणविस्तार इति। तृणाच्छादनमित्यर्थः ॥ ३३ ॥

पदमञ्जरी

यज्ञे समि स्तुवः ॥ समेत्य स्तुवन्ति यस्मिन्देश इति। अधिकरणे ल्युटोऽपवादो घञिति दर्शयति। संस्तवः = परिचयः ॥ ३१ ॥

प्रे स्त्रोऽयज्ञे ॥ 'यज्ञे' इति प्रकृतत्वाद् 'अयज्ञे' इति पदच्छेदः। शङ्खादिषु प्रस्तारः = विस्तारः। बर्हिष्प्रस्तर इति। प्रस्तरः = मुष्टिविशेषः। बर्हिर्विकारः प्रस्तरो बर्हिष्प्रस्तरः, 'ऋदोरप्' इत्यप्, 'इदुदुपधस्य च' इति षत्वम् ॥ ३२ ॥

प्रथने वावशब्दे ॥ विस्तारः = तिर्यगायतिः ॥ ३३ ॥

भावबोधिनी

यज्ञविषयक प्रयोग रहने पर सम् उपसर्गयुक्त √स्तु से [ कर्तृभिन्न कारक में संज्ञाविषय में और भाव में ] घञ् प्रत्यय होता है। उदा०—छन्दोगों का संस्ताव, छन्दोग = याज्ञिक लोग जहाँ एकत्रित होकर स्तुति करते हैं वह देश = स्थान 'संस्तावः' ऐसा कहा जाता है। [ सम् √स्तु + घञ्, उकार की वृद्धि और आव् आदेश ]।

यज्ञविषय में—इसका क्या फल है? छात्रों का संस्तव = परिचय। [ यहाँ अप् प्रत्यय है। ]

विमर्श—अधिकरण अर्थ में ल्युट् प्रत्यय प्राप्त होता है, उसका अपवाद यह घञ् प्रत्यय है ॥ ३१ ॥

आच्छादन अर्थ में √स्तृञ् है, इस धातु से प्र उपसर्ग के उपपद रहने पर [ कर्तृभिन्न कारक में संज्ञाविषय में और भाव में ] घञ् प्रत्यय होता है, यदि यज्ञविषयक प्रयोग नहीं रहता है तो। उदा०—शङ्खप्रस्तारः [ शङ्खों का फैलाव, विस्तार, प्र + स्तृ + घञ्, ऋ की वृद्धि रपर और शङ्ख के साथ उपपदसमास ]।

यज्ञविषयक न हो—इसके ग्रहण का क्या लाभ है? बर्हिष्प्रस्तरः [ कुशों का विस्तार, बण्डल = समुदाय। इसमें अप् प्रत्यय होता है और विसर्ग का ष होता है ] ॥ ३२ ॥

'आच्छादन अर्थ वाली स्तृ धातु से 'वि' शब्द उपपद रहने पर घञ् प्रत्यय होता है जब प्रथन = विस्तार गम्यमान हो और यदि वह प्रथन शब्दविषयक नहीं होता है तो। [ यहाँ भी कर्तृभिन्न कारक में संज्ञाविषय में और भाव में—इसका सम्बन्ध है। ] प्रथन = विस्तीर्णता। उदा०—पटस्य विस्तारः। [ कपड़े की लम्बाई, फैलाव; वि + √स्तृ + घञ् = अ, वृद्धि, रपर ]।

---

१. प्रत्युदाहरणमिदं वङ्गसंस्करणे अनुपलब्धमपि न्यासपदमञ्जरीसम्मतम्।

**गम्यमाने, तच्चेत्प्रथनं शब्दविषयं न भवति। प्रथनम् = विस्तीर्णता। पटस्य विस्तारः।**

**प्रथन इति किम् ? तृणविस्तरः। अशब्द इति किम् ? विस्तरो वचसाम्॥**

## ९९१. छन्दोनाम्नि च॥ ३४॥ (३२०५)

**'वौ', 'स्त्रः' इति वर्त्तते। विपूर्वात् स्तृणातेश्छन्दोनाम्नि घञ् प्रत्ययो भवति। वृत्तमत्र छन्दो गृह्यते, यस्य गायत्र्यादयो विशेषाः, न मन्त्रब्राह्मणम्; नामग्रहणात्। विष्टारपङ्क्तिश्छन्दः। विष्टारबृहतीछन्दः।**

### न्यासः

**छन्दोनाम्नि च॥** छन्दःशब्दोऽयमस्त्येव मन्त्रब्राह्मणे, अस्त्यन्यदक्षराणामियत्ताविशिष्टवृत्ते यस्य गायत्र्यादयो विशेषाः। तदिह कतरस्तदर्थो गृह्यते ? इत्याह—**वृत्तमित्यादि**। अत्रैवोपपत्तिमाह—**नामग्रहणादिति**। यद्यत्र मन्त्रब्राह्मणमिष्टं स्यान्नामग्रहणं न कुर्यात्, छन्दसीत्येव ब्रूयात्। एवमपि ह्युच्यमाने मन्त्रब्राह्मणग्रहणं लभ्यत एव, यथा—'बहुलं छन्दसि' इत्यादौ वाक्ये। तस्मान्नामग्रहणाद् वृत्तमिह च्छन्दो गृह्यते। **विष्टारपङ्क्तिरिति**। 'छन्दोनाम्नि च' इति षत्वम्। विष्टारशब्द एवात्र घञन्तश्छन्दोनामेति कस्यचिद् भ्रान्तिः स्यात्, तन्निराकरणायाह—**विष्टारपङ्क्तिशब्दोऽत्रेत्यादि**। तत्र = विष्टारपङ्क्तिशब्दे। **अवयवत्वेन वर्त्तत इति**। घञन्तं शब्दरूपमिति सम्बन्धनीयम्। यदि घञन्तं शब्दरूपं न च्छन्दोनाम, किन्तु विष्टारपङ्क्तिशब्दः, तत्र

### पदमञ्जरी

**छन्दोनाम्नि च॥** अक्षराणामियत्ताविशिष्टो विन्यासविशेषो = वृत्तम्। **यस्य गायत्र्यादय इति**। प्रसिद्धत्वादेवमुक्तम्। **न मन्त्रब्राह्मणमिति**। 'बहुलं छन्दसि' इत्यादौ यद्यपि तेषामेव ग्रहणं प्रसिद्धं तथापीह तेषां ग्रहणं न भवति, कुतः ? इत्याह—**नामग्रहणादिति**। **विष्टारपङ्क्तिरिति**। विस्तीर्यन्तेऽस्मिन्नक्षराणीत्यधिकरणे घञ्, ततः कर्मधारयः, 'छन्दोनाम्नि च' इति षत्वम्। यद्यप्यत्र प्रथनं गम्यते, तथापि शब्दविषयत्वात् पूर्वेण न सिध्यति। केचित्तु 'वौ' इति नानुवर्त्तयन्ति, तेन प्रस्तारपङ्क्तिः, आस्तारपङ्क्तिः, संस्तारपङ्क्तिरित्यपि भवतीत्याहुः। 'कर्मण्यग्न्याख्यायाम्' इत्यादौ यथा प्रत्ययान्तश्चेदाख्या भवतीत्ययमर्थो भवति, एवमिहापि प्रत्ययान्तश्चेच्छन्दोनाम भवतीत्यर्थः स्याद् ? इति शङ्कमानं प्रत्याह—**विष्टारपङ्क्तिशब्दोऽत्र छन्दोनामेति**।

### भावबोधिनी

**प्रथन** = विस्तीर्णता [ अर्थ ] में—इसके ग्रहण का क्या लाभ ? तृणविस्तरः। [ तिनकों का आच्छादन = ओढ़ना, यहाँ प्रथन = विस्तीर्णता नहीं प्रतीत होती है। अतः घञ् न होकर अप् होता है। ] अशब्द अर्थात् शब्दविषयक न होने पर—इसके ग्रहण का क्या लाभ है ? विस्तरो वचसाम् [ वचनों का फैलाव, यहाँ शब्द = वचन ही विषय है। अतः घञ् न होकर अप् होता है ]॥ ३३॥

'वौ' और 'स्त्रः' इन दोनों की अनुवृत्ति होती है। 'वि' उपसर्गयुक्त √स्तृ से छन्द का नाम कहना हो तो, [ कर्तृभिन्न कारक में संज्ञाविषय में और भाव में ] घञ् प्रत्यय होता है। यहाँ छन्दः = वृत्त [ लोकप्रसिद्ध अर्थ ] लिया जाता है, जिसके गायत्री आदि विशेष = भेद होते हैं, वे 'मन्त्र और ब्राह्मण' नहीं लिये जाते हैं; क्योंकि यहाँ नाम शब्द का ग्रहण है। [ यदि मन्त्र-ब्राह्मण वाचक छन्दस् का ग्रहण होता तो नामग्रहण की आवश्यकता नहीं थी केवल 'छन्दसि' इतना पर्याप्त था। ] उदा०—विष्टारपङ्क्तिः छन्दः, विष्टारबृहती छन्दः [ विष्टारपङ्क्ति छन्द, विष्टारबृहती छन्द। विस्तीर्यन्ते अक्षराणि अस्मिन्—इसमें अधिकरण अर्थ में वि + स्तृ + घञ्, ऋ का गुण, रपर, विस्तारः बनाने के बाद कर्मधारयसमास करने पर 'छन्दोनाम्नि च' ( ८।३।९४ ) से निपातनात् स् का ष् होता है ] विष्टारपङ्क्तिः एक छन्दोविशेष का नाम है, यह घञन्त शब्दरूप नहीं है। इसके अन्तर्गत अवयवरूप से घञन्त ( विस्तार शब्द ) रहता है। छन्दोनाम्नि = छन्द के नाम में—यह अधिकरणसप्तमी है। [ इसलिए छन्दोनाम प्रत्ययान्त का अधिकरण-

विष्टारपङ्क्तिशब्दोऽत्र छन्दोनाम, न घञन्तं शब्दरूपम्। तत्र त्ववयवत्वेन तद् वर्त्तते। 'छन्दोनाम्नि' इत्यधिकरणसप्तम्येषा ॥

## ९९२. उदि ग्रहः ॥ ३५ ॥ ( ३२०७ )

उदयुपपदे ग्रहेर्धातोर्घञ् प्रत्ययो भवति। अपोऽपवादः। उद्ग्राहः ॥ ❀ छन्दसि निपूर्वादपीष्यते स्रुगुद्यमननिपातनयोः ❀ ( म० भा० ३।३।३६ वा० ३ )। हकारस्य भकारः। 'उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् ( वा० सं० १७·६४ ) ॥

### न्यासः

घञन्तरूपमवयवत्वेन वर्त्तते, एवं तर्हि 'छन्दोनाम्नि' इत्येतत् कथमुन्नीयते? अस्य हि छन्दोनाम्नि गम्यमान इत्येषोऽर्थः, प्रत्ययान्तं छन्दो नाम भवतोति यावत्। एवञ्चार्थं एवं सति नोपपद्यत इत्याह—**छन्दोनाम्नीत्यधिकरणसप्तम्येषेति**। एतेन च्छन्दोनाम्नि प्रत्ययान्तस्याधिकरणभूते प्रत्ययो भवतीत्ययमत्रार्थो वेदितव्यः, न च्छन्दोनाम्नि गम्यमान इत्येष इति दर्शयति ॥ ३४ ॥

**उदि ग्रहः ॥ अपोऽपवाद इति**। 'ग्रहवृदनिश्चिगमश्च' इति प्राप्तस्य।

**छन्दसि त्वित्यादि**। यज्ञपात्रविशेषो येनाहुतिर्दीयते तत् स्रुगुच्यते, तस्योद्यमनम्=ऊर्ध्वनयनम्, निपातनम्=अधस्तान्नयनम्, एतयोरर्थयोर्ग्रहेश्छन्दसि विषये घञिष्यते। स च 'कृत्यल्युटो बहुलम्' इति लभ्यत इति वेदितव्यम्। **निग्राभमिति**। हृग्रहोर्भश्छन्दस्युपसंख्यानाद् हकारस्य भकारः ॥ ३५ ॥

### पदमञ्जरी

**अवयवत्वेन वर्त्तत इति**। घञन्तशब्दरूपमित्यनुषङ्गः। क्वचित्तु **तद्वर्त्तत इति** तच्छब्दः पठ्यते, तत्र नानुषङ्गः। कथं तर्हि छन्दोनाम्नीत्यस्य निर्वाहः? इत्याह- **छन्दोनाम्नीत्यधिकरणसप्तम्येषेति**। प्रत्ययान्तस्याधिकरणं छन्दोनाम, अवयवाश्चावयविनि वर्त्तन्त इति लौकिका मन्यन्ते, तेन न काचिदनुपपत्तिरिति भावः ॥ ३४ ॥

**उदि ग्रहः ॥ अपवाद इति**। 'ग्रहवृदनिश्चिगमश्च' इति प्राप्तस्य। **छन्दसि नीत्यादि**। अवयवसन्निवेशविशिष्टा यज्ञपात्रविशेषाः स्रुचः। इह तु जुहूपभृतोर्ग्रहणम्; 'उद्ग्राभं चेति जुहूमुद्यच्छति निग्राभं चेत्युपभृतं नियच्छति' इति वचनात्। 'हृग्रहोर्भश्छन्दसि' इति भत्वम् ॥ ३५ ॥

### भावबोधिनी

भूत रहने पर प्रत्यय होता है, यही अर्थ है न कि छन्दोनाम प्रतीत होने पर प्रत्यय होता है, यह अर्थ है। क्योंकि केवल घञन्त शब्द छन्दोवाचक नहीं है। वह तो छन्दः के अवयवरूप में है। अतः उक्त अधिकरण अर्थ मानना चाहिये ] ॥ ३४ ॥

उद् उपपद रहने पर [ कर्तृभिन्न कारक में संज्ञाविषय में और भाव में ] √ग्रह से घञ् प्रत्यय होता है। [ "ग्रहवृदनिश्चिगमश्च -३।३।५८ से प्राप्त ] अप् प्रत्यय का अपवाद यह घञ् है। उदा०—उद्ग्राहः [ उठाना, उद्+ग्रह्+घञ् ]।

'वैदिक प्रयोग में स्रुक् के उन्नयन और निपातन=ऊपर ले जाना और नीचे लाना अर्थ में 'नि' पूर्वक ग्रह धातु से भी घञ् होता है। ( "हृग्रहोर्भश्छन्दसि" इस वार्तिक से हकार का भकार होता है। ) उदा०—उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्। ( इन्द्र और अग्नि आदि देव हमारा उत्कर्ष और हमारे शत्रु का अपकर्ष एवं वेदत्रयीरूप यज्ञ को बढ़ावें ) [ उद्+√ग्रह्+घञ्=अ, नि+√ग्रह्+घञ्=अ, हकार का भकार और उपधा के अकार की वृद्धि होती है। ] ॥ ३५ ॥

## ९९३. समि मुष्टौ ॥ ३६ ॥ ( ३२०८ )

'ग्रहः' इत्येव। सम्युपपदे ग्रहेर्धातोर्घञ् भवति, **मुष्टिविषयश्चेद्धात्वर्थो भवति। मुष्टिः**=अङ्गुलिसंनिवेशः। **अहो मल्लस्य संग्राहः। अहो मुष्टिकस्य संग्राहः। दृढमुष्टिताऽऽख्यायते।**

**मुष्टौ इति किम्? संग्रहो धान्यस्य॥**

## ९९४. परिन्योर्नीणोर्द्यूताभ्रेषयोः ॥ ३७ ॥ ( ३२०९ )

**परिशब्दे निशब्दे चोपपदे यथासंख्यं नियः इणश्च धातोर्घञ् प्रत्ययो भवति। अचोऽपवादः। द्यूताभ्रेषयोः—अत्रापि यथासंख्यमेव सम्बन्धः, द्यूतविषयश्चेन्नयतेरर्थः, अभ्रेषविषयश्चेद् इणर्थः। पदार्थाना-**

**न्यासः**

**समि मुष्टौ॥** ग्रहेः क्रियावाचित्वात् मुष्टेश्चाक्रियात्मकत्वात् तत्र ग्रहेर्न सम्भवति, तस्मान्मुष्टिग्रहे योऽर्थस्तस्य विषयो विज्ञायत इत्याह—**मुष्टिविषयश्चेद् धात्वर्थो भवतीति**। अस्त्येवायं मुष्टिशब्दः परिमाणे—शाकस्य मुष्टिरिति, अस्त्यङ्गुलीनां रचनाविशेषे, यथा—हन्ति मुष्टिनेति; तत्र यदीह परिमाणवृत्तेर्ग्रहणं स्यादस्य सूत्रस्य वैयर्थ्यं स्यात्, 'परिमाणाख्यायां सर्वेभ्यः' इत्येव सिद्धत्वात्। तस्मादङ्गुलीनां रचनाविशेषवृत्तेर्ग्रहणं विज्ञायत इत्याह—**मुष्टिरङ्गुलिसन्निवेश इति**। सन्निवेशः=रचनाविशेषः। **अहो मल्लस्य संग्राह इति**। मुष्टेर्दार्ढ्यमित्यर्थः। अत एवाह—**दृढमुष्टिताऽऽख्यायते इति**॥ ३६॥

**परिन्योर्नीणोर्द्यूताभ्रेषयोः॥ पदार्थानामित्यादि**। पदार्थशब्दो वस्तुवाची। कुत्सितश्चारः=अपचारः। यथाप्राप्तस्याकरणमित्यर्थः। यथाप्राप्तस्याकरणमसाध्वेतदिति लोके कुत्स्यते, तस्मादन्यः [प्रशस्तः]शान्तश्चारोऽनपचारः। एतमेवार्थं पर्यायान्तरेण व्यक्तीकर्त्तुमाह—**यथाप्राप्तस्य करणमिति**। यद् यत् प्राप्तमिति 'यथाऽसादृश्ये'

**पदमञ्जरी**

**समि मुष्टौ॥ मुष्टिविषयश्चेद्धात्वर्थो भवतीति**। 'कृ धान्ये' इत्यत्र धान्यविषयश्चेद्धात्वर्थो भवतीति एतदनुसारेणायं ग्रन्थो योज्यः। मुष्टिशब्दोऽयमस्त्येव परिमाणे—चतुरो मुष्टीन्निर्वपतीति, अङ्गुलीनां रचनाविशेषवचनोऽप्यस्ति—मुष्टिना हन्तीति; तत्र पूर्वस्य ग्रहणे 'परिमाणाख्यायामि'त्येव सिद्धत्वाद् द्वितीयस्य ग्रहणमित्याह—**मुष्टिरङ्गुलिसन्निवेश इति**। अहोशब्द आश्चर्ये। मुष्टौ कुशलो मुष्टिकः, आकर्षादिपाठात्कन्॥ ३६॥

**परिन्योर्नीणोर्द्यूताभ्रेषयोः**॥ अक्षादिभिः क्रीडनं द्यूतम्। 'भ्रेष चलने' भ्रेषणं भ्रेषः=चलनम्। अभ्रेषः=अचलनम्। **भ्रेषविषयश्चेदिति**। अयमपि ग्रन्थः पूर्वानुसारेण योज्यः। **अनपचार इति**। कुत्सितश्चारोऽपचारः, तस्मादन्यः प्रशस्तः चारोऽनपचारः। एतदेव स्पष्टयति—**यथाप्राप्तस्येति**। यथा येन प्रकारेण प्राप्तिर्य-

**भावबोधिनी**

√ग्रह की ही अनुवृत्ति होती है। सम् उपपद रहने पर ग्रह धातु से घञ् प्रत्यय होता है यदि मुष्टि=मुट्ठी अर्थ धातु का वाच्य हो तो। मुष्टि अर्थात् अंगुलियों को आपस में मिलाकर बन्द करना। उदा०—अहो मल्लस्य संग्राहः [ ओ हो! पहलवान का मुक्का, सम्+√गृह्+घञ्=अ, उपधा वृद्धि ]। अहो! मुष्टिकस्य संग्राहः। [ ओ हो! मुक्केबाज का मुक्का, यहाँ मुष्टौ=मुक्के चलाने में 'कुशल' अर्थ में कन् प्रत्यय होने से मुष्टिक=अच्छा मुक्केबाज अर्थ है ] यहाँ दृढमुष्टिता=मुट्ठी की दृढ़ता कही जा रही है।

मुष्टि=मुट्ठी विषयक धात्वर्थ रहने पर—इसका क्या लाभ है? संग्रहो धान्यस्य [=अनाज का संग्रह, यहाँ घञ् न होकर अप् होता है। अतः उपधावृद्धि नहीं होती है ]॥ ३६॥

परि शब्द और नि शब्द उपपद रहने पर यथासंख्येन=क्रमशः √नी और √इण् से घञ् प्रत्यय होता। यह ["एरच्" ३।३।५६ से प्राप्त] अच् का अपवाद है। द्यूत और अभ्रेष—इनमें भी यथासंख्येन=क्रमशः ही सम्बन्ध है—यदि

मनपचारो = यथाप्राप्तकरणम् = अभ्रेषः । द्यूते तावत्—परिणायेन शारान् हन्ति । समन्तान्नयनेन । अभ्रेषे—एषोऽत्र न्यायः । द्यूताभ्रेषयोरिति किम् ? परिणयः । न्ययं गतः पापः ॥

**९९५. परावनुपात्यय इणः ॥ ३८ ॥ ( ३२१० )**

परिशब्दे उपपदे इणो धातोर्घञ्प्रत्ययो भवति, अनुपात्यये गम्यमाने । क्रमप्राप्तस्यानतिपातोऽनुपात्ययः = परिपाटी । तव पर्यायः । मम पर्यायः । अनुपात्यय इति किम् ? कालस्य पर्ययः । अतिपात इत्यर्थः ॥

**९९६. व्युपयोः शेतेः पर्याये ॥ ३९ ॥ ( ३२११ )**

**न्यासः**

इति वीप्सायामव्ययीभावः । करणम्=सम्पादनम् । एतदुक्तं भवति—युक्तेरागमाल्लोकप्रसिद्धेर्वा यः पदार्थानां प्राप्नोति तस्य सम्पादनमभ्रेष इति । 'भ्रेष चलने' । भ्रेषणम् = भ्रेषः, स्वरूपात् तच्चलनम् = प्रच्यवनम् । अभ्रेषो भ्रेषस्वरूपादचलनम् । एवं हि पदार्थाः स्वरूपादचलिता भवन्ति यदि प्राप्तं नातिवर्त्तन्ते । **परिणायेनेति** । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् । **हन्तीति** = बाधते । **समन्तान्नयनेनेति** । परिणायेनेत्यस्येदमर्थकथनम् ॥ ३७ ॥

**परावनुपात्यय इणः** ॥ **अनतिपात इति** । अनतिक्रम इत्यर्थः ।

**अतिपात इत्यर्थ इति** । अतिक्रम इत्यर्थः ॥ ३८ ॥

**व्युपयोः शेतेः पर्याये** ॥ पर्यायोऽनुपात्यय एव, तत्रानुपात्ययग्रहणानुवृत्त्यैव सिद्धे पर्यायग्रहणं बाधक-

**पदमञ्जरी**

स्येति बहुव्रीहिः । अव्ययीभावे त्वम्भावः प्राप्नोति । क्वचित्तु **यथाप्राप्तकरणमिति** पठ्यते । **परिणायेनेति** । 'उपसर्गादसमासेऽपि' इति णत्वम् । **हन्तीति** = बाधते । **समन्तान्नयनेनेति** । परिणायेनेत्यस्येदमर्थकथनम् । **एषोऽत्र न्याय इति** । एतदत्र यथाप्राप्तमित्यर्थः । **परिणयः** = विवाहः । **न्ययः** = नाशः ॥ ३७ ॥

**परावनुपात्यय इणः** ॥ इह द्विः परिग्रहणम्, द्विश्चेण्ग्रहणं क्रियते, सकृदेव तु कर्त्तव्यम्, एवं वक्ष्यामि—परौ नियो द्यूते इणोऽनुपात्यये नावभ्रेष इति ? सत्यम्; तथा तु न कृतमित्येव ॥ ३८ ॥

**व्युपयोः शेतेः पर्याये** ॥ पूर्वसूत्रेणानुपात्यये पर्यायशब्दो व्युत्पादितः, ततश्चानुपात्यय इत्यधिकारेणैव

**भावबोधिनी**

√नी का अर्थ द्यूतविषयक हो और √इण् का अर्थ अभ्रेषविषयक हो । पदार्थों का अनपचार = यथाप्राप्त का करना = अभ्रेष है अर्थात् जो वस्तु क्रम से प्राप्त है उसे करते जाना—अभ्रेष है । उदा०—द्यूत = जुआँ में - परिणायेन शारान् हन्ति । [ सभी ओर से जुआँ के पासे मारता = बाधित करता है । परि + नी + घञ् = अ, ई को वृद्धि, आय् आदेश और "उपसर्गादसमासेऽपि" ८।४।१४ से णत्व होकर परिणायः बनता है । ] अभ्रेष = यथाप्राप्त कार्य का करना—एषोऽत्र न्यायः [ यहाँ यही करना उचित है । नि + √इ + घञ् = अ, इ की वृद्धि, आय् आदेश, 'नि' के इ का यण् ] द्यूत तथा अभ्रेष—इनमें हो—इसका क्या फल है ? परिणयः । न्ययं गतः पापः । [ यहाँ द्यूत और अभ्रेष अर्थ नहीं हैं । अतः घञ् नहीं होता है । परिणय का विवाह और न्यय का विनाश अर्थ है । ] ॥ ३७ ॥

परि उपपद रहने पर √इण् धातु से अनुपात्यय = अनतिक्रम अर्थ गम्यमान रहने पर [ कर्तृभिन्न कारक में संज्ञाविषय में और भाव में ] घञ् प्रत्यय होता है । क्रमप्राप्त का = अनतिपात = अनुपात्यय = परिपाटी = बारी । उदा० – तव पर्यायः । मम पर्यायः । [ तुम्हारी बारी । मेरी बारी । परि + √इ + घञ् = अ, धातु की वृद्धि, आय् आदेश के बाद 'इ' का यण् ] । अनुपात्यय = अनतिक्रम में—इसका क्या प्रयोजन है ? कालस्य पर्ययः । समय का अतिपात यह अर्थ है । [अतः घञ् न होकर अच् प्रत्यय करने पर √'इ' का गुण अयादेश, बाद में यण् होता है] ॥ ३८ ॥

वि और उप—इन दो उपसर्गों के उपपद रहने पर √शीङ् से घञ् प्रत्यय होता है, पर्याय = बारी अर्थ गम्यमान रहने पर [ कर्तृभिन्न कारक में संज्ञाविषय में और भाव में ] । उदा०—तव विशायः । मम विशायः । [ तुम्हारे सोने

**वि, उप**—इत्येतयोरुपपदयोः शेतेर्धातोर्घञ् भवति, पर्याये गम्यमाने । **तव विशायः । मम विशायः । तव राजोपशायः ।** तव राजानमुपशयितुं पर्याय इत्यर्थः । पर्याय इति किम् ? **विशयः । उपशयः ॥**

**९९७. हस्तादाने चेरस्तेये ॥ ४० ॥ ( ३२१२ )**

**हस्तादाने** गम्यमाने **चिनोतेर्धातोर्घञ्** प्रत्ययो भवति, न चेत्स्तेयं=चौर्यं भवति । **हस्तादानग्रहणेन** प्रत्यासत्तिरादेयस्य लक्ष्यते । **पुष्पप्रचायः । फलप्रचायः ।**

**हस्तादान इति किम् ? वृक्षशिखरे फलप्रचयं करोति । अस्तेय इति किम् ? पुष्पप्रचयश्चौर्येण ।**

❀ **उच्चयस्य प्रतिषेधो वक्तव्यः** ❀ ( उच्चयः[1] ) ॥

**न्यासः**

बाधनार्थम् । अभिविधिविवक्षायां परिमाणमपि बाधित्वा घञेव यथा स्यात् । एवञ्चार्थे शब्दाधिक्यादर्थाधिक्यं भवतीति लभ्यते, न तु पर्यायशब्दोऽस्यार्थस्य वाचकः ॥ ३९ ॥

**हस्तादाने चेरस्तेये ॥ हस्तादानग्रहणेनेत्यादि ।** हस्तेनोपायान्तरनिरपेक्षेणोपादानम्=प्रत्यासत्तिः, तत एव वस्तुनो भवति, तस्माद्धस्तादानग्रहणेन ग्राह्यस्य वस्तुनः प्रत्यासन्नतोपलक्ष्यते; हस्तादानशब्दाभिधेयस्यार्थस्य प्रत्यासत्तेः साहचर्यात् । **वृक्षशिखर इत्यादि ।** वृक्षशिखरग्रहणेनादेयस्याप्रत्यासन्नत्वं सूचयति ॥ ४० ॥

**पदमञ्जरी**

सिद्धे पर्यायग्रहणं पुनर्विधानार्थम् । तेनाभिविधिविवक्षायां परमपीनुणं बाधित्वाऽयमेव घञ् भवति । **राजानमुपशयितुं पर्याय इत्यर्थ इति ।** 'कालसमयवेलासु तुमुन्' इत्यत्र कालेत्यर्थग्रहणम् । पर्यायोपादानं तु प्रपञ्चार्थम्, यथा --'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इति । तेन पर्यायशब्दयोगेऽपि तुमुन् भवति । तथा चावसरो भोक्तुम्, अवकाशो भोक्तुमित्याद्यपि दृश्यते । विशयः=संशयः, उपशयः=समीपशयनम् ॥ ३९ ॥

**हस्तादाने चेरस्तेये ॥ हस्तादानग्रहणेनेत्यादि ।** यत्रोपायान्तरनिरपेक्षेण हस्तेनैवादेयमादीयते, तत्रावश्यमादेयस्य=ग्राह्यस्य प्रत्यासत्तिर्भवति, अतः साहचर्यं लक्षणाहेतुः । **वृक्षशिखर इति ।** वृक्षाग्रे यानि फलानि तेषां यष्टयादिना प्रचयं करोतीत्यर्थः । यद्वा—आरुह्य हस्तेनादानेऽप्यादेयस्य प्रत्यासत्त्यभावाद् घञभावः ॥४०॥

**भावबोधिनी**

की बारी । मेरे सोने की बारी । ] तव राजोपशायः । तुम्हारी राजा के समीप सोने की बारी है । [ उप + √शी + घञ्=अ, ई की वृद्धि और आय् आदेश होता है । ]

पर्याय—इसका क्या फल है ? विशयः [ =सन्देह ] । उपशयः । [ समीप में सोना, यहाँ पर्याय अर्थ न होने से घञ् न होकर अच् होता है ] ॥ ३६ ॥

हाथ से तोड़ना प्रतीयमान रहने पर √चिञ् धातु से घञ् प्रत्यय होता है, यदि स्तेय=चौर्य न होता हो । [ यहाँ भी कर्तृभिन्न कारक में संज्ञाविषय में और भाव में—इसका सम्बन्ध करना चाहिये । ] हस्तादान [ हाथ से तोड़ना ]—इसके ग्रहण से आदेय=तोड़े जाने वाले फल आदि की प्रत्यासत्ति=समीपता प्रतीत होती है । [ क्योंकि पास के ही फलादि का हाथ से तोड़ना सम्भव है । ] उदा०—पुष्पप्रचायः । [ हाथ से फूलों का तोड़ना ] । फलप्रचायः [ हाथ से फल तोड़ना ] । हस्तादाने—[ हाथ से तोड़ना ]—इसके ग्रहण का क्या फल है ? वृक्षशिखरे फलप्रचयं करोति । [ पेड़ की चोटी पर फलों का संग्रह करता है । ] अस्तेय=चोरी न हो—इसके ग्रहण का क्या फल है ? पुष्पप्रचयः चौर्येण क्रियते [ चोरी से फूलों का संग्रह । यहाँ अच् होकर गुण और अय् होता है । ] 'उच्चय का प्रतिषेध कहना चाहिये ।' [ उच्चयः अर्थात् राशि, उद् + चि + अच् । यहाँ घञ् नहीं होता है । ] ॥ ४० ॥

---

१. वार्त्तिकोऽयं महाभाष्ये न दृश्यते । मूलं अन्वेषणीयम् ।

**९९८. निवासचितिशरीरोपसमाधानेष्वादेश्च कः ॥ ४१ ॥ ( ३२१३ )**

'चेः' इत्येव। निवसन्त्यस्मिन्निति निवासः, चीयतेऽसौ चितिः, पाण्यादिसमुदायः = शरीरम्, राशीकरणम् = उपसमाधानम्—एतेष्वर्थेषु चिनोतेर्घञ् प्रत्ययो भवति, धातोरादेश्च ककार आदेशः। निवासे तावत्—चिखल्लिनिकायः। चितौ—आकायमग्निं चिन्वीत। शरीरे—अनित्यकायः। उपसमाधाने—महागोमयनिकायः। एतेष्विति किम्? चयः। इह कस्मान्न भवति—महान् काष्ठनिचयः? बहुत्वमत्र गम्यते[1]। नोपसमाधानम् ॥

**९९९. संघे चानौत्तराधर्ये ॥ ४२ ॥ ( ३२१४ )**

**न्यासः**

**निवासचितिशरीरोपसमाधानेष्वादेश्च कः ॥ राशीकरणमिति ।** प्रकीर्णकस्यैकत्रकरणमित्यर्थः। **चिखल्लिनिकाय इति।** चिखल्लिर्जनपदः, तस्य निकायः=निवासः। अथादिग्रहणं किम्? अर्थस्य मा भूत्। यद्येवम्, 'चः कः' इति वक्तव्यम्? एवं तर्हि यदा यङ्लुगन्तादुत्पद्यते तदा 'अन्त्यविकारेऽन्त्यसदेशस्य' इति द्वितीयस्य चकारस्य मा भूदित्येवमर्थमादिग्रहणम् ॥ ४१ ॥

**सङ्घे चानौत्तराधर्ये ॥ एकधर्मनिवेशेनेति।** एकधर्मानुगमनेनेत्यर्थः ॥ ४२ ॥

**पदमञ्जरी**

**निवासचितिशरीरोपसमाधानेष्वादेश्च कः ॥ एतेष्वर्थेष्विति।** अत्रोपसमाधानं धात्वर्थः, अन्ये प्रत्ययार्थस्य कारकस्योपाधिभूताः। **चिखल्लिनिकाय इति।** चिखल्लिः—जनपदविशेषः, तत्सम्बन्धी ग्रामादिनिवासदेश इत्यर्थः। **आकायमिति।** आचीयतेऽस्मिन्नष्टका इत्यधिकरणे घञ्। **काय इति।** चीयन्तेऽस्मिन्नस्थ्यादीनि, अधिकरण एव घञ्। **गोमयनिकाय इति।** प्रकीर्णानां गोमयानामेकत्र राशीकरणमित्यर्थः। **बहुत्वमत्र गम्यते इति।** तत्र तत्र विक्षिप्तानामेव काष्ठानामित्यर्थः। 'चः कः' इति वक्तव्ये आदेरिति वचनं यङ्लुगन्तेऽप्यादेरेव यथा स्याद्, अनन्त्यस्याभ्यासस्य चोभयोर्मा भूदिति—गोमयानां निकेचायः, गोमयानां पुनः पुना राशीकरणमित्यर्थः ॥ ४१ ॥

**सङ्घे चानौत्तराधर्ये ॥ प्राणिनां समुदायः सङ्घ इति।** 'सङ्घोद्घौ गणप्रशंसयोः' इति गणमात्रे

**भावबोधिनी**

√चि—की ही अनुवृत्ति होती है। जिसमें रहते हैं वह निवास [ कहा जाता ]। जो चुना जाय वह 'चिति' है। हाथ आदि अवयवों का समुदाय शरीर है, एकत्रित करना, राशि बनाना = 'उपसमाधान' है—इन [ चार ] अर्थों में √चिञ् से घञ् प्रत्यय होता है और धातु के आदि वर्ण का ककार आदेश होता है। [ कर्तृभिन्न कारक में संज्ञाविषय में और भाव में—इसका सम्बन्ध यहाँ भी है।] उदा०—(१) निवास अर्थ में—चिखल्लिनिकायः। [नि + √चि + घञ्=अ, धात्वादि चकार का ककार आदेश, इकार की वृद्धि और आय् आदेश। चिखल्लि नामक किसी जनपद का निवास = गाँव आदि]। (२) चिति अर्थ में—आकायम् अग्निं चिन्वीत [ श्मशान-अग्नि का चयन किया जाय। अधिकरण अर्थ में आ + √चि + घञ् शेष पूर्ववत्। ] शरीर अर्थ में—अनित्यकायः। चीयन्तेऽस्थ्यादीनि अस्मिन्—इस अधिकरण अर्थ में √चि + घञ् शेष प्रक्रिया पूर्ववत्। अनित्य के साथ समास ] उपसमाधान अर्थ में—महागोमयनिकायः [ इधर-उधर फैले हुये गोबर = कण्डों का विशाल ढेर। प्रक्रिया पूर्ववत् ही है। ]

इनमें ही—इसका क्या फल है? चयः। [ समुदाय। इसमें घञ् न होकर अच् होता है। ] यहाँ क्यों नहीं होता है—महान् काष्ठनिचयः? [ लकड़ियों का बहुत बड़ा समुदाय ]। यहाँ बहुत्व प्रतीत होता है न कि उपसमाधान।

विमर्श—कहीं-कहीं गम्यते के स्थान पर विवक्षितम् पाठ है, 'विवक्षितम्' ही अधिक उचित है ॥ ४१ ॥

---

१. पदमञ्जरीसम्मतोऽयं पाठः। कुत्रचित्–विवक्षितमित्यपि पाठः।

**'चेः' इत्येव। प्राणिनां समुदायः = सङ्घः, स च द्वाभ्यां प्रकाराभ्यां भवति—एकधर्मनिवेशेन, औत्तराधर्येण वा; तत्र औत्तराधर्यपर्युदासाद् इतरो गृह्यते। संघे वाच्ये चिनोतेर्धातोर्घञ् प्रत्ययो भवति, आदेश्च कः। भिक्षुकनिकायः। ब्राह्मणनिकायः। वैयाकरणनिकायः। अनौत्तराधर्ये इति किम्? सूकरनिचयः। प्राणिविषयत्वात् सङ्घस्येह न भवति—कृताकृतसमुच्चयः, प्रमाणसमुच्चयः॥**

**१०००. कर्मव्यतिहारे णच् स्त्रियाम्॥ ४३॥ (३२१९)**

**कर्म = क्रिया। व्यतिहारः = परस्परं करणम्। कर्मव्यतिहारे गम्यमाने धातोर्णच् प्रत्ययो भवति स्त्रीलिङ्गे वाच्ये, तच्च भावे। चकारो विशेषणार्थः—'णचः स्त्रियामञ्' (५.४.१४) इति। व्यावक्रोशी। व्यावलेखी।**

**न्यासः**

**कर्मव्यतिहारे णच् स्त्रियाम्॥** 'धातोः' इत्यधिकाराद्धातुवाच्यं यत् कर्म तदेव गृह्यते, न साधनकर्म। न हि धातोस्तत्र वृत्तिरस्तीति मत्वाऽऽह—**कर्म क्रियेति। चकारो विशेषणार्थ इति।** अन्तोदात्तार्थश्चकारः कस्मान्न भवति? नार्हत्यन्तोदात्तार्थो भवितुम्; णजन्तादञो विधानात्। सतिशिष्टस्वरेणाद्युदात्तेन भवितव्यम्, तत्र कुतोऽन्तोदात्तस्य:सम्भवः? तस्माद् विशेषणार्थ एव चकारः। 'स्त्रियाम्' इत्युच्यमाने 'प्रज्ञाश्रद्धार्चाभ्यो णः' इति प्राज्ञेत्यत्रापि स्यात्। **व्यावक्रोशीत्यादि।** 'क्रुश आह्वाने', 'लिख अक्षरविन्यासे', 'हसे हसने'—एभ्यो

**पदमञ्जरी**

निपातितोऽपि सङ्घशब्दः प्राणिनामेव समुदाये रूढ इति भावः। **एकधर्मसमावेशेनेति।** एकधर्मोऽनुगतः। **औत्तराधर्येणेति।** उत्तरे चाधरे चोत्तराधराः, तेषां भाव औत्तराधर्यम्।

**सूकरनिचय इति।** स्तनपानाययदोत्तराधरभावेन शेरते तदेदं प्रत्युदाहरणम्, यदा तु भिक्षुवत्पृथक्पृथगेव तिष्ठन्ति, तदेदमुदाहरणमेव भवति॥ ४२॥

**कर्मव्यतिहारे णच् स्त्रियाम्॥** 'धातुः' इति वर्त्तते, तस्य विशेषणं कर्मव्यतिहारग्रहणम्, कर्मव्यतिहारे वर्त्तमानादित्यर्थः। धातोश्च क्रियावाचित्वम्, न तस्य साधनकर्मव्यतिहारे वृत्तिः सम्भवति; अतो लौकिकस्य क्रियाकर्मणो ग्रहणमित्याह—**कर्मव्यतिहारः क्रियाव्यतिहार इति। स्त्रीलिङ्गे.... भावे इति।** कर्तृवर्जिते तु कारके न स भवति; अनभिधानादिति भावः। **चकारो विशेषणार्थ इति।** न स्वरार्थः, प्रत्ययस्वरेणैव

**भावबोधिनी**

√चि—की ही अनुवृत्ति होती है। प्राणियों का समुदाय = सङ्घ है, वह दो प्रकार से होता है (१) एकधर्म के निवेश से और (२) औत्तराधर्य से = ऊपर नीचे बैठने से। इसमें औत्तराधर्य के पर्युदास के कारण इतर = एकधर्म निवेश ही लिया जाता है। अनौत्तराधर्य संघ वाच्य रहने पर √चिञ् धातु से घञ् प्रत्यय होता है, और आदि वर्ण का 'क' आदेश होता है। उदा० – भिक्षुकनिकायः [ भिक्षुओं का समुदाय ]। ब्राह्मणनिकायः [ ब्राह्मणों का समुदाय ]। वैयाकरणनिकायः। [ वैयाकरणों का समुदाय। नि + √चि + घञ् = अ, च् का क्, 'इ' की वृद्धि और आय् आदेश होता है। ]

अनौत्तराधर्य = ऊपर नीचे बैठना न हो—इसके ग्रहण का क्या लाभ? सूकरनिचयः। [ सूअरों का समुदाय, यहाँ नहीं होता है। ] प्राणियों का समुदाय ही विषय होता है अतः यहाँ नहीं होता है—कृताकृतसमुच्चयः, प्रमाणसमुच्चयः। कृत और अकृत का समुदाय, अनुमान आदि प्रमाणों का समुदाय। [ इनमें √चि से अच् होता है। धात्वादि चकार का ककार नहीं होता है। ]॥ ४२॥

कर्म अर्थात् क्रिया और व्यतिहार अर्थात् परस्पर करना। कर्मव्यतिहार = क्रिया का विनिमय = अदला बदली प्रतीत रहने पर, स्त्रीलिङ्ग वाच्य रहने पर धातु से णच् प्रत्यय होता है, और वह भाव में होता है। [णच् का] चकार विशेषणार्थ है—"णचः स्त्रियामञ्" (५. ४. १४) उदा० —व्यावक्रोशी [ परस्पर निन्दा करने वाला ]। व्यावलेखी [ परस्पर लिखने वाला ]। व्यावहासी [ परस्पर हँसी करने वाला ]। [ यहाँ वि और आङ् उपसर्गों के साथ √क्रुश्

**व्यावहासी वर्त्तते। स्त्रियामिति किम् ? व्यतिपाको वर्त्तते। बाधकविषयेऽपि क्वचिदिष्यते—व्यावचोरी, व्यावचर्ची। इह न भवति—व्यतीक्षा, व्यतीहा वर्त्तते। व्यात्युक्षी भवति। तदेतद्वैचित्र्यं कथं लभ्यते[1] ? 'कृत्यल्युटो बहुलम्' ( ३. ३. ११३ ) इति भवति॥**

**न्यासः**

णच्, 'णचः स्त्रियाम्' इति स्वार्थेऽञ्, टिड्ढाणञ्' इति ङीप्, 'न कर्मव्यतिहारे' इत्यैजागमप्रतिषेधः। आदिवृद्धिरेव भवति।

**व्यतिपाक इति**। तत्र पुंल्लिङ्गत्वाद् भावस्य घञ् भवति। अथ 'स्त्रियां क्तिन्' इत्यस्मिन्नेव प्रकरणे णच् कस्मान्नोक्तः, कः पुनरेवं सति गुणो भवति, द्विः स्त्रियां ग्रहणं न कर्त्तव्यं भवति ? अस्ति गुणः, वाऽसरूपविधिस्तु न स्यात्; अस्त्रियामिति प्रतिषेधात्। ततश्च क्तिनो णचा समावेशाभावाद् व्यावक्रुष्टिरिति न सिध्येत्। इह तु क्रियमाणे णच् सिध्यति; यस्माद् 'वाऽसरूपोऽस्त्रियाम्' इत्यत्र स्त्रीग्रहणस्य च स्वरितत्वात् स्त्र्यधिकारविहितप्रत्ययविषय एव 'अस्त्रियाम्' इति प्रतिषेधो विज्ञायते, न स्त्रीप्रत्ययमात्रविषये। तस्माद् यथान्यासमेव न्याय्यम्।

**व्यावचोरी, व्यावचर्चीति**। 'चुर स्तेये', 'चर्च अध्ययने'—आभ्यां चुरादिणिजन्ताभ्याम् 'ण्यासश्रन्थो युच्' इति युच् प्राप्नोति, स च विशेषविहितत्वात् परत्वाच्च बाधकः, तथापि तद्विषये तु णजेवेष्यते। **व्यतीक्षा, व्यतीहेति**। 'ईक्ष दर्शने', 'ईह चेष्टायाम्'—आभ्याम् 'गुरोश्च हलः' इत्यकार एव प्रत्ययो भवति। न णच् शक्यः कर्त्तुम्; यस्मात् क्वचिद् बाधकविषये स इष्यते, न सर्वत्र। बाधकत्वं त्वकारप्रत्ययस्य पूर्ववद्वेदितव्यम्।

**पदमञ्जरी**

सिद्धत्वात्। अस्य चकारो न क्वापि श्रूयते, णजन्ताच्च नित्यमञ् विधीयते, तत्र सतिशिष्टत्वाञ्ञित्स्वरेणैव भवितव्यम्। णचः स्त्रियामित्यत्र णास्त्रियामित्युच्यमाने 'ज्वलितिकसन्तेभ्यो णः' इत्यस्यापि ग्रहणं स्यात्। **व्यावक्रोशीत्यादि**। 'क्रुश आह्वाने', 'लिख अक्षरविन्यासे', 'हसे हसने' णजन्तादञ्। स च कृद्ग्रहणपरिभाषया सोपसर्गादपि भवति, तद्धितत्वादादिवृद्धिः। 'न य्वाभ्याम्' इत्ययं तु विधिर्न भवति; 'न कर्मव्यतिहार' इति प्रतिषेधात्। 'स्त्रियां क्तिन्' इत्यत्र प्रकरण एतन्नोक्तम्—वाऽसरूपविधिर्यथा स्यात्, तेन व्यावक्रुष्टिरिति क्तिन्नपि भवति। **व्यावचोरीत्यत्र** 'ण्यासश्रन्थो युच्' इति युच् प्राप्नोति, क्तिनोऽपवादः, तथाऽयमपि णच् येन नाप्राप्तिन्यायेन क्तिन एवापवादः, तत्रापवादविप्रतिषेधाद्युचि प्राप्तेऽयमेव णजिष्यते। **व्यतीक्षा, व्यतीहेति**। अत्र क्तिनपवादः 'गुरोश्च हलः' इत्यकारः एवेष्यते। **व्यात्युक्षीति** 'उक्ष सेचने', अत्राकारविषयेऽप्ययमेवेष्यते। **तदेतद्वैचित्र्यं कथं भवतीति**। न कथञ्चिदिति भावः। **कृत्यल्युटो बहुलमिति**। एवंविधं वैचित्र्यं कर्तुं बहुलग्रहणमेव भवतीति भावः॥ ४३॥

**भावबोधिनी**

धातु से णच् = अ प्रत्यय, उपधागुण, उपसर्ग के इ का यण्—व्यावक्रोश। "णचः स्त्रियामञ्" ५।४।१४ से अञ् प्रत्यय के बाद 'टिड्ढाणञ्' ४।१।१५ से ङीप् होता है। "यस्येति च" ६।४।१४८ से अ का लोप हो जाने पर व्यावक्रोशी रूप सिद्ध होता है। यही प्रक्रिया अन्य शब्दों में भी समझनी चाहिये। ]

स्त्रियाम्—इसके उल्लेख का क्या फल है ? व्यतिपाकः वर्तते [ यहाँ भावप्रत्यय पुल्लिङ्ग में है ]।

बाधक विषय में भी कहीं-कहीं प्रयोग इष्ट है - व्यावचोरी, व्यावचर्ची। [ इनमें √चुर और √चर्च धातुओं से स्वार्थिक चुरादि णिच् होता है। अतः 'ण्यासश्रन्थो युच्' ( ३।३।१०७ ) से युच् प्राप्त होता है। वह बाधक है, तो भी इसकी प्रवृत्ति होती है। प्रक्रिया पूर्ववत् ही समझनी चाहिये ] यहाँ नहीं होता है—व्यतीक्षा, व्यतीहा वर्तते [ वि + अति + √ईक्ष् और वि + अति + √ईह् में 'गुरोश्च हलः' ( ३।३।१०३ ) से 'अ' प्रत्यय ही होता है। ] व्यात्युक्षी

---

१. भवतीति पदमञ्जरीसम्मतः पाठः।

## १००१. अभिविधौ भाव इनुण् ॥ ४४ ॥ ( ३२१६ )

**अभिविधिः = अभिव्याप्तिः, क्रियागुणाभ्यां कार्त्स्न्येन संबन्धः। अभिविधौ गम्यमाने धातोर्भावे इनुण् भवति। सांकूटिनम्। सांराविणम्। सान्द्राविणं वर्त्तते। अभिविधाविति किम्? संकोटः। संरावः। संद्रावः।**

**'भावे' इति वर्तमाने पुनर्भावग्रहणं वाऽसरूपनिरासार्थम्, तेन घञ् न भवति। ल्युटा तु समावेश**

न्यासः

व्यात्युक्षीति। 'उक्ष सेचने'। अत्र बाधकस्याप्यकारस्य विषये णजेव भवति। **तदेतद् वैचित्र्यं कथं लभ्यत इति।** न कथञ्चित्। तल्लाभहेतोरभावादिति भावः। **'कृत्यल्युटो बहुलम्' इत्यनेन।** अतो हेतोर्वैचित्र्यमेतल्लभ्यत इति दर्शयति ॥ ४३ ॥

**अभिविधौ भाव इनुण्॥ सांकूटिनमिति।** 'कूट दाहे', 'अणिनुणः' इतीनुणन्तात् स्वार्थिकोऽण्। 'इनण्यनपत्ये' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपो न भवति।

**संराव इति।** 'उपसर्गे रुवः' इति घञ्। **संद्राव इति।** अत्रापि 'समि युद्रुदुवः' इति।

**ननु च** भाव इति वर्त्तत एव, तत् किमर्थं पुनस्तद्ग्रहणमित्याह—**भावे इति। वर्तमान इत्यादि।** भावग्रहणमिहातिरिच्यते, तदतिरिच्यमानं वाऽसरूपनिरासार्थं विज्ञायते। तेन क्तेन सहेनुणः समावेशो न भवति। ननु च कारक इत्यपि वर्त्तते, ततस्तन्निवृत्त्यर्थं भावग्रहणं कस्मान्न भवति? एवं मन्यते—भावे कारक इति द्वये प्रकृतेऽपि प्रयोगदर्शनवशाद् व्यवस्था भवति यथा णचः। स हि द्वयेऽपि प्रकृते लक्ष्यदर्शनानुरोधात् पुनर्ग्रहण-

पदमञ्जरी

**अभिविधौ भाव इनुण्॥ क्रियागुणाभ्यामिति।** अभिविधिस्वरूपकथनमेतत्, इह तु धातोः प्रत्ययविधानात् क्रियाविषय एवाभिविधिर्गृह्यते। **सांकूटिनमिति।** 'कूट दाहे' दीर्घोपधादिनुण्, 'अणिनुणः' इतीनुणन्तात् स्वार्थिकोऽण् प्रत्ययः, स च पूर्ववत्सगतिकारकाद्भवति, 'इनण्यनपत्ये' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपाभावः। समन्ताद्दाह इत्यर्थः, संशब्दोऽभिविधिद्योतकः। **सांराविणमिति।** 'उपसर्गे रुवः' इति घञ् उपसर्गान्तरेऽनभिविधौ चरितार्थः। **संराव इति।** अत्र संशब्दः पूजायाम्। क्वचित्सन्द्राव इति प्रत्युदाहरणं पठ्यते, तदयुक्तम्; 'समि युद्रुदुवः' इत्यस्यानवकाशात्। ननु च 'भावे कारके' इति द्वयेऽपि प्रकृते शब्द-

भावबोधिनी

होता है। [ वि + अति + √उक्ष् यहाँ णच् ही होता है, और अञ् के बाद ङीप् होता है। ] कहीं होता है, कहीं नहीं होता है—] यह वैचित्र्य कैसे ज्ञात होता है? 'कृत्यल्युटो बहुलम्' ( ३।३।११३ ) इससे 'बहुल' के बल से सब होता है ॥ ४३ ॥

अभिविधि = अभिव्याप्ति, सभी ओर से व्याप्त करना = क्रिया या गुण के द्वारा पूर्णरूप से सम्बन्ध। अभिविधि प्रतीयमान रहने पर धातु से भाव अर्थ में इनुण् प्रत्यय होता है। उदा०—सांकूटिनम् [ सभी ओर से जलाना ] सांराविणम् [ सभी ओर से शब्द होना ], सान्द्राविणम् [ सभी ओर से भागना ]।

[ सम् उपसर्गपूर्वक दाहार्थक कूट धातु से इनुण् = इन् प्रत्यय और आदिवृद्धि करने पर सांकूटिन् बनता है। 'अणिनुणः' ५।४।१५ से स्वार्थिक अण् प्रत्यय और प्रकृतिभाव के कारण टिलोप नहीं होता है। इसी प्रकार सम्पूर्वक रु और द्रु धातु से भी समझना चाहिये। ]

अभिविधि में—इसका क्या फल है? संकोटः। संरावः। सन्द्रावः। [ इनमें घञ् ही प्रत्यय होता है। ]

'भावे' इसकी अनुवृत्ति रहने पर भी सूत्र में जो दुबारा 'भावे' शब्द का ग्रहण किया गया है वह 'वाऽसरूप' ( ३।३।६४ ) को रोकने के लिये है अर्थात् विकल्प नहीं होता है, इस कारण घञ् प्रत्यय नहीं होता है। परन्तु ल्युट्

इष्यते—संकूटनं वर्त्तते। तत्कथम् ? 'कृत्यल्युटो बहुलम्' ( ३. ३. ११३ ) इति ॥

## १००२. आक्रोशेऽवन्योर्ग्रहः ॥ ४५ ॥ ( ३२२० )

दृष्टानुवृत्तिसामर्थ्याद् घञनुवर्त्तते, नानन्तर इनुण्। 'अव', नि'—इत्येतयोरुपपदयोर्ग्रहेर्धातोर्घञ् प्रत्ययो भवति, आक्रोशे गम्यमाने। आक्रोशः=शपनम्। अवग्राहो हन्त ते वृषल! भूयात्। निग्राहो हन्त ते वृषल! भूयात्। आक्रोशे इति किम् ? अवग्रहः पदस्य। निग्रहश्चोरस्य ॥

**न्यासः**

मन्तरेणापि यथा भाव एव विज्ञायते न कारके, तथात्रेनुणपि भाव एव विज्ञास्यते। तस्माद्वाऽसरूपविधिनिरासार्थमेव पुनर्भावग्रहणं युक्तमिति। यद्येवम्, तर्हि यथा घञेनुणः समावेशो न भवति तथा ल्युटापि न स्यादित्यत आह—**लुटा त्वित्यादि**। गतार्थम्। इनुणो णकारो वृद्ध्यर्थः। उकार उच्चारणार्थः ॥ ४४ ॥

**आक्रोशेऽवन्योर्ग्रहः** ॥ 'ग्रहवृद' इत्यादिना प्राप्ते वचनम्। **दृष्टानुवृत्तिसामर्थ्यादिति**। प्रयोगोपस्थानेन घञोऽनुवृत्तिसामर्थ्यं दृष्टम्, इनुणस्तु कल्पयितव्यम्। दृष्टसामर्थ्ययोश्च (?) सन्निधौ दृष्टसामर्थ्यग्रहणं न्याय्यम्। अतो घञेवानुवर्त्तत इत्येके। एवं तु 'ग्रहवृद' इत्यादावपि सूत्रे घञेवानुवर्त्तते, नाप्। तस्मादन्यथा व्याख्यायते—दृष्टमनुवृत्तिसामर्थ्यमधिकृतस्य यत्र तद् दृष्टानुवृत्तिसामर्थ्यम्, तत् पुनः स्वरितत्वम्। ततो हि शास्त्रेऽधिकृतस्य शब्दस्यानुवृत्तौ सामर्थ्यं दृश्यते। तदेतदुक्तं भवति—घञ एव स्वरितत्वं प्रतिज्ञायते, नेनुणः। तस्मात् स्वरितत्वाद् घञेवानु वर्त्तते, नेनुणिति ॥ ४५ ॥

**पदमञ्जरी**

स्वाभाव्यात् पूर्ववत्कारके न भविष्यति, तत् किं भावग्रहणेन ? तत्राह—**भाव इति वर्तमान इति**। तेन घञ्, 'नपुंसके भावे क्तः' इति क्तश्च न भवति। **ल्युटा त्वित्यादि**। गतार्थम्। स्वभावतश्चेदमिनुणन्तं नपुंसकलिङ्गम्। ४४ ॥

**आक्रोशेऽवन्योर्ग्रहः** ॥ 'ग्रहवृदृनिश्चिगमश्च' इत्यपि प्राप्तेऽयमारम्भः। **दृष्टानुवृत्तिसामर्थ्यादिति**। दृष्टमनुवृत्तिसामर्थ्यं यस्येति बहुव्रीहौ 'द्व्येकयोः' इतिवद्भावप्रत्ययमन्तरेणापि भावप्रधानो निर्देशो दृष्टानुवृत्तिसामर्थ्यत्वादित्यर्थः। यद्वा—अनुवृत्तौ सामर्थ्यमनुवृत्तिसामर्थ्यम्, ततो दृष्टशब्देन कर्मधारयः। **आक्रोशः=शपनमिति**। न क्षेपः, स्वभावतो घञन्तस्य शपनविषयत्वात्। शपनम्=अनिष्टाशंसनम्। अवग्रहः=अभिभवः। निग्रहः=बाधः। हन्तशब्दः कोपं द्योतयति। अवग्रहः=पदस्य छेदः। निग्रहः निरोधः ॥ ४५ ॥

**भावबोधिनी**

के साथ तो समावेश होता है [ दोनों होते हैं ] संकूटनं वर्तते। [ सम्+कूट्+ल्युट्=अन ] यह कैसे होता है। "कृत्यल्युटो बहुलम्" ( ३।३।११३ ) इसके बल से होता है।

**विमर्श**—'भावे' इसकी अनुवृत्ति सामान्यरूप से हो रही है। अतः दुबारा 'भावे' शब्द के उल्लेख का क्या प्रयोजन है ? 'वाऽसरूपोऽस्त्रियाम्' ( ३।१।९४ ) इसका निराकरण कराना प्रयोजन है। अतः दूसरे असरूप प्रत्ययों का निरास हो जाता है। फलस्वरूप घञ् और क्त प्रत्यय नहीं होते हैं। परन्तु बहुलग्रहण के सामर्थ्य से ल्युट् का निरास नहीं होता है। अतः इनुण् और ल्युट् दोनों प्रत्ययों के रूप होते हैं। इनुण्-प्रत्ययान्तशब्द नपुंसक-लिङ्ग में होता है ॥ ४४ ॥

जिसकी अनुवृत्ति का सामर्थ्य देखा गया है ऐसे घञ् प्रत्यय की ही अनुवृत्ति होती है न कि अव्यवहित पूर्ववर्ती इनुण् की। अव तथा नि—इनके उपपद रहने पर √ग्रह् धातु से घञ् प्रत्यय होता है आक्रोश गम्यमान रहने पर [ कर्तृभिन्नकारक में संज्ञाविषय में तथा भाव में ]। आक्रोश=शाप देना। उदा०—अवग्राहो हन्त ते वृषल! भूयात्। निग्राहो हन्त ते वृषल! भूयात् [ अरे शूद्र! तेरा अमंगल हो जाय। अरे शूद्र! तेरा बाध हो जाय ]।

## १००३. प्रे लिप्सायाम् ॥ ४६ ॥ ( ३२२१ )

'ग्रहः' इत्येव। प्रशब्द उपपदे ग्रहेर्धातोर्घञ् प्रत्ययो भवति लिप्सायां गम्यमानायाम्। पात्रप्रग्राहेण चरति भिक्षुः पिण्डार्थी। स्रुवग्राहेण चरति द्विजो दक्षिणार्थी। लिप्सायामिति किम्? प्रग्रहो देवदत्तस्य॥

## १००४. परौ यज्ञे ॥ ४७ ॥ ( ३२२२ )

परिशब्द उपपदे ग्रहेर्घञ् प्रत्ययो भवति। यज्ञविषयश्चेत्प्रत्ययान्ताभिधेयः स्यात्। उत्तरपरिग्राहः, अधरपरिग्राहः। यज्ञे इति किम्? परिग्रहो देवदत्तस्य॥

## १००५. नौ वृ धान्ये ॥ ४८ ॥ ( ३२२३ )

### न्यासः

**प्रे लिप्सायाम्॥ ४६॥ परौ यज्ञे॥ ४७॥ नौ वृ धान्ये॥ अपोऽपवाद इति।** 'ग्रहवृदृ' इत्यादिना प्राप्तस्य। **नीवारा नाम व्रीहयो भवन्तीति।** एतेन यद्यपि धान्यशब्देन सामान्यवाचिनायं व्युत्पाद्यते, तथापि प्रत्ययान्तं शब्दशक्तिस्वाभाव्याद् धान्यविशेष एव वर्त्तत इति दर्शयति। 'उपसर्गस्य घञि' इति दीर्घत्वम्।

### पदमञ्जरी

**प्रे लिप्सायाम्॥** लब्धुमिच्छा=लिप्सा। **पात्रप्रग्राहेण चरतीति।** भिक्षापात्रोपादानेन गृहीतपात्र इति यावत्। स्रुवग्रहणं तु दक्षिणार्थिनो लिङ्गम्, दक्षिणहोमस्य स्रुवसाधनत्वात्। **प्रग्रहो देवदत्तस्येति।** प्रग्रहो मदः, प्रकृष्टो वाऽभिनिवेशः॥ ४६॥

**परौ यज्ञे॥ उत्तरपरिग्राह इति।** भावे घञ्। वेदेः स्फ्येन स्वीकरणं परिग्राहः, ततः कर्मधारयः। क्वचिदुत्तरः **परिग्राह** इत्यसमास एव पठ्यते॥ ४७॥

**नौ वृ धान्ये॥ नीवारा नाम व्रीहय इति।** धान्यसामान्योक्तावपि धान्यविशेषरूपव्रीहिविशेषे स्वभावतो

### भावबोधिनी

आक्रोश में—इसका क्या प्रयोजन है? अवग्रहः पदस्य [ पैर का कटना ]। निग्रहः चौरस्य। [ चोर का पकड़ा जाना, यहाँ आक्रोश नहीं है, यथार्थकथन है अतः घञ् न होकर अप् होता है ]॥ ४५॥

√ग्रह की ही अनुवृत्ति होती है। प्र शब्द उपपद रहने पर √ग्रह धातु से घञ् प्रत्यय होता है लिप्सा [ प्राप्त करने की इच्छा ] गम्यमान रहने पर [ कर्तृभिन्नकारक में संज्ञाविषय में और भाव में ]। उदा०—पात्रप्रग्राहेण चरति भिक्षुः पिण्डार्थी। [ पिण्ड=अन्नादि चाहने वाला भिक्षुक अन्नपात्र लिए हुये घूम रहा है। ] स्रुवप्रग्राहेण चरति द्विजो दक्षिणार्थी। [ दक्षिणा का इच्छुक ब्राह्मण स्रुवा लिये हुए घूमता है। ] [ प्र+√ग्रह+घञ्=अ, उपधावृद्धि—प्रग्राह, पात्र और स्रुव के साथ समास। यह अप् का अपवाद है। ]

लिप्सा में—इसका क्या फल है? प्रग्रहो देवदत्तस्य। [ देवदत्त का बहुत अहंकार या दुराग्रह। यहाँ लिप्सा अर्थ न होने से घञ् न होकर "ग्रहवृदृ०" ( ३।३।५८ ) से अप् प्रत्यय होता है॥ ४६॥

परिशब्द उपपद रहने पर √ग्रह धातु से घञ् प्रत्यय होता है, यदि प्रत्ययान्त शब्द का अर्थ यज्ञविषय होता है। उदा०—उत्तरपरिग्राहः [ स्फ्य=यज्ञीय आयुधविशेष के द्वारा दर्शपौर्णमासयागादि में उत्तरवेदी का घेरा करना=निर्माणादि ] अधरपरिग्राहः [ दक्षिण वेदी का स्वीकरण। यहाँ परि+√ग्रह्+घञ्=अ, के बाद उत्तर के साथ कर्मधारय होता है। सिद्धान्तकौमुदी में व्यस्त पाठ है। पदमंजरीकार ने व्यस्त पाठ का भी उल्लेख किया है। ]

यज्ञ में—इसका क्या फल है? परिग्रहो देवदत्तस्य। [ यहाँ अप् होता है ]॥ ४७॥

'वृ' इससे वृङ् और वृञ् इन दोनों का सामान्यरूप से ग्रहण है। नि शब्द उपपद रहने पर √वृ धातु से घञ् प्रत्यय, धान्यविशेष अभिधेय रहने पर [ कर्तृभिन्नकारक में संज्ञाविषय में और भाव में ] होता है। यह [ "ग्रह-

**'वृ' इति वृङ्वृञोः सामान्येन ग्रहणम्। निशब्दे उपपदे 'वृ' इत्येतस्माद्धातोर्धान्यविशेषेऽभिधेये घञ् प्रत्ययो भवति। अपोऽपवादः। नीवारा नाम व्रीहयो भवन्ति। धान्ये इति किम्? निवरा कन्या॥**

## १००६. उदि श्रयतियौतिपूद्रुवः ॥ ४९ ॥ ( ३२२४ )

**उच्छब्दे उपपदे श्रयत्यादिभ्यो घञ् प्रत्ययो भवति। अजपोरपवादः। उच्छ्रायः। उद्यावः। उत्पावः। उद्द्रावः। कथं 'पतनान्ताः समुच्छ्रयाः'? वक्ष्यमाणं विभाषाग्रहणमिह सिंहावलोकितन्यायेन सम्बध्यते॥**

### न्यासः

**निवरेति**। निव्रियत इति निवरा। स्वभावेनाबन्तमपि स्त्रियां वर्त्तते। एवञ्च यद् घञबन्तो घाजन्तश्चेति लिङ्गाधिकारेऽबन्तस्य पुंल्लिङ्गताप्रतिपादनं तत् प्रायिकं वेदितव्यम्॥ ४८॥

**उदि श्रयतियौतिपूद्रुवः॥ अजपोरपवाद इति**। श्रयतेरिवर्णान्तत्वादचोऽपवादः, यौतिप्रभृतीनां तूवर्णान्तत्वादपः। **कथं पतनान्ताः समुच्छ्रया इतीति**। उच्छब्दोपपदत्वाद् घञात्र भवितव्यमिति भावः। **वक्ष्यमाण-मित्यादि** परिहारः। यदि तर्हि विभाषाग्रहणमिह सम्बध्यते, यौतिप्रभृतीनामपि विकल्पेन प्रत्ययः प्रसज्यते? व्यवस्थितविभाषया न प्रसज्यत इत्यदोषः॥ ४९॥

### पदमञ्जरी

घञन्तस्य वृत्तिरिति दर्शयति। अत्र कर्मणि घञ्, पूर्ववदुपसर्गस्य दीर्घः। **निवरा कन्येति**। 'ग्रहवृदृनिश्चिगमश्च' इत्यप् कर्मण्येव। ननु च क्तिना स्त्रियां भवितव्यम्, 'अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेन' इति वचनात्? सत्यम्; 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् क्वचित् क्तिनादिविषयेऽप्यप् भवति, प्रवरा सेना, प्रवरा गौरितिवत्। एवं च 'घञजबन्ताः पुंसि' इति प्रायिकं द्रष्टव्यम्॥ ४८॥

**उदि श्रयतियौतिपूद्रुवः॥ वक्ष्यमाणमिति**। एवं च यौतिप्रभृतिभ्यो विकल्पः प्राप्नोति। यदि नेष्यते, 'कृत्यल्युटो बहुलम्' इति न भविष्यति॥ अन्ये तु भाष्येऽनुक्तत्वाद् असाधुरेवायं प्रयोगः। प्रदर्शितस्तु भारत-प्रयोग आर्षत्वेन निर्वाह्य इत्याहुः॥ ४९॥

### भावबोधिनी

वृदृनिश्चिगमश्च" ३।३।५८ से प्राप्त ] अप् प्रत्यय का अपवाद है। उदा०—नीवारा नाम व्रीहयो भवन्ति। [ नीवार नामक धान्य होते हैं। नि+वृ+घञ्=अ, ऋ को वृद्धि, रपर "उपसर्गस्य घञ्यमनुष्ये" ६।३।१२२ से नि का दीर्घ होता है। धान्यविषय में—इसके ग्रहण का क्या प्रयोजन है? निवरा कन्या। [ अत्यन्त वरणीय कन्या। यहाँ घञ् न होकर अप् होता है। और यह निव्रियते या सा—इस कर्म अर्थ में है।

विमर्श—'निवरा कन्या, इसमें "स्त्रियां क्तिन्" ३।३।९४ होना चाहिये था क्योंकि—

"अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधने।"

ऐसा नियम है? यह ठीक है परन्तु "कृत्यल्युटो बहुलम्" ३।३।११३ के आधार पर क्तिनादि के विषय में भी अप् होता है, जैसे 'प्रवरा सेना, प्रवरा गौः' आदि। इससे यह भी सिद्ध होता है कि 'घञबन्तः पुंसि" ( लिङ्गानु० ३६ ) यह नियम प्रायिक है॥ ४८॥

उत् शब्द उपपद रहने पर √श्रि, √यु, √पू और √द्रु—इन धातुओं से [ कर्तृभिन्न कारक में संज्ञाविषय में और भाव में ] घञ् प्रत्यय होता है। यह [ श्रि में 'एरच्' ३।३।५६ से प्राप्त ] अच् का और [ यु, पू, द्रु में 'ऋदोरप्' ३।३।५७ से प्राप्त ] अप् का अपवाद है। उदा०—उच्छ्रायः [ ऊँचाई। उत्+श्रि+घञ्=अ, 'इ' की वृद्धि, आयादेश, श् का छ्, और त् का च्=श्चुत्व ]। उद्यावः [ एकत्रित करना। उत्+यु+घञ्=अ, वृद्धि, आय् आदेश, जश्त्व ]। उत्पावः [ यज्ञ के पात्रों का संस्कारविशेष ]। उद्द्रावः [ भागना ]।

१००७. विभाषाऽऽङि रुप्लुवोः ॥ ५० ॥ ( ३२२५ )

आङि उपपदे रौतेः प्लवतेश्च विभाषा घञ् प्रत्ययो भवति । आरावः, आरवः । आप्लावः, आप्लवः ।

१००८. अवे ग्रहो वर्षप्रतिबन्धे ॥ ५१ ॥ ( ३२२६ )

'विभाषा' इति वर्त्तते । अवे उपपदे ग्रहेर्धातोर्घञ् प्रत्ययो भवति विभाषा वर्षप्रतिबन्धेऽभिधेये । प्राप्तकालस्य वर्षस्य कुतश्चिन्निमित्तादभावः = वर्षप्रतिबन्धः । अवग्राहो देवस्य । अवग्रहो देवस्य । वर्षप्रतिबन्धे इति किम् ? अवग्रहः पदस्य ॥

१००९. प्रे वणिजाम् ॥ ५२ ॥ ( ३२२७ )

**न्यासः**

विभाषाऽऽङि रुप्लुवोः ॥ रौतेः 'उपसर्गे रुवः' इति नित्यं घञि प्राप्ते प्लवतेरप्युवर्णान्तत्वादपि सूत्रारम्भः ॥ ५० ॥

अवे ग्रहो वर्षप्रतिबन्धे ॥ 'ग्रहवृदृ' इत्यादिनापि प्राप्ते तदपवादः, पक्षे घञभिधीयते । कुतश्चिन्निमित्तादिति । सत्त्वकर्मापराधाधिकारात् ॥ ५१ ॥

प्रे वणिजाम् ॥ वणिक्सम्बन्धेन चेत्यादि । तुलासूत्रं हि प्रायेण वणिजा सम्बद्धम् = सहचरम्, ततः

**पदमञ्जरी**

अवे ग्रहो वर्षप्रतिबन्धे ॥ कुतश्चिन्निमित्तादिति । 'सत्त्वकर्मापराधादेरनावृष्टिर्भवेन्नृणाम्' । सत्त्वशब्दः प्राणिवचनः, कर्मापराधः = कर्मविषयो दोषः, विहितानाचरणप्रतिषिद्धाचरणनिमित्तं पापं सत्त्वकर्मापराधः । आदिशब्देन 'तयोर्मध्यगतो भानुः समुद्रमपि शोषयेत्' ( बृ० सं० ) इत्यादेर्ग्रहणम् ।

अवग्राहो देवस्येति । देवकर्तृको वर्षाभाव इत्यर्थः ॥ ५१ ॥

**भावबोधिनी**

'पतनान्ताः समुच्छ्रयाः' [ अति उत्थान का परिणाम पतन है ] यह कैसे होता है ? अग्रिमसूत्र में कहा जाने वाला 'विभाषा' शब्द 'सिंहावलोकित' न्याय से यहाँ भी सम्बद्ध हो जाता है । [ और इसे व्यवस्थित विभाषा मानना चाहिये । अतः √यु आदि से नहीं होता है । सिद्धान्तकौमुदीकार ने 'कृत्यल्युटो बहुलम्' ३।३।११३ से निर्वाह किया है । ] ॥ ४९ ॥

आङ् उपपद रहने पर √रु और √प्लु धातुओं से विकल्प से [ कर्तृभिन्न कारक में संज्ञाविषय में और भावमें ] घञ् प्रत्यय होता है । उदा०—आरावः, आरवः । [ तेज आवाज ] आप्लावः, आप्लवः । [ स्नान अथवा पानी में डुबकी लगाना । यहाँ घञ् वैकल्पिक है । अतः पक्ष में 'ऋदोरप्' ३।३।५७ से अप् होता है । इस प्रकार दो रूप होते हैं । आङ् + रु+घञ् = अ, वृद्धि आवादेश—आरावः । पक्ष में आङ्+रु + अप् = अ, गुण, अव् आदेश—आरवः । इसी प्रकार आ + प्लु+घञ् = अ, आ + प्लु+अप् = अ होते हैं ] ॥ ५० ॥

'विभाषा' इसकी अनुवृत्ति होती है । 'अव' उपपद रहने पर √ग्रह धातु से विकल्प से घञ् प्रत्यय होता है यदि वर्षा का प्रतिबन्ध अभिधेय हो [ कर्तृभिन्न कारक में संज्ञाविषय में भाव में—इसका यहाँ भी सम्बन्ध है ] । जिस वर्षा का समय प्राप्त हो चुका है, उसका किसी कारण से प्रतिबन्ध=अभाव है । उदा०—अवग्राहो देवस्य । अवग्रहो देवस्य । देव = इन्द्र = पानी का न बरसना । अव+ग्रह+घञ्, उपधावृद्धि, पक्ष में अव+ग्रह+अप् । ]

वर्षप्रतिबन्ध = वर्षा का प्रतिबन्ध = अभाव अर्थ रहने पर—इसका क्या लाभ है ? अवग्रहः पदस्य [ पैर का छेद यहाँ केवल अप् होता है ।] ॥ ५१ ॥

√ग्रह् इसकी अनुवृत्ति होती है । यह विकल्प से ही होता है । प्र शब्द उपपद रहने पर √ग्रह् धातु से विकल्प से घञ् प्रत्यय होता है, यदि प्रत्ययान्त का वाच्य अर्थ व्यापारियों से सम्बद्ध हो तो [ कर्तृभिन्नकारक में संज्ञाविषय में

'ग्रहः' इति वर्त्तते। 'विभाषा' इत्येव। प्रशब्दे उपपदे ग्रहेर्धातोर्विभाषा घञ् प्रत्ययो भवति, प्रत्ययान्तवाच्यश्चेद्वणिजां सम्बन्धी भवति। वणिक्सम्बन्धेन च तुलासूत्रं लक्ष्यते, न तु वणिजस्तन्त्रम्। तुला प्रगृह्यते येन सूत्रेण स शब्दार्थः। तुलाप्रग्राहेण चरति, तुलाप्रग्रहेण चरति वणिक् अन्यो वा।

वणिजामिति किम्? प्रग्रहो देवदत्तस्य॥

१०१०. रश्मौ च॥ ५३॥ (३२२८)

'ग्रहः', 'विभाषा', 'प्र' इति वर्त्तते। प्रशब्द उपपदे ग्रहेर्धातोर्विभाषा घञ् प्रत्ययो भवति, रश्मिश्चेत् प्रत्ययान्तेनाभिधीयते। रथादियुक्तानामश्वादीनां संयमनार्था रज्जुः, सा रश्मिरिह गृह्यते। प्रग्रहः, प्रग्राहः॥

न्यासः

साहचर्याद् वणिक्सम्बन्धेन तदुपलक्ष्यते। नात्र वणिजां प्राधान्यम्। तस्मात् तदेव तु तुलादिसूत्रं तदन्यशब्दस्याभिधेयम्॥ ५२॥

**रश्मौ च॥ रथादियुक्तानामित्यादि।** कुतः पुनरेतल्लभ्यते, यावता रश्मिशब्दः सामान्यवचनः यथैवासावश्वादिसंयमनार्थायां रज्ज्वां वर्त्तते तथा चन्द्रार्कादिसम्बन्धिष्वपि रश्मिषु? एवं मन्यते—यथा 'नौ वृ धान्ये' इति धान्यशब्दस्य सामान्यशब्दस्यापि धान्यविशेष एव गृह्यते, प्रत्ययान्तेन शब्दशक्तिस्वाभाव्याद् धान्यविशेषस्य वाभिधानात्; तथा यद्यपि रश्मिशब्दः सामान्यवाची, तथापि प्रत्ययान्तः स्वभावाद्रज्जुविशेष एव वर्त्तते। तस्मात् तस्यैव युक्तं ग्रहणमिति॥ ५३॥

पदमञ्जरी

**प्रे वणिजाम्॥** पणन्ते=व्यवहरन्तीति वणिजः, 'पणेरिज्यादेश्च वः', 'पण व्यवहारे' इत्यस्मादिजि-प्रत्ययो भवत्यादेश्च वकारः। **वणिक्सम्बन्धेनेति।** तुलासूत्रं हि प्रायेण वणिजां भवतीति साहचर्यं लक्षणाहेतुः। **अन्यो वेति।** न तु वणिजस्तन्त्रमित्यस्येदं प्रयोजनम्॥ ५२॥

**रश्मौ च॥ रथादियुक्तानामिति।** आदिशब्देन शकटस्य ग्रहणम्। **अश्वादेरिति।** अनडुदादेरप्युप-लक्षणमेतत्। संयमनम्=नियमनम्। **सा रश्मिरिह गृह्यत इति।** रश्मिशब्दः पुंलिङ्गः, सेति रज्जुपरामर्शात् स्त्रीलिङ्गता। चन्द्रादिसम्बधिनां तु रश्मीनामग्रहणम्; अनभिधानात्। इह तु बहुकृत्वो ग्रहिरुपादीयते, सकृदेव तु कर्त्तुं शक्यम्; कथम्? एवं वक्ष्यामि 'उदि ग्रहः, समि मुष्टौ, आक्रोशेऽवन्यो प्रे लिप्सायां, परौ यज्ञेऽवे

भावबोधिनी

और भाव में]। वणिक् के सम्बन्ध से यहाँ तुलासूत्र (तराजू की रस्सी) लक्षित होता है न कि वाणिकों के लिये यह तन्त्र=सूत्र है। तराजू जिस सूत्र=रस्सी के द्वारा पकड़ी जाती है, वह (यहाँ) शब्दार्थ [समझना चाहिये]। उदा०—तुलाप्रग्राहेण चरति, तुलाप्रग्रहेण चरति वणिक् अन्यो वा। [बनिया अथवा कोई दूसरा व्यक्ति तराजू पकड़े हुये घूमता है।]

वणिजाम्=बनियों का—इसके ग्रहण का क्या लाभ है? प्रग्रहः देवदत्तस्य [देवदत्त का उत्कृष्ट मद। यहाँ केवल अप् प्रत्यय होता है।]

विमर्श—प्रस्तुत सूत्र में 'वणिजाम्' यहाँ षष्ठी है। अतः किसी सम्बन्धी का ज्ञान आवश्यक है। साहचर्य के कारण 'तराजू की रस्सी' ही ली जाती है। अतः यह सूत्र वणिक् के लिये अनुशासन नहीं करता है। जो कोई भी वणिक् सम्बद्ध तुलासूत्र लिये रहता है उस अवस्था में यह प्रयोग होता है। इसीलिये काशिकाकार ने उदाहरण में 'वणिक् अन्यो वा' ऐसा उल्लेख किया है॥ ५२॥

'ग्रहः', 'विभाषा' और 'प्र' इन तीनों की अनुवृत्ति होती है। यदि प्रत्ययान्त निष्पन्न शब्द के द्वारा रश्मि [घोड़े की लगाम] अर्थ कहा जाता है तो 'प्र' शब्द उपपद रहते √ग्रह् धातु से विकल्प से घञ् प्रत्यय [कर्तृभिन्न

**१०११. वृणोतेराच्छादने ॥ ५४ ॥ ( ३२२९ )**

**'विभाषा' 'प्र' इति वर्त्तते। प्रशब्द उपपदे वृणोतेर्धातोर्विभाषा घञ् प्रत्ययो भवति, प्रत्ययान्तेन चेदाच्छादनविशेष उच्यते। प्रावारः, प्रवरः। आच्छादन इति किम्? प्रवरा गौः॥**

**१०१२. परौ भुवोऽवज्ञाने ॥ ५५ ॥ ( ३२३० )**

**'विभाषा' इत्येव। परिशब्द उपपदे भवतेर्धातोर्विभाषा घञ् प्रत्ययो भवति, अवज्ञाने गम्यमाने। अवज्ञानम् = असत्कारः। परिभावः, परिभवः। अवज्ञान इति किम्? सर्वतो भवनं = परिभवः॥**

**१०१३. एरच् ॥ ५६ ॥ ( ३२३१ )**

**न्यासः**

**वृणोतेराच्छादने॥ वृणोतेरिति।** श्नुविकरणेन निर्देशो वृङो निवृत्त्यर्थः। अत्रापि सामान्यवाचित्वे प्राग्वदाच्छादनशब्दादन्यत्र न। पक्षे 'ग्रहवृद्द' इत्यादिनाब् भवति॥ ५४॥

**परौ भुवोऽवज्ञाने॥ ५५॥ एरच्॥ चकारो विशेषणार्थ इति।** विनापि तेन थाथादिसूत्रेऽप्रत्ययादित्य-

**पदमञ्जरी**

वर्षप्रतिबन्धे, विभाषा प्रे वणिजाम्' इत्यादि, 'परौ भुवोऽवज्ञाने' इत्यास्यानन्तरमाङि रुप्लुवोरिति? तथा तु न कृतमित्येव॥ ५३॥

**वृणोतेराच्छादने॥** अत्राप्याच्छादन इति सामान्येनोक्तावपि पूर्ववद्विशेषप्रतिपत्तिरित्याह—**प्रत्ययान्तेन चेदिति। प्रावार इति।** पूर्ववद्दीर्घः। **प्रवरा गौरिति।** प्रशस्तेत्यर्थः॥ ५४॥ ५५॥

**एरच्॥ चकारो विशेषणार्थ इति।** विना हि तेन थाथादिसूत्रेऽप्रत्ययादित्यस्यापि ग्रहणं स्यात्।

**भावबोधिनी**

कारक में संज्ञाविषय में और भाव में ] होता है। रथ आदि वाहनों में लगे हुये घोड़े आदि का नियन्त्रण करने के लिये जो रस्सी है वह यहाँ 'रश्मि' शब्द से ली जाती है चन्द्र या सूर्य की किरणें नहीं। उदा०—प्रग्रहः, प्रग्राहः। [ घोड़े की लगाम। प्र + √ग्रह् + घञ्=अ, उपधावृद्धि, पक्ष में-प्र + √ग्रह् + अप् ]॥ ५३॥

'विभाषा' और 'प्र' इनकी अनुवृत्ति होती है। यदि प्रत्ययान्त [ निष्पन्न ] शब्द के द्वारा आच्छादनविशेष = ओढ़नेवाली चादर आदि अर्थ का कथन होता है तो 'प्र' शब्द उपपद रहते √वृ धातु से विकल्प से घञ् प्रत्यय [ कर्तृभिन्न कारक में संज्ञाविषय में और भाव में ] होता है। उदा०—प्रावारः, प्रवरः [ चादर, दुपट्टा। प्र + वृ + घञ् = अ, ऋ की वृद्धि रपर आर्—प्रवार इस अवस्था में "उपसर्गस्य घञ्यमनुष्ये बहुलम्" ६। ३। १२२ से उपसर्ग का दीर्घ—प्रावार। पक्ष में-प्र + वृ + अप् = अ, गुण, रपर—प्रवर दोनों का अर्थ समान ही हैं। आच्छादन अर्थ में—इसका क्या फल है? प्रवरा गौः। [ यहाँ उत्कृष्ट अर्थ है और कर्म में अप् प्रत्यय होता है। ]॥ ५४॥

विभाषा = विकल्प की ही अनुवृत्ति होती है। अवज्ञान=असम्मान अर्थ गम्यमान रहने पर 'परि' शब्द उपपद रहने पर √भू धातु से विकल्प से घञ् प्रत्यय [ कर्तृभिन्न कारक में संज्ञाविषय में और भाव में ] होता है। अवज्ञान = असत्कार। उदा०—परिभावः, परिभवः। [ असम्मान, परि + भू + घञ् = अ, ऊ की वृद्धि और आव् आदेश—परि + भू + आव् + अ, पक्ष में—अप् होने पर गुण और अव् आदेश होता है। ]

अवज्ञान = असत्कार अर्थ रहने पर—इसका क्या फल है? सर्वतः भवनम् = परिभवः। [ सभी ओर से होना—यह अर्थ है। अतः घञ् न होकर केवल अप् ही होता है ]॥ ५५॥

'भावे', 'अकर्तरि च कारके' इन प्रस्तुतों की 'कृत्यल्युटो बहुलम्' ३।३।११३ तक अनुवृत्ति होती है। भाव में और कर्तृभिन्न कारक में संज्ञाविषय में इकारान्त धातु से अच् प्रत्यय होता है। यह घञ् का अपवाद है। चकार

'भावे' (३.३.१८) 'अकर्त्तरि च कारके' (३.३.१९) इति प्रकृतमनुवर्त्तते यावत् 'कृत्यल्युटो बहुलम्' (३.३.११३) इति। इवर्णान्ताद्धातोर्भावे अकर्त्तरि च कारके संज्ञायाम् अच् प्रत्ययो भवति। घञोऽपवादः। चकारो विशेषणार्थः—'अन्तः' (६.२.१४३) 'थाऽथघञ्क्ताजबित्रकाणाम्' (६.२.१४४) इति। चयः। अयः। जयः। क्षयः। ❀ अज्विधौ भयादीनामुपसंख्यानम् ❀ (म० भा० ३.३.५६ वा० १) ❀ नपुंसके क्तादिनिवृत्त्यर्थम् ❀ (वा० २)। भयम्। वर्षम्।

❀ जवसवौ छन्दसि वक्तव्यौ ❀ (म० भा० ३.३.५६ वा० ४)। ऊर्वोरस्तु मे जवः। (पै० सं० २०.३६.७) (अयं) पञ्चौदनसवः (पै० सं० ८.१९.३)॥

## १०१४. ॠदोरप्॥ ५७॥ (३२३२)

**ॠकारान्तेभ्य उवर्णान्तेभ्यश्च अप् प्रत्ययो भवति। घञोऽपवादः। पित्करणं स्वरार्थम्। करः। गरः। शरः। उवर्णान्तेभ्यः—यवः। स्तवः। लवः। पवः। दकारो मुखसुखार्थः। मा भूत्तादपि परस्तपरः॥**

### न्यासः

प्रत्ययस्यापि ग्रहणं स्यात्। **अज्विधौ इत्यादि**। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। प्रतिपादनं तु 'कृत्यल्युटो बहुलम्' इत्येतदाश्रित्य कर्त्तव्यम्। अन्यस्तु 'पञ्चमी भयेन' 'वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्' इति निपातनाद् भयादीनां सिद्धिमिच्छति, न चासौ युक्ता; किमिदं भयवर्षशब्दयोर्नपुंसकलिङ्गयोरुच्चारणम्? उत पुंल्लिङ्गयोः? इति सन्देहात्। **वक्तव्याविति**। व्याख्येयावित्यर्थः। व्याख्यानं तु तदेव बहुलग्रहणमाश्रित्य कर्त्तव्यम्। **जवः, सव इति**। 'जु' इत्येतस्मात् सौत्राद्धातोः, 'षुञ् अभिषवे' इत्येतस्माच्चोत्तरसूत्रेणापि प्राप्तेऽज् भवति। स्वरे विशेषः—अपि हि सत्यामाद्युदात्तं पदं स्यात्, अजन्ते सत्यन्तोदात्तत्वं भवति॥ ५६॥

**ॠदोरप्॥ पित्करणं स्वरार्थमिति**। 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तत्वं यथा स्यात्। 'ॠदोरप्' इत्यत्र ॠकारस्तपरः स्यात्। एवं सति तादपि परस्तपरः इत्युकाऽपि [इत्युवापि]? तस्य परः स्यात्। ततश्च

### पदमञ्जरी

**वर्षमिति**। 'वृषभो वर्षणादिति' भाष्यकारप्रयोगाद्वर्षणमित्यपि भवति। **जवसवाविति**। अपि प्राप्तेऽज् विधीयते। स्वरे विशेषः। एरजण्यन्तानामिति तु नास्ति वचनम्, 'कल्प्यादिभ्यः प्रतिषेधवचनम्' इत्येतदेवास्ति। कल्प्यते इति कल्पः, अर्थ्यते इत्यर्थः, मन्त्र्यते इति मन्त्रः। अचि प्रतिषिद्धे घञेव भवति॥ ५६॥

**ॠदोरप्॥ लव इति**। न च तादपि परस्तपर इति उकारस्य तपरत्वान्नात्रापा भवितव्यम्? तत्राह—**दकारो मुखसुखार्थ इति**। नायं तकारः, किं तर्हि? दकारः। एतच्च 'निरभ्योः पूल्वोः' इत्या-

### भावबोधिनी

का ग्रहण विशेषणार्थ अर्थात् विशेषित करने के लिये हैं—'अन्तः' (६।२।१४३) थाथघञ्क्ताजबित्रकाणाम्'' (६।२।१४४) [यहाँ अच् का ग्रहण है और यह अन्तोदात्त करता है।] उदा०—चयः [समूह, √चि + अच्, गुण, अयादेश]। अयः [जाना। √इ + अच्]। जयः [विजय, √जि + अच्]। क्षयः [विनाश √क्षि + अच्]।

'अच् प्रत्यय के विधान में 'भय' आदि शब्दों का उपसङ्ख्यान करना चाहिये।' यह नपुंसक में क्त आदि की निवृत्ति के लिये आवश्यक है।' उदा०—भयम्। वर्षम्। [भी + अच्, वृष् + अच्, गुणादि करने पर रूप सिद्ध होते हैं।']

* 'वेद में 'जव' और 'सव' को कहना चाहिये।' उदा०—ऊर्वोरस्तु में जवः। [जु + अच्]। पञ्चौदनसवः [सु + अच्] दोनों में अप् प्रत्यय प्राप्त है। अच् करने पर ''चितः'' ६।१।१६३ से अन्तोदात्त हो जाता है। इसी के लिये वार्तिक है]॥ ५६॥

ॠकारान्त और उकारान्त धातुओं से [कर्तृभिन्न कारक में संज्ञाविषय में और भाव में] अप् प्रत्यय होता है। घञ् का अपवाद है। पित् करना [''अनुदात्तौ सुप्पितौ'' ३।१।४ से अनुदात्त] स्वरसिद्धि के लिये है। उदा०—

१०१९. ग्रहवृदृनिश्चिगमश्च ॥ ५८ ॥( ३२३४ )

**ग्रहादिभ्यो धातुभ्योऽप् प्रत्ययो भवति। घञोऽपवादः। निश्चिनोतेस्त्वचोऽपवादः। ग्रहः। वरः। दरः। निश्चयः। गमः। निश्चिग्रहणं स्वरार्थम्** (६.२.१३९)। ॐ **वशिरण्योरुपसंख्यानम्** ॐ (म० भा० ३.३.५८ वा० ३ )। **वशः। रणः।**

**न्यासः**

'तपरस्तत्कालस्य' इति परिभाषोपस्थानादिहैव स्याद्—यवः, स्तव इति; लवः, पव इत्यत्र तु न स्यात्। दकारे तु 'अण् सवर्णान् गृह्णाति' (परि०) इति दीर्घादपि भवति। तस्मादुकारोऽयं सवर्णं गृह्णाति। अत्र च लिङ्गम्—'भुवः प्रभवः' इति निर्देशः। तपरे तु भवतेरप् न स्यात्, ततश्च 'प्रभवः' इति निर्देशो नोपपद्यते। तस्य तु दकारस्य मुखसुखार्थत्वादन्यत् प्रयोजनं न सम्भवतीत्येतत् सर्वमालोच्याह—**दकारो मुखसुखार्थ इति**॥ ५७॥

**ग्रहवृदृनिश्चिगमश्च**। 'वृ' इति वृङ्वृञोः सामान्येन ग्रहणम्। **दृ इति**। 'दृङ् आदरे'। **निश्चिनोतेस्त्वचोऽपवाद इति**। 'एरच्' इति प्राप्तस्य। अथ निश्चिग्रहणं किमर्थम्, यावता नास्मादच्यपि वा विहिते कश्चिद् विशेषोऽस्ति, तदेव हि रूपमुभयत्रापि समापद्यत इत्याह—**निश्चिग्रहणं स्वरार्थमिति**। अनुदात्तार्थमित्यर्थः। ननु च 'हस्तादाने चेरस्तेये' इति चिनोतेर्घञ् विधीयमानो न स्यात्, निष्पूर्वादपि प्राप्नोति, अतस्तद्बाधनार्थमपि निश्चिग्रहणं युक्तम्? नैतदस्ति; निष्पूर्वादपि हि चिनोतेश्चैष घञ् पूर्वविप्रतिषेधेनेष्यते। ननु च स्वरार्थमपि निश्चिग्रहणं नोपपद्यत एव, तथापि 'गतिकारकोपपदात् कृत्' इत्युत्तरपदप्रकृतिस्वरे प्राप्ते 'अन्तः,' 'थाथघञ्क्ताजबित्रकाणाम्' इत्यन्तोदात्तत्वेनैव भाव्यते। तथा चापि प्रत्ययेऽपि सत्यनुदात्तत्वेनैव भवितव्यम्?

**पदमञ्जरी**

द्यारम्भाद् विज्ञायते। मुखशब्देन ताल्वादिस्थानमुच्यते, तस्य सुखमनायासः। अचोर्हि हल्व्यवहितयोरुच्चारणे मुखस्य लाघवं भवति। असन्देहः, यस्यानुषङ्गिकं प्रयोजनम्॥ ५७॥

**ग्रहवृदृनिश्चिगमश्च**॥ **निश्चिनोतेस्त्वचोपवाद इति**। 'एरच्' इति प्राप्तस्य। यस्तु 'हस्तादाने चेरस्तेये' इति घञ् स निपूर्वादपि पूर्वविप्रतिषेधेनेष्यते, यथोक्तम्–अस्तेयार्थमिति चेत्, न, अनिष्टत्वादिति। कः पुनर्निश्चय इत्यत्राजपोर्विशेषः, यावता तदेव रूपं स एव स्वरोऽपि; थाथादिसूत्रेणोभयत्रान्तोदात्तत्वविधानादित्यत आह—**निश्चिग्रहणं स्वरार्थमिति**। निश्चिग्रहणसामर्थ्यात् थाथादिस्वरोऽत्र न प्रवर्त्तते, कृत्स्वरेण तु मध्योदात्तत्वमेव भवतीति भावः। **वशिरण्योरिति**। घञि प्राप्ते वचनम्। वशनं वशः। रणन्ति=शब्दायन्तेऽस्मिन्निति रणः=संग्रामः।

**भावबोधिनी**

करः [ फैलाना ]। गरः [ विष ]। शरः [ बाण। √कॄ, √गॄ और √शॄ से अप् प्रत्यय, ॠकार का गुण अवादेश ] उकारान्त से—यवः [ जौ ]। स्तवः [ स्तुति ]। लवः [ काटना ]। पवः [ पवित्र करना। √यु, √स्तु, √लू तथा √पू—इन उकारान्त धातुओं से अप् प्रत्यय, उकार का गुण तथा अव् आदेश होता है। ]

[ सूत्र में ] दकार मुखसुख [ उच्चारणसुविधा ] के लिये है। [ अन्यथा सन्धि आदि होने पर उच्चारण कष्टप्रद हो जाता। ] त् से परवर्त्ती भी तपर न होने लगे। [ अतः पूर्वोक्त कथन है। ]॥ ५७॥

ग्रह् आदि चार धातुओं से [ कर्तृभिन्न कारक में संज्ञाविषय में और भाव में ] अप् प्रत्यय होता है। घञ् का अपवाद है। निश्चि—धातु से तो [ "एरच्" ३।३।५६ से प्राप्त ] अच् का अपवाद है। उदा०—ग्रहः [ नक्षत्र ]। वरः [ श्रेष्ठ ]। दरः [ डर ]। निश्चयः [ निश्चय ]। गमः [ गमन। यहाँ ग्रह्, वृ, दृ, निश्चि और गम् धातुओं से अप् प्रत्यय होता है। ] निश्चि का ग्रहण स्वर के लिये हैं। [ अच् प्रत्यय होने पर अन्तोदात्त हो जाता। अप् होने पर अनुदात्त होता है। ]

⁂ घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् ⁂ ( म० भा० ३.३.५८ वा० ४ )। प्रतिष्ठन्तेऽस्मिन्निति प्रस्थः पर्वतस्य। प्रस्नात्यस्मिन्प्रस्नः। प्रपिबत्यस्यामिति प्रपा। आविध्यन्ति तेनेत्याविधः। विहन्यन्तेऽस्मिन्निति विघ्नः। आयुध्यतेऽनेनेत्यायुधम् ॥

१०१६. उपसर्गेऽदः ॥ ५९ ॥ ( ३२३५ )

'अप्' इत्येव। उपसर्ग उपपदेऽदेर्धातोरप् प्रत्ययो भवति। विघसः। प्रघसः।

उपसर्ग इति किम् ? घासः ॥

न्यासः

नैष दोषः, निश्चिग्रहणसामर्थ्यात् थाथादिस्वरस्तस्मिन् विषये न भवति। तस्मिन्ननसत्युत्तरपदे प्रकृतिभावेनावस्थितेऽपोऽनुदात्तत्वाद्धातोश्चान्तोदात्तत्वान्निश्चय इति पदं कृत्स्वरेण मध्योदात्तं भवति, अचि सत्यन्तोदात्तं स्यात्।

**वशिरण्योरित्यादि**। 'वश कान्तौ', 'रण' इति शब्दार्थः, अणरणेत्यादयः शब्दार्था धातवः। तयोर्वशिरण्योरप उपसंख्यानम्=प्रतिपादनं कर्त्तव्यम्। तत्रेदं प्रतिपादनम्—चकारोऽत्रानुक्तसमुच्चयार्थः क्रियते, तेन वशिरण्योरप्यब् भविष्यति।

**घञर्थे क इत्यादि**। घञर्थो भावः कर्त्तृवर्जितश्च कारकम्, तत्र कप्रत्ययस्य विधानं कर्त्तव्यं स्थाद्यर्थम्। एतत्तु 'कृत्यल्युटो बहुलम्' इत्येव सिद्धम्। **पा इति** लुग्विकरणपरिभाषया पानार्थस्य ग्रहणम्, न रक्षणार्थस्य। **प्रस्थ इति**। 'आतो लोप इटि च' इत्याकारलोपः। **प्रस्न इति**। 'ष्णा शौचे'। **आविध इति**। 'व्यध ताडने'। 'ग्रहिज्या' इत्यादिसूत्रेण संप्रसारणम्। **विघ्न इति**। 'गमहन' इत्यादिनोपधालोपः, 'हो हन्तेः' इत्यादिना कुत्वम्। **आयुधमिति**। 'युध संप्रहारे' ॥ ५८ ॥

**उपसर्गेऽदः ॥ अदेर्धातोरप्प्रत्ययो भवतीति**। घञपवादः। इत उत्तरत्रापि हलन्तादब् विधीयमानो घञोऽपवादो वेदितव्यः। **विघसः, प्रघस इति**। 'घञपोश्च' इति घस्लादेशः। अथ किमर्थमदेरब् विधीयते, न

पदमञ्जरी

**घञर्थं इति**। भावः कर्तृवर्जितं च कारकं घञर्थः। प्रस्थः = सानुः, प्रस्नः=कटाहः, प्रपा=पानीयशाला—सर्वत्र 'आतो लोप इटि च' इत्याकारलोपः। **आविध इति**। ग्रहिज्यादिसूत्रेण सम्प्रसारणम्। आयुधशब्दपर्यायोऽयम् ॥ ५८ ॥

**उपसर्गेऽदः ॥ अदेर्धातोरिति**। दारूपाणां धातूनामयं निर्देशो न भवति; 'घञपोश्च' इत्यपि परतोऽदेर्घस्लादेशविधानात्। व्यद्यत इति **विघसः**=वैश्वदेवशिष्टमन्नम्। **घासस्तु** चतुष्पदां भक्ष्यम्। घसिः

भावबोधिनी

* "वश् और रण् धातुओं से अप् का विधान कहना चाहिये।" उदा०—वशः। रणः। [ इनमें घञ् प्राप्त है। ]

* 'घञर्थं=कर्तृ भिन्नकारक में संज्ञाविषय में और भाव में--स्था, स्ना, पा, व्यध, हन् और युध् के लिये 'क' प्रत्यय कहना चाहिये।' उदा०--प्रस्थः पर्वतस्य [ पर्वत की चोटी ] विग्रह—प्रतिष्ठन्तेऽस्मिन्। स्ना--प्रस्नाति अस्मिन् इससे प्रस्नः [ कड़ाही ]। पा--प्रपिबन्ति अस्याम्--प्रपा [ पानी की टंकी आदि विशाल जलपात्र। इन तीनों में 'अधिकरण अर्थ में 'क' प्रत्यय है। "आतो लोप इटि च" ६।४।६४ से आ का लोप होता है। व्यध्--आविध्यन्ति तेन--इसमें आविधः = आयुधविशेष आ + व्यध् + क = अ, य् का सम्प्रसारण इ आदि कार्य होते हैं। ] हन्—विहन्यतेऽस्मिन्--इसमें विघ्नः [ वि + हन् + क = अ, उपधा का लोप और ह् का घ्। ] युध्--आयुध्यतेऽनेन--इसमें [ आ + युध् + क = अ ] आयुधम् [ शस्त्रादि ] ॥ ५८ ॥

अप् की ही अनुवृत्ति होती है। उपसर्ग उपपद रहते √अद् से [ कर्तृभिन्नकारक में और भाव में ] अप् प्रत्यय होता है। उदा०--विघसः। [ वैश्वदेव से अवशिष्ट अन्न ]। प्रघसः [ उत्कृष्ट अन्नादि ]।

**१०१७. नौ ण च ॥ ६० ॥ ( ३२३७ )**

**निशब्द उपपदे अदेर्धातोर्णः प्रत्ययो भवति, चकारादप् च । न्यादः । निघसः ॥**

**१०१८. व्यधजपोरनुपसर्गे ॥ ६१ ॥ ( ३२३८ )**

**'व्यध', 'जप'--इत्येतयोरनुपसर्गयोरप् प्रत्ययो भवति । घञोऽपवादः । व्यधः । जपः ।**
**अनुपसर्ग इति किम् ? आव्याधा [ आव्याधः ] । उपजापः ॥**

**१०१९. स्वनहसोर्वा ॥ ६२ ॥ ( ३२३९ )**

**'अनुपसर्गे' इत्येव । स्वनहसोरनुपसर्गयोर्वा अप् प्रत्ययो भवति । स्वनः, स्वानः । हसः, हासः ।**
**अनुपसर्ग इति किम् ? प्रस्वानः । प्रहासः ॥**

**१०२०. यमः समुपनिविषु च ॥ ६३ ॥ ( ३२४० )**

**'अनुपसर्गे', 'वा' इति वर्त्तते । सम्, उप, नि, वि--इत्येतेषूपपदेषु अनुपसर्गेऽपि यमेर्वा अप् प्रत्ययो**

**न्यासः**

घसेः प्रकृत्यन्तरादेव विधीयते, कः पुनरेवं सति गुणो भवति? अदेरपि घस्लृभावो न कर्त्तव्यो भवति? सत्यमेतत्; तथाप्युत्तरार्थमदेर्विहितम्—'नौ ण च' इत्यदेर्यथा स्याद्, घसेर्मा भूदिति ॥ ५९ ॥

**नौ ण च ॥ ६० ॥ व्यधजपोरनुपसर्गे ॥ ६१ ॥ स्वनहसोर्वा ॥ ६२ ॥ यमः समुपनिविषु च ॥ ६३ ॥**

**पदमञ्जरी**

प्रकृत्यन्तरमस्ति तस्मादेवाब्विधेयः । एवं ह्यदेरपि घस्लृभावो न वक्तव्यो भवति । उत्तरार्थं त्वदेर्ग्रहणम्—'नौ ण च' अदेर्यथा स्याद्, घसेर्मा भूदिति ॥ ५९ ॥ ६० ॥

**व्यधजपोरनुपसर्गे ॥** व्यधजपोरिति पञ्चम्यर्थे षष्ठी, अनुपसर्ग इति प्रसज्यप्रतिषेधः—उपसर्गे सति न

**भावबोधिनी**

उपसर्ग रहने पर--इसका क्या लाभ है? घासः । [ पशुओं को खाने के लिए घास । यहाँ अप् न होकर घञ् होता है । अतः उपधावृद्धि होती है ] ॥ ५६ ॥

नि शब्द उपपद रहते अद् धातु से ण प्रत्यय और 'च' के बल से अप् भी [ कर्तृभिन्नकारक में और भाव में] होता है । उदा०—न्यादः--[ भोजन । नि+अद्+ण्=अ, इ का यण्, उपधा की वृद्धि होती है ] । निघसः [ भोजन । नि+अद्+अप् यहाँ 'घञपोश्च' २।४।३८ से अद् का घस्लृ आदेश होने के कारण यह रूप होता है ॥ ६० ॥

व्यध और जप इन उपसर्गरहित धातुओं से [ कर्तृभिन्नकारक में और भाव में ] अप् प्रत्यय होता है । यह घञ् का अपवाद है । उदा०—व्यधः [ घात, चोट, ] । जपः [ जाप ] ।

उपसर्गरहित रहने पर—इसका क्या लाभ है? आव्याधा [ अत्यन्त कष्ट ] । उपजापः [ चुगली करना । ]

विमर्श—उपसर्गरहित व्यध के प्रत्युदाहरण के रूप में काशिकाकार ने 'आव्याधा' यह स्त्रीलिङ्ग उदाहरण दिया है । परन्तु सिद्धान्तकौमुदीकार ने आव्याधः-- यह पुंलिङ्ग रूप दिया है । यही उचित प्रतीत होता है क्योंकि सामान्य रूप से घञन्त शब्द पुंलिङ्ग होता है ॥ ६१ ॥

उपसर्गरहित--इसकी ही अनुवृत्ति होती है । उपसर्गरहित √स्वन और √हस्--इन दो धातुओं से [ कर्तृभिन्नकारक में संज्ञाविषय में और भाव में ] विकल्प से घञ् प्रत्यय होता है । उदा०—स्वनः, स्वानः [ आवाज । स्वन्+अप्, पक्ष में स्वन्+घञ्=अ, उपधा की वृद्धि ] । हसः, हासः । [ हंसी । हस्+अप्, हस्+घञ्=अ, उपधा की, वृद्धि । ]

उपसर्गरहित--इसके ग्रहण का क्या फल है? प्रस्वानः । प्रहासः । [ तेज आवाज, तेज हंसी । इनमें घञ् ही होता है ] ॥ ६२ ॥

**भवति। घञोऽपवादः। संयमः, संयामः। उपयमः, उपयामः। नियमः, नियामः। वियमः, वियामः।**

अनुपसर्गात्खल्वपि – यमः, यामः ॥

**१०२१. नौ गदनदपठस्वनः ॥ ६४ ॥ ( ३२४१ )**

**'अप्' इत्येव। निशब्द उपपदे गद, नद, पठ, स्वन—इत्येतेभ्यो धातुभ्यो वा अप् प्रत्ययो भवति। घञोऽपवादः। निगदः, निगादः। निनदः, निनादः। निपठः, निपाठः। निस्वनः, निस्वानः ॥**

**१०२२. क्वणो वीणायां च ॥ ६५ ॥ ( ३२४२ )**

**'नौ' 'वा' 'अनुपसर्गे' इति वर्त्तते। क्वणतेर्धातोर्निपूर्वादनुपसर्गाच्च वीणायां वा अप् प्रत्ययो भवति। घञोऽपवादः। सोपसर्गार्थं वीणाया ग्रहणम्। निक्वणः, निक्वाणः। अनुपसर्गात्—क्वणः, क्वाणः। वीणायां खल्वपि – कल्याणप्रक्वणा वीणा। एतेष्विति किम्? अतिक्वाणो वर्त्तते ॥**

**न्यासः**

**नौ गदनदपठस्वनः ॥ ६४ ॥ क्वणो वीणायाञ्च ॥ सोपसर्गार्थं वीणाया ग्रहणमिति।** यदि वीणाविषयेऽप्यनुपसर्गादेव स्याद्, वीणाग्रहणमनर्थकं स्यात्। अनुपसर्गात् सामान्येन विधानाद् वीणायामपि प्रत्ययः सिद्धः ॥ ६५ ॥

**पदमञ्जरी**

भवतीति। तेन केवलाभ्यामेव भवति, न तूपसर्गव्यतिरिक्तेऽन्यस्मिन्नुपपदे **वृत्तिग्रन्थोऽ**प्यस्मिन्नेवार्थे व्याख्येयः। उपजापः = मन्त्रभेदः ॥ ६१ ॥ ६२–६४ ॥

**क्वणो वीणायां च ॥ सोपसर्गार्थमिदं वीणाग्रहणमिति।** निव्यतिरिक्तोपसर्गार्थमिदं द्रष्टव्यम्; निपूर्वादनुपसर्गाच्च सामान्येन विधानात्। **कल्याणप्रक्वाणेति** बहुव्रीहिः ॥ ६५ ॥ ६६ ॥

**भावबोधिनी**

'अनुपसर्गे' और 'वा' इनकी अनुवृत्ति होती है। सम्, उप, नि, तथा वि—इन उपसर्गों के उपपद रहते तथा [ अन्य ] उपसर्गों से रहित √यम् धातु से [ कर्तृभिन्न कारक में और भाव में ] विकल्प से अप् प्रत्यय होता है। यह घञ् का अपवाद है। उदा०—संयमः, संयामः [ संयम ]। उपयमः, उपयामः [ विवाह ]। नियमः, नियामः [ नियम ]। वियमः, वियामः [ दुःख ]। उपसर्गरहित भी √यम् से होता है—यमः, यामः [ संयम ] ॥ ६३ ॥

'अप्' की ही अनुवृत्ति होती है। नि शब्द उपपद रहते √गद, √नद, √पठ और √स्वन—इन धातुओं से [ कर्तृभिन्न कारक में और भाव में ] विकल्प से अप् प्रत्यय होता है। यह घञ् का अपवाद है। उदा०—निगदः, निगादः [ बोलना ]। निनदः, निनादः [ आवाज ]। निपठः, निपाठः [ पढ़ना ]। निस्वनः, निस्वानः [ आवाज ]।

विमर्श—नि उपसर्ग के साथ गद, नद, पठ और स्वन इन चार धातुओं से वैकल्पिक अप् होता है। अतः पक्ष में घञ् होने पर उपधा की वृद्धि हो जाती है। उपसर्ग रहित से केवल घञ् होता है। अतः पाठः नादः आदि एक ही रूप होता है। नि से भिन्न उपसर्ग में भी एक रूप ही होता है ॥ ६४ ॥

'नौ' 'वा' 'अनुपसर्गे'—इन तीन की अनुवृत्ति होती है। नि उपसर्ग से युक्त और किसी अन्य उपसर्ग से रहित क्वण् धातु से वीणा अर्थ प्रतीत होने पर [ कर्तृभिन्नकारक में और भाव में ] विकल्प से अप् प्रत्यय होता है। यह घञ् का अपवाद है। उपसर्गयुक्त से अप् प्रत्यय करने के लिये वीणा का ग्रहण है। उदा०—निक्वणः, निक्वाणः [ नि + क्वण् + अप्, घञ्पक्ष में—नि + क्वण् + घञ् = अ, उपधा को वृद्धि ]। उपसर्गरहित—क्वणः, क्वाणः। वीणा अर्थ में भी होता है—कल्याणप्रक्वणा वीणा [ एक विशेष प्रकार की वीणा ]।

नि उपसर्ग अथवा उपसर्गरहित आदि के रहने पर—इनके ग्रहण का क्या फल है? अतिक्वाणः वर्त्तते। [ तीव्र ध्वनि है। यहाँ केवल घञ् होता है ॥ ६५ ॥

**१०२३. नित्यं पणः परिमाणे ॥ ६६ ॥ ( ३२४३ )**

**'पण व्यवहारे स्तुतौ च' ( धा० पा० ४३९ )--अस्माद्धातोर्नित्यमप् प्रत्ययो भवति, परिमाणे गम्यमाने। नित्यग्रहणं विकल्पनिवृत्त्यर्थम्। मूलकपणः। शाकपणः। संव्यवहाराय मूलकादीनां यः परिमितो मुष्टिर्बध्यते तस्येदमभिधानम्। परिमाण इति किम् ? पाणः ॥**

**१०२४. मदोऽनुपसर्गे ॥ ६७ ॥ ( ३२४४ )**

**मदेर्धातोरनुपसर्गादप् प्रत्ययो भवति। घञोऽपवादः। विद्यामदः। धनमदः। कुलमदः।**
**अनुपसर्ग इति किम् ? उन्मादः। प्रमादः ॥**

न्यासः

**नित्यं पणः परिमाणे ॥ परिमित इति।** परिमितो मितः=परिच्छिन्नः। द्वयोस्त्रयाणां चतुर्णां वा मूलकादिद्रव्याणां यो मुष्टिः=परिमाणविशेषो बध्यते संव्यवहारार्थः, स मूलकपण इत्यादिना शब्देनाभिधीयते ॥ ६६ ॥

**मदोऽनुपसर्गे ॥ विद्यामद इति ॥** विद्यया मदः। 'कर्तृकरणे' इत्यादिना समासः। **उन्माद इति।** अत्रापि 'कुगतिप्रादयः' इति; 'व्यधजपोरनुपसर्गे' इत्यत्रैव मदिग्रहणे कर्त्तव्ये 'मदोऽनुपसर्गे' इति सूत्रप्रणयनमस्य विधेरनित्यत्वज्ञापनार्थम्, तेन माद इति सिद्धं भवति ॥ ६७ ॥

पदमञ्जरी

**मदोऽनुपसर्गे ॥ विद्यामद इत्यादि।** 'कर्तृकरणे' इत्यादिना समासः। 'क्वणो वीणायां च' इत्यस्यानन्तरं 'नित्यं मदः, प्रमदसंमदौ हर्षे, पणः परिमाणे' इति यदि सूत्रन्यासः क्रियेत, अत्रानुपसर्गग्रहणं शक्यमकर्त्तुम्, अनुवृत्तेरेव सिद्धत्वात् ? सत्यम्; एवं विन्यासे हि क्रियमाणे 'पणः परिमाणे' इत्यत्राप्यनुपसर्ग इत्यस्यानुवृत्तिः शङ्क्येत। यथान्यासे तूत्तरत्राप्यनुपसर्ग इति वचनात् 'नित्यं पणः परिमाणे' इत्यत्रानुपसर्ग इति न संबद्ध्यत इति विज्ञायते। तेनोपसर्गेऽपि भवति यदि परिमाणाभिधानमस्ति।

अपर[1] आह--"मदोऽनुपसर्गे" इति सूत्रप्रणयनमस्य विधेरनित्यत्वज्ञापनार्थम्, तेन माद इति सिद्धं भवति" इति, नात्रासभाषितमस्ति ॥ ६७ ॥

भावबोधिनी

'व्यवहार और स्तुति अर्थ में √पण् धातु' है इससे परिमाण अर्थ गम्यमान रहने पर [ कर्तृभिन्नकारक में और भाव में ] नित्य अप् प्रत्यय होता है। [ सूत्र में ] नित्य का उल्लेख विकल्प की निवृत्ति के लिए है। उदा०--मूलकपणः। शाकपणः। [ सब्जी विक्रेताओं द्वारा गिनकर रखो गयी मूली का गड्डी, शाक का गड्डी ]। बेचने के लिए मूली आदि की नपी=गिनी हुई जो मुट्ठी=गड्डी बांधी जाती है, उसी का यह अभिधान=नाम है।

परिमाण अर्थ में--इसके ग्रहण का क्या लाभ है ? पाणः [ व्यापार, पण्+घञ्=अ, उपधावृद्धि ] ॥ ६६ ॥

उपसर्गरहित √मद् धातु से अप् प्रत्यय [ कर्तृभिन्नकारक में और भाव अर्थ में ] होता है। घञ् का अपवाद है। उदा०--विद्यामदः [ विद्या का घमण्ड ]। धनमदः [ धन का घमण्ड ]। कुलमदः [ कुल का घमण्ड ]। [ इनमें √मद से अप् प्रत्यय करके तृतीया समास होता है। ]

उपसर्गरहित--इसका क्या फल है ? उन्मादः। प्रमादः। [ आलस्य, यहाँ घञ् प्रत्यय होने से उपधा को वृद्धि होती है ॥ ६७ ॥

---

१. अत्रैव सूत्रे न्यासो द्रष्टव्यः।

१०२५. प्रमदसंमदौ हर्षे ॥ ६८ ॥ ( ३२४५ )

'प्रमद' 'संमद'--इत्येतौ शब्दौ निपात्येते हर्षेऽभिधेये। कन्यानां प्रमदः। कोकिलानां संमदः। हर्ष इति किम् ? प्रमादः। संमादः। प्रसंभ्यामिति नोक्तम्। निपातनं रूढ्यर्थम् ॥

१०२६. समुदोरजः पशुषु ॥ ६९ ॥ ( ३२४६ )

समुदोरुपपदयोरजतेर्धातोः पशुविषये धात्वर्थे अप् प्रत्ययो भवति। घञोऽपवादः। 'अज गतिक्षेपणयोः' ( धा० पा० २३० ) इति पठ्यते, स संपूर्वः समुदाये वर्तते, उत्पूर्वश्च प्रेरणे। समजः पशूनाम्। समुदाय इत्यर्थः। उदजः पशूनाम्। प्रेरणमित्यर्थः। पशुष्विति किम् ? समाजो ब्राह्मणानाम्। उदाजः क्षत्रियाणाम् ॥

न्यासः

प्रमदसंमदौ हर्षे ॥ ननु च 'मदः' इत्यनुवर्त्तते, तत्र प्रसंभ्यामिति वक्तव्यम्, एवमप्यभीष्टं सिध्यत्येव, तत् किं निपात्यते ? इत्यत आह—प्रसंभ्यामित्यादि। रूढिशब्देनेह प्रमदसंमदाभ्यामन्यस्याश्रुतत्वादनयोश्च रूढिशब्दत्वादेतावेव विवक्षिताविति गम्यते। अवधारणं चेह द्रष्टव्यम्, सावधारणत्वात् सर्ववाक्यानाम्। तेन रूढ्यर्थं निपातनम्। प्रमदसम्मदशब्दार्थमेवैषोऽर्थः संपद्यते। अनेन सूत्रेण 'प्रमदसम्मदौ' इत्यनयोरेव रूढिशब्दयोर्व्युत्पत्तिर्यथा स्यान्न शब्दान्तराणामित्येवमर्थं निपातनमिति यावत्। यदि हि मदिग्रहणमनुवर्त्त्यं प्रसंभ्यामित्येतावदुच्येत, तर्हि यदापि प्रसंभ्यां समस्ताभ्यामुत्तरो मदिर्भविष्यति तदापि प्रत्ययः स्यात्। तथा यदा प्रसमावन्यस्मादुपसर्गात् परौ भवतः प्रसंभ्याञ्च परो मदिर्भवति तदापि स्यात्। ततश्च प्रसम्मदः, अभिप्रसम्मदः, प्रनिसम्मदः—इत्येवमाद्यमरूढिशब्दार्थमपि सूत्रं स्यात्, न प्रमदसम्मदार्थमेव। निपातने तु सति नियमो विज्ञायते—प्रत्येकमेवैतौ; न समस्तौ, नाप्यन्योपसर्गसहिताविति। तेन रूढ्यर्थं सूत्रं सम्पद्यते ॥ ६८ ॥

पदमञ्जरी

प्रमदसंमदौ हर्षे ॥ निपातनं रूढ्यर्थमिति। उपात्तस्यैव रूढिरूपस्य साधुत्वं यथा स्यादित्यर्थः। 'प्रसंभ्याम्' इत्युच्यमाने प्रसंमदः, संप्रमदः, विप्रमद इत्यादावपि प्राप्नोतीति मन्यते ॥ ६८ ॥ ६६ ॥

भावबोधिनी

हर्ष अर्थ अभिधेय रहने पर प्रमद और संमद ये दोनों [ कर्तृभिन्न कारक में या भाव में ] निपातन से सिद्ध होते हैं। उदा०--कन्यानां प्रमदः। [ कन्याओं का हर्ष ]। कोकिलानां संमदः [ कोयलों का हर्षोत्पादक शब्द ]।

हर्ष अर्थ रहने पर--इसका क्या फल है ? प्रमादः। [ असावधानी ]। सम्मादः [ मत्तता ]।

प्रसम्भ्याम्—ऐसा नहीं कहा गया है। निपातन रूढ़ि के लिये है।

विमर्श—यद्यपि पूर्व सूत्र से 'मदः' की अनुवृत्ति सम्भव है। अतः 'प्रसम्भ्याम्' इतना ही सूत्र बनाया जा सकता था तथापि 'प्रमद-सम्मदौ हर्षे' ऐसा सूत्र बनाया गया, इसका उद्देश्य है इन दोनों की रूढ़ता सिद्ध करना। इसके अतिरिक्त प्रसम्मदः और संप्रमदः आदि शब्द भी हर्ष अर्थ में प्रयुक्त न होने लगें; इस कारण सूत्र में पूरे शब्द-रूपों का उल्लेख है ॥ ६८ ॥

पशुविषयक धात्वर्थ रहने पर [ कर्तृभिन्नकारक में संज्ञाविषय में और भाव में ] सम् तथा उत् उपपद रहते अज् धातु से अप् प्रत्यय होता है। घञ् का अपवाद है। 'गति और क्षेपण=फेंकना अर्थों में अज् धातु है' ऐसा पढ़ा गया है; यह सम् उपसर्ग के साथ समुदाय अर्थ में है और उत् उपसर्ग के साथ प्रेरणा अर्थ में है। उदा०—समजः पशूनाम् [ जानवरों का समूह ]। समुदाय यह अर्थ है। उदजः पशूनाम् [ पशुओं की प्रेरणा=प्रेरित करना ]। प्रेरण यह अर्थ है।

पशुओं में—इसका क्या फल है ? समाजो ब्राह्मणाम्। उदाजः क्षत्रियाणाम् [ यहाँ पशुसम्बन्धी अर्थ नहीं है। अतः अप् न होकर घञ्=अ होता है और उपधा की वृद्धि होती है ॥ ६९ ॥

**१०२७. अक्षेषु ग्लहः ॥ ७० ॥ ( ३२४७ )**

'ग्लहः' इति निपात्यते अक्षविषयश्चेद्धात्वर्थो भवति। ग्रहेरप् सिद्ध एव, लत्वार्थं निपातनम्। अक्षस्य ग्लहः। अक्षेष्विति किम्? ग्रहः पादस्य। अन्ये ग्लहिं प्रकृत्यन्तरमाहुः, ते घञं प्रत्युदाहरन्ति—ग्लाह इति ॥

**१०२८. प्रजने सर्त्तेः ॥ ७१ ॥ ( ३२४८ )**

**सर्तेर्धातोः प्रजने विषये अप् प्रत्ययो भवति। घञोऽपवादः। प्रजनम्[1]=प्रथमं गर्भग्रहणम्। गवामुपसरः। पशूनामुपसरः। स्त्रीगवीषु पुंगवानां गर्भाधानाय प्रथममुपसरणमुच्यते ॥**

**१०२९. ह्वः संप्रसारणं च न्यभ्युपविषु ॥ ७२ ॥ ( ३२४९ )**

**न्यासः**

**समुदोरजः पशुषु ॥ ६९ ॥ अक्षेषु ग्लहः ॥ ग्रहेरप् सिद्ध एवेति।** 'ग्रहवृदृ' इत्यादिना। यद्येवम्, किमर्थं निपातनमित्याह— **लत्वार्थमित्यादि** ॥ ७० ॥

**प्रजने सर्त्तेः ॥ ७१ ॥ ह्वः संप्रसारणञ्च न्यभ्युपविषु ॥ निहव इति।** 'ह्वेञ् स्पर्द्धायाम्'। संप्रसारणे कृते गुणावादेशौ। जुहोतेरेव निप्रभृत्युपसर्गपूर्वस्य 'निहवः' इत्यादिके रूपचतुष्टये सिद्धे सति ह्वयतेर्निप्रभृतिपूर्वस्य घञ्निवृत्त्यर्थमेवैतद् वचनम् ॥ ७२ ॥

**पदमञ्जरी**

**अक्षेषु ग्लहः ॥ अक्षस्य ग्लह इति।** भावेऽप् अक्षस्य ग्रहणमित्यर्थः। अन्ये त्वाहुः—अक्षशब्देनात्र तत्साधनं देवनं लक्ष्यते, अक्षकर्मणि देवनविषये यत्पणरूपेण ग्राह्यं तद् ग्लहशब्देनोच्यते। तथा च **माघः**— 'व्यात्युक्षीमभिसरणग्लहामदीव्यन्' ( शिशु० ८. ३२ ) इति। वृत्तावप्यक्षस्य ग्लह इत्यक्षसाधनस्य देवनस्य पणबन्ध इत्यर्थः ॥ ७० ॥

**प्रजने सर्त्तेः ॥** प्रजननं प्रजनः, भावे घञ्, 'जनिवध्योश्च' इति वृद्धिप्रतिषेधः, ण्यन्ताद्वैरच्। प्रशब्दो धात्वर्थं विपरीतयति, यथा—प्रतिष्ठते इत्यत्र प्रादुर्भावस्य च वैपरीत्यं गर्भग्रहणम्, तदाह— **प्रजनः प्रथमं गर्भग्रहणमिति।** कथमवसरः, प्रसर इति? अधिकरणे 'पुंसि संज्ञायां घः प्रायेण' ॥ ७१ ॥

**भावबोधिनी**

अक्ष-विषयक [ द्यूतक्रीडा में प्रयुक्त होने वाले पांसे सम्बन्धी ] धात्वर्थ रहने पर ग्लह यह निपातित होता है। क्योंकि [ 'ग्रहवृदृनिश्चिगमश्च' ३।३।५८ से ] अप् प्रत्यय तो सिद्ध ही है, केवल [ रेफ का ] लत्व करने के लिये यह निपातन है। उदा०—अक्षस्य ग्लहः [ जुए का पासा ]।

अक्ष में ही—इसका क्या फल है? ग्रहः पादस्य [ पैर का पकड़ना। यहाँ लत्व नहीं होता है ]।

दूसरे लोग ग्लह यह स्वतन्त्र प्रकृति मानते हैं, वे लोग घञ् प्रत्ययान्त को प्रत्युदाहरणरूप में प्रस्तुत करते हैं— ग्लाहः। [ इस मत के अनुसार लत्वनिपातन की आवश्यकता नहीं है ] ॥ ७० ॥

प्रजनविषय में [ कर्तृभिन्नकारक में संज्ञाविषय में और भाव में ] √सृ धातु से अप् प्रत्यय होता है। यह घञ् का अपवाद है। प्रजन=पहला गर्भ धारण करना। उदा०—गवाम् उपसरः। पशूनाम् उपसरः। स्त्री गायों का पुरुष गो अर्थात् साँड़ के पास गर्भ-धारणार्थ पहली बार जाना—उपसरण कहा जाता है। [ अर्थात् पशुओं का गर्भ-धारणार्थ पहली बार जाना। वस्तुतः गो शब्द उभय लिंग है। अतः यहाँ स्त्री और पुम् का प्रयोग है। ] ॥

[ अवसरः प्रसरः—आदि प्रचलित शब्दों की सिद्धि के लिये "पुंसि संज्ञायां घः प्रायेण" ( ३।३।११८ ] से घ=अ प्रत्यय मानना चाहिये ] ॥ ७१ ॥

---

१. न पदमञ्जरीसम्मतोऽयं पाठः।

नि, अभि, उप, वि—इत्येतेषु उपपदेषु ह्वयतेर्धातोः संप्रसारणम्, अप् प्रत्ययश्च भवति। घञोऽपवादः। निहवः। अभिहवः। उपहवः। विहवः। एतेष्विति किम्? प्रह्वायः॥

१०३०. आङि युद्धे ॥ ७३ ॥ ( ३२५० )

आङि उपपदे ह्वयतेर्धातोः संप्रसारणम्, अप् प्रत्ययश्च भवति युद्धेऽभिधेये। आहूयन्तेऽस्मिन्नित्याहवः। युद्ध इति किम्? आह्वायः॥

१०३१. निपानमाहावः ॥ ७४ ॥ ( ३२५१ )

आङ् पूर्वस्य ह्वयतेर्धातोः संप्रसारणम्, अप् प्रत्ययः, वृद्धिश्च निपात्यते, निपानं चेदभिधेयं भवति। निपिबन्त्यस्मिन्निति निपानमुदकाधार उच्यते। आहावः पशूनाम्, कूपोपसरेषु य उदकाधारस्तत्र हि पानाय पशव आहूयन्ते। निपानमिति किम्? आह्वायः॥

न्यासः

आङि युद्धे ॥ आह्वाय इति ॥ 'आतो युक् चिण्कृतोः' इति युक् ॥ ७३ ॥

निपानमाहावः ॥ निपिबन्ति तस्मिन्निति निपानमित्यधिकरणे ल्युट्। कस्मादाहावशब्द उदकाधारे वर्त्तत इत्याह—तत्र हीत्यादि। एतेनाहावशब्दस्योदकाधारे प्रवृत्तिनिमित्तं दर्शयति ॥ ७४ ॥

पदमञ्जरी

ह्वः सम्प्रसारणं च न्यभ्युपविषु ॥ निहव इत्यादि रूपं तु जुहोतेरेव सिद्धम्; अनेकार्थत्वाद्धातूनाम्। अर्थभेदोऽप्यकिञ्चित्करः। इदं तु वचनं ह्वयतेर्घञि निह्वाय इति रूपं मा भूदिति ॥ ७२ ॥ ७३ ॥

निपानमाहावः ॥ आहाव इति रूपं तु जुहोतेरेव सिद्धम्, अनेकार्थत्वाद्धातूनाम्। अर्थभेदोऽप्यकिञ्चित्करः। इदं तु वचनं ह्वयतेर्घञि आह्वाय इति रूपं मा भूदिति। आहाव इत्यधिकरणे निपातनमित्याह—तत्र हीति ॥ ७४ ॥

भावबोधिनी

नि, अभि, उप और वि—इन उपसर्गों के उपपद रहते √ह्वेञ् धातु का सम्प्रसारण होता है और अप् प्रत्यय भी होता है। यह घञ् का अपवाद है। उदा०—निहवः [ बुलाना ]। अभिहवः [ चारो ओर से बुलाना ] उपहवः [ समीप में बुलाना ]। विहवः [ जोर से बुलाना ]।

इन उपसर्गों के उपपद रहते—इसका क्या फल है? प्रह्वायः।

[ नि+ह्वे+अप्—इसमें ए का आत्व करके नि+ह्वा+अ में व् का सम्प्रसारण 'उ' करके 'आ' का पूर्वरूप करने पर नि+हु+अ, होता है। उकार का गुण और अव् आदेश करने पर निहवः—की सिद्धि होती है। इसी प्रकार अन्य शब्दों की भी सिद्धि समझनी चाहिये। घञ् होने पर सम्प्रसारण नहीं होता है। अतः प्रह्वायः यह रहता है ॥ ७२ ॥ ]

युद्ध अर्थ प्रतीत होने पर [कर्तृभिन्न कारक में संज्ञाविषय में और भाव में] आङ् उपपद रहते √ह्वेञ् धातु से अप् प्रत्यय होता है और सम्प्रसारण होता है। उदा०—आहवः—आहूयन्तेऽस्मिन् शत्रवः [युद्ध—जिसमें शत्रु ललकारे जाते हैं]।

युद्ध अर्थ में—इसका क्या फल है? आह्वायः। [ जब अप् प्रत्यय होता है तब आ+ह्वे+अप्, ए का आत्व, व् का सम्प्रसारण उ और आ का पूर्वरूप करने पर—आ+हु+अ—में गुण और अव् आदेश होने पर आहवः बनता है। जब युद्ध अर्थ नहीं है तब घञ् होता है आ+ह्वे+घञ्=अ, ए का आत्व, युक् आगम करने पर आह्वायः—सिद्ध होता है ॥ ७३ ॥

निपान=जलाधार अर्थ प्रतीत होने पर [ कर्तृभिन्न कारक में संज्ञाविषय में और भाव में ] आङ् पूर्वक √ह्वेञ् धातु का सम्प्रसारण अप् प्रत्यय और वृद्धि—ये तीन निपातन होते हैं। निपान—निपिबन्ति अस्मिन् अर्थात् जहाँ पानी

**१०३२. भावेऽनुपसर्गस्य ॥ ७५ ॥ ( ३२५२ )**

**अनुपसर्गस्य ह्वयतेः संप्रसारणम्, अप् प्रत्ययश्च भवति, भावेऽभिधेये । हवः । हवे हवे सु_हवंशूरमिन्द्रम् ( ऋ० ६।४७।११ ) अनुपसर्गस्येति किम् ? आह्वायः । भावग्रहणम् 'अकर्तरि च कारके संज्ञायाम्' ( ३।३।१९ ) इत्यस्य निरासार्थम् ॥**

**१०३३. हनश्च वधः ॥ ७६ ॥ ( ३२५३ )**

**न्यासः**

**भावेऽनुपसर्गस्य ॥ भावग्रहणमित्यादि** । ननु च यथा 'कर्मव्यतिहारे णच् स्त्रियाम्' इत्यत्र द्वये प्रकृते त्र लक्ष्यदर्शनवशाद् भाव एव प्रत्ययो विज्ञास्यते, तथेहापि, तत् किं भावग्रहणेन 'अकर्त्तरि च कारके' इत्येतन्निरासार्थेन ? सत्यमेतत्; लक्ष्यदर्शनसामर्थ्यादेव प्राप्त एष एवार्थो भावग्रहणेनाख्यायते मन्दबुद्धीनामनुग्रहाय । अथ यथा 'अभिविधौ भाव इनुण्' इत्यत्र 'भावे' इति वर्त्तमाने पुनर्भावग्रहणं वाऽसरूपनिरासार्थं विज्ञायते, तथेहापि कस्मान्न विज्ञायते ? लक्ष्यदर्शनवशात् । दृश्यन्ते हि क्तादयः—हूतम्, ह्वानम्, हूतिरिति । घञादौ वाऽसरूपेण भावः ॥ ७५ ॥

**हनश्च वधः ॥ स चान्तोदात्त इति** । सूत्रे वधशब्दस्यान्तोदात्तस्योच्चारणात् । तत्रेत्यादिनाऽन्तोदात्ते

**पदमञ्जरी**

**भावेऽनुपसर्गस्य ॥ भावग्रहणमित्यादि** । ननु च द्वयेऽप्यधिकृते लक्ष्यदर्शनवशाद्भाव एवार्थे विधिर्भविष्यति, यथा—'कर्मव्यतिहारे णच् स्त्रियाम्' इत्यत्र ? सत्यम्, एष एवार्थो भावग्रहणेनाख्यायते । अथ यथा—'अभिविधौ भाव इनुण्' इत्यत्र वाऽसरूपनिवृत्त्यर्थं भावग्रहणम्, तथेहापि कस्मान्न भवति ? असरूपस्य बाधनीयस्याभावात् । घञ् तावत् सरूपः, क्तल्युट्क्तिनस्तु नास्योत्सर्गाः, न हि तेषु नाप्राप्तेष्वस्यारम्भः, इष्यन्ते च ते—हूतः, ह्वानम्, हूतिरिति ॥ ७५ ॥

**हनश्च वधः ॥ स चान्तोदात्त इति** । सूत्रे तथैवोच्चारणात् । किमर्थं पुनरकारान्तत्वम्, किमर्थं

**भावबोधिनी**

पीते हैं, उस उदकाधार=पानी से भरे पात्रादि को निपान कहा जाता है। उदा०—आहावः पशूनाम् । कुआँ के समीप जो पानी की टंकी या हौदी आदि बनायी जाती है वहाँ पानी पीने के लिये पशुओं को बुलाया जाता है । [ आ + ह्वे + अप्, ए का आत्व, व् का सम्प्रसारण और आ का पूर्वरूप करने पर आ + हु + अ; यहाँ निपातन से ही उ की वृद्धि और आव् आदेश होने पर आहावः यह रूप बनता है । ]

निपान=उदकाधार प्रतीत होने पर—इसका क्या लाभ है ? आह्वायः [ आ + ह्वे + घञ्, आत्व और युक्=य् आगमादि करके रूप सिद्ध होता है ] ॥ ७४ ॥

[ केवल ] भाव अर्थ वाच्य रहने पर उपसर्गरहित √ह्वेञ् धातु का सम्प्रसारण होता है और अप् प्रत्यय होता है । उदा०—हवः [ ह्वे + अप्, ए का आत्व, व् का सम्प्रसारण, आ का पूर्वरूप हु + अ, उ का गुण और अवादेश करने पर रूप सिद्ध होता है । ] वैदिक प्रयोग—हवे हवे सुहवं शूरमिन्द्रम् । [ सभी आहवनों में सुख से आह्वान के योग्य शूरवीर इन्द्र को मैं बुलाता हूँ । ]

उपसर्गरहित – इसका क्या फल है ? आह्वायः । [ आ + ह्वे + घञ् = अ, प्रक्रिया पहले लिखी जा चुकी है । ]

यहाँ 'भावे' इसका ग्रहण 'अकर्तरि च कारके संज्ञायाम्' इसकी निवृत्ति के लिये है; अर्थात् यहाँ केवल भाव अर्थ ही प्रतीत होता है ॥ ७५ ॥

'भावे' और 'अनुपसर्गस्य' इन दो की अनुवृत्ति होती है । उपसर्ग का योग न रहने पर भाव अर्थ में √हन् धातु से अप् प्रत्यय होता है और इसके सन्नियोग से [ हन् का ] वध आदेश होता है और वह अन्तोदात्त होता है ।

'भावे', 'अनुपसर्गस्य' इति वर्त्तते। हन्तेर्धातोरनुपसर्गे भावे अप् प्रत्ययो भवति, तत्संनियोगेन च वधादेशः, स चान्तोदात्तः। तत्रोदात्तनिवृत्तिस्वरेणाप उदात्तत्वं भवति। वधश्चोराणाम्। वधो दस्यूनाम्। 'भावे' इत्येव—घातः। 'अनुपसर्गस्य' इत्येव—प्रघातः, विघातः।

चकारो भिन्नक्रमत्वान्नादेशेन संबध्यते, किं तर्हि? प्रकृतेन प्रत्ययेन—अप् च, यश्चापरः प्राप्नोति। तेन घञपि भवति—घातो वर्त्तते॥

**१०३४. मूर्तौ घनः॥ ७७॥ ( ३२५४ )**

**न्यासः**

वधादेशे यदिष्टं सिध्यति तद्दर्शयति। अपि कृते 'अतो लोपः' इत्यकारलोपे च 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यप उदात्तत्वं भवति। **घात इति**। कर्मादौ कारके घञ्, 'हनस्तोऽचिण्णलोः' इति तत्वम्; 'हो हन्तेः' इत्यादिना कुत्वम्। **चकारो भिन्नक्रमत्वादित्यादि**। चकारो नादेशेन सम्बध्यत इति सम्बद्धः। कस्मान्न सम्बध्यते? भिन्नक्रमत्वात्। यदि 'हनो वधश्च' इत्येष चकारस्य क्रमः स्याद्, एवमयमादेशेन सम्बध्येत; तदनन्तरं श्रूयमाणत्वात्। अस्य तु तत्क्रमाद् भिन्नोऽन्य एव क्रमः; आदेशानन्तरमनुच्चारणात्। तस्मात् भिन्नक्रमत्वात् क्रमभेदान्नादेशेन सम्बध्यते; अपि तु प्रकृतेन प्रत्ययेन। एवञ्च प्रकृतेन सम्बन्धं दर्शयितुमाह—**अप् चेत्यादि**। अप् प्रत्ययो भवति, चकारावृत्तेर्यः प्राप्नोति स च। तेन घञपि भवति॥ ७६॥

**मूर्तौ घनः**॥ **अभ्रघन इति**। षष्ठीसमासोऽयम्। अभ्रस्य काठिन्यमित्यर्थः। यदि मूर्त्तावभिधेयायां

**पदमञ्जरी**

चान्तोदात्तत्वम्, यावता नायमकारः क्वचिच्छ्रूयतेऽतो लोपोऽस्य भवति? तत्राह—**तत्रेति**। अन्तोदात्तत्वे सतीत्यर्थः। **उदात्तनिवृत्तिस्वरेणेति**। 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्येव उदात्तनिवृत्तिनिमित्तत्वादुदात्तनिवृत्तिस्वरः। **घात इति**। अत्र कर्मादौ कारके घञ्। **किं तर्हि प्रकृतेन प्रत्ययेनेति**। अथ धातोरनन्तरं श्रुतः प्रकृतेन धातुना कस्मान्न सम्बद्ध्यते—हनश्च वधादेशो भवति, ह्वयतेश्चेति? पूर्वसूत्रे सम्प्रसारणविधानसामर्थ्यात्॥ ७६॥

**मूर्तौ घनः**॥ **अभ्रघन इति**। अभ्रस्य काठिन्यमित्यर्थः। **धर्मशब्देनेति**। शुक्लादिवदिति भावः। यद्येवम्,

**भावबोधिनी**

यहाँ उदात्तनिवृत्ति स्वर से अप् का उदात्तत्व होता है। उदा०—वधः चौराणाम्। वधः दस्यूनाम्। [ चोरों का वध। डाकुओं का वध ]।

**विमर्श**—हन्+अप्, हन् का वध आदेश वध+अ, यहाँ वध का अन्त अ उदात्त है और "अनुदात्तौ सुप्पितौ" ( ३।१।१४ ) इससे अप् का अ अनुदात्त है। यहाँ अनुदात्त अ परे रहते "अतो लोपः" ( ६।४।४८ ) सूत्र से वध के उदात्त अ का लोप होने पर "अनुदात्तस्य च यत्रोदात्तलोपः" ( ६।१।१६१ ) से अनुदात्त अ का उदात्त हो जाता है। उदात्त के लोप का निमित्त होने के कारण 'उदात्तनिवृत्तिस्वर' ऐसा मूल में कहा गया है।

[ अनु० ] भाव में ही—घातः [ यहाँ कर्मादि अर्थ में घञ् है। अतः 'ह' का 'घ' और 'न्' का 'त्' तथा उपधावृद्धि आदि होती है ]।

उपसर्ग रहित में ही—प्रघातः। विघातः [ यहाँ प्र और वि उपसर्ग हैं। अतः अप् और वध नहीं होते हैं ]।

[ हनश्च—यहाँ √हन् के बाद चकार है यह √ह्वेञ् का समुच्चायक होना चाहिये? ] चकार भिन्नक्रम वाला है। अतः वध आदेश के साथ सम्बद्ध नहीं होता है। तो किसके साथ सम्बद्ध होता है? प्रस्तुत प्रत्यय के साथ। अप् च=अप् और जो दूसरा प्रत्यय प्राप्त होता है। इस कारण घञ् भी होता है—घातो वर्तते। [ चोट है। इस प्रकार जब अप् होता है तो सन्नियोगवशात् वध आदेश होता है। जब घञ् होता है तो वधादेश नहीं होता है ]॥ ७६॥

'हनः'—इसी की अनुवृत्ति होती है। मूर्ति=कठोरता। मूर्ति=कठोरता अर्थ रहने पर √हन् धातु से अप् प्रत्यय होता

'हनः' इत्येव । मूर्तिः = काठिन्यम् । मूर्तावभिधेयायां हन्तेरप् प्रत्ययो भवति, घनश्चादेशः । अभ्रघनः । दधिघनः । कथं घनं दधीति ? धर्मशब्देन धर्मी भण्यते ॥

## १०३५. अन्तर्घनो देशे ॥ ७८ ॥ ( ३२५५ )

अन्तःपूर्वाद्धन्तेरप् प्रत्ययो भवति, घनादेशश्च भवति, देशेऽभिधेये । अन्तर्घनः, संज्ञीभूतो बाहीकेषु देशविशेष उच्यते । अन्ये णकारं पठन्ति – अन्तर्घणो देश इति, तदपि ग्राह्यमेव । देश इति किम् ? अन्तर्घातोऽन्यः ॥

## १०३६. अगारैकदेशे प्रघणः प्रघाणश्च ॥ ७९ ॥ ( ३२५६ )

प्रपूर्वस्य हन्तेः प्रघण, प्रघाण – इत्येतौ शब्दौ निपात्येते, अगारैकदेशे वाच्ये । प्रघणः । प्रघाणः । द्वारप्रकोष्ठो बाह्य उच्यते । अगारैकदेश इति किम् ? प्रघातोऽन्यः ।

**न्यासः**

घनशब्दो व्युत्पाद्यते—घनं दधीति, मूर्त्तिमतो दध्नो नाभिधानं प्राप्नोति, कथं हि नाम मूर्त्तौ व्युत्पादितस्ततोऽन्यत्र वर्त्तते ? इत्यत आह **धर्मशब्देन धर्मी भण्यत इति** । मतुब्लोपादभेदोपचारः, यथा—शुक्लः पटः । शुक्लशब्देन शुक्लगुणः पट इति भावः ॥ ७७ ॥

**अन्तर्घनो देशे** ॥ **अन्तर्घन इति** । अन्तर्हन्यन्ते प्राणिनोऽत्रेत्यधिकरणेऽप् । **तदपि ग्राह्यमेवेति** । उभयथा चाचार्येण शिष्याणां प्रतिपादितत्वात् ॥ ७८ ॥

**अगारैकदेशे प्रघणः प्रघाणश्च** ॥ ७९ ॥ **उद्घनोऽत्याधानम्** ॥ **अत्याधानमिति** । अतिशब्द उपरिभावे

**पदमञ्जरी**

गुणेनेति प्रतिषेधात् समासो न प्राप्नोति, तत्स्थैश्च गुणैरित्येतदपि नास्ति ? इदानीमेव ह्युक्तम्—'धर्मशब्देन धर्मी भण्यते' इति वक्तव्योऽत्र समासः ॥ ७७ ॥

**अन्तर्घनो देशे** ॥ **तदपि ग्राह्यमेवेति** । उभयथाप्याचार्येण शिष्याणां प्रतिपादितत्वात् ॥ ७८ ॥

**अगारैकदेशे प्रघणः प्रघाणश्च** ॥ **द्वारप्रकोष्ठो बाह्य उच्यत इति** । द्वारप्रदेशे द्वौ प्रकोष्ठावलिन्दौ—आभ्यन्तरः, बाह्यश्च । तत्र बाह्ये प्रकोष्ठे निपातनम्, नागारैकदेशमात्रे । एतच्च निपातनाल्लभ्यते । प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यत इति अप् कर्मणि, पक्षे वृद्धिश्च ॥ ७९ ॥

**भावबोधिनी**

है और [ हन् का ] घन आदेश होता है । उदा०—अभ्रघनः [ बादलों की कठोरता = घनापन ] । दधिघनः [ दही की कठोरता ] । [ हन् + अप्, हन् का घन आदेश और समास ] ।

घना [ गाढ़ा ] दही – यह प्रयोग कैसे होता है ? धर्म शब्द से धर्मी कहा जाता है । अर्थात् घनापन इस धर्म = विशेषणवाचक के द्वारा घना = धर्मी = विशेष्य कहा जाता है; जैसे—शुक्लः पटः आदि में देखा जाता है ॥ ७७ ॥

देश अर्थ अभिधेय रहने पर अन्तः पूर्वक √हन् धातु से अप् प्रत्यय होता है और हन् का घन आदेश होता है । उदा०—अन्तर्घनः । बाहीक में एक देशविशेष को कहा जाता है ।

दूसरे लोग [ "पूर्वपदात् संज्ञायामगः" ८।४।३ ] इससे णत्व करके 'अन्तर्घणो देशः' यह पढ़ते हैं, ऐसा भी सुग्राह्य है । [ अर्थात् दोनों प्रकार के रूप शुद्ध हैं । ] देश अर्थ रहने पर—इसका क्या फल है ? अन्तर्घातः अन्यः । [ यहाँ घञ् होता है, अतः घन आदेश नहीं होता है ] ॥ ७८ ॥

अगार + घर का एक देश = अवयव वाच्य रहने पर प्र – पूर्वक √हन् से प्रघण और प्रघाण ये दो शब्द निपातन से सिद्ध होते हैं । उदा० – प्रघणः, प्रघाणः । दरवाजे पर बाहर बना कमरा [ ड्योढ़ी ] को कहा जाता है । [ प्रवेश करने वाले लोगों के पैरों से पिटने वाला = रगड़ खाने वाला—पादैः प्रकर्षेण हन्यते—इस विग्रह में कर्म अर्थ में अप्

**१०३७. उद्घनोऽत्याधानम् ॥ ८० ॥ ( ३२६७ )**

उत्पूर्वस्य हन्तेरुद्घन इति निपात्यते, अत्याधानं चेद्भवति । उद्घनः, यस्मिन्काष्ठे स्थापयित्वा अन्यानि काष्ठानि तक्ष्यन्ते तदभिधीयते । उद्घातोऽन्यः ॥

**१०३८. अपघनोऽङ्गम् ॥ ८१ ॥ ( ३२६८ )**

अपपूर्वस्य हन्तेरपघन इति निपात्यते, अङ्गं चेत्तद्भवति । अपघनः, अङ्गम् । ( अत्र ) अवयवो न सर्व एकदेशः, किं तर्हि ? पाणिः पादश्चाभिधीयते । अपघातोऽन्यः ॥

**१०३९. करणेऽयोविद्रुषु ॥ ८२ ॥ ( ३२६९ )**

'हनः' इति वर्त्तते । अयस्, वि, द्रु-इत्येतेषूपपदेषु हन्तेर्धातोः करणे कारकेऽप् प्रत्ययो भवति, घनादेशश्च । अयो हन्यतेऽनेनेत्ययोघनः । विघनः । द्रुघनः । द्रुघण इति केचिदुदाहरन्ति । कथं णत्वम् ? अरीहणादिषु पाठात् । 'पूर्वपदात् संज्ञायामगः' ( ८।४।३ ) इति वा ॥

**न्यासः**

वर्त्तते । आंदधातिः स्थापने । य उपरि निधीयते स्थाप्यते तस्मिन् सः, तदत्याधानम् । अधिकरणे ल्युट् । उद्घन इति उद्धन्यतेऽस्मिन्नित्यधिकरणेऽप् ॥ ८० ॥

अपघनोऽङ्गम् ॥ अपघन इति । अपहन्यतेऽनेनेति करणेऽप् ॥ ८१ ॥

करणेऽयोविद्रुषु ॥ ८२ ॥ स्तम्बे क च ॥ तत्र चेति । अनन्तरोक्तेऽपि । घनादेश इति । 'मूर्त्तौ घनः'

**पदमञ्जरी**

उद्घनोत्याधानम् ॥ अत्याधानमिति । अतिशब्द उपरिभावे वर्तते, आदधातिः स्थापने, अधिकरणे ल्युट् । उद्घन इत्यत्राप्यधिकरण एवाप् ॥ ८० ॥

अपघनोऽङ्गम् ॥ अपघन इति । करणेऽप् ॥ ८१ ॥

करणेऽयोविद्रुषु ॥ द्रुघन इति । द्रुरिति वनस्पतिनाम, 'वनस्पतयो वै द्रवः' इति निगमो भवति । 'पूर्वपदात् संज्ञायामग' इति वेति । संज्ञा चैषा कुठारविशेषस्य ॥ ८२ ॥

**भावबोधिनी**

प्रत्यय और हन् का घन आदेश तथा णत्व करने पर—प्रघणः ओर पक्ष में वृद्धि होने पर—प्रघाणः ये दो रूप होते हैं । ]

अगार = घर का अवयव अर्थ रहने पर इसका क्या लाभ है ? प्रघातः अन्यः । [ अन्य अर्थ में प्रघातः बनता है ] ॥ ७६ ॥

यदि अत्याधान अर्थ रहता है तो उत् पूर्वक √हन् धातु से उद्घनः—यह निपातन से सिद्ध होता है, अर्थात् उत् पूर्वक हन् धातु से अप् प्रत्यय होता है और हन् का घन आदेश होता है । उदा०—उद्घनः । जिस लकड़ी पर रख कर दूसरी लकड़ियाँ छीली जाती हैं उसे उद्घन कहते हैं । उससे भिन्न अर्थ में उद्घातः यह बनता है । ] उद्घन्यन्ते अस्मिन् —इस अधिकरण अर्थ में अप् प्रत्यय और हन् का घन आदेश होता है । अत्याधान = काष्ठविशेष से भिन्न अर्थ में घञ् होने से उद्घातः रूप होता है ॥ ८० ॥

अपपूर्वक √हन् से अपघन—यह निपातित होता है, यदि वह अङ्ग रहता हो तो । उदा०—अपघनः = अङ्ग । सभी अवयव नहीं अपितु एक देश; तो क्या ? हाथ और पैर कहे जाते हैं । [ अपहन्यतेऽनेन—यहाँ करण अर्थ में अप + हन् + अप् = अ, हन् का घन आदेश । ] अन्य अर्थ में—अपघातः [ अप + हन् + घञ् = अ, प्रक्रिया पूर्ववत् है ] ॥ ८१ ॥

'हनः' की अनुवृत्ति होती है । अयस्, वि और द्रु—इनके उपपदे रहते √हन् धातु से करण कारक में अप् प्रत्यय होता है और [ हन् का ] 'घन' आदेश होता है । उदा०—अयोघनः [ लोहे का हथौड़ा ]—अयः हन्यतेऽनेन —

**१०४०. स्तम्बे क च ॥ ८३ ॥ ( ३२६० )**

'करणे' 'हनः' इति वर्त्तते । स्तम्बशब्द उपपदे करणे कारके हन्तेः कः प्रत्ययो भवति । **चकारादप्, तत्र [च] घनादेशः । स्तम्बघ्नः । स्तम्बघनः ।**

**स्त्रियां स्तम्बघ्ना स्तम्बघना इति इष्यते । करण इत्येव—स्तम्बघातः ॥**

**१०४१. परौ घः ॥ ८४ ॥ ( ३२६१ )**

'करणे' 'हनः' इत्येव । परिशब्द उपपदे हन्तेर्धातोरप् प्रत्ययो भवति करणे कारके, घशब्दश्चादेशः । परिहन्यतेऽनेनेति परिघः । पलिघः ( ८।२।२२ ) ॥

**न्यासः**

इत्यतः 'घनः' इत्यस्यानुवृत्तेः । **स्तम्बघ्न इति** । पूर्ववत् कुत्वोपधालोपौ ॥ ८३ ॥

**परौ घः ॥ पलिघ इति** । 'परेश्च घाङ्कयोः' इति विभाषा लत्वम् ॥ ८४ ॥

**पदमञ्जरी**

**स्तम्बे क च ॥ तत्र चेति** । अनन्तरोक्तेऽपि के तु घनादेशो न भवति; पूर्वमेव घनादेशस्याप्सम्बन्धित्वात् । **स्तम्बघ्न इति** । उपपदसमासः, 'गमहन' इत्युपधालोपः, 'हो हन्तेः' इति कुत्वम् । **स्त्रियामित्यादि** । एतच्च कापोः प्रतिपदविधानात् सर्वापवादत्वात् 'कृत्यल्युटो बहुलम्' इति वचनाद्वा लभ्यते । अन्ये पुनः 'ऊतियूतिजूतिसातिहेति' इति हन्तेः क्तिनि निपातनान्निपातनस्य च सर्वापवादत्वात् स्तम्बहेतिरितोच्छन्ति । अपरे तु 'करणाधिकरणयोश्च' इति ल्युटि स्तम्बहननीति भवितव्यम्, यथा—रक्षोयातूनां हननीत्युक्तमित्याहुः । **स्तम्बघात इति** । भावे घञ्, षष्ठीसमासः ॥ ८३ ॥

**परौ घः ॥ पलिघ इति** । 'परेश्च घाङ्कयोः' इति विभाषा लत्वम् ॥ ८४ ॥

**भावबोधिनी**

जिसके द्वारा लोहा पीटा जाता है । विघनः [ हथौड़ा ] । द्रुघनः [ वृक्षों को काटने वाली कुल्हाड़ी आदि ] । कुछ लोग द्रुघणः—यह उदाहरण देते हैं । तो णत्व कैसे होता है ? अरीहण आदि गण में पाठ है । अथवा "पूर्वपदात् संज्ञायामगः" ( ८।४।३ ) से णत्व होता है ॥ ८२ ॥

'करणे' 'हनः' इनकी अनुवृत्ति होता है । स्तम्ब शब्द उपपद रहते करण कारक में हन् धातु से 'क' प्रत्यय होता है । चकार के बल से अप् भी होता है और इसके होने पर 'घन' आदेश होता है । उदा०—स्तम्बघ्नः । स्तम्बघनः । [ स्तम्बो हन्यतेऽनेन—इस करण अर्थ में √हन् से क=अ प्रत्यय होने पर "गमहनजन०" ( ६।४।९८ ) से उपधा के अकार का लोप और "होहन्तेर्ञ्णि" ( ७।३।५४ ) से कुत्व, ( ह् का घ ) करने पर स्तम्बघ्नः हुआ । अप् होने पर स्तम्ब+हन्+अप्, यहाँ हन् का घन आदेश भी होता है । उपपदसमास करने पर स्तम्बघनः । स्तम्ब=घासादि काटने वाली खुरपी । ] 'स्त्रीलिङ्ग में स्तम्बघ्ना और स्तम्बघना ये दोनों रूप इष्ट हैं ।' [ सिद्धि पूर्ववत् है । स्त्रीप्रत्यय टाप् होता है । ] करण अर्थ में ही होता है—स्तम्बघातः । [ =घास काटना । यहाँ भाव में घञ् प्रत्यय होने पर ह का घ और न का त आदेश होता है ] ॥ ८३ ॥

'करणे' 'हनः' [ करण कारक में और हन् धातु से ] इतनी ही अनुवृत्ति है । परि शब्द उपपद रहते करण कारक में √हन् धातु से अप् प्रत्यय होता है और हन् का 'घ' शब्द आदेश होता है । उदा०—परिघः, पलिघः । परिहन्यतेऽनेन [ जिसके द्वारा मारा जाय—लोहे का मुद्गर ] यह अर्थ है । [ "परेश्च घाङ्कयोः" ८ । २ । २२ से विकल्प से लत्व होता है । अतः दो रूप हैं । ] ॥ ८४ ॥

**१०४२. उपघ्न आश्रये ॥ ८५ ॥ ( ३२६३)**

**उपपूर्वस्य हन्तेरप् प्रत्यय उपधालोपश्च निपात्यते। आश्रयशब्दः सामीप्यं = प्रत्यासत्तिं लक्षयति। पर्वतोपघ्नः। ग्रामोपघ्नः। आश्रय इति किम्? पर्वतोपघात एवान्यः॥**

**१०४३. सङ्घोद्घौ गणप्रशंसयोः ॥ ८६ ॥ ( ३२६४ )**

**समुदोरुपपदयोर्हन्तेर्धातोरप् प्रत्ययो भवति, टिलोपो घत्वं च निपात्यते, यथासंख्यं गणेऽभिधेये प्रशंसायां गम्यमानायां [ च ]। सङ्घः पशूनाम्। उद्घो मनुष्याणाम्। गणप्रशंसयोरिति किम्? संघातः॥**

**१०४४. निघो निमितम् ॥ ८७ ॥ ( ३२६५ )**

**न्यासः**

**उपघ्न आश्रये॥ आश्रयशब्द इत्यादि।** आश्रयणमाश्रयः = सेवा! सा च यत्र प्रत्यासत्तिस्तत्र भवतीत्याश्रयः प्रत्यासत्तिसहचरः। तस्मादाश्रयशब्दः सामीप्यं प्रत्यासत्तिमुपलक्षयति; तदर्थःय प्रत्यासत्ति-साहचर्यात्। **पर्वतोपघ्न इति।** पर्वतसमीपभूतोऽर्थ उच्यते॥ ८५॥

**संघोद्घौ गणप्रशंसयोः॥ सङ्घोद्घाविति।** संहननं सङ्घः। उत्कटं हन्यतेज्ञायत इति उद्घः। कर्मण्यप्। कथं पुनर्हन्तिर्ज्ञाने वर्त्तते? गत्यर्थत्वात्। सर्वेषां गत्यर्थानां धातूनां ज्ञानार्थत्वात्॥ ८६॥

**निघो निमितम्॥** समन्तान् मितमिति निमितशब्दः। सर्वत आरोहतः परिणाहतश्च तुल्यमित्यर्थः। एकमेवार्थं प्रसिद्धतरेण दर्शयितुमाह—**समारोहपरिणाहमिति।** समावारोहपरिणाहौ यस्य तत् तथोक्तम्।

**पदमञ्जरी**

**उपघ्न आश्रये॥ आश्रयशब्द इत्यादि।** आश्रयणमाश्रयः, स प्रत्यासत्त्याऽविनाभावीत्येतल्लक्षणहेतुः। **पर्वतोपघ्न इति।** पर्वतेनोपहन्यते=सामीप्येन गम्यत इति कर्मण्यप्॥ ८५॥

**संघोद्घौ गणप्रशंसयोः**॥संहननं सङ्घः, भावेऽप्। उद्घन्यते = उत्कृष्टो ज्ञायत इति कर्मण्यप्। गत्यर्था बुद्ध्यर्था इति हन्तिर्ज्ञाने वर्तते। **उद्घो मनुष्याणामिति।** मनुष्याणां मध्ये प्रशस्त इत्यर्थः॥ ८६॥

**निघो निमितम्॥ समारोहपरिणाहमिति।** आरोहः = उच्छ्रायः, परिणाहः = विस्तारः, तौ समानौ यस्य तत्तथोक्तम्॥ **निघा वृक्षा इति।** निर्विशेषं हन्यन्ते = ज्ञायन्ते इति कर्मण्यप्॥ ८७॥

**भावबोधिनी**

[ उपघ्न शब्द में ] उपपूर्वक √हन् धातु से अप् प्रत्यय और उपधा का लोप निपातन से होता है। **आश्रय** शब्द सामीप्य = प्रत्यासत्ति को लक्षित करता है [ क्योंकि आश्रय = आश्रयण = सेवा तभी सम्भव है जब समीप में रहा जाय ]। उदा०—पर्वतोपघ्नः। ग्रामोपघ्नः। [ पर्वत के समीप। गाँव के समीप। पर्वतेन उपहन्यते = सामीप्येन गम्यते इस विग्रह में उप + हन् + अप्, उपधालोप और ह का घ होने पर उपपद-समास किया जाता है।] आश्रय अर्थ रहने पर—इसका क्या लाभ है? पर्वतोपघातः—यही अन्य अर्थ में होता है। [ यहाँ घञ् होता है।] ॥ ८५॥

सम् और उद् उपपद रहने पर √हन् धातु से अप् प्रत्यय, टि [ अन् ] का लोप और [ ह् का ] घ निपातन से होता है यदि क्रमशः (१) गण = समुदाय अर्थ हो और (२) प्रशंसा प्रतीत हो रही हो। उदा०—सङ्घः पशूनाम् [ पशुओं का गण = समूह ]। उद्घः मनुष्याणाम्। [ मनुष्यों की प्रशंसा अथवा मनुष्यों के मध्य में प्रशस्त। सम् + हन् + अप्, टिलोप और ह् का घ्, मकार का अनुस्वार और परसवर्ण—सङ्घः। इसी प्रकार उद् + हन् + अप् टिलोप, ह् का घ्। संहननं = सङ्घः यहाँ भाव में और उद्घन्यते = उत्कटं ज्ञायते—यहाँ कर्म में प्रत्यय है।] गण और प्रशंसा—इन अर्थों में—इसका क्या लाभ है? संघातः। [ यहाँ घञ् होता है ] ॥ ८६॥

निमित [ सभी प्रकार से बराबर ] अर्थ यदि अभिधेय रहता है तो 'निघ' इस शब्द में 'नि' पूर्वक √हन् धातु से अप् प्रत्यय, टि [ अन् ] का लोप और [ ह् का ] घ् निपातन किया जाता है। सभी ओर से नापा गया = **निमित,**

'निघ' इति निपूर्वाद्धन्तेरप् प्रत्ययष्टिलोपो घत्वं च निपात्यते, निमितं चेदभिधेयं भवति। समन्तान्मितम् = निमितम्, समारोहपरिणाहम्। निघा वृक्षाः। निघाः शालयः। निमितमिति किम्? निघातः॥

१०४५. ड्वितः क्त्रिः ॥ ८८ ॥ ( ३२६६ )

'भावे' 'अकर्तरि च कारके' इति वर्तते। 'डु' इद्यस्य तस्माद् ड्वितो धातोः क्त्रिः प्रत्ययो भवति। 'क्त्रेर्मम्नित्यम्' ( ४।४।२० ) इति वचनात् केवलो न प्रयुज्यते। 'डुपचष् पाके' ( धा० पा० ९९७ )—[ पाकेन निर्वृत्तमिति ][1] पक्त्रिमम्। 'डुवप् बीजसन्ताने' ( धा० पा० १००४ )—उप्त्रिमम्। डुकृञ्—कृत्रिमम्॥

न्यासः

आरोहः = उच्छ्रायः। परिणाहः = विस्तारः। निघा वृक्षा इति। निर्विशेषं हन्यन्ते = ज्ञायन्त इति निघाः। कर्मण्यपि, समन्तात् तुल्या इत्यर्थः। एवं ते निर्विशेषं ज्ञायन्ते यदि समन्तादारोहतः परिणाहतश्च तुल्या भवन्ति॥ ८७॥

ड्वितः क्त्रिः॥ उप्त्रिममिति। 'वचिस्वपि' इत्यादिना संप्रसारणम्। क्त्रेः ककारो गुणप्रतिषेधार्थः॥८८॥

पदमञ्जरी

ड्वितः क्त्रिः। भावेऽकर्तरि च कारके इति वर्तत इति। अधिकारस्याविच्छेदं दर्शयति। अयं तु क्त्रिप्रत्ययः स्वभावाद्भाव एव भवति—पाकेन निर्वृत्तं पक्त्रिममित्युच्यते, न तु पक्वेनेति। केवलो न प्रयुज्यत इति। तेनावश्यमन्यशब्देनैव विग्रहः कर्तव्यः। तद्दर्शयति—पाकेन निर्वृत्तं पक्त्रिममिति। उप्त्रिममिति। यजादित्वात् सम्प्रसारणम्। अथ ड्वितः क्त्रिममित्येव कस्मान्नोक्तम्, एवं हि 'क्त्रेर्मम् नित्यम्' इति न वक्तव्यं भवति? नैवं शक्यम्, 'भावे' इत्यधिकाराद्भावेऽपि कृत्रिममिति प्राप्नोति। अथाप्युभयानुवृत्तावप्यभिधानस्वाभाव्यात्कारक एव कर्मणि भवेत्? एवमपि भूतकालो न गम्येत। एतदप्यभिधानस्वाभाव्याद्भवतु नाम? एवमर्थाभिधाने प्रकारभेदो न स्यात्, न हि पक्वपक्त्रिमशब्दयोः पर्यायतां मन्यन्ते॥ ८८॥

भावबोधिनी

जिसकी ऊँचाई और चौड़ाई दोनों बराबर हैं : उदा०—निघाः वृक्षाः। निघाः शालयः। [ बराबर ऊँचाई और चौड़ाई वाले वृक्ष। उसी प्रकार के धान्य। निर्विशेषं हन्यन्ते = ज्ञायन्ते, कर्म में नि + हन् + अप्, टिलोप और ह् का घ् करने पर—निघ शब्द बनता है। ] निमित [ सभी प्रकार से बराबर—इस अर्थ के रहने पर ]—इसके ग्रहण का क्या लाभ? निघातः [ मारना, यहाँ भाव अर्थ में घञ् होने से ह् का घ् और न् का त् होता है। ]॥ ८७॥

'भावे' 'अकर्तरि च कारके' [ भाव में और कर्तृभिन्न कारक में ]—इनकी अनुवृत्ति होती है। 'डु' इत् है जिसका ऐसी ड्वित् धातु से 'क्त्रि' प्रत्यय होता है। "क्त्रेर्मप् नित्यम्" ४। ४। २०। [ क्त्रि प्रत्ययान्त से मप् प्रत्यय नित्य होता है ] इसके अनुसार अकेला क्त्रि प्रत्यय शुद्ध नहीं है। [ उसके बाद मप् भी होता है। ] उदा० – √डुपचष् [ इससे पाकेन निर्वृत्तम् इस विग्रह में डु और ष् की इत्संज्ञा करके क्त्रि प्रत्यय होने पर पच् + त्रि—अवस्था में पुनः मप् प्रत्यय होता है—पच् + त्रि + म, च् का क् करने पर ] पक्त्रिमम् रूप होता है। √डुवप्—'उप्त्रिमम् [ √डुवप् में डु की इत् संज्ञा, लोप के बाद क्त्रि = त्रि प्रत्यय होने पर व् का सम्प्रसारण और अ का पूर्वरूप करने पर उप् + त्रि। यहाँ पुनः मप् प्रत्यय होने पर उप्त्रिमम् रूप होता है। पक्त्रिमम् = पाक से होने वाला, उप्त्रिमम् = बीज बोने से होने वाला। ] डुकृञ्—कृत्रिमम्। [ कृ + क्त्रि = त्रि + मप्, बनावटी, बनाया गया ]॥ ८८॥

---

१. पदमञ्जर्यामधिकः पाठः।

१०४६. ट्वितोऽथुच् ॥ ८९ ॥ ( ३२६७ )

**'टु' इद्यस्य तस्मात् ट्वितो धातोरथुच् प्रत्ययो भवति भावादौ । 'टुवेपृ कम्पने' ( धा० पा० ३६७ )—वेपथुः । 'टुओश्वि गतिवृद्ध्योः' ( धा० पा० १०११ )--श्वयथुः । 'टुक्षु शब्दे' ( धा० पा० १०३७ )—क्षवथुः ॥**

१०४७. यजयाचयतविच्छप्रच्छरक्षो नङ् ॥ ९० ॥( ३२६८ )

**'भावे' 'अकर्त्तरि च कारके' इति वर्तते । यजादिभ्यो धातुभ्यो नङ् प्रत्ययो भवति । ङकारो गुणवृद्धि-**

न्यासः

**ट्वितोऽथुच् ॥ वेपथुरिति ।** वेपनम् = वेपथुः । स्वभावत एवैतदुभयं भावे भवतीति घञोऽपवादो विज्ञायते । घञ् तु वाऽसरूपविधिनापि न भवति; अनभिधानात् । अथुचश्चकारः स्वरार्थः ॥ ८९ ॥

**यजयाचयतविच्छप्रच्छरक्षो नङ् ॥** 'यज देवपूजादौ' 'टुयाचृ याच्ञायाम्', 'यत प्रयत्ने', 'विच्छ गतौ', 'प्रच्छ ज्ञीप्सायाम्', 'रक्ष रक्षणे'—अत्र स्वाभाविकत्वाद् याचेरन्येषां नङ्प्रत्ययान्तानां पुंसि वृत्तिरिति तेभ्यो नङ् न घञोपवादो भवति । यथादर्शनञ्च वाऽसरूपविधिना घञपि भवति—याग इति । याचेस्तु नङन्तस्य स्वभावात् स्त्रियां वृत्तिरिति ततो नङ् 'गुरोश्च हलः' इति प्राप्तस्याकारप्रत्ययस्यापवादः । 'कृत्यल्युटो बहुलम्' इति वचनाद् वाऽसरूपविधिर्न भवति । **ङकारो गुणप्रतिषेधार्थ इति ।** विच्छेर्लघूपधगुणो मा भूदित्येवमर्थः । ननु चान्तरङ्गत्वात् 'छे च' इति तुकैव विच्छेस्तावद् भवितव्यम्, तत्रालघूपधत्वादेव गुणो न भविष्यति, तत् किं तत्प्रतिषेधार्थेन ङकारेण ? सत्यम्; यदा तुङ् न भवति तदानर्थः तेन । यदा त्वनित्यत्वादागमशासनस्य तुङ् न भवति तदावश्यं गुणप्रतिषेधार्थो ङकारः कर्त्तव्यः । 'अनित्यमागमशासनम्' ( परि० ) इत्यस्य चैतदेव नङो ङित्करणं ज्ञापकम् । यदा तर्ह्यनित्यत्वात् तुङ् न, तदा 'च्छ्वोः शूडनुनासिके च' इति सतुक्कस्य च्छकारस्य शादेशो विधीयमानः केवलस्य न प्राप्नोति ? नैष दोषः; यस्मात् 'च्छ्वोः' इति द्विच्छकारो निर्देशः । तत्रैकः सतुक्कः, द्वितीयः केवल एव, तेन केवलस्यापि शादेशो भविष्यति । यदि तु द्विच्छकारो निर्देशः 'च्छ्वोः' इति द्विवचनं न प्राप्नोति, बहुत्वात् स्थानिनाम् ? सौत्रत्वान्निर्देशस्य बहुवचनस्य व्यत्ययेन द्विवचनं भविष्यतीत्यदोषः । अवश्यं द्विच्छकारो निर्देशः कर्त्तव्यः, अन्यथा 'राल्लोपः' इत्यत्र केवलस्य लोपो न स्यात्, केवलस्य च्छकारस्याप्रकृतत्वात् । वचनं तु वकारलोपार्थमेव स्यात् । **यज्ञः, याच्ञेति ।** 'स्तोः श्चुना श्चुः' इति

पदमञ्जरी

**ट्वितोऽथुच् ॥** अयमपि स्वभावाद्भाव एव भवति । घञादेरपवादः । वाऽसरूपविधना सोऽपि भवत्येव ॥ ८९ ॥

**यजयाचयतविच्छप्रच्छरक्षो नङ् ॥** नङो ङकारो विच्छेर्गुणप्रतिषेधार्थः, अन्यथान्तरङ्गत्वात्तुकि 'च्छ्वोः शूडनुनासिके च' इति सतुक्कस्य छस्यादेशे कृते लघूपधत्वाद् गुणः स्यात् । नङन्ताः सर्वे पुंल्लिङ्गाः ।

भावबोधिनी

'टु' जिसका इत् है उस ट्वित् धातु से अथुच् = अथु प्रत्यय होता है भाव आदि अर्थों में । **टुवेपृ—वेपथुः** [ कम्पन ] । टु ओ श्वि--श्वयथुः [ गति या वृद्धि ] टु क्षु--क्षवथुः [ खाँसी ] । [ वेप् + अथुच्, श्वि + **अथुच् = अथु,** व् का सम्प्रसारण और इ का पूर्वरूप करने पर शु + अथु इस अवस्था में उ का गुण और अवादेश होता है । ] ॥ ८६ ॥

'भावे' और 'अकर्तरि च कारके' [ भाव में तथा कर्तृभिन्न कारक में ]--इनकी अनुवृत्ति होती है । **यजादि** धातुओं से [ भावादि अर्थों में ] नङ् = न प्रत्यय होता है । ङ् अनुबन्ध गुण और वृद्धि का प्रतिषेध करने के लिये है । उदा०--यज्ञः [ √यज् + न = श्चुत्व करने पर न् = ञ् । ज् + ञ् का ज्ञ् आदेश ] । याच्ञा [ **√याच् + नङ् = न,** श्चुत्व और स्त्रीलिङ्गप्रयोग के कारण टाप् = आ याच्ञा = मांगना ] यत्नः । [ प्रयास = मानसिक व्यापार ] । विश्नः [ गति ] । प्रश्नः [ प्रश्न । विच्छ + नङ्, प्रच्छ + नङ् इनमें "च्छ्वोः शूडनुनासिके च" ( ६।३।१६ ) इससे

**प्रतिषेधार्थः । यज्ञः । याच्ञा । यत्नः । विश्नः । प्रश्नः । रक्ष्णः । प्रच्छेरसंप्रसारणं ज्ञापकात्—'प्रश्ने चासन्नकाले' ( ३।२।११७ ) इति ॥**

**१०४८. स्वपो नन् ॥ ९१ ॥ ( ३२६९ )**

**स्वपेर्धातोर्नन् प्रत्ययो भवति । नकारः स्वरार्थः ( ६।१।१९७ ) । स्वप्नः ॥**

**१०४९. उपसर्गे घोः किः ॥ ९२ ॥ ( ३२७० )**

'भावे', 'अकर्तरि च कारके' इति वर्तते। उपसर्गे उपपदे घुसंज्ञकेभ्यो धातुभ्यः किः प्रत्ययो भवति। कित्करणमातो लोपार्थम् ( ६।४।६४ ) । प्रदिः । प्रधिः । अन्तर्द्धिः ॥

**१०५०. कर्मण्यधिकरणे च ॥ ९३ ॥ ( ३२७१ )**

न्यासः

श्चुत्वेन नकारस्य ञकारः। **यत्न इति**। 'नेड् वशि कृति' इतीट्प्रतिषेधः। **विश्नः, प्रश्न इति**। 'च्छ्वोः' इत्यादिना च्छकारस्य शकारादेशः। **रक्ष्ण इति**। 'ष्टुना ष्टुः' इति नकारस्य णकारः। अथ प्रच्छेः ग्रहिज्यादि-सूत्रेण संप्रसारणं प्रश्न इत्यत्र कस्मान्न भवतीत्यत आह—**प्रच्छेरित्यादि**। किं ज्ञापकमित्याह— **प्रश्ने चेत्यादि** ॥ ९० ॥ **स्वपो नन्** ॥ ९१ ॥

**उपसर्गे घोः किः** ॥ **किप्रत्ययो भवतीति** ॥ घञोऽपवादः। **कित्करणमातो लोपार्थमिति**। 'आतो लोप इटि च' इत्याकारलोपो यथा स्यादिति ॥ ९२ ॥

**कर्मण्यधिकरणे च** ॥ कर्माधिकरणयोः सप्तम्या भेदेन निर्देशान्नोभयोरुपपदत्वम्; नापि प्रत्ययार्थत्वम्, तस्मात् किञ्चित् तत्रोपपदम्, किञ्चित् प्रत्ययार्थः। कर्म उपपदम्, अधिकरण प्रत्ययार्थः। एष तु विभागो व्याख्यानाल्लक्ष्यदर्शनाच्च विज्ञायत इत्याह—**कर्मण्युपपद इत्यादि**। अथाधिकरणग्रहणं किमर्थम्, यावता 'अकर्त्तरि

पदमञ्जरी

याचिस्तु स्त्रीलिङ्गः। वाऽसरूपविधिश्च यथाभिधानं भवति। **प्रश्न इति**। अत्र ग्रहिज्यादिसूत्रेण सम्प्रसारणं कस्मान्न भवतीत्याह—**प्रच्छेरिति** ॥ ९० ॥ ९१ ॥ ९२ ॥

**कर्मण्यधिकरणे च** ॥ कर्माधिकरणयोः पृथक् पृथक् सप्तमीनिर्देशान्न तावदुभयोरुपपदत्वम्, तत्र

भावबोधिनी

च्छ् का श् आदेश होता है। ] रक्ष्णः [ रक्षा करना, ष्टुत्व से न का ण होता है। ] "प्रश्ने चासन्नकाले" ३।२।११७ इस पाणिनीय ज्ञापन = प्रयोग के कारण प्रच्छ् का सम्प्रसारण नहीं होता है। [ अन्यथा ङित् प्रत्यय रहने पर रेफ का सम्प्रसारण ऋ होने पर पृश्न ऐसा बनना चाहिये था। ] ॥ ९० ॥

[ भाव में ] √स्वप् से नन् प्रत्यय होता। नकार [ "ञ्नित्यादिर्नित्यम्" ६।१।१९७ से आदि उदात्त ] स्वर के लिये है। उदा०—स्वप्नः [ सोना = शयन ] ॥ ९१ ॥

'भावे' तथा 'अकर्तरि च कारके' [ भाव में तथा कर्तृभिन्न कारक में ] —इनकी अनुवृत्ति होती है। उपसर्ग उपपद रहने पर घु-संज्ञक [ दा और धा ] धातुओं से 'कि' प्रत्यय होता है। [ धातु के ] आ का लोप करने के लिये कित् प्रत्यय है। उदा०—प्रदिः [ प्र + दा + कि = इ, कित् होने से "आतो लोप इटि च" ६।४।६४ से धातु के आ का लोप होता है। प्रदान अर्थ है। प्रधिः [ नेमि = धुरा। प्र + धा + कि, शेष प्रक्रिया पूर्ववत् ]। अन्तर्द्धिः [ छिपना। अन्तर् की भी उपसर्गसंज्ञा होती है। अन्तर् + धा + कि; प्रक्रिया पूर्ववत् ] ॥ ९२ ॥

'घोः' [ घुसंज्ञक से ]—इतनी ही अनुवृत्ति है। कर्म उपपद रहते घु-संज्ञक धातुओं से अधिकरण कारक अर्थ में 'कि' प्रत्यय होता है। उदा०—जलं धीयतेऽस्मिन्—जिसमें पानी धारण किया जाय—जलधिः [ समुद्र। जल + धा + कि

'घोः' इत्येव । कर्मण्युपदे घुसंज्ञकेभ्यो धातुभ्यः किः प्रत्ययो भवति, अधिकरणे कारके । जलं धीयतेऽस्मिन्निति जलधिः । शरधिः । अधिकरणग्रहणमर्थान्तरनिरासार्थम् । चकारः प्रत्ययानुकर्षणार्थः ॥

१०५१. स्त्रियां क्तिन् ॥ ९४ ॥ ( ३२७२ )

'भावे', 'अकर्तरि च कारके' इति वर्तते । स्त्रीलिङ्गे भावादौ धातोः क्तिन्प्रत्ययो भवति । घञजपामपवादः । कृतिः । चितिः । मतिः । * क्तिन्नाबादिभ्यश्च वक्तव्यः * ( म० भा० ३. ३. ९४ वा० १ ) । आबादयः प्रयोगतोऽनुसर्तव्याः । आप्तिः । राद्धिः । दीप्तिः । स्रस्तिः[1] । ध्वस्तिः । आस्तिः । लब्धिः ।

* श्रुयजिस्तुभ्यः[2] करणे * ( मा० भा० ३. ३. ९५ वा० ३ ) । श्रूयतेऽनयेति श्रुतिः । इष्टिः । स्तुतिः ।

न्यासः

च कारके' इत्यस्यानुवृत्तेरेवाधिकरणे प्रत्ययो लभ्यते ? इत्याह—अधिकरणग्रहणमित्यादि । असति ह्यधिकरणग्रहणेऽर्थान्तरेऽपि भावे करणादौ च कारके प्रकृतप्रत्ययः स्यात्, तस्मात् तन्निवृत्त्यर्थमधिकरणग्रहणम् ॥ ९३ ॥

स्त्रियां क्तिन् ॥ भावादाविति ॥ आदिशब्देनाकर्त्तुः कारकस्योपादानम् । घञजपामपवाद इति । य इकारान्तास्तेभ्योऽचोऽपवादः, य ऋकारान्ता उवर्णान्ताश्च तेभ्योऽपः, शेषेभ्यो घञः ।

वक्तव्य इति । व्याख्येय इत्यर्थः । व्याख्यानं तु 'कृत्यल्युटो बहुलम्' इत्येतदाश्रित्य कर्त्तव्यम् । आप्तिरित्यादि । 'आप्लृ व्याप्तौ', 'राध साध संसिद्धौ', 'दीपी दीप्तौ', 'स्रन्सु ध्वन्सु अवस्रंसने' 'डुलभष् प्राप्तौ' । लभेति षित्त्वाद् 'षिद्भिदादिभ्योऽङ्' इत्यङि प्राप्ते शेषेभ्यस्तु गुरुत्वाद् 'गुरोश्च हलः' इत्यकारे क्तिन् विधीयते ।

पदमञ्जरी

व्याख्यानात् कर्मोपपदम्, अधिकरणं तु प्रत्ययार्थं इत्याह—कर्मण्युपपद इति । अधिकरणग्रहणमर्थान्तरनिरासार्थमिति । अर्थान्तरं = भावः, करणादि च कारकम् ॥ ९३ ॥

स्त्रियां क्तिन् ॥ घञजपामपवाद इति । येन नाप्राप्तिन्यायेन वञोपवादः, अजपोस्तु परत्वादपवादो बाधक इत्यर्थः । उक्तं च 'अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेन' इति । अजपोरवकाशः — चयः, जयः, लव इति; क्तिनोऽवकाशः—कृतिः, हृतिः; चितिः, स्तुतिरित्यत्रोभयप्राप्तौ क्तिन् भवति विप्रतिषेधेन । लब्धिः । षित्वादङपि भवति—लभेति । ननु निष्ठायां वा सेटोऽकारवचनात् सिद्धमिति ब्रुवतो वार्त्तिककारस्य 'गुरोश्च हलः' इत्यकारप्राप्तावेवाबादिभ्यश्चेति क्तिन्नभिमत इति गम्यते, तत्कथमङ्विषये क्तिन्नुदाहृतः ?

भावबोधिनी

आ का लोप ] । शरः धीयतेऽस्मिन् --जिसमें बाण रखा जाता है--शरधिः [ तरकश ] । अधिकरण का उल्लेख [ भावादि ] अन्य अर्थों का निरास करने के लिये है । चकार [ कि- ] प्रत्यय को अनुकर्षण = अनुवृत्ति के लिये है । अतः चकार से अन्य किसी का समुच्चय नहीं करना चाहिये । ] ॥ ९३ ॥

'भावे' तथा 'अकर्तरि च कारके' [ भाव में और कर्तृभिन्न कारक में ] इनकी अनुवृत्ति होती है । स्त्रीलिङ्ग में भावादि अर्थों में धातु से क्तिन् प्रत्यय होता है । यह क्तिन् घञ्, अच् और अप्—इन [ तीनों ] का अपवाद है । उदा०—कृतिः [ क्रिया, करना । √कृ + क्तिन् = ति ] । चितिः [ चयन ] । मतिः [ बुद्धि, मन् + क्तिन् = ति, अनुनासिक = न् का लोप ] । * 'आप् आदि से क्तिन् कहना चाहिये' [ वार्तिक में क्तिन् + आबादिभ्यः यह पदच्छेद है । नुट् होने से दो नकार सुनाई देते हैं । ] प्रयोग देखकर आप् आदि धातुओं को समझ लेना चाहिये । उदा०—आप्तिः [ पाना ] । राद्धिः [ सिद्धि । राध + क्ति=ति, त् का ध् और धातु के ध् का जश्त्व द् करने पर राद् + धि = राद्धिः ] । दीप्तिः [ प्रकाश, कान्ति ] स्रस्तिः [ पतन । √स्रंस् + क्तिन्, अनुनासिकलोप ] । ध्वस्तिः [ ध्वंस, पतन । ध्वंस् + क्तिन् = ति, यहाँ भी

---

१. 'स्वरितः' इति वा पाठः । २. 'श्रुयजीषिस्तुभ्यः' इति वा पाठः ।

❀ ग्लाम्लाज्याहाभ्यो निः ( म० भा० ३. ३. ९५ वा० ४ ) ❀। ग्लानिः । म्लानिः । ज्यानिः । हानिः ।

❀ ऋकारल्वादिभ्यः क्तिन्निष्ठावद्भवति इति वक्तव्यम् ❀। कीर्णिः । गीर्णिः । जीर्णिः । शीर्णिः । लूनिः । पूनिः ।

❀ संपदादिभ्यः क्विप् ❀ ( भा० भा० ३. ३. १०८ वा० ९ ) । संपत् । विपत् । प्रतिपत् । क्तिन्नपीष्यते । संपत्तिः । विपत्तिः ॥

## १०९२. स्थागापापचो भावे ॥ ९५ ॥ ( ३२७३ )

**न्यासः**

**इष्टिरिति** । वच्यादिसूत्रेण संप्रसारणम् । **कीर्णिः, गीर्णिः, शीर्णिरिति** । 'ऋत इद्धातोः' इतीत्वम्, रषादिसूत्रेण णत्वम् । यथा 'रदाभ्याम्' इत्यादिना कीर्ण इति निष्ठायास्तकारस्य नत्वं भवति, तथेहापि क्तिनः । 'ल्वादिभ्यः' इति लून इत्यत्र निष्ठातकारस्य नत्वं तथा लूनिः, पूनिरित्यत्रापि क्तिनः ॥ ९४ ॥

**स्थागापापचो भावे ॥ अङोऽपवादस्य बाधक इति** । स्थादिभ्यः 'आतश्चोपसर्गे' इति प्राप्तस्याङोऽप-

**पदमञ्जरी**

सत्यम्; प्रयोगबाहुल्यादिदमपि भवतीति मन्यते । एवं च युज्विषयेऽपि क्तिन्प्रयुज्यते—**आस्तिरिति** । अत एवा-बादयः प्रयोगतोऽनुसर्त्तव्या इत्युक्तम् ।

**श्रुयजिस्तुभ्यः करण इति** । ल्युटि प्राप्ते वचनम्, श्रुतिः श्रोत्रम्, इज्यतेऽनया देवता इष्टिः । **ऋकारल्वा-दिभ्य इति** । ऋकारान्तेभ्यो ल्वादिभ्यश्च परः क्तिन्निष्ठाकार्यं लभते -'रदाभ्यां निष्ठातो नः', 'ल्वादिभ्यः' इति च; निष्ठायां विधीयमानं नत्वं क्तिनोऽपि भवतीत्यर्थः । **क्तिन्नपीष्यते इति** । 'अस्त्रियाम्' इति प्रतिषेधाद् वाऽसरूपविधेरभावादिदमुक्तम् ॥ ९४ ॥

**स्थागापापचो भावे ॥ अङोऽपवादस्य बाधक इति** । स्थादिभ्यः 'आतश्चोपसर्गे' इति प्राप्तस्य । पचेस्तु

**भावबोधिनी**

अनुनासिक लोप ] । आस्तिः । [ आस्+क्तिन् = बैठना ] । लब्धिः [ प्राप्ति । लभ्+क्तिन् = ति, त् का ध् और भ् का जश्त्व—ब् ] ।

'श्रु, यज् और स्तु—इन धातुओं से करण अर्थ में क्तिन् कहना चाहिये ।' श्रुतिः जिसके द्वारा सुना जाय= कान । इष्टिः [ यज्ञ । इज्यतेऽनया, जिसके द्वारा याग किया जाय । यज् + क्तिन् = ति, कित् होने से य् का सम्प्रसारण 'इ' और 'अ' का पूर्वरूप ज का ष, ष्टुत्व] । स्तुतिः ( स्तूयतेऽनया जिससे प्रशंसा की जाय ) ।

ग्लै, म्लै, ज्या और हा - इन धातुओं से नि प्रत्यय कहना चाहिये । उदा०—ग्लानिः ( खेद । ग्लै + नि, ऐ का आत्व ) । म्लानिः ( उदासी, दुःख । म्लै + नि, ऐ का आत्व ) ज्यानिः ( बुढ़ापा । ज्या + नि ) । हानिः ( हानि = नुकशान । हा + नि ) ।

'ऋकारान्त धातुओं से और लू आदि धातुओं से होने वाले क्तिन् प्रत्यय को निष्ठा प्रत्यय के समान कहना चाहिये, अर्थात् निष्ठाप्रयुक्त कार्य होते हैं ।' उदा०—कीर्णिः ( फैलाना । √कॄ + क्तिन्, ॠ का इत्व और रपर करने पर किर् + ति, "हलि च" ८।२।७७ से उपधा दीर्घ, निष्ठावद्भाव के कारण त का न और न का ण ) गीर्णिः [ निगलना= भोजन करना । √गॄ + क्तिन् शेष प्रक्रिया पूर्ववत् ] । जीर्णिः [ बुढ़ापा । √जॄ + क्तिन्, प्रक्रिया पूर्ववत् ) शीर्णिः [ नाश । √शॄ + क्तिन् ] । लूनिः [ काटना । √लू + क्तिन् = ति, त का न ] । पूनिः [ पवित्रता । √पू + क्तिन् ] ।

'सम्पत् आदि शब्दों से क्विप् होता है ।' उदा० — सम्पत् [ सम्पत्ति ] । विपत् [ विपत्ति ] । प्रतिपत् [ प्रतिपत्ति = ज्ञान, गमन ] । 'सम्पत् आदि शब्दों से क्तिन् भी इष्ट है ।' सम्पत्तिः [ सम्पन्नता ] । विपत्तिः विपन्नता ] ॥ ६४ ॥

'स्त्रियाम्' इति वर्त्तते। स्थादिभ्यो धातुभ्यः स्त्रीलिङ्गे भावे क्तिन् प्रत्ययो भवति। अङोऽपवादस्य ( ३. ३. १०६, ३. ३. १०४ ) बाधकः। प्रस्थितिः। उद्गीतिः। संगीतिः। प्रपीतिः। संपीतिः। पक्तिः। भावग्रहणमर्थान्तरनिरासार्थम्। कथमवस्था, संस्थेति ? 'व्यवस्थायामसंज्ञायाम्' ( १. १. ३४ ) इति ज्ञापकाद् नात्यन्ताय बाधा भवतीति ॥

१०५३. मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ॥ ९६ ॥ ( ३४२० )

'भावे' 'स्त्रियाम्' इति वर्तते। मन्त्रे विषये वृषादिभ्यो धातुभ्यः क्तिन् प्रत्ययो भवति, उदात्तः। प्रकृति-प्रत्यययोर्विभक्तिविपरिणामेन सम्बन्धः। कस्मादेवं कृतम् ? वैचित्र्यार्थम्। वृ॒ष्टिः ( ऋ० १. ३८. ८ )। इ॒ष्टिः

**न्यासः**

वादस्य बाधक इत्यर्थः। **पक्तिरिति**। 'षिद्भिदादिभ्योऽङ्' इत्यस्य। **प्रस्थितिरिति**। 'द्यतिस्यति' इत्यादिनेत्त्वम्। **संगोतिरिति**। घुमास्थादिसूत्रेणेत्त्वम्। अत्र च 'गामादाग्रहणेष्वविशेषः' इति गै शब्दे' 'गाङ् गतौ' इति द्वयो-रपि ग्रहणम्। पा इति। पूर्ववत् पानार्थस्य ग्रहणम्, न रक्षणार्थस्य। **भावग्रहणमित्यादि**। अर्थान्तरम् = कर्तृवर्जितं कारकम्, तन्निवृत्त्यर्थं भावग्रहणम्।

**कथमित्यादि**। यद्यङोऽपवादस्यापवादोऽयं क्तिन्प्रत्ययस्तत् कथमवस्था संस्थेति सिध्यति ? न कथञ्चि-दित्यभिप्रायः। **व्यवस्थायामित्यादि**। यदिदं व्यवस्थाशब्दस्याङन्तस्य सूत्र उच्चारणमेतदेव ज्ञापकम्, अतः क्तिनात्यन्तबाधा न भवतीति तेनावस्थेत्याद्यपि सिध्यति। **अत्यन्तायेति**। चतुर्थ्यन्तप्रतिरूपको निपातोऽयम्, यथा—चिरायेति ॥ ९५ ॥

**मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः** ॥ 'वृषु मृषु सेचने', 'इषु इच्छायाम्', 'डुपचष् पाके', 'मन ज्ञाने', 'विद ज्ञाने', 'भू सत्तायाम्', 'वी गतिव्याप्तिप्रजनादिषु', 'रा आदाने'। **प्रकृतिप्रत्यययोरिति**। प्रकृति-

**पदमञ्जरी**

षित्वात् प्राप्तस्याङोऽपवादः। कां स्थायिकाम्, स्थायिमित्यत्र 'विभाषाख्यानपरिप्रश्नयोः' इति प्राप्तयोर्ण्वुलिञोरपि बाधकः कस्मान्न भवति ? 'पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान्' ( परि० ) इति।

**कथमिति**। न कथञ्चिद्; वाऽसरूपविधेरभावात्। **नात्यन्तायेति**। नियमेन चतुर्थ्यन्तप्रतिरूपकोऽयं निपातः, यथा—चिरायेति ॥ ९५ ॥

**मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः** ॥ **प्रकृतिप्रत्यययोरिति**। प्रकृतिसामान्यविवक्षायां द्विवचनम्; अन्यथा बहुत्वात् प्रकृतीनां बहुवचनप्रसङ्गात्। **विभक्तिविपरिणामेनेति**। वृषादीनां द्वन्द्वे या प्रथमा तस्याः

**भावबोधिनी**

'स्त्रियाम्' [ स्त्रीलिङ्ग में ]—इसकी अनुवृत्ति होती है। स्त्रीलिङ्ग में भाव अर्थ में √स्था आदि धातुओं से क्तिन् प्रत्यय होता है। [ "आतश्चोपसर्गे" ३।३।१०६ से प्राप्त ] अपवाद अङ् प्रत्यय का बाधक यह है अर्थात् सूत्रोक्त धातुओं से अङ् न होकर क्तिन् ही होता है। उदा०—प्रस्थितिः [ प्रस्थान, अवस्था ]। उद्गीतिः [ सामगान ] संगीतिः [ संगीत ]। प्रपीतिः [ खूब पीना ]। सम्पीतिः [ सम्यक् रूप से अथवा साथ में पीना ]। पक्तिः [ पकाना ]। [ अनुवृत्ति से 'भावे' का कार्य सम्भव रहने पर भी ] पुनः 'भावे' का उल्लेख अन्य अर्थों का निराकरण करने के लिये है।

अवस्था और संस्था [ आदि प्रयोग ] कैसे होते हैं ? [ पाणिनि के ] "व्यवस्थायाम् असंज्ञायाम्' ( १।१।३४ ) इस निर्देश को ज्ञापक मान लेने से अत्यन्त = सर्वथा बाध नहीं होता है। [ अतः कभी अङ् प्रत्यय भी हो जाता है। इस प्रकार अङ् प्रत्यय और टाप् करके 'अवस्था' आदि शब्दों की सिद्धि करनी चाहिये ॥ ९५ ॥

'भावे' तथा 'स्त्रियाम्' [ भाव में और स्त्रीलिङ्ग में ]—इनकी अनुवृत्ति होती है। मन्त्रविषय में √वृष आदि धातुओं से क्तिन् प्रत्यय [ भाव में स्त्रीलिङ्ग में ] होता है, वह उदात्त होता है। प्रकृतिभूत धातुओं का और

( ऋ० ४. ४. ७ ) । पक्तिः ( ऋ० ४. २४. ५ ) । मतिः ( ऋ० १.१४१. १ ) । वित्तिः ( वा० सं० १८. १४ ) । भूतिः ( वा० सं० १८. १४ ) । वीतिः ( अ० वे० २०. ५९. ३ ) रातिः ( ऋ० १. ३४. १ ) ।

**सर्वत्र सर्वधातुभ्यः सामान्येन विहित एव क्तिन् । उदात्तार्थं वचनम् । इषेस्तु 'इच्छेति' ( ३. ३. १०१ ) निपातनं वक्ष्यति, ततः क्तिन्नपि विधीयते । मन्त्रादन्यत्रादिरुदात्तः ॥**

## १०७४. ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च ॥ ९७ ॥ ( ३२७४ )

**न्यासः**

सामान्यविवक्षायां द्विवचनम्, अन्यथा हि बहुत्वात् प्रकृतीनां बहुवचनं स्यात् । **विभक्तिविपरिणामेन सम्बन्ध इति** । वृषादिभ्यो या प्रथमा तस्या अर्थात् पञ्चमीपरिणामः । तेन प्रकृतिप्रत्यययोः सम्बन्धः; अन्यथा सम्बन्धानुपपत्तेः । **मतिरिति** । 'अनुदात्तोपदेश' इत्यादिनाऽनुनासिकलोपः ।

**सर्वत्रेत्यादि** । मन्त्रे च, अमन्त्रे च—सर्वत्र वृषादिभ्यः क्तिन् विहितः । पचेरपि स्थागादिसूत्रेण । यद्येवम्, किमर्थमिदमित्याह—**उदात्तार्थमिति** । **इषेस्त्वित्यादि** । इषेरिच्छेति निपातनं वक्ष्यति, तस्मात् क्तिन् विधीयते, अन्यथा निपातनेनैवास्य बाधा स्यात् । वृषादिभ्यः क्तिन्प्रत्यय एव विधातव्यः । उदात्तवचनमुत्तरार्थम् । 'व्रजयजोर्भावे क्यप्' इति क्यबुदात्तो यथा स्यात् ॥ ९६ ॥

**ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च ॥ स्वरार्थं वचनमिति** । **न तु** प्रत्ययार्थम् । 'स्त्रियां क्तिन्' इत्येव सिद्धत्वात् । नाप्यूडर्थम्; 'ज्वरत्वर' इत्यादिनैव सिद्धत्वात् । **यौतेरिति** । 'यु मिश्रणे' इत्यस्य । **जवतेश्चेति** । 'जु'

**पदमञ्जरी**

पञ्चमीभावेन यो विपरिणामस्तेन प्रकृतिप्रत्यययोः संबन्धः, अन्यथा संबन्धानुपपत्तिरित्यर्थः । 'वृषु सेचने,' 'इषु इच्छायाम्' वृषिसाहचर्यादुदितो ग्रहणम् । सूत्रे त्वकारो न विवक्षितः । 'मन ज्ञाने,' 'मनु अवबोधने' द्वयोरपि ग्रहणम् । विदादीनामपि यथादर्शनम् । **सर्वत्रेति** । मन्त्रे चामन्त्रे चेत्यर्थः । वृषादिभ्यः क्तिन्प्रत्यये विधातव्ये उदात्तवचनमुत्तरार्थम्, व्रजयजोर्भावे क्यबुदात्तो यथा स्यात् । प्रमतिरित्यादौ च 'तादौ च निति कृत्यतौ' इति पूर्वपदप्रकृतिस्वरार्थं च । पिबतेरपि मन्त्रे क्तिन्नुदात्तो दृश्यते—'त्वं सुतस्य पीतये' (ऋ० १.५.६) 'मध्वः सोमस्य पीतये' (ऋ० १.४७.९ ) इति ॥ ९६ ॥

**ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च ॥ मन्त्रे इति नानुवर्त्तत इति** । तेन ब्राह्मणे भाषायां चायं विधिर्भवति ।

**भावबोधिनी**

प्रत्यय का सम्बन्ध विभक्ति-विपरिणाम के द्वारा होता है । [ अर्थात् सूत्र में प्रकृतिवाचक धातुओं के द्वन्द्वसमासान्त पद में जो प्रथमा विभक्ति है उसका पञ्चम्यन्तरूप से परिवर्तन करना चाहिये । अन्यथा प्रकृति और प्रत्यय का सम्बन्ध नहीं बन सकता । ] ऐसा प्रयोग क्यों किया गया ? विचित्रता के लिये । उदा०—वृष्टिः [ वर्षा । वृष् + क्तिन् = ति, ष्टुत्व ] इष्टिः [ इच्छा ] । पक्तिः [ पाक ] । मतिः [ ज्ञान ] । वित्तिः [ ज्ञान ] भूतिः [ होना, सम्पत्ति ] । वीतिः [ गमन या धन आदि ] । रातिः [ सम्पत्ति ] ।

[ मन्त्र और साधारण प्रयोग ] सभी स्थलों पर सभी धातुओं से सामान्यरूप से क्तिन् प्रत्यय किया ही गया है । [ अतः इनमें भी सामान्य सूत्र से ही सम्भव है । अतः उदात्त करने के लिये यह सूत्र है । [ अर्थात् इनमें प्रत्यय उदात्त रहता है । अन्यत्र निष्पन्न शब्द का आद्युदात्त होता है । ] √इष् से तो 'इच्छा' यह निपातन प्रयोग कहा जाने वाला है, इससे क्तिन् भी किया जाता है । मन्त्र से भिन्न स्थलों में आदि उदात्त होता है [ "ञ्नित्यादिर्नित्यम्" ६।१।१९७ के अनुसार ] ॥ ९६ ॥

'मन्त्रे' [ मन्त्रविषय में ]—इसकी अनुवृत्ति नहीं होती है । ऊति आदि शब्द निपातन से सिद्ध होते हैं । 'उदात्तः' इसकी अनुवृत्ति होती है । √अव् से 'क्तिन्' करने पर "ज्वरत्वरस्रिव्यविमवामुपधायाश्च" ६।४।२० से व् और उपधा अर्थात् अव् के स्थान पर ऊठ् = ऊ आदेश होता है—ऊतिः [ रक्षा ] ।

मन्त्रे' इति नानुवर्त्तते। ऊत्यादयः शब्दा निपात्यन्ते। 'उदात्त' इति वर्त्तते। अवतेः 'ज्वरत्वरस्त्रिव्य-विमवामुपधायाश्च' ( ६. ४. २० ) इति ऊठ्–ऊतिः। स्वरार्थं वचनम्। यौतेर्जवतेश्च–यूतिः। जूतिः। दीर्घत्वं च निपात्यते। सातिः-स्यतेः इत्वाभावोऽपि निपात्यते। सनोतेर्वा–'जनसनखनां सञ्झलोः' ( ६ ४. ४२ ) इत्यात्वे कृते स्वरार्थं निपातनम्। हन्तेर्हिनोतेर्वा–हेतिः। कीर्त्तयतेः–कीर्त्तिः॥

**१०५९. व्रजयजोर्भावे क्यप्॥ ९८॥ ( ३२७९ )**

'उदात्त' इत्येव। व्रजयजोर्धात्वोः स्त्रीलिङ्गे भावे क्यप् प्रत्ययो भवति, उदात्तः। क्तिनोऽपवादः। व्रज्या। इज्या। पित्करणमुत्तरत्र तुगर्थम्॥

**न्यासः**

इत्यस्य सौत्रस्य धातोः। दीर्घत्वञ्चेति। चकारादुदात्तत्वञ्च। क्तिन् सामान्यलक्षणेनैव सिद्धः। **स्यतेरिति**। 'षोऽन्तकर्मणि' इत्यस्य। **इत्वाभावोऽपि निपात्यत इति**। 'द्यतिस्यति' इत्यादिनेत्त्वं प्राप्नोति, ततस्तस्याभावो निपात्यते। **सनोतेर्वेति**। 'षणु दाने' इत्यस्य। 'जनसनखनाम्' इत्यात्त्वे कृते सातिरिति सिध्यतीति शेषः। यद्येवम्, किमर्थं निपातनमित्याह–**स्वरार्थमित्यादि**। असति हि निपातने सातिश्शब्द आद्युदात्तः स्यात्। अन्तोदात्तो यथा स्यादित्येवमर्थं निपातनम्। **हन्तेर्हिनोतेर्वेति**। हेतिरिति यदा हन्तेः, तदा हकारस्यैत्त्वं निपात्यते, अनुनासिकलोपस्तु 'अनुदात्तोपदेश' इत्यादिनैव सिद्धः। यदा तु 'हि गतौ' इत्यस्य, तदा गुणो निपात्यते। **कीर्त्तिरिति**। 'कृत संशब्दने' इत्यस्माच्चुरादिणिजन्तात् 'ण्यासश्रन्थो युच्' इति युचि प्राप्ते क्तिन्निपात्यते। 'उपधायाश्च' इतीत्त्वम् भवति, 'हलि च' इति दीर्घत्वम्॥ ९७॥

**व्रजयजोर्भावे क्यप्**॥ **इज्येति**। वच्यादिसूत्रेण संप्रसारणम्। यद्युदात्तं विधीयते पित्करणं किमर्थमित्याह–**पित्करणमुत्तरत्रेत्यादि**॥ ९८॥

**पदमञ्जरी**

**स्यतेरिति**। 'षोऽन्तकर्मणि' इत्यस्य। **इत्वाभाव इति**। 'द्यतिस्यति' इत्यादिना प्राप्तस्येत्वस्याभावः। **सनोतेर्वेति**।' षणु दाने' इत्यस्य। **हन्तेर्हिनोतेर्वेति**। यदा हन्तेस्तदा नकारस्येत्वं निपात्यते, यदा हिनोतेस्तदा तु गुणः। **कीर्त्तयतेरिति**। 'कृत संशब्दने' इत्यस्य चुरादिणिजन्तस्य 'ण्यासश्रन्थो युच्', इति युचोऽपवादः क्तिन्निपात्यते, उदात्तत्वं च। इडभावस्तु 'तितुत्र' इत्यादिना सिद्धः, 'उपधायाश्च' इतीत्वम्, 'हलि च' 'उपधायां च' इति दीर्घत्वम्। **कालापास्तु युचमपीच्छन्ति–कीर्त्तनेति**॥ ९७॥

**व्रजयजोर्भावे क्यप्**॥ **इज्येति**। वच्यादिसूत्रेण संप्रसारणम्। यद्युदात्त इति वर्त्तते, पित्करणं किमर्थमित्यत आह–**पित्करणमुत्तरत्र तुगर्थमिति**॥ ९८॥

**भावबोधिनी**

उदात्त स्वर के लिये यह सूत्र है। [ क्योंकि क्तिन् तो सामान्य रूप से ही सम्भव है। ] √यु + क्तिन् = यूतिः [ मिलाना ]। जु + क्तिन् जूतिः [ मागना ] इन दोनों में दीर्घत्व भी निपातित होता है। सातिः [ अन्त होना ] [ √षोन्तकर्मणि धातु से क्तिन् करने पर ओ का आत्व होने पर सा + ति यहाँ [ "द्यतिस्यति०" ७।७।४० से प्राप्त होने वाले ] इत्व का अभाव भी निपातन किया जाता है। अथवा √सन् धातु से "जनसनखनाम्" ६।४।४२ इससे 'न्' का आत्व करने पर केवल उदात्त स्वर के लिये निपातन किया जा रहा है? √हन् अथवा √हि से क्तिन् प्रत्यय किया जाता है—हेतिः [ हनन या गमन अर्थ है ]। √कृत् संशब्दने से कीर्तिः [ प्रशंसा, गुणगान ] [ चुरादिगणीय कृत् + णि + क्तिन् में ऋ का इत्व रपर और णिलोप करने पर कित् + ति में उपधादीर्घ होने पर कीर्त्तिः रूप बनता है। णिजन्त होने के कारण "ण्यासश्रन्थो युच्" ३।३।१०७ से युच् प्राप्त था, यहाँ क्तिन् निपातन किया गया है ]॥ ९७॥

'उदात्त' की ही अनुवृत्ति होती है। √व्रज् और √यज् धातुओं से स्त्रीलिङ्ग में भाव में क्यप् प्रत्यय होता है और वह उदात्त होता है। यह क्तिन् का अपवाद है। उदा०—व्रज्या [ गमन ]। इज्या [ याग ] [ यज् + क्यप् = य,

## १०५६. संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ॥ ९९ ॥ ( ३२७६ )

'भावे' इति न स्वर्यते[1] । पूर्वं एवात्रार्थाधिकारः । **समजादिभ्यो धातुभ्यः स्त्रियां क्यप् प्रत्ययो भवति उदात्तः, संज्ञायां विषये । समजन्त्यस्यामिति समज्या । निषद्या । निपत्या । मत्या[1] । विद्या । सुत्या । शय्या । भृत्या । इत्या । कथं तदुक्तम्—**

**न्यासः**

**संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ॥ 'भावे' इति न स्वर्यत इत्यादि ।** स्थागादिसूत्रे यद्भावग्रहणं कृतं तस्यैव स्वरितत्वं न क्रियते । **'भावे'** 'अकर्त्तरि च कारके संज्ञायाम्' इत्येष एवाधिकारः । **समज्येति** । 'अजेर्व्यघञपोः' इति वीभावो न भवति; संज्ञायामिति वचनात् । न हि वीभावे कृते संज्ञा गम्यते, नियतवर्णानुपूर्वीका हि संज्ञा भवति । **निषद्येति** । 'षद्लृ विशरणगत्यवसादनेषु' । निषीदन्ति तस्यामिति । **निपत्येति** । निपतन्ति तस्यामिति । **मत्येति** । मन्यन्ते तयति मत्या । पूर्ववदनुनासिकलोपः, ह्रस्वस्य तुक् । विदन्ति तया **विद्या** । सुन्वन्ति तस्यां **सुत्या** । शेरते तस्यां **शय्या** । 'अयङ् यि क्ङिति' इत्ययङादेशः । भरणं **भृत्या** । एति तया – इत्या = अयनमिति ।

'भृञोऽसंज्ञायाम्' इत्यत्र—

'संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति ।
स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति' ॥ ( म० भा० ३।१।११२ )

**पदमञ्जरी**

**संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ॥ भाव इति न स्वर्यत इति ।** पूर्वसूत्रे यद्भावग्रहणं तस्येहास्वरितत्वान्नानुवृत्तिरित्यर्थः । **समज्येति** । घञपोः प्रतिषेधे क्यप उपसंख्यानमिति वचनाद् वीभावाभावः । अन्ये तु संज्ञायामित्येव क्यपो विधानात् रूढ्यनुगमार्थत्वाच्च संज्ञाग्रहणस्य वीभावाभावमाहुः । न हि वीभावे सति संज्ञा गम्यते । समज्या = सभा, निषद्या = आपणः, निपत्या = पिच्छिला भूमिः, मन्या = गलपार्श्वशिरा मन्यन्तेऽनयेति कृत्वा । तया हि क्रुद्धो ज्ञायते । क्यपोऽझलादित्वाद् 'अनुदात्तोपदेश' इत्यनुनासिकलोपो न भवति, तदभावात्तुगपि न भवति । अन्ये तु—संज्ञायामिति वचनाद्यथा समज्येत्यत्र वीभावो न भवति, एवं मनेरनुनासिकलोपस्तत्र कृते तुगपीत्याहुः; नात्राप्तवचनमस्ति । विद्यते गृह्यतेऽनयार्थ इति **विद्या** । सूयतेभिषूयते सोमोऽस्यामिति **सुत्या** = अभिषवदिवसः । सुत्यमहरुत्तममिति त्वार्षं नपुंसकत्वम्, शय्यतेऽस्यामिति **शय्या** = खट्वादिः भरणं **भृत्या** = जीविका, ईयते गम्यतेनयेतीत्या = दीपिका ।

**भावबोधिनी**

धातु के य् का सम्प्रसारण और अ का पूर्वरूप होता है ? स्त्रीलिङ्ग में टाप् = आ होता है । ] यहाँ प्रत्यय का पित् करना अगले सूत्र में तुक् करने के लिये है [ न कि 'अनुदात्तौ सुप्पितौ' ३।१।४ से पित् मान कर अनुदात्त करने के लिये ] ॥ ९८ ॥

इसमें [ पूर्वसूत्र से ] 'भावे' की अनुवृत्ति नहीं होती है, क्योंकि पहले वाले 'भावे' इसके अर्थ का अधिकार ( अनुवृत्ति ) हो रहा है । समज् आदि धातुओं से स्त्रीलिङ्ग में क्यप् प्रत्यय होता है, उदात्त होता है, संज्ञाविषय में । उदा०—समञ्जन्ति अस्याम्—समज्या ( सभा । जिसमें लोग बैठते हैं । ) निषद्य ( बाजार । निषीदन्ति विक्रेतारः यस्याम् ) । निपत्या ( कीचड़ वाली जमीन । निपतन्ति यस्याम् ) । मन्या ( गले के पास की नाड़ी । मन्यतेऽनया । [ मत्या इस पाठ में क्यप् के फलस्वरूप अनुनासिक 'न्' का लोप और तुक् आगम होता है । ] विद्या ( विद्यते =

---

१. मत्येति वङ्गसंस्करणे पाठः, स एव हरदत्तमाधवभट्टोजिभिरादृतः ।

**'स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति' [ म० भा० ३।१।११२ ] इति ?**

**भावाधिकारः = भावव्यापारः, वाच्यत्वेन विवक्षितः, न तु शास्त्रीयोऽधिकारः ॥**

**न्यासः**

इत्युक्तम्, इह 'भाव इति न स्वर्यते' इत्यभिहितम्, अतः पूर्वोत्तरवचनं व्याहतमिति मन्यमान आह—**कथमित्यादि**। यदीह 'भावे' इति न स्वर्यते तत् कथं 'स्त्रियां भावाधिकारोऽस्ति' इत्युक्तम्, न हि 'भावे' इत्यस्वर्यमाणे भावाधिकारस्येहास्तित्वमुपपद्यते ? **भावाधिकारः=भावव्यापार इत्यादि** परिहारः। भावाधिकार-शब्देन तत्र व्यापारो वाच्यत्वेन विवक्षितः। स पुनर्भृत्याशब्दाभिधेयभावोपगमनलक्षणः। अतएवैतदुक्तं भवति—'संज्ञायां समजनिषद' इत्यादिना व्युत्पादितस्य भृत्याशब्दस्य भाव एवाभिधेयत्वमुपयाति, न तु कर्तृवर्जितं कारकम्। तेन कर्मणि कारके भार्येति सिध्यतीति। न तु शास्त्रीयोऽधिकारोऽयं स्वरितत्वासङ्गात् प्रतियोग-मुपतिष्ठते, स तत्र भावशब्देन विवक्षितो मा भूत्। समजन्ति तस्यां समज्या, निषीदन्ति तस्यां निषद्या, विदन्त्यनया विद्येत्येवमादीनां कारके करणादिके करणादसाधुत्वमिति न।

कथं पुनः भावेऽकर्त्तरि च कारके' सर्वस्मिन्ननुवर्तमाने क्वचिद् भावः क्यबन्तस्याभिधेयभावमुपयाति ? क्वचिदकर्त्तृकारकमेवेत्येष नियमो लभ्यते ? संज्ञावशात्। यत्रोत्पद्यमानेन प्रत्ययेन संज्ञा गम्यते तत्र भाव एवाभिधेयत्वं प्रतिपद्यते, इतरदुदास्ते। यत्र त्वकर्त्तरि कारके प्रत्ययेनोत्पन्नेन संज्ञा गम्यते, तत्र तदभिधेयता-मुपयाति, भावस्त्वौदासीन्यमवलम्बते। 'अकर्त्तरि च कारके संज्ञायाम्' इति संज्ञाग्रहणेऽनुवर्तमाने पुनः संज्ञाग्रहणं भावार्थम्, पूर्वकं हि संज्ञाग्रहणमकर्तृकारकेण सम्बद्धमिति। ततः कर्तृवर्जित एव कारके संज्ञायां स्यात्, न भावे। तस्माद् भावेऽपि संज्ञायामेव यथा स्यादित्येवमर्थं पुनः संज्ञाग्रहणम्। अथ कथं भृतिः, मतिः, आसुतिरिति ? निपातनात्। किं पुनर्निपातनम् ? 'कर्मणि भृतौ', 'मतिबुद्धिपूजार्थेभ्यश्च' 'रजः कृष्यासुतिपरिषदो वलच्' इति ॥ ९९ ॥

**पदमञ्जरी**

'भृञोऽसंज्ञायाम्' इत्यत्रोक्तम्—'स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिद्धयति' (म० भा०) इति, इह तु 'भाव इति न स्वर्यते' इत्युक्तम्, तत्र पूर्वापरविरोधं मन्यमानः पृच्छति- **कथं तदुक्तमिति**। परिहरति—**भावाधिकार इति**। संज्ञायामित्युच्यते, भृञश्च भाव एवोत्पद्यमानेन क्यपा संज्ञा गम्यते, अतः संज्ञावशाद्योऽयं भावस्य भृत्याशब्दवाच्यत्वेन व्यापारः स एव तत्र भावाधिकारो विवक्षितः, न तु शास्त्रीयः स्वरितत्वनिबन्धन इत्यर्थः संज्ञायामिति वर्तमाने पुनः संज्ञाग्रहणं भावार्थम्, पूर्वकं हि संज्ञाग्रहणं कारकेण सम्बद्धम्। असंज्ञायां तु क्तिन्नेव भवति ॥ ९९ ॥

**भावबोधिनी**

ज्ञायतेऽर्थः अनया - विद् + क्यप् )। सुत्या ( सूयते = अभिषूयते यस्यां वेलायाम्—जिस बेला में सोमरस निकाला जाता है। ) शय्या ( पलंग। शय्यतेऽस्याम् )। भृत्या [ भ्रियतेऽनया, नौकरी, जीविका ]। इत्या [ दीपिका, लालटेन। ईयते = गम्यते प्रकाशादिना अनया ]। ( महाभाष्य में ) यह कैसे कहा गया है—स्त्रीलिङ्ग में भाव अधिकार है इससे भार्या शब्द सिद्ध हो जाता है।

भावाधिकार = भावव्यापार वाच्यत्वरूप से विवक्षित है न कि शास्त्रीय अधिकार।

**विमर्श**—प्रस्तुत सूत्र की वृत्ति में लिखा है 'भावे इति न स्वर्यते' अर्थात् 'भावे' इसकी अनुवृत्ति नहीं होती है। परन्तु 'भृञोऽसंज्ञायाम्' ३।१।११२ सूत्र पर भाष्य में यह लिखा है—

''स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिद्धयति ॥' [ म० भा० ३।१।११२ ]

इस प्रकार दोनों में विरोध प्रतीत होता है। इसका उत्तर यह है कि भावाधिकार का अर्थ है भावव्यापार। भृञ् धातु से भाव में ही उत्पन्न होने वाले क्यप् प्रत्यय से संज्ञा का ज्ञान होता है। इसलिये संज्ञा के कारण भृत्या

## १०५७. कृञः श च ॥ १०० ॥ ( ३२७७ )

**करोतेर्धातोः स्त्रियां शः प्रत्ययो भवति; चकारात् क्यप् च । योगविभागोऽत्र कर्त्तव्यः, क्तिन्नपि यथा स्यात् । क्रिया । कृत्या । कृतिः ॥**

## १०५८. इच्छा ॥ १०१ ॥ ( ३२७८ )

**न्यासः**

**कृञ श च ॥ योगविभागोऽत्र कर्तव्य इति ।** कृञः क्यबिति भवति, ततः शश्च, यथाप्राप्तञ्चेति, तेन त्रीणि रूपाणि सिध्यन्ति । तत्र 'कृञः' इति योगेन कृत्येत्येतद्रूपं सिध्यति, 'श च' इत्यनेन क्रिया कृतिरिति चेत्येतद्रूपद्वयं क्रियत इति । यदा भावे शब्दस्तदा 'सार्वधातुके यक्', 'रिङ् शयग्लिङ्क्षु' इति रिङादेशः । यदा त्वकर्तरि कारके तदा यगभावाच्छ एव प्रत्यये परतो धातोरिङादेशे कृते 'अचि श्नुधातु' इत्यादिना तस्येयङ् । शकारः सार्वधातुकार्थः ॥ १०० ॥

**इच्छा ॥** इषेर्भावे शप्रत्ययो भवति; अभिधानशक्तिस्वाभाव्यात्, न कारके । **यगभावश्चेति ।** 'सार्वधातुके यक्' इति यक् स्यात्, अतस्तदभावो निपात्यते । **इच्छेति ।** 'इषुगमि' इत्यादिना छत्वम् ।

**पदमञ्जरी**

**कृञः श च ॥ योगविभाग इति ।** कृञः क्यब् भवति, ततः शः च, चकाराद्यथाप्राप्तं चेति । तेन त्रीणि रूपाणि भवन्ति; अन्यथा चकारेणानन्तरस्य क्यप एव समुच्चयः, न तु क्तिन इति क्तिन्न स्यात् । शकारः सार्वधातुकसंज्ञार्थः, तत्र यदा भावकर्मणोः शस्तदा 'सार्वधातुके यक्' रिङ् शयग्लिङ्क्षु' इति रिङादेशः, अन्यत्र शकार एव परतो रिङादेशः, 'अचि श्नुधातु' इत्यादिनेयङ् ॥ १०० ॥

**इच्छा ॥ इषेर्धातोरिति ।** 'इषु इच्छायाम्' इत्यस्माद्भावे शप्रत्ययो भवतीति; न त्वकर्त्तरि कारके, स्वभावात् ।

**भावबोधिनी**

इस शब्द का वाच्यत्वरूप जो भाव का व्यापार है वही उस भाष्य में भावाधिकार शब्द से विवक्षित है । अतः भृत्या शब्द भाव में ही वाच्यता को प्राप्त करता है, न कि कर्तृवर्जित कारक में । इसलिये 'भ्रियते या सा--इस कर्मकारक में क्यप् नहीं होता है अपितु ''ऋहलोर्ण्यत्'' ३।१।१२४ से ण्यत् प्रत्यय और ऋ की वृद्धि आदि करके भार्या शब्द बनता है । इसमें जुहोत्यादिगणीय अथवा क्र्यादिगणीय धातु से ण्यत् होता है । किन्तु प्रस्तुत सूत्र में भ्वादिगणीय भृञ् से क्यप् का विधान है और भृत्या रूप बनता है । यह संज्ञा शब्द है ॥ ९९ ॥

√कृ धातु से स्त्रीलिङ्ग में श प्रत्यय होता है; च के बल से क्यप् भी होता है । इसमें योगविभाग करना चाहिये, जिससे क्तिन् भी हो सके । [ 'कृञः' यह पहला योग है, कृञ् से क्यप् होता है । उसके बाद 'श च' इसमें चकार के बल से यथाप्राप्त ] क्तिन् भी होता है । इस प्रकार क्यप्, क्तिन् और श ये तीन प्रत्यय होते हैं और तीन रूप बनते हैं । उदा०--क्रिया [ कृ + श = अ, ''सार्वधातुके यक्'' ३।१।६७ से यक् प्रत्यय और ''रिङ् शयग्लिङ्क्षु'' ७।४।२८ से रिङ् आदेश करने पर क्रि य + अ, टाप्—क्रिया ] । कृत्या [ कृ + क्यप् = य, तुक् = त्, टाप् ] कृतिः [ कृ + क्तिन् = ति, तीनों शब्दों का एक ही अर्थ है । ] ॥ १०० ॥

√इष् धातु से श प्रत्यय और यक् का अभाव निपातित होता है । उदा० —इच्छा । [ इष् + श = अ, ''इषुगमियमां छः'' ७।३।७७ से ष् का छ्, तुक् = त् आगम और श्चुत्व के बाद स्त्रीलिङ्ग में टाप् = आ प्रत्यय होता है । यहाँ भाव और कर्म अर्थों में ''सार्वधातुके यक्'' ३।१।६७ से यक् प्राप्त होता है, उसका अभाव भी निपातन के बल से किया जाता है । ]

इषेर्धातोः शः प्रत्ययो यगभावश्च निपात्यते । इच्छा ।

❀ [ इच्छा ] परिचर्यापरिसर्यामृगयाऽटाट्यानामुपसंख्यानम् ❀ ( म० भा० ३. ३. १०१ वा० १ ) । परिचर्या । परिसर्या । मृगया । अटाट्या । ❀ जागर्तेरकारो वा ❀ ( म० भा० ३. ३. १०१ वा० २ ) । जागरा, जागर्या ॥

**१०५९. अ प्रत्ययात् ॥ १०२ ॥ ( ३२७९ )**

प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारः प्रत्ययो भवति । क्तिनोऽपवादः । चिकीर्षा । जिहीर्षा । पुत्त्रीया । पुत्त्रकाम्या । लोलूया । कण्डूया ॥

**न्यासः**

**परिचर्येत्यादि** । 'चर गत्यर्थः', 'सृ गतौ', 'मृग अन्वेषणे' चुरादावदन्तः, 'अट पट गतौ'—एभ्यो भावे शः, पूर्ववद् यक्, सर्त्तेर्गुणः । मृगयतेरकारलोपाभावः, 'णेरनिटि' इति णिलोपः । **अटाट्येति** । अटतेर्द्विर्वचनमात्वञ्चाभ्यासस्य ।

**जागर्तेरकारो वेति** । यदा शस्तदा 'सार्वधातुके यक्', 'जाग्रोऽविचिण्णल्ङित्सु' ( ७. ३. ८५ ) इति गुणः । **जागरेति** यदा त्वकारः ॥ १०१ ॥

**अ प्रत्ययात्** ॥ 'धातोः' इत्यधिकारात् प्रत्ययग्रहणं धातोर्विशेषणं विज्ञायत इत्याह **प्रत्ययान्तेभ्यो धातुभ्य इति** । **चिकीर्षेति** । चिकीर्षशब्दात् सन्नन्तादप्रत्ययः । **पुत्रीयेति** । 'सुप आत्मनः क्यच्', 'क्यचि च' इतीत्वम् । **पुत्रकाम्येति** । 'काम्यच्च' इति काम्यच् । **लोलूयेति** । 'धातोरेकाचो हलादेः' इति यङ् ॥ १०२ ॥

**पदमञ्जरी**

**परिचर्येत्यादि** । परिचर्यादीनामपि निपातनस्योपसंख्यानम्, परिचर्यादयोऽपि शप्रत्ययान्ता निपातयितव्या इत्यर्थः । तत्र सर्वत्र शप्रत्ययो यक्च निपात्यते । **परिचर्या**=पूजा । **परिसर्या**=परिसरणम्, अत्र गुणोऽपि निपात्यते ! 'मृग अन्वेषणे' चुरादावदन्तः, अत्रातो लोपाभावः; निपातनात् । शे यकि णिलोप—**मृगया** । अटतेः शे यकि यका सह टकारस्य द्विर्वचनम्, पूर्वभागे यकारस्य निवृत्तिर्दीर्घत्वमित्येतत्सर्वं निपात्यते । हलादिशेषस्तु नास्ति; षाष्ठिके द्विर्वचनेऽभ्याससंज्ञाविधानाद् । यदा त्वटयत्यर्थंशूर्णोतीनामिति यङन्तात् 'अ प्रत्ययात्' इत्यकारः, तदातो लोपे यलोपे चाटाटेति भवति ।

**जागर्त्तेरकारो वेति** । वाशब्दात् पक्षे शः, तदा सार्वधातुके यक्, 'जाग्रोऽविचिण्णल्ङित्सु' इति गुणः ॥ १०० ॥ १०१ ॥

**भावबोधिनी**

* 'परिचर्या, परिसर्या, मृगया और अटाट्या—इनका भी उपसंख्यान करना चाहिये । * उदा०—परिचर्या । [ परि चर् + श = अ, यक् = य, स्त्रीलिंग में टाप् = आ, परिचर्या = सेवा ]। परिसर्या [ परि सृ + श = अ, यक्, निपातन से गुण रपर, टाप् । भ्रमण अर्थ है ]। मृगया [ मृग + श = अ, निपातनात् धातु के अकारलोप का अभाव, यक् = य, टाप् । शिकार अर्थ है ]। अटाट्या [ अट् + श = अ, निपातन से धातु का द्वित्व, हलादिशेष, अभ्यास का आत्व, यक् और टाप् करने पर अटाट्या रूप बनता है । गमन अर्थ है । )

✓जागृ धातु से विकल्प से अ प्रत्यय होता है। उदा०—जागरा ( जागृ + अ, गुण, रपर, टाप् करने पर रूप सिद्ध होता है । ) जागर्या ( जागृ = श = अ, यक्, ऋ का गुण रपर और टाप् होता है । जागना अर्थ है ) ॥ १०१ ॥

प्रत्ययान्त धातुओं से स्त्रीलिङ्ग में [ भाव में ] अ प्रत्यय होता है । यह क्तिन् का अपवाद है । उदा०—चिकीर्षा [ सन्प्रत्ययान्त—चिकीर्ष + अ, टाप् = आ । करने की इच्छा—अर्थ है ] जिहीर्षा [ सन्नन्त हृञ् धातु—जिहीर्ष + अ, टाप् = आ । "अतो लोपः" ६।४।४८ से अलोप । हरण करने की इच्छा । ] पुत्रीया [ अपने पुत्र की इच्छा । यहाँ

१०६०. गुरोश्च हलः ॥ १०३ ॥ ( ३२८० )

हलन्तो या धातुर्गुरुमान् ततः स्त्रियामकारः प्रत्ययो भवति। क्तिनोऽपवादः। कुण्डा। हुण्डा। ईहा। ऊहा। गुरोरिति किम्? भक्तिः। हल इति किम्? नीतिः॥

१०६१. षिद्भिदादिभ्योऽङ् ॥ १०४ ॥ ( ३२८१ )

**न्यासः**

**गुरोश्च हलः**॥ 'धातोः' इत्यधिकाराद् गुरुग्रहणं हल्ग्रहणञ्च तस्यैव विशेषणं विज्ञायत इत्याह— **गुरुमान् हलन्तो यो धातुरित्यादि**। कथं पुनर्गुरोरित्युच्यमाने गुरुमान् धातुर्लभ्यते? सामर्थ्यात्। न हि हलन्तस्य धातोः कस्यचिद् गुरुसंज्ञा विहिता, उच्यते चेदं गुरोरिति, तत्र सामर्थ्याद् गुरुमान् धातुर्गुरुसंज्ञकेनाभेदोपचारं कृत्वा गुरुशब्देनोक्त इति गम्यते। इष्यते ह्यभेदोपचाराद् विनापि मतुपा तद्वतोरभिधानम्, यथा—शुक्लः पट इति। अथ रुध्यादिभ्य एव यथा स्यात्, कुडिप्रभृतिभ्यो मा भूदित्येवमर्थो विपर्ययः कस्मान्न विज्ञायते? 'गुर्वन्तो यो धातुर्हल्वान्' इति ज्ञापकात्, यदयं 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' इत्यप्रत्ययान्तस्य चेष्टा-शब्दस्य 'शकि शङ्कायाम्' इति च शङ्काशब्दस्य निर्देशं करोति, ततो ज्ञायते—नात्र विपर्यय इति। विपर्यये हि न हि चेष्टेति गुर्वन्तः, नापि शङ्केति। **कुण्डेत्यादि**। 'कुडि दाहे', 'हुडि संघाते', 'ईह चेष्टायाम्', 'ऊह वितर्के'—इत्येषां रूपाणि॥ १०३॥

**षिद्भिदादिभ्योऽङ्**॥ **गणपरिपठितेष्वित्यादि**। भिदादयोऽङन्ता एव गणे पठ्यन्ते, तेभ्यो यदि पुनरिहाङ् विहितः प्रातिपदिकेभ्यो विहितः स्यात्, तच्चायुक्तं स्यात्, धात्वधिकारात्, तस्मात् तेषु याः प्रकृतयोऽवयव-

**पदमञ्जरी**

**गुरोश्च हलः**॥ प्रकृतस्य धातोर्हला विशेषणात्तदन्तविधिरित्याह—**हलन्तो यो धातुरिति**। अज्विशेष-वाचिनो गुरुशब्दस्य हलन्ते धातौ न मुख्या वृत्तिः सम्भवतीति तद्वति तच्छब्दो विज्ञायत इत्याह—**गुरुमा-निति**। विपर्ययस्तु न भवति—गुर्वन्तो यो धातुर्हल्वानिति; 'चेष्टायामनध्वनि' 'आशंसायां भूतवच्च' इति निर्देशात्। **कुण्डा, हुण्डेति**। 'कुडि दाहे', 'हुडि संघाते'॥ १०३॥

**षिद्भिदादिभ्योऽङ्**॥ **गणपरिपठितेष्विति**। गणे तावद्भिदा छिदेत्यङन्ता एव समुदायाः पठ्यन्ते, तेषु

**भावबोधिनी**

क्यजन्त नामधातु पुत्रीय + अ, टाप् ]। पुत्रकाम्या [ अपने पुत्र की इच्छा। यहाँ काम्यच् प्रत्ययान्त नामधातु पुत्रकाम्या शब्द से अ, और टाप् ]। लोलूया [ बार बार काटना। यङ् प्रत्ययान्त लू के लोलूय + अ, टाप् ]। कण्डूया [ खुजली। यक् प्रत्ययान्त कण्डू के कण्डूय + अ, टाप् ]॥ १०२॥

हलन्त जो गुरुमान् [दीर्घ वर्णवाली] धातु है उससे स्त्रीलिङ्ग में [ भाव में ] अकार प्रत्यय होता है। यह क्तिन् का अपवाद है। उदा० कुण्डा, [ 'कुण्डि दाहे' इसमें इ का लोप करने पर नुम् आगम, अनुस्वार और परसवर्ण करने पर √कुण्ड् बनता है। यह संयुक्त से पूर्व है अतः "संयोगे गुरु" १।४।११ से गुरुमान् मान ली जाती है। फलतः प्रस्तुत सूत्र से अ प्रत्यय और टाप् = आ आदि होता है। इसका अर्थ है—जलाना ] हुण्डा [ समुदाय। हुडि संघाते—में इ इत् होने से नुम् आगम, अनुस्वार और परसवर्ण होता है। अतः पूर्ववत् गुरुमान् मानकर 'अ' और टाप् हो जाते हैं। ] ईहा। [ इच्छा ]। ऊहा [ तर्क ]। गुरुवर्णवाली धातु से—इसका क्या लाभ है? भक्तिः [ भज् इसमें गुरुवर्ण नहीं है। अतः क्तिन् होता है 'अ' नहीं होता है। ] हलन्त हो—इसका क्या फल है? नीतिः [ यहाँ √नी अजन्त है, अतः क्तिन् प्रत्यय होता है। ]॥ १०३॥

षकार की इत्संज्ञावाली धातुओं से और भिदादिगण में पठित धातुओं से स्त्री लिङ्ग में [ भाव में ] अङ् प्रत्यय होता है। गण में परिपठित भिदा आदि में प्रकृतिभूत [ भिदिर आदि ] निकाल कर यहाँ ग्रहण की जाती हैं। उदा०—

**षिद्भ्यो भिदादिभ्यश्च स्त्रियामङ् प्रत्ययो भवति। गणपठितेषु भिदादिषु निष्कृष्य प्रकृतयो गृह्यन्ते। जृष् – जरा। त्रपूष् – त्रपा।**

**भिदादिभ्यः खल्वपि – भिदा। छिदा। विदा। क्षिपा। ॐ गुहा गिर्योषध्योः ॐ ( म०भा० ३।३।१०४ वा० ५ )। श्रद्धा। मेधा। गोधा। आरा। हारा। कारा। क्षिया। तारा। धारा। लेखा। रेखा। चूडा। पीडा। वपा। वसा। मृजा [ सृजा ]। ॐ कृपेः संप्रसारणं च ॐ ( ग० सू० ३६ ) कृपा। ॐ भिदा विदारणे ॐ**

**न्यासः**

भूतास्ता निष्कृष्य=पृथक् कृत्वा 'षिद्भिदादिभ्योऽङ्' इति भिदादिग्रहणेन निर्दिश्यन्ते। ताः पुनः 'भिदिर् विदारणे', 'छिदिर् द्वैधीकरणे', 'विद ज्ञाने', 'क्षिप प्रेरणे', 'गुहू संवरणे', 'डुधाञ् धारणपोषणयोः', 'मिधृ मेधृ हिंसासंक्लेशनयोः', 'ऋ गतौ', 'हृञ् हरणे', 'डुकृञ् करणे', 'क्षि क्षये', अथ वा 'क्षि निवासगत्योः', 'तॄ प्लवनतरणयोः', 'धृञ् धारणे', 'लिख अक्षरविन्यासे', 'चुद समुच्छ्रये', 'पीड अवगाहने', 'डुवप बीजतन्तुसन्ताने', 'वस निवासे', 'मृजूष् शुद्धौ', 'कृप कृपायाम्' इत्येते वेदितव्याः। यदि तर्हि प्रकृतयो निर्दिश्यन्ते भिदादीनां गणे पाठोऽनर्थकः? अथ पाठः क्रियते प्रत्ययविधानमनर्थकम्? गणे पाठस्तावन्नानर्थकः; प्रसिद्ध्युपसंग्रहार्थत्वात्। प्रसिद्ध्युपसंग्रहस्तु यत्र भिदादयः समुदायाः प्रसिद्धास्तत्रैवैषां साधुत्वं यथा स्याद्, अन्यत्र मा भूदित्येवमर्थः। तेन यदुक्तं भाष्ये 'भिदा विदारणे' इत्येवमादि, तदुपपन्नं भवति। न च प्रत्ययविधानमनर्थकम्; असन्देहार्थत्वात्। असति हि तस्मिन् सन्देहः स्यात्—किमेषु 'इगुपधज्ञाप्रीकिरः कः' इत्येवमादिना लक्षणान्तरेण कप्रभृतयः प्रत्यया विहिताः? उताङ् प्रत्यय एवेति? तत्र पूर्वस्मिन् पक्षे स्त्रीत्वविवक्षायां क्तिन् प्रसज्यते, कस्मात्? असन्देहार्थत्वात्। अतः प्रत्ययविधानं नानर्थकम्।

**पदमञ्जरी**

भिदिच्छिदिप्रभृतयोऽङः प्रकृतयो यास्ता इह भिदादिशब्देन निर्दिश्यन्त इत्यर्थः। कुत एतत्? धात्वधिकारात्। **भिदादिभ्यो धातुभ्य इति**। 'भिदिर् विदारणे', 'छिदिर् द्वैधीकरणे', 'विद ज्ञाने', 'क्षिप प्रेरणे', 'गुहू संवरणे', 'डुधाञ् धारणपोषणयोः', 'मिधृ मेधृ हिंसासंक्लेशनयोः', 'ऋ गतौ', 'हृञ् हरणे', 'क्षि क्षये', अथ वा 'क्षि निवासगत्योः', 'तॄ प्लवनतरणयोः', 'धृञ् धारणे', 'लिख अक्षरविन्यासे', 'चुद प्रेरणे', 'पीड अवगाहने', 'डुवप् बीजतन्तुसन्ताने', 'वस निवासे', 'मृजूष् शुद्धे', 'कृप कृपायाम्' इत्येते वेदितव्याः।

**भावबोधिनी**

जृष्—जरा [ बुढ़ापा। ष् की इत्संज्ञा लोप करने पर षित् हो जाने से अङ् प्रत्यय होता है। "ऋदृशोऽङि गुणः" ७।४।१६ इससे गुण और रपर होने पर जर्+अ, टाप् ] त्रपूष्—त्रपा [ लज्जा, यहाँ ऊ ष् इनकी इत्संज्ञा और लोप के बाद अङ् प्रत्यय और टाप् ]।

भिद् आदि से अङ् होता है—भिदा [ 'भिदिर् विदारणे' में इर् का लोप, अङ् और टाप् करने पर भिदा = तोड़ना ]। छिदा [ फाड़ना। छिदिर् द्वैधीकरणे। इर् की इत्संज्ञा लोप, अङ् प्रत्यय और टाप्। विदा [ विद ज्ञाने। अङ्, टाप। ज्ञान अर्थ है ]। क्षिपा [ फेंकना। 'क्षिप प्रेरणे' यहाँ अङ् और टाप् होते हैं। ] 'गुहा—शब्द गिरि [ पर्वत के एक भाग ] और औषधि अर्थ में ही साधु होता है।' [ गुह् + अङ् + टाप् ]। श्रद्धा [ श्रत् पूर्वक √डुधाञ् = धा से अङ् प्रत्यय, आलोप, जश्त्वादि और टाप् ] मेधा [ मेध् + अङ् ]। आरा [ गमन। ऋ गतौ, ऋ+ अङ्, "ऋदृशोऽङि गुणः" ७।४।१६ इससे ऋ का गुण और रपर करने के बाद दीर्घत्व का भी निपातन होता है ] कारा [ करना ]। हारा [ हरना। इन दोनों की प्रक्रिया 'आरा' के समान है ]। क्षिया [ रहना, जाना, नाश। क्षि + अङ् इ का इयङ् और टाप् ]। तारा [ पार करना ] धारा [ धारण करना। इनमें भी आरा – के समान प्रक्रिया है ]। लेखा [ लिखना ]। रेखा [ लिखना। दोनों में लिख् + अङ्, गुण और वैकल्पिक रेफ का निपातन होता है ]। चूडा [ 'चुद प्रेरणे'—यहाँ अङ् प्रत्यय, द् का ड् और दीर्घत्व का निपातन होता है]। वपा [ 'डुवप् बीजतन्तुसन्तानयोः' से

**( म० भा० ३.३.१०४ वा० १ )। भित्तिरन्या। ❀ छिदा द्वैधीकरणे ❀ ( म० भा० ३.३.१०४ वा० २ )। छित्तिरन्या। ❀ आरा शस्त्र्याम् ❀ ( म० भा० ३.३.१०४ वा० ३ ) आर्त्तिरन्या। ❀ धारा प्रपाते ❀ ( म० भा० ३.३.१०४ वा० ४ ) धृतिरन्या ॥**

१०६२. चिन्तिपूजिकथिकुम्बिचर्चश्च ॥ १०५ ॥ ( ३२८२ )

**'चिति स्मृत्याम्', ( धा० पा० १५३६ ) 'पूज पूजायाम्', ( धा० पा० १६४३ ) 'कथ वाक्यप्रबन्धे',**

न्यासः

❀ **आरेति**। 'ऋदृशोऽङि गुणः'। **गुहा गिर्य्योषध्योरिति**। गुहाशब्दो गिर्य्योषध्योरेव साधुर्भवति, नान्यत्र। गिरिशब्दश्चात्र 'समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्त्तन्ते' इत्येकदेशे वर्त्तते। गुहेति गिरेः कश्चिदेवैकदेश उच्यते। गुहा नामौषधिः। अन्यत्र गुहेः क्तिन् भवति-गूढिरिति। 'हो ढः', 'झषस्तथोर्धोऽधः', 'ष्टुना ष्टुः', 'ढो ढे लोपः', 'ढ्रलोपे पूर्वस्य दीर्घोऽणः'। **हारा, कारा, धारेति**। गुणे कृते दीर्घत्वं निपात्यते। **लेखा, रेखेति**। लिखेर्गुणो निपात्यते। पक्षे लकारस्य रेफश्चादेशः। **चूडेति**। चोदयतेडत्वादेशो निपात्यते, उपधाया दीर्घश्च। **आरा शस्त्र्यामिति**। आराशब्दः शस्त्र्यां साधुर्भवति, अत्रापि गुणे कृते दीर्घत्वं निपात्यते। **आर्त्तिरन्येति**। अर्त्तेराङ्पूर्वस्य क्तिन्। 'उपसर्गादृति धातौ' इत्येकादेशः, रपरत्वम्। **धारा प्रपाते इति**। यत्र प्रपातनं तत्र धारेति, यथा—जलधारा, क्षीरधारेति ॥ १०४ ॥

**चिन्तिपूजिकथिकुम्बिचर्चश्च ॥ चुरादिरिति**। एतत् 'चिति स्मृत्याम्' इत्यादिभिः प्रत्येकमभिसम्बध्यते।

पदमञ्जरी

**जरेति**। 'ऋदृशोऽङि गुणः'। ❀ **गुहा गिर्योषध्योरिति**। गिरिशब्देन तदेकदेश उच्यते, अन्यत्र गूढिः, क्तिन्नेव भवति। **आरा ... धारेति**। गुणे कृते दीर्घत्वं च निपात्यते। **रेखा, लेखेति**। लिखेः पक्षे लकारस्य रेफो निपात्यते, गुणश्च। **चूडेति**। चुदेर्डत्वं दीर्घत्वं च निपात्यते। **भित्तिरन्येति**। भिद्यत इति भित्तिः=कुड्यम्, छित्तिः=छिद्रम्। **आरा शस्त्र्यामिति**। शस्त्री शस्त्रजातिः, स्वभावाच्च विशेषः परिगृह्यते। आरा=प्रतोदः, अर्यन्ते प्रेर्यन्तेऽनयाश्वा इति कृत्वा। **आर्त्तिरन्येति**। आङोऽर्तेश्च 'उपसर्गादृति धातौ' इति वृद्धिः। धार्यते=प्रपात्यते इति धारा। **धृतिरन्येति**। प्रीतिर्धैर्यं च ॥ १०४ ॥

**चिन्तिपूजिकथिकुम्बिचर्चश्च ॥ युचि प्राप्त इति**। सर्वेषामेव ण्यन्तत्वात्। कुम्बा=अग्रम्। 'उदीचीनकुम्बां शम्याम्' इति हि दृश्यते। चकारोऽनुक्तसमुच्चयार्थः—तुलयतेस्तुला। अथ 'गुरोश्च हलः' इत्यस्यानन्तरं

भावबोधिनी

अङ् सम्प्रसारणाभाव, टाप् ] वसा [ 'वस् निवासे' से अङ्, सम्प्रसारणाभाव, टाप् ] मृजा [ 'मृजूष् शुद्धौ' में ऊष् की इत्संज्ञा लोप के बाद अङ् टाप्। वास्तव में यहाँ तो षित् मानकर ही निर्वाह सम्भव था। अतः √सृज् से अङ् करके सृजा यह रूप मानना अधिक तर्कसंगत है। ] * कृप् का सम्प्रसारण भी होता है।' * कृपा [ कृप् + अङ्, रेफ का सम्प्रसारण ऋ करने पर कृप् + अ, टाप् ]। * भिदा यह विदारण अर्थ में ही होता है, अन्यत्र क्तिन् होकर भित्तिः—यह बनता है। * छिदा यह फाड़ना अर्थ में ही प्रयुक्त होता है, अन्यत्र क्तिन् होने से छित्तिः बनता है। [ भित्ति = दीवाल। छित्ति = छेद ]। * आरा यह शस्त्री = चाबुक अर्थ में ही है [ अर्यन्ते = प्रेर्यन्तेऽनया अश्वाः ]। अन्य अर्थ में आर्त्तिः। * प्रपात = गिरना अर्थ में धारा होती है [ जैसे जलधारा आदि ] अन्यत्र धृतिः [ = धैर्य ] होता है ॥ १०४ ॥

'चिति स्मृत्याम्' [ स्मरण अर्थवाली √चिन्त ], 'पूज पूजायाम्' [ पूजा अर्थवाली √पूज ] 'कथ वाक्यप्रबन्धे' [ कहना अर्थवाली √कथ ], 'कुबि आच्छादने' [ आच्छादित करना अर्थवाली √कुम्ब ], 'चर्च अध्ययने' [ अध्ययन अर्थवाली √चर्च ]—ये चुरादिगणीय हैं, इन धातुओं से [ "ण्यासश्रन्थो युच्" ३।३।१०७ से ] युच् प्राप्त रहने पर स्त्रीलिङ्ग में [ भाव में ] अङ् प्रत्यय होता है। उदा० — चिन्ता [ स्मरण ] √चिति में इ की इत्संज्ञा लोप होने से इदित्

( धा० पा० १८५२ ) 'कुबि आच्छादने', ( धा० पा० १६५६ ) 'चर्च अध्ययने' ( धा० पा० १७१३ ) चुरादिः - इत्येतेभ्यो धातुभ्यो युचि प्राप्ते स्त्रियामङ् प्रत्ययो भवति । चिन्ता । पूजा । कथा । कुम्बा । चर्चा । चकाराद् युजपि भवति – चिन्तना ।

१०६३. आतश्चोपसर्गे ॥ १०६ ॥ ( ३२८३ )

आकारान्तेभ्यो धातुभ्य उपसर्गे उपपदे स्त्रियामङ् प्रत्ययो भवति । क्तिनोऽपवादः । प्रदा । उपदा । प्रधा । उपधा । ❀ श्रदन्तरोरुपसर्गवद् वृत्तिः ❀ श्रद्धा । अन्तर्द्धा ॥

१०६४. ण्यासश्रन्थो युच् ॥ १०७ ॥ ( ३२८४ )

न्यासः

युचि प्राप्ते इति । 'ण्यासश्रन्थो युच्' इत्यनेन । यस्तु भ्वादौ कुम्बिः पठ्यते ततो 'गुरोश्च हलः' इत्यकारेण भवितव्यम् । न च कुम्बेरकारेऽङि वा सति कश्चिद्विशेषोऽस्तीति नासाविह ग्रहणं प्रयोजयति ॥ १०५ ॥

आतश्चोपसर्गे ॥ श्रदन्तरोरित्यादि । उपसर्गे इवोपसर्गवत् । यादृश्युपसर्गे वृत्तिः प्रत्ययोत्पत्तिलक्षणा, तादृश्येव तयोरपि भवति । तेन यथा-प्रधा, उपधेत्युपसर्गे भवति, तथा श्रदन्तरोरपि--श्रद्धा, अन्तर्धेति । न चेयं वृत्तिरुपसंख्यानसाध्या; यतः श्रद्धाशब्दस्तारकादिषु च पाठात् साधुत्वमनुभवति । अन्तर्धाशब्दोऽपि ज्ञापकात्, यदयम् 'अन्तर्धौ येनादर्शनमिच्छति' इत्यन्तर्धिशब्दस्य किप्रत्ययान्तस्य निर्देशं करोति, ततो ज्ञायते – भवत्यन्तः-शब्द उपसर्गकार्यस्य निमित्तमिति; अन्यथा हि तस्मिन्नुपपदे 'उपसर्गे घोः किः' इति किप्रत्ययो न स्यात्, ततश्च 'अन्तर्धौ' इति निर्देशो नोपपद्यते ॥ १०६ ॥

ण्यासश्रन्थो युच् ॥ अकारस्यापवाद इति । 'अ प्रत्ययात्', 'गुरोश्च हलः' इति द्वाभ्यां यथायोगं प्राप्तस्य ।

पदमञ्जरी

कस्मान्न कृतम्, किमङ्विधानेन ? तत्राऽपि कर्तव्यम्, को न्वत्र विशेषः । अपर आह —अङ्विधानसामर्थ्यात् पक्षे णिलोपो न भवति, चिन्तियेत्यादि भवतीति, नात्राप्तभाषितमस्ति ॥ १०५ ॥

आतश्चोपसर्गे ॥ श्रदन्तरोरित्यादि । उपसर्गे यादृशी वृत्तिः प्रत्ययोत्पत्तिलक्षणा तादृश्येव तयोरपि भवतीत्यर्थः । तत्र श्रद्धाशब्दस्तारकादिपाठात् सिद्धः, यदयम् 'अन्तर्धौ' इत्युपसर्गनिबन्धनं किप्रत्ययं निर्दिशति तद् ज्ञापयति—अन्तःशब्दः उपसर्गवृत्तिरिति । एवं च कृत्वा अन्तर्णयतीति 'उपसर्गादसमासेऽपि' इति णत्वमपि भवति ॥ १०६ ॥

ण्यासश्रन्थो युच् ॥ ण्यद्भविष्यतीति । ननु वाऽसरूपविधिना ण्यत्स्यात् स चास्त्रियामिति प्रतिषिद्धः ?

भावबोधिनी

मानकर नुम् और इसका अनुस्वार तथा परसवर्ण करने पर—चिन्त् + णि + अङ् में "णेरनिटि" ६।४।५१ से णि लोप के बाद टाप् ] पूजा [ पूजन ] । कथा [ कहना ] । कुम्बा [ साया आदि वस्त्र ] । चर्चा [ पढ़ना ] । सूत्र में 'च' का प्रयोग होने से युच् भी होता है—चिन्तना [ स्मरण । पूजना आदि ] ॥ १०५ ॥

उपसर्ग उपपद रहते आकारान्त धातुओं से [ भाव में ] स्त्रीलिङ्ग में अङ् प्रत्यय होता है । यह क्तिन् का अपवाद है । उदा०—प्रदा [ प्रदान करना, उपहार, भेंट ] । उपदा [उपदीयते —उप + दा + अङ्, आलोप, टाप् । उपहार] प्रधा [ धारण करना ] । उपधा [ स्थापना करना ] । व्याकरण का एक पारिभाषिक शब्द—"अलोऽन्त्यात् पूर्व उपधा" १।१।६५ ] । * "श्रत् और अन्तर्—इनको उपसर्ग के समान मानकर प्रत्ययोत्पत्ति करनी चाहिये' । श्रद्धा [श्रत् + धा + अङ्, आलोप, टाप् जश्त्वादि ] । अन्तर्द्धा [ अन्तर् + धा + अङ् आलोप, टाप् । छिपना अर्थ है ] ॥ १०६ ॥

ण्यन्त धातुओं से और आस् तथा श्रन्थ्—इन दोनों धातुओं से स्त्रीलिङ्ग में [ भाव में ] युच् प्रत्यय होता है । [ "अ प्रत्ययात्" ३।३।१०२ और "गुरोश्च हलः" ३।३।१०३ से प्राप्त ] 'अ' प्रत्यय का अपवाद यह युच् है । उदा०—

**ण्यन्तेभ्यो धातुभ्यः, आस, श्रन्थ–इत्येताभ्यां च स्त्रियां युच् प्रत्ययो भवति । अकारस्यापवादः । कारणा । हारणा । आसना । श्रन्थना ।**

**कथमास्या ? 'ऋहलोर्ण्यत्' ( ३.१.१२४ ) भविष्यति । वाऽसरूपप्रतिषेधश्च स्त्रीप्रकरणविषयस्यैवोत्सर्गापवादस्य ।**

**श्रन्थिः क्र्यादिर्गृह्यते – 'श्रन्थ विमोचनप्रतिहर्षयोः' ( धा० पा० १५११ ) इति, न चुरादिः – 'श्रन्थ ग्रन्थसंदर्भे' ( धा० पा० १८३९-४० ) इति; ण्यन्तत्वेनैव सिद्धत्वात् ॥ ❀ ( युच् प्रकरणे ) घट्टिवन्दिविदिभ्य उपसंख्यानम् ❀ ( म० भा० ३.३.१०७ वा० १ ) । घट्टना । वन्दना । वेदना । घट्टेस्तौदादिकस्य ग्रहणम् – 'घट्ट चलने' ( धा० पा० २५९ ) इति, न चौरादिकस्य—'घट्ट संवरणे' ( धा० पा० १६३१ ) इत्यस्य ग्रहणम्; तस्य णेरित्येव सिद्धत्वात् ।**

**❀ इषेरनिच्छार्थस्य युज्वक्तव्यः ❀ ( म० भा० ३.३.१०७ वा० २ ) । अध्येषणा । अन्वेषणा ॥**

**❀ परेर्वा ❀ ( म० भा० ३.३.१०७ वा० ३ ) । पर्येषणा, परीष्टिः ॥**

**न्यासः**

**कथमास्येति** । न कथञ्चित् । अः स्यादासेः, अनेन सूत्रेण युज् वा भविष्यति, नान्य इति भावः । **'ऋहलोर्ण्यत्' इत्यादिपरिहारः** । ननु च वाऽसरूपविधिना ण्यत्प्रत्ययः स्यात्, स च वाऽसरूपविधिः स्त्रियां न भवति, 'अस्त्रियाम्' इति प्रतिषेधात्, तत् किमुच्यते—'ऋहलोर्ण्यत्' इति ण्यद् भविष्यति ? इत्यत आह– **वाऽसरूपेत्यादि** । एष चार्थस्तत्रैव प्रतिपादितः ।

**उपसंख्यानमिति** । प्रतिपादनमित्यर्थः । तत्रेदं प्रतिपादनम्—वक्ष्यमाणं बहुलग्रहणमुभयोरपि योगयोः शेषः, तेन घट्टिप्रभृतिभ्यो भविष्यतीति । **वक्तव्य इति** । व्याख्येय इत्यर्थः । व्याख्यानं तदेव बहुलग्रहणमाश्रित्य कर्त्तव्यम् । **अन्वेषणेति** । 'इष गतौ', 'इष आभीक्ष्ण्ये' इति वा ॥ १०७ ॥

**पदमञ्जरी**

तत्राह –**वाऽसरूपप्रतिषेधश्चेति** । **उत्सर्गापवादस्येति** । समाहारद्वन्द्वः । द्वयोरप्युत्सर्गापवादयोः स्त्र्यधिकारावस्थितयोरित्यर्थः । **घट्टिवन्दिविदिभ्यश्चेति** । विदिर्लाभार्थो गृह्यते, न ज्ञानार्थः; 'विद चेतनाख्याननिवासेषु' इत्यस्यैव चुरादेर्वेदनेति ज्ञाने सिद्धत्वात् । न च वेत्तेः क्तिनो निवृत्त्यर्थं वचनम्; संवित्तिरिति दर्शनात् । **अन्वेषणेति** । 'इष आभीक्ष्ण्ये' 'इष गतौ' इति वा । युचश्चकारश्चिन्त्यप्रयोजनः, 'उदात्तः' इति हि वर्त्तते तत्सामर्थ्यादन्तोदात्तत्वं भविष्यति; प्रत्ययस्वरेणैवाद्युदात्तत्वसिद्धेः ॥ १०७ ॥

**भावबोधिनी**

कारणा [ √कृ + णि = कारि + युच् = यु = अन, णिलोप, टाप्, णत्वादि । कराना अर्थ है ] । हारणा [ हृ + णि = हारि + युच् = यु = अन, प्रक्रिया पूर्ववत् । चोरी कराना अर्थ है ] । आसना [ बैठना । आस् + युच् ] श्रन्थना [ ढीला करना । श्रन्थ + युच् ] ।

[ √आस् से 'अ' प्रत्यय होगा अथवा प्रस्तुत सूत्र से युच् होगा तो ] आस्या —यह प्रयोग कैसे होता है ? "ऋहलोर्ण्यत्" ३।१।१२४ से ण्यत् = य होने से बनेगा । "वाऽसरूपोऽस्त्रियाम्" ३।१।९४ यह असरूप का प्रतिषेध स्त्रीप्रकरण-विषयक ही उत्सर्ग एवम् अपवाद का है, अन्यत्र का नहीं है । [ अतः उससे बाहर वाला ण्यत् प्रत्यय करने में कोई बाधक नहीं है । ]

'श्रन्थ विमोचनप्रतिहर्षयोः' इस क्र्यादिगणीय श्रन्थ का ही यहाँ ग्रहण होता है, न कि 'श्रन्थ, ग्रन्थसन्दर्भे' इस चुरादिगणीय का भी; क्योंकि चुरादिगणीय का तो ण्यन्त मानकर ही युच् सिद्ध है । * 'घट्ट्, वन्द और विद —इनसे भी युच् कहना चाहिये ।' * घट्टना [ चलना ] । वन्दना [ प्रार्थना ] । वेदना [ दुख ] । 'घट्ट चलने' इस तुदादिगणीय

## १०६९. रोगाख्यायां ण्वुल् बहुलम् ।। १०८ ।। ( ३२८९ )

**रोगाख्यायां गम्यमानायां धातोः ण्वुल् प्रत्ययो बहुलं भवति । क्तिन्नादीनामपवादः । आख्याग्रहणम् – रोगस्य चेत्प्रत्ययान्तेन संज्ञा भवति । बहुलग्रहणं व्यभिचारार्थम् । प्रच्छर्द्दिका । प्रवाहिका । विर्चिचिका । न च भवति – शिरोऽर्त्तिः ।**

### न्यासः

**रोगाख्यायां ण्वुल् बहुलम् ।। क्तिन्नादीनामपवाद इति** । आदिशब्देनाङादीनाम् । **आख्याग्रहणमित्यादि** । यदि प्रत्ययान्तं रोगस्य नाम भवत्येवं प्रत्ययो भवति । नान्यथेतयस्यार्थस्य संवादनायाख्याग्रहणम् । तेन पदान्तर-वाच्ये रोगे न भवति – बुभुक्षा भस्मकेनेति । **बहुलग्रहणमित्यादि** । रोगाख्याया अन्यत्रापि ण्वुलो विधानं व्यभिचारः, तदर्थं बहुलग्रहणम् । तेन धात्वर्थनिर्देशेऽपि सिद्धो भवति ।

अपरोऽर्थः रोगाख्याया विषयाण्ण्वुलो विधेर्योऽन्यत्राप्यस्य लक्षणस्य विषये वृत्तिर्व्यभिचारः सः तदर्थं, बहुलग्रहणम् । तेन 'इक्श्तिपौ धातुनिर्देशे' इत्येवमादि सर्वं संगृहीतं भवति । **प्रच्छर्दिकेति** । 'छर्द वमने' चुरादिः । **प्रवाहिकेति** । 'वह प्रापणे' । **प्रर्चिचिकेति** । 'चर्च अध्ययने' चुरादिः । अत्र वहेः क्तिनि प्राप्ते ण्वुल्, इतरयोस्तु युचि । **शिरोऽर्त्तिरिति** । 'अर्द हिंसायाम्', 'अर्द गतौ' इति वा । 'खरि च' इति चर्त्वम् । शिरसा सह षष्ठीसमासः, 'ससजुषो रुः', 'अतो रोरप्लुतादप्लुते' इत्युत्वम्, 'आद् गुणः'; एङः पदान्तादति' इत्येते विधयः कर्त्तव्याः ।

### पदमञ्जरी

**रोगाख्यां ण्वुलबहुलम् ।। आख्याग्रहणमित्यादि** । यदि प्रत्ययान्तं रोगस्य नाम भवति, एवं प्रत्ययो भवति, नान्यथेत्येवमर्थमाख्याग्रहणमित्यर्थः । तेन पदान्तरद्योत्ये रोगे न भवति—बुभुक्षा भस्मकेनेति । भस्मको नाम रोगविशेषस्तत्राशितपीतादिकं शरीरस्य व्यापकं न भवति, सर्वदा च बुभुक्षा भवति । **बहुलग्रहणं व्यभिचारार्थमिति** । 'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव' इत्ययं व्यभिचारः । **प्रच्छदिकेति** । 'छर्द वमने', वमिः । मुहुर्मुहुः प्रवाहयति प्रवर्तयतीति ग्रहणी **प्रवाहिका** । **विर्चिचिकेति** । 'चर्च अध्ययने' प्रत्ययोपसर्गाभ्यां रोगप्रतीतिः, पामा **विर्चिचिका** । **शिरोर्त्तिः**=शिरस्तोदः । 'अर्द हिंसायाम्', 'तितुत्र' इतीडभावः, पूर्वपदस्य रुत्वम्, 'अतो रोरप्लुतात्' इत्युत्वम्, आद्गुणः' 'एङः पदान्तादति' ।

**धात्वर्थनिर्देश इति** । क्रियानिर्देश इत्यर्थः ।

### भावबोधिनी

घट्ट का ही ग्रहण है, न कि 'घट्ट संवरणे' इस चुरादिगणीय का । क्योंकि चुरादिगणीय से तो ण्यन्त मानकर ही सिद्ध है [ वास्तव में '√घट्ट चलने' यह भ्वादिगणीय है । ] * 'इच्छा से भिन्न अर्थवाली इष् धातु से युच् कहना चाहिये ।' * अध्येषणा । अन्वेषणा [ अधि + इष् + युच्, टाप्, अनु+इष्+युच्—टाप् । खोज करना, अर्थ है । ] * 'परि से परे इष् से विकल्प से होता है । * उदा०—पर्येषणा [ परि + इष् + युच् और पक्ष में ] **परीष्टिः** [ परि + इष् + क्तिन् । खोज करना अर्थ है । ] ।। १०७ ।।

रोगविशेष की आख्या = संज्ञा [नाम] प्रतीयमान रहने पर धातु से बहुलरूप से ण्वुल् प्रत्यय होता है । यह क्तिन् आदि का अपवाद है । आख्याग्रहण इसलिये है कि यदि प्रत्ययान्त निष्पन्न शब्द के द्वारा रोग का नाम प्रतीत हो रहा हो [ तभी प्रत्यय हो ] । बहुल का ग्रहण इसके व्यभिचार [ अन्यत्र भी करने ] के लिये है । उदा०—प्रच्छर्दिका [ उल्टी, वमन । प्रच्छर्द् + ण्वुल् = वु = अक, टाप् और इत्व ] । प्रवाहिका [ दस्त । प्र + वाहि + ण्वुल्, णिलोप ] । **विर्चिचिका** [ एक प्रकार का चर्मरोग । यद्यपि √'चर्च अध्ययने' है परन्तु उपसर्ग और प्रत्यय के योग से चर्मरोग की प्रतीति होती है । ] यह नहीं भी होता है—शिरोऽर्त्तिः [ सिर की पीडा । अर्द्+क्तिन्, शिरस् उपपद है अतः स् का रुत्व, उत्व् गुण, पूर्वरूपादि होता है । ]

❀ धात्वर्थनिर्देशे ण्वुल्वक्तव्यः ❀ ( म० भा० ३.३.१०८ वा० १ ) । आशिका । शायिका वर्त्तते ।

❀ इक्श्तिपौ धातुनिर्देशे ( इति वक्तव्यम् ) ❀ ( वा० २ ) । भिदिः । छिदिः । पचतिः । पठतिः ।

❀ वर्णात् कारः ❀ ( वा० ३ ) निर्देश इति प्रकृतम् । अकारः । इकारः ॥

❀ रादिफः ❀ ( वा० ४ ) । रेफः । ❀ मत्वर्थाच्छः ❀ ( वा० ५ ) । ( अकारलोपश्च । ) मत्वर्थीयः ।

**न्यासः**

**इक्श्तिपाविति** । शकारः शित्कार्यार्थः, तेन पचतिरिति सार्वधातुकनिबन्धनः शब् भवति । ननु च कर्त्तृ-वाचिनि सार्वधातुके शब् विधीयते, न चात्र कर्त्ता प्रत्ययार्थः, तत् कुतः शपः सम्भवः ? सार्वधातुकसंज्ञार्थ-शित्करणसामर्थ्यादकर्त्तृवाचिन्यपि सार्वधातुके शब् भविष्यति; अन्यथा हि शित्करणमनर्थकं स्यात् । यद्येवम्, यगपि स्यात् ? अनभिधानान्न भविष्यति ।

**वर्णात् कार इति** । वर्णादित्युच्यते, तत्र एवकार इति न सिध्यति ? बहुलग्रहणसन्निधौ वचनात् क्वचिद-वर्णादपि भविष्यतीत्यदोषः । अथ वा करणं कारः, एवस्य कार इति षष्ठीसमासोऽयम् ।

**रादिफ इति** । कारस्यायमपवादः ।

**मत्वर्थाच्छ इति** । अत्राकारलोपश्च वक्तव्यः । अभसंज्ञत्वाद्धि न प्राप्नोति । बहुलग्रहणाद्वाकारलोपो

**पदमञ्जरी**

**इक्श्तिपौ धातुनिर्देश इति** । धात्वनुकरण इत्यर्थः । बहुलवचनाच्च क्वचिन्न भवति - 'गुप्तिज्किद्भ्यः सन्', 'मान्बधदान्शान्भ्यः' इति । श्तिपः शित्करणसामर्थ्यादकर्तृवाचिन्यप्येतस्मिन् शबादयो भवन्ति । एवम-भावकर्मवाचिन्यपि । क्वचिद्यगपि भवति, यथा—'विभाषा लीयतेः', अत्र लीलीङोर्यका निर्देशः कृतः, श्यनि तु लीङ एव ग्रहणं स्यात्, न तु लीनातेः । कथं पुनः शित्करणस्य सामर्थ्यम्, यावता पिबतिर्जिघ्रतिरित्यादौ श्तिपि पिबाद्यादेशार्थं ग्लायत्यदावात्वप्रतिषेधार्थं च शित्करणं स्यात् ? एवं तर्हि 'उपासर्गात् सुनोतिसुवतिस्यति', विभाषा लीयतेः', 'भवतेर्ण उपसंख्यानम्', 'ध्यायतेः सम्प्रसारणं च' इत्येवमादिनिर्देशाच्छबादयो भविष्यन्ति ।

**वर्णादिति** । वर्णवाचिनो वर्णानुकरणादित्यर्थः, न तु वर्णादुच्चार्यमाणादिति । किं सिद्धं भवति ? ककार इत्यादौ साच्कादपि संघातात्कारः सिद्धो भवति; अकारस्योच्चारणार्थत्वेन वर्णमात्रस्यानुकार्यत्वात् । ककारस्येत्संज्ञा प्रयोजनाभावान्न भवति । बहुलग्रहणाद् 'अस्य च्वौ' 'यस्येति च' इत्यादौ कारप्रत्ययो न भवति । बहुलवचनादेव क्वचिद्वर्णसङ्घातादनुकरणादपि भवति—एवकार इति । अधातुविहितत्वेऽपि कारप्रत्ययस्य कृत्संज्ञाधिकारसामर्थ्याद्भवति । तेन कृदन्तत्वात् प्रातिपदिकसंज्ञा भवति, इडागमस्त्वनार्द्धधातुकत्वान्न भवति । किमर्थं पुनः कारप्रत्ययो विधीयते, यावता करणं कारः, अस्य कारोऽकार इत्येवमस्तु ? नैवं शक्यम्; एवं हि विज्ञायमाने ककारकरणमिति न स्यात्, करोतेः पौनरुक्त्यात् ।

**रादिफ इति** । कारस्यायमपवादः । कथं तर्हि 'रकारादीनि नामानि' ? वाऽसरूपविधिना कारोऽपि भविष्यति, पूर्ववत्कृत्संज्ञायां प्रातिपदिकत्वम् । **मत्वार्थाच्छ इति** । मतुना समानार्थो मत्वर्थस्ततः स्वार्थे छः । बहुलवचनादभत्वेऽपि यस्येति लोपः, पूर्ववत् प्रातिपदिकत्वम् । बहुलवचनात् क्वचिन्न भवति, यथा–'तसौ मत्वर्थे'

**भावबोधिनी**

* 'धात्वर्थ [ क्रिया ] का निर्देश करने में ण्वुल् कहना चाहिये ।' * उदा०—आशिका [ भोजन ] । शायिका [ शयन ] ।

* 'धातु का निर्देश करने पर इक् और श्तिप् ये प्रत्यय होते हैं ।' * उदा०— भिदिः [ भिद् + इक् । भिद् धातु अर्थ है ] । छिदिः [ छिद् + इक्, छिद् धातु अर्थ है । इक् के कित् होने से गुण नहीं होता है । ] पचतिः [ पच्

❀ इणजादिभ्यः ❀ ( वा० ६ )। आजिः। आतिः। आदिः ॥

❀ इक् कृष्यादिभ्यः ❀ ( वा० ७ )। कृषिः। किरिः ॥

१०६६. संज्ञायाम् ॥ १०९ ॥ ( ३२८६ )

**संज्ञायां विषये धातोर्ण्वुल् प्रत्ययो भवति। उद्दालकपुष्पभञ्जिका। वरणपुष्पप्रचायिका। अभ्यूषखादिका। आचोषखादिका। शालभञ्जिका। तालभञ्जिका ॥**

न्यासः

भविष्यति। **इणजादिभ्यः। इक् कृष्यादिभ्य इति**। अधातुनिर्देशार्थमेतत्। आज्यादयः शब्दाः संज्ञाशब्दा द्रष्टव्याः ॥ १०८ ॥

**संज्ञायाम्** ॥ **उद्दालकपुष्पभञ्जिकेति**। 'नित्यं क्रीडाजीविकयोः' इति षष्ठीसमासः। षष्ठी पुनरत्र 'कर्तृकर्मणोः कृतिः' इति कृद्योगलक्षणा ॥ १०९ ॥

पदमञ्जरी

इति। बहुलवचनादेव च मतुबर्थशब्दादपि भवति—शैषिकान्मतुबर्थीयादिति। **आजिरिति**। बहुलवचनाद् वीभावाभावः। **इक्कृष्यादिभ्य इति**। धात्वर्थनिर्देशे ण्वुलोऽपवादः ॥ १०८ ॥

**संज्ञायाम्** ॥ उद्दालः = श्लेष्मातकः, तस्य पुष्पाणि भज्यन्ते यस्यां सा **उद्दालपुष्पभञ्जिका**। वरणपुष्पाणि प्रचीयन्ते यस्यां **वरणपुष्पप्रचायिका**। अभ्यूषः = पूलिकाऽपूपविशेषः, स खाद्यते यस्यां **सा अभ्यूषखादिका**। तालस्य भञ्जनं यस्यां सा **तालभञ्जिका**। एवं **शालभञ्जिका** ॥ १०९ ॥

भावबोधिनी

धातु। पच् + श्तिप् शित् होने से सार्वधातुक मानकर शप् = अ विकरण होता है—पच् + अ + ति, प्रातिपदिक संज्ञा होने से सु, विसर्ग होता है। ] पठतिः [ पठ् धातु ]।

वर्णवाचक = वर्ण के अनुकरण से कार प्रत्यय होता है। निर्देश—इसकी अनुवृत्ति होती है। [ अतः वर्ण का निर्देश रहने पर कार प्रत्यय होता है। ] उदा०—अकारः [ अवर्ण ]। इकारः [ इवर्ण ]।

*'र' से वर्णनिर्देश में इफ प्रत्यय होता है। रेफः [ र + इफ = गुण ]।

*मत्वर्थ शब्द से छ प्रत्यय होता है। उदा०—[ मत्वर्थ + छ = ईय, अ का लोप निपातन से होता है ]—मत्वर्थीयः। [ यहाँ भ संज्ञा न होने के कारण अलोप निपातन से करना पड़ता है। ] * 'अज आदि से इण् प्रत्यय होता है।' * उदा०—आजिः [ अज + इण्, बहुल के कारण √अज् का वी आदेश नहीं होता है। उपधावृद्धि होती है। ] आतिः [ अत् + इण् ]। आदिः [ अद + इण् ]। [ ये संज्ञा शब्द है। ] * कृषि आदि से इक् प्रत्यय होता है। * उदा०—कृषिः [ खेती। कृष् + इक् ] किरिः [ कॄ + इक् ] ॥ १०८ ॥

संज्ञाविषय में [ भाव में और स्त्रीलिङ्ग में ] धातु से ण्वुल् प्रत्यय होता है। उदा०—उद्दालकपुष्पभञ्जिका [ जिस क्रिया अर्थात् खेल में उद्दालक नाम के फूल तोड़े जाते हैं। यहाँ उद्दालकपुष्पाणि उपपद भञ्ज् से ण्वुल् = वु = अक आदि किया जाता है। भञ्जिका बनाकर उद्दालक के साथ षष्ठीसमास होता है। ] वरणपुष्पभञ्जिका [ वरण नाम के फूल जिस खेल में एकत्रित किये जाते हैं ऐसी क्रिया। यहाँ भी प्रचि + ण्वुल् करके प्रचायिका बनाकर षष्ठीसमास करना चाहिये। ] अभ्यूषखादिका [ एक विशेष प्रकार की पूड़ी जिसमें खाई जाती है, वह क्रिया ]। आचोषखादिका [ चूस-चूस कर जिसमें खाया जाता है ऐसी क्रिया ]। शालभञ्जिका [ शालवृक्ष के फूल जिस खेल में तोड़े जाते हैं, ऐसी क्रिया ]। तालभञ्जिका [ ताल वृक्ष के फूल जिस खेल में तोड़े जाते हैं, ऐसी क्रिया ]।

विमर्श—उपर्युक्त सूत्र के उदाहरणों में "नित्यं क्रीडाजीविकयोः" २।२।१७ से षष्ठीसमास होता है। अतः सभी में क्रिया से उस प्रकार की क्रीडा = खेल अर्थ समझना चाहिये। अतः फूल तोड़कर जो क्रीडा होती है, वहाँ के लिये उक्त उदाहरण हैं। इसी प्रकार सभी उदाहरणों में क्रीडा में तत्तत्विशेषप्रकार की क्रियायें समझनी चाहिये ॥ १०६ ॥

## १०६७. विभाषाख्यानपरिप्रश्नयोरिञ् च ॥ ११० ॥ ( ३२८७ )

पूर्वं परिप्रश्नः, पश्चादाख्यानम्; सूत्रेऽल्पाच्तरस्य पूर्वनिपातः। परिप्रश्ने आख्याने च गम्यमाने धातोरिञ् प्रत्ययो भवति, चकाराद् ण्वुलपि। विभाषाग्रहणात् परोऽपि यः प्राप्नोति सोऽपि भवति। कां त्वं कारिमकार्षीः, कां कारिकामकार्षीः, कां क्रियामकार्षीः, कां कृत्यामकार्षीः कां कृतिमकार्षीः ? सर्वां कारिमकार्षम्, सर्वां कारिकामकार्षम्, सर्वां क्रियामकार्षम्, सर्वां कृत्यामकार्षम्, सर्वां कृतिमकार्षम्। कां गणिमजीगणः कां गणनामजीगणः ? सर्वां गणिमजीगणम्, सर्वां गणिकाम्, सर्वां गणनाम्। एवं कां याजिम्, कां याजिकाम् ? कां याचिम्; कां याचिकाम् ? कां पाचिम्, कां पाचिकाम्, कां पचाम्, कां पक्तिम् ? कां पाठिम्, कां पाठिकाम्, कां पठितिम् ? इति द्रष्टव्यम्। आख्यानपरिप्रश्नयोरिति किम् ? कृतिः। हृतिः॥

### न्यासः

**विभाषाख्यानपरिप्रश्नयोरिञ्च॥** इह सूत्रे पूर्वमाख्यानस्य निर्देशः, पश्चात् परिप्रश्नस्य; वृत्तौ तु 'परिप्रश्ने चाख्याने च गम्यमाने' इति पूर्वं परिप्रश्नस्योपन्यासः, पश्चादाख्यानस्य; तत्र यश्चोदयेत्—किं कारणमेवं वृत्तौ विपर्ययः कृत इति ? तं प्रत्याह—**पूर्वं परिप्रश्न इत्यादि।** परिप्रश्नपूर्वकं व्याख्यानं भवति, अतो वृत्तौ पूर्वं परिप्रश्नस्य तदुदाहरणस्य चोपन्यासः कृतः, पश्चादाख्यानस्य। क्रमव्यतिक्रमे प्रयोजनाभावादित्यभिप्रायः। सूत्रे तर्हि कस्मात् पूर्वं परिप्रश्नो न निर्दिष्टः, पश्चादाख्यानमित्याह—**सूत्र इत्यादि।** 'अल्पाच्तरम्' इति सूत्रेण द्वन्द्वे पदानां क्रमस्य नियतत्वादल्पाच्तरस्याख्यानशब्दस्य सूत्रे पूर्वनिपातः कृत इति दर्शयति। **कां कारिमिति।** इञ्। **कां कारिकामिति।** ण्वुल्। **कां क्रियामिति।** 'कृञः श च' इति शः। **कां कृत्यामिति।** तत्र चकारात् क्यप्। **कां कृतिमिति।** योगविभागात् क्तिन् कृतः। कां गणिमिति। इञ्। 'गण संख्याने' चुरादावदन्तः पठ्यते।

### पदमञ्जरी

**विभाषाख्यानपरिप्रश्नयोरिञ्च॥** ननु पूर्वं परिप्रश्नः, पश्चादाख्यानं भवति, तत्कथं क्रमव्युदासेन सूत्रे पूर्वमाख्यानस्य निर्देशः, पश्चात्परिप्रश्नस्य ? तत्राह—**पूर्वं परिप्रश्न इत्यादि।** सत्यं पूर्वं प्रश्नः पश्चादाख्यानमिति, सूत्रे तु लक्षणवशाद्विपर्यय आश्रित इत्यर्थः। स्वयं तु व्यत्यासेन व्याचक्षाणोऽर्थक्रमेण व्याचष्टे, उदाहरति च। **कारिकामिति।** ण्वुल्। **क्रियां कृत्यामिति।** 'कृञः श च', चकारात् क्यप् च। **कृतिमिति।** योगविभागात् क्तिन्। **गणिमिति।** 'गण सङ्ख्याने' चुरादिरदन्तः। **गणनामिति।** युच्। **एवमित्यादि। कां पाचिकां, पचाम्।** षित्वादङ्। **पक्तिः**—'स्थागापापच' इति क्तिन्। **कां याजिं याजिकामिम्। कां पाठिं पाठिकां पठितिम्।** तितुत्रेष्वग्रहादीनामिति वचनादिट्॥ ११०॥

### भावबोधिनी

पहले परिप्रश्न होता है बाद में आख्यान = उत्तर होता है परन्तु सूत्र में अल्प अच्वाला मानकर आख्यान शब्द का पूर्वप्रयोग किया गया है। परिप्रश्न और आख्यान = उत्तर प्रतीयमान रहने पर धातु से इञ् प्रत्यय होता है 'च' के बल से ण्वुल् भी होता है। विभाषा—का ग्रहण होने से और भी जो कोई प्रत्यय प्राप्त होता है, वह भी किया जाता है। [ अतः सभी प्रत्यय होते हैं। ] उदा०—(१) कां त्वं कारिम् अकार्षीः [ तुमने क्या काम किया ? यहाँ √कृ + इञ्, वृद्धि रपर करने पर 'कारि' बनता है ]। (२) कां कारिकाम् अकार्षीः [ क्या काम किया ? कृ + ण्वुल् = वु = अक. गुण, रपर टाप् और इत्व करने पर कारिका बनता है। ] (३) कां क्रियाम् अकार्षीः [ अर्थ वही ] कृ + श = अ, ऋ का रिङ् आदेश और क्रि + अ में सार्वधातुक मानकर यक् अथवा इ का इयङ् करने पर—क्रिया। ] (४) कां कृत्याम् अकार्षीः [ अर्थ पूर्वोक्त ] कृ + क्यप् = य, तुक्, टाप्—कृत्या ]। (५) कां कृतिम् अकार्षीः [ अर्थ पूर्वोक्त। कृ + क्तिन् ] [ इसी प्रकार √कृ से ( १ ) इञ्, ( २ ) ण्वुल्, ( ३ ) श, ( ४ ) क्यप् और ( ५ ) क्तिन् = पाँच प्रत्यय होते हैं। ये प्रश्न किये गये हैं। अब उत्तर में भी इन्हीं पाँच का प्रयोग दिखलाते हैं—(१) सर्वां कारिम् अकार्षम् [ मैंने सब काम

## १०६८. पर्यायार्हर्णोत्पत्तिषु ण्वुच् ॥ १११ ॥ ( ३२८८ )

**पर्यायः = परिपाटीक्रमः । अर्हणमर्हः = तद्योग्यता । ऋणं तद्यत् परस्य [परस्मै] धार्यतेः, उत्पत्तिः = जन्म – एतेष्वर्थेषु धातोर्ण्वुच् प्रत्ययो भवति । क्तिन्नादीनामपवादः । पर्याये तावत् – भवतः शायिका । भवतोऽग्रग्रासिका[1] । अर्हे अर्हति भवानिक्षुभक्षिकाम् । ऋणे – इक्षुभक्षिकां मे धारयसि । ओदनभोजिकाम् । पयःपायिकाम् । उत्पत्तौ – इक्षुभक्षिका मे उदपादि । ओदनभोजिका । पयः पायिका । विभाषेत्येव – चिकीर्षोत्पद्यते । ण्वुलि प्रकृते प्रत्ययान्तरकरणं स्वरार्थम् ॥**

न्यासः

**कां गणिकामिति । ण्वुल् । गणनामिति । युच् । एवम्—कां पाचिमित्यादि । कां पाचिमकार्षीः, कां पाचिकाम्, कां पचाम् । कां याजिम्, कां याजिकामित्यादि, कामिष्टिम् । कां पाठिम्, कां पाठिकाम्, कां पठितिमिति ॥ ११० ॥**

**पर्यायार्हर्णोत्पत्तिषु ण्वुच् ॥ क्तिन्नादीनामपवाद इति ।** आदिशब्देनाकारादीनाम् । **अग्रगामिकेति ।** अग्रस्य गामिका । कृद्योगलक्षणायाः कर्मणि षष्ठ्याः समासः । **स्वरार्थमिति ।** अन्तोदात्तत्वं यथा स्यादित्येवमर्थम् । ण्वुलि हि सति प्रत्ययात् पूर्वमुदात्तः स्यात् ॥ १११ ॥

पदमञ्जरी

**पर्यायार्हर्णोत्पत्तिषु ण्वुच् ॥ परिपाटीति ।** पटेः परिपूर्वात् 'इणजादिभ्यः' इति इण् तदन्तात् 'कृदिकारादक्तिनः' इति ङीष् । **तद्योग्यतेति ।** तच्छब्देन धात्वर्थ उच्यते । **परस्मै इति ।** 'धारेरुत्तमर्णः' इति सम्प्रदानसंज्ञा । **परस्येति** तु पाठे परस्य वस्त्वित्यर्थः । धार्यते = बध्यते । **ग्रामगामिकेति ।** कर्मणि षष्ठ्याः समासः । **उदपादीति ।** 'चिण् ते पदः' इति कर्त्तरि चिण् । **स्वरार्थमिति ।** 'चितः' इत्यन्तोदात्तत्वं यथा स्यात् । ण्वुलि तु 'लिति' इति प्रत्ययात्पूर्वमुदात्तं स्यात् ॥ १११ ॥

भावबोधिनी

कर लिया । √कृ + इञ् ] । (२) सर्वां कारिकाम् अकार्षम् [ अर्थ पूर्वोक्त । कृ + ण्वुल् ] । (३) सर्वां क्रियाम् अकार्षम् [ कृ + श ] । (४) सर्वां कृत्याम् अकार्षम् [ कृ + क्यप् ] । (५) सर्वां कृतिम् अकार्षम् [ कृ + क्तिन् ] । [ प्रश्न ] कां गणिम् अजीगणः ? [ कौन सी गणना की ? √गण + इञ्, अलोप ] । कां गणनाम् अजीगणः ? [ अर्थ पूर्वोक्त । √गण + युच् ] [ उत्तर-- ] सर्वां गणिम् अजीगणम् [ सभी गणना कर ली । √गण + इञ् ] सर्वां गणनाम् अजीगणम् [ अर्थ पूर्वोक्त । √गण् + णि + युच् ] । इसी प्रकार कौन सी याजि, याजिका [ = यज्ञ ] को ? कौन सी याचि, याचिका [ प्रार्थना ] को ? कौन सी पाचि, पाचिका, पचा, पक्ति [ पाक क्रिया ] को ? कौन सी पाठि, पाठिका, पठिति [ पठन क्रिया ] को ? आदि रूप समझने चाहिये ।

परिप्रश्न और उत्तर---इनमें ही होते हैं—इसके ग्रहण का क्या लाभ है ? कृतिः । हृतिः । [सामान्य अर्थ में केवल क्तिन् ही होता ] ॥ ११० ॥

(१) पर्याय = परिपाटीक्रम [ बारी ], (२) अर्हण = अर्ह = उस धात्वर्थ की योग्यता, (३) ऋण = जो दूसरे का धारण किया जाता है, (४) उत्पत्ति = जन्म—इन [ चार ] अर्थों में धातु से [ स्त्रीलिङ्ग भाव में ] ण्वुच् प्रत्यय होता है । यह क्तिन् आदि का अपवाद है । उदा०--पर्याय में–भवतः शायिका [ आपके शयन की बारी है । ], भवतः अग्रग्रासिका [आपकी प्रथम-भोजन की बारी है । अग्रगामिका पाठ उचित है ।] अर्ह–अर्हति भवान् इक्षुभक्षिकाम् [आप ईख=गन्ना खाने के योग्य हैं ] । ऋण में—इक्षुभक्षिकां मे धारयसि । [ तुम्हारे ऊपर मुझको गन्ना खिलाने का ऋण है । ] ओदनभोजिकाम् [ तुम्हारे ऊपर चावल खिलाने का ऋण है ] । पयःपायिकाम् [ इन दोनों के साथ 'धारयसि' यह जोड़ना चाहिये । दूध पिलाने का ऋण है ] । उत्पत्ति में इक्षुभक्षिका मे उदपादि [ आपने गन्ना खाना = चूसना मेरे लिये उत्पन्न किया ] । ओदनभोजिका [ चावल खाना मेरे लिये उत्पन्न किया ] । पयः पायिका [ दूध पीना मेरे लिये उत्पन्न किया ।

१. न्यासे 'अग्रगामिकेति' पदमञ्जर्याञ्च 'ग्रामगामिकेति पाठः ।

१०६९. आक्रोशे नञ्यनिः ॥ ११२ ॥ ( ३२८० )

'विभाषा' इति निवृत्तम्। आक्रोशः=शपनम्। आक्रोशे गम्यमाने नञ्युपपदे धातोरनिः प्रत्ययो भवति। क्तिन्नादीनामपवादः। अकरणिस्ते वृषल ! भूयात्। आक्रोशे इति किम् ? अकृतिस्तस्य कटस्य। नञीति किम् ? मृतिस्ते वृषल ! भूयात्॥

१०७०. कृत्यल्युटो बहुलम् ॥ ११३ ॥ ( २८४१ )

'भावे' 'अकर्त्तरि च कारके' इति निवृत्तम्। कृत्यसंज्ञकाः प्रत्यया ल्युट् च बहुलमर्थेषु भवन्ति। यत्र विहितास्ततोऽन्यत्रापि भवन्ति। भावकर्मणोः कृत्या विहिताः कारकान्तरेऽपि भवन्ति – स्नानीयं चूर्णम्, दानीयो

न्यासः

आक्रोशे नञ्यनिः॥ ११२॥ कृत्यल्युटो बहुलम्॥ यत्र विहितास्ततोऽन्यत्रापि भवन्तीति। यद्येवम्, 'तयोरेव कृत्यक्तखलर्थाः' इत्येवमादेरर्थनिर्देशस्यानर्थकत्वं जायते ? नैतदस्ति; योगतो हि कृत्यादयो भावादिष्वर्थेष्विष्यन्ते, कारकान्तरे त्वल्पः। सा च तथा तेषां वृत्तिरनर्थनिर्देशे सति सिध्यतीति कुतस्तस्यानर्थक्यम् ? स्नानीयमिति। करणे कृत्यः! दानीय इति। दीयते तस्मै इति संप्रदाने। अप(व)सेचनमिति। अप(व)सिच्यते

पदमञ्जरी

आक्रोशे नञ्यनिः॥ आक्रोशः=शपनम्, न क्षेपः; स्वभावाद्। अकरणिरित्यादिकं शपनवाक्यम्॥११२॥

कृत्यल्युटो बहुलम्॥ स्नानीयमिति। करणे कृत्यः। दानीय इति। संप्रदाने अवसेचनादौ कर्मणि ल्युट्। प्रस्कन्दनः, प्रपतन इति। कर्त्तरि[1]। बहुलग्रहणं न कर्तव्यम्, आरम्भसामर्थ्यादेव कृत्यल्युटो यत्र विहितास्ततोऽन्यत्र भविष्यन्ति, ततो बहुलग्रहणात् कृन्मात्रस्य स्वार्थव्यभिचारः साधितो भवति। 'तयोरेव कृत्यक्तखलर्थाः' 'कर्तरि कृत्' इत्ययं त्वर्थनिर्देशः 'बाहुल्याद्भावादिषु भवन्ति, क्वचिदेव त्वन्यत्र' इति

भावबोधिनी

इन दोनों में भी 'मे उदपादि भवान्' यह जोड़कर पूरा अर्थ करना चाहिये ]। [ यहाँ सर्वत्र उपपद मानकर धातु से ण्वुच्=वु=अक प्रत्यय करके उपपद षष्ठीसमास करना चाहिये—इक्षूणां—भक्षिका इक्षुभक्षिका। ओदनस्य भोजिका—ओदनभोजिका ]। विकल्प से ही यह प्रत्यय होता है, अतः—चिकीर्षा उत्पद्यते। [ यहाँ सन्नन्त चिकीर्ष से "अ प्रत्ययात्" ३।३।१०२ से अ प्रत्यय करके टाप् होता है। ] यहाँ ण्वुल् प्रत्यय प्रस्तुत रहने पर जो यह दूसरा ण्वुच प्रत्यय किया गया है वह [ "चितः" ६।१।१६३ सेआद्युदात्त ] स्वर करने के लिये है। [ क्योंकि ण्वुल् करने पर "लिति" ६।१।१६३ से अन्तोदात्त होने लगता ]॥ १११॥

विभाषा—इसकी निवृत्ति हो जाती है। आक्रोश=शपन=क्रोध से जोर-जोर चिल्लाना। आक्रोश प्रतीयमान रहने पर नञ् उपपद रहते धातु से अनि प्रत्यय होता है। यह क्तिन् आदि का अपवाद है। उदा०—अकरणिः ते वृषल ! भूयात्। [ अरे नीच ! तेरी करनी=कार्य का नाश हो जाय। नञ् उपपद√कृ+अनि, गुण स्वर, करनि के साथ नञ् का समास और णत्व होने पर अकरणिः सिद्ध होता है। ] आक्रोश प्रतीयमान रहने पर – इसका क्या फल है ? अकृतिः तस्य कटस्य [ उस चटाई का न बनाना। यहाँ 'अनि' नहीं होता है। ] नञ् उपपद रहने पर—इसका क्या फल है ? मृतिः ते वृषल ! भूयात्। [ नीच ! तेरी मौत हो जाय। यहाँ नहीं होता है। ]॥ ११२॥

'भावे' 'अकर्तरि च कारके' इनकी निवृत्ति हो जाती है, इनकी अनुवृत्ति होती है। कृत्यसंज्ञक प्रत्यय और ल्युट् प्रत्यय बहुलरूप से [ विभिन्न ] अर्थों में होता है। जिन अर्थों में विधान किये गये हैं, उनसे भिन्न अर्थों में भी होते हैं। भाव और कर्म अर्थों में कृत्य प्रत्ययों का विधान किया गया है, इनसे भिन्न अर्थों में भी होते हैं – स्नानीयम् चूर्णम् [ साबुन आदि नहाने का साधन। स्नाति अनेन – इस प्रकार करण में अनीयर् प्रत्यय होता है। ] दानीयः। [ दान देने योग्य। दीयतेऽस्मै —यहाँ सम्प्रदान में अनीयर् प्रत्यय है। ]

---

१. चिन्त्यमिदं, भाष्यादौ अपादाने एव साधितत्वात्।

**ब्राह्मणः। करणाधिकरणयोर्भावे च ल्युट्। अन्यत्रापि भवति – अपसेचनम्, अवस्रावणम्। राजभोजनाः शालयः। राजाच्छादनानि वासांसि। प्रस्कन्दनम्। प्रपतनम्। बहुलग्रहणादन्येऽपि कृतो यथाप्राप्तमभिधेयं व्यभिचरन्ति – पादाभ्यां ह्रियते पादहारकः। गले चोप्यते [ चुप्यते ] गलेचोपकः॥**

## १०७१. नपुंसके भावे क्तः॥ ११४॥ ( ३०९० )

**न्यासः**

तदिति कर्मणि ल्युट्। **अवस्रावणमिति**। अवस्राव्यते तदिति 'सृ गतौ' इत्यस्माण्ण्यन्तात् कर्मणि ल्युट्। भुज्यन्त इति भोजनाः। आच्छाद्यन्त इत्याच्छादनानि। कर्मण्येव ल्युट्। राज्ञो भोजना राज्ञ आच्छादनानीति षष्ठीसमासः। **प्रस्कन्दनम्, प्रपतनमिति**। प्रस्कन्दति, प्रपतत्यस्मादित्यपादाने ल्युट्।

अथ बहुलग्रहणं किमर्थम्, यावता सूत्रारम्भसामर्थ्यादेव कृत्यल्युटो यत्र विहितास्ततोऽन्यत्रापि प्रायेण भवन्तीत्येषोऽर्थो विज्ञायत एवेत्यत आह—**बहुलग्रहणादित्यादि**। एतेनान्येऽपि कृतो यत्र विहितास्ततोऽन्यत्राप्यभिधेय इष्यन्ते, तच्च बहुलग्रहणात् सिध्यति। अतो बहुलग्रहणं कृतमिति सूचयति। **पादहारक इति**। कर्त्तरि ण्वुल् विहितो बहुलग्रहणादिह कर्मणि भवति॥ ११३॥

**नपुंसके भावे क्तः**॥ 'तयोरेव कृत्यक्तखलर्थाः' इति भावे क्तः सिद्धः। नपुंसके भावेऽपि क्तोऽयं विशेषज्ञापनार्थः।

**पदमञ्जरी**

**पादहारक इति**। कर्मणि ण्वुलि पञ्चम्यन्तस्य साधनं कृतेति समासः। **गलेचोपक इति**। 'अमूर्द्धमस्तकात्' इत्यलुक्॥ ११३॥

**नपुंसके भावे क्तः**॥ ननु च 'तयोरेव कृत्यक्तखलर्थाः' इति नपुंसके भावे क्तः सिद्धः? सत्यं भूते सिद्धः, कालसामान्ये तु नपुंसके न प्राप्नोतीत्ययमारम्भः। इह सकर्मकेभ्योऽपि यथा भावे घञादयो भवन्ति—ओदनस्य पाकः, ओदनस्य भोजनमिति, तथायमपि क्तः सकर्मकेभ्यो भावे भवति; अत्राकर्मकेभ्य इत्यवचनादिति केचिदाहुः। अथ तदा कर्मणि का विभक्तिर्भवति? कृद्योगलक्षणा कर्मणि षष्ठी। सा निष्ठायोगे प्रतिषिध्यते?

**भावबोधिनी**

करण, अधिकरण में और भाव में ल्युट् प्रत्यय होता है। अन्य अर्थों में भी होता है—अपसेचनम् [ अपसिच्यते यत् तत्—जो अच्छी तरह सींचा न जाय। यहाँ कर्म में ल्युट्=अन है ]। अवस्रावणम् [ अवस्राव्यते यत् तत्—जो बुरी तरह से बहाया जाय। कर्म में ल्युट् है। ] राजभोजनाः शालयः [ राजाओं द्वारा भोजन करने योग्य शालि धान्य—भुज्यन्ते इति भोजनाः, राज्ञः भोजनाः=राजभोजनाः—कर्म में ल्युट् ]। राजाच्छादनानि वासांसि। [ राजाओं द्वारा धारण करने योग्य वस्त्र। आच्छाद्यन्ते—इति आच्छादनानि कर्म में ल्युट्। राज्ञः आच्छादनानि—षष्ठीसमास ]। प्रस्कन्दन [जिससे खींचा जाता है—प्रस्कन्दति अस्मात्—यह अपादान में ल्युट् है]। प्रपतन [ जिससे गिरता है। प्रपतति अस्मात्—यह अपादान में ल्युट् है। ]

बहुल-ग्रहण के फलस्वरूप अन्य भी कृत् प्रत्यय यथाप्राप्त अर्थ से व्यभिचरित होते हैं, [ प्राप्त अर्थ से भिन्न अर्थ कहते हैं ] पादाभ्यां ह्रियते—पादहारकः [ पैरों से हरण=अलग किया जाने वाला। ह्रियते इति—कर्म में ण्वुल् होता है, जबकि सामान्यरूप से कर्ता अर्थ में ही ण्वुल् का विधान है। पादाभ्याम् इस अपादान—पञ्चम्यन्त के साथ समास है। ] गले चोप्यते इति गलेचोपकः [ गले में चलाया जाने वाला। यहाँ भी कर्म में ण्वुल् करके सप्तम्यन्त के साथ समास करने पर विभक्ति का अलुक् होता है। √'चुप् मन्दायां गतौ' यह पाठ है। अतः 'गले चुप्यते' यही रूप शुद्ध है क्योंकि कर्म में यक् होने पर गुण नहीं हो सकता। ]॥ ११३॥

नपुंसकलिङ्ग में भाव में धातुमात्र से क्त प्रत्यय होता है। उदा०—हसितम् [ हँसना। √हस्+क्त=त, इट् आगम ] सहितम् [ यह उदाहरण चिन्त्य है। क्योंकि सह् अनिट् है अतः सोढम् होना चाहिये। अथवा दिवादि या

नपुंसकलिङ्गे भावे धातोः क्तः प्रत्ययो भवति । हसितम् । सहितम् । जल्पितम्[1] ॥

१०७२. ल्युट् च ॥ ११५ ॥ ( ३२९० )

नपुंसकलिङ्गे भावे धातोर्ल्युट् प्रत्ययो भवति । हसनं छात्रस्य । शोभनम् । जल्पनम् । शयनम् । आसनम् । योगविभाग उत्तरार्थः ॥

१०७३. कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम् ॥ ११६ ॥ ( ३२९१ )

येन कर्मणा संस्पृश्यमानस्य कर्तुः शरीरसुखमुत्पद्यते तस्मिन् कर्मण्युपपदे धातोर्नपुंसकलिङ्गे भावे ल्युट्

न्यासः

विहितेन ल्युटा बाध्यत इति योगारम्भः ॥ ११४ ॥

ल्युट् च ॥ योगविभाग उत्तरार्थ इति । उत्तरत्र ल्युट एवानुवृत्तिर्यथा स्यात्, क्तस्य मा भूत् । ११५ ॥

कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम् ॥ नित्यसमासार्थं वचनमिति । नित्यः समासोऽर्थः प्रयोजनं यस्य तत् तथोक्तम् । कथं पुनरेतद्वचनं नित्यसमासार्थं भवतीत्याह—उपपदसमासो हि नित्यसमास इति । अनेन हि सूत्रेण कर्मण्युपपदे प्रत्ययो विधीयत इति, 'उपपदमतिङ्' इत्युपपदसमासो भविष्यति, स च नित्यः; तद्विधौ 'नित्यं क्रीडाजीविकयोः' इत्यतो नित्यग्रहणस्यानुवृत्तेः । पूर्वसूत्रेण चेदिह ल्युड् विधीयते तदन्तेन षष्ठीसमासो

पदमञ्जरी

नपुंसके भावे उपसंख्यानमिति षष्ठी भविष्यति – ओदनस्य भुक्तमुदकस्य पीतमिति । अस्मिन्पक्ष एतदर्थोऽप्ययमारम्भः, न हि तयोरेवेत्यनेन सकर्मकेभ्यो भावे क्तः सिद्ध्यति । अन्ये तु—तयोरेवेत्येतदस्यापि क्तस्य विषयव्यवस्थापकं मन्यन्ते । तद्धि 'निष्ठा' इति विहितस्य क्तस्य भावमर्थं विधत्ते, 'अकर्मकेभ्यः' इति च विषयं व्यवस्थापयति । अस्य तु 'भावे क्तः' इत्यनुवादेनाकर्मकेभ्य इति विषयं व्यवस्थापयति ॥ ११४ ॥

ल्युट् च ॥ योगविभाग उत्तरार्थ इति । उत्तरत्र ल्युट एवानुवृत्तिर्यथा स्यात्, क्तस्य मा भूदित्येवमर्थम् ॥ ११५ ॥

कर्मणि च येन संस्पर्शात्कर्त्तुः शरीरसुखम् ॥ कर्तुरिति कर्मणि षष्ठी । 'उभयप्राप्तौ कर्मणि' इति नियमाद्येनेति कर्तरि तृतीया, तदाह—येन कर्मणा संस्पृश्यमानस्येति । कस्य शरीरसुखमित्यपेक्षायां कर्तुः सन्निधानात्तस्यैव विज्ञायत इत्याह - कर्त्तुः शरीरसुखमुत्पद्यत इति । किमिदं शरीरस्य सुखमिति ? ननु शरीरव्यतिरिक्तस्यात्मनो धर्मः सुखम् ? सत्यम्; यस्मिन् सुखे समुत्पन्ने शरीरेऽपि स्वास्थ्यमुत्पद्यते तच्छरीरसुख-

भावबोधिनी

चुरादिगणीय मानकर इट् करना चाहिये । इसीलिये कहीं कहीं—शयितम्—यह पाठान्तर मिलता है । ] जल्पितम् [ बोलना ] ॥ ११४ ॥

नपुंसकलिङ्ग में भाव में धातु से ल्युट् प्रत्यय होता है । उदा० - हसनं छात्रस्य [ छात्र का हंसना । √हस् + ल्युट् = यु = अन ] । शोभनम् [ शोभन ] । जल्पनम् [ बकना ] । शयनम् [ सोना । शी + ल्युट् ] । आसनम् [ बैठना । आस् + ल्युट् = अन ] । [ पूर्वसूत्र में ही ल्युट् का भी उल्लेख हो सकता था फिर भी यह सूत्र अलग किसलिये है ? ] योगविभाग आगे वाले सूत्र में केवल ल्युट् की अनुवृत्ति के लिये है ॥ ११५ ॥

जिस कर्म के द्वारा स्पर्श किये जाते हुये कर्ता का शरीरसुख उत्पन्न होता है, उस कर्म के उपपद रहते धातु से नपुंसकलिङ्ग में भाव में ल्युट् प्रत्यय होता है । पूर्ववर्त्ती सूत्र से ही प्रत्यय होना सिद्ध रहने पर नित्यसमास के लिये यह सूत्र है । क्योंकि उपपदसमास नित्यसमास माना जाता है । उदा०—पयःपानं सुखम् [ दूध पीने का सुख । पयः

---

१. 'शयितम् । भुक्तम् । आसितम्' इति क्वचित्पुस्तकेऽधिकम् ।

**प्रत्ययो भवति। पूर्वेणैव सिद्धे प्रत्यये नित्यसमासार्थं वचनम्। उपपदसमासो हि नित्यः समासः। पयःपानं सुखम्। ओदनभोजनं सुखम्।**

**कर्मणीति किम्? तूलिकाया उत्थानं सुखम्। संस्पर्शादिति किम्? अग्निकुण्डस्योपासनं सुखम्। कर्तुरिति किम्? गुरोः स्नापनं सुखम्। स्नापयतेर्न गुरुः कर्त्ता, किं तर्हि? कर्म। शरीरग्रहणं किम्? पुत्त्रस्य परिष्वञ्जनं सुखम्। सुखम्=मानसी प्रीतिः। सुखमिति किम्? कण्टकानां मर्दनं दुःखम्। सर्वत्रासमासः प्रत्युदाह्रियते॥**

न्यासः

भवति, स च पाक्षिकः; विभाषेत्यनुवृत्तेः। **पयःपानं सुखमिति**। कथं पुनरेतदस्योदाहरणं भवति, यावता नात्र संस्पर्शात् सुखमुत्पद्यते, किं तर्हि? अभ्यवहारात्? नैष दोषः, सर्वे हि तेऽभ्यवहारादयो न विना स्पर्शेन न भवन्तीति नान्तरीयकत्वात् स्पर्शो नापेक्ष्यते।

**तूलिकाया उत्थानं सुखमिति**। 'उदः स्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णः। अस्तीह कर्तुः शरीरसुखम्, न तु कर्मणा संस्पृश्यमानस्य, किं तर्हि? अपादानेन तूलिकाख्येन। **अग्निकुण्डस्योपासनमिति**। 'आस उपवेशने' उपपूर्वः। अत्रास्पर्शात् सुखं भवति; अग्निकुण्डेनोपास्यमानेनोपस्पृश्यमानस्यैव तदुत्पत्तेः। **गुरोः स्नापनमिति**। 'ष्णा शौचे', हेतुमण्णिच्। 'अर्तिह्री' इत्यादिना पुक्। ननु चात्रापि गुरुः सुखस्य कर्त्ता भवतीत्यस्तीह कर्तुः सुखम्। तत् कथमिदं प्रत्युदाहरणं भवतीत्याह—**स्नापयतेर्न गुरुरिति**। अनेनैतद्दर्शयति—नात्र सुखापेक्षं कर्तृत्वं विवक्षितम्, किं तर्हि? क्रियापेक्षम्। न चात्र स्नापनक्रियाया गुरुः कर्त्ता, किं तर्हि? शिष्यः, तस्य च

पदमञ्जरी

मित्युच्यते। **नित्यसमासार्थं वचनमिति**। कथं तर्हि 'उभयप्राप्तौ कर्मणि' इत्यत्रोदाहृतम्—साधु खलु पयसः पानं देवदत्तेनेति? यत्र प्रतिकूलतया सुखं नोत्पद्यते तत्र तदुदाहृतं द्रष्टव्यम्। **पयःपानं सुखमिति**। तत्र पानेन सुखं न स्पर्शेन, इदं तूदाहर्तुमुचितम्—चन्दनानुलेपनं सुखमिति? नैष दोषः; यत्र संस्पर्शनमन्तरेण न सुखमुत्पद्यते तद्विषयोपलक्षणं संस्पर्शग्रहणम्। तत्र स्पर्शनादेव सुखं भवतु तत्पूर्वकात् पानादेर्वा सर्वत्र भविष्यति।

**तूलिकाया इति**। तूलेन निर्मितः कशिपुस्तूलिका, तत्र शयित्वोत्थानं सुखम्। **अग्निकुण्डस्योपासनमिति**। अत्राग्निकुण्डेनास्पृश्यमानस्यैव सुखम्। **गुरोः स्नापनमिति**। यद्यप्यत्र गुरुः सुखानुभवस्य कर्त्ता, तथापि न तदत्राश्रितम्; अव्यभिचारात्, किं तर्हि? ल्युट्प्रकृतौ यत्कर्तृत्वं तदाश्रितम्, तदाह—**स्नापयतेर्न गुरुः कर्तेति**। **मानसी तु प्रीतिरिति**। पुत्रेण बलवत्परिष्वज्यमानस्य शरीरतोद एव भवति, मानसी तु प्रीतिः। ननु प्रत्युदाहरणेष्वपि सर्वत्र ल्युट् प्रयुज्यते, तत्कथं प्रत्युदाहरणत्वम्? तत्राह—**सर्वत्रासमासः प्रत्युदाह्रियत इति**॥ ११६॥

भावबोधिनी

उपपद √पा + ल्युट् = अन, "उपपदमतिङ्" २।२।१९ से नित्यसमास होता है ]। ओदनभोजनं सुखम् [ **चावल खाने का सुख**। यहाँ ओदनम् उपपद √भुज् + ल्युट् = अन, उपपदसमास ] [ **दूध के पीने से और चावल के खाने से सुख** उत्पन्न होता है, स्पर्श से नहीं; अतः यहाँ प्रत्यय नहीं होना चाहिये—ऐसी शंका नहीं करनी चाहिये क्योंकि **भोजन में** स्पर्श नान्तरीयक है। बिना स्पर्श के भोजनादि सम्भव नहीं है। ]

कर्म उपपद रहते—इसका क्या लाभ है? तूलिकाया उत्थानं सुखम् [ **रूई के गद्दे पर शयन करके उठना सुखकारक है**। यहाँ अपादान=तूलिका से शरीरसुख है। अतः इससे ल्युट् न होने के कारण **नित्यसमास नहीं होता है**। ] संस्पर्श के द्वारा—इसका क्या लाभ है? अग्निकुण्डस्य उपासनं सुखम् [**अग्निकुण्ड के पास बैठना ही सुखकर है, स्पर्श करना नहीं**। अतः यहाँ भी इस सूत्र से ल्युट् नहीं होता है। अतः समास नहीं होता है ]। कर्ता का [ शरीर सुख हो ]—**इसके ग्रहण का क्या लाभ है**? गुरोः स्नापनं सुखम् [ **गुरु जी का नहलाना सुखकर है**। इसमें स्नान कराने वाला शिष्य आदि

## १०७४. करणाधिकरणयोश्च ॥ ११७ ॥ ( ३२९३ )

**करणेऽधिकरणे च कारके धातोर्ल्युट् प्रत्ययो भवति । इध्मप्रव्रश्चनः । पलाशशातनः । अधिकरणे — गोदोहनी । सक्तुधानी ॥**

**न्यासः**

गुरुः कर्मैव भवति । कर्मसंज्ञा पुनर्गुरोः 'गतिबुद्धि' इत्यादिसूत्रेण; तस्याकर्मके स्नातावण्यन्ते कर्तृत्वात् । **परिष्वञ्जनमिति** । 'ष्वञ्ज परिष्वङ्गे', 'उपसर्गात् सुनोति' इत्यादिना मूर्धन्यः । **मानसी प्रीतिरिति** । तेन पुत्रपरिष्वञ्जनजन्मनः प्रीतिविशेषस्य शरीरसुखत्वं दर्शयति । **मर्दनमिति** । 'मृद क्षोदे' । **सर्वत्रासमासः प्रत्युदाह्रियत इति** । न तु ल्युडभावः; ल्युटः पूर्वसूत्रेण सर्वत्र भावात् ॥ ११६ ॥

**करणाधिकरणयोश्च ॥ करणेऽधिकरणे च कारके इत्यनेन** करणाधिकरणयोः प्रत्ययार्थत्वं दर्शयति । अत्रोपपदे करणाधिकरणे कस्मान्न भवतः ? 'करणाधिकरणयोः' इत्यत एव निर्देशात् । करणाधिकरणशब्दौ हि ल्युडन्तौ करणाधिकरणसाधनौ च । तत्र यद्युपपदत्वमेतयोः स्यादेष निर्देशो नोपपद्यते । यद्येवम्, सति निर्देशे प्रत्ययविधानं च, सति च तस्मिन् निर्देश—इतीतरेतराश्रयत्वं प्रसज्येत ? न; नित्यत्वाच्छब्दानाम् । न ह्यपूर्वं किञ्चिदुत्पद्यते; शब्दानां नित्यत्वात् । सतामेव तु तेषामन्वाख्यानं क्रियत इति कुत इतरेतराश्रयतायाः प्रसङ्गः ? **इध्मप्रव्रश्चन इति** । 'ओव्रश्चू छेदने', इध्मानां प्रव्रश्चन इति षष्ठीसमासः । **पलाशशातन इति** । 'शद्लृ शातने', हेतुमण्णिच्, 'शदेरगतौ तः' इति तत्वम् । **गोदोहनीति** । 'टिड्ढाणञ्' इति ङीप् ॥ ११७ ॥

**पदमञ्जरी**

**करणाधिकरणयोश्च ॥ करणे चाधिकरणे चाभिधेये इति** । उपपदे तु करणाधिकरणे न भवतः, करणाधिकरणयोरित्यत एव निर्देशात् । क्रियतेऽनेनेति करणम्, अधिक्रियतेऽस्मिन्नित्यधिकरणमिति करणाधिकरणसाधनौ ह्येतौ । यद्येवम्, सति निर्देशे प्रत्ययविधानम्, सति च प्रत्ययविधाने निर्देश—इतीतरेतराश्रयः प्राप्नोति ? न; नित्यत्वाच्छब्दानां नास्मान्निर्देशात् करणाधिकरणशब्दौ स्तः । **इध्मप्रव्रश्चन इति** । कर्मणि षष्ठ्याः समासः । दात्रादिरुच्यते । **पलाशशातन इति** ॥ 'शद्लृ शातने' हेतुमण्णिच्, 'शदेरगतौ तः' इति तत्वम् । येन दण्डेन वृक्षस्य पर्णानि पात्यन्ते स एवमुच्यते । **गोदोहनी सक्तुधानी पात्री** । योगश्चायं येन नाप्राप्तिन्यायेन घञोऽपवादः । अजपौ स्त्रीप्रत्ययांश्च परत्वाद् बाधते । उक्तं हि—'अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेन' इति ॥ ११७ ॥

**भावबोधिनी**

ही कर्ता है । अतः इससे ल्युट् नहीं होता । ] स्नापयति = नहलाने का कर्ता गुरु नहीं है, तो क्या है ? [ गुरु ] कर्म है । [ अतः इससे प्रत्यय नहीं होता है । ] शरीरग्रहण का क्या फल है ? पुत्रस्य परिष्वञ्जनं सुखम् । [ पुत्र का आलिङ्गन सुखकर है । यहाँ आत्मा को सुखानुभूति होती है । शरीर को तो कष्ट ही होता है ] सुख = मानसिक प्रसन्नता । सुख हो—इसका क्या प्रयोजन है ? कण्टकानां मर्दनं दुःखम् । [ काटों का मर्दन = रगड़ना दुःख है । यहाँ सुख नहीं है । अतः इससे ल्युट् न होने से समास नहीं होता है । ] इसमें जितने भी प्रत्युदाहरण दिये गये हैं वे समासाभाव के लिये हैं । [ प्रस्तुत सूत्र जब ल्युट् करता है तब नित्यसमास होता है । जब पूर्ववर्त्ती सूत्र से ल्युट् होता है तो अनित्य होने से समास नहीं भी होता है ] ॥ ११६ ॥

करण और अधिकरण कारक में धातु से ल्युट् प्रत्यय होता है । [ यहाँ उपपद नहीं समझना चाहिये । ] उदा०—इध्मप्रव्रश्चनः [ जिसके द्वारा लकड़ी काटी जाती है । प्रव्रश्च्यतेऽनेन—इस करण अर्थ में ल्युट् करके 'इध्मानां प्रव्रश्चनः यहाँ कर्म, में षष्ठीसमास होता है । ] पलाशशातनः [पलाश जिससे काटा जाता है, या गिराया जाता है । यहाँ √शात् + ल्युट्, षष्ठीसमास ] । अधिकरण में उदा०—गोदोहनी [ जिसमें गाय दुही जाती है ऐसी बाल्टी आदि । दुह्यतेऽस्याम्—

## १०७५. पुंसि संज्ञायां घः प्रायेण ॥ ११८ ॥ ( ३२९६ )

**'करणाधिकरणयोः' इत्येव । पुंल्लिङ्गयोः करणाधिकरणयोरभिधेययोर्धातोर्घः प्रत्ययो भवति, समुदायेन चेत्संज्ञा गम्यते । प्रायग्रहणमकात्स्न्यार्थम् । दन्तच्छदः । उरश्छदः पटः । अधिकरणे खल्वपि-एत्य तस्मिन्कुर्वन्ति—इत्याकरः । आलयः । पुंसीति किम् ? प्रसाधनम् । संज्ञायामिति किम् ? प्रहरणो दण्डः । घकारः 'छादेर्घेऽद्व्युपसर्गस्य' ( ६.४.९६ ) इति विशेषणार्थः ॥**

## १०७६. गोचरसंचरवहव्रजव्यजापणनिगमाश्च ॥ ११९ ॥ ( ३२९८ )

**न्यासः**

**पुंसि संज्ञायां घः प्रायेण ॥ समुदायेन चेदित्यादि ।** प्रकृतिप्रत्ययसमुदायेन यदि संज्ञा गम्यत एवं प्रत्ययो भवति, नान्यथा । **अकात्स्न्यार्थमिति ।** अकात्स्न्यम् = असाकल्यम्, प्रयोजनमर्थो यस्य तत् तथोक्तम् । एतेनाकृत्स्नविषयतां प्रत्ययस्य दर्शयति । **दन्तच्छद इति ।** 'छद अपवारणे', चुरादिणिच् । 'छादेर्घेऽद्व्युपसर्गस्य' इति ह्रस्वः, पूर्ववत् समासः । **प्रसाधनमिति ।** 'राध साध संसिद्धौ', अस्माद्धेतुमण्ण्यन्तात् पूर्वसूत्रेण करणे ल्युट्, 'कुगतिप्रादयः' इति समासः ॥ ११८ ॥

**गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च ॥ पूर्वस्मिन्नेवार्थ इति ।** करणेऽधिकरणे च । ननु पूर्वसूत्रेणैव

**पदमञ्जरी**

**पुंसि संज्ञायां घः प्रायेण ॥ दन्तच्छद इति ।** 'छद आवरणे' चुरादिः 'छादेर्घेऽद्व्युपसर्गस्य' इति ह्रस्वः । एत्यास्मिन् कुर्वन्ति व्यवहारमित्याकरः = उत्पत्तिस्थानम् ॥ ११८ ॥

**गोचरसंचरवहव्रजव्यजापणनिगमाश्च ॥ गावश्चरन्त्यस्मिन्निति ।** रूढिशब्दोऽयं विषयपर्यायः, तस्य

**भावबोधिनी**

यहाँ अधिकरण में √दुह् + ल्युट् = अन, उपधागुण और ङीप् = ई करने पर दोहनी । गो के साथ षष्ठीसमास ] सक्तुधानी । [ धीयन्तेऽस्याम्—इस अधिकरण में ल्युट् = अन, ङीप् के बाद षष्ठीसमास होता है । सत्तु रखने की थाली = पात्र । ]॥ ११७ ॥

करण और अधिकरण में–इतनी ही अनुवृत्ति समझनी चाहिये । पुंल्लिङ्ग करण और अधिकरण अर्थों के प्रतीत होने पर धातु से 'घ' प्रत्यय होता है यदि [ प्रकृति-प्रत्यय ] समुदाय के द्वारा संज्ञा की प्रतीति हो रही हो तो । प्रायेण —का उल्लेख अकात्स्न्यं=सबमें न होना—इसके ज्ञान कराने के लिये है । [ अर्थात् प्रायेण का सम्बन्ध क्रिया के साथ है प्रत्यय के साथ नहीं । ] उदा०—दन्तच्छदः । [ओष्ठ] दन्ताः छाद्यन्तेऽनेन—इस करण में णिजन्त छादि+घ=अ में 'छादेर्घेऽद्व्युपसर्गस्य' '६।४।९६ से उपधा का ह्रस्व होता है, णि का लोप होता है और 'दन्तानाम्' इस षष्ठ्यन्त के साथ समास होता है । तुक् आगम, श्चुत्व ] उरश्छदः = वस्त्र [ उरः छाद्यतेऽनेन—इस करण अर्थ में छादि + घ, शेष प्रक्रिया पूर्ववत् होती है । छाती ढकने वाला वस्त्र कुर्त्ता या ब्लाउज आदि ] । अधिकरण अर्थ में— एत्य तस्मिन् कुर्वन्ति - इस विग्रह में—आकरः [ जिसमें आकर व्यवहार करते हैं—उत्पत्तिस्थान । आ कृ + घ = अ, गुण, रपर ] । आलयः—आलीयन्ते अस्मिन् —इस विग्रह में—आ + ली + घ = अ, ई का गुण, अयादेश—आलय=घर ] । पुंल्लिङ्ग में—इसके ग्रहण का क्या प्रयोजन है ? प्रसाधनम्—जिससे कार्य किया जाय । यहाँ पुंल्लिङ्ग नहीं है । अतः 'घ' न होकर 'ल्युट्' होता है—प्रसाध्यतेऽनेन = सौन्दर्य का साधन ] । संज्ञा में—इसके उल्लेख का क्या लाभ है ? प्रहरणो दण्डः । [ यह संज्ञा = नाम नहीं है । अतः 'घ' नहीं होता है । ] 'घ' यह [ अनुबन्ध' ] "छादेर्घेऽद्व्युपसर्गस्य" ( ६।४।९६ ) इसके उद्देश्य से लिखा गया है [ क्योंकि यह सूत्र 'घ' परे रहते ही √छादि धातु का ह्रस्व-विधान करता है । ]॥ ११८ ॥

घ–प्रत्ययान्त गोचर आदि शब्द पूर्व [करण और अधिकरण] अर्थों में निपातित होते हैं । आगे "हलश्च" सूत्र से घञ् प्रत्यय कहा जायगा, उसका अपवाद यह है । उदा०—गोचरः—गावः चरन्ति अस्मिन् [ जहाँ गायें चरती हैं—चरागाह ।

**गोचरादयः शब्दा घप्रत्ययान्ता निपात्यन्ते पूर्वस्मिन्नेवार्थे। 'हलश्च' ( ३.३.१२१ ) इति घञं वक्ष्यति, तस्यायमपवादः। गावश्चरन्त्यस्मिन्निति–गोचरः। संचरन्तेऽनेनेति–संचरः। वहन्ति तेन–वहः। व्रजन्ति तेन–व्रजः। व्यजन्ति तेन–व्यजः। निपातनाद् 'अजेर्व्यघञपोः' ( २.४.५६ ) इति वीभावो न भवति। एत्य तस्मिन्नापणन्ते–इत्यापणः। निगच्छन्ति तस्मिन्निति–निगमः। चकारोऽनुक्तसमुच्चयार्थः। कषः। निकषः॥**

**१०७७. अवे तृस्त्रोर्घञ् ॥ १२० ॥ ( ३२९९ )**

**'अव' उपपदे तरतेस्स्तृणातेश्च धातोः करणाधिकरणयोः संज्ञायां घञ् प्रत्ययो भवति। घस्यापवादः। ञकारो वृद्ध्यर्थः, स्वरार्थश्च। घकार उत्तरत्र कुत्वार्थः। अवतारः। अवस्तारः।**

**कथम्–अवतारो नद्याः? न हीयं संज्ञा। [1]प्रायानुवृत्तेरसंज्ञायामपि भवति॥**

**न्यासः**

गोचरादिषु घः सिद्धः, तत् किमित्ययं योग आरभ्यते? इत्याह—**हलश्चेत्यादि**। ननु च प्रत्ययग्रहणं तत्रानुवर्त्तिष्यते, तेन गोचरादिषु घञ् भविष्यति? प्रतिपत्तिगौरवं तु स्यात्; प्रायग्रहणानुवृत्तेरज्ञापकत्वात्॥ ११९॥

**अवे तृस्त्रोर्घञ्॥ स्तृणातेरिति।** 'स्तॄञ् आच्छादने' इत्यस्मात्। **प्रायानुवृत्तेरित्यादि।** प्रायशब्दस्यानुवृत्तौ सत्यामेव उपपदे तृस्त्रोर्घञ्प्रत्ययो भवति संज्ञायां प्रायेणोपाधिभूतायामित्येषोऽर्थो लभ्यते। **न संज्ञायामिति।** अस्योपाधेः प्रायिकत्वात् क्वचिदसंज्ञायामपि भवति॥ १२०॥

**पदमञ्जरी**

यथाकथंचिन्निर्वचनम्। तथा च गोचरः, इन्द्रियगोचर इत्याद्यपि। **सञ्चरन्तेऽनेनेति।** 'समस्तृतीयायुक्तात्' इत्यात्मनेपदम्। सञ्चरः=मार्गः, वहः=स्कन्धः, व्रजः=गोष्ठम्, व्यजः=तालवृन्तम्, आपणः=पण्यस्थानम्, निगमः=छन्दः। अयं योगः शक्योऽवक्तुम्, पूर्वेणैव घः सिद्धः। 'हलश्च' इति घञ् कस्मान्न भवति? प्रायेणग्रहणं तत्रानुवर्त्तते, यथा—कषो निकष इत्यत्र घञ् न भवति, एवं गोचरादिष्वपि न भविष्यति॥ ११९॥

**अवे तृस्त्रोर्घञ्॥** अवतारः=रूपादिः, अवस्तारः=जवनिकादिः। **नद्यवतारः**=तीर्थम्। **प्रायेणग्रहणानुवृत्तेरसंज्ञायामपि भवतीति!** ननु घञ् विधेयः प्रधानम्, तस्य प्रायग्रहणमुपाधिः, ततश्च **संज्ञायामेव** क्वचिन्न भवतीत्यर्थः स्यात्? एवं मन्यते—संज्ञायामित्युपाधेरेव प्रायग्रहणमुपाधिः। उपाधेरुपाधिर्भवति, विशेषणस्यैव वा विशेषणमिति तु नाश्रीयते; लक्ष्यानुरोधादिति॥ १२०॥

**भावबोधिनी**

√चर्+घ=अ, गो के साथ षष्ठी-समास ]। सञ्चरः—सञ्चरन्तेऽनेन [ मार्ग। सम् √चर्+घ=अ ]। वहः—वहन्ति तेन [ कन्धा। √वह+घ=अ ]। व्रजः—व्रजन्ति तेन [ मार्ग, गोष्ठ, समुदाय। व्रज्+घ=अ ]। व्यजः—व्यजन्ति तेन [ पंखा। वि+अज्+घ=अ ] निपातनात् "अजेर्व्यघञपोः" ( २।४।५६ ) इससे √अज् का 'वी' आदेश नहीं होता है। आपणः—एत्य तस्मिन् आपणन्ते—[ जिसमें जाकर लोग क्रयविक्रय करते हैं—बाजार ] निगमः [ वेद ]—निगच्छन्ति तस्मिन् [ अथवा निगच्छन्ति तेन—जिसमें अथवा जिससे ज्ञान—धर्माधर्म-निर्णय प्राप्त करते हैं—नि+गम्+घ=अ ] सूत्रस्थ चकार अनुक्त शब्दों के समुच्चय के लिये है। [ अतः इनमें भी होता है—] कषः। निकषः [ कसौटी। कषन्ति यत्र येन वा ]॥ ११९॥

'अव' उपपद रहते √तॄ और √स्तॄ धातुओं से करण और अधिकरण में संज्ञाविषय में घञ् प्रत्यय होता है। यह घ का अपवाद है। ञ् अनुबन्ध वृद्धि के लिये और [ 'ञ्नित्यादिर्नित्यम्' सूत्र से आद्युदात्त ] स्वर की सिद्धि के लिये है। घकार आगे [ लक्ष्यों में ] कुत्व करने के लिये है। उदा०—अवतारः [ रूप आदि। अवतरति तेन—इस अर्थ में

---

१—प्रायेण ग्रहणानुवृत्तेरिति–पदमञ्जरीसम्मतः पाठः।

**१०७८. हलश्च ॥ १२१ ॥ ( ३३०० )**

**'पुंसि संज्ञायाम्', 'करणाधिकरणयोश्च' इति सर्वमनुवर्त्तते । हलन्ताद्धातोः करणाधिकरणयोर्घञ् प्रत्ययो भवति ! घस्यापवादः । लेखः । वेदः । वेष्टः । बन्धः । मार्गः । अपामार्गः । वीमार्गः ॥**

**१०७९. अध्यायन्यायोद्यावसंहाराधारावायाश्च ॥ १२२ ॥ ( ३३०१ )**

**अध्यायादयः शब्दा घञन्ता निपात्यन्ते । पुंसि संज्ञायां घे ( ३.३.११८ ) प्राप्ते घञ्विधीयते । अहलन्तार्थ आरम्भः । अधीयतेऽस्मिन्नित्यध्यायः । नीयतेऽनेनेति न्यायः । उद्युवन्ति अस्मिन्नित्युद्यावः । संह्रियन्तेऽनेनेति संहारः । आध्रियतेऽस्मिन्नित्याधारः । आवयन्त्यस्मिन्नित्यावायः । चकारोऽनुक्तसमुच्चयार्थः—अवहारः ॥**

**न्यासः**

**हलश्च ॥ वेष्ट इति । 'वेष्ट वेष्टने' । मार्गोऽपामार्ग इति । 'मृजूष् शुद्धौ' ।** 'चजोः' इत्यादिना कुत्वम्, मृजेर्वृद्धिः, 'उपसर्गस्य घञि' इति दीर्घः ॥ १२१ ॥

**अध्यायन्यायोद्यावसंहाराधारावायाश्च ॥ अहलन्तार्थ आरम्भ इति ।** हलन्तेभ्यः पूर्वसूत्रेणैव सिद्धत्वात् ॥ १२२ ॥

**पदमञ्जरी**

**हलश्च ॥** लेखः = लेखनी । वेष्टः = वस्त्रादिः । 'वेष्ट वेष्टने' । विद्येते = ज्ञायेते अनेन धर्माधर्माविति वेदः । अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः = वीरुद्विशेषः[1] । वीमार्गः = समूहनी, पूर्ववत्कुत्ववदीर्घत्वे ॥ १२१ ॥

**अध्यायन्यायोद्यावसंहाराधारावायाश्च ॥ आवयन्तीति ।** एत्यावयन्तीत्यर्थः । **चकारोऽनुक्तसमुच्चयार्थ इति ।** 'घञ्विधाववहारावायानामुपसंख्यानम्' वार्त्तिकम् ( म० भा० ३.३.१२१ वा० १ ) । **वृत्तिकारस्तु** आधारावायशब्दौ सूत्रे प्रक्षिप्य चकारेणावहारशब्दं साधयति स्म, विचित्रा हि वृत्तेः कृतिर्वृत्तिकारेण ॥ १२२ ॥

**भावबोधिनी**

अव + तॄ + घञ् = अ, वृद्धि रपर ] । अवस्तारः [ जवनिका, पर्दा आदि । अवस्तृणाति अनेन—अव + स्तॄ + घञ् = अ, ऋ की वृद्धि रपर ] । नद्याः अवतारः [ नदी में उतरने की सीढ़ी ]—यह कैसे होता है क्योंकि यह तो संज्ञा = नाम नहीं है ? प्रायेण—इसकी अनुवृत्ति होने से असंज्ञा में [ संज्ञा अर्थ न रहने पर ] भी होता है । [ अतः यहाँ भी हो जाता है । ] ॥ १२० ॥

'पुंसि संज्ञायाम्' 'करणाधिकरणयोश्च' [ 'पुंल्लिग में संज्ञा विषय में' 'करण और अधिकरण में' ]—इस सब की अनुवृत्ति होती हैं । हलन्त धातु से करण और अधिकरण अर्थ में घञ् प्रत्यय होता है । यह 'घ' प्रत्यय का अपवाद है । उदा० —लेखः [ लेखनी । लिखति येन—करण में √लिख + घञ् = अ ] । वेदः [ वेद । विदन्ति येन—करण में √विद् + घञ् = अ ] । वेष्टः [ वस्त्रादि । वेष्टतेऽनेन ] । बन्धः [ रस्सी आदि ] । मार्गः [ रास्ता ] । अपामार्गः [ चिचिड़ा—औषधविशेष । अपमृज्यते = दूरीक्रियते व्याध्यादिः अनेन—अप + मृज् + घञ् "मृजेर्वृद्धिः" ७।२।११४ से वृद्धि, रपर, ज् का कुत्वा = ग, अप + मार्ग । इसमें "उपसर्गस्य घञ्यमनुष्ये बहुलम्" ६।३।१२२ इससे उपसर्ग का दीर्घ—अपामार्गः ] । वीमार्गः [ वृक्षविशेष । वि + मृज् + घञ् प्रक्रिया पूर्ववत् ] ॥ १२१ ॥

अध्याय—आदि घञ्-प्रत्ययान्त शब्द निपातित होते हैं । पुंल्लिग संज्ञाविषय में घ प्रत्यय प्राप्त रहने पर घञ् का विधान किया जाता है । हलन्त से भिन्न शब्दों [ अर्थात् अजन्त ] के लिये यह सूत्र बनाया गया है । [ क्योंकि हलन्त शब्दों में तो पूर्व सूत्र से घञ् का विधान किया जा चुका है । ] उदा०—अध्यायः—अधीयतेऽस्मिन्—[ इस अधिकरण

१. 'लहचिचड़ा' इति भाषायाम् ।

१०८०. उदङ्कोऽनुदके ॥ १२३ ॥ ( ३३०२ )

**'उदङ्कः' इति निपात्यते, अनुदकविषयश्चेद्धात्वर्थो भवति । उत्पूर्वादञ्चतेर्घञ्निपात्यते । ननु च 'हलश्च' ( ३.३.१२१ ) इति सिद्ध एव घञ् ? उदके प्रतिषेधार्थमिदं वचनम् । तैलोदङ्कः । अनुदके इति किम् ? उदकोदञ्चनः । घः कस्मान्न प्रत्युदाह्रियते ? विशेषाभावात् । घञ्यपि थाथादिस्वरेणान्तोदात्त एव ॥**

न्यासः

**उदङ्कोऽनुदके** ॥ **ननु** चेत्यादि चोद्यम् । **उदकेप्रतिषेधार्थं वचनमिति** परिहारः । यद्येतन्नारभ्येत तदोदकेऽपि पूर्वेण स्यादित्यर्थः । **तैलोदङ्क** इति । षष्ठीसमासः । षष्ठी पुनः कर्मणि कृद्योगलक्षणा ।

**उदकोदञ्चन इति** । करणे ल्युट् । **घः कस्मादित्यादि** । एवं मन्यते--'पुंसि संज्ञायाम्' इत्यादिना घे प्राप्ते घञ् विहितः, ततश्च तेन मुक्ते विषये घेनैव युक्तं भवितुमिति । **विशेषाभावादिति** । न ह्यत्राञ्चतेर्घञि घे वा सति विशेषोऽस्ति । तत्र यद्युदकेऽपि घः स्यादनुदकप्रतिषेधेनार्थो न स्यादित्यभिप्रायः । ननु च घे सति प्रत्ययस्वरेणान्तोदात्त उदङ्कशब्दो भवति, घञि सति ञित्स्वरेणाद्युदात्तः स्यात्, तत् किमुच्यते विशेषाभावादित्यत आह--**घञ्यपीत्यादि** । **थाथादिस्वरेणेति** । 'थाथघञ्क्ताजबित्रकाणाम्' इत्येतद्विहितेन ॥ १२३ ॥

पदमञ्जरी

**उदङ्कोऽनुदके** ॥ तैलमुदच्यते=उद्ध्रियतेऽस्मिन्निति तैलोदङ्कः=चर्ममयं भाजनम् ।

**घः कस्मादिति** । 'पुंसि संज्ञायाम्' इत्यादिना घे प्राप्ते घञ्विहितः, ततश्च तेन मुक्ते घ एव भवितुमर्हतीति भावः । **विशेषाभावादिति** । ननु घे सति प्रत्ययस्वरः, घञि ञित्स्वरेणाद्युदात्तः, तत्कथं विशेषाभावः ? तत्राह--**घञ्यपि हीत्यादि** ॥ १२३ ॥

भावबोधिनी

अर्थ में अधि + √इङ् + घञ् = अ, धातु की वृद्धि और आय् आदेश करने पर अधि + आय् अ, यण्--अध्याय = जिसमें पढ़ा जाय ] । न्याय :--नीयतेऽनेन--[ इस करण अर्थ में--नि + √इण् + घञ् = अ, धातु की वृद्धि, आय् आदेश--नि + आय् + अ, यण्--न्याय ] उद्याव:--उद्युवन्ति अस्मिन् [--इस अधिकरण कारक में उद् + यु + घञ् = अ, उ की वृद्धि, आव् आदेश--उद्याव:--जहाँ सब मिलते हैं, एकत्रित होते हैं । ] संहार:--संह्रियन्तेऽनेन [--इस करण अर्थ में सम् + हृ + घञ् = अ, वृद्धि, रपर करने पर सम् + हार् + अ, अनुस्वार । नाश = प्रलय ] । आधार:--आध्रियतेऽस्मिन्--[ इस अधिकरण कारक में आङ् + √धृञ् + घञ्--ऋ की वृद्धि और रपर आदि करने पर--आधार: ] । आवाय:--[ एत्य ] आवयन्ति अस्मिन्--[ इस अधिकरण में आ + √वे + घञ्, ए का आत्व और युक् आगम आ + वा य् + अ--आवाय: । कपड़ा बुनने का स्थान ] चकार अनुक्त के समुच्चयार्थ है । अवहार: [ अव + हृ + घञ्, ऋ की वृद्धि और रपर--अवहार ] ।

**विमर्श**--यहाँ काशिकाकार ने एक प्रमाद कर दिया है--इस सूत्र और अन्य सूत्र के वार्तिक मिलाकर प्रस्तुत सूत्र का रूप दे दिया है । सूत्र का वास्तविक रूप--"अध्यायन्यायोद्यावसंहाराश्च" ३।३।१२२ और 'हलश्च' ३।३।१२१ सूत्र पर 'घञ्विधौ अवहाराधारावायानामुपसंख्यानम्' यह वार्तिक है । इसलिये "अध्याय० ( ३।३।१२२ ) सूत्रे आधारावायशब्दौ वार्तिके दर्शनादभियुक्तैः प्रक्षिप्तौ" [ कैयट ३।३।१२१ पर ], और प्रस्तुत सूत्र पर पदमञ्जरीकार ने--"वृत्तिकारस्तु........विचित्रा हि वृत्तेः कृतिः वृत्तिकारेण" और प्रस्तुत सूत्र पर ही तत्त्वबोधिनीकार ने "वृत्तिकारस्तु--आधारावायशब्दौ सूत्रे प्रक्षिप्य चकारेणावहारशब्दं संजग्राह, तदसम्बद्धमिति स्पष्टमेव ।" आदि रूप से आपत्तियाँ प्रस्तुत की हैं ॥ १२२ ॥

अनुदक = उदभिन्न-विषयक यदि धात्वर्थ हो तो 'उदङ्क' यह घञ्-प्रत्ययान्त निपातित होता है । [ यहाँ भी पुंल्लिङ्ग करण और अधिकरण में संज्ञाविषय में--इसका सम्बन्ध रहता है । ] उत्-पूर्वक अञ्च् धातु से घञ् प्रत्यय का निपातन होता है । "हलश्च" ३।३।१२१ इससे तो घञ् सिद्ध ही है [ तब इस सूत्र की क्या आवश्यकता ] ? उदक

## १०८१. जालमानायः ॥ १२४ ॥ ( ३३०३ )

'आनायः' इति निपात्यते, जालं चेत्तद्भवति। आङ् पूर्वान्नयतेः करणे घञ् निपात्यते। आनायो मत्स्यानाम्। आनायो मृगाणाम् ॥

## १०८२. खनो घ च ॥ १२५ ॥ ( ३३०४ )

खनतेर्धातोः करणाधिकरणयोर्घः प्रत्ययो भवति। चकाराद् घञ् च। आखनः, आखानः।

❀ डो वक्तव्यः ❀ ( म० भा० ३.३.१२५ वा० १ ) आखः। ❀ डरो वक्तव्यः ❀। आखरः। ❀ इको वक्तव्यः ❀। आखनिकः ॥ ❀ इकवको वक्तव्यः ❀। आखनिकवकः ॥

### न्यासः

जालमानायः ॥ १२४ ॥ खनो घ च ॥ डो वक्तव्य इत्यादि। सर्वत्र वक्तव्यशब्दस्य व्याख्येय इत्येषोऽर्थः। तत्रेदं व्याख्यानम्—चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन डादयोऽपि प्रत्यया भविष्यन्तीति। ननु च घञनुकर्षणार्थश्चकारः? नैतदस्ति; स्वरितत्वादेव हि घञुपतिष्ठते। अथ किमर्थं खनेर्घः प्रत्ययो विधीयते, यावता कुत्वार्थं तस्य विधानम्, न च खनेः कश्चिदवयवः कुत्वभागस्ति? एवं तर्ह्येतज्ज्ञापयति—अन्येभ्योऽप्ययं भवतीति। तेन खलः, भगः पदमित्येवमादयः सिद्धा भवन्ति ॥ १२५ ॥

### पदमञ्जरी

जालमानायः ॥ 'जल घात्ये' इत्यतः 'ज्वलितिकसन्तेभ्यो णः' इति णे कृते जालमिति भवति। आनीयन्ते मत्स्यादयोऽनेनेत्यानायः ॥ १२४ ॥

खनो घ च ॥ घित्करणं किमर्थम्, यावता न खनः कश्चिदवयवः कुत्वभागस्ति? ज्ञापनार्थं तु, एतज् ज्ञापयति—अन्येभ्योऽप्ययं भवतीति। तेन भजेर्भगः, पदेः पदम्—करणे घः, 'खल सञ्चलने' अधिकरणे घः खल एवमादि सिद्धं भवति। आखनादयः खनित्रवचनाः ॥ १२५ ॥

### भावबोधिनी

अर्थ में प्रतिषेध के लिये यह सूत्र बनाया गया है। उदा०—तैलोदङ्कः [ चमड़े का बना हुआ तेल रखने वाला कुप्पा—तैलम् उदच्यते = उद्ध्रियतेऽस्मिन्—यहाँ अधिकरण अर्थ में उत् + अञ्च् + घञ् = अ "चजोः कुः घिण्ण्यतोः" ७।३।५२ से कुत्व [ च् का क् ]—उदङ्क का तैल के साथ षष्ठी—तत्पुरुष ]। उदक-भिन्न में—इसका क्या फल है? उदकोदञ्चनः [ उदकम् उदच्यतेऽस्मिन्—इस अर्थ में उदकविषय है अतः घञ् न होकर ल्युट् = अन होता है। पानी रखने की टंकी आदि अर्थ है ]। [ ल्युट् का प्रत्युदाहरण दिया गया ] घ का प्रत्युदाहरण क्यों नहीं दिया गया? [ घञ् और घ इन दोनों में किसी के भी करने पर ] कोई अन्तर नहीं होता है। घञ् करने पर भी "थाथघञ्क्ताजबित्रकाणाम्" ६।२।१४४ से अन्तोदात्त ही होता है। [ और घ करने पर भी प्रत्ययस्वर से अन्तोदात्त ही रहता है। अत एव 'उदञ्चनः' यह ल्युट् का प्रत्युदाहरण दिया गया है। पदमञ्जरीमें 'हीत्यादि' जो पाठ आया है वह मूल में नहीं है। ] ॥ १२३ ॥

जाल—यह अर्थ यदि होता है तो 'आनायः' यह निपातन किया जाता है। आङ्-पूर्वक √नी धातु से करण अर्थ में घञ् निपातित होता है। उदा०—आनायः मत्स्यानाम् [ मछलियों का जाल। आनयन्ति अनेन—अथवा आनीयन्तेऽनेन मत्स्यादयः—इस करण अर्थ में आ + √नी + घञ्, ई की वृद्धि आय् आदेश—आनायः ]। आनायः मृगाणाम्। [ मृगों= पशुओं का जाल ] ॥ १२४ ॥

√खन् धातु से करण और अधिकरण अर्थों में पुंल्लिङ्ग में घ प्रत्यय होता है। घ के बल से घञ् भी होता है। उदा०—आखनः, आखानः [ फावड़ा आदि खोदने का साधन। आखन्यते अनेन—इस करण अर्थ में आ + √खन् + घ = अ—आखनः; पक्ष में आ + खन् + घञ् = अ, उपधा की वृद्धि—आखानः ये दो रूप होते हैं। ] * 'खन् से 'ड' प्रत्यय कहना चाहिये।' * उदा०—आखः [ आ + खन् + ड = अ, डित्वात् टिलोप। ] * 'डर प्रत्यय भी कहना चाहिये।' *

## १०८३. ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ १२६ ॥ ( ३३०९ )

**'करणाधिकरणयोः' इति निवृत्तम् । ईषत्, दुर्, सु-इत्येतेषूपपदेषु कृच्छ्राकृच्छ्रार्थेषु धातोः खल् प्रत्ययो भवति । कृच्छ्रं=दुःखम्, तद् दुरो विशेषणम् । अकृच्छ्रं=सुखम्, तदितरयोर्विशेषणम्; संभवात् । ईषत्करो भवता कटः । दुष्करः । सुकरः । ईषद्भोजः । दुर्भोजः । सुभोजः । ईषदादिष्विति किम् ? कृच्छ्रेण कार्यः कटः । कृच्छ्राकृच्छ्रार्थेष्विति किम् ? ईषत्कार्यः । लकारः स्वरार्थः । खित्करणमुत्तरत्र मुमर्थम् ॥**

### न्यासः

**ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ तदितरयोरिति ।** सुशब्देषच्छब्दयोः । कथं पुनः सामान्योक्तेनापि विशेषो लभ्यते ? इत्याह—**सम्भवादिति ।** यत्र यस्य सम्भवस्तत्र तस्य विशेषणं भवति । कृच्छ्रमेव दुःशब्द-स्यार्थे वर्त्तते, नाकृच्छ्रम् । इतरयोस्त्वर्थेऽकृच्छ्रमेव वर्त्तते, न कृच्छ्रम् । तस्मात् कृच्छ्रं दुर एव विशेषणम्, अकृच्छ्रं त्वितरयोरेव । **ईषत्करः कटो भवतेति ।** अकृच्छ्रेण=अयत्नेन क्रियते भवता कट इत्यर्थः । **ईषत्कार्य इति ।** 'ऋहलोर्ण्यत्' इति ण्यत् । ईषच्छब्दोऽत्र मनागित्यस्यार्थे वर्त्तते ।

**लकारः स्वरार्थ इति ।** लिति प्रत्ययात् पूर्वस्योदात्तत्वं यथा स्यात् । ननु च ह्रस्वादिकं खित्कार्यं 'खित्यनव्ययस्य' इत्येवमादिशास्त्रेणानव्ययस्य विधीयते, ईषदादयश्चाव्ययसंज्ञा, तत् किमर्थं खलः खित्करण-मित्याह—**खित्करणमुत्तरत्र मुमर्थमिति ।** उत्तरत्रानव्ययेऽप्युपपदे खल् विधास्यते, तत्र 'अरुर्द्विषदजन्तस्य मुम्' इति मुम् यथा स्यादित्येवमर्थं खित्करणम् ॥ १२६ ॥

### पदमञ्जरी

**ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ तद् दुर इति ।** 'सुदुरोरधिकरणे' इति निर्देशाद् दुःशब्दो रेफान्तोऽ-प्यस्ति । **सम्भवादिति ।** दुर एव कृच्छ्रे सम्भवः इतरयोरेवाकृच्छ्रे, अतः सामान्येनोक्तावपि विशेषणस्य विषय-विभागो लभ्यत इति भावः । **ईषत्कार्यमिति ।** मनागित्यर्थे ईषच्छब्दः ॥ १२६ ॥

### भावबोधिनी

उदा०—आखरः [ आ + खन् + डर, डित् होने से टिलोप ] । * 'इक प्रत्यय कहना चाहिये ।' * आखनिकः [ आ + खन् + इक ] । * 'इकवक प्रत्यय भी कहना चाहिये ।' उदा०—आखनिकवकः [ आखन् + इकवक ] ।

**विमर्श**—भाष्य में प्रस्तुत 'खनो डडरेकेकवकाः' [ म० भा० ३।३।१२५ ] इस एक वार्तिक को काशिकाकार ने चार खण्डों में विभक्त करके क्यों उद्धृत किया, स्पष्ट नहीं है । सम्भवतः इन चार प्रत्ययों का अलग-अलग असन्दिग्ध रूप ज्ञात कराना उद्देश्य रहा होगा । सिद्धान्तकौमुदीकार ने एक वार्तिक रूप में ही उद्धृत किया है । इन चार प्रत्ययों से निष्पन्न सभी शब्द करण अर्थ में प्रत्ययान्त होने से खनित्र=फावड़ा आदि के वाचक हैं ॥ १२५ ॥

'करणाधिकरणयोः' [ करण और अधिकरण अर्थों में ]—इसकी अनुवृत्ति नहीं होती है । कृच्छ्र और अकृच्छ्र अर्थवाले ईषत्, दुर् और सु—इन शब्दों के उपपद रहते धातु से खल् प्रत्यय होता है । कृच्छ्र=दुःख, यह दुर् का विशेषण [ अन्वयी ] है । अकृच्छ्र=सुख, यह उससे भिन्न सु और ईषत् का विशेषण [ अन्वयी ] है; क्योंकि यही सम्भव है [ यह प्रत्यय भाव और कर्म में होता है । ] उदा०—ईषत्करः भवता कटः [ आपके द्वारा सुगमता से बनने वाली चटाई । ईषत् + कृ + खल् = अ, ऋ का गुण रपर । [ अकृच्छ्रेण=अनायासेन क्रियते—यह अर्थ है । ] दुष्करः [ कृच्छ्रेण क्रियते, कष्ट से बनने वाला। दुर् + कृ + खल् = अ, रेफ का विसर्ग और सत्व और षत्व होता है । ] । सुकरः [ सरलता से करने योग्य । सु + कृ + खल् ] । ईषद्भोजः [ अकृच्छ्रेण भुज्यते=सरलता से खाना । ईषद् + भुज् + खल् = अ, उपधागुण ] । दुर्भोजः [ कष्ट से खाना ] । सुभोजः [ सुख से खाना ] । ईषत् आदि उपपद रहते—इसका क्या फल है ? कृच्छ्रेण कार्यः पटः [ यहाँ खल् न होकर "ऋहलोर्ण्यत्" ३।१।१२४ से ण्यत् । कृ + ण्यत् = य, ऋ की वृद्धि और रपर । ] कृच्छ्र और अकृच्छ्र इन अर्थों में—इसका क्या लाभ है ? ईषत् कार्यः [ थोड़ा करना । यहाँ ईषत् = अल्प = थोड़ा इस

## १०८४. कर्तृकर्मणोश्च भूकृञोः ॥ १२७ ॥ ( ३३०८ )

**भवतेः करोतेश्च धातोर्यथासंख्यं कर्त्तरि कर्मणि चोपपदे चकारादीषदादिषु च खल् प्रत्ययो भवति । ईषदाढ्यम्भवं भवता । दुराढ्यम्भवम् । ईषदाढ्यङ्करः । स्वाढ्यङ्करो देवदत्तो भवता ॥**

न्यासः

**कर्तृकर्मणोश्च भूकृञोः ॥** कर्तृकर्मणोरुपपदत्वं भवति, न तु प्रत्ययार्थत्वम् । यदि च तयोः प्रत्ययार्थत्वं स्यादीषदादिष्वेवोपपदेषु प्रत्ययः स्यात्, ततश्च खित्करणमनर्थकं स्यात्; अनव्ययस्य खित्कार्यविधानात्; ईषदादीनाञ्चाव्ययत्वात् । तस्मादतोऽपि खित्करणम् । उपपदे कर्तृकर्मणी, न तु प्रत्ययार्थावितावित्यवसीयते । अत्र च कर्तृकर्मणी ईषदादयश्च न प्रत्येकं प्रत्ययस्य निमित्तम्; किं तर्हि ? तत्समुदायः । चकारेण ह्यत्र सन्नियोगः क्रियते, तेन कर्तृकर्मणोरीषदादीनाञ्च युगपदुपपदत्वं भवति; नान्यथा । यद्येवम्, कथं द्वयोरुपपदयोर्युगपत् समासः ? कः पुनराह—युगपत् समास इति ? पूर्वं हि परस्योपपदस्य समासं कृत्वा पश्चात् पूर्वस्य क्रियते । अथ वा 'उपपदमतिङ्' इत्यत्र 'सुप्' इति निवृत्तम्, तेनानेकस्यापि युगपदेव समासो भवति । किं पुनरत्र परमुपपदम् ? कर्तृकर्मणी । कुत एतत् ? खित्करणसामर्थ्यात् । खित्करणं हि मुमर्थम्, मुमागमश्चानव्ययस्य विधीयते । तत्रेषदादीनां धातोश्चानन्तर्ये खित्करणमनर्थकं स्यात् । **ईषदाढ्यम्भवं भवतेति** । अकृच्छ्रमाढ्येन भूयते भवतेत्यर्थः । **ईषदाढ्यङ्करो देवदत्तो भवतेति** । अकृच्छ्रमाढ्यः क्रियते देवदत्तो भवतेत्यर्थः ।

पदमञ्जरी

**कर्तृकर्मणोश्च भूकृञोः ॥ कर्त्तरि कर्मणि चोपपदे इति ।** प्रत्ययार्थत्वं तु कर्तृकर्मणोर्न भवति; चकारस्योपपदसमुच्चयार्थत्वात् । किं च, यदि तयोः प्रत्ययार्थत्वं स्याद् ईषदादिष्वेवोपपदेषु प्रत्ययः स्यात्, ततश्च खित्करणमनर्थकं स्याद्; अनव्ययस्य हि मुम् विधीयते । तस्मात् सुष्ठूक्तम्—**कर्त्तरि कर्मणि चोपपदे इति** । अत्र चकारः सन्नियोगार्थः क्रियते, यदा कर्तृकर्मणोरीषदादीनां च युगपदुपपदत्वं तदा प्रत्ययो भवति, समासस्तु

भावबोधिनी

अर्थ में है, अकृच्छ्र अर्थ में नहीं । ] लकार अनुबन्ध [ "लिति" ६।१।१९३ से आद्युदात्त ] स्वर के लिये है । खित् करना अग्रिम सूत्र में मुम् का आगम करने के लिये है ॥ १२६ ॥

√भू और √कृ इन धातुओं से क्रमशः कर्ता और कर्म उपपद रहते और चकार के बल से ईषद् आदि उपपद रहते खल् प्रत्यय होता है । [ अर्थात् भू के साथ कर्ता और कृ के साथ कर्म का सम्बन्ध है ] उदा०—ईषदाढ्यम्भवं भवता [ अकृच्छ्रम् अनाढ्येन भवता आढ्येन भूयते । आप सुगमता से धनाढ्य होने योग्य हैं । ईषद् + आढ्य + भू + खल् = अ; ऊ का गुण अव् आदेश करने पर खिदन्त परे रहने से "अरुर्द्विषदजन्तस्य मुम्" ६।३।६५ से मुम् आगम । भाव में नपुंसक लिङ्ग एकवचन होने से सु प्रत्यय का अम् हो जाता है । इसी प्रकार ] दुराढ्यम्भवम् [ कठिनाई से धनाढ्य होने योग्य होना । दुर् + आढ्य + भू + खल् = अ, प्रक्रिया पूर्ववत् । ] ईषदाढ्यङ्करः [ सरलता से धनवान बनाने योग्य । अनाढ्यः आढ्यः सुखेन क्रियते— इस कर्म अर्थ उपपद रहते—ईषद् + आढ्य + कृ + खल् + अ, ऋ का गुण रपर, उपपद—समास, मुम् अगम, अनुस्वार परसवर्ण । ] स्वाढ्यङ्करः देवदत्तो भवता [ आप के द्वारा सरलता से धनवान् बनाने योग्य देवदत्त । सु + आढ्य + कृ + खल् = अ, शेष प्रक्रिया पूर्ववत् ] ।

* 'च्वि—अर्थवाले कर्ता और कर्म उपपद रहते—उक्त प्रत्यय कहना चाहिये ।' * [ अतः ऊपर सभी में अभूततद्भाव अर्थ की प्रतीति समझनी चाहिये । ] यहाँ न हो—स्वाढ्येन भूयते ।

विमर्श—वास्तव में यहाँ 'सु' का योग धातु के साथ ही होना चाहिये क्योंकि खल् प्रत्यय नहीं हो रहा है । अतः आढ्येन सुभूयते—यही पाठ रखना तर्कसंगत है । इसीलिये पदमञ्जरीकार ने—स्वाढ्येन भूयते—पाठ को प्रामादिक कहा है । सिद्धान्तकौमुदीकार ने भी प्रत्युदाहरण में—'आढ्येन सुभूयते' यही लिखा है ॥ १२७ ॥

❋ कर्तृकर्मणोश्च्व्यर्थयोरिति वक्तव्यम् ❋ ( म० भा० ३.३.१२७ वा० १ )। इह मा भूत्—स्वाढ्येन भूयते ॥

१०८५. आतो युच् ॥ १२८ ॥ ( ३३०९ )

ईषदादयोऽनुवर्त्तन्ते। 'कर्तृकर्मणोः' इति न स्वर्यते। कृच्छ्राकृच्छ्रार्थेषु ईषदादिषूपपदेषु आकारान्तेभ्यो धातुभ्यो युच् प्रत्ययो भवति। खलोऽपवादः। ईषत्पानः सोमो भवता। दुष्पानः। सुपानः। ईषद्दानो गौर्भवता। दुर्दानः। सुदानः ॥

१०८६. छन्दसि गत्यर्थेभ्यः ॥ १२९ ॥ ( ३४२१ )

ईषदादिषु कृच्छ्राकृच्छ्रार्थेषूपपदेषु गत्यर्थेभ्यो धातुभ्यश्छन्दसि विषये युच् प्रत्ययो भवति। खलोऽपवादः। सू॒प॒स॒द॒नो॑ऽग्निः ( तै० सं० ७.५.२०.१ )। सूपसदनमन्तरिक्षम् ॥

न्यासः

कर्तृकर्मणोरित्यादि। च्व्यर्थोऽभूततद्भावः। तदर्थयोः कर्तृकर्मणोरुपपदयोः खल् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—प्रायग्रहणं मण्डूकप्लुतिन्यायेनानुवर्तते, तेन यदा कर्तृकर्मणी च्व्यर्थे भवतस्तदैव प्रत्ययो भवति, नान्यदेति। स्वाढ्येन भूयत इति। अत्र च्व्यर्थस्याविवक्षितत्वात् प्रत्ययो न भवति ॥ १२७ ॥

आतो युच् ॥ १२८ ॥ छन्दसि गत्यर्थेभ्यः ॥ सूपसदनमिति। 'षद्लृ विशरणगत्यवसादनेषु', उपपूर्वः ॥ १२९ ॥

पदमञ्जरी

युगपत्पर्यायेण वा भवति। किं पुनरत्र परमुपपदम्? कर्तृकर्मणी। कुत एतत्? खलः खित्करणात्। तद्धि मुमर्थम्, मुमागमश्चानव्ययस्य। तत्रेषदादीनां धातोश्चानन्तर्ये खित्करणमनर्थकं स्यात्। ननु मा भूदीषदो धातोश्चानन्तर्यम्, यत्रैतन्नास्ति—ते प्राग्धातोरिति। यत्र त्वस्ति सुदुरोः, तत्र तयोरेव प्राक् प्रयोगो युक्तः, खित्करणं त्वीषदाढ्यम्भवन्तीम् इत्यादौ मुमर्थं स्यात्, सुदुरोरपि 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति इति तत्रापि मुमर्थं स्यात्, यथा 'उदिकूले रुजिवहोः' कूलमुद्रुज इति? वक्तव्योऽत्र परिहारः—'कृत्यल्युटो बहुलम्' इति। बहुलग्रहणं वाऽत्राश्रयणीयम्। ईषदाढ्यम्भवमिति। अनाढ्येन भवता सुखेनाढ्येन भूयत इत्यर्थः। ईषदाढ्यङ्करः इति। अनाढ्यो देवदत्तः सुखेनाढ्यः क्रियत इत्यर्थः। स्वाढ्येन भूयत इति। प्रमादपाठोऽयम्। अत्र हि खलभावात् सुशब्दस्य धातोः प्राक् प्रयोगेण भाव्यम्, तस्मादाढ्येन सुभूयते इति पाठः ॥ १२७ ॥ १२८ ॥ १२९ ॥

भावबोधिनी

ईषत् आदि की अनुवृत्ति होती है। 'कर्तृकर्मणोः' इसकी अनुवृत्ति नहीं होती है। कृच्छ्र = दुःख और अकृच्छ्र = सुख अर्थों में ईषत् आदि उपपद रहते आकारान्त धातुओं से युच् प्रत्यय होता है। यह खल् का अपवाद है। [ भाव और कर्म में होता है। ] उदा०—ईषत्पानः सोमो भवता [ आपके द्वारा सोमपान करना सरल है। ईषत् + पा + युच् "युवोरनाकौ" से यु = अन ]। दुष्पानः [ कठिनाई से पीने योग्य। अथवा आपके द्वारा पीना कठिन है ]। सुपानः [पीना सरल है]। ईषद्दानः गौः भवता [ आपके द्वारा गोदान करना सरल है। ईषद् + दा + युच् ]। दुर्दानः। सुदानः। [ देना कठिन है। देना सरल है। प्रक्रिया पूर्ववत् है। ] ॥ १२८ ॥

वेद मे कृच्छ्र और अकृच्छ्र अर्थवाले ईषत् आदि उपपद रहने पर गत्यर्थक धातुओं से युच् प्रत्यय होता है। यह खल् का अपवाद है। उदा०—सूपसदनः अग्निः [ सुखेन उपसद्यतेऽसौ—सरलता से समीप बैठने योग्य आग। सु + उप + सद + युच् = यु = अन ] सूपसदनम् अन्तरिक्षम् [ सु + उप + सद + युच् ] ॥ १२९ ॥

## १०८७. अन्येभ्योऽपि दृश्यते ॥ १३० ॥ ( ३४२२ )

**अन्येभ्योऽपि धातुभ्यो गत्यर्थेभ्यश्छन्दसि विषये युचप्रत्ययो दृश्यते । 'सुदोहनामकृणोद् ब्रह्मणे गाम्'** ( नि० ११.४३ ) सुवेदनामकृणोद् ब्रह्मणे गाम् ( ऋ० १०.११२.८ ) ॥

**ॐ भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज् वक्तव्यः ॐ** ( म० भा० ३.३.१३० वा० १ ) । **दुःशासनः । दुर्योधनः । दुर्दर्शनः । दुर्द्धर्षणः । दुर्मर्षणः ॥**

## १०८८. वर्त्तमानसामीप्ये वर्त्तमानवद् वा ॥ १३१ ॥ ( २७८९ )

**समीपमेव सामीप्यम् । ष्यञः स्वार्थिकत्वं ज्ञाप्यते चातुर्वर्ण्यादिसिद्ध्यर्थम् । वर्त्तमानसमीपे भूते भविष्यति**

### न्यासः

**अन्येभ्योऽपि दृश्यते ॥ सुदोहनामिति ।** 'दुह प्रपूरणे' । **वक्तव्य इति ।** व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम्—अपिशब्दोऽत्र क्रियते, स च सर्वव्यभिचारार्थः, तेन 'शासु अनुशिष्टौ' 'युध संप्रहारे', 'दृशिर् प्रेक्षणे', 'ञिधृषा प्रागल्भ्ये', 'मृष तितिक्षायाम्'—इत्येतेभ्योऽपि भाषायां युज् भवतीति । कथं पुनरेतदवसितम्—'सर्वव्यभिचारार्थोऽपिशब्द इति सूत्रारम्भात् । यदि हि गत्यर्थव्यभिचार एवात्राभिसंहितः स्यात् सूत्रमिदं नारभेत । पूर्वसूत्र एव च गत्यर्थग्रहणं न कुर्यात् ॥ १३० ॥

**वर्त्तमानसामीप्ये वर्त्तमानवद्वा ॥** यदि समीपस्य भावोऽभिधीयेत तद्धि स्यात्, एवं सति वर्त्तमानस्य सामीप्येन च समासो न स्यात्; सम्बन्धाभावात् । न हि सामीप्यस्य वर्त्तमानेन सम्बन्धः, अपि तु तत्समीपेन; तस्य तद्गुणत्वात् । तस्मात् स्वार्थ एवायमिह भविष्यतीति मत्वाऽऽह—**समीपमेव सामीप्यम्** । किमर्थं पुनः

### पदमञ्जरी

**अन्येभ्योऽपि दृश्यते ॥ अन्येभ्योऽपि धातुभ्यो गत्यर्थेभ्य इति ।** गत्यर्थेभ्यो येऽन्ये धातवस्तेभ्य इत्यर्थः । अथ वा नञोऽत्र प्रश्लेषः—अन्येभ्योऽपि धातुभ्यः, कोऽर्थः ? अगत्यर्थेभ्य इति ।

**भाषायामिति ।** 'छन्दसि' इत्यधिकारादयमारम्भः । 'शासु अनुशिष्टौ', 'युध संप्रहारे', दृशिर् प्रेक्षणे', 'ञिधृषा प्रागल्भ्ये', 'मृष तितिक्षायाम्' ॥ १३० ॥

**वर्तमानसामीप्ये वर्तमानवद्वा ॥** अत्र केचिद्व्याचक्षते—"समीपस्य भावः सामीप्यम्, भावे ष्यञ्, वर्तमानस्य सामीप्यं वर्तमानसामीप्यम्, षष्ठीसमासः, वर्तमानस्य भूतभविष्यन्तौ प्रति यत्सामीप्यं तत्र वर्त्तमानवत्प्रत्ययातिदेशोऽनर्थकः; ये हि वर्तमाने प्रत्ययास्ते समीपभूतेऽपि तस्मिन् भवन्त्येव, अतो वर्तमानं प्रति भूतभविष्यतोर्यत्सामीप्यं तदत्र वर्तमानसामीप्यमित्युच्यते, समीपद्वारकाच्च वर्तमानस्य सामीप्येनाभिसम्बन्धात्

### भावबोधिनी

वेद में गत्यर्थक से भिन्न धातुओं से भी युच् प्रत्यय देखा जाता है । उदा०—सुदोहनाम् अकृणोद् ब्राह्मणे गाम् । [ सुख से दुहने योग्य, सुखेन दुहयते—सु + दुह् + युच् ] । सुवेदनाम् अकृणोत् ब्रह्मणे गाम् । सु + विद् + युच् ] ।

भाषा = लौकिक संस्कृत में शास्, युध्, दृश्, धृष् और मृष्—इन धातुओं से सु, दुर् उपपद रहने युच् प्रत्यय होता है । उदा०—दुःशासनः [ दुःखेन शास्यते, दुःख से शासित होने वाला, दुर् + शास् + युच् ] । दुर्योधनः [ दुःखेन युध्यते, दुःख से युद्ध करने योग्य, दुर् + युध् + युच् ] । दुर्दर्शनः [ दुःखेन दृश्यते, दुःख से दिखाई पड़ने वाला, दुर् + दृश् + युच् ] । दुर्धर्षणः [ दुःखेन धृष्यते, दुःख से धर्षित होने वाला, दुर् + धृष् + युच् ] । दुर्मर्षणः [ दुःखेन मृष्यते, दुःख से मर्षण=सहन के योग्य दुर् + मृष् + युच् ] । [ सु के साथ सुशासनः, सुयोधनः आदि रूप होते हैं । ] ॥ १३० ॥

समीप ही = सामीप्य है । ष्यञ् प्रत्यय की स्वार्थिकता ज्ञापित की जाती है, जिससे चातुर्वर्ण्य आदि [ शब्दों ] की सिद्धि हो सके । [ अर्थात् ष्यञ् प्रत्यय केवल स्वार्थ में भी होता है । चतुर्वर्ण = चातुर्वर्ण्य, चतुराश्रम=चातुराश्रम्य, अन्यभाव = आन्यभाव्य आदि की सिद्धि इसी प्रकार है । ] वर्तमान के समीपवर्ती भूत और भविष्यत् काल अर्थ में

**च वर्त्तमानाद् धातोर्वर्त्तमानवत्प्रत्यया वा भवन्ति। 'वर्त्तमाने लट्' ( ३.३.१२३ ) इत्यारभ्य यावद् 'उणादयो बहुलम्' ( ३.३.१ ) इति वर्त्तमाने प्रत्यया उक्तास्ते भूतभविष्यतोर्विधीयन्ते। कदा देवदत्त ! आगतोऽसि ? अयमागच्छामि, आगच्छन्तमेव मां विद्धि, अयमागमम्, एषोऽस्म्यागतः। कदा देवदत्त ! गमिष्यसि ? एष गच्छामि, गच्छन्तमेव मां विद्धि, एष गमिष्यामि, गन्तास्मि।**

**न्यासः**

स्वार्थिकं ष्यञं विधायैवं निर्देशः क्रियते, न वर्त्तमानसमीप एवोच्येत यतो लाघवं भवति ? इत्यत आह— **ष्यञः स्वार्थिकत्वं ज्ञाप्यत इति।** स्वार्थे ष्यञपि स्यादनेनेति। स्वार्थे ष्यञ् भवतीत्यमुमर्थं ज्ञापयितुं स्वार्थिक ष्यञ् कृत इति। **चातुर्वर्ण्यादिसिद्धयर्थमिति।** अनेनापि ज्ञापनस्य प्रयोजनमुच्यते। आदिशब्देन चातुराश्रम्यादीनां ग्रहणम्। **अयमागच्छामीति।** अयमागममित्यस्यार्थं एतद्वर्त्तते। **आगममिति।** लुङ्, उत्तमैकवचनम्, 'तस्थस्थमिपाम्' इत्यादिना मिपोऽम्भावः, पुषादिसूत्रेण च्लेरङ्। **एष गच्छामीति।** एष गमिष्यामीत्यस्यार्थं इदं वर्त्तते। 'गमेरिट् परस्मैपदेषु' इतीट्। **गन्तास्मीति।** लुट्, तासिः, मिप्।

**पदमञ्जरी**

समासो नानुपपन्नः, यथा—देवदत्तस्य गुरुकुलमिति। गुणेन नेति प्रतिषेधोऽपि न भवति; यस्माद् गुणशब्दस्य सम्बन्धिशब्दत्वाद् गुणाक्षिप्तस्य गुणिन एव समासनिषेधः; न च वर्तमानः सामीप्यस्य गुणी, भूतभविष्यतोस्तद्गुणित्वात्'' इति। तदिदं क्लिष्टं व्याख्यानम्, ष्यञ्निर्देशश्च केवलं गौरवायैव स्यादित्यन्यथा व्याचष्टे—**समीपमेव सामीप्यमिति।** न चास्मिन् पक्षे ष्यञो वैयर्थ्यमित्याह—**ष्यञः स्वार्थिकत्वं ज्ञाप्यत इति। स्वार्थेऽपि** ष्यञ् भवतीति एतमर्थं ज्ञापयितुं ष्यञा निर्देशः कृतः इत्यर्थः। **चातुर्वर्ण्यादिसिद्धयर्थमिति।** आदिशब्देन चातुराश्रम्यम्, अन्यस्य भावोऽन्यभावः, अन्यभाव एवान्यभाव्यमित्येवमादीनां ग्रहणम्। **कदा देवदत्त आगतोऽसीति।** भूतकालेन प्रश्नः, उदाहरणे भूतकालाभिव्यक्तयेऽयमेष इत्यागमनाविनाभूतं यद्रूपं श्वेतपरिकरबन्धादियुक्तं तद्रूपं प्रतिनिर्दिश्यते। इदानीमागममित्यर्थः। एवं च कदेति प्रश्ने चोत्तरं सङ्गच्छते, सामीप्यं च द्योतितं भवति। **आगममिति।** लुङ्, मिपोऽम्भावः, लृदित्त्वादङ्। **कदा देवदत्त गमिष्यसीति।** अत्रापि भविष्यत्कालेन प्रश्न उदाहरणे भविष्यत्कालाभिव्यक्तये। **गन्तास्मीति।** अनद्यतने लुट्। अत्रापि सामीप्यं यथासम्भवं द्रष्टव्यम्।

**भावबोधिनी**

विद्यमान [ = उस अर्थ के वाचक ] धातु से वर्तमान के समान प्रत्यय विकल्प से होते हैं। ''वर्तमाने लट्'' ३।२।१२३ से लेकर ''उणादयो बहुलम्'' ३।३।१ तक वर्तमान अर्थ में प्रत्यय कहे गये हैं, वे ( समीपवर्त्ती ) भूत और भविष्यत् काल में भी किये जाते हैं। उदा०—देवदत्त ! कदा आगतोऽसि ? [ देवदत्त ! कब आये हो ? ] अयम् अहम् आगच्छामि [ यह मैं अभी आ रहा हूँ। लट् का प्रयोग ], अगच्छन्तम् एव मां विद्धि [ शतृ का प्रयोग ], अयम् अहम् आगमम् [ लुङ् का प्रयोग ], एषोऽस्मि आगतः [ आदिकर्म में क्त प्रत्यय ]। कदा गमिष्यसि देवदत्त ! [ देवदत्त ! कब जाओगे ? ] एष गच्छामि [ यह अभी जा रहा हूँ। लट् का प्रयोग ], गच्छन्तमेव मां विद्धि [ शतृ का प्रयोग ], एष गमिष्यामि [ लृट् का प्रयोग ] एष गन्तास्मि [ लुट् का प्रयोग। किन्तु लुट् अनद्यतन भविष्यत् में होता है। अतः यहाँ किसी प्रकार उपपत्ति करनी चाहिये। इसीलिये भूतकाल के लिये लङ् का उदाहरण नहीं दिया गया। ]

वत् प्रत्यय का उल्लेख सभी सादृश्यों के लिये है। जिस विशेषण के साथ प्रकृति, उपपद और उपाधि के साथ वर्तमान में प्रत्यय किये गये हैं, उसी प्रकार यहाँ भी होते हैं। [ वास्तविक वर्तमानस्थल पर होने वाले प्रत्यय के लिये धातु, उपपद, उपाधि अर्थ आदि जिन-जिन की आवश्यकता बताई गई है, सामीप्य में भी उन-उनकी अपेक्षा रहती है, तभी प्रत्यय होते हैं। किसी की न्यूनता रहने पर प्रत्यय नहीं हो सकते ] जैसे—[ ''पूङ्यजोः'' ३।२।१२८ सूत्र से दो धातुओं से ही वर्तमान में शानन् है तो सामीप्य में भी इन्हीं दो से होता है अन्य किसी से नहीं ] पवमानः यजमानः।

**वत्करणं सर्वसादृश्यार्थम्। येन विशेषणेन वर्त्तमाने प्रत्यया विहिताः प्रकृत्युपपदोपाधिना, तथैवात्र भवन्ति। पवमानः। यजमानः। अलङ्करिष्णुः।**

**सामीप्यग्रहणं किम्? विप्रकर्षविवक्षायां मा भूत्। परुदगच्छत् पाटलिपुत्रम्। वर्षेण गमिष्यति।**

**यो मन्यते—"गच्छामीति पदं वर्त्तमाने काल एव वर्त्तते, कालान्तरगतिस्तु वाक्याद्भवति। न च**

**न्यासः**

अथ वत्करणं किमर्थम्, यावता 'वर्त्तमानसामीप्ये वर्त्तमाने' इत्युच्यमाने वर्त्तमानकालविहिताः प्रत्यया वर्त्तमानसामीप्ये भवन्तीत्येषोऽर्थो लभ्यत एवेत्यत आह—**वत्करणमित्यादि**। असति वत्करणे वर्त्तमानकालेन रूपमात्रमेषां प्रत्ययानामुपलक्ष्यते, न तु प्रकृत्यादय उपादीयेरन्, ततश्च धातुमात्रात् स्युः। वत्करणे तु सति सर्वसादृश्यं गम्यते; तत्रैव वतेर्विधानात्, तेन सङ्करो न भवति। तमेव सङ्कराभावं दर्शयितुमाह—**येनेत्यादि**। एवं हि सर्वसादृश्यं भवति यदि येन विशेषणेन वर्त्तमाने विहितास्तेनैव वर्त्तमानसामीप्ये भवन्ति, नान्यथा। **प्रकृत्योपपदोपाधिनेति**। आदिशब्देनोपाधेरभिधेयस्य च ग्रहणम्। **पवमानो, यजमान इति**। 'पूङ्यजोः शानन्' विहितः, स वर्त्तमानसामीप्येऽपि ताभ्यामेव भवति; न धात्वन्तरात्। **अलङ्करिष्णुरिति**। ताच्छील्यादिविशिष्टे कर्त्तर्यलंपूर्वात् कृञ इष्णुज् विहितः, वर्त्तमानसामीप्येऽपि तत्पूर्वादेव भवति। तस्मिन्नेव चार्थे **परुदगच्छदित्यत्र** विप्रकर्षविवक्षायां लङेव भवति। **वर्षेण गमिष्यतीति**। अत्रापि लृडेव भवति।

**यो मन्यत** इत्यादिनापि प्रतिपत्तृविशेषं प्रति सूत्रं प्रत्याचष्टे। **कालान्तरगतिस्त्वित्यादि**। कालान्तरं = वर्त्तमानसमीपो भूता भविष्यंश्च कालः, तस्य या गतिः = प्रतीतिः। आगच्छामीत्यस्य पदस्य वर्त्तमानकालविशेषेऽप्ययं गच्छामीत्यतो वाक्यात् कदा देवदत्त गमिष्यसीत्येतद्वाक्यसमनन्तरं प्रयुज्यमानाद् भवति। वाक्यगम्योऽपि कालो यदि पदसंस्कारवेलायामुपयुज्यते युज्येत सूत्रारम्भः, न चासौ तत्रोपयुज्यते; यस्माच्छास्त्रेण पदस्य संस्कारः क्रियते, न वाक्यस्य। पदे संस्क्रियमाणे तद्गम्य एव काल उपयुज्यते, तेन वाक्य-

**पदमञ्जरी**

अथ वत्करणं किमर्थम्, यावताऽसत्यपि तस्मिन् प्रत्ययाधिकाराद् वर्तमाने ये प्रत्यया विहितास्ते वर्तमानसामीप्ये भवन्तीत्येषोऽर्थो लभ्यत एव, नार्थो वत्करणेनात आह—**वत्करणं सर्वसादृश्यार्थमिति**। असति वत्करणे वर्तमाने ये प्रत्यया इत्यनेन प्रत्ययानां रूपमात्रं लक्ष्येत, ततश्च सङ्करोऽपि स्यात्—अन्यस्माद्धातोर्यो वर्तमाने विहितः प्रत्ययः स धात्वन्तरादपि स्यात्। वत्करणे तु सति सर्वसादृश्यावगतेः सङ्करो न भवति। सर्वसादृश्यमेव दर्शयति—**येन विशेषणेनेति**। आदिशब्देनोपाधेरभिधेयस्य च ग्रहणम्। **पवमानो, यजमान इति**। वर्तमाने पूङ्यजोः शानन्विहितः, सामीप्ये स ताभ्यामेव भवति। **अलंकरिष्णुरिति**। तच्छीलादिविशिष्टे कर्त्तर्यलंपूर्वात् कृञ इष्णुज्विहितः, स सामीप्येऽपि तस्मादेव, तत्पूर्वादेव, तस्मिन्नेवार्थे भवति।

**परुत्**—पूर्वस्मिन् संवत्सरे।

**यो हि मन्यते इत्यादिना**—प्रतिपत्तृविशेषं प्रति प्रकरणं प्रत्याचष्टे। **कालान्तरगतिस्त्विति**। कालान्तरं = वर्तमानसमीपो भूतो भविष्यंश्च कालः, तस्य या गतिः = प्रतीतिः, सा 'अयं गच्छामि' इत्यतो वाक्यात् 'कदा

**भावबोधिनी**

[ पवित्र करने वाला। यज्ञ करने वाला ]। अलङ्करिष्णुः। [ अलङ्कृत करने वाला। ताच्छील्य = उस प्रकार के स्वभाववाला होना आदि अर्थों में, कर्ता अर्थ में, अलं-पूर्वक √कृ से इष्णुच् किया गया है। उसी प्रकार यहाँ सामीप्य में भी समझना चाहिये। ] सामीप्यग्रहण का क्या फल है? दूरी की विवक्षा में न हो। परुद अगच्छत् पाटलिपुत्रम् [ परुत् = पहले संवत्सर में = पिछले वर्ष पटना गया था। यहाँ नहीं होता है। ] वर्षेण गमिष्यति। [ एक वर्ष में जायगा। यहाँ भी नहीं होता है। ] जो यह मानता है—'गच्छामि' यह पद तो वर्तमान अर्थ में ही प्रयुक्त होता है, अन्य [ समीपादि ] काल

वाक्यगम्यः कालः पदसंस्कारवेलायामुपयुज्यते" इति, तादृशं वाक्यार्थप्रतिपत्तारं प्रति प्रकरणमिदं नारभ्यते। तथा च—श्वः करिष्यति, वर्षेण गमिष्यतीति सर्वमुपपद्यते ॥

## १०८९. आशंसायां भूतवच्च ॥ १३२ ॥ ( २७९० )

**न्यासः**

गम्य इत्यभिप्रायः। इतिकरणः प्रकृतप्रत्ययवमर्शक इति। एवं यो मन्यते = अवगच्छति तं प्रतीदं नारब्धव्यमेत्र। यदर्थमारभ्यते तेषां प्रत्ययानाम् 'वर्त्तमाने लट्' इत्यादिनैव शास्त्रेणासिद्धत्वात्। **प्रकरणग्रहणेन** केवलमिदं सूत्रं नारब्धव्यम्, अपि तु 'आशंसायां भूतवच्च' इत्येवमादीन्यपि नारब्धव्यानीति दर्शयति। **तादृशमित्यादि**। एवञ्च यस्तु तादृशः प्रतिपत्ता न भवति मन्दबुद्धिस्तं प्रत्यारब्धव्यमेवेत्युक्तं भवति। न ह्यसावेवं न्यायेन प्रतिपत्तुं समर्थः। **तथा चेत्यादि**। यस्मात् तत्रैवं वाक्यगम्यः कालः पदसंस्कारवेलायां नोपयुज्यते, एवञ्च सति श्वः करिष्यतीत्येवमाद्युपपद्यते। तत्रापि हि करिष्यतीत्येतत् पदं भविष्यत्येव काले वर्त्तत इति 'लृट् शेषे च' इत्येव लृट् सिद्धः। भविष्यदनद्यतनस्तु कालोऽयम्। यद्युत्तरकालः प्रतीयते तथाप्यसौ वाक्यार्थ इति पदसंस्कारे नाश्रीयते। यदि तु वाक्यगम्योऽपि कालः पदसंस्कारे समाश्रीयेत, तदा तु करिष्यतीत्येवमादि नोपपद्येत—भविष्यदनद्यतने लुटैव भवितव्यमिति कृत्वा ॥ १३१ ॥

**आशंसायां भूतवच्च ॥ आगमदिति**। लुङ्। **आगत इति** निष्ठा। 'अनुदात्तोपदेश' इत्यादिनानुनासिकलोपः। **अधीमह इति**। इङो लट्, महिङ्, अदादित्वाच्छपो लुक्। **अध्यगीष्महीति**। लुङ्, 'विभाषा लुङ्लृङोः'

**पदमञ्जरी**

देवदत्त गमिष्यसि' इत्यस्योत्तरत्वेन प्रयुक्ताद्भवति, ततः किमित्यत्राह—**न चेति**। **वाक्यार्थप्रतिपत्तारमिति**। वाक्यार्थोऽयं न पदार्थ इति यः प्रतिपद्यते स वाक्यार्थप्रतिपत्ता, कर्मणि षष्ठ्याः समासः। 'कर्त्तरि च' इति प्रतिषेधस्त्वनित्यः; 'जनिकर्त्तुः' इति निर्देशात्, शेषषष्ठ्या वा समासः। **प्रकरणमिति**। इत आरभ्याष्टसूत्री प्रकरणशब्देनोच्यते। **तथा च श्वः करिष्यतीत्यादि**। यदि वाक्यगम्योऽपि कालः पदसंस्कार उपयुज्यते, तदा नैवमाद्युपपद्यते—अनद्यतने लुटैव भवितव्यमिति कृत्वा ॥ १३१ ॥

**आशंसायां भूतवच्च ॥ तस्याश्च भविष्यत्कालो विषय इति**। भविष्यत्कालोऽस्येति भविष्यत्कालो धात्वर्थः, स आशंसाविषयः, सा तु वर्तमानकालैव। एवं च सामर्थ्याद्भविष्यद्विषयोऽयमतिदेशो विज्ञायत इत्याह—**भविष्यत्काल इति**। **आशंसायां गम्यमानायामिति**। आशंस्यमानक्रियावचनाद्धातोरित्यर्थः।

**भावबोधिनी**

की प्रतीति तो वाक्य से ही होती है और वाक्य से प्रतीत होने वाला काल पदसंस्कारवेला में उपयुक्त नहीं हो पाता है'—ऐसे वाक्यार्थज्ञाता के लिये प्रस्तुत प्रकरण आरम्भ नहीं किया जा रहा है। इस प्रकार 'श्वः करिष्यति, वर्षेण गमिष्यति—आदि सभी प्रयोग उपपन्न हो जाते हैं।

**विमर्श**—कुछ लोग पदार्थज्ञान करके वाक्यार्थ का ज्ञान करते हैं और कुछ लोगों को सीधा वाक्यार्थ ज्ञान ही हो जाता है। वाक्यार्थज्ञान करने वालों के लिये यहाँ की अष्टसूत्री की आवश्यकता नहीं है। जो मन्दबुद्धि हैं। उन्हीं को समझाने के लिये इन सूत्रों का प्रणयन किया गया है ॥ १३१ ॥

'वा' इतने की ही अनुवृत्ति होती है। 'वर्तमानसामीप्ये' इसकी अनुवृत्ति नहीं होती है। आशंसन = आशंसा, अप्राप्त प्रिय पदार्थ को प्राप्त करने की इच्छा; और उसका विषय भविष्यत्कालिक होना चाहिये। भविष्यत् काल में आशंसा गम्यमान रहने पर धातु से भूतकाल के समान प्रत्यय होते हैं, और 'च' के बल से वर्तमान के समान भी होते हैं। [ यहाँ भविष्यत्काल के ही प्रत्यय होने चाहिये। परन्तु प्रस्तुत सूत्र विकल्प से भूतकाल के समान और 'च' के द्वारा वर्तमान काल

'वा' इत्येव । 'वर्त्तमानसामीप्ये' इति नानुवर्त्तते । आशंसनमाशंसा = अप्राप्तस्य प्रियार्थस्य प्राप्तुमिच्छा, तस्याश्च भविष्यत्कालो विषयः । तत्र भविष्यति काले आशंसायां गम्यमानायां धातोर्वा भूतवत्प्रत्यया भवन्ति, चकाराद्वर्त्तमानवच्च । उपाध्यायश्चेदागमत्, आगतः, आगच्छति, आगमिष्यति, एते व्याकरणमध्यगीष्महि, एते व्याकरणमधीतवन्तः, अधीमहे, अध्येष्यामहे ।

सामान्यातिदेशे विशेषानतिदेशाल्लङ्लिटौ न भवतः । आशंसायामिति किम् ? आगमिष्यति ॥

**न्यास।**

इतीङो गाङादेशः, 'गाङ्कुटादिना' सिचो ङित्वाद् 'घुमास्था' इत्यादिनेत्त्वम् । भूतवच्चेत्यतिदेशे लङ्लिटावपि प्राप्नुतः, तौ कस्मान्न भवत इत्याह—**सामान्यातिदेश इत्यादि** । भूतसामान्यातिदेशोऽयम्, भूतविशेषप्रत्ययौ च लङ्लिटौ । सामान्यातिदेशे विशेषस्यानतिदेशः, तेन ताविह न भवतः ॥ १३२ ॥

**पदमञ्जरी**

उपाध्यायश्चेदित्यादिकमाशंसावाक्यम्, तत्रोपाध्यायागमनं व्याकरणाध्ययनं चोभयमाशंस्यमानमित्युभयत्रापि प्रत्ययः । **अध्यगीष्महीति** । 'विभाषा लुङ्लृटोः' इति इङः गाङादेशः, 'गाङ्कुटादिभ्यः' इति सिचो ङित्त्वम्, घुमास्थादिसूत्रेणेत्वम् ।

**सामान्यातिदेशे इति** । अत्र सूत्रे भूतशब्देन भूतमात्रमुच्यते, न तु तद्विशेषोऽनद्यतनः । सामान्यातिदेशे च विशेषो नातिदिश्यते, ब्राह्मणवदस्मिन्क्षत्रिये वर्त्तितव्यमित्युक्ते ब्राह्मणमात्रप्रयुक्तं कार्यं गम्यते, न तु माठरादिविशेषप्रयुक्तम्, तेनानद्यतनप्रयुक्तौ लङ्लिटौ न भवतः । इहानिष्पन्ने निष्पन्नशब्दः शिष्यः शासितव्यः, देवश्चेद् वृष्टो निष्पन्नाः शालय इति वस्तुस्वरूपकथनमेतत्, नात्राशंसा, तेन सूत्रेणाप्राप्तिः ? नैष दोषः; अप्शालिबीजसंयोग एव निष्पत्तिः, शालीनां तत्रैव निष्पत्तेर्वृत्तेः । अत एव लोको भविष्यद्वाचिनः शब्दस्य प्रयोगं न मृष्यति । देवश्चेद् वृष्टः सम्पत्स्यन्ते शालय इति उक्ते, वक्तारो भवन्ति—मैवं वोचः, सम्पन्नाः शालय इति ब्रूहीति, हेतुभूतकालसम्प्रेक्षितत्वात् सिद्धम् । हेतुभूतस्य वर्षादेर्यः कालः स एव कार्यस्य सम्प्रेक्षितः स एव कार्यस्यापि कालो व्यवस्थाप्यते कारणान्तरापेक्षाभावप्रतिपादनाय । ततश्च कारणस्यैव कार्यरूपेण विवक्षितत्वादभेदाध्यवसायात् कारणस्य भूतत्वात् कार्यस्यापि भूतत्वं सिद्धमित्यर्थः ।

इह तु कश्चिदध्वानं जिगमिषुः पश्यति—अमुष्मिन्नवकाशे कूपो भविष्यतीति, अनद्यतने कूपो भवितेति समासाद्य कूपोऽस्तीति, अतिक्रम्य कूपोऽभूदिति, अतिक्रम्योषितत्वात् कूप आसीदिति, अतिक्रम्योषित्वा विस्मृत्य कूपो बभूवेति; तदत्र सर्वत्र कूपसत्ताया वर्तमानत्वं भूतभविष्यद्रूपत्वमिति सर्वत्र लडेव प्राप्नोति, लुङादयस्तु वक्तव्याः ? तदाह—'अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः कर्तुर्विद्यमानार्थत्वात्' इति । भवन्ती-

**भावबोधिनी**

के समान प्रत्यय करता है । फलतः तीनों कालों के प्रत्यय होते हैं । ] उदा०—उपाध्यायः चेत् आगमत्, आगतः [ भूतकालिक ], आगच्छति [ वर्तमानकालिक ], आगमिष्यति [ भविष्यत्कालिक प्रयोग हैं । सभी का अर्थ है—उपाध्याय अर्थात् गुरुजी यदि आयेंगे ]; एते वयं व्याकरणम् अध्यगीष्महि [ तो हम लोग व्याकरण पढ़ लेगें । यहाँ भूतकालिक लकार है ], व्याकरणम् अधीतवन्तः [ यहाँ भी भूतकालिक है ], अधीमहे [ वर्तमानकालिक है ], अध्येष्यामहे [ यह भविष्यत्कालिक है । परन्तु सभी का अर्थ भविष्यत्कालिक ही होता है । ] 'सामान्य का अतिदेश करने के प्रसङ्ग में विशेष का अतिदेश नहीं होता है'—अतः लङ् और लिट् नहीं होते हैं । [ क्योंकि 'अनद्यतन भूतकाल में लङ् और अनद्यतन परोक्ष-भूतकाल में लिट् और अनद्यतन भविष्यत् में लुट् होता है । इनमें विशेष की प्रतीति होती है । यह प्रस्तुत सूत्र में नहीं कराई जा सकती । जहाँ जो धर्म नहीं है, उसे मानकर कार्य करने पर अतिदेश-व्यवहार होता है । जैसे गुरुपुत्र में गुरु के समान व्यवहार अतिदिष्ट किया जाता है । ] आशंसा = अप्राप्त को प्राप्त करने की इच्छा में—इसका

## १०९०. क्षिप्रवचने लृट् ॥ १३३ ॥ ( २७९१ )

'आशंसायाम्' इत्येव। क्षिप्रवचन उपपदे आशंसायां गम्यमानायां धातोर्लृट् प्रत्ययो भवति। 'भूतवच्च' इत्यस्यायमपवादः। उपाध्यायश्चेत् क्षिप्रमागमिष्यति, क्षिप्रं व्याकरणमध्येष्यामहे।

वचनग्रहणं पर्यायार्थम्। क्षिप्रम्, शीघ्रम्, आशु, त्वरितम् अध्येष्यामहे। 'न' इति वक्तव्ये लृड्ग्रहणं लुटोऽपि विषये यथा स्यात् – श्वः क्षिप्रमध्येष्यामहे॥

### न्यासः

**क्षिप्रवचने लृट्॥ भूतवच्चेत्यस्यायमपवाद इति।** न प्राप्ते भूतवच्चेत्यस्मिन्नस्यारम्भात्।

अथ वचनग्रहणं किमर्थम्, यावता क्षिप्रे लृडित्यनेनैव सर्वं सिद्धमित्यत आह—**वचनग्रहणं पर्यायार्थमिति।** असति हि वचनग्रहणे क्षिप्रशब्द एवोपपदे लृट् स्यात्, तस्मिस्तु सति यावन्तः क्षिप्रवचनास्तेषु सर्वेषु भवति। अथ लृड्ग्रहणं किमर्थम्, न क्षिप्रवचन इत्येवोच्येत, भूतवच्चेत्यस्यातिदेशस्य भविष्यत्कालविषयत्वात् तस्मिन् प्रतिषिद्धे 'लृट् शेषे च' इत्यनेनैव सिद्धः? इत्याह—**नेति वक्तव्य इत्यादि।** नेति वक्तव्ये यल्लृड्ग्रहणं क्रियते तस्यैतत् प्रयोजनम्—लुटोऽपि विषये भविष्यदनद्यतने काले लृड् यथा स्यात्, अन्यथा हि लृडपवादो लुडेव स्यात्॥ १३३॥

### पदमञ्जरी

शब्दो लटः पूर्वाचार्याणां संज्ञा। यदि वचनेन वर्तमान एव लुङादयो विधीयन्ते कूपोऽभूदिति प्रयोक्तव्ये कूपो भविष्यतीत्यपि प्रयुज्येत, तस्माद्यथास्वमेता विभक्तयः कालेषु प्रयुज्यन्ते। कथम्? इन्द्रियव्यापारस्य कालस्य कूपसत्तां प्रति भेदकत्वेनाश्रयणात्तस्या अपि तत्कालत्वम्; ततश्चेन्द्रियव्यापारे भाविनि भविष्यद्विभक्तिः, वर्तमाने वर्तमानविभक्तिः, भूते भूतविभक्तिरिति सिद्धमिष्टम्। उक्तं च--

सत्तामिन्द्रियसम्बन्धात् सैव सत्ता विशेष्यते।
भेदेन व्यवहारो हि वस्त्वन्तरनिबन्धनः॥
अस्तित्वं वस्तुमात्रस्य बुद्ध्या तु परिगृह्यते। ( वा० प० ३।९।११२-११३ )
यः समासादनाद् भेदः स तत्र न विवक्षितः॥ इति ॥ १३२॥

**क्षिप्रवचने लृट्॥ वचनग्रहणं पर्यायार्थमिति।** असति तस्मिन् 'स्वं रूपं शब्दस्य' इति वचनात् क्षिप्रशब्द एवोपपदे स्यात्, सति तु पर्यायेष्वपि भवति। ननु भूतवच्चेत्यस्यायमपवादः, स च भविष्यत्कालविषयः तत्र नेत्येव वक्तव्यम्,तस्मिन्प्रतिषिद्धे 'लृट् शेषे च' इत्यनेनैव लृट् सिद्धः, तत्किं लृड्ग्रहणेन? तत्राह—**नेति वक्तव्ये इत्यादि।** नेत्युच्यमाने 'लृट् शेषे च' इत्यनेन लृड् भवन्ननद्यतने न स्यात्; लुटा बाधितत्वाद्। अतो लुड्विषयोऽपि यथा स्यादिति लृड्ग्रहणं क्रियत इत्यर्थः॥ १३३॥

### भावबोधिनी

क्या लाभ है? आगमिष्यति। [ आयेगा। यहाँ सामान्य कथन है। आशंसा न होने से यह सूत्र नहीं प्रवृत्त होता है। ]॥ १३२॥

'आशंसा में' इतने की ही अनुवृत्ति होती है। **क्षिप्रवचन** = शीघ्रवाची शब्द उपपद रहते आशंसा गम्यमान रहने पर धातु से लृट् होता है। पूर्वसूत्र से प्राप्त 'भूतवच्च' इसका अपवाद यह है। उदा०—उपाध्यायश्चेत् क्षिप्रम् आगमिष्यति [ उपाध्याय जी यदि शीघ्र आ जायेंगे ]; क्षिप्रं व्याकरणम् अध्येष्यामहे। [ हम लोग शीघ्र व्याकरण पढ़ लेंगे। यहाँ क्षिप्र के प्रयोग के कारण लृट् हुआ है। ]

## १०९१. आशंसावचने लिङ् ॥ १३४ ॥ ( २७९२ )

**आशंसा येनोच्यते तदाशंसावचनम्, तस्मिन्नुपपदे धातोर्लिङ् प्रत्ययो भवति। 'भूतवच्च' इत्यस्यायमपवादः। उपाध्यायश्चेदागच्छेत् आशंसे युक्तोऽधीयीय। आशंसेऽवकल्पये युक्तोऽधीयीय। आशंसे क्षिप्रमधीयीय॥**

## १०९२. नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः ॥ १३५ ॥ ( २७९३ )

**भूतानद्यतने भविष्यदनद्यतने च लङ्लुटौ विहितौ, तयोरयं प्रतिषेधः। अनद्यतनवत्प्रत्ययविधिर्न भवति,**

### न्यासः

**आशंसावचने लिङ्॥ आशंसे युक्तोऽधीयीयेति।** इङः लिङः सीयुट्, उत्तमपुरुषस्यैकवचनम्, इट्, 'इटोऽत्' इत्यद्भावः, 'सार्वधातुकमपित्' इति ङित्वाद् गुणाभावः, 'लिङः सलोपोऽनन्त्यस्य' इति सकारलोपः, धातोरियङ्, उपसर्गेण सह 'अकः सवर्णे दीर्घः'। **आशंसे क्षिप्रमधीयीयेति।** अत्र यद्यपि क्षिप्रवचनमुपपदमाशंसावचनमपि, तथापि परत्वाल्लिङेव भवति, न लृट्। तस्य तु यत्राशंसावचनमुपपदं नास्ति सोऽवकाशः—क्षिप्रमध्येष्यामह इति॥ १३४॥

**नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः॥ कालानां सामीप्यमित्यनेन** कालसम्बन्धि सामीप्यमिहाश्रीयत इति दर्शयति। कुतः पुनः सामान्योक्तेन कालसम्बन्धिन एव सामीप्यस्य ग्रहणं लभ्यते? वर्त्तमानसामीप्य इत्यत आरभ्य प्रायिकत्वादस्य प्रकरणस्य। एतदपि कुतः? वर्त्तमानादिशब्दानां कालशब्दत्वात्। अपि च

### पदमञ्जरी

**आशंसावचने लिङ्॥ अधीयीयेति।** इङो लिङः 'इटोऽत्', सीयुट्, लिङः सलोपः, धातोरियङ् उपसर्गेण सह सवर्णदीर्घत्वम्। क्षिप्रवचने लृट्, आशंसावचने लिङ् विप्रतिषेधेन। क्षिप्रवचने लृडित्यस्यावकाशः—क्षिप्रमध्येष्यामह इति, आशंसावचने लिङित्यस्यावकाशः—आशंसे युक्तोऽधीयीयेति; इहोभयं प्राप्नोति—आशंसे क्षिप्रमधीयीयेति, लिङ् भवति विप्रतिषेधेन। तदेतदुदाहरणे दर्शयति—**आशंसे क्षिप्रमधीयीयेति॥ १३४॥**

**नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः॥ कालानां सामीप्यमिति।** 'वर्तमानसामीप्ये' इत्यारभ्य कालप्रायत्वादस्य प्रकरणस्य सामान्येनोक्तावपि कालसम्बन्धिन एव सामीप्यस्याश्रयणमिति भावः। **तुल्यजातीयेनेति।** तत्रैव लोके सामीप्यव्यवहारादिति भावः। **अदादिति।** 'गातिस्था' इत्यादिना सिचो लुक्।

### भावबोधिनी

वचन—इसका ग्रहण पर्याय शब्दों का ग्रहण कराने के लिये है। क्षिप्र, शीघ्र, आशु, त्वरित पढ़ेंगे। 'न' ऐसा कह कर पूर्वसूत्र से प्राप्त का निषेध सम्भव रहने पर भी 'लृट्' का ग्रहण इसलिये किया गया है कि लुट् के विषय में भी लृट् ही हो—श्वः क्षिप्रम् अध्येष्यामहे [ कल शीघ्र पढ़ लेंगे। यहाँ अनद्यतन भविष्यत् होने से लुट् प्राप्त है। परन्तु यह सूत्र लृट का विधान कर देता है॥ १३३॥

आशंसा = अप्राप्त को प्राप्त करने की इच्छा—जिससे कही जाती है वह आशंसा-वचन है, इसके उपपद रहते धातु से लिङ् होता है। 'भूतवच्च' इसका अपवाद यह है। उदा०—उपाध्यायश्चेत् आगच्छेत् आशंसे युक्तः अधीयीय [ उपाध्याय जी यदि आ जायेंगे तो आशा है लगकर पढ़ लूँगा। ] आशंसे = अवकल्पये युक्तः अधीयीय [ अर्थ पूर्वोक्त ही है। ] आशंसे क्षिप्रम् अधीयीय [ शीघ्र पढ़ लेंगे। यहाँ आशंसा और क्षिप्र दोनों की प्रतीति होने पर पूर्ववर्त्ती सूत्रों से भूतवत् प्रत्यय और लृट् प्राप्त थे। उन्हें बाधकर यह सूत्र लिङ् करता है। ]॥ १३४॥

भूत अनद्यतन काल अर्थ में लङ् और भविष्यत् अनद्यतन काल अर्थ में लुट् का विधान किया गया है, उन दोनों का प्रतिषेध यह सूत्र करता है। क्रियाप्रबन्ध और सामीप्य गम्यमान रहने पर अनद्यतन के समान प्रत्यय का विधान नहीं होता है। [ अर्थात् लङ् और लुट् नहीं होते हैं। ] क्रियाओं का प्रबन्ध = लगातार करते रहना। कालों का सामीप्य =

**क्रियाप्रबन्धे सामीप्ये च गम्यमाने । क्रियाणां प्रबन्धः = सातत्येनानुष्ठानम् । कालानां सामीप्यम् = तुल्यजातीयेना-व्यवधानम् । यावज्जीवं भृशमन्नमदात् । भृशमन्नं दास्यति । यावज्जीवं पुत्रान् अध्यापिपत्[1] । यावज्जीवम-ध्यापयिष्यति ।**

**न्यासः**

लङ्लुटोः प्रतिषेधः, तौ च कालविहितौ । अतो यत्र हि तौ, तत्र तत्सम्बन्धेनैव कालसामीप्यमिहाश्रीयत इति विज्ञायते । तत् पुनः कीदृशमित्याह—**तुल्यजातीयेनेत्यादि** । तुल्यजातीयग्रहणं भिन्नजातीयनिवृत्त्यर्थम् । कालमात्रेण व्यवधानेन गृह्यमाणे येयं पौर्णमास्यतिक्रान्ता तस्यामुपाध्यायोऽग्नीनाधितेत्येवमादावुदाहरणे सामीप्यं न स्यात्; अमावस्यया अन्याभिश्च तिथिभिर्व्यवधानात् । तस्मात् समानजातीयेनाव्यवधानमाश्रीयते । **अदादिति** । 'गातिस्था' इत्यादिना सिचो लुक् । **अध्यापिपदिति** । 'हेतुमति च' इति णिच् । 'क्रीङ्जीनां णौ' इत्यात्त्वम्, 'अर्त्तिह्री' इत्यादिना पुक्, लुङ्, च्लेः 'णिश्रि' इत्यादिना चङ्, 'अजादेर्द्वितीयस्य' इति पीत्येतस्य द्विर्वचनम्, 'आडजादीनाम्' इत्याट् 'आटश्च' इति वृद्धिः, णिचो लोपः ।

**पदमञ्जरी**

**अध्यापिपदिति** । इङो णिच्, 'क्रीङ्जीनां णौ' इत्यात्वम्, 'अर्त्तिह्री' इत्यादिना पुक्, लुङि चङि 'अजादेर्द्वितीयस्य' इति पिशब्दस्य द्विर्वचनम्, णिलोपः ।

**येयं पौर्णमास्यतिक्रान्तेति** । पौर्णमास्यन्तरेणाव्यवहिता या पौर्णमासी तामधिकृत्येदमुच्यते ! सापि यद्यप्यमावास्ययान्याभिश्च तिथिभिर्व्यवहिता; तथापि तुल्यजातीयेन पौर्णमास्याख्येनाव्यवहितत्वात् सामीप्यं नातिवर्त्तते । **आधितेति** । दधातेराङ्पूर्वस्य 'स्थाघ्वोरिच्च' इतीत्त्वम्, 'ह्रस्वादङ्गात्' इति सिचो लोपः । **अयष्टेति** । 'झलो झलि' इति सिचो लोपः, व्रश्चादिसूत्रेण षत्वम् । **अदितेति** । ददातेः रूपं पूर्ववत् । **यक्ष्यते इति** । व्रश्चादिषत्वे 'षढोः कः सि' इति कत्वम्, सर्वत्र 'स्वरितञितः' इत्यात्मनेपदम् ।

इह क्रियाप्रबन्धसामीप्ययोरद्यतनप्रत्ययौ लुङ्लृटौ इष्येते, नानद्यतनप्रत्ययौ लङ्लुटौ, तौ च लुङ्लृटौ 'अद्यतनवत् क्रियाप्रबन्धसामीप्ययोः' इत्युच्यमानेऽपि सिद्ध्यत एव, किमर्थं द्वौ प्रतिषेधावुच्येते ? इत्यत आह—**द्वौ प्रतिषेधाविति** । **यथाप्राप्तस्येति** । यथा येन प्रकारेण प्राप्तं = प्राप्तिर्यस्येति बहुव्रीहिः । अव्ययभावे त्वंभावः स्यात् । इहाद्यतनवचने सति विधानमिदं विज्ञायेत, तत्र लङ्विधिप्रसङ्गे पूर्वविधाने ह्यद्यतनसंशब्दनेन विहितस्य कस्यचित्प्रत्ययस्याभावादद्यतने दृष्टस्यातिदेशः, लट् चाप्यद्यतने दृष्टस्तेन तस्यापि भूतभविष्यतोः प्रसङ्गः, लुङ्लृटोश्चायथाकालं विधिः प्रसज्येत—लुङो विषये लृट्, लृटश्च विषये लुङ् । ननु च वत्करणात् सादृश्यार्थात् सङ्करो न भविष्यति ? नैतदस्ति; इह लुङ्लृटौ भूतभविष्यतोरद्यतने च दृष्टौ, तत्राद्यतनवदित्युच्यमाने

**भावबोधिनी**

तुल्यजातीय काल से व्यवधान न होना । [ न अनद्यतनवत्—इस कथन के फलस्वरूप सामान्य भूतकालिक लुङ् और सामान्य भविष्यत्कालिक लृट् ही होता है । ] उदा०— यावज्जीवम् अन्नम् अदात् [ जब तक जीवित रहा निरन्तर अन्नदान करता रहा ] । भृशम् अन्नं दास्यति [ जब तक जीवित रहेगा, निरन्तर अन्नदान करता रहेगा ] । यावज्जीवं पुत्रान् अध्यापिपत् [ जब तक जीवित रहा पुत्रों को पढ़ाता रहा । कहीं कहीं 'पुत्रोऽध्यापिपत् यह पाठ है ।, पुत्र पढ़ाता रहा—यह अर्थ है । परन्तु यह तात्पर्य उचित नहीं है । क्योंकि पिता द्वारा पुत्रों को पढ़ाना उचित एवं व्यवहारिक है ] यावज्जीवम् अध्यापयिष्यति । [ जब तक जीवित रहेगा, पढ़ाता रहेगा । ]

सामीप्य में भी—या इयं पौर्णमासी अतिक्रान्ता एतस्याम् उपाध्यायः अग्नीन् आधित, सोमेन अयष्ट, गाम् अदित [ जो यह पौर्णमासी बीत गई, उसमें उपाध्यायजी ने अग्नि का आधान किया, सोमयाग किया, गोदान किया । यहाँ एक पौर्णमासी है जो दूसरी पौर्णमासी से व्यवहित नहीं है । उसी में सारे कार्य सम्पन्न हुये हैं । इसके मध्य में यद्यपि

१. पुत्रोऽध्यापिपत्—इत्यपपाठः ।

**सामीप्ये खल्वपि – येयं पौर्णमास्यतिक्रान्ता, एतस्यामुपाध्यायोऽग्नीनाधित, सोमेनायष्ट, गामदित। येयममावास्याऽऽगामिनी, एतस्यामुपाध्यायोऽग्नीनाधास्यते, सोमेन यक्ष्यते, स गां दास्यते।**

**द्वौ प्रतिषेधौ यथाप्राप्तस्याभ्यनुज्ञापनाय ॥**

**न्यासः**

**येयं पौर्णमास्यतिक्रान्तेति**। पौर्णमास्यन्तरेणाव्यवहिता या पौर्णमासी, तामधिकृत्येदमाह। सा हि यद्यप्यमावास्यया अन्याभिश्च तिथिभिर्व्यवहिता, तथापि तुल्यजातीयेन पौर्णमास्याख्येन कालेनाव्यवहितत्वात् सामीप्यं नातिवर्त्तते। **अग्नीनाधितेति**। दधातेराङ्पूर्वस्य 'स्थाध्वोरिच्च' इतीत्त्वम्, सिचश्च कित्त्वम्, 'ह्रस्वादङ्गात्' इति सिचो लुक्। **अयष्टेति**। व्रश्चादिसूत्रेण षत्वम्, 'झलो झलि' इति सिचो लोपः। **अदितेति**। ददातेः रूपम्। पूर्ववत्। **यक्ष्यत इति**। यजेर्लृट्, स्यः, तस्मिन् परतस्तथा षत्वे कृते 'षढोः कः सि' इति कत्वम्। आधितेत्यादौ सर्वत्र 'स्वरितञितः' इत्यादिनात्मनेपदम्। किमर्थं प्रतिषेधद्वयमुच्यते, 'नाद्यतनवत् क्रियाप्रबन्धसामीप्ययोः' इत्येवोच्येत ? क्रियाप्रबन्धसामीप्ययोर्ह्यद्यतनप्रत्ययौ लुङ्लृटाविष्येते, नानद्यतनप्रत्ययौ लङ्लुटौ। तौ च लङ्लुटावेवमुच्यमाने सिध्यत एवेत्यत आह—**द्वौप्रतिषेधावित्यादि**। एवं मन्यते—यदि 'नाद्यतनवत् क्रियाप्रबन्धसामीप्ययोः' इत्येवोच्येत तदैतदेवं सूत्रं विधायकं स्यात्, ततश्च सङ्करः प्रसज्येत—लुङोऽपि विषये लृट्, लृटश्च विषये लुङ्। नह्यत्रायं विशेष[1] उपादीयते। भूते लुङ्, भविष्यति लृडिति प्रतिषेधविषय उच्यमाने नायं दोषः, ततो नानेन किञ्चिद् विधीयते, केवलमनद्यतनप्रत्ययानां प्रतिषेधः क्रियते, तेषु प्रतिषिद्धेषु स्वैरेव वाक्यैर्विधायकैर्लुङादय उत्सर्गाः स्वे स्वे कालेऽपवादविनिर्मुक्ते भवन्ति। अतो यथाप्राप्ताभ्यनुज्ञापनाय प्रतिषेधद्वयमुच्यते ॥ १३५ ॥

**पदमञ्जरी**

तस्मिन्नेवाद्यतने तयोरतिदेशोऽनर्थक इति कश्चिदंशो हातव्यः। तत्राद्यतनांशत्यागेनातिदेशे विज्ञायमाने भूतानद्यतने लुङ्, भविष्यदनद्यतने लृडिति सिद्धम्। यदा तु भूतभविष्यदंशपरित्यागेनातिदेशः; तदा भूताद्यतने दृष्टस्य भविष्यदद्यतने, भविष्यदनद्यतने च दृष्टस्य भूताद्यतने विधानमिति सङ्करः स्यादेव, लट् चोभयत्र प्रसज्येत। वत्करणं तु यस्माद्धातोर्यस्मिन्नुपाधौ यः प्रत्ययो विहितः स तस्मादेव तस्मिन्नुपाधावेव यथा स्यादित्येवमर्थं स्यात्। तेन—'पूङ्यजोः शानन्' इत्यादौ कालव्यत्यास एव भवति, न धात्वादिव्यत्यासः। यदि पुनरयं द्वौ प्रतिषेधौ कृत्वा तूष्णीमास्ते, स्वैरेव विधायकैर्लङादय उत्सर्गाः स्वेषु स्वेषु कालेषु अपवादविनिर्मुक्तेषु भवन्तीति न सङ्करप्रसङ्गः। अतो यथाप्राप्तस्याभ्यनुज्ञानान्नायं वतिः; किं तर्हि ? मतुप्—अनद्यतनमस्यास्तीत्यनद्यतनवत्, सामान्यविवक्षायां नपुंसकत्वम्। **अनद्यतनवत्प्रत्ययविधिर्न भवतीति**। अस्याप्यनद्यतनवांश्चासौ प्रत्ययश्च तस्य विधिरित्यर्थ इति सर्वथा यदनद्यतने विहितं तत्सर्वं न भवति। **वृत्तौ** 'लङ्लुटौ विहितौ तयोः प्रतिषेधः' इत्युपलक्षणम् ॥ १३५ ॥

**भावबोधिनी**

अमावस्या, एकादशी आदि अन्य तिथियाँ आ जाती हैं किन्तु तुल्यकालवाली पौर्णमासी नहीं आती है। अतः सामीप्य = तुल्यजातीय के द्वारा अव्यवधान है। ] या इयम् अमावस्या आगामिनी, एतस्याम् उपाध्यायः अग्नीन् आधास्यते, सोमेन यक्ष्यते, स गां दास्यते। [ जो यह अमावस्या आने वाली है, उसमें उपाध्यायजो अग्नि का आधान करेगें, सोमयाग करेगें और गोदान करेगें। [ यहाँ भी अमावस्या में दूसरी अमावस्या का व्यवधान न होने से सामीप्य है। ] दो प्रतिषेध यथाप्राप्त लकारों की अनुमति के लिये हैं। [ भाव यह है कि 'अद्यतनवत् क्रिया-प्रबन्ध-सामीप्ययोः' ऐसा सूत्र बनाकर लुङ् और लृट् किये जा सकते थे, लुट् और लङ् रोके जा सकते थे। फिर दो नञ् [ न, अनद्यतन— ] का प्रयोग क्यों किया गया ? इससे यह ज्ञात होता है कि जो जो प्राप्त होते हैं, वे सभी करने चाहिये। ] ॥ १३५ ॥

---

१. 'विषयः' इति वा पाठः।

## १०९३. भविष्यति मर्यादावचनेऽवरस्मिन् ॥ ( १३६ ॥ (२७९४ )

'नानद्यतनवत्' इति वर्त्तते। अक्रियाप्रबन्धार्थमसामीप्यार्थञ्च वचनम्। भविष्यति काले मर्यादावचने सत्यवरस्मिन् प्रविभागेऽनद्यतनवत्प्रत्ययविधिर्न भवति । योऽयमध्वा गन्तव्य आपाटलिपुत्रात्, तस्य यदवरं कौशाम्ब्यास्तत्र द्विरोदनं भोक्ष्यामहे, तत्र सक्तून् पास्यामः ।

भविष्यतीति किम् ? योऽयमध्वा गत आपाटलिपुत्रात्, तस्य यदवरं कौशाम्ब्यास्तत्र युक्ता अध्यैमहि, तत्र द्विरोदनम् अभुञ्ज्महि, तत्र सक्तूनपिबाम । मर्यादावचने इति किम् ? योऽयमध्वा निरवधिको गन्तव्यः, तस्य

**न्यासः**

**भविष्यति मर्यादावचनेऽवरस्मिन् ॥ मर्यादावचने सतीति**। वचनग्रहणमभिविधावपि यथा स्यात्। मर्यादाविशेष एवाभिविधिश्च। सैव मर्यादा यदा कार्येणाभिसम्बध्यते तदाभिविधिरित्युच्यते, यदा तु न सम्बध्यते तदा मर्यादेति। तत्रेह वचनग्रहणाद्विशेषो नाश्रीयते, तेन मर्यादाया उक्तिमात्रे भवति। विनापि वचनग्रहणेनाभिविधौ प्रतिषेधो न भवेत्; यस्माद् यत्राभिविधौ कार्यमिच्छति तत्राभिविधिग्रहणं वा करोति, यथा—'आङ् मर्यादाभिविध्योः' इति; वचनग्रहणं वा, यथा—'आङ् मर्यादावचने' इति। तदभिविधावपि यथा स्यादित्येवमर्थं वचनग्रहणं क्रियते। **अवरस्मिन्निति**। अर्वागित्यर्थः। **गन्तव्य इति**। भविष्यत्कालता-मध्वनो दर्शयति। **तस्य यदवरमिति**। अनेनाध्वनो विभागम्—**द्विरिति**। एतेनापि क्रियाप्रतिबन्धाभावम्। **भोक्ष्यामह इति**। 'भुजोऽनवने' इत्यात्मनेपदम्, **'चोः कुः'** इति गकारः, 'खरि च' इति गकारस्य ककारः।

**पदमञ्जरी**

**भविष्यति मर्यादावचनेऽवरस्मिन् ॥ अक्रियाप्रबन्धार्थमसामीप्यार्थं च वचनमिति**। 'क्रियाप्रबन्ध-सामीप्ययोः' इति नानुवर्त्तते, तदनुवृत्तौ हि नियमार्थमेतत् स्याद्—भविष्यत्येव मर्यादावचन एवावरस्मिन्नेवेति वा। विधिनियमसम्भवे च विधिरेव ज्यायानिति भावः। **मर्यादावचने सतीति। मर्यादोक्तौ सत्यामित्यर्थः**। वचनग्रहणमभिविध्यर्थम्, वचनग्रहणे हि सति मर्यादामात्रवचने मर्यादावचन इत्यर्थो भवति। सैव हि मर्यादा यदा कार्येणाभिसम्बद्ध्यते तदा 'अभिविधिः' इत्युच्यते। **अवरस्मिन्प्रविभाग इति**। अपरभागविषयश्चेद्धात्वर्थो भवतीत्यर्थः, अपरस्मिन्निति वचनाद्यस्य मर्यादा तस्य द्वौ भागौ कल्पयितव्याविति गम्यते। **गन्तव्य इति**। अध्वगमनस्य भविष्यत्त्वं दर्शयंस्तत्र कर्त्तव्यस्य भोजनादेर्भविष्यत्त्वं दर्शयति। **तस्य यदपरमिति**। अनेनाध्वनो विभागो द्विरित्यनेनापि क्रियाप्रबन्धाभावो द्विरेव, नानवरतमिति।

**भावबोधिनी**

'न अनद्यतनवत्' [ अनद्यतन के समान नहीं ]—इसकी अनुवृत्ति होती है। क्रिया-प्रबन्ध से भिन्न के लिये और सामीप्य से भिन्न के लिये यह सूत्र बनाया गया है। भविष्यत् काल में मर्यादा कहने पर इधर का अन्य विभाग धात्वर्थ रूप से कहना इष्ट रहने पर अनद्यतनवत् प्रत्यय का विधान नहीं होता है। [ अर्थात् अवर प्रविभाग = इधर के भाग को लेकर मर्यादा [ सीमा ] कहनी हो तो भविष्यत् काल में धातु से अनद्यतनवत् विधि नहीं होती है। फलतः लुट् का निषेध होने से लृट् होता है। ] उदा०—योऽयमध्वा गन्तव्यः आपाटलिपुत्रात् [ जो यह रास्ता पटना तक जाने वाला है ], तस्य यदवरं कौशाम्ब्याः तत्र द्विरोदनं भोक्ष्यामहे। [ उसका कौशाम्बी नगरी से इधर जो भाग पड़ता है, उसमें हम लोग दो बार चावल खायेंगे ]। तत्र सक्तून् पास्यामः [ वहाँ सत्तुपान = भक्षण करेंगे। ]। [ यहाँ कौशाम्ब्याः यदवरम्—इससे मार्ग का विभाग कहा गया है। द्विः = दो बार—इससे क्रियाप्रबन्ध का अभाव कहा गया है। भविष्यत् काल है ही। अतः अनद्यतन में लुट् का बाध करके सामान्य लृट् होता है। ]

भविष्यत् काल में—इसका क्या फल है ? योऽयमध्वा गत आपाटलिपुत्रात् तस्य यदवरं कौशाम्ब्यास्तत्र युक्ता अध्यैमहि; तत्र द्विरोदनम् अभुञ्ज्महि; तत्र सक्तून् अपिबाम। [ जो यह मार्ग पटना तक गया है उसमें कौशाम्बी के इधर

**यदवरं कौशाम्ब्याः, तत्र द्विरोदनं भोक्तास्महे, सक्तून् पातास्मः । अवरस्मिन्निति किम् ? योऽयमध्वा गन्तव्य आपाटलिपुत्त्रात्, तस्य यत्परं कौशाम्ब्यास्तत्र द्विरोदनं भोक्तास्महे, तत्र सक्तून् पातास्मः ।**

**इह सूत्रे देशकृता मर्यादा, उत्तरत्र कालकृता ; तत्र च विशेषं वक्ष्यति ॥**

## १०९४. कालविभागे चानहोरात्राणाम् ॥ १३७ ॥ ( २७९९ )

**'भविष्यति' 'मर्यादावचनेऽवरस्मिन्' इति वर्त्तते । कालमर्यादाविभागे सत्यवरस्मिन् प्रविभागे भविष्यति कालेऽनद्यतनवत्प्रत्ययविधिर्न भवति, न चेदहोरात्रसंबन्धी विभागः, तैस्तेषां च विभागे प्रतिषेधः । पूर्वेणैव सिद्धे वचनमिदमहोरात्रनिषेधार्थम् । योगविभाग उत्तरार्थः । योऽयं संवत्सर आगामी, तत्र यदवरमाग्रहायण्याः, तत्र**

**न्यासः**

**अध्यैमहीति** । महिङ्, 'आडजादीनाम्' इत्याट्, आटश्चेति वृद्धिः, उपसर्गस्य यणादेशः । **अपिबामेति** । पाघ्रादिसूत्रेण पिबादेशः, 'नित्यं ङितः' इति सकारलोपः । **भोक्तास्मह इति** । लुट् । **तत्र च विशेषं वक्ष्यतीति**--अनहोरात्राणामित्यनेन ॥ १३६ ॥

**कालविभागे चानहोरात्राणाम्** ॥ **कालमर्यादाविभागे सतीति** । मर्यादाविभागशब्दयोः समाहारे द्वन्द्वः । तेन कालशब्दस्य षष्ठीसमास । **तेषाञ्चेति** । तैस्तेषाञ्चेति युक्तं यत् तेषां विभागे प्रतिषेधो भवति; तत्सम्बन्धित्वाद् विभागस्य । यदा तैरन्यस्य विभागस्तदा न युक्तम्, न हि तदा तत्सम्बन्धी विभागः । किं तर्हि ?

**पदमञ्जरी**

**योऽयमध्वागत इति** । भूतकालतां दर्शयति । **अध्यैमहीति** । इङो लङ्, शपो लुक्, 'आडजादीनाम्', 'आटश्च' । **अभुञ्ज्महीति** । 'भुजोऽनवने' इत्यात्मनेपदम्, 'श्नसोरल्लोपः', चुत्वम् ।

**तत्र उत्तरसूत्रे विशेषं वक्ष्यतीति**—अनहोरात्राणामित्यनेन ॥ १३६ ॥

**कालविभागे चानहोरात्राणाम्** ॥ **कालमर्यादाविभागे सतीति** । मर्यादा च विभागश्च मर्यादाविभागम्—समाहारद्वन्द्वः, तेन कालशब्दस्य षष्ठीसमासः । **न चेदहोरात्रसम्बन्धी विभाग इति** । एतेनानहोरात्राणामिति

**भावबोधिनी**

का जो भाग है वहाँ हम लोगों ने लगकर पढ़ा था; वहाँ दो बार चावल खाये थे; वहाँ सक्तुपान = भक्षण किया था । इस वाक्य में भविष्यत् न होकर भूतकाल है । अतः अनद्यतन भूत में लङ् हुआ है । ] मर्यादावाचक रहने पर—इसका क्या फल है ? 'जो यह मार्ग निरवधिक [ बिना मर्यादा = सीमा के ] जाने वाला है, उसका कौशाम्बी के इधर का जो भाग है, वहाँ दो बार चावल खायेंगे [ = भोक्तास्महे ]; सक्तुभक्षण करेगें [ पातास्मः । यहाँ निरवधिक = असीमित कहने से मर्यादा = सीमा का अभाव सूचित होने के कारण प्रस्तुत सूत्र अनद्यतनवत् का निषेध नहीं करता है । लुट् लकार का प्रयोग होता है—भोक्तास्महे, पातास्मः । ] अवर प्रविभाग = इधर का भाग—इसके ग्रहण का क्या लाभ है ? योऽयमध्वा गन्तव्यः आपाटलिपुत्रात् तस्य यत्परं कौशाम्ब्यास्तत्र द्विरोदनं भोक्तास्महे, तत्र सक्तून् पातास्मः । [ जो यह मार्ग पटना तक जाने वाला है उसका कौशाम्बी के उधर का जो भाग है वहाँ हम लोगों ने दो बार चावल खाये थे; वहाँ सत्तू खाये थे । इसमें 'अवर' = इधर वाला विभाग न होकर उधर वाला विभाग है अतः लुट् का निषेध नहीं होता है । ]

इस सूत्र में देश = स्थान को मानकर मर्यादा = सीमा की गई है और अग्रिम सूत्र में काल = समय को मानकर सीमा कही गई है; इनमें क्या विशेष = अन्तर है, यह आगे [ सूत्र में ] कहा जायगा ॥ १३६ ॥

'भविष्यति' और 'मर्यादावचनेऽवरस्मिन्' [ भविष्यत्काल में और इधर की मर्यादा कहने पर— ] इनकी अनुवृत्ति होती है । काल को मानकर की जाने वाली मर्यादा के विभाग में इधर का विभाग कहा जाने पर भविष्यत् काल में अनद्यतनवत् प्रत्यय का विधान नहीं होता है, यदि वह विभाग अहोरात्र = दिन रात से सम्बद्ध न हो; उन [ अहोरात्र ] के द्वारा [ अन्य काल का ] और उन [ अहोरात्रों ] का विभाग रहने पर प्रतिषेध होता है । पूर्व सूत्र से ही सिद्ध रहने पर

**युक्ता अध्येष्यामहे, तत्रौदनं भोक्ष्यामहे।**

**'भविष्यति' इत्येव – योऽयं वत्सरोऽतीतः, तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्यैमहि, तत्रौदनमभुञ्ज्महि। 'मर्यादावचने' इत्येव – योऽयं निरवधिकः काल आगामी, तस्य यदवरमाग्रहायण्याः, तत्र युक्ता अध्येतास्महे, तत्रौदनं भोक्तास्महे। 'अवरस्मिन्' इत्येव। परस्मिन्विभाषा (३.३.१३८) वक्ष्यति।**

**अनहोरात्राणामिति किम्? त्रिविधमुदाहरणम् – योऽयं मास आगामी, तस्य योऽवरः पञ्चदशरात्रः,**

**न्यासः**

विभज्यमानसम्बन्धी। तथाप्यहोरात्रकृतत्वाद् विभागस्य सम्बन्धित्वमस्त्येव; निमित्तस्य नैमित्तिकसम्बन्धादित्यदोषः। यदि वचनमहोरात्रप्रतिषेधार्थम्, एवं सति योगविभागोऽनर्थकः, पूर्वसूत्र एव हि प्रतिषेधो वक्तव्यः—भविष्यति मर्यादावचनेऽवरस्मिन्ननहोरात्राणामिति, स च सामर्थ्यात् कालविभागस्यैव प्रतिषेधो विज्ञास्यते, न देशविभागस्य, न हि देशविभागस्याहोरात्रैः सह सम्बन्धोऽस्तीत्यत आह—**योगविभाग उत्तरार्थ इति**। उत्तरसूत्रे कालविभाग एव यथा स्यादित्येवमर्थम्, देशविभागे मा भूदिति। **अभुञ्ज्महीति** 'श्नसोरल्लोपः' इत्यकारलोपः।

**त्रिविधमुदाहरणमिति**। तत्र प्रथमे शब्दान्तरवाच्यस्य कालस्याहोरात्रैर्विभागः, द्वितीयेऽहोरात्रवाच्यस्य

**पदमञ्जरी**

सम्बन्धसामान्ये षष्ठी, न 'कर्तृकर्मणोः' इति दर्शयति। एवं सति यदिष्टं सिद्धं तद्दर्शयति—**तैरिति**। तैरन्यस्य कालस्य विभागोऽन्येन वा तेषां तैरेव वा सर्वथा प्रतिषेधः। ननु पूर्वसूत्रे एवानहोरात्राणामिति वक्तव्यम्, एवमपि हि सामर्थ्यात् कालविभागस्यैव प्रतिषेधो विज्ञायते, न हि देशविभागस्याहोरात्रैः सम्बन्धोऽस्ति, तत्किं योगविभागेन? तत्राह—**योगविभाग उत्तरार्थ इति**। उत्तरसूत्रे कालविभाग एव विभाषा यथा स्याद्, देशविभागे मा भूदिति। **आग्रहायणी** = मार्गशीर्षी।

**भावबोधिनी**

यह सूत्र अहोरात्र [ = दिन रात ] का निषेध करने के लिये है। योगविभाग [ कालविभाग — ] अग्रिम सूत्र में अनुवृत्ति के लिये है। उदा०—योऽयं संवत्सर आगामी तत्र यदवरम् आग्रहायण्याः तत्र युक्ता अध्येष्यामहे; तत्र ओदनं भोक्ष्यामहे। [ जो यह आगामी वर्ष है, उसका अगहन पौर्णमासी से इधर का जो भाग है, उसमें हमलोग लगकर पढ़ेंगे; उसमें चावल खायेंगे। इसमें कालवाची आग्रहायणी शब्द से अवरभाग = इधर वाले भाग की सीमा निर्धारित की गई है, अतः अनद्यतन में लुट् न होकर लृट् होता है। ]

भविष्यत् में—इतना ही है। जो यह वर्ष बीत गया, उसकी अगहनी पौर्णमासी से इधर जो भाग, उसमें हम लोग लगकर पढ़े थे, उसमें चावल खाये थे। [ यहाँ भूतकाल है। अतः निषेध न होने से अनद्यतन 'लङ्' होकर—अध्यैमहि, अभुञ्ज्महि ये प्रयोग बने हैं। ] मर्यादावाचक में—इतना ही है—जो यह निरवधिक [ सीमारहित ] समय आने वाला है, उसमें अगहनी पौर्णमासी से इधर जो भाग है उसमें हम लोग लगकर पढ़ेंगे; उसमें सत्तू खायेंगे। [ यहाँ निरवधिक—कहने से मर्यादा = सीमा का उल्लेख नहीं है। अतः अनद्यतनवत् लुट् होता है, बाध नहीं होता ]। अवर प्रविभाग [ इधर का भाग—रहने पर ]—इतना ही है। उधर के विभाग के लिये [ अग्रिम सूत्र से ] विकल्प कहा जायगा।

अनहोरात्र = दिन रात से भिन्न का—इसका क्या फल है? तीन प्रकार के उदाहरण हैं—(१) योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रः; (२) योऽयं त्रिंशद्रात्रः आगामी, तस्य योऽवरोऽर्द्धमासः; (३) योऽयं त्रिंशदहोरात्र आगामी तस्य योऽवरः पञ्चदशरात्रः, तत्र युक्ता अध्येतास्महे; तत्र सक्तून् पातास्मः [ (१) जो यह आने वाला महीना है, उसके इधर वाले जो पन्द्रह ( अहोरात्र ) दिन रात हैं; (२) जो ये आगामी तीस रातें हैं, उसका इधर का जो आधा महीना; (३) जो यह तीस दिन-रात आगामी हैं, उनके इधर वाले जो पन्द्रह दिन रात हैं, उसमें हम लोग लगकर पढ़ेंगे,

योऽयं त्रिंशद्रात्र आगामी, तस्य योऽवरोऽर्द्धमासः, योऽयं त्रिंश दहोरात्र आगामी, तस्य योऽवरः पञ्चदशरात्रः, तत्र युक्ता अध्येतास्महे, तत्र सक्तून् पातास्मः । सर्वथा अहोरात्रस्पर्शे प्रतिषेधः ॥

**१०९९. परस्मिन् विभाषा ॥ १३८ ॥ ( २७९६ )**

**'भविष्यति मर्यादावचने' 'कालविभागे चानहोरात्राणाम्' इति सर्वमनुवर्त्तते । कालमर्यादाविभागे सति भविष्यति काले परस्मिन्प्रविभागे विभाषाऽनद्यतनवत् प्रत्ययविधिर्न भवति, न चेदहोरात्रसंबन्धी प्रविभागः । अवरस्मिन्वर्जं पूर्वमनुवर्त्तते । अवरस्मिन्पूर्वेण प्रतिषेध उक्तः, संप्रति परस्मिन्नप्राप्त एव विकल्प उच्यते । योऽयं संवत्सर आगामी, तस्य यत्परमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे, अध्येतास्महे, तत्र सक्तून् पास्यामः, तत्र सक्तून् पातास्मः ।**

**'अनहोरात्राणाम्' इत्येव — योऽयं त्रिंशद्रात्र आगामी, तस्य यः परः पञ्चदशरात्रस्तत्र युक्ता अध्येतास्महे, तत्र सक्तून् पातास्मः ।**

**'भविष्यति' इत्येव — योऽयं संवत्सरोऽतीतः, तस्य यत्परमाग्रहायण्यास्तत्र युक्ता अध्यैमहि, तत्रौदनमभुञ्ज्महि ।**

**न्यासः**

शब्दान्तरवाच्येन कालेन विभागः, तृतीयेऽहोरात्रवाच्यस्य कालस्याहोरात्रवाच्येन कालेन । **सर्वथेति** । सर्वेण प्रकारेण । यद्यहोरात्रैरन्यस्य[1] विभागोऽथाप्यन्येन तेषां यद्यहोरात्रैरेव तेषामेवमपि प्रतिषेध इति[1] सर्वथा-शब्दस्यार्थः । **अहोरात्रसंस्पर्श इति** । अहोरात्राणां विभागेन सम्बन्धः = अहोरात्रसंस्पर्श इति ॥ १३७ ॥

**परस्मिन् विभाषा ॥ सर्वत्रानद्यतनवत्प्रत्यया उदाहर्त्तव्या इति** । भूतानद्यतने तत्र युक्ता अध्यैमहि,

**पदमञ्जरी**

**त्रिविधमुदाहरणमिति** । प्रथमं तैर्विभागस्य, द्वितीयं तेषां विभागस्य, तृतीयं तैस्तेषामहोरात्रसंस्पर्शे = अहोरात्रगन्धे, एतच्च प्रसज्यप्रतिषेधसमाश्रयणाल्लभ्यते । दर्शितश्च प्रसज्यप्रतिषेधः 'न चेदहोरात्रसम्बन्धी विभागः' इति; अन्यथा 'अनहोरात्रसम्बन्धिनि विभागः' इत्यवक्ष्यत् ॥ १३७-१३८ ॥

**भावबोधिनी**

उसमें सत्तू खायेंगे ] इनमें किसी न किसी प्रकार अहोरात्र = दिन और रात का स्पर्श हो रहा है । यहाँ दिन रात का किसी भी प्रकार स्पर्श रहने पर प्रतिषेध करता है । [ अत एव उक्त तीन वाक्यों में यह सूत्र लागू नहीं होता है । अतः लुट् होता है । ]

**विमर्श**—यहाँ स्पष्टता के लिये कैयट-प्रदीप देखना चाहिये—"अनहोरात्राणाम्—इति सम्बन्ध-सामान्ये षष्ठी, न कर्मणि नापि कर्तरि । तेन यदहोरात्राणाम् अन्येन कालेन विभागोऽन्यस्य वाऽहोरात्रैरहोरात्राणां वाऽहोरात्रैः सर्वथा प्रतिषेध इत्यर्थः" ( कै० प्र० ३।३।१३७ ) । अत एव काशिका में अनहोरात्र के प्रत्युदाहरण में तीन वाक्य हैं। उनमें किसी न किसी प्रकार अहोरात्र ( दिन या रात ) का स्पर्श है ॥ १३७ ॥

'भविष्यति मर्यादावचने' और 'कालविभागे चानहोरात्राणाम्'—इतने सब की अनुवृत्ति होती है । समय की मर्यादा [सीमा] का विभाग रहने पर, उधर वाले विभाग में, भविष्यत् काल में विकल्प से अनद्यतनवत् प्रत्ययविधि नहीं होती है, यदि वह विभाग अहोरात्र [दिन रात] से सम्बद्ध नहीं है । अवरस्मिन्—इसको छोड़कर पूरे पहले सूत्र की अनुवृत्ति होती है । इधर वाले भाग में—पूर्व सूत्र से प्रतिषेध कहा गया है, इस समय उधर वाले भाग में अप्राप्ति में ही विकल्प कहा जा रहा है । उदा०—जो यह वर्ष आने वाला है, उसका आग्रहायणी पौर्णमासी के उधर का जो भाग [काल] है, उसमें हम लोग लगकर

---

१-१. 'यद्यहोरात्रैरन्यस्य विभागोऽथास्याहोरात्रवाच्यस्य शब्दान्तरवाच्येन कालेनाथवाहोरात्रवाच्येनैवैवमपि प्रतिषेधः' इति वा पाठः ।

'मर्यादावचने' इत्येव – योऽयं संवत्सरो निरवधिकः काल आगामी, तस्य यत्परमाग्रहायण्यास्तत्र युक्ता अध्येतास्महे, तत्र सक्तून् पातास्मः।

'कालविभागे' इत्येव – योऽयमध्वा गन्तव्य आपाटलिपुत्रात्, तस्य यत्परं कौशाम्ब्यास्तत्र युक्ता अध्येतास्महे, ओदनं भोक्तास्महे। इति सर्वत्रानद्यतनवत्प्रत्यया उदाहार्याः ॥

## १०९६. लिङ्निमित्ते लृङ् क्रियातिपत्तौ ॥ १३९ ॥ ( २२२९ )

'भविष्यति' इत्यनुवर्त्तते। 'हेतुहेतुमतोर्लिङ्' ( ३.३.१५६ ) इत्येवमादिकं लिङो निमित्तम्। तत्र

### न्यासः

तत्रोदनमभुञ्ज्महीति सर्वत्र लङुदाहर्त्तव्यः। भविष्यदनद्यतने तु—तत्र युक्ता अध्येतास्महे, तत्रौदनं भोक्तास्मह इति सर्वत्र लुडुदाहर्त्तव्यः ॥ १३८ ॥

**लिङ्निमित्ते लृङ् क्रियातिपत्तौ ॥ इत्येवमादिकमिति।** आदिशब्देन 'कथमि लिङ् च' इत्येवमादयो गृह्यन्ते। **कुतश्चिद् वैगुण्यादिति।** विधुरप्रत्ययोपनिपातात्, कारणान्तरवैकल्याद्वा। **आयास्यदिति।** 'स्यतासी लृलुटोः' इति स्यप्रत्ययः। 'इतश्च' इतीकारलोपः। **आह्वास्यदिति।** 'ह्वेञ स्पर्धायाम्'। **पर्यासिष्यतेति।** 'आस

### पदमञ्जरी

**लिङ्निमित्ते लृङ् क्रियातपत्तौ ॥ कुतश्चिद् वैगुण्यादिति।** प्रतिबन्धकोदयः सामग्रीवैकल्यं वा वैगुण्यम्। **दक्षिणेन मार्गेण न शकटं पर्याभविष्यदिति।** तस्य मार्गस्य ऋजुत्वात् स्थाण्वादेरभावाच्च। पर्याभवनम् = भङ्गः। कमलकः = कश्चित्पुरुषः, स शकटादीनां विषमेष्वपि स्थानेषु मुसलाद्यवष्टम्भयोगेन नेता। **अभोक्ष्यत भवान्**

### भावबोधिनी

पढ़ेंगे [ अध्येष्यामहे और अध्येतास्महे—वैकल्पिक निषेध है। अतः लृट् और अनद्यतन में लुट् ये दोनों होते हैं। ] उसमें सत्तू खायेंगे [ पास्यामः, पातास्मः—यहाँ भी लृट् और लुट् दोनों का प्रयोग है। ]

'अनहोरात्र [ दिन रात का न होना ]—इतना ही [ अनुवृत्त है ]—जो यह तीस रातें आने वाली हैं उसकी उधर वाली जो पन्द्रह रातें हैं, उसमें हम लगकर पढ़ेंगे [ = अध्येतास्महे ], उसमें हम सत्तू खायेंगे [ पातास्मः। यहाँ रात्रि का स्पर्श है। अतः यह सूत्र लागू नहीं होता है। अनद्यतन में लुट् होता है। ]

भविष्यत् में- इतना ही। जो यह वर्ष बीत गया, उसकी अगहनी पौर्णमासी के उधर [ बाद वाला ] जो समय है, उसमें हम लोग लगकर पढ़े थे; उसमें चावल खाये थे। [ यहाँ भूतकाल है। अतः अनद्यतन भूत में लङ् हुआ है। ]

मर्यादा = अवधिवाचक रहने पर—इतना ही अनुवृत्त है। जो यह संवत्सर = वर्ष निरवधिक काल आने वाला है, उसका आग्रहायणी पौर्णमासी के बाद जो काल है, उसमें हमलोग लगकर पढ़ेंगे [ अध्येतास्महे ], उसमें सत्तू खायेंगे [ पातास्मः। यहाँ निरवधिक लिखने से मर्यादा का उल्लेख नहीं है। अतः प्रस्तुत सूत्र से विकल्प न होकर केवल लुट् ही होता है। ]

काल का विभाग रहने पर—इतनी ही अनुवृत्ति है। 'जो यह रास्ता पटना तक जायेगा, उसका कौशाम्बो के बाद का जो भाग है उसमें हम लोग लगकर पढ़ेंगे [ अध्येतास्महे ], वहाँ चावल खायेंगे [ भोक्तास्महे। यहाँ काल का विभाग न होकर देश = स्थान का विभाग है। अतः यह सूत्र प्रवृत्त नहीं होता है। ]

इस प्रकार सभी में अनद्यतनवत् प्रत्यय अर्थात् लुट् और लङ् को प्रत्युदाहरण के रूप में देना चाहिये ॥ १३८ ॥

'भविष्यति' [ भविष्यत् काल में ]—इसकी अनुवृत्ति होती है। [ क्रियाओं का ] 'हेतु—हेतुमद्भाव लिङ् लकार का निमित्त है।' लिङ् का निमित्त रहने पर भविष्यत् काल में लृङ् होता है यदि क्रिया की अतिपत्ति = अनिष्पत्ति प्रतीयमान रहती है। किसी वैगुण्य [ = सामग्री के अभावादि ] से क्रिया की अनभिनिर्वृत्ति = क्रिया का न होना, क्रियातिपत्ति है। [ जहाँ एक क्रिया कारणरूप से और दूसरी क्रिया कार्यरूप से आती है, भविष्यत् की प्रतीति रहती है

**लिङ्निमित्ते भविष्यति काले लृङ् प्रत्ययो भवति क्रियातिपत्तौ सत्याम् । कुतश्चिद्वैगुण्यादनभिनिर्वृत्तिः क्रियायाः= क्रियातिपत्तिः । दक्षिणेन [ मार्गेण ] चेदायास्यन्न शकटं पर्याभविष्यत् । यदि कमलकमाह्वास्यद् न शकटं पर्याभविष्यत् । अभोक्ष्यत भवान् घृतेन यदि मत्समीपमागमिष्यत् ।**

**भविष्यकालविषयमेतद्वचनम् । भविष्यदपर्याभवनं च हेतुमत्, तत्र हेतुभूतं च कमलकाह्वानम् । लिङ्गि-**

न्यासः

उपवेशने', अनुदात्तेत् । **तद्धेतुभूतमिति** । शकटपर्याभवनस्य हेतुभूतम् । **एतेन** लिङ्निमित्तं हेतुहेतुमद्भावं दर्शयति । **लिङ्गिलिङ्गे बुध्वेति** । **असकृत् प्राक् कमलकाह्वाने** सति शकटस्यापर्याभवनं दृष्ट्वा भाविनोऽपि कमलकाह्वानस्य शकटस्यापर्याभवनस्य हेतुभूतत्वं लिङ्गेन बुध्वा । लिङ्ग पुनः कमलकाह्वानसामान्यं धर्मम् । **तदतिपत्तिश्चेति** । कमलकाह्वानस्य शकटापर्याभवनस्य चातिपत्तिम् । तत्र कमलकाह्वानस्य चातिपत्तिः कमलकस्य देशान्तरगमनादिना लिङ्गेनावगम्यते । शकटापर्याभवनस्यातिपत्तिरत्र शकटस्य गुरुभारा-रोपणादिना । **इतो वाक्यादिति** । यदि कमलकमाह्वास्यदित्यादेर्वाक्यात् ।

अथ किमर्थं क्रियाग्रहणम्, न त्वेतावद् वक्तव्यम्—लिङ्निमित्ते लृङतिपत्ताविति, धात्वधिकाराद् विनापि क्रियाग्रहणेन धात्वर्थस्यातिपत्ताविति विशेषोऽर्थो लभ्यते, ततोऽनर्थकं क्रियाग्रहणमिति मन्यते, नैतत्; लिङ्-निमित्त इति श्रूयते, प्रकृतस्य सम्बन्धाच्छ्रुतस्य सम्बन्धो बलवानिति लिङ्निमित्तस्यैवातिपत्तिर्विज्ञायते ।

पदमञ्जरी

**घृतेनेति** । घृतमात्रस्यातिपत्तौ भोजनक्रियाभिनिर्वृत्तावपि लृङ् भवति; कारणभेदाद्विभिन्नैव भोजनक्रिया, ततो घृतातिपत्तौ घृतभोजनक्रियाप्यतिपन्नैव ।

**भविष्यत्कालविषयमेतद्वचनमिति** । कथं तर्हि भविष्यतोऽर्थस्येदानीमवगतिस्तत्राह—**भविष्यदपर्याभवन-मिति । हेतुमत् तत्र हेतुभूतमिति** । एतेन लिङ्निमित्तं हेतुहेतुमद्भावं दर्शयति । **लिङ्गेन बुध्वेति** । असकृत् प्राक्कमलकाह्वाने सति शकटापर्याभवनं दृष्ट्वा भाविनोऽपि कमलकाह्वानस्य शकटापर्याभवनहेतुभूतत्वं लिङ्गेन बुध्वा । लिङ्गं पुनः कमलकाह्वानत्वम् । 'भविष्यत्कमलकाह्वानमपि शकटापर्याभवनस्य हेतुः कमलकाह्वानत्वात् पूर्वकमलकाह्वानवत्' इति एवं बुध्वेत्यर्थः । **तदतिपत्तिमिति** । प्रकरणाद् द्विवचनान्तस्य समासः, तयोराह्वानापर्याभवनयोरतिपत्तिमित्यर्थः, तत्र कमलस्य देशान्तरगमनादिना तदाह्वानस्यातिपत्तिरव-सीयते; तदतिपत्त्यैव च[1] पर्याभवनस्याप्यतिपत्तिः, शकटस्य गुरुतरभारारोपणादिना । **भविष्यत्काल-**

भावबोधिनी

वहाँ लिङ् होता है । यदि किसी कारण ऐसा न होने से क्रिया की असिद्धि प्रतीत हो रही हो तो लृङ् होता है । ]
उदा०—दक्षिणेन चेत् आयास्यत् शकटं न पर्याभविष्यत् [ यदि दाहिने रास्ते से आओगे तो गाड़ी नहीं उलटेगी । ] यदि कमलकम् आह्वास्यत् न शकटं पर्याभविष्यत् । [ यदि कमलक नामक व्यक्तिविशेष को बुला लोगे तो गाड़ी नहीं उलटेगी । ] अभोक्ष्यत भवान् घृतेन यदि मत्समीपम् आगमिष्यत् । [ यदि आप मेरे पास आयेंगे तो घी से भोजन करेंगे । ]

[ इनमें प्रथम क्रिया हेतु है और दूसरी कार्य=हेतुमती है । एक के न होने से दूसरी का न होना प्रतीत हो रहा है । अतः लृङ् होता है । यहाँ पदमञ्जरीकार के उदाहरण में कुछ शब्द बढ़ाकर लिखे गये हैं । ]

यह सूत्र भविष्यत्कालिक विषय के लिये है । भविष्यत्कालिक [ गाड़ी का ] अपर्याभवन [=न उलटना ] हेतुमत् = कार्य है और इसमें हेतु है कमलक का बुलाना । कार्य और कारण को समझ कर उनकी अनिष्पत्ति को किसी प्रमाण से जानकर वक्ता वाक्य का प्रयोग करता है—यदि कमलक को बुला लोगे तो गाड़ी नहीं उलटेगी । हेतु और हेतुमान् [ कारण और कार्य ]—आह्वान और अपर्याभवन [ बुलाना और गाड़ी का न उलटना ] जो भविष्यत् काल में होने वाले हैं, उनकी अतिपत्ति=अनिष्पत्ति इस वाक्य से प्रतीत होती है ।

१. अपर्याभवनस्य—इत्युचितः पाठः, अन्वयसङ्गतेः ।

लिङ्गं बुध्वा तदतिपत्तिं च प्रमाणान्तरादवगम्य वक्ता वाक्यं प्रयुङ्क्ते – यदि कमलकमाह्वास्यन्न शकटं पर्याभविष्यदिति । हेतुहेतुमतोराह्वानापर्याभवनयोर्भविष्यत्कालविषययोरतिपत्तिरितो वाक्यादवगम्यते ॥

## १०९७. भूते च ॥ १४० ॥ ( २७९७ )

'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति सर्वमनुवर्त्तते । पूर्वेण भविष्यति विहितः संप्रति भूते विधीयते । भूते च काले लिङ्निमित्ते क्रियातिपत्तौ सत्यां लृङ् प्रत्ययो भवति । 'उताप्योः' समर्थयोर्लिङ्' ( ३.३.१५२ ) इत्यारभ्य लिङ्निमित्तेषु विधानमेतत् । प्राक् ततो विकल्पं वक्ष्यति । दृष्टो मया भवत्पुत्रोऽन्नार्थी चङ्क्रम्यमाणः, अपरश्च द्विजो ब्राह्मणार्थी, यदि स तेन दृष्टोऽभविष्यत्, तदाऽभोक्ष्यत, न तु भुक्तवान्, अन्येन पथा स गतः ॥

### न्यासः

ततश्च 'उताप्योः समर्थयोः' इति सामर्थ्यातिपत्तावुताप्योश्चातिपत्तौ लिङ् प्रसज्येत । तस्मात् क्रियाग्रहणं कर्त्तव्यम् ॥ १३९ ॥

**भूते च ॥ उताप्योरित्यारभ्येत्यादि ।** 'उताप्योः समर्थयोः' इत्येतत्प्रभृतिषु लिङ्निमित्तेषु ह्येतल्लृङ्-विधानम् । कुत एतदित्याह—**प्रागित्यादि ।** यस्मात् प्राग् 'वोताप्योः' इति वक्ष्यते, ततश्च पारिशेष्याद् भूते चेति लिङो विधानम् 'वोताप्योः' इत्यादिष्वेवावतिष्ठते । **न तु भुक्तवानित्यादि ।** क्रियातिपत्तिं दर्शयति ॥ १४० ॥

### पदमञ्जरी

**योरतिपत्तिरितो वाक्याद् गम्यते इति ।** नेदानीं कमलक आह्वातुं शक्यते, तच्च शकटमपि पर्याभविष्य-त्येवेत्यवगमात् ॥ १३९ ॥

**भूते च ॥ अन्नार्थी चङ्क्रम्यमाण इति ।** भोक्तुकामः क्षुधा कुटिलं गच्छन्नित्यर्थः । **अपरश्च द्विजो ब्राह्मणार्थीति ।** चङ्क्रम्यमाणो दृष्ट इत्यनुषङ्गः । ब्राह्मणार्थी भोक्तारं मार्गयमाण इत्यर्थः । सोऽपि संभ्रमात्कुटिलं गच्छति । ततः किमित्यत आह—**यदीत्यादि । यदि दृष्टोऽभविष्यदिति** क्वचित्पठ्यते तत्तु 'यदायद्योरुपसंख्यानम्' इति यदिलिङ्निमित्तत्वात् लृङ्, किं तूत्तरसूत्रेण विकल्पितः । **दृष्ट इत्येव** तु पाठो युक्तः । **न तु भुक्तवानिति ।** क्रियातिपत्तिं दर्शयति । तत्र हेतुः— **अन्येन पथा स गत इति ॥ १४० ॥**

### भावबोधिनी

**विमर्श—**यहाँ कमलक नामक कुशल गाड़ीवान का आह्वान हेतु है और शकट का अपर्याभवन ( न उलटना ) कार्य है । कमलक के आह्वान की अतिपत्ति = असिद्धि इसलिये है कि वह किसी दूसरे स्थान आदि पर चला गया है और शकट के अपर्याभवन की अतिपत्ति = असिद्धि इसलिये है कि उस पर विशेष बोझा आदि लादा गया है । इस प्रकार आह्वान और अपर्याभवन दोनों की भविष्यत्कालिक असिद्धि प्रतीत हो रही है । अतः लृङ् होता है । यहाँ कुछ संकरणों में "यदि कमलकम् आह्वास्यत् दक्षिणेन मार्गेण शकटं न पर्याभविष्यत्' ऐसा पाठ रखा गया है । परन्तु पहले के उदाहरण में 'दक्षिणेन' यह आ चुका है अतः दूसरे उदाहरण में 'दक्षिणेन मार्गेण' इसे रखने की आवश्यकता नहीं है ॥ १३९ ॥

'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इस पूरे सूत्र की अनुवृत्ति होती है । पूर्ववर्त्ती सूत्र से भविष्यत्काल में प्रत्ययों का विधान किया गया है, अब [ इस सूत्र से ] भूतकाल में प्रत्ययों का विधान किया जा रहा है । लिङ् का निमित्त = हेतु-हेतुमद्भाव हो तो क्रिया की असिद्धि गम्यमान रहने पर भूतकाल में भी लृङ् प्रत्यय होता है । "उताप्योः समर्थयोः लिङ्" [३।३।१५२] इससे लेकर लिङ् के निमित्त वाले लक्ष्यों में इस लृङ् का विधान पहले किया गया है, इसके बाद विकल्प कहा जायगा । उदा०—दृष्टो भवत्पुत्रो अन्नार्थी चङ्क्रम्यमाणः, [ अन्न के लिये इधर उधर घूमते हुये आपके पुत्र को मैंने देखा ], अपरश्च द्विजो ब्राह्मणार्थी [ और दूसरे ब्राह्मणार्थी ब्राह्मण को ( भोजनदान करने के लिये घूमते ) देखा ] यदि स तेन दृष्टोऽभविष्यत् [ यदि आपके पुत्र को उस ब्राह्मण ने देख लिया होता ], तदाऽभोक्ष्यत [ तब खा लिया होता । अथवा

## १०९८. वोताप्योः ॥ १४१ ॥ ( २७९८ )

'भूते' 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति सर्वमनुवर्त्तते। वा + आ + उताप्योः = वोताप्योः। मर्यादायामयमाङ्, नाभिविधौ। 'उताप्योः समर्थयोर्लिङ्' ( ३.३.१५२ ) इति वक्ष्यति, प्रागेतस्मात् सूत्रावधेर्यदित ऊर्ध्वमनुक्रमिष्यामः तत्र भूते लिङ्निमित्ते क्रियातिपत्तौ लृङ् वा भवतीत्येतदधिकृतं वेदितव्यम्। वक्ष्यति – 'विभाषा कथमि लिङ् च' ( ३.३.१४३ )—कथं नाम तत्रभवान् वृषलमयाजयिष्यत्। यथाप्राप्तं च – याजयेत् ॥

### न्यासः

**वोताप्योः ॥ वा आ उताप्योरिति।** एतेनाङः प्रश्लेषं दर्शयति। यद्याङोऽत्र प्रश्लेषः, वोताप्योरिति न प्राप्नोति। परत्वाद् गुणे कृते पूर्वेण सह वृद्ध्या भवितव्यम्? सौत्रत्वान्निर्देशस्येत्यदोषः। निपातनत्वात् पूर्वेण सहैकादेशं कृत्वा परेण सहाद्गुणः करिष्यते। **ननु चाङो योगे** 'पञ्चम्यपाङ्परिभिः' इति पञ्चम्या भवितव्यम्, तदयुक्तोऽत्रोताप्योरिति सप्तम्या निर्देशः? नैतत्; यतः पदमेवात्र सप्तम्यन्तमवधित्वेनोपादीयते। न च पदादाङो योगे पञ्चमी भवति; अप्रातिपदिकत्वात्। **मर्यादायामित्यादि।** यद्यभिविधौ स्याद् 'उताप्योः समर्थयोः, इति लिङ् विकल्पेन प्रसज्येत, नित्यश्चेष्यते। तस्मान्मर्यादायामयमाङ्, नाभिविधौ। **यथाप्राप्तञ्चेति।** लिङादिः, वाग्रहणात् ॥ १४१ ॥

### पदमञ्जरी

**वोताप्योः ॥ वा आ उताप्योरिति।** आङः प्रश्लेषं दर्शयति। तत्राङ उताप्योरित्यनेन सम्बन्धादल्पापेक्षत्वेनान्तरङ्गत्वाद्वा पूर्वं परेण सहाद्गुणे कृते पूर्वं प्रत्यन्तवद्भावाद् 'ओमाङोश्च' इति पररूपम्, यथा—आ + ऊढा = ओढा, अद्य ओढा अद्योढा, कदोढेति। अत्रोताप्योः समर्थयोरिति यत्सप्तम्यन्तं तदवधित्वेनोपादीयते, तत्र प्रकृतिवदनुकरणं भवतीत्यनुकरणस्याप्यप्रत्यय इति प्रतिषेधेनाप्रातिपदिकत्वादाङोऽपि योगे पञ्चम्यभावः। **मर्यादायामाङिति।** एतच्च विभाषा गर्हाप्रकृतौ प्रागुतापिभ्यामिति स्मरणादवसीयते। गर्हाप्रकृतौ गर्हाविशिष्टे प्रकृत्यर्थे। गर्हाग्रहणमनवक्लृप्त्यादेरपि लिङ्निमित्तस्योपलक्षणम्। 'विभाषा कथमि लिङ् च' इति लिङ्निमित्ताभावादुत्तरसूत्रातिक्रमः ॥ १४१ ॥

### भावबोधिनी

अन्तर्भावित ण्यर्थं मानकर—खिला दिया होता। ], न तु भुक्तवान् [ लेकिन खाया नहीं ], अन्येन पथा स गतः। [ दूसरे रास्ते से वह = आपका पुत्र चला गया। अतः द्विज ने उसे देखा नहीं ]।

**विमर्श**—उपर्युक्त उदाहरण में—यदि किसी अन्य ब्राह्मण को भोजन कराने के लिये खोजने वाले किसी ब्राह्मण ने उस ब्राह्मण के बच्चे को देख लिया होता'—यह हेतु वाक्य है; 'तब खिला देता, या खा लिया होता'—यह हेतुमत् = कार्य वाक्य है। चूँकि भोजन कराने के इच्छुक ब्राह्मण ने उस बच्चे को नहीं देखा, अतः उसे नहीं खिलाया, या वह बच्चा नहीं खा सका—इस प्रकार क्रिया की अतिपत्ति = असिद्धि गम्यमान है और भूतकाल है। लृङ् होता है—'अभविष्यत्, अभोक्ष्यत। ] ॥ १४० ॥

'भूते' 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इन सब की अनुवृत्ति होती है। वा + आ + उताप्योः = यह पदच्छेद है। यह आङ् मर्यादा अर्थ में है, अभिविधि में नहीं। [ सीमा-निर्धारण में जब स्थान या काल को मिला लिया जाता है तब अभिविधि और जब छोड़ दिया जाता है तब मर्यादा होती है—तेन विना मर्यादा, तेन सह अभिविधिः ] 'उताप्योः समर्थयोर्लिङ्' [ ३।३।१५२ समान अर्थ वाले उत और अपि रहने पर लिङ् होता है ] यह सूत्र आगे कहा जायगा। उस सूत्र से पहले तक [ उस सूत्र को छोड़कर ] यहाँ से आगे जो जो सूत्र कहे जायेगें, उस उस सूत्र में 'भूते, लिङ्निमित्ते क्रियातिपत्तौ लृङ् वा भवति'—[ भूत काल में लिङ् का निमित्त रहने पर क्रिया की अतिपत्ति में विकल्प से लृङ्

## १०९९. गर्हायां लडपिजात्वोः ॥ १४२ ॥ ( २७९९ )

गर्हा, कुत्सेत्यनर्थान्तरम् । गर्हायां गम्यमानायाम् अपिजात्वोरुपपदयोर्धातोर्लट् प्रत्ययो भवति । वर्त्तमाने लट् ( ३.२.१०३ ) उक्तः कालसामान्ये न प्राप्नोतीति विधीयते । कालविशेषविहिताँश्चापि प्रत्ययानयं परत्वाद् अस्मिन् विषये बाधते । अपि तत्रभवान् वृषलं याजयति, जातु तत्रभवान् वृषलं याजयति । गर्हामहे, अहो अन्याय्यमेतत् । लिङ्निमित्ताभावादिह क्रियातिपत्तौ लृङ् न भवति ॥

## ११००. विभाषा कथमि लिङ् च ॥ १४३ ॥ ( २८०० )

**न्यासः**

**गर्हायां लडपिजात्वोः ॥ कालसामान्ये न प्राप्नोतीति ।** एतेन भविष्यतीत्यादेः कालविशेषवाचिनोऽनुवृत्तिं सूचयन्नयं कालसामान्ये विधिरिति दर्शयति—**कालविशेषविहितानिति ।** भूते कालविशेषे लङ्लिटौ विहितौ, भविष्यति लुड्लृटौ च । तान् सर्वान् कालसामान्ये विधीयमानो लट् परत्वाद् बाधते । **याजयतीति ।** यजेर्हेतुमण्ण्यन्ताल्लट् । **लिङ्निमित्ताभावादिति ।** हेतुहेतुमदादेर्लिङ्निमित्ताभावादिह यद्यपि क्रियातिपत्तिर्विवक्ष्यते तथापि लृङ् न भवति ॥ १४२ ॥

**विभाषा कथमि लिङ् च ॥ विभाषाग्रहणमित्यादि ।** यस्मिन् काले लृङादयो विहितास्तेषां बाधनं मा भूदित्येवमर्थं विभाषाग्रहणम् । यद्येवम्, अनर्थकश्चकारः, विभाषाग्रहणादेव हि लटोऽप्यबाधितत्वात्

**पदमञ्जरी**

**गर्हायां लडपिजात्वोः ॥ कालसामान्ये न प्राप्नोतीति ।** विधीयते इत्यनेन भविष्यतीत्यादेः कालविशेषवाचिनो निवृत्तिं सूचयन् कालसामान्ये विधिरिति दर्शयति । **कालविशेषविहितांश्चेत्यादि । भाष्ये** त्वेष निर्णयः—'गर्हायां लड्विधानानर्थक्यम्, क्रियासमाप्तेरविवक्षितत्वात् । ताच्छील्यप्रतिपादनेनात्र गर्हा, ततश्च यदनेन क्रियते तत्सर्वं वृषलयाजनार्थमिति सर्वदासौ वृषलं याजयन्नेव भवति, ततश्च क्रियायाः समाप्तिरविवक्षितेति 'वर्तमाने लट्' इत्येव सिद्धः । यद्येवम्, शतृशानचावपि प्राप्नुतः, दृश्येते च शतृशानचावपि मां याजयन्तं पश्य, अपि मां याजमानं पश्येति, प्रत्युत सूत्रारम्भे सत्यवर्त्तमानकालविहितत्वाल्लुटस्तौ न प्राप्नुत इति दोषवानेव सूत्रारम्भः' इति ॥ १४२ ॥

**विभाषा कथमि लिङ् च ॥ विभाषाग्रहणमित्यादि ।** स्वस्मिन् स्वस्मिन् काले ये लृडादयो विहितास्तेषां

**भावबोधिनी**

होता है— ] इसका अधिकार [ अनुवृत्ति ] समझना चाहिये । आगे कहा जायगा—'विभाषा कथमि लिङ् च' [ ३।३।१४३ गर्हा गम्यमान रहने पर कथम् शब्द उपपद रहते विकल्प से लिङ् होता है, च के बल से यथाप्राप्त अन्य लकार भी होते हैं । ] उदा०—कथं नाम तत्रभवान् वृषलम् अयाजयिष्यत् [ श्रीमान् आप शूद्र को कैसे यज्ञ करायेंगे । यहाँ लृङ् हुआ है ] और यथाप्राप्त— याजयेत् [ यज्ञ करायेंगे । यह विधिलिङ् भी होता है ] ॥ १४१ ॥

गर्हा = कुत्सा—ये समानार्थक हैं । गर्हा = निन्दा प्रतीयमान रहने पर अपि तथा जातु उपपद रहने पर धातु से लट् होता है । वर्तमान काल अर्थ में लट् का विधान किया गया है, अतः कालसामान्य में नहीं प्राप्त होता है, इस कारण इससे विधान किया जा रहा है । कालविशेष में विहित भी अन्य प्रत्ययों को, यह सूत्र पर होने के कारण, प्रस्तुत विषय में, बाध कर लेता है । उदा०—अपि तत्रभवान् वृषलं याजयति, जातु तत्रभवान् वृषलं याजयति, [ ओह, क्या आप शूद्र को यज्ञ कराते हैं, ] गर्हामहे, अहो अन्याय्यम् एतत् [ हम निन्दा करते हैं, अरे यह अनुचित है ] । [ याजयति इससे केवल वर्तमान ही नहीं अपितु भूत और भविष्यत् आदि भी प्रतीत होते हैं; अतः यज्ञ कराया, यज्ञ कराओगे— ये सभी अर्थ होते हैं । परन्तु सबका अपवाद लट् ही होता है । ] लिङ् का निमित्त न होने के कारण क्रियातिपत्ति [ क्रिया की असिद्धि ] में लृङ् नहीं होता है ॥ १४२ ॥

'गर्हायाम्' इति वर्त्तते। कथंशब्दे उपपदे गर्हायां गम्यमानायां धातोर्लिङ् प्रत्ययो भवति, चकाराल्लट् च। विभाषाग्रहणं यथास्वं कालविषये विहितानामबाधनार्थम्। कथं नाम तत्रभवान् वृषलं याजयेत्, कथं नाम तत्रभवान् वृषलं याजयति। कथं नाम तत्रभवान् वृषलं याजयिष्यति। कथं नाम तत्रभवान् वृषलं याजयिता। कथं नाम तत्रभवान् वृषलं याजयेत्। कथं नाम तत्रभवान् वृषलमयीयजत्, [ अयाजयत् ]। कथं नाम तत्रभवान् वृषलं याजयाञ्चकार। अत्र लिङ्निमित्तमस्तीति भूतविवक्षायां क्रियातिपत्तौ वा लङ्। भविष्यद्विवक्षायां सर्वत्र नित्येनैव लृङा भवितव्यम्।

## ११०१. किंवृत्ते लिङ्लृटौ ॥ १४४ ॥ ( २८०१ )

**न्यासः**

सिध्यत्येव ? सत्यं सिध्यति वर्त्तमाने, कालान्तरे तु न सिध्यति। न हि तत्र कथमित्युपपदे लटः प्राप्तिरिति तत् कथं विभाषाग्रहणेन सिध्यति ? तस्माल्लडर्थश्चकारः कर्त्तव्यः। **याजयेदिति**। लिङ्। **याजयिष्यतीति**। लृट्। **अयीयजदिति**। लुङ्, च्लेश्चङ्, णौ चङि ह्रस्वः, णिलोपः, 'चङि' इति द्विर्वचनम्, 'सन्यतः' इतीत्वम्। **अयाजयदिति**। लङ्। **याजयाञ्चकारेति**। लिट्। 'कास्प्रत्ययात्' इत्याम्, 'आमः' इति लेर्लुक्, तस्याव्ययत्वात् सुब्लुक्, 'कृञ्च' इत्यादिना लिट आम्परस्य कृञोऽनुप्रयोगः, णल्, द्विर्वचनम्, अभ्यासकार्यम्, 'अयामन्त' इत्यादिनायादेशः। अत्र लिङ्निमित्तमस्तीति कथमित्येतत् ? गर्हा च ? तदेतद् गर्हायां लिङो विधानाद् भूतविवक्षायां क्रियातिपत्तौ लृङिति भूते चेति वर्त्तमाने 'वोताप्योः' इति वचनाद् भविष्यद्विवक्षायां सर्वत्र नित्येनैव लृङा भवितव्यमिति; भविष्यतीति वर्त्तमाने 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति वचनात् ॥ १४३ ॥

**किंवृत्ते लिङ्लृटौ ॥ किंवृत्त इति**। वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयते। **डतरडतमौ चेति**। किंवृत्ते च

**पदमञ्जरी**

च बाधा मा भूदित्येवमर्थमित्यर्थः। यद्येवम्, विभाषाग्रहणादेव लडपि भविष्यति, नार्थश्चकारेण ? सत्यम्; वर्त्तमाने सिद्धयति, कालान्तरे तु न सिद्धयति, तस्मात्तदर्थश्चकारेण लटः समुच्चयः। **अत्र लिङ्निमित्तमस्तीति**। कथमीत्येतद्गर्हा च ॥ १४३ ॥

**भावबोधिनी**

'गर्हायाम्' [ निन्दा में ]—इसकी अनुवृत्ति होती है। 'कथम्' शब्द उपपद रहते गर्हा अर्थ प्रतीत रहने पर धातु से लिङ् होता है, च के बल से लट् भी होता है। 'विभाषा' इसका ग्रहण अपने अपने काल के अनुसार होने वाले प्रत्ययों का बाध न करने के लिये है। [ इस प्रकार तीनों कालों में लिङ्, लट् और यथाप्राप्त प्रत्यय होते हैं— ] उदा०—(१) कथं नाम तत्रभवान् वृषलं याजयेत् [ श्रीमान् आप शूद्र को कैसे यज्ञ करायेंगे। याजयेत् लिङ् ], (२) कथं नाम तत्रभवान् वृषलं याजयति [ अर्थं पूर्वोक्त है। लट् लकार ], (३) कथं नाम तत्रभवान् वृषलं याजयिष्यति [ अर्थं पूर्वोक्त है। यथाप्राप्त लृट् होता है। ], (४) कथं नाम तत्रभवान् वृषलं याजयिता [ अर्थं पूर्वोक्त। लुट् प्रयोग। यहाँ तक भविष्यत् काल के लिये चार उदाहरण दिये गये। अब भूतकाल के लिये पांच उदाहरण प्रस्तुत कर रहे हैं— ] (१) कथं नाम तत्रभवान् वृषलं याजयेत् [ श्रीमान् जी आपने शूद्र को यज्ञ कैसे कराया। भूतकाल में भी लिङ्—याजयेत्। लट् का भी उदाहरण देना चाहिये था—(२) याजयति ]। (३) कथं नाम तत्रभवान् वृषलम् अयीयजत् [ अर्थं पूर्वोक्त। लुङ् ]। (४) कथं नाम तत्रभवान् वृषलं याजयाञ्चकार [ लिट् ]। (५) अयाजयत् [ लङ् ]। [ वर्तमानकाल में केवल दो ही लकार होते हैं (१) लिङ् और (२) लट्। ] इसमें लिङ् का निमित्त रहता है अतः भूतकाल की विवक्षा में क्रिया की अतिपत्ति [ असिद्धि ] गम्यमान रहने पर विकल्प से लृङ् होता है। भविष्यत् काल की विवक्षा में सर्वत्र नित्य ही लृङ् होना चाहिये ॥ १४३ ॥

'गर्हायाम्' [ निन्दा में ही ]—इतनी अनुवृत्ति होती है। 'विभाषा' इसकी अनुवृत्ति नहीं होती है। किंवृत्त उपपद

'गर्हायाम्' इत्येव । विभाषा न स्वर्यते । किंवृत्त उपपदे गर्हायां गम्यमानायां धातोर्लिङ्लृटौ प्रत्ययौ भवतः । सर्वलकाराणामपवादः । लिङ्ग्रहणं लटोऽपरिग्रहार्थम् । को नाम वृषलो यं तत्रभवान् याजयेत्; यं तत्रभवान् वृषलं याजयिष्यति । कतरो नाम, कतमो नाम यं तत्रभवान् वृषलं याजयेत्, याजयिष्यति । भूते क्रियातिपत्तौ वा लृङ् । भविष्यति तु नित्यम् – को नाम वृषलो यं तत्रभवानयाजयिष्यत् ॥

११०२. अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ॥ १४५ ॥ ( २८०२ )

'गर्हायाम्' इति निवृत्तम् । अनवक्लृप्तिः = असंभावना । अमर्षः = अक्षमा । किंवृत्तेऽकिंवृत्ते चोपपदेऽनवक्लृप्त्यमर्षयोर्धातोर्लिङ्लृटौ प्रत्ययौ भवतः । सर्वलकाराणामपवादः । बह्वचः पूर्वनिपातो लक्षणव्यभिचार-

**न्यासः**

लृडित्येवं कस्मान्नोक्तम्, प्रकृतो हि लिङ्, ततश्चकारेण तस्यैव समुच्चयो विज्ञास्यते, किं लिङ्ग्रहणेनेत्याह— **लिङ्ग्रहणमित्यादि** । असति हि लिङ्ग्रहणे यथा प्रकृतत्वाच्चकारेण लिङ् समुच्चीयते, तथा लडपि समुच्चीयेत सोऽपि हि प्रकृत एव । तस्माल्लटो निवृत्त्यर्थं लिङ्ग्रहणं कृतम् ॥ १४४ ॥

**अनक्लृप्त्यमर्षयोरकिंवृत्तेऽपि** ॥ अत्र द्वावर्थौ, प्रत्ययावपि द्वावेव, ततश्च यथासंख्येन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तान्निराकर्तुमाह— **बह्वच इत्यादि** । अमर्षशब्दो ह्यनवक्लृप्तिशब्दापेक्षयाल्पाच्तरः, तत्र 'अल्पाच्तरम्' इति तस्य पूर्वनिपाते कर्त्तव्ये योऽयमिह बह्वचोऽनवक्लृप्तिशब्दस्य पूर्वनिपातः कृतः स

**पदमञ्जरी**

**किंवृत्ते लिङ्लृटौ** ॥ 'किंवृत्ते लिप्सायाम्' इत्यत्र किंवृत्तं व्याख्यातम् । इह किंवृत्ते लृट् चेति वक्तव्यम्, चकारात्प्रकृतो लिङ् भविष्यति, नार्थो लिङ्ग्रहणेन ? तत्राह— **लिङ्ग्रहणमिति** । चकारेण लिङ इव लटोऽपि समुच्चयः स्यात्; तस्यापि प्रकृतत्वात्, तस्मात् तन्निवृत्त्यर्थमिति भावः ॥ १४४ ॥

**अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि** ॥ अपिग्रहणं शक्यमकर्त्तुम्, कथम् ? यथा 'उपकादिभ्योऽन्यतरस्यामद्वन्द्वे' इत्यत्राद्वन्द्वग्रहणं द्वन्द्वाधिकारनिवृत्त्यर्थम्, तथेहाप्यकिंवृत्तग्रहणं किंवृत्ताधिकारनिवृत्त्यर्थम्, अस्मिन्निवृत्ते किंवृत्ते चाकिंवृत्ते च प्रत्ययद्वयं भविष्यति, तत्क्रियते विस्पष्टार्थम् । तथाऽकिंवृत्त इत्यपि विस्पष्टार्थमेव, अस्वरितत्वादेव

**भावबोधिनी**

रहते गर्हा = निन्दा प्रतीयमान रहने पर धातु से लिङ् और लृट् प्रत्यय होते हैं । यह सूत्र सभी लकारों का अपवाद है । लिङ् का ग्रहण लट् का ग्रहण न कराने के लिये है [ अर्थात् लिङ् का ग्रहण न करके 'च' का ग्रहण करने पर समुच्चयवश 'लिङ् और लट्' दोनों की अनुवृत्ति होने लग जाती । अतः लिङ् का ग्रहण करके लट् की अनुवृत्ति रोक दी गयी है । ] 'किंवृत्त' में वृत्त शब्द से किम् के विभक्त्यन्त रूप और डतर, डतम–प्रत्ययान्त रूपों का ग्रहण होता है । ] उदा०— [ (१) को नाम वृषलो यं तत्रभवान् याजयेत् [ वह कौन शूद्र है जिसे श्रीमान् जी आप यज्ञ करायेंगे । यहाँ लिङ् है । ] (२) …………यं तत्र भवान् याजयिष्यति [ अर्थ पूर्वोक्त ही है । यहाँ लृट है । ] [ किंवृत्त का दूसरा प्रयोग— ] (१) कतरो नाम कतमो नाम, यं तत्रभवान् वृषलं याजयेत् (२) याजयिष्यति [ वह कौन सा शूद्र है जिसे आप यज्ञ करायेंगे । यहाँ लिङ् और लृट है । ] भूतकाल में क्रिया की अतिपत्ति = असिद्धि में विकल्प से लृङ् होता है । भविष्यत् काल में तो नित्य लृङ् होता है--को नाम वृषलो यं तत्रभवान् अयाजयिष्यत् ॥ १४४ ॥

गर्हायाम्— इसकी निवृत्ति है । अनवक्लृप्ति = असम्भावना । अमर्ष = अक्षमा, असहनशीलता । किंवृत्त और अकिंवृत्त दोनों के उपपद रहते अनवक्लृप्ति = असम्भावना और अमर्ष = सहन न करना अर्थ प्रतीयमान रहने पर धातु से लिङ् और लृट् होते हैं । यह सूत्र सभी लकारों का अपवाद करता है । बह्वच् [ बहुत अच् वाले अनवक्लृप्ति शब्द ] का पूर्वनिपात लक्षणव्यभिचार का चिह्न है, अतः यथासंख्य नहीं होता है । [ भाव यह है कि अनवक्लृप्ति और अमर्ष

**चिह्नम् । तेन यथासंख्यं न भवति । अनवक्लृप्तौ तावत् (१) नावकल्पयामि, न संभावयामि, न श्रद्दधे तत्रभवान्नाम वृषलं याजयेत् । (२) तत्रभवान्नाम वृषलं याजयिष्यति । (३) को नाम वृषलो, यं तत्रभवान् वृषलं याजयेत् । (४) को नाम तत्रभवान् वृषलं याजयिष्यति । अमर्षे—न मर्षयामि तत्रभवान् वृषलं याजयेत्, याजयिष्यति । को नाम वृषलो यं तत्रभवान् याजयेत्, याजयिष्यति ।**

**भूतविवक्षायां तु क्रियातिपत्तौ वा लृङ् भवति, भविष्यति नित्यम्—नावकल्पयामि तत्रभवान्नाम वृषलमयाजयिष्यत् ॥**

## ११०३. किंकिलास्त्यर्थेषु लृट् ॥ १४६ ॥ ( २८०३ )

**न्यास:**

लक्षणव्यभिचारार्थतां दर्शयति । यथेह पूर्वनिपातलक्षणं व्यभिचारात् स्वविषये न प्रवर्त्तते, तथा यथासंख्यलक्षणमपीति तेन यथासंख्यं न भवति । अपिग्रहणं किंवृत्तेऽपि यथा स्यात्, अन्यथा ह्यकिंवृत्तग्रहणे किंवृत्ते न स्यात् । यदि यथा 'उपकादिभ्योऽन्यतरस्याम्' इत्यत्राद्वन्द्वग्रहणं द्वन्द्वाधिकारनिवृत्त्यर्थम्, तथेहाप्यकिंवृत्तग्रहणं किंवृत्ताधिकारनिवृत्त्यर्थं स्यात्, तस्मिन्निवृत्ते किंवृत्तेऽकिंवृत्ते च प्रत्ययद्वयं भविष्यतीति व्याख्यायते तदा शक्यतेऽपिग्रहणमकर्तुम् । तर्हि तत् क्रियते विस्पष्टार्थम् ॥ १४५ ॥

**किंकिलास्त्यर्थेषु लृट् ॥ किंकिलशब्दः समुदाय एवोपपदमिति ।** एतेन किंकिलशब्दयोः प्रत्येकमुप-

**पदमञ्जरी**

'किंवृत्ते' इत्यस्याननुवृत्तेरविशेषेण प्रत्ययद्वयं भविष्यति । आह च—किंवृत्तस्यानधिकारादुत्तरत्राकिंवृत्तग्रहणानर्थक्यमिति । ननु चाकिंवृत्तग्रहणेन किंवृत्तादन्यत्पदं पर्युदासाश्रयणेन गृह्यते, तस्योपपदसञ्ज्ञां वक्ष्यामीत्यकिंवृत्तग्रहणं स्यात् । किं पुनरुपपदसंज्ञायाः प्रयोजनम् ? समासः ? न; अतिङिति प्रतिषेधात् । यदा तर्हि लृटः सत्संज्ञकौ भवतस्तदा समासो यथा स्यात्, नास्य लृटः सत्संज्ञकौ भवतः 'लृटः सद्वा' इत्यत्र भविष्यतीत्यधिकाराद् भविष्यतीत्येवं विहितस्य लृटो ग्रहणम् । अयं तु कालमात्रे विधानाद्यद्यपि भवति, तथापि भविष्यदधिकारविहितो न भवतीति नास्य शतृशानचौ भवतः ॥ १४५ ॥

**भावबोधिनी**

ये दो हैं तथा लिङ् और लृट् ये भी दो ही हैं । इस स्थिति में यथासंख्येन अन्वय होकर अनवक्लृप्ति में लिङ् और अमर्ष में लृट् होना चाहिये था । [परन्तु यहाँ द्वन्द्व में अल्पाच् = अमर्ष का पूर्व प्रयोग न करके नियमविरुद्ध बह्वच् = अनवक्लृप्ति शब्द का पूर्वप्रयोग यथासख्य का अभाव सिद्ध करता है । अतः दोनों अर्थों में दोनों लकार होते हैं ] उदा०—
(क) अनवक्लृप्ति [=असम्भावना] में पहले—न अवकल्पयामि = न सम्भावयामि; न श्रद्दधे तत्रभवान् नाम वृषलं याजयेत् [ (१) मैं यह सोच भी नहीं सकता, विश्वास नहीं कर सकता कि श्रीमान् जी आप शूद्र को यज्ञ करायेंगे । लिङ् का प्रयोग ] । तत्रभवान् नाम वृषलं याजयिष्यति । [ (२) अर्थ पूर्वोक्त ही है । लृट् होता है । ] (३) कौन वह शूद्र है, श्रीमान् जी जिसे यज्ञ करायेंगे [ याजयेत् ] (४) आप कौन श्रीमान् जी शूद्र को यज्ञ करायेंगे [ याजयिष्यति ] ।
(ख) अमर्ष = सहन न करना—न मर्षयामि, तत्रभवान् वृषलं याजयेत्, याजयिष्यति [ मैं यह नहीं सहन कर सकता कि आप शूद्र को यज्ञ करायें । [ लिङ् और लृट् का प्रयोग है । ] को नाम वृषलो यं तत्रभवान् याजयेत्, याजयिष्यति । [ कौन शूद्र है जिसे आप यज्ञ करायेंगे । यहाँ भी लिङ् और लृट् हैं । ]

भूतकाल की विवक्षा में तो क्रियातिपत्ति गम्यमान रहने पर विकल्प से लृङ् होता है । भविष्यत् काल में नित्य होता है—न अवकल्पयामि तत्रभवान् नाम वृषलम् अयाजयिष्यत् [ मैं यह सहन नहीं कर सकता कि आप शूद्र को यज्ञ करायेंगे । ] ॥ १४५ ॥

'अनवक्लृप्त्यमर्षयोः' इसकी अनुवृत्ति होती है । किंकिल शब्द इस समुदाय रूप में ही उपपद रहता है । अस्त्यर्थ= √अस्, √भू और √विद् । किंकिल और अस्त्यर्थक पदों के उपपद रहते अनवक्लृप्ति = असम्भावना और अमर्ष =

'अनवक्लृप्त्यमर्षयोः' इति वर्त्तते। किंकिलशब्दः समुदाय एवोपपदम्। अस्त्यर्थाः=अस्तिभवतिविद्यतयः। किंकिलास्त्यर्थेषूपपदेषु अनवक्लृप्त्यमर्षयोर्धातोर्लृट्प्रत्ययो भवति। लिङोऽपवादः। किंकिल नाम तत्रभवान् वृषलं याजयिष्यति। अस्ति नाम तत्रभवान् वृषलं याजयिष्यति। भवति नाम तत्रभवान् वृषलं याजयिष्यति। विद्यते नाम तत्रभवान् वृषलं याजयिष्यति, न श्रद्दधे, न मर्षयामि। लिङ्निमित्तमिह नास्ति, तेन लृङ् न भवति॥

## ११०४. जातुयदोर्लिङ् ॥ १४७ ॥ ( २८०४ )

'अनवक्लृप्त्यमर्षयोः' इत्येव। जातु, यद्-इत्येतयोरुपपदयोरनवक्लृप्त्यमर्षयोर्गम्यमानयोर्धातोर्लिङ् प्रत्ययो भवति। **लृटोऽपवादः। जातु तत्रभवान् वृषलं याजयेत्, यन्नाम तत्रभवान् वृषलं याजयेत्, न श्रद्दधे,न मर्षयामि॥**

**न्यासः**

पदत्वं निरस्यति, कस्मात् पुनस्तयोश्च प्रत्येकमुपपदत्वं न भवति? केवलस्य किंशब्दस्यानवक्लृप्त्यमर्षयोर्वृत्त्यसम्भवात्, समुदायस्य च सम्भवात्। **लिङोऽपवाद इति**। पूर्वेण प्राप्तस्य।

**लिङ्निमित्तमिह नास्तीति**। लृट एव विधानात्॥ १४६॥

**जातुयदोर्लिङ्॥ लृटोऽपवाद इति**। अनवक्लृप्त्यादिसूत्रेण प्राप्तस्य।

**पदमञ्जरी**

**किंकिलास्त्यर्थेषु लृट्॥ समुदाय उपपदमिति**। केवलस्य किंशब्दस्यानवक्लृप्त्यमर्षयोर्वृत्त्यसम्भवात्। **लिङोऽपवाद इति**। पूर्वेणाप्राप्तस्य। **अस्ति नामेत्यादि**। भवत्कर्तृकं वृषलयाजनमस्तीत्यर्थः। उक्तं हि 'पच्यादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति' इति॥ १४६॥

**जातुयदोर्लिङ्॥ लृटोऽपवाद इति**। अनवक्लृप्त्यादिसूत्रेण लिङ्लृटोर्द्वयोरपि प्राप्तयोर्लिङेव यथा स्यात्, लृण्मा भूदित्येवमर्थ इत्यर्थः। **यदायद्योरुपसङ्ख्यानमिति**। सूत्रवत् लृटोऽपवादः॥ १४७॥

**भावबोधिनी**

सहन न करना—इन अर्थों के प्रतीत होने पर धातु से लृट् होता है। यह लिङ् का अपवाद है। [ किंकिल यह समुदाय क्रोध द्योतित करने के लिए प्रयुक्त होता है। ] उदा०—किंकिल नाम तत्रभवान् वृषलं याजयिष्यति। [ यह सम्भव नहीं है कि श्रीमान् आप शूद्र को यज्ञ करायेंगे। ] अस्ति नाम तत्रभवान् वृषलं याजयिष्यति ] यह सम्भावना नहीं है कि आप शूद्र को यज्ञ करायेंगे। ] भवति नाम तत्रभवान् वृषलं याजायिष्यति [ अर्थ पूर्वोक्त ] विद्यते नाम, तत्रभवान् वृषलं याजयिष्यति [ अर्थ पूर्वोक्त ]—न श्रद्दधे, न सम्भावयामि [ न बिश्वास करता हूँ न सम्भावना करता हूँ ]। [ यहाँ ध्यान रखना चाहिए कि 'न श्रद्दधे, न मर्षयामि' इन वाक्यांशों का सम्बन्ध पूर्ववर्त्ती प्रत्येक वाक्यांश के साथ है। अतः 'किंकिल नाम तत्रभवान् वृषलं याजयिष्यति, न श्रद्धे, न मर्षयामि—ऐसी योजना करके असम्भावना और सहन न करना—अर्थों की सम्भावना चाहिये—मैं प्रतीति करनी नहीं कर सकता, मैं सहन नहीं कर सकता कि श्रीमान् आप शूद्र को यज्ञ करायेंगे। ] यहाँ लिङ्निमित्त नहीं है अतः लृङ् नहीं होता है॥ १४६॥

'अनवक्लृप्ति—अमर्षयोः' इनकी अनुवृत्ति होती है। अनवक्लृप्ति=असम्भावना और अमर्ष=असहशीलता अर्थ प्रतीयमान हो रहे हों, 'जातु' तथा 'यत्' ये शब्द उपपद हों तो धातु से लिङ् होता है। यह लृट् का अपवाद है। उदा०—जातु तत्रभवान् वृषल याजयेत्, यत् नाम वृषलं याजयेत् न श्रद्दधे, न सम्भावयामि [ 'न श्रद्दधे' और 'न सम्भावयामि'—इन वाक्यांशों को जोड़कर अनवक्लृप्ति और अमर्ष अर्थ प्रतीत करना चाहिये—मैं सोंच नहीं सकता कि आप शूद्र को यज्ञ करायेंगे। मैं सहन नहीं कर सकता कि आप शूद्र को यज्ञ करायेंगे। ]

* 'जातु और यत् के योग में लिङ् का विधान करने के प्रसङ्ग में 'यदा' और 'यदि' शब्दों का भी उपसंख्यान करना चाहिये।' * उदा०—मैं सम्भावना नहीं कर सकता, सहन नहीं कर सकता कि जब आप जैसा व्यक्ति क्षत्रिय को

❀ जातुयदोर्लिङ्—विधाने यदायद्योरुपसंख्यानम् ❀ ( म० भा० ३. ३. १४७ वा० ) यदा भवद्विधः क्षत्त्रियं याजयेत्, यदि भवद्विधः क्षत्त्रियं याजयेत्, न श्रद्दधे, न मर्षयामि। क्रियातिपत्तौ भूते वा लृङ्। भविष्यति नित्यम् ॥

११०९. यच्चयत्रयोः ॥ १४८ ॥ ( २८०९ )

'अनवक्लृप्त्यमर्षयोः' इत्येव। यच्च, यत्र – इत्येतयोरुपपदयोरनवक्लृप्त्यमर्षयोर्गम्यमानयोर्धातोर्लिङ् प्रत्ययो भवति। लटोऽपवादः। योगविभाग उत्तरार्थः। यथासंख्यं नेष्यते। यच्च तत्रभवान् वृषलं याजयेत्। यत्र तत्रभवान् वृषलं याजयेत्। क्रियातिपत्तौ यथायथं लृङ् भवति ॥

न्यासः

**यदायद्योरुपसंख्यानमिति**। लिङेव यथा स्यात्, लृङ् मा भूत्। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्—अनवक्लृप्त्यादिसूत्रादिहापिशब्दोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः, तेन यदायद्योरपि भविष्यति ॥ १४७ ॥

यच्चयत्रयोः ॥ **लटोऽपवाद इति**। अनवक्लृप्त्यादिसूत्रेण प्राप्तस्य। अथ पूर्वसूत्र एव यच्चयत्रयोर्ग्रहणं कस्मान्न कृतम्, किं योगविभागेन? इत्यत आह—**योगविभाग उत्तरार्थ इति**। उत्तरत्र यच्चयत्रयोरेवानुवृत्तिर्यथा स्यात्, जातुयदोर्मा भूत्। **यथासंख्यमिह नेष्यति इति**। पूर्वोक्तादेव लक्षणव्यभिचारचिह्नात्। स च बह्वचः पूर्वनिपातः सर्वत्रैव चात्र प्रकरणे लक्षणव्यभिचारचिह्नम्, न तु तत्रैव सूत्रे। अथ वा—यथासंख्यार्थस्य स्वरितत्वस्याभावादिह न भवति यथासंख्यम्। उक्तं हि प्राक्—स्वरितेन चिह्नेन यथासंख्यं भवतीति ॥ १४८ ॥

पदमञ्जरी

**यच्चयत्रयोः ॥ लट एवापवाद इति**। पूर्ववत्प्राप्तस्य। एवकारः पौनर्वचनिकः। **योगविभाग उत्तरार्थ इति**। उत्तरत्र यच्चयत्रयोरेवानुवृत्तिर्यथा स्यात्, जातुयदोर्मा भूदिति। इहानवक्लृप्त्यमर्षौ द्वौ, यच्चयत्रयोरित्युपपदे अपि द्वे एव, ततश्च यथासङ्ख्यं प्राप्नोति? तत्राह—**यथासङ्ख्यमिह नेष्यते इति**। पूर्ववल्लक्षणव्यभिचारचिह्नात् बह्वचः पूर्वनिपातात् ॥ १४८ ॥

भावबोधिनी

यज्ञ कराये, [ यहाँ 'यदा' का प्रयोग है ] 'यदि आप जैसा व्यक्ति क्षत्रिय को यज्ञ' कराये [ इसमें 'यदि' का प्रयोग है। ] यहाँ भी 'न श्रद्दधे' और 'न मर्षयामि' को अलग अलग जोड़कर चार वाक्य बनाने चाहिये। सम्भावना नहीं कर सकता, और सहन नहीं कर सकता—इन अर्थों को एक बार 'यदा' से युक्त वाक्यार्थ में और एक बार 'यदि' से युक्त वाक्यार्थ में जोड़ना चाहिये। ] क्रियातिपत्ति = क्रिया की अनिष्पत्ति में भूतकाल में वैकल्पिक लृङ् और भविष्यत् काल में नित्य लृङ् होता है ॥ १४७ ॥

'अनवक्लृप्ति-अमर्षयोः' इसकी अनुवृत्ति होती है। अनवक्लृप्ति=असम्भावना और अमर्ष=असहन करना अर्थ प्रतीयमान रहने पर 'यच्च' तथा 'यत्र'—इन पदों के उपपद रहते धातु से लिङ् प्रत्यय होता है। यह लट् का अपवाद है। योगविभाग [ इस सूत्र का पृथक् प्रणयन ] उत्तर सूत्रों में [ अनुवृत्ति ] के लिये हैं। [ अर्थात् आगे सूत्रों में केवल 'यच्च' एवं 'यत्र' इन दो की ही अनुवृत्ति हो, इस कारण यह अलग सूत्र बनाया गया है। ] यहाँ यथासंख्य इष्ट नहीं है। [ अतः अनवक्लृप्ति में दोनों शब्द और अमर्ष में दोनों शब्द उपपद रहते हैं। ] उदा०—यच्च तत्रभवान् वृषलं याजयेत् [ न श्रद्दधे, न मर्षयामि। मैं सम्भावना नहीं कर सकता, मैं सहन नहीं कर सकता कि आप शूद्र को यज्ञ करायेंगे ] यत्र तत्रभवान् वृषलं याजयेत् [ न श्रद्दधे, न मर्षयामि। मैं यह सोच भी नहीं सकता, यह सहन भी नहीं कर सकता कि आप शूद्र को यज्ञ करायेंगे। यच्च और यत्र शब्द असम्भावना और अमर्ष के द्योतक हैं ]। क्रियातिपत्ति = क्रिया की असिद्धि गम्यमान रहने पर यथाप्राप्त लृङ् होता है ॥ १४८ ॥

## ११०६. गर्हायां च ॥ १४९ ॥ ( २८०६ )

'अनवक्लृप्त्यमर्षयोः' इति निवृत्तम् । गर्हा, निन्दा, कुत्सा – इत्यनर्थान्तरम् । यच्च, यत्र—इत्येतयोरुपपदयोर्धातोर्लिङ् प्रत्ययो भवति गर्हायां गम्यमानायाम् । सर्वलकाराणामपवादः । यच्च तत्रभवान् वृषलं याजयेत्, यत्र तत्रभवान् वृषलं याजयेद् ऋद्धो वृद्धः सन् ब्राह्मणः गर्हामहे, अहो अन्याय्यमेतत् । क्रियातिपत्तौ यथायथं लृङ् भवति ॥

## ११०७. चित्रीकरणे च ॥ १५० ॥ ( २८०७ )

'यच्चयत्रयोः' इत्येव । चित्रीकरणम् = आश्चर्यम्, अद्भुतम्, विस्मयनीयम् । यच्च-यत्रयोरुपपदयोश्चित्रीकरणे गम्यमाने धातोर्लिङ् प्रत्ययो भवति । सर्वलकाराणामपवादः । यच्च तत्रभवान् वृषलं याजयेत्, यत्र तत्रभवान् वृषलं याजयेत्, आश्चर्यमेतत् । क्रियातिपत्तौ यथायथं लृङ् भवति ॥

## ११०८. शेषे लृडयदौ ॥ १५१ ॥ ( २८०८ )

### न्यासः

गर्हायाञ्च ॥ १४९ ॥ चित्रीकरणे च ॥ १५० ॥ शेषे लृडयदौ ॥ यच्चयत्राभ्यामित्यादिना यच्चयत्रापेक्षं शेषं दर्शयति । चित्रीकरणापेक्षया शेषो न शक्यते विज्ञातुम्; चित्रीकरणस्येह स्वर्यमाणत्वात् । आरोक्ष्यतीति । 'रुह बीजजन्मनि प्रादुर्भावे च' । 'हो ढः', 'षढोः कः सि' । आश्चर्यं यदि भुञ्जीतेति । अनवक्लृप्तेरत्राश्चर्यं गम्यते । तत्राश्चर्यनिमित्ते लृटि प्रतिषिद्धे जातुयदोर्लिङ्विधाने 'यदायद्योरुपसंख्यानम्' इत्यनवक्लृप्तौ लिङ् । १५१ ॥

### पदमञ्जरी

गर्हायां च ॥ दरिद्रश्चेद्वृषलयाजनमपि युक्तं स्यात्, तत उक्तम्—ऋद्ध इति । ऋद्धस्याप्युपभोगबाहुल्येन सम्भाव्येत, अत उक्तम्—वृद्ध इति । वृद्धस्यापि जातिमात्रब्राह्मणस्य युक्तं स्यात्, अत उक्तम्—सद्ब्राह्मण इति । सद्वंशजः सदाचारश्चेत्यर्थतो गर्हामर्हं इति ॥ १४९ ॥ १५० ॥

शेषे लृडयदौ ॥ यच्चयत्राभ्यामिति । चित्रीकरणापेक्षस्तु शेषो न भवति, तस्यह स्वरितत्वेनाधिकारात् ।

### भावबोधिनी

'अनवक्लृप्ति-अमर्षयोः' इसकी अनुवृत्ति नहीं होता है । गर्हा, निन्दा और कुत्सा—इन सभी के अर्थ समान हैं । गर्हा प्रतीयमान रहने पर 'यच्च' और 'यत्र' इन पदों के उपपद रहते धातु से लिङ् प्रत्यय होता है । यह सभी लकारों का अपवाद है । उदा०—(१) ऋद्धः वृद्धः सन् ब्राह्मणः तत्रभवान् यच्च वृषलं याजयेत् (२) ·······यत्र तत्रभवान् वृषलं याजयेत् [ सम्पन्न, उपभोगसामर्थ्यरहित वृद्ध और सद्वंशज ब्राह्मण होते हुये आप शूद्र को यज्ञ करायें—[ यही दोनों वाक्यों का अर्थ है ], गर्हामहे, अहो अन्याय्यमेतत् [ इसकी हम निन्दा करते हैं, यह अनुचित है ] । क्रियातिपत्ति = क्रिया की असिद्धि गम्यमान रहने पर यथाप्राप्त लृङ् होता है ॥ १४९ ॥

'यच्चयत्रयोः' इसकी ही अनुवृत्ति होती है । चित्रीकरण = आश्चर्य, अद्भुत, विस्मय के योग्य । 'यच्च' और 'यत्र' इनके उपपद रहने पर चित्रीकरण = आश्चर्य प्रतीयमान होने पर धातु से लिङ् होता है । यह सभी लकारों का अपवाद है । उदा०—जो आप शूद्र को यज्ञ करायें, यहाँ शूद्र को यज्ञ करायें, यह आश्चर्य है । [ इसमें याजयेत् में लिङ् है, आश्चर्य = चित्रीकरण है । ] क्रियातिपत्ति = क्रिया की असिद्धि गम्यमान रहने पर यथाप्राप्त लृङ् होता है ॥ १५० ॥

यच्च और यत्र से अन्यत्र चित्रीकरण = आश्चर्य शेष है । [ अर्थात् इन दोनों शब्दों को छोड़कर आश्चर्य की प्रतीति होनी चाहिये । ] शेष = यच्च यत्र को छोड़कर अन्य शब्द उपपद रहने पर चित्रीकरण = आश्चर्य गम्यमान रहने

यच्चयत्राभ्यामन्यत्र चित्रीकरणं शेषः। शेषे उपपदे चित्रीकरणे गम्यमाने धातोर्ऌट् प्रत्ययो भवति, यदिशब्दश्चेन्न प्रयुज्यते। सर्वलकाराणामपवादः। आश्चर्यम्, चित्रम्, अद्भुतम्, अन्धो नाम पर्वतमारोक्ष्यति। बधिरो नाम व्याकरणमध्येष्यते। अयदाविति किम्? आश्चर्यं यदि स भुञ्जीत। यदि सोऽधीयीत। लिङ्-निमित्ताभावादिह ऌङ् न भवति॥

११०९. उताप्योः समर्थयोर्लिङ्॥ १५२॥ ( २८०९ )

उत, अपि – इत्येतयोः समर्थयोर्धातोर्लिङ् प्रत्ययो भवति। सर्वलकाराणामपवादः। बाढम्–इत्यस्मिन्नर्थे समानार्थत्वमनयोः। उत कुर्यात्। अपि कुर्यात्। उताधीयीत। अप्यधीयीत। बाढमध्येष्यत इत्यर्थः।

समर्थयोरिति किम्? उत दण्डः पतिष्यति। द्वारम् अपिधास्यति। प्रश्नः प्रच्छादनं च गम्यते। 'वोताप्योः' ( ३. ३. १४१ ) इति विकल्पो निवृत्तः। इतः प्रभृति भूतेऽपि लिङ्निमित्ते क्रियातिपत्तौ नित्यं ऌङ्। भविष्यति तु सर्वत्रैव नित्यः॥

न्यासः

**उताप्योः समर्थयोर्लिङ्॥ समर्थयोरिति।** धातुना सामर्थ्यमिह नाश्रीयते; तयोरुपपदत्वेनैव तस्य लब्धत्वात्। तस्मात् परस्परसामर्थ्यं समर्थशब्दादिह गृह्यते। तदपि व्यपेक्षालक्षणमेकार्थीभावलक्षणमुभय-मुताप्योर्न सम्भवति; पर्यायेण तयोरुपपदत्वात्, तस्मात् समानार्थतालक्षणमिह सामर्थ्यं समर्थशब्देन प्रति-

पदमञ्जरी

**आश्चर्यं यदि स भुञ्जीतेति।** अत्रानवक्लृप्तिराश्चर्यं च द्वयं गम्यते, तत्राश्चर्यनिमित्ते ऌटि प्रतिषिद्धे जातुयदोर्लिङ्विधाने यदाय्द्योरुपसङ्ख्यानमित्यनवक्लृप्तौ लिङ्। भाष्ये तु "सम्भावनार्थो यदिशब्दः प्रयुज्यते, ततश्च सम्भावनमत्र तात्पर्यार्थः, न चित्रीकरणम्; ततश्चायदाविति न वक्तव्यम्, लिङपि 'सम्भावनेऽलम्' इत्यनेनैव" इत्युक्तम्। यदाह—चित्रीकरणे यदिप्रतिषेधानर्थक्यमर्थान्यत्वादिति॥ १५१॥

**उताप्योः समर्थयोर्लिङ्॥ समर्थयोरिति।** सूत्रे समशब्दस्य निपातनाद् 'अतो लोपः', शकन्ध्वादित्वाद्वा पररूपत्वम्। संशब्द एव वा वृत्तौ समशब्देन समानार्थः, यथा—'प्रोपाभ्यां समर्थाभ्याम्', यथा—मुखसंमुख-स्येत्यत्रेति भावः।

भावबोधिनी

पर धातु से ऌट् होता है अगर 'यदि' इस शब्द का प्रयोग नहीं किया जाय। यह सभी लकारों का अपवाद है। उदा०— आश्चर्य है, विचित्र है, अद्भुत है, यह अन्धा पर्वत पर चढ़ेगा। बहिरा व्याकरण पढ़ेगा [ इसमें भी, आश्चर्य आदि मिलाकर वाक्य बनाना चाहिये। ]

'यदि' यह शब्द उपपद न रहे—इसके ग्रहण का क्या फल है? आश्चर्यं यदि स भुञ्जीत [ आश्चर्य है यदि वह खाये ], यदि सोऽधीयीत [ आश्चर्य है यदि वह पढ़े। 'यदि' शब्द का प्रयोग होने से यहाँ ऌट् नहीं होता है 'जातु-यदोर्लिङ्विधाने यदाय्द्योरुपसख्यानम्' इस वार्त्तिक से यदि के योग में लिङ् होता है। ] लिङ् का निमित्त न होने से यहाँ ऌङ् नहीं होता है। [ सभी लकारों का अपवाद होने से ऌट् के द्वारा भूत, भविष्यत् और वर्तमान तीनों कालों की प्रतीति होती है। अतः 'आरोक्ष्यति' 'अध्येष्यते' इनसे—चढ़ेगा, चढ़ा, और चढ़ता है, पढ़ेगा, पढ़ा और पढ़ता है—ये तीनों अर्थ प्रतीत होते हैं। ]॥ १५१॥

समर्थ = समान अर्थवाले 'उत' एवम् 'अपि' शब्दों के उपपद रहते धातु से लिङ् होता है। यह सभी लकारों का अपवाद है। बाढम् = हाँ [ स्वीकृति ]—इस अर्थ में ये दोनों [ उत अपि ] समानार्थक हो जाते हैं। उदा० —उत कुर्यात्, अपि कुर्यात् [ हाँ, करेगा। हाँ, करेगा ] उत अधीयीत, अपि अधीयीत [ हाँ, पढ़ेगा। हाँ, पढ़ेगा ] बाढम् = हाँ, पढ़ेगा—यह अर्थ है।

## १११०. कामप्रवेदनेऽकच्चिति ॥ १५३ ॥ ( २८१० )

**स्वाभिप्रायाविष्करणम् = कामप्रवेदनम् । कामः, इच्छा, अभिलाष—इत्यनर्थान्तरम्, तस्य प्रवेदनम् = प्रकाशनम् । तस्मिन् गम्यमानेऽकच्चिदित्युपपदे धातोर्लिङ् प्रत्ययो भवति । सर्वलकाराणामपवादः । कामो मे भुञ्जीत भवान् । अभिलाषो मे भुञ्जीत भवान् । अकच्चितीति किम् ?**

**कच्चिज्जीवति ते माता कच्चिज्जीवति ते पिता ।**
**माराविद त्वां पृच्छामि कच्चिज्जीवति पार्वती ॥**

**न्यासः**

पाद्यत इत्यत्र आह—**समानार्थत्वमनयोरिति** । **कुर्यादिति** । उप्रत्यये कृते गुणो रपरत्वञ्च, 'अत उत् सार्वधातुके' इत्युत्वम्, 'ये च' इत्युकारलोपः ॥ १५२ ॥

**कामप्रवेदनेऽकच्चिति ॥ कामो मे भुञ्जीत भवानिति** । स्वाभिप्रायं परस्यानेनाविष्करोति ॥ १५३ ॥

**पदमञ्जरी**

**प्रश्नः प्रच्छादनं च गम्यते इति** । आद्ये प्रश्नो गम्यते, द्वितीये प्रच्छादनम् । ननु चापिशब्दोऽपि प्रश्ने दृष्टः—'अप्यग्रणीर्मन्त्रकृतामृषीणाम्' 'अपि प्रसन्नं हरिणेषु ते मनः' इति, ततश्च प्रश्नेऽपि समानार्थत्वमनयोरिति उत दण्डः पतिष्यतीति प्रत्युदाहरणानुपपत्तिः ? एवं मन्यते—अप्यग्रणीरित्यादौ प्रष्टव्यमर्थान्तरमपेक्ष्य समुच्चयार्थ एवापिशब्दः, प्रश्नस्त्वर्थः प्रकरणादिना गम्यते; तेन नानयोः प्रश्ने समानार्थत्वमिति ॥ १५२ ॥

**कामप्रवेदनेऽकच्चिति ॥ स्वाभिप्रायाविष्करणं कामप्रवेदनमिति** । एतदेवावयवार्थप्रकाशनेनोपपादयति—**काम इच्छेति** ।

**माराविद त्वां पृच्छामीति** । माराविशब्दं ददातीति माराविदः, माराविः = रवो माकारीत्यर्थः । संज्ञैषा

**भावबोधिनी**

समर्थयो : [ समान अर्थ वाले— ] इसके ग्रहण का क्या फल है ? उत दण्डः पतिष्यति [ क्या दण्ड गिरेगा = लगेगा ? ] द्वारम् अपिधास्यति [ दरवाजा बन्द करेगा । ] प्रथम वाक्य में प्रश्न और दूसरे में प्रच्छादन = बन्द करना प्रतीत होता है ।

**विमर्श**—यहाँ मुद्रित काशिका की सभी प्रतियों में 'अपि द्वारं धास्यति' इस प्रयोग में 'अपि' और 'धास्यति' को अलग-अलग लिखा गया था । परन्तु 'अपि' उपसर्ग के साथ ही √धा से प्रच्छादन अर्थ की प्रतीति देखी जाती है । इसलिये—अपिधास्यति द्वारम्—यही प्रयोग उचित है । सिद्धान्तकौमुदीकार ने भी यही आनुपूर्वी मानी है । अतः यहाँ पाठ शुद्ध कर दिया गया है ।

[ अनु० ] 'वोताप्योः' [ ३।३।१४१ ] इससे 'वा' विकल्प की निवृत्ति हो जाती है । [ मर्यादार्थक आङ् के प्रयोग के कारण इस सूत्र को छोड़कर पहले वाले सूत्र तक ही 'वा' = विकल्प का सम्बन्ध रहता है । ] यहाँ से लेकर भूतकाल में भी लिङ्निमित्त में क्रियातिपात्त = क्रिया की असिद्धि गम्यमान रहने पर नित्य ही लृङ् होता है । भविष्यत् काल में तो लृङ् सर्वत्र नित्य ही रहता है । अर्थात् अब आगे भूत और भविष्यत् दोनों में क्रियातिपत्ति में नित्य लृङ् = केवल लृङ् होगा ॥ १५२ ॥

अपने अभिप्राय को प्रकट करना = कामप्रवेदन है । काम, इच्छा, अभिलाष—ये सभी समानार्थक हैं, इसका प्रवेदन = प्रकाशन है । अपने अभिप्राय का प्रकाशन प्रतीयमान रहने पर 'कच्चित्' शब्द उपपद न रहने पर धातु से लिङ् होता है । यह भी सभी लकारों का अपवाद है । उदा०—कामो मे, भुञ्जीत भवान् [ मेरी इच्छा है, आप भोजन करें ] अभिलाषो मे, भुञ्जीत भवान् [ मेरी इच्छा है, आप भोजन करें । यहाँ अपनी इच्छा दूसरे के प्रति प्रकट की जा रही है । सभी कालों में यही प्रयोग होता है । ]

## १११९. संभावनेऽलमिति चेत्सिद्धाप्रयोगे ।। १५४ ।। ( २८११ )

**'लिङ्'** इत्येव । संभावनम् = **क्रियासु योग्यताध्यवसानम्, शक्तिश्रद्धानम्** । **तदिदानीमलमर्थेन विशेष्यते । तच्चेत्संभावनं पर्याप्तमवितथं भवति । सिद्धाप्रयोग इत्यलमो विशेषणम्--सिद्धश्चेदलमोऽप्रयोगः । क्व चासौ सिद्धः? यत्र गम्यते चार्थो न चासौ प्रयुज्यते । तदीदृश-[ क्रिया- ]**[1]**-संभावनोपाधिकेऽर्थे**

न्यासः

**सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे ।। योग्यताध्यवसानमिति** । योग्यता = सामर्थ्यम्, तस्याध्यवसानम् । सा येनाध्यवसीयते = निश्चीयते तद् योग्यताध्यवसानम् = ज्ञानम्, सम्भावनमुच्यते । तमेवार्थं पर्यायान्तरेण विस्पष्टीकर्तुमाह--**शक्तिश्रद्धानमिति** । शक्तिः = सामर्थ्यम्, सा श्रद्धीयते येन ज्ञानेन तच्छक्तिश्रद्धानम् । **तदिति** । सम्भावनम् । **पर्याप्त्येति** । सामर्थ्येन । एतेन पर्याप्ताविह वर्त्तमानोऽलंशब्दो गृह्यते, न तु भूषणादाविति दर्शयति । **पर्याप्तमिति** । शक्तम्, स्वकार्यनिर्वर्त्तनक्षममित्यर्थः । स्वकार्यं पुनस्तस्य विपरीतविषयपरिच्छेदः । **अवितथमिति** । विद्यमानविषयत्वात् । एतेन पर्याप्त्यर्थ एवास्य स्वीकृतः । एवं हि तद्विपरीतविषयं भवति यदि विद्यमानविषयत्वादवितथं भवति, नान्यथा । **अलम इति** । अलंशब्दस्य । कुत एतत् ? इतिकरणेनार्थपदार्थकत्वात् प्रच्याव्य शब्दपदार्थकतयाऽलंशब्दस्य व्यवस्थापनात् । यद्येवम्, अलमर्थः सम्भाव-

पदमञ्जरी

शुकविशेषस्य, तं हस्ते निधाय कश्चिल्लालयति । पार्वत्यपि शुकस्यैव काचिदिष्टा । प्रायेण तु **मातापितरौ पृच्छामीति** पाठः, तत्र तदुपक्रमं वाक्यम्--मातापितरौ पृच्छामि । किमत्र पृच्छ्यते ? कच्चिज्जीवति ते मातेति ।। १५३ ।।

**सम्भावनेऽलमिति चेत्सिद्धाप्रयोगे ।। योग्यताध्यवसानमिति** । योग्यताया निश्चयः । एतदेव स्फोरयति--**शक्तिश्रद्धानमिति** । शक्तिः = सामर्थ्यम्, श्रद्धीयते = विषयीक्रियते येन ज्ञानेन तत्तथोक्तं तदिति । सम्भावनपर्याप्त्येत्येतेन पर्याप्ताविहालंशब्दः, न भूषणादावित्याह--**यद्येवं सम्भावन इति** । सप्तम्यन्तस्य कथमलमिति चेदित्येतद्विशेषणमुपपद्यत इत्याशङ्क्य विपरिणामेन व्याचष्टे--**तच्चेत्सम्भावनमिति** । सम्भावनमलमिति चावर्तते--सम्भावने लिङ् भवति तच्चेत्सम्भावनमलमात्मकं भवतीति । एवं पर्यवसानेनालमा सम्बन्धः, अतोऽत्रेतिशब्दो न सम्बन्धनीयः । ततोऽलमित्यस्मिन् सिद्धाप्रयोगे सतीत्यन्वयः । अत्र चेच्छब्दो न सम्बन्धनीयः; सप्तम्यन्तेन सम्बन्धासम्भवात् । वृत्तौ तु वस्तुमात्रं दर्शितम्--सिद्धश्चेदलमोऽप्रयोग इति, न पुनरत्र

भावबोधिनी

अकच्चित् = कच्चित् इसका प्रयोग न रहे--इसके ग्रहण का क्या लाभ है ?

[ अपने पालतू तोते से कोई प्यार करते हुये पूछ रहा है -- ] क्या तुम्हारी माता जीवित है, क्या तुम्हारा पिता जीवित है ? हे माराविद ! तुमसे पूछ रहा हूँ क्या तुम्हारी पार्वती ( प्रेयसी ) जीवित है ? [ माराविद यह एक विशेष तोते का प्राचीन नाम है । इस श्लोक में कच्चित् का प्रयोग होने के कारण इस सूत्र से लिङ् नहीं होता है । यथाप्राप्त लट् ही होता है ।। १५३ ।।

'लिङ्' इतनी ही अनुवृत्ति होती है । सम्भावन = क्रियाओं [ कार्यों ] में योग्यता का निश्चय, शक्तिका श्रद्धान [ शक्ति का जिससे ज्ञान होता है ] । वह = सम्भावन यहाँ अलम् के अर्थ से विशेषित होता है । यदि वह सम्भावन--पर्याप्त, अवितथ [ सत्य ] होता है । 'सिद्धाप्रयोगे'--यह 'अलम्' का विशेषण है--यदि अलम् का अप्रयोग [ प्रयोग न होना ] सिद्ध रहता है । यह कहाँ सिद्ध है ? जहाँ प्रतीत हो जाता है, वहाँ यह [ अलम् शब्द ] प्रयुक्त नहीं रहता है । इस प्रकार ऐसे [ अलम् के अर्थ से विशिष्ट ] सम्भावनरूप उपाधि वाले अर्थ के वाचक धातु से लिङ् प्रत्यय होता है । यह

---

१. न्याससम्मतः पाठः ।

**वर्त्तमानाद्धातोर्लिङ् प्रत्ययो भवति । सर्वलकाराणामपवादः । अपि पर्वतं शिरसा भिन्द्यात् । अपि द्रोणपाकं भुञ्जीत ।**

**न्यासः**

नस्य विशेषणं नोपपद्यते, ततश्च यदुक्तम्—'तदिदानीमलमर्थेन विशेष्यते' इति तद्विघटते ? नैष दोषः, आवृत्तिरलंशब्दस्य करिष्यते, तत्रैकस्य सूत्रोपात्तस्यार्थपदार्थकता भविष्यति, आवृत्तस्येतिकरणेनाभिसम्बन्धादर्थपदार्थकतायाः प्रच्युतस्य शब्दपदार्थकता चात्र गम्यते । **चार्थ इति** । अर्थात्, प्रकरणाद्वा । **न तु प्रयुज्यत इति** । अवगतार्थत्वात् । **क्रियासम्भावनोपाधिक इति** । क्रियासम्भावनमुपाधिविशेषणं यस्यार्थस्य स तथोक्तः । **अपि पर्वतं शिरसा भिन्द्यादिति** । पूर्ववत् 'श्नसोरल्लोपः' । अत्र यत् पर्वतभेदनविषयं सामर्थ्यं पुंसः सम्भाव्यते

**पदमञ्जरी**

चेच्छब्दस्यान्वयः । **पर्याप्तमिति** । स्वकार्यनिर्वर्त्तने समर्थम्, स्वकार्यं पुनस्तस्याविपरीतमविषयपरिच्छेदः, तद्दर्शयति—**अवितथमिति** । अतथाभूतार्थविषयत्वं ज्ञानस्य वैतथ्यम्, यथा—शुक्तिकायां रजतज्ञानस्य; तद्विपरीतमवितथम्, तथाभूतार्थविषयमित्यर्थः । **तदीदृशसम्भावनोपाधिक इति** । तदिति वाक्योपन्यासे ईदृशमलमर्थविशिष्टं सम्भावनमुपाधिर्यस्येति त्रिपदो बहुव्रीहिः । **क्वचित्तु ईदृशे सम्भावनोपाधिक** इत्यसमासः पठ्यते, तत्रेदृग इति न सङ्गच्छते; न हि धात्वर्थस्य किञ्चिद्रूपं प्राङ्निर्दशितं यदीदृशमित्युच्येत । **सर्वलकाराणामपवाद इति** । सम्भावनस्य भविष्यद्विषयत्वाद्भविष्यद्विषयाणां सर्वलकाराणामित्यर्थः । **अपि पर्वतं शिरसा भिन्द्यादिति** । अत्र यत्पर्वतभेदविषयं सामर्थ्यं पुंसः सम्भाव्यते तद्यस्य भीमसेनादेर्विद्यत एव, तत्र सम्भावनमवितथमिति तद्विषयमुदाहरणम् । **अपि द्रोणपाकं भुञ्जीतेति** । यत्पक्वस्य भोजनं तदेव पाकस्य भोजनम्, कर्मसाधनो वा पाकशब्दः । **विदेशस्थायी** = देशान्तरगतः । **प्रायेणागमिष्यतीति** । प्रायिकस्वदक्षिणाक्षिस्पन्दनादेर्लिङ्गाभासादागमनं सम्भाव्य तत एतत्प्रयुज्यते, तत्तथ्यमपि भवति विपरीतमपि भवति । **अलं देवदत्त इति** । पर्याप्तं हनिष्यतीत्यर्थः । भाविविषयत्वात् सम्भावनस्य सर्वत्र लृट् प्रत्युदाहृतः ।

अपरा व्याख्या—सम्भावनं = भाविवस्तूत्प्रेक्षणम्, असति विरुद्धप्रत्ययोपनिपाते भवितव्यमनेनेति ज्ञानम्, यथा प्रत्युदाहरणे—प्रायेणागमिष्यतीति, तस्य विशेषणमलमिति चेदिति, अलमिति चेत्, तत्सम्भावनमिति विपरिणामेनान्वयः । तत्र यथा घट इति ज्ञानं पट इति ज्ञानमित्युक्ते ज्ञानस्य विषयनिर्देशः प्रतीयते, तथेहापि सम्भावनाख्यस्य ज्ञानस्य विषयनिर्देशोऽयमलमिति चेत्, तत्सम्भावनमलमर्थविषयं चेदित्यर्थः । अलमर्थश्च

**भावबोधिनी**

सभी लकारों का अपवाद है । उदा०—अपि पर्वतं शिरसा भिन्द्यात् [ यह तो पहाड़ को शिर से तोड़ सकता है । ] अपि द्रोणपाकं भुञ्जीत । [ यह तो द्रोणपाक खा सकता है । द्रोण-परिमाण-विशेष से नापा गया भोजन = द्रोणपाक कहा जाता है । ]

अलम् [ समर्थ ]—इसके ग्रहण का क्या लाभ ? परदेश गया हुआ देवदत्त प्रायः गाँव जायगा । [ पदमञ्जरीकार ने 'आगमिष्यति' = आयेगा, पाठ माना हैं, यह ठीक भी है । ] 'सिद्धाप्रयोग [ प्रयोग न होना सिद्ध रहे— ] इसके ग्रहण का क्या लाभ ? देवदत्तः हस्तिनम् अलं हनिष्यति [ देवदत्त हाथी को अच्छी तरह मार डालेगा । यहाँ क्रियाविशेषण 'अलम्' प्रयुक्त है । ] क्रियातिपत्ति में भूत और भविष्यत् काल में नित्य लृङ् होता है ।

**विमर्श**—इस सूत्र में 'अलम्' का एकबार प्रयोग है परन्तु इसकी आवृत्ति करके दो बार माना जाता है और 'सम्भावने' इह सप्तम्यन्त की भी आवृत्ति होती है । इन में से एक को प्रथमान्त में परिवर्तित किया जाता है—सम्भावन अर्थ में लिङ् होता है यदि वह सम्भावन अलम् = समर्थ हो, और अलम् का प्रयोग न सिद्ध हो, अलम् न प्रयुक्त हुआ हो ।'

अलमिति किम्? विदेशस्थायी देवदत्तः प्रायेण [ स ][1] गमिष्यति ग्रामम्। सिद्धाप्रयोग इति किम्? अलं देवदत्तो हस्तिनं हनिष्यति। क्रियातिपत्तौ भूते भविष्यति च नित्यं लृङ् भवति।

**१११२. विभाषा धातौ संभावनवचनेऽयदि ॥ १५५ ॥ ( २८१२ )**

'संभावनेऽलमिति चेत् सिद्धाप्रयोगे' इति सर्वमनुवर्त्तते। संभावनमुच्यते येन स संभावनवचनः। संभावनवचने धातावुपपदे यच्छब्दवर्जिते धातोर्विभाषा लिङ् भवति। पूर्वेण नित्यप्राप्तौ विकल्पार्थं वचनम्। संभावयामि भुञ्जीत भवान्। संभावयामि भोक्ष्यते भवान्। अवकल्पयामि भुञ्जीत भवान्, भोक्ष्यते भवान्। श्रद्दधे भुञ्जीत भवान्, भोक्ष्यते भवान्। अयदीति किम्? संभावयामि यद् भुञ्जीत भवान्॥

न्यासः

तत् तस्य विद्यत एवेत्यवितथत्वात् पर्याप्तं सम्भावनम्। **प्रायेण स गमिष्यतीति**। अस्त्यत्र सम्भावनं प्रायशब्दात् प्रतीयमानम्, अलमर्थस्तु नास्ति; तेन भविष्यत्कालविवक्षायां लृडेव भवति न लिङ्॥ १५४॥

**विभाषा धातौ सम्भावनवचनेऽयदि ॥ १५५ ॥ हेतुहेतुमतोर्लिङ् ॥ भविष्यति काल इति**। इष्यत इत्यपेक्षते। कथं पुनर्विभाषा भविष्यत्कालश्च लभ्यते, यावता नेह सूत्रे विभाषाग्रहणं विनापि भविष्य-

पदमञ्जरी

पर्याप्तिर्न भूषणादिः, धातोश्च प्रत्ययविधानात्तदर्थगोचरमेव सामर्थ्यं गृह्यते। इमं धात्वर्थमनुष्ठातुं समर्थ इत्येवं रूपं चेत् तत्सम्भावनमित्यर्थः। सिद्धाप्रयोगे कस्मिन् सन्निधानादलंशब्दः। एवं तावत्सूत्राक्षराणां निर्वाहः। वृत्तेस्तु—**यत्क्रियासु योग्यताध्यवसानमिति** तदिह सूत्रे जिघृक्षितस्य सम्भावनस्य लक्षणं न सम्भावनमात्रस्य; अन्यथा प्रत्युदाहरणमनुपपन्नं स्यात्, न हि तत्र शक्तिश्रद्धानं गम्यते। कथं पुनरत्रेदृशं सम्भावनं गृह्यत इत्यत्राह—**तदिदानीमिति**। तत्खलु सम्भावनमेतत्सूत्रप्रणयनकालेऽस्मिन्सूत्र इत्यर्थः। अलमर्थेन विषयेणाविशेष्यते अलमिति चेत् सम्भावनमिति, पर्याप्तिमिति। पर्याप्तिरलमर्थः, न भूषणादिरित्यर्थः। विपरिणामेनान्वयं दर्शयति—**तच्चेत्सम्भावनमिति**। पर्याप्तिविषयत्वात् पर्याप्तम्, अवितथविषयत्वात् अवितथम्, एतद्धात्वर्थानुष्ठाने पर्याप्तो वितथारम्भोऽयमस्मिन् धात्वर्थं इत्येवंरूपं चेत्सम्भावनमित्यर्थः। **अपि पर्वतं शिरसा भिन्द्यादिति**। एवं नामायं बलवानित्यर्थः, पर्वतं तु भिनत्तु मा वा भिदत्॥ १५४॥

**विभाषा धातौ सम्भावनवचनेऽयदि ॥ सम्भावयामि भुञ्जीत भवानिति**। भोजने भवांश्छक्त इत्युत्प्रेक्ष इत्यर्थः॥ १५५॥

भावबोधिनी

सूत्र में अलम् के साथ 'इति' का प्रयोग होने से वह शब्दपदार्थक = स्वरूपबोधक हो जाता है। दोनों पदों की आवृत्ति और विभक्तिविपरिणाम के द्वारा ही अभीष्ट अर्थ ज्ञात हो जाता है। 'प्रौढमनोरमा' में भट्टोजिदीक्षित ने इसके लिये 'अलमिति सम्भावने सिद्धाप्रयोगश्चेत्' ऐसा सूत्रस्वरूप बनाने का परामर्श दिया है॥ १५४॥

'सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे' इस सबकी अनुवृत्ति होती है। सम्भावन कहा जाता है जिसके द्वारा वह—सम्भावनवचन है। सम्भावनवाची धातु उपपद रहने पर 'यत्' शब्द न रहने पर धातु से विकल्प से लिङ् होता है। पहले वाले सूत्र से नित्य प्राप्ति रहने पर विकल्प के लिये यह सूत्र है। उदा०—सम्भावयामि भुञ्जीत भवान् [मैं सम्भावना करता हूँ कि आप भोजन करेंगे। यहाँ लिङ् हुआ है]। सम्भावयामि भोक्ष्यते भवान् [अर्थ पूर्वोक्त है। पक्ष में लृट् हुआ है।] अवकल्पना करता हूँ कि आप भोजन करेंगे। [भुञ्जीत लिङ् और भोक्ष्यते लृट् दोनों है।] श्रद्दधे भुञ्जीत भवान् भोक्ष्यते भवान् [सोंचता हूँ कि आप भोजन करेंगे। पूर्ववत् लिङ् और पक्ष में लृट् होता है।] अयदि—'यद्' का प्रयोग न हो—इसके ग्रहण का क्या लाभ? सम्भावयामि यद् भुञ्जीत भवान् [यहाँ पूर्व सूत्र से केवल लिङ् ही होता है क्योंकि 'यद्' का प्रयोग है।]॥ १५५॥

---

1. न्याससम्मतोऽयं पाठः। हरदत्तस्तु 'प्रायेणागमिष्यति' इति।

## १११३. हेतुहेतुमतोर्लिङ् ।। १५६ ।। ( २८१३ )

हेतुः कारणम्, हेतुमत् फलम् । **हेतुभूते हेतुमति चार्थे वर्तमानाद् धातोर्लिङ् प्रत्ययो भवति। सर्वलकाराणामपवादः। दक्षिणेन चेद्यायात्, न शकटं पर्याभवेत्। यदि कमलकमाह्वयेत्, न शकटं पर्याभवेत्। दक्षिणेन यानं हेतुः, अपर्याभवनं हेतुमत्।**

**विभाषा चायमिष्यते, भविष्यति च काले, तेन लृडपि भवति – दक्षिणेन चेद् यास्यति, न शकटं पर्याभविष्यति। तत्र विभाषाग्रहणं तावदनन्तरमेवानुवर्तते।**

**लिङिति वर्तमाने पुनर्लिङ्ग्रहणं कालविशेषप्रतिपत्त्यर्थम्। तेनेह न भवति—हन्तीति पलायते। वर्षतीति धावति। क्रियातिपत्तौ लङ् भवति ।।**

## १११४. इच्छार्थेषु लिङ्लोटौ ।। १५७ ।। ( २८१४ )

**न्यासः**

त्कालोऽस्ति ? अत आह—**यस्माद् विभाषाग्रहणमनुवर्तत इति**। तेन विभाषा लिङ्प्रत्ययो लभ्यते। यद् 'उताप्योः' इत्यादेः सूत्राल्लिङिति वर्त्तमाने पुनर्लिङ्ग्रहणंक्रियतेऽतो भविष्यत्कालो लभ्यते। पुनर्लिङ्ग्रहणस्यैतत् प्रयोजनम्—कालविशेषे भविष्यति यथा स्यादिति। तेन हन्तीति पलायत इत्येवमादौ वर्त्तमानविवक्षायां लडेव भवति। अत्र हननं हेतुः, पलायनं हेतुमत्। **पलायत इति**। 'उपसर्गस्यायतौ' इति लत्वम् ।। १५६ ।।

**इच्छार्थेषु लिङ्लोटौ** ।। **भुङ्क्तामिति**। टेरेत्वे कृत आम्।

**कामप्रवेदन इति वक्तव्यमिति**। कामस्येच्छायाः प्रवेदने = प्रकाशने **इमौ** लिङ्लोटौ भवत इत्येत-

**पदमञ्जरी**

**हेतुहेतुमतोर्लिङ्** ।। **भविष्यति च काल इति**। इष्यत इत्यपेक्ष्यते। कथं पुनरेतद् द्वयं सूत्रेऽनुपात्तमेव लभ्यते ? इत्याह-**तत्रेति**। **लिङिति वर्त्तमाने इति**। 'उताप्योः' इत्यादेः सूत्रात्। **हन्तीति पलायत इति**। अत्र हननं हेतुः, पलायनं हेतुमत्। वर्षणं हेतुः, सरणं हेतुमत्। **पलायत इति**। 'उपसर्गस्यायतौ' इति लत्वम्। अत्र 'लक्षणहेत्वोः क्रियायाः' इति शत्रादेशोऽपि न भवति, 'इतियोगे च सद्विधिः' इति व्यवस्थितविभाषासु पठितत्वात् ।। १५६ ।।

**इच्छार्थेषु लिङ्लोटौ** ।। **कामप्रवेदन इति वक्तव्यमिति**। 'कामप्रवेदनेऽकच्चिति' इत्ययं तर्हि योगः

**भावबोधिनी**

हेतु = कारण, हेतुमत् = फल = कार्य। हेतुभूत और हेतुमत् = कार्य = फलभूत अर्थ में वर्तमान धातु से लिङ् होता है। यह सभी लकारों का अपवाद है। उदा०—दाहिने रास्ते से यदि जाओगे तो गाड़ी नहीं उलटेगी। यदि कमलक [ गाड़ीवान् ] को बुला लोगे तो गाड़ी नहीं उलटेगी। [ यायात्, पर्याभवेत्—ये लिङ् के प्रयोग हैं। ] दाहिनी ओर से जाना हेतु = कारण है और [ गाड़ी का ] न उलटना हेतुमत् = कार्य है। [ अतः हेतुहेतुमद्भाव की प्रतीति होती है। ] यह लिङ् विकल्प से इष्ट है और भविष्यत् काल में इष्ट है, अतः लृट् भी होता है—यदि दाहिनी ओर से जाओगे तो गाड़ी नहीं उलटेगी [ यास्यति, पर्याभविष्यति—ये लृट् के प्रयोग हैं। ] यहाँ विभाषाग्रहण तो अव्यवहित पूर्ववर्ती सूत्र से ही अनुवृत्त हो जाता है। लिङ् इसकी अनुवृत्ति सम्भव रहने पर भी दूसरी बार यहाँ लिङ् का ग्रहण कालविशेष [ भविष्यत् ] का ज्ञान कराने के लिये है। इसलिये यहाँ नहीं होता है—हन्ति इति पलायते, [ मारता है इसलिये भागता है ] वर्षति इति धावति [ पानी बरसता है, इसलिये भागता है। इन वाक्यों में वर्तमानकाल है। अतः लिङ् न होकर लट् होता है। ] क्रियातिपत्ति=क्रिया की असिद्धि में लृङ् होता है ।। १५६ ।।

इच्छा अर्थवाली धातु उपपद रहते धातु से लिङ् और लोट् दोनों होते हैं। यह सभी लकारों का अपवाद है। उदा०—इच्छामि भुञ्जीत भवान् [ मैं चाहता हूँ आप भोजन करें। यहाँ लिङ् है ]। इच्छामि भुङ्क्तां भवान्। [ अर्थ

इच्छार्थेषु धातुषूपपदेषु धातोर्लिङ्लोटौ प्रत्ययौ भवतः। सर्वलकाराणामपवादः। इच्छामि भुञ्जीत भवान्। इच्छामि भुङ्क्तां भवान्। कामये। प्रार्थये॥

❀ कामप्रवेदन इति वक्तव्यम् ❀ ( म० भा० ३. ३. १५७ वा० १ ) इह मा भूत्—इच्छन् करोति॥

## ११९९. समानकर्तृकेषु तुमुन्॥ १५८॥ ( ३१७६ )

इच्छार्थेषु धातुषु समानकर्तृकेषूपपदेषु धातोस्तुमुन् प्रत्ययो भवति। तुमुन्प्रकृत्यपेक्षमेव समानकर्तृकत्वम्। इच्छति भोक्तुम्। कामयते भोक्तुम्। वष्टि भोक्तुम्। वाञ्छति भोक्तुम्।

### न्यासः

दर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'कामप्रवेदनेऽकच्चिति' इत्यतः कामप्रवेदनग्रहणमनुवर्त्तते, तेन कामप्रवेदन एव भवतः। अत्र लिङ्ग्रहणं किमर्थम्, न 'इच्छार्थेषु लोट् च' इत्येवोच्येत चकारेण समुच्चीयमानोऽपि प्रकृतो लिङ् भविष्यति ? नैतदस्ति; विभाषया हि भविष्यत्काल इत्युक्तम्, ततो यद्यसावनुवर्तते विकल्पः स्यात्। तद्बाधनार्थमेव पुनर्लिङ्ग्रहणं क्रियते॥ १५७॥

समानकर्त्तृकेषु तुमुन्॥ पूर्वेण लिङ्लोटोः प्राप्तयोस्तुमुन् विधीयते। तुमुन्प्रकृत्यपेक्षमेवेति। यस्माद् धातोस्तुमुन् विधीयते स तुमुन्प्रकृतिः; तां यदपेक्षते तत् तुमुन्प्रकृत्यपेक्षम्। इच्छार्थानां धातूनामेव तुमुन्प्रकृत्यपेक्षमुपपदत्वम्; अतः प्रत्यासत्तेस्तदपेक्षमेव समानकर्तृकत्वं ज्ञायते—तुमुन्प्रकृतेर्यः कर्त्ता स चेदिच्छार्थानामपि भवतीति। इच्छति भोक्तुमिति। योऽत्रेषेः कर्त्ता स एव भुजेरपीत्यस्तीह समानकर्तृकत्वम्। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इत्यादिनैवात्र तुमुनि सिद्धे पुनस्तस्य विधानं समानकर्तृकेषु लिङ्लोटौ च परत्वात् प्राप्नुतस्तौ मा भूतामित्येवमर्थः, ण्वुल् मा भूदित्येवमर्थश्च।

### पदमञ्जरी

किमर्थः, यावता कामो मे भुञ्जीत भवान्, अभिलाषो मे भुञ्जीत भवानित्यत्राप्यनेनैव सिद्धम् ? यत्रेच्छार्थमुपपदं न भवति, अर्थप्रकरणादिना तु कामप्रवेदनं गम्यते, तत्रापि लिङ् यथा स्यात्। इदं तर्हि किमर्थम् ? लोडर्थम्। लिङ्ग्रहणं तु लोटा बाधा मा भूदिति। एवमपि 'लोट् च' इति वक्तव्ये किं लिङ्ग्रहणेन ? प्रकृतं लिङ्ग्रहणं विभाषासम्बन्धम्, अतस्तदनुकर्षणे विभाषाग्रहणस्याप्यनुकर्षणं सम्भाव्येत॥ १५७॥

समानकर्तृकेषु तुमुन्॥ तुमुन्प्रकृत्यपेक्षमिति। तुमुन्प्रकृतौ यः कर्त्ता स चेदिच्छार्थेष्वपि भवतीति, एतच्च सान्निध्याल्लभ्यते। इच्छति भोक्तुमिति। आत्मनो भोजनमिच्छतीत्यर्थः। या एवेषेः कर्त्ता स एव भुजेरपीत्यस्तीह समानकर्तृकत्वम्। इच्छाया भुजिक्रियां प्रति तादर्थ्यस्याप्रतीतेः 'तुमुन्ण्वुलौ' इत्यादिना तुमुन् न सिद्ध्यतीत्ययमारम्भः। अथापि कथञ्चित्तादर्थ्यं स्यात्, एवमपि समानकर्तृकेष्विति वक्ष्यामीत्यायमारम्भः,

### भावबोधिनी

पूर्वोक्त है। लोट् है। ] कामये, प्रार्थये [ इच्छा करता हूँ, अभिलाषा करता हूँ। इन्हें भी पूर्व वाक्यों से जोड़ा जा सकता है। ] * 'कामप्रवेदन = अपने अभिप्राय को प्रकट करने पर ही लिङ् होता है—ऐसी व्याख्या करनी चाहिये।' * यहाँ न हो—इच्छन् करोति। [ चाहता हुआ करता है। यहाँ दूसरे के लिये अपनी इच्छा का प्रकट करना नहीं प्रतीत होता है। अतः यह सूत्र का विषय नहीं है ]॥ १५७॥

समानकर्ता वाली, इच्छा-अर्थवाली धातुओं के उपपद रहते [ दूसरी ] धातु से तुमुन् होता है। तुमुन् की प्रकृतिभूत धातु के अर्थ को मानकर ही समानकर्तृकत्व अपेक्षित है [ अर्थात् तुमुन् जिस धातु से होता है, उस क्रिया का कर्ता और इच्छा का कर्ता समान = एक ही होना चाहिये। ] उदा०—इच्छति भोक्तुम्। कामयते भोक्तुम्। वष्टि भोक्तुम्। वाञ्छति भोक्तुम्। [खाना चाहता है। सभी वाक्यों का यह अर्थ है। भोजन क्रिया और इच्छा क्रिया का समान = एक ही कर्ता है। अतः इच्छार्थक उपपद रहते √भुज् से तुमुन् होता है। ]

**समानकर्तृकेष्विति-किम् ? देवदत्तं भुञ्जानमिच्छति यज्ञदत्तः। इह कस्मान्न भवति-इच्छन्करोति ? अनभिधानात् ॥**

## ११११६. लिङ् च ॥ १५९ ॥ ( २८१७ )

**इच्छार्थेषु समानकर्तृकेषु धातुषूपपदेषु धातोर्लिङ् प्रत्ययो भवति। भुञ्जीयेतीच्छति। अधीयीयेतीच्छति। क्रियातिपत्तौ लृङ् भवति। योगविभाग उत्तरार्थः ॥**

### न्यासः

**देवदत्तं भुञ्जानमिच्छतीति।** अत्र भुजेर्देवदत्तः कर्त्ता, इच्छतेस्ततोऽन्य इति नास्ति समानकर्तृकत्वम्, तेन वर्त्तमानविवक्षायां लडेव भवति। **अनभिधानादिति।** न ह्यत्र तुमुनोत्पद्यमानेन विवक्षितोऽर्थः शक्यतेऽभिधातुमिति। अभिधानलक्षणाश्च कृत्तद्धितसमासाः। अथ वा--**अनभिधानादिति।** इच्छन् कर्तुमित्यभिधानस्याभावादित्यर्थः। लोकप्रसिद्धानां हि शास्त्रेऽन्वाख्यानं क्रियते, न त्विच्छन् कर्तुमित्यादयो लोकप्रसिद्धाः ॥ १५८ ॥

**लिङ् च ॥ भुञ्जीयाधीयेति।** 'इटोऽत्'। किमर्थं पुनरिदमुच्यते; यावता वासरूपविधिनैवात्र लिङ् भविष्यति ? नैतदस्ति; लिङ्लोटोरपवादत्वाद् बाधकयोः प्राप्तयोस्तद्बाधनार्थस्तुमुन् विधीयते। तेन बाधितत्वाद् यथा लोड् न भवति; तथा लिङपि न स्यात्। तस्माल्लिङ्विधानार्थमिदमुच्यते। **योगविभाग उत्तरार्थ इति।** उत्तरसूत्रे लिङ एवानुवृत्तिर्यथा स्यात्; तुमुनो मा भूत् ॥ १५६ ॥

### पदमञ्जरी

तेन देवदत्तेन भोक्तुमिच्छति यज्ञदत्त इति न भवति। **इच्छन् करोतीति।** अत्रार्थे इच्छन्कर्तुमिति न भवतीत्यर्थः। इच्छन्कर्तुं गच्छतीत्यादौ 'तुमुन्ण्वुलौ' इत्यादिना तुमुन्। ननु भावे तुमुन् विधीयते, तत्कथमिच्छन्करोतीत्यत्र कर्त्तरि प्रसङ्गः ? एवमपीच्छता क्रियते इत्यत्र प्रसङ्गादनभिधानमेवाश्रयणीयम् ॥ १५८ ॥

**लिङ् च ॥** किमर्थमिदमुच्यते ? लिङ् यथा स्यात्। सिद्धोऽत्र लिङ् 'इच्छार्थेषु लिङ्लोटौ' इति ? तस्य समानकर्तृकेषु तुमुन् बाधकः प्राप्तः। वाऽसरूपविधिश्च क्तल्युट्तुमुन्खलर्थेषु प्रतिषिद्धस्तत्र यथा लोट् न भवति एवं लिङपि न स्यात्। अथापि वाऽसरूपविधिः स्याद् ? एवमपि लिङेव यथा स्याल्लोट् माभूदित्येवमर्थमेतदारब्धव्यमेव ॥ १५९ ॥

### भावबोधिनी

समान–कर्ता-वाली [ इच्छार्थक धातु उपपद रहते ]—इसका क्या फल है ? देवदत्तं भुञ्जानम् इच्छति यज्ञदत्तः। [ भोजन करते हुए देवदत्त को यज्ञदत्त चाहता है। यहाँ भोजन का कर्ता देवदत्त है और इच्छा का कर्ता यज्ञदत्त है। समानकर्तृकत्व नहीं है, तुमुन् नहीं होता है। ] यहाँ क्यों नहीं होता है—इच्छन् करोति ? [ चाहता हुआ करता है ? ]—ऐसे प्रयोगों का अनभिधान है। [ 'इच्छन् कर्तुम्' ऐसा प्रयोग नहीं देखा जाता है ] ॥ १५८ ॥

इच्छार्थक, समानकर्तृक धातु के उपपद रहते [अन्य] धातु से लिङ् भी होता है। [यहाँ च = अपि के अर्थ में है।] उदा०—भुञ्जीय इति इच्छति। [ मैं भोजन करूँ, ऐसा वह चाहता है मैं = भोजन करने वाला और चाहने वाला एक ही व्यक्ति है। तभी समानकर्तृकत्व सम्भव है। भुञ्जीय का उत्तमपुरुष और इच्छति का प्रथमपुरुष एक ही व्यक्तिविशेष के सूचक हैं। ] पढ़ूँ ऐसा चाहता है। [ यहाँ भी एक ही कर्ता है। हिन्दी में ऐसे वाक्यों का पर्याप्त प्रयोग होता है। ] क्रियातिपत्ति = क्रिया की असिद्धि में लृङ् होता है। [ पूर्व सूत्र में इसे न रखकर ] अलग सूत्र बनाना आगे सूत्र में [ केवल इतने अंश की ] अनुवृत्ति के लिये है ॥ १५६ ॥

**११९७. इच्छार्थेभ्यो विभाषा वर्तमाने ।। १६० ।। ( २८१६ )**

**इच्छार्थेभ्यो धातुभ्यो वर्त्तमाने काले विभाषा लिङ् प्रत्ययो भवति । लटि प्राप्ते वचनम् । इच्छति, इच्छेत् । वष्टि, उश्यात् । कामयते, कामयेत ।।**

**११९८. विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ।। १६१ ।। ( २२०८ )**

**विधिः = प्रेरणम् । निमन्त्रणम्=नियोगकरणम् । आमन्त्रणम्=कामचारकरणम् । अधीष्टः[1]=सत्कारपूर्वको व्यापारः । संप्रश्नः = संप्रधारणम् । प्रार्थनम् = याच्ञा । विध्याद्यर्थेषु धातोर्लिङ् प्रत्ययो भवति । सर्वलकाराणामपवादः । विध्यादयश्च प्रत्ययार्थविशेषणम् । विध्यादिविशिष्टेषु कर्त्रादिषु लिङ् प्रत्ययो भवति ।**

न्यासः

**इच्छार्थेभ्यो विभाषा वर्त्तमाने ।। वष्टीति** । 'वश कान्तौ', अदादित्वाच्छपो लुक्, व्रश्चादिना षत्वम् । **उश्यादिति** । ग्रह्यादिसूत्रेण संप्रसारणम । **कामयत इति** । 'कमेर्णिङ' ।। १६० ।।

**विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ।। प्रेरणमिति** । नियोगः । **निमन्त्रणं नियोगकरणमिति** । असत्यामपीच्छायामकरणे सत्यधर्मोत्पत्तेर्नियमेनावश्यभावेन यत् करणं तन्निमन्त्रणम् ।। **कामचारकरणमिति** । कामचारः = **इच्छाचारः** । तेन यत्करणं तदामन्त्रणम् । एतदुक्तंभवति--यदिच्छयैव करणं नानिच्छया अकरणेऽपि दोषाभावात्, तदामन्त्रणम् । इहायं विध्यादिरर्थः प्रकृत्यर्थविशेषणं वा स्यात् ? प्रत्ययार्थो वा । प्रत्ययार्थविशेषणं वा ? तत्र यद्याद्यः पक्ष आश्रीयेत, तदा यत्र प्रकृतिरेव विध्यादीनर्थानाचष्टे तत्र न सिध्येत्--विदध्यात् निमन्त्रयेतामन्त्रयेताधीच्छेदिति, न ह्यत्र प्रकृत्यर्थादन्ये विशेषणभूता विध्यादयः

पदमञ्जरी

**इच्छार्थेभ्यो विभाषा वर्तमाने ।। उश्यादिति** । 'वश कान्तौ' अदादिः, ग्रहिज्यादिना सम्प्रसारणम् ।।१६०।।

**विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ् ।। विधिः प्रेरणमिति** । भृत्यादेर्निकृष्टस्य क्वचित्प्रवर्तनमाज्ञापनमित्यर्थः । नियोगतोऽवश्यम्भावेन यत्करणमनुष्ठानं तन्निमन्त्रणम्, स निमन्त्रणस्य विषय इत्यर्थः । अवश्यकर्त्तव्ये श्राद्धभोजनादौ दौहित्रादेः प्रवर्त्तनेति यावत्, श्राद्धे हि निमन्त्रितो दौहित्रादिरभुञ्जानः प्रत्यवैति । **कामचारकरणमिति** । कामचार इच्छाप्रवृत्तिस्तया यत्करणमनुष्ठानं तदामन्त्रणम्, तद्विषयमामन्त्रणमित्यर्थः । यत्राननुष्ठानेऽपि न प्रत्यवायस्तत्र प्रवर्त्तनेति यावत् । कल्याणादौ ह्यामन्त्रितोऽभुञ्जानोऽपि न प्रत्यवैति । **अधीष्टमिति** । अधिपूर्वादिच्छतेर्नपुंसके भावे क्तः । पुंल्लिङ्गेन पाठस्त्वयुक्तः । **सत्कारपूर्वको व्यापार इति** । गुर्वादेराराध्यस्य व्यापारणेत्यर्थः, ण्यन्तादेरच् । इदं वा कर्त्तव्यमिदं वा कर्त्तव्यमित्येवं भूतविचारणा-सम्प्रधारणम् । यथेदमिह सम्प्रधार्यते इति याच्ञा प्रसिद्धा ।

भावबोधिनी

इच्छा अर्थवाली धातुओं से वर्तमान काल अर्थ में विकल्प से लिङ् प्रत्यय होता है । लट् प्राप्त रहते इस लिङ् का विधान है । उदा० इच्छति, इच्छेत् [लट्, लिङ् है । दोनों का अर्थ है--चाहता है । ] वष्टि, उश्यात । कामयते, कामयेत, [ चाहता है ; यही अर्थ दोनो वाक्यों का है । लट् और लिङ् होते हैं ] ।। १६० ।।

(१) विधि = प्रेरण = आज्ञा देना । (२) निमन्त्रण = नियत रूप से बुलाना, काम में लगाना । (३) आमन्त्रण = कामचार से बुलाना, बुलाये जाने वाले को इच्छा पर आना या न आना । (४) अधीष्ट = सत्कार के साथ किसी काम में लगाना । (५) सम्प्रश्न = निश्चय कराने के लिये पूँछना । (६) प्रार्थन = याचना । विधि आदि अर्थों में धातु से लिङ् होता है । यह सभी लकारों का अपवाद है । विधि आदि प्रत्ययार्थ के विशेषण होते हैं [ धात्वर्थ के नहीं ] । विधि आदि से विशिष्ट कर्ता आदि रहने पर लिङ् प्रत्यय होता है । उदा०--(१) विधि = आज्ञा अर्थ में--कटं कुर्यात् [ चटाई

१. अधीष्टमिति पदमंजरीकारः, अधीष्टे च ( ३।३।६६ ) इतिसूत्रे काशिकाकारश्च ।

**विधौ तावत् — कटं कुर्यात् । ग्रामं भवानागच्छेत् । निमन्त्रणे — इह भवान् भुञ्जीत । इह भवानासीत । आमन्त्रणे — इह भवानासीत । इह भवान्भुञ्जीत । अधीष्टे-अधीच्छामो भवन्तं माणवकं भवानुपनयेत । संप्रश्ने-किं नु खलु भो व्याकरणमधीयीय । प्रार्थने — भवति मे प्रार्थना व्याकरणमधीयीय ॥**

**न्यासः**

सन्तीत्येष दोषः प्रतिविधेयः स्यात् । प्रतिविधीयमानेऽपि तस्मिन् प्रतिपत्तिगौरवं स्यात् । अथ द्वितीयः ? भावकर्मकर्तृप्रत्ययार्थानां विध्यादयो वाचकाः स्युरित्येवमनयोर्दोषं दृष्ट्वा तृतीयं पक्षमाश्रित्याह—**विध्यादयश्चेत्यादि** । प्रत्ययार्थास्त एव भावकर्मकर्तारः । तेषु 'लः कर्मणि च' इत्यादिना प्रत्ययस्य विधानात् तेषामयं विध्यादिरर्थो विशेषणमिति मत्वाऽऽह--**विध्यादिविशिष्टेष्वित्यादि** । एतेनादिशब्देन निमन्त्रणादीनां ग्रहणम् । द्वितीयेन भावकर्मणोः । **आसीतेति** । अदादित्वाच्छपो लुक् । **अध्यापयेदिति** । पूर्ववदात्वपुकौ ॥ १६१ ॥

**पदमञ्जरी**

न्यायव्युत्पादनार्थं च प्रपञ्चार्थमथापि वा ।
विध्यादीनामुपादानं चतुर्णामादितः कृतम् ॥
अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि ।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ॥

अयं विध्यादिः प्रकृत्यर्थः, प्रत्ययार्थः, प्रकृत्यर्थविशेषणम्, प्रत्ययार्थविशेषणं वेति चत्वारः पक्षाः । तत्राद्ये पक्षे विध्यादिषु वर्त्तमानाद्धातोरित्यर्थः स्यात्, ततश्च यत्र प्रकृतिरेव विध्यादीनाचष्टे तत्रैव स्यात्—विदध्यान्निमन्त्रयेत, आमन्त्रयेत, अधीच्छेत्, संप्रच्छेत्, प्रार्थयेतेति; तत्रापि प्रकृत्यर्था भावकर्मकर्त्तारश्चेत्येतावदवगम्येत, न प्रकृत्यर्थव्यतिरेकेणापरं विध्यादिकम् । यथा चेच्छार्थेभ्यः 'विभाषा वर्त्तमाने' इत्यत्र लिङि इच्छेदिति लडादयश्च न स्युः; अनेन लिङा बाधितत्वात् । द्वितीये नाप्राप्तेषु भावकर्मकर्तृषु विध्यादयोऽर्था निर्दिश्यमानास्तेषां बाधकाः स्युरिति लिङा कर्त्रादीनामभिधानं न स्यात्, द्विवचनबहुवचनानुपपत्तिश्च, विध्यादीनामेकत्वात् । तृतीये तु यत्र प्रकृतिरेव विध्यादीनाचष्टे तत्र न स्यात्—विदध्यान्निमन्त्रयेतेति, न ह्यत्र प्रकृत्यर्थादन्ये तद्विशेषणभूता विध्यादयः सन्ति । चतुर्थे तु विध्यादीनां कर्त्रादीनां च स्पष्ट एव भेद इति दोषाभाव इति तमेवाश्रयति--**विध्यादयश्चैत इति** । **विध्यादिविशिष्टेष्विति** । विध्यादयः प्रवर्त्तनाविशेषास्तैर्विशिष्टेषु प्रवर्तितेष्वित्यर्थः । सम्प्रश्नप्रार्थनयोस्तु सम्पृच्छ्यमाने प्रार्थ्यमाने च कर्त्तरि । ननु च प्रकृत्या योऽर्थो नाभिधीयते तत्रैव प्रत्ययेन भाव्यम्, न तु प्रकृत्याभिहिते; 'उक्तार्थानामप्रयोगः' इति न्यायात्, ततश्चास्मिन्नपि पक्षे विदध्यादित्यादौ तदवस्थ एवाप्रसङ्गः ? एवं तर्हि सन्त्येवात्र व्यतिरिक्ता विध्यादयो विषयभेदात्, तथा हि--श्राद्धे मां निमन्त्रयेत भवानिति मत्कर्मकं निमन्त्रणं तवानुष्ठेयमित्यर्थः, तत्र प्रकृत्यभिहितं निमन्त्रणं भोजनविषयम्, लिङभिहितं तु निमन्त्रणविषयमिति विस्पष्ट एव निमन्त्रणभेदः । यथैषितुमिच्छतीति कालसाधनभेदादिच्छयोर्भेदाश्रयो योगस्तद्वत् । एवं विध्यादिष्वपि द्रष्टव्यम् । एवं च कृत्वा

**भावबोधिनी**

बनाये ] । ग्रामं भवान् आगच्छेत् । [ आप गाँव आयें ] । (२) निमन्त्रण में—इह भवान् भुञ्जीत [ आप यहाँ भोजन करें । ] इह भवान् आसीत [ आप यहाँ बैठें । ] (३) आमन्त्रण में—यहाँ आप भोजन करें । यहाँ आप बैठें । (४) अधीष्ट में--आप से निवेदन करते हैं, आप बच्चे को उपनीत करें, [ इसका उपनयन संस्कार करें । ] (५) सम्प्रश्न में—क्यों श्रीमन् ! व्याकरण पढ़ूँ ? । (६) प्रार्थन में—मेरी प्रार्थना = याचना है कि मैं व्याकरण पढ़ूँ ।

**विमर्श**—यहाँ कुर्यात्, आगच्छेत्, भुञ्जीत, आसीत, उपनयेत, अधीयीय—ये सभी लिङ् के रूप है । विधि शब्द सर्वप्रथम होने से इसे विधिलिङ् कहा जाता है ॥ १६१ ॥

**११११९. लोट् च ॥ १६२ ॥ ( २१९४ )**

**लोट् प्रत्ययो भवति धातोर्विध्यादिष्वर्थेषु । योगविभाग उत्तरार्थः । विधौ तावत्—कटं तावद् भवान् करोतु । ग्रामं भवानागच्छतु । निमन्त्रणे—अमुत्र भवानास्ताम् । अमुत्र भवान् भुङ्क्ताम् । आमन्त्रणे—इह भवान् भुङ्क्ताम् । अधीष्टे—अधीच्छामो भवन्तं माणवकं भवानध्यापयतु । माणवकं भवानुपनयताम् । संप्रश्ने-किं न खलु भो व्याकरणमध्ययै । प्रार्थने—भवति मे प्रार्थना व्याकरणमध्ययै, छन्दोऽध्ययै ॥**

**११२०. प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ॥ १६३ ॥ ( २८१७ )**

**प्रेषणम् = प्रैषः, कामचाराभ्यनुज्ञानम् = अतिसर्गः, निमित्तभूतस्य कालस्यावसरः = प्राप्तकालता–**

**न्यासः**

**लोट् च** ॥ यदि विध्यादिष्वेव लोड् भवत्येवं योगविभागः किमर्थः क्रियते ? इत्याह—**योगविभाग उत्तरार्थ इति** । उत्तरसूत्रे लोट एवानुवृत्तिर्यथा स्यात्, लिङो मा भूदिति । **करोत्विति** । 'एरुः' इत्युत्वम् । **अध्ययै इति** । 'आडुत्तमस्य पिच्च' इत्याट्, टेरेत्वे कृते 'एत ऐ', 'आटश्च' इति वृद्धिः, प्रकृतेर्गुणायादेशौ ॥ १६२ ॥

**प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च** ॥ **कार्य इति** । 'ऋहलोर्ण्यत्' इति ण्यत् । **कृत्य इति** । 'विभाषा कृवृषोः' इति क्यप् ।

**पदमञ्जरी**

प्रकृत्यर्थविशेषणपक्षेऽपि नातीव दोषः । **आमन्त्रणे इह भवान् भुञ्जीतेति** । यदीच्छतीत्यर्थः । **अध्येष्यामह** इत्यपपाठोऽयम्; न हीच्छतेरेतद्रूपं सम्भवति, इष्यतिरपि परस्मैपदी, गुणश्च श्यनि दुर्लभः; इङश्चात्रार्थो नास्ति, सूत्रे चाधीष्टेति इङ् न प्रयुक्तः, तस्माद**धीच्छाम** इति पाठः । **उपनयेतेति** । आचार्यकरण आत्मनेपदम् ॥१६१॥

**लोट् च** ॥ **योगविभाग उत्तरार्थ इति** । उत्तरत्र लोट एवानुवृत्तिर्यथा स्याल्लिङो मा भूदिति । **अध्ययै इति** । इट्, उत्तमैकवचनम्, टेरेत्वम्, 'एत ऐ', 'आडुत्तमस्य पिच्च' इत्याडागमः, 'आटश्च' इति वृद्धिः, प्रकृतेर्गुणायादेशौ ॥ १६२ ॥

**प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च** ॥ **कृत्य इति** । 'विभाषा कृवृषोः' इति क्यप् । भवान् हि प्रेषित इत्यादिर्वाक्यशेषः सर्वेष्वेवोदाहरणेषु योज्यः ।

**भावबोधिनी**

विधि आदि [ पूर्वोक्त ] अर्थों में धातु से लोट् प्रत्यय भी होता है । इस सूत्र का अलग बनाना अगले सूत्र में अनुवृत्ति के लिये है । [ केवल 'लोट्' की अनुवृत्ति इष्ट है । ] उदा०—(१) विधि में—आप चटाई बनाइये [ करोतु ] । आप गाँव आइये ( आगच्छतु ) । (२) निमन्त्रण में यहाँ आप बैठें [ आस्ताम् ] । यहाँ आप भोजन करें [ भुङ्क्ताम् ] । (३) आमन्त्रण में—यहाँ आप भोजन करें [ भुङ्क्ताम् ] । (४) अधीष्ट में—आप से प्रार्थना करते हैं आप बच्चे को पढ़ा दें [ अध्यापयतु ] । आप बच्चे का उपनयन-संस्कार करें [ उपनयताम् ] । (५) सम्प्रश्न में—क्यों श्रीमन् ! मैं व्याकरण पढ़ूँ [ अध्ययै ] (६) प्रार्थन में —मेरी प्रार्थना है कि मैं व्याकरण पढ़ूँ [ अध्ययै ], वेद पढ़ूँ [ अध्ययै ] [ यहाँ लोट् के रूप प्रयुक्त हैं । ] ॥ १६२ ॥

( १ ) प्रेषण = प्रैष, प्रेरित करना । ( २ ) कामचार = इच्छानुसार कार्य करने की अनुमति = अतिसर्ग । ( ३ ) निमित्तभूत काल का अवसर = समय = प्राप्तकालता है—इन तीन अर्थों में धातु से कृत्यसंज्ञक प्रत्यय होते हैं और 'च' के बल से लोट् भी होता है । उदा०—भवता कटः करणीयः, कर्त्तव्यः कृत्यः, कार्यः [ (१) आपको चटाई बनानी चाहिये, या ( २ ) आप चटाई बनायें, या ( ३ ) आपका चटाई बनाने का समय आ गया है । यहाँ √कृ + अनीयर् = करणीय, √कृ + तव्यत् = कर्त्तव्य, √कृ + क्यप् = य, तुक् = त — कृत्य, √कृ + ण्यत् = य — कार्य । ] लोट् भी होता

**एतेष्वर्थेषु धातोः कृत्यसंज्ञकाः प्रत्यया भवन्ति। चकाराल्लोट् च। भवता कटः करणीयः, कर्तव्यः, कृत्यः, कार्यः। लोट् खल्वपि—करोतु कटं भवानिह प्रेषितः, भवानतिसृष्टः। भवतः[1] प्राप्तकालः कटकरणे॥**

**किमर्थं प्रैषादिषु कृत्या विधीयन्ते, न सामान्येन; भावकर्मणोर्विहिता एव, ते प्रैषादिष्वन्यत्र च भविष्यन्ति? विशेषविहितेनानेन लोटा बाध्यन्ते। वाऽसरूपविधिना भविष्यन्ति? एवं तर्हि ज्ञापयति—'स्त्र्यधिकारात् परेण वाऽसरूपविधिर्नावश्यं भवति' इति।**

न्यासः

**किमर्थमिदमित्यादि** द्वेष्यम्। **विशेषविहितेत्यादि** परीहारः। कृत्या हि सामान्येन विहिताः। लोट् तु प्रैषादिनार्थविशेषेण। अतस्तेन विशेषविहितेन कृत्याः प्रैषादिविषये बाध्येरन्निति पुनर्विधीयते। **वाऽसरूपेत्यादिना** परीहारं विघटयति। एवं **तर्हीत्यादिना** प्रैषादिषु कृत्यविधानस्य ज्ञापकत्वं दर्शयति। ननु चाऽसति प्रयोजने ज्ञापकं भवति, इह चास्ति प्रयोजनम्, किं तत्? प्रैषादि येन नियमेन कृत्या भवन्ति, नान्यत्रेति? नैतत्; अनिष्टत्वात्। अन्यत्रापि हि कृत्या दृश्यन्ते—तृणेन शोष्यम्, बुधेन बोध्यमिति। तच्च नियमे सति न सिध्येत्, न ह्यत्र प्रैषादयो गम्यन्ते। तस्मान्नेह नियमोऽभीष्टः, न चानिष्टार्था प्रक्लृप्तिः शास्त्रे युक्ता। ततो युक्तं ज्ञापकमेव; कृत्यविधानस्यावश्यंभावात्। अवश्यंग्रहणेन क्वचिदपि भवतीति दर्शयति। एतच्च स्त्र्यधिकारात् परेणापि

पदमञ्जरी

**न सामान्येनेति।** भावकर्मणोरित्युपलक्षणम्; भव्यगेयादीनां कर्त्तर्यपि भावात्। **एवं तर्ह्येतज्ज्ञापयतीति।** 'प्रैषादिष्वेव कृत्या भवन्ति नान्यत्र' इति नियमार्थं चैतन्न भवति, अनिष्टत्वात्। अन्यत्रापि कृत्या दृश्यन्ते—तृणेन शोष्यम्, बुधेन वोध्यमिति, अग्निस्तोकं तृणेन दीपनीय इति। वस्तुस्वरूपकथनमेतत्, न त्वत्र प्रैषादिप्रतीतिः। **अधिकारात्परेणेति।** एनपा योगे पञ्चमी मृग्या। **नावश्यमिति।** क्वचिद्भवति, क्वचिन्नेत्यर्थः।

**को विशेष इति।** विधिः प्रेरणमिति पूर्वत्र व्याख्यातत्वात् नास्त्येव भेद इति प्रश्नः। यद्यविशेषः, कथं द्वन्द्वनिर्देश इति चेत्? शब्दरूपस्याभिधेयत्वात्। 'को विशेषः' इति कोऽनयोः शब्दयोर्विशेषोऽभिधेय इत्यर्थः। **केचिदिति।** एवमामन्त्रणातिसर्गयोरपि विशेषो ज्ञेयः। केचिदिति वचनादपरेऽनयोर्विशेषं नेच्छन्तीत्युक्तं भवति।

भावबोधिनी

है—करोतु कटं भवान् इह प्रेषितः [ मेरी आज्ञा है कि आप यहाँ चटाई बनायें। ] करोतु कटं भवान् अतिसृष्टः [ आप की इच्छा है आप चटाई बनायें ] आपका चटाई बनाने का समय आ गया है।

**विमर्श**—अन्तिम वाक्य उदाहरण नहीं है। यहाँ कहीं कहीं 'भवतः प्राप्तकालः' इतना ही पाठ है। कहीं कहीं 'कटकरणे' यह भी लिखा है। इसके साथ—भवतः कटकरणे प्राप्तकालः यह योजना ठीक है। वास्तव में 'भवान् प्राप्तकालः' यही पाठ ठीक प्रतीत होता है। इसी से अन्वय संगत होता है, और अगले सूत्र की वृत्ति में भी यही पाठ है।

( **अनु०** )—**प्रैष** आदि अर्थों में ही कृत्य प्रत्ययों का विधान क्यों किया जा रहा है, सामान्यरूप से सभी अर्थों में क्यों नहीं किया जा रहा है; भाव और कर्म अर्थों में विधान किये गये ही हैं, वे प्रैषादि में और अन्य अर्थों में हो जायेंगे? [ यह कहें कि ] विशेषविहित इस लोट् से कृत्य प्रत्ययों का बाध हो जायगा। [ यह नहीं कह सकते क्योंकि ] "वाऽसरूपोऽस्त्रियाम्" ३।१।९४ के अनुसार ये प्रत्यय भी हो जायेंगे? यदि ऐसी बात है तो आचार्य यह ज्ञापित करते हैं—"स्त्रियाम्" ३।३।९४ इस अधिकार के आगे वाऽसरूप-विधि अवश्यरूप से नहीं होती है।

विधि और प्रैष में क्या भेद है? कुछ लोग कहते हैं—अज्ञात का ज्ञापन विधि है। प्रेषण = प्रेरित करना = प्रैष है। [ वास्तव में ये दोनों एक ही हैं। ]

१. 'भवान्' इति उचितः पाठः, अग्रिमसूत्रे तथैव दर्शनात् अन्वयसंगतेश्च।

विधिप्रैषयोः को विशेषः ? केचिदाहुः-'अज्ञातज्ञापनं विधिः, प्रेषणं प्रैषः' इति ॥

## ११२१. लिङ् चोर्ध्वमौहूर्तिके ॥ १६४ ॥ ( २८१८ )

**प्रैषादयो वर्त्तन्ते। प्रैषादिषु गम्यमानेषु ऊर्ध्वमौहूर्त्तिकेऽर्थे वर्तमानाद्धातोर्लिङ् प्रत्ययो भवति। चकाराद्यथाप्राप्तं च। ऊर्ध्वं मुहूर्त्तात्=उपरिमुहूर्तस्य भवता खलु कटः कर्त्तव्यः, करणीयः, कार्यः। भवान् खलु कटं कुर्यात्, भवान् खलु करोतु। भवानिह प्रेषितः। भवानतिसृष्टः। भवान् प्राप्तकालः॥**

**न्यासः**

वाऽसरूपविधिः क्वचित् स्वरितत्वप्रतिज्ञानाल्लभ्यते। तेन कालादिषूपपदेषु वाऽसरूपविधिना ल्युडपि भवति—कालो भोजनस्येति। यदि तु सर्वथा वाऽसरूपविधिर्न स्यात् तदा 'कालसमयवेलासु तुमुन्' इति तुमुन्नेव नित्यं स्यात्। केचिदाहुरिति वचनादपरे त्वेतयोर्विशेषं नेच्छन्तीत्युक्तं भवति॥ १६३॥

**लिङ् चोर्ध्वमौहूर्त्तिके ॥ यथाप्राप्तञ्चेति।** लोट्, कृत्याश्च॥ १६४॥

**पदमञ्जरी**

तेषामपि प्रैषातिसर्गग्रहणं कर्त्तव्यमेव, तत्रैव कृत्या यथा स्युरिति। 'प्राप्तकाले च' इति ह्युक्ते निमन्त्रणादावपि कृत्याः स्युः। चकारेण लोडप्यनुकर्षणीयः—प्राप्तकाले यथा स्यादिति॥ १६३॥

**लिङ् चोर्ध्वमौहूर्तिके ॥ चकाराद्यथाप्राप्तं चेति।** लोट्, कृत्याश्च॥ १६४॥

**भावबोधिनी**

विमर्श--माव एवं कर्म अर्थों में कृत्य प्रत्ययों का विधान किया हो गया है। अतः ये प्रत्यय उक्त अर्थों में और प्रैषादि में सर्वत्र सम्मव हैं। ऐसी स्थिति में इस सूत्र से प्रैषादि अर्थों में ही विशेषरूप से इन कृत्य प्रत्ययों के विधान का क्या उद्देश्य? यह कहा जाय कि कृत्य प्रत्यय सामान्यरूप से होंगे और लोट् प्रत्यय विशेषरूप से। अतः लोट् इन कृत्य प्रत्ययों का बाध कर लेंगे। जिससे केवल लोट् के ही रूप प्रयुक्त होंगे कृत्य के नहीं। परन्तु ऐसा तर्क ठीक नहीं है क्योंकि 'वाऽसरूपोऽस्त्रियाम्' ३।१।९४ इस नियम से असरूप प्रत्यय मो विकल्प से हो ही जायेंगे। इस प्रकार कृत्य और लोट् दोनों प्रत्यय होना सम्मव है? इस स्थिति में यह सूत्र यह ज्ञापित करता है कि 'स्त्रियाम्' ३।३।९४ इस अधिकार के बाद वाऽसरूप०' ३।१।९४ यह नियम अवश्यरूपेण नहीं लागू होता है। अर्थात् कहीं प्रवृत्त होता है और कहीं नहीं प्रवृत्त होता है। अतः प्रैषादि में कृत्य और लोट् दोनों की सिद्धि के लिये प्रैषादिग्रहण का उपयोग है। १६३॥

प्रैषादि की अनुवृत्ति होती है। प्रैषादि अर्थ प्रतीयमान रहने पर ऊर्ध्वमौहूर्तिक [ मुहूर्त=दो घड़ी के ऊपर ] अर्थ में वर्तमान धातु से लिङ् प्रत्यय होता है। 'च' के बल से यथाप्राप्त सभी प्रत्यय होते हैं। ऊर्ध्वं मुहूर्तात्=उपरिमुहूर्त्तस्य मवता खलु कटः कर्त्तव्यः, करणीयः, [ कृत्यः ] कार्यः। [ मुहूर्त के बाद आप चटाई बनाइये, आपको चटाई बनानी चाहिये, आपका चटाई बनाने का समय आ गया है—पूर्वोक्त अर्थ होते हैं। प्रत्यय भी वे ही हैं। केवल समयविशेष की प्रतीति होती हैं। ] ऊर्ध्वं मुहूर्तात् भवान् खलु कटं कुर्यात् [ इसमें लिङ् है ]। मवान् खलु करोतु। [ इसमें लोट् है। अर्थ वही है। यहाँ भी आगे के तीनों अंश मिलाकर पूर्ण वाक्य बनाना चाहिये—] मवान् इह प्रेषितः [ आप यहाँ प्रेरित किये गये। ] मवान् अतिसृष्टः [ आप इच्छानुसार कार्य करने के लिये कहे गये ]। मवान् प्राप्तकालः। [ आपका काम करने का समय आ गया है। ]

विमर्श—पूर्ववर्त्ती सूत्र की वृत्ति में—'मवतः प्राप्तकालः' यह पाठ प्रायः मिलता है। षष्ठ्यन्त को अन्वयानुपपत्ति दूर करने के लिए किसी ने 'कटकरणे' यह जोड़ दिया है। परन्तु इस सूत्र पर काशिकाकार ने 'मवान् प्राप्तकालः' यह प्रथमान्त पाठ रखा है। दोनों स्थलों पर विषय समान है और 'प्राप्तकालः' यह बहुव्रीहि है। इसके साथ अन्वित करने के लिए मी प्रथमान्त 'मवान्' पाठ उचित है। 'ऊर्ध्वमौहूर्त्तिक' शब्द की व्युत्पत्ति के लिये 'लिङ्चोर्ध्वमौहूर्त्तिके' ३।३।९ की व्याख्या देखें॥ १६४॥

११२२. स्मे लोट् ॥ १६५ ॥ ( २८१९ )

'प्रैषादिषु' 'ऊर्ध्वमौहूर्तिके' इति वर्तते। स्मशब्द उपपदे प्रैषादिषु गम्यमानेषूर्ध्वमौहूर्तिकेऽर्थे वर्तमानाद्धातोर्लोट् प्रत्ययो भवति। लिङ्कृत्यानामपवादः। ऊर्ध्वं मुहूर्ताद् भवान् कटं करोतु स्म। ग्रामं गच्छतु स्म। माणवकमध्यापयतु स्म॥

११२३. अधीष्टे च ॥ १६६ ॥ ( २८२० )

'स्मे' इति वर्तते। अधीष्टं व्याख्यातम्। स्मशब्द उपपदेऽधीष्टे गम्यमाने धातोर्लोट् प्रत्ययो भवति। लिङोऽपवादः। अङ्ग स्म राजन् माणवकमध्यापय। अङ्ग स्म राजन् अग्निहोत्रं जुहुधि॥

११२४. कालसमयवेलासु तुमुन् ॥ १६७ ॥ ( ३१७९ )

कालादिषूपपदेषु धातोस्तुमुन्प्रत्ययो भवति। कालो भोक्तुम्। वेला भोक्तुम्॥

न्यासः

स्मे लोट् ॥ लिङ् कृत्यानामपवाद इति। अनन्तरसूत्रविहितानाम्॥ १६५॥

अधीष्टे च॥ लिङोऽपवाद इति। विध्यादिसूत्रेण प्राप्तस्य। अध्यापयेति। सेर्हिरादेशः, तस्य 'अतो हेः' इति लुक्। जुहुधीति। 'हुझल्भ्यो हेर्धिः' इति धिरादेशः॥ १६६॥

कालसमयवेलासु तुमुन्। प्रैषादिग्रहणमिह सम्बध्यत इति। न चेदिह प्रैषादयो गम्यन्ते, तेन तत्र न भवतीत्यभिप्रायः। कालो भोजनस्येत्युक्ते तस्माद् भुङ्क्तां भवानिति प्रैषो गम्यते। ततश्च प्रैषादिग्रहणेऽनुवर्त्त-

पदमञ्जरी

स्मे लोट् ॥ लिङ्कृत्यानामपवाद इति। अनन्तरसूत्रेण प्राप्तानाम्। करोतु स्मेति। स्मशब्दोऽधिकारं सूचयति--भवानत्राधिकृत इत्यर्थः॥ १६५॥

अधीष्टे च॥ अङ्ग स्म राजन्निति। अङ्गशब्दोऽनुनये। ब्राह्मणानामेवाध्यापनं वृत्तिरतो राजन्नित्य-भ्यर्हितेत्यर्थः॥ १६६॥

कालसमयवेलासु तुमुन्॥ प्रैषादिग्रहणं सम्बद्ध्यते इति। न चेह प्रैषादयो गम्यन्त इति भावः। इह कस्मादिति। कालो भोजनस्येति। तस्माद् भुङ्क्तां भवानिति वाक्यार्थः, तेन गम्यतेऽत्र प्रैष इति प्रश्नः।

भावबोधिनी

'प्रैषादिषु' और 'ऊर्ध्वमौहूर्त्तिके' इनकी अनुवृत्ति होती है। 'स्म' शब्द उपपद रहने पर प्रैषादि अर्थ प्रतीयमान रहने पर ऊर्ध्वमौहूर्तिक अर्थ में विद्यमान धातु से लोट् प्रत्यय होता है। यह लिङ् और कृत्य प्रत्ययों का अपवाद है। उदा०—ऊर्ध्वं मुहूर्त्ताद् भवान् कटं करोतु स्म। [ मूहूर्त=दो घड़ी के बाद आप चटाई बनाइये। ] ग्रामं गच्छतु स्म [ मुहूर्त्त भर के बाद आप गाँव जाइये ] माणवकम् अध्यापयतु स्म [—मुहूर्त भर के बाद आप बच्चे को पढ़ाइये। यहाँ—'ऊर्ध्वं मुहूर्त्तात्' इन पदों का सम्बन्ध तीनों वाक्यों के साथ है। तभी यह सूत्र लोट् करता है ]॥ १६५॥

'स्म' इसकी अनुवृत्ति होती है। अधीष्ट [ =सत्कारपूर्वक व्यापार ] इसकी व्याख्या की जा चुकी है। 'स्म' शब्द उपपद रहने पर अधीष्ट अर्थ प्रतीयमान रहने पर धातु से लोट् प्रत्यय होता है। उदा०—अङ्ग स्म राजन्! माणवकम् अध्यापय [ हे राजन्! बच्चे को कृपया पढ़ा दीजिये ]। अङ्ग स्म राजन्! अग्निहोत्रं जुहुधि। [ हे राजन्! कृपया आप अग्निहोत्र का अनुष्ठान करिये। अध्यापन और अग्निहोत्रानुष्ठान ब्राह्मणों के कार्य हैं। अतः राजा से इन कार्यों के लिये कहते समय सत्कार की भावना अनिवार्य है। सामान्यरूप से राजा से कहना सम्भव नहीं हैं। ]॥ १६६॥

काल, समय और वेला—इन शब्दों के उपपद रहते धातु से तुमुन् प्रत्यय होता है। उदा०---कालः भोक्तुम् [खाने का समय हो गया]। वेला भोक्तुम् [ अर्थ पूर्वोक्त ]। 'कालः पचति भूतानि' (महाभारत आदि में) यहाँ तुमुन् क्यों

इह कस्मान्न भवति—'कालः पचति भूतानि' ( मै० उ० ६.१५ ) इति ? प्रैषादिग्रहणमिहाभिसंबध्यते। इह कस्मान्न भवति—कालो भोजनस्य ? वाऽसरूपेण[1] ल्युडपि भवति। उक्तमिदम्—'स्त्र्यधिकारात् वाऽसरूपविधिरनित्यः' इति ॥

**११२५. लिङ् यदि ॥ १६८ ॥ ( २८२१ )**

कालादयोऽनुवर्त्तन्ते। यच्छब्दे उपपदे कालादिषु धातोर्लिङ् प्रत्ययो भवति। तुमुनोऽपवादः। कालो यद् भुञ्जीत भवान्। समयो यद् भुञ्जीत भवान्। वेला यद् भुञ्जीत भवान्।

**११२६. अर्हे कृत्यतृचश्च ॥ १६९ ॥ ( २८२२ )**

न्यासः

मानेऽपीह प्राप्नोतीत्यभिप्रायेणाह—**इह कस्मान्न भवतीत्यादि**। स्यादेतत्—प्रैषादिषु कृत्यविधानाज् ज्ञापकात् स्त्र्यधिकारात् परेणापि वाऽसरूपविधिर्नास्तीति, तत् कथं ल्युडपि भवतीत्यत आह—**उक्तमित्यादि**। न हि स्त्र्यधिकारात् परेणापि सर्वत्र वाऽसरूपविधिर्नास्तीति, किं तर्हि ? अनित्यः। ततः क्वचिद् भवति। एतच्च 'एवं तर्ह्येतज् ज्ञापयति' इत्यादिना प्रागेवाभिहितम् ॥ १६७ ॥

**लिङ् यदि** ॥ **तुमुनोऽपवाद इति**। पूर्वसूत्रेण प्राप्तस्य ॥ १६८ ॥

**अर्हे कृत्यतृचश्च** ॥ **वोढव्येति**। 'हो ढः', 'झषस्तथोर्धोऽधः', 'ष्टुना ष्टुः', 'ढो ढे लोपः', 'सहिवहोरोद-

पदमञ्जरी

**वाऽसरूपविधिनेति**। ननु प्रैषादिषु कृत्यविधानात् स्त्र्यधिकारात्परेण वाऽसरूपविधिर्नास्तीति ज्ञापितम् ? तत्राह—**उक्तमिति**। अनित्यत्वमेव तत्र ज्ञापितं न सर्वथाभाव इत्यर्थः। पर्यायोपादानं पर्यायान्तरनिवृत्त्यर्थम्। अन्ये त्वाहुः—अवसरो भोक्तुमित्यादावपि तुमुन् दृश्यते, 'व्युपयोः शेतेः' इत्यत्र राजानमुपशयितुं पर्याय इति प्रयुक्तो **वृत्तिकारेण**। तस्मादर्थग्रहणार्थं पर्यायोपादानम्, यथा—'निमित्तकरणहेतुषु' इत्यत्रेति ॥ १६७ ॥

**लिङ् यदि** ॥ **तुमुनोऽपवाद इति**। कर्तृकर्मणोः सावकाशोऽपि लिङ् प्रतिपदविधेर्बलीयस्त्वात्परत्वाच्च भावे तुमुनो बाधक इत्यर्थः ॥ १६८ ॥

**अर्हे कृत्यतृचश्च** ॥ **अर्हतीत्यर्हं इति**। पचाद्यच्। **तद्योग्य इति**। तच्छब्देन धात्वर्थः परामृश्यते। **अर्हे कर्त्तरि गम्यमान इति**। क्वचिद्वाच्ये, क्वचिद्गम्यमान इत्युभयथानुग्रहाय गम्यमान इत्युक्तम्। क्वचिद्

भावबोधिनी

नहीं होता है ? इस सूत्र में भी प्रैषादिग्रहण का सम्बन्ध रहता है। [ प्रस्तुत वाक्य में प्रैषादि की प्रतीति नहीं है। तथ्यकथन है। अतः तुमुन् प्राप्त नहीं होता। ]

'कालः भोजनस्य' इसमें क्यों नहीं होता ? वाऽसरूपन्याय से ल्युट् भी होता है। यह कहा जा चुका है—"स्त्रियाम्" ३।३।९४ इस अधिकार से परे वाऽसरूपविधि अनित्य है। [ अतः यहाँ विकल्प होने से तुमुन् और ल्युट् दोनों होते हैं। ] ॥ १६७ ॥

काल, समय, वेला—इनकी अनुवृत्ति होती है। काल आदि का प्रयोग रहते 'यत्' शब्द उपपद रहते धातु से लिङ् प्रत्यय होता है। यह तुमुन् का अपवाद है। उदा०—कालो यद् भुञ्जीत भवान्। समयो यद् भुञ्जीत भवान्। वेला यद् भुञ्जीत भवान् [ समय है कि आप भोजन कर लें। तीनों वाक्यों का यही अर्थ है। भुञ्जीत—यह लिङ् का रूप है। ] ॥ १६८ ॥

अर्हति इति अर्हः = तद्-योग्यः [ उस धात्वर्थ को करने के योग्य ]। [ धात्वर्थ— ] योग्य कर्ता वाच्य अथवा प्रतीयमान रहने पर धातु से कृत्यसंज्ञक और तृच् प्रत्यय होते हैं। 'च' के बल से लिङ् भी होता है। उदा०—[ कृत्य प्रत्यय— ] भवता खलु कन्या वोढव्या, वाह्या, वहनीया [ आप कन्या के विवाह के योग्य हैं। वोढव्या—

---

१. वाऽसरूपविधिनेति पदमञ्जरीसम्मतः पाठः।

अर्हतीत्यर्हः=तद्योग्यः। अर्हे कर्तरि वाच्ये गम्यमाने वा धातोः कृत्यतृचः प्रत्यया भवन्ति। चकाराल्लिङ् च। भवता खलु कन्या वोढव्या, वाह्या, वहनीया। भवान् खलु कन्याया वोढा। भवान् खलु कन्यां वहेत्। भवानेतदर्हेदिति।

अथ कस्मादर्हे कृत्यतृचो विधीयन्ते, यावता सामान्येन विहितत्वादर्हेऽपि भविष्यन्ति? योऽयमिह लिङ् विधीयते, तेन बाधा मा भूदिति। वाऽसरूपविधिश्चानित्यः॥

## ११२७. आवश्यकाधमर्ण्ययोर्णिनिः॥ १७०॥ ( ३३११ )

### न्यासः

वर्णस्य' इत्येते विधयः कर्त्तव्याः। अथेत्यादि द्वेष्यम्। योऽयमित्यादि परीहारः। वाऽसरूपविधिः स्त्र्यधिकारात् परेण नावश्यंभवतीत्युक्तमेव॥ १६९॥

आवश्यकाधमर्ण्ययोर्णिनिः॥ आवश्यकमिति। मनोज्ञादित्वाद्वुञ्। उपाधिरयमिति। प्रत्ययार्थविशेषण-मित्यर्थः। नोपपदमिति। उपपदत्वे तु कारी, हारीति रूपं न स्यादित्यभिप्रायः। 'ओरावश्यके' इत्यत्र प्रति-

### पदमञ्जरी

वाच्ये गम्यमाने वेति पाठः, तत्र यथासम्भवमित्यन्वयः। तत्र तृच् अजर्यंकुप्यादिषु, कृत्याश्च वाच्यत्वे भवन्ति; लिङ् भव्यगेयादिषु, कृत्याश्चोभयत्र भवन्ति। अथ कस्मात् 'कृत्यतृचौ' इति सूत्रे कृत्यभेदविवक्षया बहुवचनम्, इह तु सामान्यविवक्षया द्विवचनम्? क्वचित्तु वृत्तावपि बहुवचनमेव पठ्यते। तेन बाधा मा भूदिति। वाऽस-रूपविधिश्च नावश्यं भवतीत्यनन्तरमेवोक्तम्॥ १६९॥

आवश्यकाधमर्ण्ययोर्णिनिः॥ अवश्यं भाव आवश्यकमिति। मनोज्ञादित्वाद् वुञ्, अव्ययानां भमात्रे टिलोपः। उपाधिरिति। प्रत्ययार्थविशेषणमित्यर्थः। नोपपदमिति। 'शीतोष्णाभ्यां कारिणि', 'सेनान्तलक्षण-

### भावबोधिनी

√वह्+तव्यत्, "हो ढः" ८।२।३१ से ह् का ढ्, "झषस्तथोर्धोऽधः" ८।२।४० से त् का ध्, "ष्टुना ष्टुः" ८।४।४१ से ष्टुत्व ध् का ढ्—वढ्+ढव्य,। इस स्थिति में "ढो ढे लोपः" ८।३।४ से प्रथम ढ् का लोप, "सहिवहोरोदवर्णस्य" ६।३।११२ से 'अ' का ओ'—वोढव्य, स्त्रीप्रत्यय टाप्=आ, करने पर वोढव्या=विवाह के योग्य। √वह्+ण्यत्=य, उपधावृद्धि, टाप्—वाह्या। √वह्+अनीयर् टाप्, वहनीया। अर्थ एक ही है। ] [ तृच् का उदा०— ] भवान् खलु कन्याया वोढा [ आप कन्या के विवाहयोग्य हैं। √वह्+तृच्=तृ, वोढव्या के समान ही ह् का ढ, त् का ध, ष्टुत्व, ध का ढ, ढलोप और अ का ओ करने पर वोढ्ऋ बनता है। प्रातिपदिक संज्ञा के फलस्वरूप सु प्रत्यय आने पर ऋ का अनङ्=अन्, उपधादीर्घ, सुलोप और न् लोप करने पर वोढा—यह रूप सिद्ध होता है। ] [ लिङ् का उदा०-] भवान् खलु कन्यां वहेत् [ आप कन्या का विवाह कर लें। √वह्+लिङ्, तिप्, शप्=अ, वह्+अ+ति, यासुट्=यास् आगम, यास् का इय्, 'आद्गुणः' से गुण—वह् एय्+ति, इलोप, य् लोप वहेत् रूप होता है। ] भवान् एतत् अर्हेत् इति [ आप इसके योग्य हैं। √अर्ह्+लिङ् ]।

प्रश्न यह है कि अर्ह=योग्य अर्थ में कृत्यसंज्ञक और तृच् प्रत्ययों का विधान क्यों किया जा रहा है क्योंकि सामान्यरूप से विधान कर देने से अर्ह=योग्य अर्थ में भी हो ही जायेंगे? उत्तर यह है कि जो लिङ् यहाँ किया जा रहा है उससे बाध न होने लग जाय। और 'वाऽसरूप'—यह विधि अनित्य है। [ अतः यदि प्रवृत्ति नहीं होगी तो दोनों प्रकार के प्रत्यय नहीं हो सकेंगे। स्वतन्त्ररूप से अर्ह=योग्य अर्थ में विधान कर देने पर बाध्यबाधकभाव का प्रश्न नहीं आता है सभी रूप बन जायेंगे। ]॥ १६६॥

अवश्यं भावः=अवश्य होना=आवश्यक है। [ अवश्य+वुञ् 'द्वन्द्वमनोज्ञादिभ्यश्च'' ५।१।१३२ से, वु=अक, आदिवृद्धि, अलोप—आवश्यक। ] यह उपाधि [ प्रत्ययार्थ का विशेषण ] है उपपद नहीं। अवश्यंभाव से विशिष्ट

**अवश्यं भावः=आवश्यकम्। उपाधिरयम्, नोपपदम्। अवश्यंभावविशिष्टे आधमर्ण्यविशिष्टे च कर्तरि वाच्ये धातोर्णिनिः प्रत्ययो भवति। अवश्यंकारी। मयूरव्यंसकादित्वात् समासः।**

**आधमर्ण्ये खल्वपि-शतं दायी। सहस्रं दायी। निष्कं दायी॥**

**११२८. कृत्याश्च ॥ १७१ ॥ ( ३३१२ )**

**'आवश्यकाधमर्ण्ययोः' इति वर्तते। कृत्यसंज्ञकाश्च प्रत्यया आवश्यकाधमर्ण्ययोरुपाधिभूतयोर्धातोर्भवन्ति। भवता खलु अवश्यं कटः कर्त्तव्यः, अवश्यं करणीयः, अवश्यं कार्यः, अवश्यं कृत्यः। आधमर्ण्ये—भवता शतं दातव्यम्। सहस्रं देयम्। किमर्थमिदम्, यावता सामान्येन विहिता अस्मिन्नपि विषये भविष्यन्ति? विशेषविहितेन णिनिना बाध्येरन्। कर्त्तरि णिनिः, भावकर्मणोः कृत्याः, तत्र कुतो बाधप्रसङ्गः? तत्र केचिदाहुः—भव्यगेयादयः कर्तृवाचिनः कृत्याः, त इहोदाहरणमिति॥**

### न्यासः

पादितमेवावश्यमुपाधिः, नोपपदमिति, तदिहापि तद्वदेवोपाधिकत्वमावश्यकस्य वेदितव्यम्। तेन सह निर्देशादाधमर्ण्यमप्युपाधिरेव, नोपपदमिति। यद्यावश्यकमुपाधिर्नोपपदम्, उपपदमतिङ्' इति समासो न स्यात्, न चान्यल्लक्षणमस्ति येनेह समासः स्यादिति यो मन्येत, तं प्रत्याह—**मयूरव्यंसकादित्वात् समास इति। सहस्रं दायीति।** 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठ्यां प्रतिषिद्धायां द्वितीयैव भवति॥ १७०॥

**कृत्याश्च॥ किमर्थमित्यादि** चोद्यम्। **विशेषविहितेनेति** परीहारः। **कर्त्तरीत्यादिना** परीहारविघटनञ्च। **केचिदित्यादिना** परकीयमतेन परीहारसमर्थनम्। **भव्यगेयमिति।** समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्त्तन्त इति भव्यगेयादयः शब्दा अवयवभूतेषु कृत्येष्विह वर्त्तन्ते। **कर्तृवाचिन इति।** भव्यगेयादिसूत्रेणैषां पक्षे कर्त्तरि निपातनात्। योगविभाग उत्तरार्थः॥ १७१॥

### पदमञ्जरी

कारिभ्यश्च' इति निर्देशात्। उपपदत्वे हि केवलाण्णिनिर्न स्यात्, तत्साहचर्यादाधमर्ण्यमप्युपाधिरेव, नोपपदम्। **शतं दायीति।** 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठीप्रतिषेधाद् द्वितीयैव भवति॥ १७०॥

**कृत्याश्च॥ भव्यगेयादयः कर्तृवाचकाः कृत्या इति।** भव्यगेयादिष्ववयवत्वेन स्थिताः कृत्या इत्यर्थः। आदिशब्देन न भव्यगेयादिसूत्रनिर्दिष्टानामेव ग्रहणम्, किं तर्हि? अजर्यरुच्यकुप्यकृष्टपच्याव्यथ्यादीनामपि ग्रहणम्। योगविभाग उत्तरार्थः॥ १७१॥

### भावबोधिनी

[ आवश्यक से युक्त ] और अधमर्णता से विशिष्ट [ कर्ज से युक्त, ऋणी ] कर्ता अर्थ वाच्य रहने पर धातु से णिनि प्रत्यय होता है। उदा०--अवश्यङ्कारी [ अवश्य करने वाला। अवश्यम्+कृ+णिनि=इन्, ऋ को वृद्धि, रपर—कारिन् ] "मयूरव्यंसकादयश्च" २।१।७२ से समास होता है। [ अवश्यकारिन्+सु, उपधादीर्घ, सुलोप, न् लोप—अवश्यंकारी।] अधमर्णता में उदा०--शतं दायी [ सौ रुपयों का ऋणी। √दा+णिनि=इन्, "आतो युक् चिण्कृतोः" ७।३।३३ से युक्=य् आगम करने पर दा+य्+इन्=दायिन्। प्रातिपदिक संज्ञा, सु, उपधादीर्घ, सुलोप, न् लोप करने पर दायी बनता है ] सहस्रंदायी। [ हजार रुपयों का ऋणी ] निष्क दायी [ प्राचीन कालिक एक विशेष मुद्रा=सिक्के का ऋणी। ] ॥ १७०॥

'आवश्यक—आधमर्ण्ययोः' इसकी अनुवृत्ति होती है। आवश्यक और आधमर्ण्य इन उपाधियों [ प्रत्ययार्थ का विशेषण ] से युक्त धातु से कृत्यसंज्ञक प्रत्यय भी होते हैं। [ च=अपि के अर्थ में है। ] उदा०--भवता खलु अवश्यं कटः कर्तव्यः [ आपको चटाई अवश्य बनानी है। √कृ+तव्यत् ], अवश्यं कार्यः [ अर्थ पूर्वोक्त। √कृ+ण्यत् ], अवश्यं कृत्यः [ अर्थ पूर्वोक्त। कृ+क्यप्, तुक्=आगम ]। अधमर्णता में भी--भवता शतं दातव्यम् [ आपको सौ रुपये

**११२९. शकि लिङ् च ॥ १७२ ॥ ( २८२३ )**

**'शकि' इति प्रकृत्यर्थविशेषणम् । शक्नोत्यर्थोपाधिके धात्वर्थे लिङ् प्रत्ययो भवति, चकारात् कृत्याश्च । भवता खलु भारो वोढव्यः, वहनीयः, वाह्यः । भवान् खलु भारं वहेत् । भवानिह शक्तः ।**

**सामान्यविहितानां[1] पुनर्वचनम् – लिङा बाधा मा भूदिति ।**

**११३०. आशिषि लिङ्लोटौ ॥ १७३ ॥ ( २१९५ )**

**न्यासः**

**शकि लिङ् च ॥ शकीति प्रकृत्यर्थविशेषणमेतदिति ।** एतेनोपपदत्वं शकोऽपाकरोति । उपपदत्वे ह्यप्रयुज्यमाने शको न स्यादित्यभिप्रायः । ननु च सामान्येन कृत्यानामभिधानाच्छकेरपि भविष्यति, तत्किमर्थमित्याह—**सामान्येन विहितानामित्यादि** ॥ १७२ ॥

**आशिषि लिङ्लोटौ ॥ प्रकृत्यर्थविशेषणञ्चैतदिति ।** पूर्वेणाभिप्रायेणोपपदनिरासार्थमिदमुच्यते । **जीव्यादिति ।** 'स्कोः' इति सलोपः । अथ किमर्थं लिङ्ग्रहणम्, 'लोट् च' इत्येव सिद्धम्, चकारेण ह्यनुकृष्यमाणो

**पदमञ्जरी**

**शकि लिङ् च ॥ प्रकृत्यर्थविशेषणमिति ।** नोपपदम्, 'क्षय्यजय्यौ शक्यार्थे' इति लिङ्गात्, उपपदत्वे हि केवलौ क्षय्यजय्यौ शक्यार्थे न सम्भवतः । भवान्खलु शक्त इति वाक्यशेषः सर्वेषु योज्यः । **लिङा बाधा मा भूदिति ।** स्त्रियाः परेण वाऽसरूपविधेरनित्यत्वाल्लिङा बाधाशङ्का । 'पराजेरसोढः' इत्यत्रासोढो योऽर्थः—सोढुं न शक्यत इति । शक्यार्थे क्तप्रत्ययो व्याख्यातः स 'कृत्यल्युटो बहुलम्' इति वा, वाऽसरूपविधिना वा समर्थनीयः ॥ १७२ ॥

**भावबोधिनी**

देने हैं । √दा + तव्यत् ], सहस्रं देयम् [ हजार रुपये देने हैं । √दा + यत् = 'ईद्यति' ६।४।६५ सूत्र से आ का ई, दो + य, गुण करने पर देयम् । ]

प्रश्न यह है कि यह सूत्र किसलिये है, क्योंकि सामान्यरूप से विहित प्रत्यय इस [ आवश्यक और आधमर्ण्य से विशिष्ट ] अर्थ में हो ही जायेंगे ? उत्तर है कि [ पूर्वसूत्रद्वारा ] विशेषरूप से णिनि प्रत्यय के द्वारा इन [ कृत्यसंज्ञक प्रत्ययों ] का बाध होने लगेगा । [ अतः स्वतन्त्र रूप से विधान आवश्यक है ] । यह कहा जाय कि णिनि प्रत्यय कर्ता अर्थ में होता है और कृत्यसंज्ञक प्रत्यय भाव एवं कर्म अर्थ में; इस स्थिति में परस्पर बाध्यबाधकभाव का प्रसङ्ग कहाँ आता है ? इसके उत्तर में कुछ लोग कहते हैं—भव्यः, गेयः आदि कृत्य प्रत्यय कर्तृ अर्थ के वाचक हैं, ये ही यहाँ उदाहरण समझने चाहिये । [ अर्थात् "भव्यगेयप्रवचनीय०" ३।४।६८ इस सूत्र से 'भवति इति भव्यः' 'गायति इति गेयः'—इस प्रकार कर्तृ अर्थ में कृत्यसंज्ञक प्रत्ययों का निपातन से विधान किया गया है । उनमें बाध्यबाधकभाव आ सकता है । अतः यह स्वतन्त्र विधान करना आवश्यक हो गया । ] ॥ १७१ ॥

शक् यह प्रकृत्यर्थ का विशेषण है [ उपपद नहीं रहता है ] । शक्य अर्थ से विशिष्ट धात्वर्थ में [ जहाँ शक्य अर्थ गम्यमान है वहाँ ] लिङ् प्रत्यय होता है । 'च' के बल से कृत्यसंज्ञक प्रत्यय भी होते हैं । उदा०—भवता खलु भारः वोढव्यः, वहनीयः, वाह्यः । [ आप द्वारा भार ढोने योग्य है । √वह + तव्यत्, √वह + अनीयर्, √वह् + ण्यत्, प्रक्रिया "अर्हे कृत्यतृचश्च" ३।३।१६९ की व्याख्या में देखें । ] भवान् खलु भारं वहेत् [ आप बोझा ढो सकते हैं । √वह + लिङ्, प्रक्रिया ३।३।१६९ में ही देखें । ] भवान् इह शक्तः [ आप इस कार्य में समर्थ हैं । यह उदाहरण नहीं है । सभी से सम्बद्ध अर्थसूचक वाक्य है । ] सामान्यरूप से [ अर्ह आदि अर्थों में ] विधान किये गये इन प्रत्ययों का [ यहाँ ] पुनः विधान करना इसलिये है— लिङ् प्रत्यय से इनका बाध न हो जाय । [ क्योंकि 'स्त्रियाम्' सूत्र के बाद वाऽसरूपविधि अनित्य होती है । अतः लिङ् से कृत्य प्रत्ययों का बाध हो सकता है । उसे रोकने के लिये यह पुनर्विधान है । ]

---

१. 'सामान्येन विहितानाम्'–इति न्याससम्मतः पाठः ।

**आशंसनमाशीः = अप्राप्तस्येष्टस्यार्थस्य प्राप्तुमिच्छा । प्रकृत्यर्थविशेषणं चैतत् । आशीर्विशिष्टेऽर्थे वर्त्तमानाद्धातोर्लिङ् लोटौ प्रत्ययौ भवतः । चिरं जीव्याद् भवान् । चिरं जीवतु भवान् । आशिषीति किम् ? चिरं जीवति देवदत्तः ॥**

**११३१. क्तिच् क्तौ च संज्ञायाम् ॥ १७४ ॥ ( ३३१३ )**

**'आशिषि' इत्येव । आशिषि विषये धातोः क्तिच्क्तौ प्रत्ययौ भवतः, समुदायेन चेत्संज्ञा गम्यते ।**

**न्यासः**

लिङपि भविष्यति ? नैवं शक्यम्; यथैव हि चकारेण लिङनुकृष्यते तथा कृत्या अप्यनुकृष्येरन् । ननु निवर्त्तिष्यन्ते कृत्याः, तेषु निवृत्तेषु लिङ एवानुकर्षणार्थश्चकारो भविष्यति ? सत्यमेतत्; एवं यदि तेषां निवृत्तिर्विज्ञास्यते लिङोऽपि निवृत्तिः स्यात् । व्याख्यानादनुवर्त्तिष्यत इति चेदेवमपि प्रतिपत्तिगौरवं स्यात् । तस्मात् प्रतिपत्ति-गौरवपरीहारार्थं यथान्यासमेव न्याय्यम् । अथ विध्यादिसूत्र एवाशीर्ग्रहणं कस्मान्न कृतम्, एवं हि लिङ्लोटो-र्ग्रहणं न कृतं भवति ? नैवं शक्यम्; विध्यादिसूत्रे पाठे सति 'स्मे लोट्' इत्येवमादिभिः परत्वाद् बाधा स्यात् । इह तु क्रियमाणे परत्वादेष योगस्तेषां बाधको भविष्यतीति न भवत्येष दोषप्रसङ्गः । अवश्यञ्चोत्तरार्थमाशी-र्ग्रहणं कर्त्तव्यम्—'क्तिच्क्तौ च संज्ञायाम्' इत्याशिषि यथा स्याताम् ॥ १७३ ॥

**क्तिच्क्तौ च संज्ञायाम् ॥- समुदायेनेति** । प्रकृतिप्रत्ययसमुदायेन । एतेन समुदायोपाश्रितां संज्ञाया दर्शयति । **तन्तिरिति** । 'तनु विस्तारे', अत्र 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः प्राप्नोति, 'अनुदात्तो-

**पदमञ्जरी**

**आशिषि लिङ्लोटौ ॥** आशीर्विशिष्ट इत्याशास्यमान इत्यर्थः । विध्यादिसूत्र एवाशीर्ग्रहणं न कृतम्, 'स्मे लोट्' इत्यादिविषयेऽपि परत्वादेष विधिर्यथा स्यादिति । अवश्यं चोत्तरार्थमिहाशीर्ग्रहणं कर्त्तव्यम् ॥ १७३ ॥

**क्तिच्क्तौ च संज्ञायाम् ॥ तन्तिरिति** । 'अनुदात्तोपदेश' इत्यादिनानुनासिकलोपः प्राप्नोति, 'अनुनासि-

**भावबोधिनी**

आशंसन = आशीः = अप्राप्त इष्टपदार्थ को प्राप्त करने की इच्छा । यह [ आशीः ] प्रकृत्यर्थ का विशेषण है [ उपपद नहीं है ] । आशीः से विशिष्ट अर्थ [ = आशीर्वाद ] में वर्तमान धातु से लिङ् और लोट् प्रत्यय होते हैं । उदा०—चिरं जीव्याद भवान् । चिरं जीवतु भवान् । [ आप बहुत समय तक जीवित रहें । ] आशीः में—इसका क्या फल है ? चिरं जीवति देवदत्तः । [ देवदत्त बहुत दिन जीवित रहता है । यह यथार्थ कथन है । आशीर्वाद नहीं है । अतः लिङ् या लोट् नहीं होते हैं । ]

विमर्श—व्याकरण-शास्त्र में विधि आदि अर्थों में लिङ् है और आशीः अर्थ में भी लिङ् है । परन्तु इनके रूपों में भेद है । अतः विधिलिङ् और आशीर्लिङ् यह कह कर अलग-अलग प्रक्रिया द्वारा इनके रूपों की सिद्धि की जाती है । जीव्यात्—√जीव + लिङ् [ आशीः अर्थ में ], तिप् । 'लिङाशिषि' ( ३।४।११६ ) से आशीर्लिङ् का तिङ् आर्धधातुक होता है अतः सार्वधातुक मानकर होने वाला शप् इसमें नहीं होता है । "यासुट् परस्मैपदेषू०" ( ३।४।११३ ) से यासुट् = यास् आगम करने पर जीव् + यास् + ति बनता है । "किदाशिषि" ३।४।१०७ से आशीर्लिङ् का यासुट् कित् माना जाता है अतः "क्ङिति च" १।१।५ से गुण-वृद्धि-निषेध होते हैं । "इतश्च" ३।४।१०६ से इकार का लोप, "स्कोः सयोगाद्योरन्ते च" ८।२।२९ से संयोगादि स् का लोप करने पर जीव्यात् रूप होता है । जीवतु इस लोट् में जीव् + लोट् = ति, शप् = अ, "एरुः" ३।४।८६ सूत्र से इ का उ करने पर जीवतु ॥ १७३ ॥

'आशिषि' इसकी ही अनुवृत्ति होती है । आशीर्वाद के विषय में धातु से क्तिच् और क्त ये दो प्रत्यय होते हैं यदि [ प्रकृतिप्रत्यय- ] समुदाय से अर्थात् निष्पन्न शब्द से संज्ञा की प्रतीति हो रही हो तो । उदा०—तनुतात्

**तनुतात् तन्तिः । सनुतात् सातिः । भवतात् भूतिः । मनुतात् मन्तिः । क्तः खल्वपि - देवा एनं देयासुर्देवदत्तः । सामान्येन विहितः क्तः पुनरुच्यते – क्तिचा बाधा मा भूदिति । चकारो विशेषणार्थः—'न क्तिचि दीर्घश्च' ( ६.४.३९ ) इति ॥**

## ११३२. माङि लुङ् ॥ १७५ ॥ ( २२१९ )

**माङ्युपपदे धातोर्लुङ् प्रत्ययो भवति । सर्वलकाराणामपवादः । मा कार्षीत् । मा हार्षीत् । कथं 'मा भवतु तस्य पापम्, मा भविष्यती'ति ? असाधुरेवायम् । केचिदाहुः – अङिदपरो माशब्दो विद्यते, तस्यायं प्रयोगः ॥**

### न्यासः

पदेश' इत्यादिनानुनासिकलोपश्च; तदुभयम् 'न क्तिचि दीर्घश्च' इति निषिध्यते । **सातिरिति** । 'षणु दाने', 'जनसनखनां सञ्झलोः' इत्यात्वम् । **देवदत्त इति** । डुदाञो निष्ठायाम् 'दो दद् घोः' इति ददादेशः, 'खरि च' इति चर्त्वम् ॥ १७४ ॥

**माङि लुङ्** ॥ **मा कार्षीदिति** । 'न माङ्योगे' इत्यडागमाभावः ॥ १७५ ॥

### पदमञ्जरी

कस्य क्विझलोः क्ङिति' इति दीर्घत्वं च, तदुभयमपि न भवति; 'न क्तिचि दीर्घश्च' इति प्रतिषेधात् । **सातिरिति** । सनः क्तिचि 'लोपश्चास्यान्यतरस्याम्' इत्यात्वम् । क्तिचश्चकारश्चिन्त्यप्रयोजनः; 'न क्तिचि दीर्घश्च' इत्यत्र एकानुबन्धकपरिभाषया क्तिनो निवृत्तेः सिद्धत्वात् ॥ १७४ ॥

### भावबोधिनी

[ फैले ]—तन्तिः । [ √तन् + क्तिच् = ति, यहाँ "न क्तिचि दीर्घश्च" ( ६।४।३६ ) सूत्र से अनुनासिकलोप और दीर्घ दोनों का प्रतिषेध हो जाता है ] । सनुतात्—सातिः [ दान करे । √सन् + क्तिच् = ति, "जनसनखनां सञ्झलोः" ६।४।४२ से न् का आत्व, दीर्घ करने पर सातिः । भवतात्—भूतिः [ हो, कल्याणादि । भू + क्तिच्, कित् होने से गुणनिषेध । ] मनुतात्—मन्तिः [ मानें । मन् + क्तिच् = ति, अनुनासिकलोप और दीर्घ दोनों का प्रतिषेध । ] क्त का उदाहरण—देवा एनं देयासुः—देवदत्तः [ √डुदाञ् = दा + क्त = त, "दो दद् घोः" ( ७।४।४६ ) से दा का दद् आदेश, "खरि च" ( ८।४।५५ ) से चर्त्व द् = त् दत् + त = दत्तः, देव के साथ समास । देवता जिसका दान करें वह देवदत्त है । सामान्यरूप से ( कर्म और भूत काल में ) विधान किये गये 'क्त' का यहाँ पुनर्विधान इसलिये किया जा रहा है कि 'क्तिच्' से इसका बाध न हो जाय । ( क्योंकि सामान्यविहित का विशेषविहित से बाध होना न्याय-सिद्ध है । पुनर्विधान एक साथ है अतः दोनों होते हैं । बाध्यबाधकभाव नहीं रहता है । चकार विशेषण के लिए है "न क्तिचि दीर्घश्च" ६।४।३९ ( इससे क्तिच् परे रहते अनुनासिकलोप और दीर्घ का प्रतिषेध होता है । चित् स्वर के लिये चकार नहीं है । [ यहाँ यौगिक अर्थ लिखे गये हैं, संज्ञा अर्थ अन्वेषणीय हैं । ] ॥ १७४ ॥

माङ् शब्द उपपद रहते धातु से लुङ् प्रत्यय होता है । यह सभी लकारों का अपवाद है । उदा० - मा कार्षीत्, मा हार्षीत् [ मत करें । मत हरें । ] 'मा भवतु तस्य पापम्', मा भविष्यति' [ उसका पाप न हो, नहीं होगा ] - ये प्रयोग कैसे होंगे ? ये प्रयोग अशुद्ध ही है । कुछ लोग कहते हैं—अङित् [ मा ] यह दूसरा 'मा' शब्द है, उसी का प्रयोग है । [ अतः लोट् और लृट् होते हैं । ]

**विमर्श**—माङ् और मा ये दो शब्द हैं । दोनों का अर्थ निषेध करना है । जब माङ् के तात्पर्य से 'मा' का प्रयोग है तब लुङ् होता है । अन्य स्थिति में यथाप्राप्त सभी लकार होते हैं । कार्षीत् √कृ + लुङ्, तिप्, "न माङ्योगे" ६।४।७४ से अडागम का निषेध, च्लिप्रत्यय और उसका 'च्लेः सिच्' से सिच् = स् आदेश कृ + स् + ति । "इतश्च" ३।४।१०० से इ की इत्संज्ञा लोप के बाद "अस्तिसिचोऽपृक्ते" ७।३।९६ से ईट् = ई का आगम कृ + स् +

## ११३३. स्मोत्तरे लङ् च ॥ १७६ ॥ ( २२२० )

स्मशब्दोत्तरे माङ्युपपदे धातोर्लङ् प्रत्ययो भवति। चकाराल्लुङ् च। मा स्म करोत्, मा स्म कार्षीत्। मा स्म हरत्, मा स्म हार्षीत् ॥

॥ इति श्रीजयादित्यविरचितायां काशिकावृत्तौ तृतीयाध्याये तृतीयः पादः ॥

●

### न्यासः

स्मोत्तरे लङ् च ॥ स्मशब्द उत्तरमधिकं यस्य माङः स तथोक्तः ॥ १७६ ॥

॥ श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितायां 'काशिकाविवरणपञ्जिकायां' तृतीयाध्यायस्य तृतीयः पादः समाप्तः ॥

---

### पदमञ्जरी

स्मोत्तरे लङ च ॥ अत्रोत्तरशब्द आधिक्यवचनो न दिग्वचनः, तेन पूर्वभूतेऽपि स्मशब्दे भवति, तद्दर्शितम्—स्मशब्दसहित इति ॥ १७६ ॥

॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां तृतीयाध्यायस्य तृतीयः पादः ॥

●

### भावबोधिनी

ईत् "सिचि वृद्धिः परस्मैपदेषु" ७।२।१ से ऋ की वृद्धि रपर कार् + स् + ईत्, "आदेशप्रत्यययोः" ८।३।५९ से स् का ष् आदेश—कार्षीत्। इसी प्रकार हृ + लुङः—हार्षीत् ॥ १७५ ॥

स्म जिसमें अधिक है, ऐसे अर्थात् स्मसहित माङ् शब्द के उपपद रहते धातु से लङ् प्रत्यय होता है और 'च' के बल से लुङ् भी होता है। उदा०—मा स्म करोत्; मा स्म कार्षीत्। [ वह मत करे। ] मा स्म हरत्; मा स्म हार्षीत्। [ वह मत हरे ]।

विमर्श—स्म से कोई अतिरिक्त अर्थ नहीं प्रतीत होता है। सूत्र में उत्तर का अर्थ—अधिक है, बाद में—नहीं। इसीलिए उदाहरणों में स्म का प्रयोग पहले किया गया है। करोत्—√कृ + लङ् + तिप् "तनादिकृञ्भ्यः उः" ३।१।७९ से उ प्रत्यय, ऋ का गुण रपर कर् + उ + ति, उ प्रत्यय का गुण कर + ओ + ति, "इतश्च" ३।४।१०० से इ का लोप। यहाँ माङ् उपपद रहने के कारण "न माङ्योगे" ६।४।७४ सूत्र से अट् आगम का प्रतिषेध हो जाने के कारण 'अ' रहित ही रूप होता है। अन्यत्र अकरोत् यही रूप होता है। कार्षीत् की सिद्धि पहले लिखी जा चुकी है ॥ १७६ ॥

॥ इस प्रकार आचार्य जयशङ्कर-लाल-त्रिपाठि-विरचित भावबोधिनी हिन्दी-व्याख्या में काशिकावृत्ति के तृतीय अध्याय का तृतीय पाद समाप्त हुआ ॥

●

# अथ तृतीयाध्याये चतुर्थः पादः

**११३४. धातुसम्बन्धे प्रत्ययाः ॥ १ ॥ ( २८२४ )**

**धात्वर्थे धातुशब्दः। धात्वर्थानां सम्बन्धो धातुसम्बन्धः = विशेषणविशेष्यभावः। तस्मिन् सति अयथाकालोक्ता अपि प्रत्ययाः साधवो भवन्ति। अग्निष्टोमयाजी अस्य पुत्रो जनिता। कृतः कटः श्वो भविता। भावि**

न्यासः

**धातुसम्बन्धे प्रत्ययाः॥ धात्वर्थे धातुशब्द इति।** अभिधेयेऽभिधानोपचारं कृत्वा धात्वर्थोत्र धातुशब्देन निर्दिष्ट इति दर्शयति। भ्वादिष्वेवायं धातुशब्दो वर्त्तते, स्वार्थे गुणीभूतस्य धातुशब्दस्य शब्दान्तरेण सम्बन्धो न स्यात्; तस्माद् धात्वर्थं एवायं धातुशब्दो वर्त्तते, न भ्वादिषु। ततश्च धातुसम्बन्ध इत्यस्य धात्वर्थसम्बन्ध इत्येषोऽर्थो विज्ञायत इत्याह—**धात्वर्थानां सम्बन्धो धातुसम्बन्ध इति।** कः पुनः सम्बन्ध इत्याह—**विशेषणविशेष्यभाव इति। अयथाकालोक्ता अपीत्यादि।** यो यस्यात्मीयः कालो यथाकालम्। 'यथाऽसादृश्ये' इति वीप्सायामव्ययीभावः, यथाकाले उक्ता यथाकालोक्ताः, 'सप्तमी' इति योगविभागात् समासः, न यथाकालोक्ताः = अयथाकालोक्ताः। एतदुक्तं भवति—स्वैः स्वैर्विधायकैर्वाक्यैर्यत्र यस्मिन् यस्मिन् काले ये ये विहितास्ततोऽन्यत्रकालेऽपि प्रयुक्ताः प्रत्ययाः साधवो भवन्तीति। **अग्निष्टोमयाजीत्यादीन्युदाहरणानि** दर्शयति। सर्वत्र तिङन्तवाच्योऽर्थो

पदमञ्जरी

**धातुसम्बन्धे प्रत्ययाः॥** प्रयोगे स्वार्थाभिधानव्यग्रयोर्धात्वोः परस्परेण सम्बन्धाभावादुपचरितवृत्तिरत्र धातुशब्द इत्याह—**धात्वर्थे धातुशब्द इति। धात्वर्थानां सम्बन्धो धातुसम्बन्ध इति।** सम्बन्धस्यानेकाधिष्ठानत्वात् वृत्तावपि संख्याविशेषोऽवगम्यत इति भावः। सकलविषयापेक्षया च बहुवचनम्। एकैकं विवक्षायां तु धात्वर्थयोः सम्बन्ध इति द्रष्टव्यम्। यदि तु कर्मत्वं समानकर्तृकत्वं च धातोरर्थद्वारकं विशेषणमितिवद्धात्वोरेवार्थद्वारकः सम्बन्ध आश्रीयेत, इह तु न स्यात्—गोमानासीत्, गोमान् भवितेति, द्वयोर्हि प्रयुज्यमानयोः सम्बन्धो भवति, न चात्र वर्तमानकालेऽस्तिः प्रयुज्यते। कीदृशः पुनरयं धातुसम्बन्धः? इत्याह—**विशेषणविशेष्यभाव इति।** तत्र तिङन्तवाच्योऽर्थो विशेष्यं तत्प्रधानत्वाद्वाक्यस्य; सुबन्तवाच्यस्तु विशेषणम्, कारकस्य क्रियां प्रति गुणभावात्। **अयथाकालोक्ता अपीति।** यस्मिन्काले विहितास्ततोऽन्यत्रापि प्रयुक्ता इत्यर्थः। एतेन कालमात्रस्यात्र बाधः, न तूपपदोपाधिप्रकृतिप्रत्ययार्थानामिति दर्शयति। एतच्च 'वर्त्तमानसामीप्ये' इत्यारम्भ प्रायेण कालान्यत्वप्रतिपादना-

भावबोधिनी

धात्वर्थ में धातु शब्द का प्रयोग है। [ अर्थात् धातु शब्द धात्वर्थ का वाचक समझना चाहिये। अतः ] धातु के अर्थों का सम्बन्ध—धातुसम्बन्ध = विशेष्यविशेषणभाव। [ धात्वर्थानाम्—यह बहुवचन अविवक्षित है। अतः दो धातुओं के अर्थों का भी सम्बन्ध रहने पर प्रत्यय होता है। ] धात्वर्थ का सम्बन्ध रहने पर अपने से भिन्न काल में कहे गये भी प्रत्यय साधु [ शुद्ध ] होते हैं। उदा०—अग्निष्टोमयाजी अस्य पुत्रो जनिता। [ इसका अग्निष्टोमयाजी पुत्र उत्पन्न होगा। अग्निष्टोमेन इष्टवान्—यहाँ करण उपपद रहते √यज् से भूतकाल में "करणे यजः" ३।२।८५ से णिनि = प्रत्यय होने पर अग्निष्टोमेन उपपद यज् + णिनि = इन्, उपधावृद्धि, उपपदसमास विभक्तिलोप करने पर—अग्निष्टोमयाजिन्। प्रातिपदिकसंज्ञा, सु-विभक्ति, उपधादीर्घ, सुलोप और न् लोप करने पर—अग्निष्टोमयाजी बनता है। यहाँ 'णिनि' का अर्थ भूतकाल है और 'जनिता' इसमें लुट् का अर्थ भविष्यत्काल है। दोनों का विरोध है, परन्तु इस सूत्र से दोनों होते हैं। इनमें तिङन्तवाच्य भविष्यत्काल विशेष्य है और कृत्प्रत्ययान्त सुबन्तवाच्य भूतकाल विशेषण है, इसकी प्रतीति नहीं होती है।

**कृत्यमासीत् । अग्निष्टोमयाजीति भूतकालः, जनितेति भविष्यत्कालः, तत्र भूतः कालो भविष्यत्कालेनाभिसंबध्यमानः साधुर्भवति । विशेषणं गुणत्वाद्विशेष्यकालमनुरुध्यते, तेन विपर्ययो न भवति ।**

**न्यासः**

विशेष्यः, सुबन्तवाच्यस्तु विशेषणम् । **अग्निष्टोमयाजीति भूतकाल इति ।** भूतः कालोऽस्येति बहुव्रीहिः । भूतकालत्वं तु भूताधिकारे 'करणे यजः' इति णिनेर्विधानात् । **जनितेति भविष्यत्काल इति ।** भविष्यन् कालोऽस्येति बहुव्रीहिरेव । भविष्यत्कालत्वं तु भविष्यदनद्यतने लुटो विधानात् । **तत्रेति ।** निर्धारणे सप्तमी । तयोर्भूतकालभविष्यत्कालयोर्मध्ये यो भूतकालः स भविष्यत्कालेन सम्बध्यमानः साधुर्भवति । अग्निष्टोमयाजीति भूतकालो जनितेति भविष्यत्कालेनापि सम्बध्यमानो भविष्यत्काल एव सम्पद्यते । द्वितीयेऽप्युदाहरणे—**कृत इति**—भूतकालः; भूते निष्ठाविधानात् । **भवितेति**—भविष्यत्कालः; पूर्ववदेव । तत्र भूतकाल इतरेणापि सम्बध्यमानः साधुर्भवति । तृतीयेऽपि **भावीति**—भविष्यत्कालः; 'भविष्यति गम्यादयः' इति वचनात् । **आसीदिति**—भूतकालः; भूतानद्यतने लङो विधानात् । तत्र भविष्यत्कालो भूतकालेनापि सम्बध्यमानः साधुर्भवति ।

**पदमञ्जरी**

ल्लभ्यते । **अग्निष्टोमयाजीति भूतकाल इति ।** भूतः कालो यस्येति बहुव्रीहिः, एतेन भविष्यत्काल इति व्याख्यातम् । **तत्रेति ।** तयोर्मध्ये । भूतकालोऽग्निष्टोमयाजीत्येवशब्दो भविष्यत्कालेन जनितेत्यनेन सम्बद्ध्यमानः साधुर्भवति । अयमपि भविष्यत्कालः सन्साधुर्भवतीत्यर्थः । अथ वा—स्वयमपि भविष्यत्कालेनाभिसम्बद्ध्यमानः, स्वकालपरित्यागेन भविष्यत्कालः सन्नित्यर्थः । अयं ह्यत्रार्थः—पुत्रोऽस्य जनिता स चाग्निष्टोमेन यष्टेति, तत्र यदि भूतकाल एव णिनिरवतिष्ठेत तदा यागस्य भविष्यत्तावगमो न प्राप्नोतीत्ययमारम्भः । एवमितरयोरप्युदाहरणयोर्द्रष्टव्यम् । अथ विपर्ययः कस्मान्न भवति, भविष्यत्कालो भूतकालेनाभिसम्बद्ध्यमानः स्वकालपरित्यागेन भूते साधुर्भवति, ततश्चाग्निष्टोमयाज्यस्य पुत्रो जात इत्ययं वाक्यार्थ इति ? तत्राह—**विशेषणं गुणत्वादिति ।** प्रधानानुवर्त्ती गुणः, न गुणानुवर्त्ति प्रधानम्, उभयोश्च स्वकालनिष्ठयोः सम्बन्धानुपपत्तिरिति प्रधानानुरोधेन गुणस्य कालपरित्याग इत्यर्थः ।

**भावबोधिनी**

'अग्निष्टोम करेगा— ऐसा पुत्र पैदा होगा'—यह अर्थ है । ] कृतः कटःश्वो भविता । [ कल चटाई बन जायगी । √कृ + क्त भूतकाल कर्म अर्थ है । भविता अनद्यतन भविष्यत्काल अर्थ है । भूतकाल की प्रतीति नहीं होती है । भविष्यत्काल की प्रतीति होती है । ] अग्निष्टोमय.जी—यह भूतकाल वाला है, जनिता—यह भविष्यत्कालवाला है, इन दोनों में भूतकाल भविष्यत्काल से अभिसम्बद्ध होता हुआ साधु होता है । विशेषण [ सुबन्त अग्निष्टोमयाजी से प्रतिपाद्य भूतकाल ] गुण = अप्रधान होने के कारण विशेष्य [ जनिता इस तिङन्त से प्रतिपाद्य भविष्यत् काल ] का अनुवर्तन करता है । इसलिये इससे विपरीत नहीं होता है । [ अर्थात् भविष्यत्काल भूतकाल का अनुवर्तन नहीं करता है । अतः दोनों से भविष्यत्काल की ही प्रतीति होती है । ]

[ "प्रत्ययः" ३।१।१ इससे ] प्रत्यय का अधिकार [ अनुवृत्ति ] रहते हुये पुनः प्रत्यय का ग्रहण—'धातोः" ३।१।९१ इसके अधिकार से बाहर के भी प्रत्यय = तद्धित प्रत्यय धात्वर्थ के साथ सम्बन्ध रहने पर कालभेद में भी जिस प्रकार साधु हो सकें—इसके लिये है । [ अर्थात् प्रत्ययमात्र के लिये यह सूत्र है । इसका ज्ञान कराने के लिए पुनः प्रत्यय का उल्लेख किया गया है । ] उदा०— गोमान् आसीत् । [ गायों वाला था । ] गोमान् भविता । [ गायों वाला होगा । ] गावः विद्यन्ते = सन्ति अस्य – इस प्रकार वर्तमान काल अर्थ मानकर [ "तदस्यास्त्यस्मिन्निति मतुप्" ५।२।९४ से ] किया गया भी मतुप् प्रत्यय 'आसीत्' तथा 'भविता' इनके साथ सम्बन्ध होने से अतीत [ भूतकाल ] में और भविष्यत्काल में साधु होता है ।

**प्रत्ययाधिकारे पुनः प्रत्ययग्रहणम् – अधात्वधिकारविहिता अपि प्रत्ययास्तद्धिता धातुसंबन्धे सति कालभेदे साधवो यथा स्युरिति । गोमानासीत् । गोमान् भविता । गावो विद्यन्तेऽस्येति वर्तमानविहितो मतुप् आसीद्, भवितेति सम्बन्धादतीते भविष्यति च साधुर्भवति ॥**

न्यासः

इहाग्निष्टोमयाज्यस्य पुत्रो जनितेति भूतकालो भविष्यत्कालेनापि सम्बध्यमानो भविष्यत्कालः सम्पद्यते । तथा ह्ययमत्रार्थः प्रतीयते सोऽस्य पुत्रो जनिता योऽग्निष्टोमेन यष्टेति । न च भविष्यत्कालो भूतकालेनाभिसम्बध्यमानो भूतकालतां प्रतिपद्यते, न ह्यत्रायमर्थः प्रतीयते–सोऽस्य पुत्रो जातो योऽग्निष्टोमेनेष्टवानिति । इतरयोरप्युदाहरणयोर्विशेषणं विशेष्यकालतामापद्यते, यतस्तत्रायमर्थोऽवगम्यते—स श्वो भविता कटो यः करिष्यते, तत् कृत्यमासीद् यद् भूतमिति । तदेतत् कथं भवति ? विपर्ययः कस्मान्न भवति ? इत्याह—**विशेषणमित्यादि** । विशेषणं हि परार्थत्वाद् गुणोऽप्रधानमित्यर्थः । तेन च प्रधानकालस्य विशेष्यस्योपकारः कर्त्तव्यः । न च तत् प्रधानमपरित्यज्य स्वकालं प्रधानकालमप्रतिपद्यमानं प्रधानोपकारक्रियां कर्त्तुं समर्थं भवतीति प्रधानस्य यः कालस्तमनुरुध्यते । विशेष्यं तूपकार्यत्वात् प्रधानम् । न च प्रधानस्य गुणकालापत्तिर्युक्ता, अन्यथा यदि गुणकालं प्रधानकालः प्रतिपद्येत तदा तस्य प्रधानत्वं हीयेत । तेन न भवति विपर्ययः ।

अथ प्रत्ययग्रहणं किमर्थम्, यावता प्रत्यय इत्यनुवर्त्तत इत्यत आह—**प्रत्ययाधिकार इत्यादि** । पूर्वकं प्रत्ययग्रहणं धातुसम्बद्धम्, अतस्तदिहाश्रीयमाणं धात्वधिकारविहितानां प्रत्ययानां साधुत्वे सम्पद्यते । अत्र पुनः प्रत्ययग्रहणे प्रत्ययमात्रं गृह्यते, तेन तद्धितानामधात्वधिकारविहितानामपि प्रत्ययानां सम्बन्धे कालान्तर-

पदमञ्जरी

**प्रत्ययाधिकार इति** । यद्यपि प्रकृतः प्रत्ययशब्दः स्वरूपपदार्थकः तथापीह संज्ञिनामनिर्देशात्संज्ञिपदार्थको विज्ञास्यत इति भावः । **अधात्वधिकारविहिता अपीति** । अन्यथा प्रकृतानां धातुप्रत्ययानामेव ग्रहणं स्यात् । प्रत्ययग्रहणात्तु सर्वपरिग्रहार्थात्तद्धितानामपि कालन्तरेऽपि साधुत्वं भवति । **गोमानासीत्, गोमान्भवितेति** । 'तदस्यास्त्यस्मिन्' इति मतुप्प्रत्ययो वर्त्तमानसत्ताविशिष्टेन प्रकृत्यर्थेन विशिष्टेऽर्थे विहितः । धातुसम्बन्धे तु प्रकृत्यर्थस्य भूतभविष्यत्त्वेऽपि साधुर्भवति । ततश्चायमत्रार्थः–गावोऽस्यासन् गोमानासीत्, गावोऽस्य भवितारः गोमान् भवितेति । धात्वधिकारादेव धातुग्रहणे सिद्धे पुनर्धातुग्रहणं धातुविशेषपरिग्रहार्थम्, तेनास्तिभूजनिसम्बन्धे तद्विशेषणानामेव कालान्यत्वेन साधुत्वं भवतीति केचित् । न चायं पक्षो भाष्ये सिद्धान्तत्वेन स्थापितः, तस्मादविशेषेण भवतीत्यन्ये । दृश्यते चान्यत्रापि कालान्यत्वम्—'साटोपमुर्वीमनिशं नदन्तो ये प्लावयिष्यन्ति समन्ततोऽमी' इत्यत्र । नदन्त इति वर्त्तमानकालः प्लावयिष्यन्तीति अवर्त्तमानेनाभिसम्बद्ध्यमानो भविष्यत्कालः सम्पद्यते ।

सूत्रप्रत्याख्यानं तु–अग्निष्टोमयाजीति भूत एव णिनिः, जनितेत्येतत्सम्बन्धात्तु केवलं व्यपदेशस्य भावित्वतीतिः अस्य सूत्रस्य शाटकं वयेतिवत् । ततश्च भाविव्यपदेशविज्ञानाद्विशेषणस्य कालान्यत्वं वाक्यार्थवशादसत्यपि सूत्रारम्भे प्रत्येष्यते । अवश्यं च स्वकाल एव प्रत्ययविधिरेष्टव्यः, अन्यथा भाविकृत्यमासीदित्यत्र

भावबोधिनी

**विमर्श—**पाणिनि ने अनेक प्रत्ययों का किसी विशेषकालरूपी अर्थ में विधान किया है । एक साथ दो कालों की प्रतीति किसी भी प्रकार होना सम्भव नहीं है । अतः विरोधी कालवाले शब्दों का सहप्रयोग सिद्ध करने के लिये प्रस्तुत सूत्र है । प्रयोग में एक तिङन्त और दूसरा कृदन्त अथवा तद्धितान्त पद होता है । इनमें तिङन्त पद से उपस्थाप्य धात्वर्थ और काल विशेष्य = प्रधान रहता है । अन्य पद से उपस्थाप्य अर्थ विशेषण बनकर उसी में अन्वित होता है अर्थात् विरुद्ध काल की प्रतीति न होकर उसी प्रकार के काल की प्रतीति होने लगती है । जैसे सोमयाजी में भूतकाल में णिनि है और

**११३९. क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ॥ २ ॥ ( २८२९ )**

**'धातुसंबन्धे' इति वर्तते। पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः। प्रकृत्यर्थविशेषणं चैतत्।**

**न्यासः**

प्रयुक्तानां साधुत्वमुपपद्यते, तदर्थं पुनः प्रत्ययग्रहणम्। **कालभेदे इति**। कालविशेषे, अस्मात् कालादन्यस्मिन् काल इत्यर्थः। **गोमानासीदिति**। गोमानिति वर्तमानकालः; 'तदस्य' इत्यादिना वर्तमानकालमस्तीत्युपादाय मतुपो विधानात्। स भूतभविष्यत्कालाभ्यां सम्बध्यमानः साधुर्भवति ॥ १ ॥

**क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ॥ प्रकृत्यर्थविशेषणं चैतदिति**। एतेनोपपदत्वं निरस्यति। उपपदत्वे हि केवलाद् [ धातोः ] हेतोर्न स्यादित्यभिप्रायः। अत्र तिङादेशौ वा हिस्वौ स्याताम्, लोडादेशौ वेति द्वौ पक्षौ। ननु च प्रथमपक्षाशङ्कायाः प्रसङ्ग एव नास्ति; लोट इति वचनात्, तत् कथमसावाशङ्कितः? लोट्स्थानिकत्वादादेशोऽपि लोड्व्यपदेशमासादयतीति युक्तमाशङ्कितुम्। तत्र हि यदि पूर्वकः पक्ष आश्रीयते तदा 'भुङ्क्ष्व भुङ्क्ष्वेत्येवाहं भुञ्जे' इति 'आडुत्तमस्य पिच्च' इति पित्त्वाद् ङित्त्वं नास्ति, ततश्च 'श्नसोरल्लोपः' इत्याकारलोपो न स्यात्। उभावपि च परस्मैपदानामात्मनेपदानामनियमेन स्याताम्; नियमहेतोरभावात्। सामान्येन तिङां स्थाने विधीयमानयोः कुत एतल्लभ्यते? यतः परस्मैपदानां ह्यादेशेन

**पदमञ्जरी**

भाविशब्दस्य भूतकालत्वे भाव्यासीच्छब्दयोः पर्यायत्वाद्युगपत्प्रयोगो न स्यात्। तस्मादिदानीमासीदित्येवं तत्रार्थः। गोमानासीदित्यत्रापि देवदत्तस्य विद्यमानत्वेऽपि गोमद्रूपस्यातीतत्वाद् भूतप्रत्ययः। तत्रार्थाद् गवामप्यतीतत्वं प्रतीयते, गोमच्छब्दस्तु स्वमहिम्ना वर्त्तमानसत्ताविशिष्टमेव प्रकृत्यर्थमाह ॥ १ ॥

**क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ॥ धातुसम्बन्ध इति वर्त्तत इति**। अनुप्रयोगधातुना च सम्बन्धः। क्वचित्त्वयं ग्रन्थो न पठ्यते। **प्रकृत्यर्थविशेषणं चैतदिति**। उपपदत्वाशङ्कां निरस्यति। व्याख्यानाच्चोपपदत्वाभावः। **समभिहारविशिष्टक्रियावचनादिति**। क्रियाधर्मे समभिहारमात्रे धातोर्वृत्त्यसम्भवादेतदुक्तम्। अत्र यदि 'लोटो हिस्वौ' इति वचनात्तस्यैव हिस्वौ स्याताम्, तदा सामान्यविहितानां तिङां शतृशानज्भ्यामिव हिस्वाभ्यां बाधा स्यात्, ततस्तध्वमोर्लोट्स्थानिकयोरभावात् 'वा च तध्वमोः' इति तयोः स्थानित्वेनोपादानमनुपपन्नमिति लोट्शब्देन तदादेशानां ग्रहणमित्युपलक्ष्यते। अस्तु तथा, को दोषः? इह हि तिप्सिप्मिपां स्थाने विहितस्य हेः स्थानिवद्भावेन पित्त्वान्ङित्त्वाभावाल्लुनीहीतीत्त्वं न स्यात्,

**भावबोधिनी**

भविता में भविष्यत् काल में लुट् है। यहाँ भूतकाल भविष्यत् काल में अन्वित होकर गौण बन जाता है; अतः यह भी भविष्यत् काल की ही प्रतीति कराने लगता है—अग्निष्टोम याग करने वाला पुत्र पैदा होगा—यह अर्थ होता है ॥ १ ॥

'धातुसम्बन्धे' [ धात्वर्थों के सम्बन्ध में ]—इसकी अनुवृत्ति होती है। पुनः पुनः होना अथवा बहुत अधिक होना—क्रिया का समभिहार है। यह [ क्रियासमभिहार ] प्रकृत्यर्थ [ धात्वर्थ ] का विशेषण है। [ अतः उपपद नहीं समझना चाहिये। ] समभिव्याहार से विशिष्ट क्रिया के वाचक धातु से सभी कालों में लोट् प्रत्यय होता है। यह सभी लकारों का अपवाद है। और उस लोट् के [ स्थान पर सभी पुरुषों और सभी वचनों में ] 'हि' एवं 'स्व' ये दो आदेश [ नित्य ] होते हैं किन्तु 'त' और 'ध्वम्' जिसके होने वाले हैं ऐसे लोट् के तो विकल्प से ये आदेश होते हैं [ अर्थात् पक्ष में 'त' और 'ध्वम्' ये भी होते हैं। परस्मैपद मध्यमपुरुष बहुवचन में 'त' और आत्मनेपद मध्यमपुरुष बहुवचन में 'ध्वम्' भी होते हैं। साथ ही क्रमशः 'हि' तथा 'स्व' ये भी रहते हैं। अतः दोनों प्रत्ययों के रूप होते हैं। ]

यहाँ सूत्र में योगविभाग करना चाहिये—(१) क्रियासमभिहार में लोट् होता है; इसके बाद (२) लोट् के 'हि' एवं 'स्व' आदेश होते हैं। इसमें 'लोट्' की अनुवृत्ति होती है; लोट्धर्मा 'हि' एवं 'स्व' होते हैं। [ लोट्धर्मा—

**समभिहारविशिष्टक्रियावचनाद्धातोर्लोट् प्रत्ययो भवति, सर्वेषु कालेषु। सर्वलकाराणामपवादः। तस्य च लोटो हि, स्व-इत्येतावादेशौ भवतः, तध्वंभाविनस्तु वा भवतः।**

**न्यासः**

भवितव्यम्, इतरेषां स्वादेशेनेति। तस्माद् दुष्टोऽयं पक्ष इति मत्वा द्वितीयपक्षमाश्रित्याह—**तस्य च लोट इत्यादि**। यस्मिन् पक्षे दोषः प्रसजति तं प्रतिविधास्यति। **तध्वंभाविनस्तु वा भवत इति**। **लोट इत्यपेक्ष्यते**। तश्च ध्वञ्च तध्वमौ, तौ भाविनौ यस्य लोटः स तध्वम्भावी। एतेन तादेशार्थो **लोडेव स्थानी**; तादर्थ्यात्; सूत्रे तशब्देन व्यपदिष्टो ध्वमादेशार्थश्च ध्वंशब्देनेति दर्शयति। अथ तध्वमावेव स्थानिनौ कस्मान्न विज्ञायेते? अशक्यं हि तौ स्थानित्वेन विज्ञातुम्। तयोरपि स्थानित्वेऽलोडादेशयोरपि हिस्वौ स्याताम्। अथ तध्वमौ विशेषयिष्यामः—लोटो यौ तध्वमाविति, ततोऽयमदोष इति चेत्; एवमपि प्रतिपत्तिगौरवं स्यात्। तध्वम्भाविनो लोट एव स्थानित्वं युक्तम्, न तध्वमोः।

यदि तर्हि लोटो हिस्वावादेशौ, न तदादेशानां तिङामेव, एवञ्च 'लः परस्मैपदम्' इति तयोः परस्मैपदसंज्ञा स्यात्, ततश्च 'शेषात् कर्त्तरि परस्मैपदम्' इत्युभावपि परस्मैपदिभ्य एव स्याताम्; तिङ्क्ष्वसन्निवेशाच्च तदन्तस्य तिङन्तता न स्यात्. ततश्च 'तिङ्ङतिङः' इति निघातो न स्यादित्यत आह—**योगविभागश्चेत्यादि**। **लोडित्येवेति**। एतेन द्वितीये योगे लोडित्प्रस्यानुवृत्तिं दर्शयति। **लोड्धर्माणावित्यादि**। लोट इव धर्मस्तिङ्त्वादिर्ययोस्तौ लोड्धर्माणौ। ननु च लोडादेशानां तिङ्त्वादि धर्मः, न लोटः? आदेशद्वारेण स्थानिनोऽपि

**पदमञ्जरी**

ब्रूहीति 'ब्रुव ईट्' स्यात्, तृण्ढीति 'तृणह इम्' स्यात्, अनुदात्तत्वं च हेः प्रसज्येत? नैष दोषः; 'सेर्ह्यपिच्च' इत्यत्र योगविभागः करिष्यते, तत्सामर्थ्याद् 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति नाश्रीयते, सेर्हिर्भवति अपिच्च भवति यावान्कश्चिद्धिर्निमित्ति। यौ तर्ह्युत्तमादेशौ हिस्वौ, तयोराडागमः प्राप्नोति—लुनीहिलुनीहीत्येवाहं लुनामि, अधीष्वाधीष्वेत्येवाहमधीय इति? नैष दोषः; आटि कृते साटकस्यादेशौ भविष्यतः. सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात्। हिस्वयोः पुनराट् न भविष्यति, इह ह्याट् क्रियतां हिस्वाविति सम्प्रधारणायामुभयोरनित्ययोः 'शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति' इति परत्वादाटि कृते साट्कस्य हिस्वाविति सिद्धमिष्टम्। एवमपि हेर्योगविभागेन पित्त्वाभावेऽपि स्वशब्दस्योत्तमादेशस्य पित्त्वाद्भुङ्क्ष्वभुङ्क्ष्वेत्येवाहं भुञ्जे इत्यत्र 'श्नसोरल्लोपः' इत्यकारलोपो न प्राप्नोति, ब्रूष्वब्रूष्वेत्येवाहं ब्रुवे 'ब्रुव ईट्' प्राप्नोति, सर्वेषां च तिङां द्वावपि हिस्वौ पर्यायेण स्यातां न तु 'परस्मैपदानां हिः, इतरेषां स्वः'

**भावबोधिनी**

"सेर्ह्यपिच्च" ३।४।८७ तथा "सवाभ्यां वामौ" ३।४।९१ इन सूत्रों से लोट के स्थान पर आदेशभूत सिप् और थास् के स्थान पर होने वाले प्रसिद्ध 'हि' एवं 'स्व' समझने चाहिये ] इससे 'हि' का परस्मैपदत्व और 'स्व' का आत्मनेपदत्व भेद सिद्ध हो जाता है और दोनों का तिङ्त्व भी रहता है।

**विमर्श**—क्रियासमभिहार की प्रतीति के लिए सभी कालों, वचनों और पुरुषों में प्रत्यय का विधान करने वाला यह सूत्र है। यह लोट् प्रत्यय करता है। परस्मैपद लोट् का 'हि' आदेश और आत्मनेपद लोट् का 'स्व' आदेश नित्यरूप से होता है। केवल मध्यमपुरुष बहुवचन में विकल्प से होता है, अतः 'हि' और 'स्व' के साथ-साथ परस्मैपद में 'त' और आत्मनेपद में 'ध्वम्' का भी प्रयोग होता है। ये हि' और 'स्व' नवीन प्रत्यय नहीं हैं। अपितु परस्मैपद लोट् मध्यमपुरुष एकवचन सिप् के स्थान पर होने वाला 'हि' और आत्मनेपद मध्यमपुरुष एकवचन में होने वाला 'स्व' समझना चाहिये। अतः इनमें आत्मनेपद और परस्मैपद का भेद सिद्ध रहता है। साथ ही इनमें रहने वाला तिङ्त्व धर्म भी इन दोनों आदेशों में अतिदिष्ट हो जाने से तिङन्त रहने से पदत्व भी अक्षुण्ण रहता है।

**योगविभागोऽत्र कर्तव्यः, क्रियासमभिहारे लोड् भवति, ततो लोटो हिस्वौ। लोडित्येव, लोड्धर्माणौ**

**न्यासः**

लोटस्तिङ्त्वादिधर्मो भवतीत्यदोषः। कथं पुनर्योगविभागे सति लोड्धर्माणौ तौ भवतः? योगविभागे सति द्वितीये योगे लोट्शब्दो योऽनुवर्त्तते तेनार्थाद् विभक्तेर्विपरिणामो भवतीति षष्ठ्यन्ततामापन्नेन हिस्वौ विशेष्येते—लोटो यौ हिस्वाविति। ततश्च लोडादेशयोः सिप्थासोः स्थाने यौ हिस्वौ 'सेर्ह्यपिच्च' इत्यादिना शास्त्रेण विधास्येते, तावेव यथास्वमुपात्तविशेषाविह लोटः स्थाने विधीयेते, नापूर्वाविति। तेन लोड्धर्माणौ तौ भवत इत्येषोऽर्थो लभ्यत एव। **तेनेत्यादि**। अत एव = यथोक्तेन प्रकारेण, लोड्धर्माणौ तौ हिस्वौ लोटः स्थाने भवतः। तेन परस्मैपदत्वमात्मनेपदत्वञ्च भेदेन = विषयविभागेन व्यवतिष्ठते। तत्र हिशब्दे परस्मैपदत्वं व्यवतिष्ठते; लोट्सम्बन्धिनो हेः परस्मैपदसंज्ञकत्वात्। स्वशब्दे चात्मनेपदत्वं व्यवतिष्ठते; स्वशब्दस्य लोट्सम्बन्धिन आत्मनेपदसंज्ञकत्वात्। **तिङ्त्वञ्च द्वयोरपि भवतीति**। लोट्सम्बन्धिनोस्तयोर्द्वयोरपि तिङन्तत्वात्। ननु च सिप्थासोर्लोडादेशयोस्तौ सम्बन्धिनौ, तदादेशत्वात्, न लोटः, तत् कथं लोट्सम्बन्धित्वेन व्यपदिश्येते? आदेशद्वारेण लोट्सम्बन्धित्वं तयोरप्यस्तीत्यदोषः। यदि तर्हि लोड्धर्माणौ भवतः, एवमेकवचनसंज्ञा स्यात्, मध्यमपुरुषसंज्ञा च, तयोरपि लोड्धर्मत्वात्, ततश्च वचनान्तरभाविनः पुरुषान्तरभाविनश्च लोटो न स्याताम्? नैष दोषः; यदि ह्येकवचनमध्यमपुरुषसंज्ञे अपि स्यातां वचनमिदमनर्थकं स्यात्, विनाप्यनेन वचनेन मध्यमपुरुषैकवचनयोर्हिस्वयोः सिद्धत्वात्।

**पदमञ्जरी**

इति नियामकमस्ति। तस्माद्दुष्ट एवायं पक्ष इति मत्वा लकारस्यैवादेशो हिस्वावाश्रयणीयाविति दर्शयति। **तस्य च लोट इति**। नन्वस्मिन्पक्षे 'वा च तध्वमोः' इत्यनुपपन्नमित्युक्तं तत्राह—**तध्वम्भाविनस्तु वा भवत इति**। मुख्यार्थासम्भवे तध्वम्भावी लोडेव तथोच्यते इत्यर्थः।

यदि तर्हि लोट एव हिस्वावादेशौ न तदादेशानाम्, 'लः परस्मैपदम्' इति द्वयोरपि परस्मैपदसंज्ञा स्यात्, ततश्च द्वावपि परस्मैपदिभ्य एव स्याताम्। तिङ्क्ष्वसन्निवेशाच्च तदन्तस्य तिङन्तता न स्यात्, ततश्च 'तिङ्ङतिङः' इति निघातो न प्राप्नोति। हिस्वयोश्च कृत्त्वात्तदन्तस्य शतृशानजन्तस्यैव प्रातिपदिकत्वात्स्वाद्युत्पत्तिः प्राप्नोति, तत्र च विभक्तिसंज्ञकहिस्वसदृशत्वादनयोर्हिस्वयोः 'विभक्तिस्वरप्रतिरूपकाश्च निपाताः' 'निपातोऽव्ययम्' इत्यव्ययसंज्ञायां यद्यपि विभक्तीनां श्रवणं न भवति, तथापि ततः परस्य 'तिङ्ङतिङः' इति निघातः प्राप्नोति, द्वावपि च कर्तर्येव स्याताम्, न तु स्वादेशो भावकर्मकर्तृषु स्यात्। तस्मादयमपि पक्षो दुष्ट एव, तत्राह—**योगविभागश्चात्र कर्त्तव्य इति**। योगविभागे यथेष्टं सिद्धयति

**भावबोधिनी**

[ अनु० ] उदा०—लुनीहि लुनीहि इत्येव अयं लुनाति, [ वह बारबार काटता है। ] लुनीहि लुनीहि इत्येव इमौ लुनीतः [ वे दोनों बार-बार काटते हैं ], लुनीहि लुनीहि इत्येव इमे लुनन्ति [ वे सब बार-बार काटते हैं। इनमें प्रथमपुरुष के तीनों वचनों के रूपों के स्थान पर 'लुनीहि' का प्रयोग दिखलाया गया है। ] लुनीहि लुनीहि इत्येव त्वं लुनासि [ तुम बार-बार काटते हो ], लुनीहि लुनीहि इत्येव युवां लुनीथः [ तुम दोनों बार-बार काटते हो। ] लुनीहि लुनीहि इत्येव यूयं लुनीथ [ तुम सब बार-बार काटते हो ] 'त' के स्थान पर विकल्प से 'हि' होने के कारण पक्ष में 'त' भी रहता है—लुनीत लुनीत इत्येव यूयं लुनीथ। [ तुम सब बार-बार काटते हो। ये सब मध्यमपुरुष के उदाहरण हैं। ] लुनीहि लुनीहि इत्येव अहं लुनामि। [ मैं बार-बार काटता हूँ। ] लुनीहि लुनीहि इत्येव आवां लुनीवः। [ हम दोनों बार-बार काटते हैं। ] लुनीहि लुनीहि इत्येव वयं लुनीमः [ हम सब बार-बार काटते हैं। ये तीनों उत्तमपुरुष के उदाहरण हैं। ]

**हिस्वौ भवत इत्यर्थः । तेनात्मनेपदपरस्मैपदत्वं भेदेनावतिष्ठते, तिङ्त्वं च द्वयोरपि भवति ॥**

**लुनीहि लुनीहीत्येवायं लुनाति, इमौ लुनीतः, इमे लुनन्ति । लुनीहि लुनीहीत्येव त्वं लुनासि, युवां**

**न्यासः**

**लुनीहि लुनीहीति** । 'क्रियासमभिहारे द्वे भवतः' इति द्विर्वचनम् । 'ई हल्यघोः' इतीत्वम् । **लुनन्तीति** । 'श्नाभ्यस्तयोरातः' इत्याकारलोपः । **अथ वेत्यादिना** 'वा च तध्वमोः' इति वाग्रहणस्य फलं दर्शयति ।

**अलावीदिति** । 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धिः 'आर्धधातुकस्येड् वलादेः' इतीट्, 'अस्तिसिचोऽपृक्ते' इतीट्, 'इट ईटि' इति सिचो लोपः । **अलाविष्टामिति** । 'तस्थस्थ' इत्यादिना तसस्ताम् । **अलाविषुरिति** । 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुसादेशः । एवं **मध्यमोत्तमयोरप्युदाहार्यमिति** । लुनीहि लुनीहित्येव त्वमलावीर्युवामलाविष्टं यूयमलाविष्ट । अथ वा—लुनीत लुनीतेत्येव यूयमलाविष्ट । लुनीहि लुनीहीत्येवाहमलाविषम्, आवामलाविष्व, वयमलाविष्म ।

**एवं मध्यमोत्तमयोरप्युदाहार्यमिति** । लुनीहि लुनीहित्येव त्वं लविष्यसि, युवां लविष्यथः, यूयं लविष्यथ । अथ वा—लुनीत लुनीतेत्येव यूयं लविष्यथ । लुनीहि लुनीहीत्येवाहं लविष्यामि, आवां लविष्यावः, वयं लविष्यामः ।

**पदमञ्जरी**

**तथा दर्शयति—लोडित्येवेति** । एतेन द्वितीययोगे प्रथमान्तस्य लोड्ग्रहणस्यानुवृत्तिं दर्शयति । तत्र च सामानाधिकरण्येन लोडित्यनेन हिस्वौ विशेष्येते, न षष्ठ्या विपरिणामेन. न च हिस्वौ लोटौ भवतः उच्यते चेदं लोटो हिस्वाविति, ततश्च धर्मातिदेशो विज्ञायते, तदाह—**लोड्धर्माणौ तौ भवत इत्यर्थ इति** । अत्र च लोट्शब्देन लोट्संबन्धिनौ हिस्वावुच्येते मुख्यलोट्संबन्धिनो धर्मस्यातिदेश्यस्यासम्भवात्प्रसिद्धौ लोट्संबन्धिनौ यौ हिस्वौ, सेर्ह्यपिच्च' 'सवाभ्यां वामौ' इति विहितौ. तद्धर्माणावित्यर्थः । किं सिद्धं भवति ? तद्दर्शयति—**तेनेति** । तयोर्हि परस्मैपदात्मनेपदत्वं भेदेन व्यवस्थितम्—हेः परस्मैपदत्वम्, स्वस्यात्मनेपदत्वमिति । अतस्तद्धर्मातिदेशादिहापि तदुभयं भेदेन व्यवतिष्ठते, भेदेन भविष्यतीत्यर्थः । **तिङ्त्वं च भवतीति** । तथा च हीत्यस्य कर्त्ता वाच्यः, स्वशब्दस्य तु भावकर्मकर्त्तारः । पुरुषैकवचनसंज्ञे तु विधानसामर्थ्यान्न भवतः, यदि हि ते अपि स्याताम्, हिस्वयोरनेन विधानमनुपपन्नं स्याद्; वचनान्तरेणैव तयोस्तादृशयोः सिद्धत्वात् ।

**भावबोधिनी**

**विमर्श**—प्रस्तुत सूत्र से क्रियासमभिहार=पुनः पुनः होना, इस अर्थ में सभी पुरुषों, वचनों और कालों में परस्मैपद में केवल 'हि' प्रत्यय का ही रूप होता है; जैसा कि ऊपर के उदाहरणों में 'लुनीहि' यह है । 'क्रियासमभिहारे द्वे वाच्ये" से द्वित्व होता है । लुनीहि—√लूञ्=लु+लोट् के स्थान पर तिप् आदि प्रत्यय, उनका हि आदेश "क्र्यादिभ्यः श्ना" ३।१।८१ से श्ना=ना विकरण "ई हल्यघोः" ६।३।११३ से आ का ई करने पर लुनीहि रूप बनता है । इस प्रसंग में "यथाविध्यनुप्रयोगः पूर्वस्मिन्" ३।४।४ सूत्र का भी उपयोग है। जिस धातु से प्रस्तुत सूत्र से लोट् का विधान होता है, वहाँ यह सूत्र उसी धातु के अनुप्रयोग का विधान करता है । अतएव उसी धातु के अपेक्षित रूपों का अनुप्रयोग होने के कारण काशिका के उदाहरण में 'लुनाति' लुनीतः आदि √'लू' का ही अनुप्रयोग है ।

लुनीहि लुनीहि—इससे बार-बार काटना अर्थ प्रतीत होता है—लुनाति—आदि से तद्विषयक क्रिया का ज्ञान होता है । 'इत्येव' यह दोनों सामान्यविशेष का विशेषणविशेष्य सम्बन्ध बताता है; अयम्, त्वम्, अहम्—आदि से पुरुष-व्यवस्था का ज्ञान होता है । इस प्रकार सभी पदों का प्रयोजन स्पष्ट हो जाता है । वर्तमानकालिक प्रयोगों के बाद अब भूतकालिक प्रयोग दिखाते हैं ।

[ अनु० ] भूतकाल में भी—लुनीहि लुनीहि इत्येव अयम् अलावीत् । [ उसने बार-बार काटा । ] लुनीहि लुनीहि इत्येव अलाविष्टाम् । [ उन दोनों ने बार-बार काटा । ] लुनीहि लुनीहि इत्येव अलाविषुः । [ उन सभी ने बार-बार

**लुनीथः, यूयं लुनीथ। अथ वा – लुनीत लुनीतेत्येव यूयं लुनीथ। लुनीहि लुनीहीत्येवाहं लुनामि, आवां लुनीवः, वयं लुनीमः ॥**

**भूते—लुनीहि लुनीहीत्येवायमलावीत्, अलाविष्टाम्, अलाविषुः। एवं मध्यमोत्तमयोरुदाहार्यम् ॥**

**भविष्यति—लुनीहि लुनीहीत्येवायं लविष्यति, लविष्यतः, लविष्यन्ति। एवं मध्यमोत्तमयोरुदाहार्यम् ॥**

**न्यासः**

**अधीयाते इति।** इयङ्। **अधीयत इति।** 'आत्मनेपदेष्वनतः' इत्यदादेशः। **एवं सर्वलकारेषूदाहार्यमिति।** लङ्—लुनीहि लुनीहीत्येवायमलुनात्, इमावलुनीताम्, इमेऽलुनन्। लुनीहि लुनीहीत्येव त्वमलुनः, युवामलुनीतम्, यूयमलुनीत। अथ वा—लुनीत लुनीतेत्येव यूयमलुनीत। लुनीहि लुनीहीत्येवाहमलुनाम्, आवामलुनीव, वयमलुनीम। अधीष्वाधीष्वेत्येवायमध्यैत, इमावध्यैयाताम्, इमेऽध्यैयत। अधीष्वाधीष्वेत्येव त्वमध्यैथाः, युवामध्यैयाथाम्, यूयमध्यैध्वम्। अथ वा—अधीध्वमधीध्वमित्येव यूयमध्यैध्वम्। अधीष्वाधीष्वेत्येवाहमध्यैषि, आवामध्यैवहि, वयमध्यैमहि। अन्येषु लकारेष्वतिग्रन्थविस्तरभयान्नोदाह्रियते। अनया दिशा स्वयमेवाभ्युपगम्योदाहार्यम्।

अथ लुनीहि लुनीहीति कथमत्र द्विर्वचनम्, यावता धातुनैव क्रियासमभिहारोऽवगमितः, तद्विशिष्टक्रियावचनाद्धातोर्लोड्विधानात्? अथ वा—अवगमिते सति तस्मिन् द्विर्वचनं भवतीति चेदेवं यङन्तस्यापि द्विर्वचनं

**पदमञ्जरी**

**लुनीहि लुनीहीत्यादि।** पुनः पुनर्लवनमयं करोतीत्यादिरर्थः। तत्र च लोडन्तं पुनः पुनर्लवनमाह, अनुप्रयोगधातुस्तु कृतिं तद्विषयां वदन् अभिव्यनक्ति संमुग्धं तद्गतं साधनादिकम्। एवं च सामान्यविशेषयोर्विशेषणविशेष्यभावाद् धातुसम्बन्ध उपपद्यते, इत्येवशब्दो लोडन्तानुप्रयोगयोः सम्बन्धार्थौ, अयन्त्वमहंशब्दाः पुरुषविशेषाभिव्यक्तिहेतवः। **अथ वेति।** 'वा च तध्वमोः' इत्यस्य फलं दर्शयति।

**अलावीदिति।** लुङ्, सिचि वृद्धिः, सिच इट्, तिपः 'अस्तिसिचोऽपृक्ते' इतीट् 'इट ईटि' इति सिचो लोपः, 'सिज्लोप एकादेशे सिद्धो वक्तव्यः' इति सवर्णदीर्घत्वम्। **एवं मध्यमोत्तमयोरुदाहार्यमिति।** लुनीहि लुनीहीत्येव त्वमलावीः अलाविष्टमलाविष्ट। अथ वा लुनीत लुनीतेत्येव यूयमलाविष्ट। लुनीहि लुनीहीत्येवाहमलाविषम् अलाविष्व अलाविष्म। **एवं मध्यमोत्तमयोरपीति।** लुनीहि लुनीहीत्येव त्वं लविष्यसि लविष्यथः लविष्यथ। अथ वा लुनीत लुनीतेत्येव यूयं लविष्यथ। लुनीहि लुनीहीत्येवाहं लविष्यामि, लविष्यावः

**भावबोधिनी**

काटा। ] ये प्रथमपुरुष के उदाहरण हैं। इसी प्रकार मध्यमपुरुष और उत्तमपुरुष के भी [ तीनों वचनों के ] उदाहरण देने चाहिये। [ जैसे—लुनीहि लुनीहि इत्येव त्वम् अलावीः आदि। उत्तमपुरुष में—लुनीहि लुनीहि इत्येव अहम् अलाविषम् आदि। ]

भविष्यत् काल में भी—लुनीहि लुनीहि इत्येव अयं लविष्यति [ वह बार-बार काटेगा ], लुनीहि लुनीहि इत्येव इमौ लविष्यतः [ वे दोनों बार-बार काटेंगे। ] लुनीहि लुनीहि इत्येव इमे लविष्यन्ति। [ वे सब बार-बार काटेंगे। ] इसी प्रकार मध्यमपुरुष और उत्तमपुरुष के भी उदाहरण देने चाहिये। [ जैसे—लुनीहि लुनीहि इत्येव त्वं लविष्यसि आदि। लुनीहि लुनीहि इत्येव अहं लविष्यामि—आदि। ]

[ परस्मैपद में 'हि' आदेश होता है। इसके उदाहरण देने के बाद अब आत्मनेपद के 'स्व' प्रत्ययघटित उदाहरण दिये जा रहे हैं— ]अधीष्व अधीष्व इत्येव अयम् अधीते। [ यह बार-बार पढ़ता है। ] अधीष्व अधीष्व इत्येव इमौ अधीयाते [ ये दोनों बार-बार पढ़ते हैं। ] अधीष्व अधीष्व इत्येव इमे अधीयते। [ ये सब बार-बार पढ़ते हैं। ] अधीष्व अधीष्व इत्येव त्वम् अधीषे [ तुम बार-बार पढ़ते हो। ] अधीष्व अधीष्व इत्येव युवाम् अधीयाथे [ तुम दोनों बार-बार पढ़ते हो। ]

**अधीष्वाधीष्वेत्येवायमधीते, इमावधीयाते, इमेऽधीयते। अधीष्वाधीष्वेत्येव त्वमधीषे, युवामधीयाथे, यूयमधीध्वे। अथ वा – अधीध्वमधीध्वमित्येव यूयमधीध्वे। अधीष्वाधीष्वेत्येवाहमधीये, आवामधीवहे, वयमधीमहे। एवं सर्वेष्वेव लकारेषूदाहार्यम्।**

**क्रियासमभिहाराभिव्यक्तौ द्विर्वचनमयं लोडपेक्षते ❀ क्रियासमभिहारे द्वे भवत इति ❀ ( म० भा० ३-४-२ वा० ६ )। यङ्प्रत्ययः पुनरस्मिन्नेवार्थे विधीयमानः स्वयमेव शक्तत्वान्नापेक्षते द्विर्वचनम्॥**

**न्यासः**

स्यात्? इत्यत आह – **क्रियासमभिहाराभिव्यक्तावित्यादि**। यद्यपि क्रियासमभिहारविशिष्टक्रियाभिधायिनो धातोर्लोड् भवति, तथापि या तस्य क्रियासमभिहाराभिव्यक्तिः सा धातुना न क्रियते, किं तर्हि? लोटेव। स च तां कर्तुं द्विर्वचनसहित एव समर्थो भवति, न केवलः; तत्र तस्याविधानात्। स हि लोट् 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति कर्मादिषु विधीयते, न क्रियासमभिहारे। तस्मात् तदभिव्यक्तौ कर्त्तव्यायां लोट् स्वयमसमर्थं इति द्विर्वचनमपेक्षते, तेन तदन्तस्य द्विर्वचनं भवतीति भावः। केन पुनर्विधीयमानं द्विर्वचनमपेक्षत इत्याह—**क्रियासमभिहार इत्यादि। यङ्प्रत्ययः पुनरित्यादि**। यङ्प्रत्ययो हि क्रियासमभिहार एव विधीयते। तेनासौ तत्र विधीयमानस्तदभिव्यक्तौ स्वयमेव समर्थ इति नापेक्षते द्विर्वचनम्। तेन तदन्तस्य द्विर्वचनं न भवतीति भावः॥ २॥

**पदमञ्जरी**

लविष्यामः। **एवं सर्वेषु लकारेषूदाहार्यमिति**। लुनीहीलुनीहीत्येवायमलुनात्, लुनातु, लुनीयात्, लूयात्, लुलाव, लविता, लविष्यति, अलविष्यत्; अधीष्वाधीष्वेत्येवायमध्यैत, अधीताम्, अधीयीत, अध्येषीष्ट, अधिजगे, अध्यगीष्ट, अध्यैष्ट, अध्येता, अध्यैष्यत, अध्येष्यते। कर्मणि-लूयस्व लूयस्वेत्येवायं केदारो लूयत इत्यादि। भावे तु प्रसिद्धः स्वशब्दो दृष्टो न वेति चिन्त्यम्।

अथोदाहरणेषु कथं द्विर्वचनम्, यावता क्रियासमभिहारं द्योतयितुं द्विर्वचनं विधीयते, स चात्र तस्मिन्नेव विधीयमानेन लोटैव द्योतितः, अथ द्योतितेऽपि तस्मिन् 'क्रियासमभिहारे द्वे भवतः' इति वचनसामर्थ्यादत्र द्विर्वचनं यङन्तेऽपि प्राप्नोति, वक्तव्यो वा विशेषः? तत्राह—**क्रियासमभिहाराभिव्यक्ताविति**। 'लः कर्मणि च' इति वचनाद्भावकर्मकर्त्तारोऽस्य वाच्याः, समभिहारस्तु द्विर्वचनेनैव द्योत्यः, यङस्तु न किञ्चिदन्यद्वाच्यं द्योत्यं वा विद्यते इति तेनैव क्रियासमभिहारस्य द्योतितत्वाद् द्विर्वचनाभावः। ननु च सन्तु भावकर्मकर्त्तारोऽस्य वाच्याः, समभिहारोऽप्युपाधित्वेन श्रुतः, सोऽपि लोटो द्योत्यो भवतु, यथा—लङादिषु वर्त्तमानादयः? एवं तर्ह्यसति द्विर्वचने शुद्धस्य लोटोऽस्य च साधारणं रूपमिति समभिहाराभिव्यक्तयेऽवश्यं द्विर्वचनमपेक्ष्यते। शब्दशक्तिवैचित्र्यं चात्र हेतुः, यथा स्त्रीत्वं क्वचिदेकेनैव प्रत्ययेन द्योत्यते, क्वचिद् द्वाभ्याम्, क्वचित् दृषदित्यादौ प्रातिपदिकेनैवेत्यलं प्रबन्धेन॥ २॥

**भावबोधिनी**

अधीष्व अधीष्व इत्येव यूयम् अधीध्वे। [ ध्वम् का वैकल्पिक 'स्व' होता है। अतः ] अथवा अधीध्वम्, अधीध्वम् इत्येव यूयम् अधीध्वे। [ दोनों का एक ही अर्थ है—तुम सब बार-बार पढ़ते हो। ] 'अधीष्व अधीष्व इत्येव अहम् अधीये। [ मैं बार-बार पढ़ता हूँ। ] अधीष्व अधीष्व इत्येव आवाम् अधीवहे। [ हम दोनों बार बार पढ़ते हैं। ] अधीष्व अधीष्व इत्येव वयम् अधीमहे। [ हम सब बार-बार पढ़ते हैं। ] इसी प्रकार अन्य सभी लकारों में भी उदाहरण देने चाहिये।

[ अधि √इङ् + लोट् = थास् = से, "सवाभ्यां वामौ" ३।४।९१ से 'ए' का 'व' होने पर अधि + इ + स्व, सवर्णदीर्घ और स् का ष् होने पर अधीष्व रूप बनता है ]।

क्रियासमभिहार की अभिव्यक्ति के विषय में इस लोट् [ लोडन्त पद ] को द्वित्व की अपेक्षा होती है—

**११३६. समुच्चयेऽन्यतरस्याम् ॥ ३ ॥ ( २८२६ )**

**अनेकक्रियाध्याहारः=समुच्चयः। समुच्चीयमानक्रियावचनाद्धातोरन्यतरस्यां लोट् प्रत्ययो भवति, तस्य लोटो हिस्वावादेशौ भवतः। तध्वंभाविनस्तु वा भवतः।**

**भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्यपिधानमटेत्येवायमटति, इमावटतः, इमेऽटन्ति। भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्यपिधानमटेत्येव त्वमटसि, युवामटथः, यूयमटथ। अथ वा – भ्राष्ट्रमटत, मठमटत, खदूरमटत, स्थाल्यपिधानमटतेत्येव यूयमटथ। भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्यपिधानमटेत्येवाहमटामि, आवामटावः, वयमटामः।**

**न्यासः**

**समुच्चयेऽन्यतरस्याम्** ॥ **अनेकक्रियाध्याहारः समुच्चय इति**। अनेकासां क्रियाणां चीयमानतेत्यर्थः। एतेन समभिहारात् समुच्चयस्य भेदं दर्शयति। समभिहारोऽपि पौनःपुन्यम्, भृशार्थो वा, स चैकस्या एव क्रियायाः सम्भवः। समुच्चयः पुनरनेकासां क्रियाणाम्।

**भ्राष्ट्रमटेति**। 'अतो हेः' इति लुक्। अत्र साधनभेदाद् भेदमुपागतानामनेकासामटनक्रियाणां समुच्चयः।

**पदमञ्जरी**

**समुच्चयेऽन्यतरस्याम्** ॥ 'समुच्चये' इति समान्योक्तावपि क्रियासमुच्चय एव दृश्यते, धातोः प्रत्ययविधानादित्याह—**अनेकक्रियाध्याहारः समुच्चय इति**। अनेकासां कियाणामेकस्मिन् सम्बन्धिनि निचीयमानतेत्यर्थः। एतेनैकक्रियाविषयात्समभिहारात्समुच्चयस्य भेदो दर्शितः। धातोः क्रियावाचित्वात्क्रियाधर्मे समुच्चयमात्रे वृत्तिर्न भवतीत्यभिप्रायेणाह—**समुच्चीयमानक्रियावचनादिति**। एकस्मिन्साधने याः क्रियाः समुच्चीयन्ते तद्वाचिभ्यो धातुभ्यः प्रत्यय इत्यर्थः।

**भ्राष्ट्रमटेत्यादि**। भ्राष्ट्राटनादीनि करोतीत्यर्थः। तत्रानुप्रयुज्यमानो धातुः साधनभेदेन भिन्नेष्वटनेष्वनुवर्तमानं कृतिव्यापारं वदंस्तद्गतानि साधनादीनि प्रकाशयतीति परस्परसम्बन्धः। भ्राष्ट्रम्=चुल्लि, खस्य दूरं खदूरम्=अपवरकम्, स्थाल्यः प्रक्षालिता यत्र निधाय पिधीयन्ते तत्स्थाल्यपिधानम्।

**भावबोधिनी**

*"क्रियासमभिहार में दो रूप हो जाते हैं ]*" परन्तु इसी क्रियासमभिहार अर्थ में किया जाने वाला यङ् प्रत्यय तो स्वयम् उसी अर्थ में शक्त [ वाचक ] है अतः वह द्वित्व की अपेक्षा नहीं करता है। [ अर्थात् यहाँ समभिहार की प्रतीति तभी होती है जब द्वित्व किया जाय। किन्तु यङन्त में स्वतः द्वित्व की प्रतीति हो जाती है ] ॥ २ ॥

अनेक क्रियाओं का अध्याहार=समुच्चय [ अर्थात् अनेक क्रियाओं का एक साथ प्रयोग होना ]। समुच्चीयमान क्रिया को कहने वाली धातु से [ कालसामान्य में ] विकल्प से लोट् होता है, उस लोट् के [ परस्मैपद में ] 'हि' तथा [ आत्मनेपद में ] 'स्व' आदेश होते हैं। 'त' तथा 'ध्वम्' जिसके होने वाले हैं उस लोट् के 'हि' और 'स्व' विकल्प से होते हैं, अर्थात् पक्ष में 'त' और 'ध्वम्' ये भी रहते हैं।

उदा०—भ्राष्ट्रम् अट, मठम् अट, स्थाल्यपिधानम् अट इत्येव अयम् अटति। [ भाड़ में जाता है, मठ में जाता है, खदूर=कमरे में जाता है, जहाँ बटलोई धोकर ढंकते हैं, वहाँ जाता है। यहाँ अनेक क्रियाओं का समुच्चय है। और परस्मैपदी धातु है, अतः $\sqrt{}$अट्+लोट्, सिप् मध्य में शप्=अ विकरण अट्+अ+सि, "सेर्ह्यपिच्च" ३।४।८७ से सि का हि और "अतो हेः" ६।४।१०२ से 'हि' का लुक् हो जाता है। पक्ष में लट् भी रहता है। ]……इमौ अटतः [……ये दोनों जाते हैं। ]……इमे अटन्ति [ ……ये सब जाते हैं। इस प्रकार द्विवचन और बहुवचन में भी 'हि' के रूप 'भ्राष्ट्रम् अट' आदि ही होते हैं। अब मध्यमपुरुष के उदा०—] भ्राष्ट्रम् अट, मठम् अट, खदूरम् अट, स्थाल्यपिधानम् अट इत्येव त्वम् अटसि।……युवाम् अटथः।……यूयम् अटथ [ तुम भाड़ मे जाते हो, मठ में

**अथ वा – भ्राष्ट्रमटति, मठमटति, खदूरमटति, स्थाल्यपिधानमटति इत्येवायमटति, इमावटतः, इमेऽटन्ति। भ्राष्ट्रमटसि, मठमटसि, खदूरमटसि, स्थाल्यपिधानमटसि इत्येव त्वमटसि, युवामटथः, यूयमटथ। भ्राष्ट्रमटामि, मठमटामि, खदूरमटामि, स्थाल्यपिधानमटामीत्येवाहमटामि, आवामटावः, वयमटामः।**

**छन्दोऽधीष्व, व्याकरणमधीष्व, निरुक्तमधीष्वेत्येवायमधीते, इमावधीयाते, इमेऽधीयते। छन्दोऽधीष्व, व्याकरणमधीष्व, निरुक्तमधीष्वेत्येव त्वमधीषे, युवामधीयाथे, यूयमधीध्वे। अथ वा – छन्दोऽधीध्वं, व्याकरणमधीध्वं, निरुक्तमधीध्वमित्येव यूयमधीध्वे। छन्दोऽधीष्व, व्याकरणमधीष्व निरुक्तमधीष्वेत्येवाहमधीये, आवामधीवहे, वयमधीमहे।**

**न्यासः**

**अथ वेत्यादि।** प्रथमेनाथवेति ग्रहणेन 'वा च तध्वमोः' इति वाग्रहणप्रतिपादितं विकल्पं दर्शयति,

**पदमञ्जरी**

**अथ वेति।** प्रथमेनाथवाशब्देन 'वा च तध्वमोः' इत्यस्य व्यापारं दर्शयति, द्वितीयेनान्यतरस्याङ्ग्रहणस्य।

**भावबोधिनी**

जाते हो, खदूर = कमरे में जाते हो, बटलोई धोकर जहाँ ढकते हैं वहाँ जाते हो।.........तुम दोनों जाते हो।.........तुम सब जाते हो। [ लोट् के मध्यमपुरुष बहुवचन में 'त' होता है। इसका विकल्प से 'हि' होता है। अतः 'त' का रूप और [ लुप्त ] 'हि' का रूप—दोनों होते हैं। इनमें 'हि' का रूप देने के बाद अब 'त' के रूप में दे रहे हैं—] अथवा—भ्राष्ट्रम् अटत, मठम् अटत, खदूरम् अटत, स्थाल्यपिधानम् अटत इत्येव यूयम् अटथ [ तुम सब भाड़ में जाते हो.........। 'हि' आदेश जब होता है तब उसका लोप होकर भ्राष्ट्रम् अट आदि ही होते हैं। अब उत्तम-पुरुष के उदाहरण देते हैं—] भ्राष्ट्रम् अट, मठम् अट, खदूरम् अट, स्थाल्यपिधानम् अट इत्येव अहम् अटामि;.........आवाम् अटावः;.........वयम् अटामः। [ मैं भाड़ में जाता हूँ, मठ में जाता हूँ, खदूर में जाता हूँ;.........हम दोनों जाते हैं;......... हम सब जाते हैं। ]

[ लोट् और इसका 'हि' आदेश विकल्प से कहा गया है, अतः पक्ष में यथाप्राप्त लट् आदि प्रत्यय भी होते हैं—] भ्राष्ट्रम् अटति, मठम् अटति, खदूरम् अटति, स्थाल्यपिधानम् अटति इत्येव अयम् अटति [ भाड़ में जाता है—आदि पूर्वोक्त ही सभी अर्थ हैं। यह प्रथमपुरुष एकवचन का उदाहरण है द्विवचन और बहुवचन के उदाहरण ये हैं—]..........इमौ अटतः;................इमे अटन्ति [ ये दोनों जाते हैं; ये सब जाते हैं। मध्यमपुरुष के उदाहरण—] भ्राष्ट्रम् अटसि, मठम् अटसि, खदूरम् अटसि, स्थाल्यपिधानम् अटसि, इत्येव त्वम् अटसि [ तुम भाड़ में जाते हो, मठ में जाते हो, खदूर में जाते हो, स्थाल्यपिधान में जाते हो। ] [ द्विवचन में—]...........युवाम् अटथः [ बहुवचन में ]...........यूयम् अटथ। [ तुम दोनों जाते हो। तुम सब जाते हो। ] [ उत्तम पुरुष के उदा०—] भ्राष्ट्रम् अटामि, मठम् अटामि, खदूरम् अटामि, स्थाल्यपिधानम् अटामि इत्येव अहम् अटामि, [ भाड़ में जाता हूँ आदि पूर्वोक्त अर्थ हैं [ द्विवचन में ]..........आवाम् अटावः [ हम दोनों जाते हैं। बहुवचन में ]...............वयम् अटामः [ हम सब जाते हैं। ]

**विमर्श**—काशिकाकार ने लोट् के विकल्पपक्ष में अपेक्षित उदाहरण नहीं दिये हैं "अथवा—भ्राष्ट्रम् अटति, मठम् अटति, खदूरम् अटति, स्थाल्यपिधानम् अटति इत्येव अयम् अटति—यह प्रथमपुरुष एकवचन का उदाहरण तो ठीक है। परन्तु इसके आगे 'इमौ अटतः, इमे अटन्ति' ऐसा लिखा है। इनका सम्बन्ध किसके साथ है यह विचारणीय है। क्योंकि 'भ्राष्ट्रम् अटति' आदि तो एकवचनान्त हैं उनका इस द्विवचनान्त के साथ प्रयोग कैसे हो सकता है। यहाँ तो यथाप्राप्त प्रत्यय होने चाहिये। अतः भ्राष्ट्रम् अटतः, मठम् अटतः—आदि द्विवचनान्त प्रयोगों को उदाहरण में देना चाहिये था। सम्भवतः विस्तारभयात् ऐसा नहीं किया है। सिद्धान्तकौमुदीकार ने तो इसके उदाहरणों में अतिकृपणता प्रदर्शित की है।

**अथ वा – छन्दोऽधीते, व्याकरणमधीते, निरुक्तमधीते, इत्येवायमधीते, इमावधीयाते, इमेऽधीयते। छन्दोऽधीषे, व्याकरणमधीषे, निरुक्तमधीषे इत्येव त्वमधीषे, युवामधीयाथे, यूयमधीध्वे। छन्दोऽधीये, व्याकरणमधीये, निरुक्तमधीये—इत्येवाहमधीये, आवामधीवहे, वयमधीमहे ॥**

न्यासः

द्वितीयेनान्यतरस्यांग्रहणप्रतिपादितम् ॥ ३ ॥

पदमञ्जरी

एवं द्वितीयेऽप्युदाहरणे द्रष्टव्यम् ॥ ३ ॥

भावबोधिनी

[ अब आत्मनेपद में होने वाले 'स्व' प्रत्यय के उदा० प्रस्तुत हैं—] 'छन्दः अधीष्व, व्याकरणम् अधीष्व, निरुक्तम् अधीष्व इत्येव अयम् अधीते [ यह वेद पढ़ता है, व्याकरण पढ़ता है, निरुक्त पढ़ता है। द्विवचन का उदा० ]………… इमौ अधीयाते [ ये दोनों पढ़ते हैं। बहुवचन का उदा० ] …………इमे अधीयते [ ये सब पढ़ते हैं। मध्यम-पुरुष के उदा०––] छन्दः अधीष्व, व्याकरणम् अधीष्व, निरुक्तम् अधीष्व, इत्येव त्वम् अधीषे [ तुम वेद पढ़ते हो, व्याकरण पढ़ते हो, निरुक्त पढ़ते हो। द्विवचन का उदा०––]…………युवाम् अधीथे [ तुम दोनों पढ़ते हो। बहुवचन का उदा० ]………… यूयम् अधीध्वे। [ तुम सब पढ़ते हो। ] लोट् का आत्मनेपद मध्यमपुरुष बहुवचन में 'ध्वम्' प्रत्यय होता है। इस ध्वम् का विकल्प से 'स्व' आदेश होता है। अतः एक बार 'स्व' प्रत्यय और एक बार 'ध्वम्' प्रत्यय के रूप होते हैं। 'स्व' के रूप – छन्दः अधीष्व…………यूयम् अधीष्व लिखा जा चुका है। अब पाक्षिक ध्वम् का रूप लिख रहे हैं –] अथवा––छन्दः अधीध्वम्, व्याकरणम् अधीध्वम्, निरुक्तम् अधीध्वम् इत्येव यूयम् अधीध्वे। [ तुम सब वेद पढ़ते हो. व्याकरण पढ़ते हो, निरुक्त पढ़ते हो। ] [ उत्तमपुरुष के उदा०––] छन्दः अधीष्व, व्याकरणम् अधीष्व, निरुक्तम् अधीष्व इत्येव अहम् अधीये [ मैं वेद पढ़ता हूँ, व्याकरण पढ़ता हूँ, निरुक्त पढ़ता हूँ। द्विवचन का उदा०––]………… आवाम् अधीवहे [ हम दोनों पढ़ते हैं। बहुवचन का उदा०––]…………वयम् अधीमहे [ हम सब पढ़ते हैं। ]

[ लोट् का विधान विकल्प से है। अतः पक्ष में यथाप्राप्त लट् आदि अन्य लकार भी होते हैं। इस लिये लिख रहे हैं –] अथवा––छन्दः अधीते। व्याकरणम् अधीते, निरुक्तम् अधीते इत्येव अयम् अधीते [ यह वेद पढ़ता है, व्याकरण पढ़ता है, निरुक्त पढ़ता है, द्विवचन का उदा०—]…………इमौ अधीयाते। [ ये दोनों पढ़ते हैं। बहुवचन का उदा०––]…………इमे अधीयते। [ ये सब पढ़ते हैं। [ मध्यमपुरुष एकवचन का उदा०— 'छन्दः अधीषे, व्याकरणम् अधीषे, निरुक्तम् अधीषे इत्येव त्वम् अधीषे। [ तुम वेद पढ़ते हो, व्याकरण पढ़ते हो, निरुक्त पढ़ते हो। द्विवचन का उदा०—]…………युवाम् अधीयाथे। [ तुम दोनों पढ़ते हो। बहुवचन का उदा०—]…………यूयम् अधीध्वे। [ तुम सब पढ़ते हो। उत्तमपुरुष एकवचन का उदा०—] छन्दः अधीये, व्याकरणम् अधीये, निरुक्तम् अधीये इत्येव अहम् अधीये। [ मैं वेद पढ़ता हूँ, व्याकरण पढ़ता हूँ, निरुक्त पढ़ता हूँ। द्विवचन का उदा०—]…………आवाम् अधीवहे। [ हम दोनों पढ़ते हैं। बहुवचन का उदा०—]…………वयम् अधीमहे। [ हम सब पढ़ते हैं। ]

**विमर्श**—इस सूत्र में और पूर्ववर्ती सूत्र में जो उदाहरण दिये गये हैं उनमें दो वाक्य हैं उनमें परस्पर अभेद सम्बन्ध है। काशिकाकार ने यह नहीं लिखा है। परन्तु सिद्धान्तकौमुदी में अर्थ पर विचार करते समय लिखा है— ''याहि याहि इति याति। पुनः पुनः अतिशयेन वा यानं ह्यन्तस्य [ =याहि याहि—अस्य ] अर्थः। एककर्तृकं वर्तमानं यानं याति–इत्यस्य [ अर्थः ] इति–शब्दस्तु अभेदान्वये तात्पर्यं ग्राहयति।' [ सिद्धान्तकौमुदी सूत्र सं० २८२८ पा० सू० ३।४।५ ] इस वाक्य का शाब्दबोध वहीं पर बालमनोरमाकार ने यह लिखा है—''तथा च पुनः पुनरतिशयेन वा यद् यानं तदात्मकम् एककर्तृकं वर्तमानं यानमिति बोधः। [ बालमनोरमा-व्याख्या पूर्वोक्त सूत्र पर। ] अतः लोडन्त पदसमुदाय और अनुप्रयोग वाले पदसमुदाय का अभिन्न अर्थ है, इति शब्द इसी का तात्पर्यग्राहक है। इसलिए ऊपर के सभी उदाहरण-

## ११३७. यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥ ४ ॥ ( २८२७ )

**पूर्वस्मिन् लोड्विधाने यथाविध्यनुप्रयोगो भवति। यस्माद्धातोर्लोड्विहितः स एव धातुरनुप्रयोक्तव्यः।**

**न्यासः**

**यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥ पूर्वस्मिन् लोड्विधाने** इत्यादेर्वाक्यस्य यस्माद् धातोरित्यादिनार्थं स्पष्टीकरोति। **धातुसम्बन्धे इत्यादि।** धातुसम्बन्ध इत्यनुवृत्तेर्धातुसम्बन्ध एव लोड्विधानम्, अतोऽनुप्रयोगः सिद्ध एव, न हि तेन विना धातुसम्बन्धो भवति; तस्य द्विष्ठत्वात। यद्येवम्, किमर्थमिदं वचनम्? इत्याह— **यथाविध्यर्थं त्विति।** अथ व्यवहितप्रयोगस्य वा पूर्वस्य प्रयोगस्य वा निवृत्यर्थं कस्मान्न भवति, यथा— 'कृञ्चानुप्रयुज्यते लिटि' इति? न; तयोरपीष्टत्वात्। इष्यते हि व्यवहितप्रयोगः—लुनीहि लुनीहीत्येवायं देवदत्तो लुनाति। पूर्वप्रयोगोऽपीष्यते--लुनाति देवदत्तो लुनीहि लुनीहीति। तस्माद् यथाविध्यर्थमेवेदं युक्तम्। ननु च 'समुच्चये सामान्यवचनस्य' इति धात्वन्तरस्य समानार्थस्य प्रयोगाभ्यनुज्ञानात् क्रियासमभिहारे

**पदमञ्जरी**

**यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥ यथाविधीति।** पदार्थानतिवृत्तौ 'यथार्थे यदव्ययम्' इत्यव्ययीभावः, अनुप्रयोग इत्यनुशब्दो धात्वर्थानुवादी, न पश्चाद्भावेनानन्तर्येऽर्थे। तेन पूर्वव्यवहितप्रयोगोऽपि भवति। पूर्वस्मिन्निति वचनं विस्पष्टार्थम्। समुच्चये हि सामान्यवचनस्यानुप्रयोगं वक्ष्यति, तेन ततोऽन्यत्रायं विधिरन्यश्च विषयः पूर्वमेव लोड्विधानम्। **धातुसम्बन्धे प्रत्ययविधानादिति।** ननु च हिस्वान्तमेतदनभिव्यक्तपदार्थकम्, संख्याकालपुरुषाणामनभिव्यक्तत्वात्, अतस्तदर्थाभिव्यक्त्यर्थमेवानुप्रयोगः सिद्धः? अस्त्वेवम्, किमेतावता वृत्तिकारोक्तो हेतुर्न भवति? अथ वा यावन्तमर्थमभिव्यङ्क्तुं हिस्वान्तं समर्थं तावतो विवक्षायामनुप्रयोगासिद्धिं मत्वैवमुक्तम्। **यथाविध्यर्थं वचनमिति।** ननु च 'समुच्चये सामान्यवचनस्य' इति वक्ष्यति, तत्र नियमो विज्ञास्यते—समुच्चय एव धात्वन्तरस्यानुप्रयोग इति, ततश्च क्रियासमभिहारे यथाविध्यनुयोगो भविष्यति? एवं मन्यते—समुच्चये सामान्यवचनस्यैवानुप्रयोग इति नियमादन्यत्र धात्वन्तरस्यापि स्यादिति छिनत्तीति नानुप्रयुज्यत इति। पचतीत्यादेर्भिन्नार्थस्य त्वप्रसङ्गः, लोडन्तेनानन्वयात्। सामानार्थस्य तु सम्भवति सम्बन्धः, यथा—तस्यैव। एवं सामान्यवचनस्य करोत्यादेरप्यनुप्रयोगप्रसङ्गः, तस्यापि हि सन्निहितलोडन्तवाच्ये विशेषे पर्यवसानात्सम्भवत्येवान्वयः। ननु चैकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्यास्तृतीयस्याश्च भवति, एतच्च

**भावबोधिनी**

वाक्यों में एक ही अर्थ होता है। इसीलिये काशिकाकार ने दोनों अंशों के बीच में इति के साथ एव=इत्येव यह प्रयोग किया है।

काशिका में केवल वर्तमान काल के ही उदाहरण दिये गये हैं। भविष्यत् काल के उदाहरण हैं—भ्राष्ट्रम् अट, मठम् अट, खदूरम् अट, स्थाल्यपिधानमट इत्येव अटिष्यति [ यह भाड़ में जायगा, मठ में जायगा, खदूर में जायगा, स्थाल्यपिधान में जायगा। ] भूतकाल में—भ्राष्ट्रम् अट, मठम् अट, खदूरम् अट, स्थाल्यपिधानम् अट इत्येव आटत्। [ भाड़ में गया, मठ में गया, खदूर में गया, स्थाल्यपिधान में गया। ] दोनों कालों के सभी पुरुषों और बचनों में उदाहरणों की कल्पना इसी प्रकार कर लेनी चाहिए ॥ ३ ॥

पूर्ववर्ती लोट् के विधान में यथाविधि अनुप्रयोग होता है। जिस धातु से लोट् किया गया है, उसी धातु का अनुप्रयोग भी होना चाहिये। चूंकि धातवर्थों के सम्बन्ध में ही प्रत्यय [ लोट् ] का विधान किया जा रहा है, अतः अनुप्रयोग तो सिद्ध ही है [दो धातुओं के अर्थों का सम्बन्ध तभी सम्भव है, जब एक धातु के बाद दूसरो धातु का भी प्रयोग किया जाय। अतः अनुप्रयोग का विधान नवीन नहीं है। ]—इस स्थिति में यथाविधि के लिए ही यह सूत्र है। [ अर्थात्

धातुसंबन्धे प्रत्ययविधानादनुप्रयोगः सिद्ध एव, यथाविध्यर्थं तु वचनम् । तथा चैवोदाहृतम् – लुनीहि लुनीहीत्येवायं लुनातीति । छिनत्तीति नानुप्रयुज्यते । अधीष्वाधीष्वेत्येवायमधीते । पठतीति नानुप्रयुज्यते ॥

### ११३८. समुच्चये सामान्यवचनस्य ॥ ५ ॥ ( २८२८ )

द्वितीये लोड्विधाने समुच्चये सामान्यवचनस्य धातोरनुप्रयोगः कर्तव्यः । ओदनं भुङ्क्ष्व, सक्तून्पिब, धाना खाद—इत्येवायमभ्यवहरति ।

**न्यासः**

यथाविध्यनुप्रयोगो भविष्यतीति, तत् किमनेन वचनेन ? नैतदस्ति; समुच्चय एव हि नियमः स्यात्, क्रियासमभिहारे तु यथाविध्यनुप्रयोगः स्यात्, धात्वन्तरस्य च समानार्थस्य । तस्मादारब्धव्यमिदम् ॥ ४ ॥

**समुच्चये सामान्यवचनस्य ॥ सर्वविशेषानुप्रयोगनिवृत्त्यर्थमिति ।** यदीदं नारभ्येत तदा यावद्भ्यो धातुभ्यो लोड् विहितस्तावतामेवानुप्रयोगः प्रसज्येत; ततस्तन्निवृत्त्यर्थमेतत् । ननु चान्तरेणापीदं वचनं लाघवात् सामान्यवचनस्यैवानुप्रयोगो भविष्यति । सर्वविशेषानुप्रयोगे ह्योदनं भुङ्क्ष्व, सक्तून् पिब, धानाः खाद इत्येवायं भुङ्क्ते, पिबति, खादतीति सर्वेषु विशेषेष्वनुप्रयुज्यमानेषु गौरवं स्यादित्यत आह—**लाघवञ्चेत्यादि ।** यदि लौकिके शब्दव्यवहारे लाघवमाद्रियेत तदा तरुशब्दस्यैव प्रयोगः स्यात्, वनस्पतिशब्दप्रभृतयस्तूच्छिद्येरन्,

**पदमञ्जरी**

'कृञ्चानुप्रयुज्यते' इत्यत्र व्याख्यातम्, तत्र यथा गवां स्वामी अश्वेषु चेति न भवति, तथेहापि येनैव धातुना लोट्प्रयोगः प्रारब्धस्तेनैवासौ समापयिष्यते ? न; अस्यापि न्यायस्य वेदे लोके च व्यभिचारात् । वेदे तावत्—'इन्द्राय राज्ञे सूकर' इति चतुर्थीप्रयोगप्रकरणे 'क्षिप्रश्येनस्य वर्त्तिका ते धातुरि'ति षष्ठी, 'मयुः प्राजापत्य' इति तद्धितश्च देवतासम्बन्धे दृश्यते । लोकेऽपि सस्नुः, पयः पपुरिति लिटा सहानेनिजुरिति लङ् प्रयुक्तः । तस्मादारभ्यमेवैतत् ॥ ४ ॥

**समुच्चये सामान्यवचनस्य** ॥ ननु च हिस्वान्तस्यानभिव्यक्तपदार्थकत्वाद्धातुसम्बन्धे प्रत्ययविधानाच्चानुप्रयोगः सिद्धः, नार्थ एतेन ? तत्राह—**सर्वविशेषेति ।** असत्यस्मिन्यतो धातोर्लोड्विहितः स तस्यानुप्रयुज्येत । एवमपि हिस्वान्तार्थस्याभिव्यक्तिर्भवत्येव धातुसम्बन्धश्चोपपद्यते ।

ननु च सर्वेषु विशेषेषु यदनुगतं सामान्यं तद्वाचिनोऽनुप्रयोगेऽपि तस्य सामान्यस्य सन्निहितेषु पर्यवसानादर्थाभिव्यक्तिश्च सर्वेषां भवति, धातुसम्बन्धश्च । तत्र सामान्यवचनस्यैकस्यानुप्रयोगोऽस्तु, बहूनां

**भावबोधिनी**

जिस धातु से लोट् की विधि है, उसी धातु का अनुप्रयोग किया जाय, अन्य किसी समानार्थक का नहीं; यही इस सूत्र का उद्देश्य है । ] जैसा कि उदाहरण भी दिया गया है—लुनीहि लुनीहि इत्येव अयं लुनाति । यहाँ [ लूञ् के समानार्थक ] छिनत्ति का अनुप्रयोग नहीं होता है । अधीष्व अधीष्व इत्येव अयम् अधीते । यहाँ 'पठति' इसका अनुप्रयोग नहीं होता है ॥ ४ ॥

द्वितीय लोट्विधान में [ अर्थात् ''समुच्चयेऽन्यतरस्याम्' ३।४।३ से जहाँ लोट् का विधान किया जा रहा है वहाँ ] समुच्चय में सामान्य अर्थ की वाचक धातु का ही अनुप्रयोग करना चाहिये । उदा०—ओदनं भुङ्क्ष्व, सक्तून् पिब, धानाः खाद इत्येव अयम् अभ्यवहरति । [ चावल खाता है, सत्तू पीता है, धान खाता है, यह सब खाता है । ]

सभी विशेष धातुओं का अनुप्रयोग रोकने के लिये यह सूत्र है । [ अन्यथा जितनी भी धातुओं से लोट् का विधान किया गया है उतनी सभी धातुयें अनुप्रयोग के लिये प्राप्त होंगी । उन्हें रोककर किसी सामान्यार्थवाची का अनुप्रयोग हो—इसी उद्देश्य से यह सूत्र है । ] लौकिक शब्दव्यवहार में लाघव को विशेष महत्त्व नहीं दिया जाता है । [ अतः भुज् पिब

**सर्वविशेषानुप्रयोगनिवृत्त्यर्थं वचनम् । लाघवं च लौकिके शब्दव्यवहारे नाद्रियते । भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्यपिधानमटेत्येवायमटतीत्यत्रापि कारकभेदात् क्रियाभेदे सति सामान्यवचनता सम्भवत्येव ॥**

**११३९. छन्दसि लुङ्लङ्लिटः ॥ ६ ॥ ( ३४२३ )**

**'धातुसम्बन्धे' इत्येव । छन्दसि विषये धातुसम्बन्धे सर्वेषु लुङ्लङ्लिटः प्रत्यया भवन्ति । 'अन्यतरस्याम्' इति वर्त्तते । तेनान्येऽपि लकारा यथायथं भवन्ति । लुङ्—शकलाङ्गुष्ठकोऽकरत् । अहं तेभ्योऽकरं नमः ( वा० सं० १६.८ ) । लङ्-अग्निमद्य होतारमवृणीतायं यजमानः ( शां श्रौ० ५.२०.५ ) । लिट्-अद्य ममार ( ऋ० १०.५५.५ ) । अद्य म्रियते ॥**

**न्यासः**

न चैवम्, तस्मान्नास्ति लौकिकशब्दप्रयोगे गुरुलाघवं प्रत्यादरः । ननु च भ्राष्ट्रमटेत्यादावुदाहृणे कारकस्यैव समुच्चयो भ्राष्ट्रादेः, न क्रियायाः, तस्या एकत्वात्; अनेकाधारत्वञ्च सामान्यम्, एकत्वे क्रियायास्तन्न सम्भवति, तत् कथं सामान्यवचनस्यानुप्रयोग उपपद्यते ? इत्याह—**भ्राष्ट्रमटेत्यादि** । गतार्थम् ॥ ५ ॥

**छन्दसि लुङ्लङ्लिटः ॥ यथायथमिति** । यथास्वम् । यो यस्यात्मीयो विषयः स तत्रेत्यर्थः । **अकरदिति** । 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेरङ्, 'ऋदृशोऽङि गुणः' । **अकरमिति** । मिपोऽम् । **अवृणीतेति** । वृञो लिङ्, क्र्यादित्वात् श्ना, पूर्ववदीत्वम् । **ममारेति** । लिट्, 'म्रियतेर्लुङ्लिङोश्च' इति नियमात् परस्मैपदम्, णल्, वृद्धिः, रपरत्वम्, 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् मृ इत्येतद् द्विरुच्यते, 'उरत्' इत्यत्वम्, रपरत्वम्, हलादिशेषः ॥ ६ ॥

**पदमञ्जरी**

विशेषवाचिनां वेति सम्प्रधारणायामेकस्यैव भविष्यति, लघुत्वात्तत्राह—**लाघवं चेति** । अन्यथा तरुद्रुमादीनामेव प्रयोगः स्यात्, न वनस्पत्यादिशब्दानामिति भावः । ननु भ्राष्ट्रमटेत्यादौ तस्यैवानुप्रयोगात्कथं सामान्यवचनता ? तत्राह—**भ्राष्ट्रमटेत्यादि । कारकभेदात् क्रियाभेदे सतीति** । भेदनिबन्धनः समुच्चयोऽप्येवमेवात्रोपपाद्यः ॥ ५ ॥

**छन्दसि लुङ्लङ्लिटः** ॥ उदाहरणेषु धातुसम्बन्धो मृग्यः । **अकरदिति** । 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेरङादेशः, 'ऋदृशोऽङि गुणः' ॥ ६ ॥

**भावबोधिनी**

खाद—के साथ 'अभ्यवहरति' इस बड़ी धातु के अनुप्रयोग में भी गौरव की शंका नहीं करनी चाहिए । ] भ्राष्ट्रम् अट, मठम् अट, खदूरम् अट, स्थाल्यपिधानम् अट इत्येव अटति । [ अर्थ पूर्वोक्त ही है ] यहाँ कारकभेद से क्रियाभेद रहने पर सामान्यवचनता सम्भव ही है । [ भाव यह है कि भ्राष्ट्र आदि-सम्बन्धी गमन के लिये इन कर्म एवं कर्ता कारकों को अनेक मानना चाहिये । तभी इन वाक्यों का प्रयोग हो रहा है । अतः इनके प्रयोग से क्रियाओं का भी भेद मानकर एक क्रिया का प्रयोग करने पर उसकी सामान्यवचनता स्पष्ट है ॥ ५ ॥

"धातुसम्बन्धे" इसकी अनुवृत्ति होती है । छन्दः = वेद में धात्वर्थों का सम्बन्ध रहने पर सभी [ कालों ] में लुङ् लङ् एवं लिट् प्रत्यय होते हैं । यहाँ 'अन्यतरस्याम्' की भी अनुवृत्ति होती है । इसलिये अपने अपने विषय में [ इन लकारों के साथ ] अन्य लकार भी होते ही हैं । उदा०—लुङ्—शकलाङ्गुष्ठकोऽकरत् । [ यहाँ अकरत् लुङ् है । √कृ + लुङ्, तिप्, अट्, च्लि का अङ् = अ आदेश अ + कृ + अ + ति, "ऋदृशोऽङि" ७।४।१६ से ऋ का गुण रपर, "इतश्च" ३।४।१०० से इकार का लोप—अकरत् । ] अहं तेभ्योऽकरं नमः । लङ् [ का प्रयोग ]—अग्निमद्य होतारमवृणीताद्य यजमानः । [ अवृणीत—√वृ + लङ्, अट्, त, श्ना = ना करने पर अ वृ + ना + त, 'आ' का ई और न् का णत्व करने पर—अवृणीत । ] लिट् [ का प्रयोग ]—अद्य ममार [ √मृ + लिट्, तिप्, णल्—मृ + अ, ऋ को वृद्धि, रपर, द्वित्व

**११४०. लिङर्थे लेट् ॥ ७ ॥ ( ३४२४ )**

'छन्दसि' 'अन्यतरस्याम्' इति वर्त्तते। **लिङर्थे—यत्र लिङ् विधीयते विध्यादिः 'हेतुहेतुमतोर्लिङ्' ( ३.३.१५६ ) इत्येवमादिः, तत्र छन्दसि विषयेऽन्यतरस्यां लेट् प्रत्ययो भवति। जोषिषत्** ( ऋ० २.३५.१ )। **तारिषत्**। ( ऋ० १.२५.१२ )। **मन्दिषत्। नेता इन्द्रो नेषत्** ( शा० श्रौ० ७.९.१ ) **तक्षिषत्। पतांति विद्युत्** ( ऋ० ७.२५.१ )। **प्रजापतिरु दधि च्यावयाति** ( तै० सं० ३.५.५.२ )॥

**११४१. उपसंवादाशङ्कयोश्च ॥ ८ ॥ ( ३४३१ )**

**न्यासः**

**लिङर्थे लेट् ॥ नेषत्। तक्षिषदिति।** नयतेस्तक्षतेश्च लेट्, तिप्, 'इतश्च लोपः परस्मैपदेषु' इतीकारलोपः, 'सिब् बहुलं लेटि' इति सिप्, 'लेटोऽडाटौ' इत्याट्। तक्षिषदित्यत्र 'आर्द्धधातुकस्य' इत्यादिनेट्। जोषिषदित्यादीन्युदाहरणानि 'सिब् बहुलं लेटि' इत्यत्र व्युत्पादितानि ॥ ७ ॥

**उपसंवादाशङ्कयोश्च ॥ उपसंवादः परिभाषणम्, कर्त्तव्ये पणबन्ध इति।** उपसंवादशब्दस्येमौ पर्यायौ। यदि मे भवानित्यादिनोपसंवादस्य **स्वरूपं** दर्शयति। कारणत इत्यादिनाप्याशङ्कायाः। **अनुसरणमिति।**

**पदमञ्जरी**

**लिङर्थे लेट् ॥ जोषिषदिति।** 'जुषी प्रीतिसेवनयोः' अनुदात्तेत्, व्यत्ययेन परस्मैपदम्, 'इतश्च लोपः परस्मैपदेषु', 'लेटोऽडाटौ' इति तिपोऽडागमः, 'सिब्बहुलं लेटि' इति सिप्, इडागमः। **तारिषदिति।** सिब्विधौ बहुलं णिद्वद्भाव उक्तः, ततो वृद्धिः। **पतातीति।** 'पत्लृ गतौ', तिप आडागमः ॥ ७ ॥

**उपसंवादाशङ्कयोश्च ॥ यदि मे भवानित्यादिनोपसंवादस्य** स्वरूपं दर्शयति। **कारणत इत्यादिना।** शङ्कायाः अनुसरणमनुगमनमित्यर्थः। **अहमेवेत्यादि।** त्रिपुरविजये देवैः प्रार्थितस्य देवस्यैतद्वचनम्। 'ईश

**भावबोधिनी**

एवम् अभ्यास-सम्बन्धी कार्य करने पर ममार। ] अद्य म्रियते [ "म्रियतेर्लुङ्लिङोश्च" १।३।६१ से शित् = श विकरण परे रहते आत्मनेपद होता है—√मृ + लट् त, श = अ, मृ + अ + त, "रिङ् शयग्लिङ्क्षु" ७।४।२८ सूत्र से ऋ का रिङ् आदेश, म्रि + अ + त, इ का इयङ् और टि का एत्व करने पर म्रियते होता है। ]

विमर्श—यहाँ काशिकाकार ने 'धातुसम्बन्धे' की अनुवृत्ति तो मानी है परन्तु उदाहरण—वाक्यों में एक ही धात्वर्थ का प्रयोग किया है। अतः दो या अधिक धात्वर्थों के वैदिक उदाहरणों की खोज करनी चाहिये। चूँकि वैदिक विधियाँ प्राय. बाहुल्येन होती हैं अतः धात्वर्थों के सम्बन्धाभाव में भी इन लकारों का प्रयोग हो सकता है। ये लकार तीनों कालों में होते हैं। अतः लक्ष्यानुसार अर्थ करना चाहिये। यही इस सूत्र का उद्देश्य प्रतीत होता है ॥ ६ ॥

'छन्दसि' तथा 'अन्यतरस्याम्' इन दो की अनुवृत्ति होती है। लिङ् के अर्थ में = जिन अर्थों में लिङ् किया जाता है—विधि [-निमन्त्रण ] आदि और "हेतु-हेतुमतोर्लिङ्" ३।३।१५६ [ भविष्यत्कालिक कारण और कार्य-क्रियाओं में लिङ् होता है ]—आदि हैं, इनमें वैदिक विषय में विकल्प से लेट् प्रत्यय होता है। उदा०—जोषिषत् [ प्रीति या सेवन करे ] तारिषत् [ पार करे ]। मन्दिषत् [ मन्द चले ]। नेता नेषत् [ नेता ले जाय ]। तक्षिषत् [ काटे ]। पताति विद्युत्। [ बिजली गिरे ]। उदधि च्यावयाति। [ समुद्र को च्युत कर दे। ] [ जोषिषत्—√जुष + लेट्, तिप्, "सिब् बहुलं लेटि" ३।१।३४ से सिप् = स्, जुष् + स् + ति, इट्, उपधागुण जोष् + इ + स् + ति, "लेटोऽडाटौ" ३।४।९४ से अट् आगम ति से पूर्व—जोष् + इ + स् + अति। मूर्धन्यादेश 'इ' का लोप जोषिषत्। पताति—√पत + लेट् "लेटोऽडाटौ" ३।४।९४ से आट् आगम, पत् + आ + ति ॥ ७ ॥

उपसंवाद = परिभाषण, किसी कर्तव्य की शर्त लगाना, प्रतिज्ञा करना—"यदि आप मेरा यह काम कर दें तो मैं भी आपको यह दूंगा।" कारण से कार्य का अनुसरण = अनुमान, तर्क, = उत्प्रेक्षा = आशंका है। उपसंवाद और आशंका

उपसंवादः = परिभाषणम्, कर्त्तव्ये पणबन्धः – 'यदि मे भवान् इदं कुर्याद् अहमपि भवते इदं दास्यामि' इति । कारणतः कार्यानुसरणं तर्कः = उत्प्रेक्षा = आशङ्का । उपसंवादे आशङ्कायां च गम्यमानायां छन्दसि विषये लेट् प्रत्ययो भवति । उपसंवादे—अहमेव पशूनामीशै ( काठक सं० २५.१ )। मदंग्रा एव वो ग्रहा गृह्यान्तै ( तै० सं० ६.४.७.१ ) इति । मद्देवत्यान्येव वः पात्राण्युच्यान्तै ( तै० सं० ६.४.७.२ )। आशङ्कायां च— नेज्जिह्मायन्त्यो नरकं पताम । ( ऋ० खि० १०.१०६.१ ) जिह्माचरणेन नरकपात आशङ्क्यते ।

**न्यासः**

अनुगमनम्, अनुमानमित्यर्थः । **तर्क उत्प्रेक्षेति** । आशङ्काया इमौ पर्यायौ । **अहमेवेत्यादि** । देवैः पशुपति-रुक्तस्त्रिपुरं जहीति, तेनोक्तम्—**अहमेव पशूनामीशै इति** । ब्रह्महत्याभागं गृहाणेत्युक्ते आदित्य इदमुक्तवान्— **मदग्रा एव वो ग्रहा गृह्यान्तै । मद्देवत्यान्येव वः पात्राण्युच्यान्तै** । ईशै इति—'ईश ऐश्वर्ये', उत्तमपुरुषैकवचनम्, इट्, टेरेत्त्वम्, 'एत ऐ' । **गृह्यान्तै इति**—'ग्रह उपादाने', 'झोऽन्तः', कर्मणि 'सार्वधातुके यक्', ग्रह्यादिसूत्रेण संप्रसारणम् । शेषं पूर्ववत् साधनम् । **उच्यान्तै इति**—'वच परिभाषणे', वच्यादिसूत्रेण संप्रसारणम् । शेषं पूर्ववत् । **पतामेति**—'पत्लृ गतौ', मस्, 'लेटोऽडाटौ, इत्याट् । **जिह्माचरणेनेत्यादिना** पूर्वोक्तमाशङ्कालक्षण-मुदाहरणे दर्शयति ।

**पदमञ्जरी**

ऐश्वर्ये', उत्तमैकवचनमिट्, टेरेत्वम्, 'वैतोन्यत्र' इत्यैकारः । पशवो द्विपादश्चतुष्पादश्च । 'वायुं देवा अब्रुवन्सोमं राजानं हनामेति, सोऽब्रवीद्वरं वृणै, **मदग्रा एव वो ग्रहा गृह्यान्तै इति** । मदग्रहोऽग्रं प्रथमं येषां ते तथोक्ताः, ग्रहेः कर्मण्यात्मनेपदं यक्, ग्रहिज्यादिना सम्प्रसारणम्, झस्याडागमः, पूर्ववदैत्वम् । 'देवाः सोममघ्नन्, सोऽपूयदशक्यतामागमत्, ते वायुमब्रुवन् इमं नः स्वदयेति, सोऽब्रवीद्वरं वृणै, **मद्देवत्यान्येव वः पात्राण्युच्यान्तै** इति । अहं देवता येषां तानि तथोक्तानि । उच्यान्तै इति वचेः 'वचिस्वपि' इत्यादिना सम्प्रसारणम्, शेषं पूर्ववत् । **नेज्जिह्मायत्न्य इति** । इच्छब्द आशङ्कां द्योतयति । जिह्मचरणेन नरकपातः सम्भाव्यते, स मा भूदित्यर्थः । जिह्मम् = कुटिलं पापम्, 'छन्दसि परेच्छायाम्' इति क्यच्, 'अश्वाघस्यात्' इति योगविभागेनात्वम् । वृत्तौ तु वस्तुमात्रं दर्शितम् । **जिह्माचरणेनेति** । न पुनराचारे उपमानादन्यत्र क्यजस्ति । हेतौ शतृप्रत्ययः ।

**भावबोधिनी**

गम्यमान रहने पर वैदिक विषय में लेट् प्रत्यय होता है । उदा०—उपसंवाद में—अहमेव पशूनामीशै [ ईशै—√ईश् + लेट्, उत्तमपुरुष एकवचन में 'इट् = इ' प्रत्यय ईश् + ए, "टित आत्मनेपदानां टेरे' ३।४।७६ से टि = इ का ए और "वैतोऽन्यत्र" ३।४।९६ से ए का ऐ—ईशै । ] मदग्रा एव वो ग्रहा गृह्यान्तै [ √ग्रह + लेट् कर्म अर्थ में, अतः आत्मनेपद ग्रह + झ, झ का अन्तादेश, "सार्वधातुके यक्" ३।१।६७ से यक् = य, "ग्रहिज्यावयि०" ६।१।१६ से रेफ का सम्प्रसारण ऋ, अ का पूर्वरूप गृह + य + अन्त, "लेटोऽडाटौ" ३।४।९४ से झ = अन्त के पूर्व आट् आगम, टि का ए और "वैतोऽन्यन्यत्र" ३।४।९६ से ए का ऐ करने पर गृह्यान्तै । ] मद्देवत्यान्येव वः पात्राण्युच्यान्तै । [ वच् + लेट्, कर्म में आत्मनेपद झ = अन्त, यक्, "वचिस्वपियजादीना किति ६।१।१५ से व् का सम्प्रसारण अ का पूर्वरूप—उच् + य + अन्त, आट् आगम दीर्घ टि का एत्व, ए का ऐ—उच्यान्तै । ] और आशङ्का में उदा—नेज्जिह्मायन्त्यो नरकं पताम । [ न इत् जिह्मायन्त्यो —जिह्म = कुटिल = पाप, 'छन्दसि परेच्छायाम्" ३।२।८ वा० २ से क्यच् = य, आत्व जिह्माय को नामधातु मानकर शतृप्रत्ययान्त रूप है । पताम—पत + लेट्, उत्तमपुरुष बहुवचन में मस्, आट् का आगम पत् + आ + मस्, शप् = अ, सवर्णदीर्घ, स् का लोप पताम—कुटिल आचरण करते हुये हम लोग कहीं नरक में न जा गिरें । ] कुटिल आचरण से नरक-पतन की आशंका की जा रही है ।

**लिङर्थ एवायम् । नित्यार्थं तु वचनम्; पूर्वसूत्रे 'अन्यतरस्याम्' इति वर्त्तते ॥**

**११४२. तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ॥९॥ (३३३६)**

**'छन्दसि' इत्येव । तुमुनोऽर्थस्तुमर्थः । तत्र छन्दसि विषये धातोः सयादयः प्रत्यया भवन्ति । तुमर्थो भावः । कथं ज्ञायते वचनसामर्थ्यात् । तावदयं कर्तुरपकृष्यते । न चायमन्यस्मिन्नर्थे तुमुन् आदिश्यते । अनिर्दिष्टा-**

न्यासः

**लिङर्थ एवायमिति ।** हेतुहेतुमद्भावः । कथम् ? उपसंवादे तावद्--यदि मे भवानिदं कुर्यादहमपि त इदं दास्यामीत्येवंविधं परिभाषणलक्षणम् । तत्र च करणं हेतुः, दानं हेतुमदिति युक्त उपसंवादो लिङर्थः । आशङ्कापि कारणतः कार्यानुसरणम् । तत्रापि कारणं हेतुः, कार्यानुसरणं हेतुमदित्याशङ्कापि लिङर्थ एव । यद्येवम्, पूर्वेणेव सिद्धम्, तत् किमर्थमिदमुच्यते ? इत्याह--**नित्यार्थं वचनमिति** । स्यादेतत्, पूर्वेणैव नित्यं भविष्यतीत्याह--**पूर्वसूत्र इत्यादि**॥ ८ ॥

**तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ॥ कथं ज्ञायत इति ॥** 'कर्त्तरि कृत्' इति वचनात् कर्त्तेव तुमर्थो युक्त इति मन्यते । **वचनसामर्थ्यादित्यादि** । यदि कर्त्तेव तुमर्थः स्यात् तुमर्थवचन-मनर्थकं स्यात्, कृत्त्वादेव हि सयादयः कर्त्तरि भविष्यन्ति । तस्मात् तुमर्थग्रहणाल्लिङ्गात् कर्त्तरि तुमुन्न भवति । **अपकृष्यते** । अपनीयते । कर्त्तरि न भवतीति यावत् । स्यादेतत्, कर्मादिरस्यार्थो भविष्यतीत्याह—**न चेत्यादि** ।

पदमञ्जरी

**लिङर्थ एवायमिति** । हेतुहेतुमद्भावे, कथम् ? उपसंवादे तावत्करणं हेतुः, दानं हेतुमत्; अन्यथा यदि मे भवानिदं कुर्यादिति लिङ् न स्यात्, विभाषा तु लिङिति । अहमपि ते इदं दास्यामीति लृट् । **भाष्ये तु** ददातेरपि लिङ् प्रयुक्तः । आशङ्कापि कारणतः कार्यानुसरणम्, तत्र कारणं हेतुः, कार्यं हेतुमत् । अथापि करणमवधिः, दानमवधिमदित्यवध्यवधिमद्भाव उपसंवादे प्रतीयते, न हेतुहेतुमद्भावः, आशङ्कायामपि निश्चितो हेतुहेतुमद्भावो नास्तीत्युच्येत, तथापि लिङ्प्रयोगसिद्धयेऽवश्यं वक्तव्योऽत्र हेतुहेतुमद्भावः । अतो लिङर्थ एवायमित्यर्थः । **नित्यार्थं तु वचनमिति** । छन्दसि नित्योऽत्र लिङ् दृश्यत इति मन्यते, तथापि व्यवस्थित-विभाषया सिद्धमिति चेत्तदेव तर्हि वचनेन ज्ञाप्यते ॥ ८ ॥

**तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ॥ कथं ज्ञायत इति** । 'कर्त्तरि कृत्' इति वचनात् भावस्तुमर्थो नोपपद्यत इति प्रश्नः । अपकर्षः = अपनयः, स्वार्थश्च धातूनां भाव इति

भावबोधिनी

लिङर्थ में ही यह [ विधान ] है । नित्य करने के लिये प्रस्तुत सूत्र है क्योंकि पहले वाले सूत्र में 'अन्यतरस्याम्' [ विकल्प ] की अनुवृत्ति होती है ॥ ८ ॥

'छन्दसि' [ वेद में ] इतने की ही अनुवृत्ति होती है । तुमुन् प्रत्यय का अर्थ--तुमर्थ है । इस तुमुन् के अर्थ में वेदविषय में 'से' आदि [ से, सेन्, असे, असेन्, क्से, कसेन्, अध्यै, अध्यैन्, कध्यै, कध्यैन्, शध्यै, शध्यैन् तवै, तवेङ्, तवेन् ] १५ प्रत्यय होते हैं । तुमुन् का अर्थ भाव [ धातु का अपना साध्यरूप अर्थ ] है । कैसे ज्ञात होता है ? इस सूत्र के बल से [ भाव यह है कि यदि तुमुन् का अर्थ 'कर्ता' रहता तब तो यहाँ कृत् होने से वह अर्थ सिद्ध ही था तब 'तुमुन् के अर्थ में'--इसको कहना व्यर्थ होता । यह ऐसा कथन ही तुमुन् की भावार्थता का प्रमाण है । ] इस कर्ता अर्थ को दूर कर दिया जाता है । और किसी [ कर्मादि ] अर्थ में तुमुन् का विधान नहीं है । [ भाव अर्थ में भी तो तुमुन् का विधान नहीं है ? ] जिनके अर्थ का निर्देश नहीं रहता है वे प्रत्यय स्वार्थ में होते हैं । और धातुओं का स्वार्थ [ अपना अर्थ ] भाव [ साध्यावस्थारूप ] ही है । [ अतः तुमुन् के भाव अर्थ में होने से ये १५ प्रत्यय भी भाव अर्थ में ही होते हैं । "अव्ययकृतो भावे" इस वचन से इनका भाव अर्थ स्पष्ट है । ] उदा०—(१) से—वक्षे रायः [ √वच् + से, कुत्व, स् का

**र्थाश्च प्रत्ययाः स्वार्थे भवन्ति ( पृ० १२२ )। स्वार्थश्च धातूनां भाव एव। से-वक्षे रायः। सेन्-ता वामेषे रथानाम् ( ऋ० ५.५६.३ )। असे, असेन्-क्रत्वे दक्षाय जीवसे ( अथर्व० ६.१९.२ )। स्वरे विशेषः। क्से, - प्रेषे भगाय। कसेन्-श्रियसे' (तै० सं० १.२.११.१)। अध्यै, अध्यैन् - काममुपाचरध्यै ( तै० सं० १.२.११.१ )। स्वरे विशेषः। कध्यै - इन्द्राग्नी आहुवध्यै ( वाज० सं० ३.१३ )। कध्यैन् - श्रियध्यै। शध्यै, शध्यैन् - वायवे पिबध्यै ( ऋ० ७.२२.२ )। राधसः सह मादयध्यै ( वाज० सं० ३.१३ )। तवै - सोममिन्द्राय पातवै ( ऋ० ८.६९.१० )। तवेङ् - दशमे मासि सूतवे ( ऋ० १०.१८४.३ )। तवेन् - स्वर्देवेषु गन्तवे ( अथर्व० ९.५.१७ ) कर्त्तवे ( ऋ० ९.८६.२० ) हर्त्तवे।**

**न्यासः**

**अन्यस्मिन्निति**। कर्मादौ। यथा तर्हि कर्मादावनिर्देशान्न भवति तथा भावेऽपि न स्यात्। भावेऽपि नैव तुमुन्निर्दिश्यत इत्याह—**अनिर्दिष्टार्था इत्यादि**। अर्थान्तरस्य निर्देशाद् या प्रकृतिः प्रत्ययानां निमित्तत्वेनोपादीयते तदर्थस्य प्रत्यासत्तेस्तत्रैवानिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति, स पुनरिह स्वार्थो भावः। कुत एतत्? धात्वधिकारात्, धातोश्च भाववचनत्वात्। यद्येवम् भावग्रहणमेव कुर्यात्, लघुत्वात्? नैवं शक्यम्; भावग्रहणे सति 'कर्त्तरि कृत्' इति वचनात् तुमुन् कर्त्तर्येव स्यात्। तुमर्थग्रहणे हि तुमुनोऽपि हि भाव एवार्थ इत्येतद् ज्ञापितं भवतीति न कश्चिद्दोष इति। **वक्ष इति**। 'वच परिभाषणे', सेप्रत्ययः, 'चोः कुः' इति कुत्वम्। **एष इति**। इणः सेन्प्रत्ययः। **जीवस इति**। 'जीव प्राणधारणे'। प्रत्ययद्वयस्याप्येतदेवोदाहरणम्, स्वरस्तु भिद्यते। **प्रेष इति**। इणः प्रपूर्वात् क्से, 'आद् गुणः'। **श्रियस इति**। 'श्रिञ् सेवायाम्', अस्मात् कसेन्, इयङ्। **उपाचरध्यै इति**। 'चर गत्यर्थः', उपाङ्पूर्वः। प्रत्ययद्वयस्यापीदमुदाहरणम्, स्वरभेदात्तु भेदः। **आहुवध्यै इति**। जुहोतेराङ्पूर्वात् कध्यैप्रत्ययः, उवङादेशः। श्रियध्यै इति। श्रयतेः कध्यैन्, इयङ्। **पिबध्यै इति**। 'पा पाने', शध्यै, पाघ्रादिसूत्रेण पिबादेशः। **मादयध्यै इति**। 'मदी हर्षे', हेतुमण्णिच्, शध्यैन्, गुणायादेशौ। **पातवै इति** पिबतेस्तवै। **सूतवे इति**। 'षूङ् प्राणिगर्भविमोचने', तवेङ्, ङित्त्वाद् गुणाभावः। **गन्तवे** इत्यादीन्युदाहरणानि गमिकरोतिहरतीनां यथाक्रमेण॥ ९॥

**पदमञ्जरी**

साध्यमानतारूपः। स एव हि धातुवाच्यो भावः। घञादिवाच्यस्तु भावो धात्वर्थव्यतिरिक्तः सिद्धतारूपः। **पिबध्यै इति**। 'यको बहुलं छन्दसि' इति लुकि पिबादेशः। **मादयध्यै इति**। यकः प्रसङ्गे व्यत्ययेन शप्॥ ९॥ १०॥

**भावबोधिनी**

षः वक्+षे क् और ष का क्ष आदेश— वक्षे—कहने के लिये ] (२) सेन्—ता वामेषे रथानाम् [ √इ+सेन्, न् की इत्संज्ञा लोप, √इ का गुण, स का ष √एषे—जाने के लिये। ] (३) असे, (४) असेन्— क्रत्वे दक्षाय जीवसे [ √जीव्+असे, या असेन्, दोनों में यही रूप हैं। जीने के लिये। ] स्वर में भेद है। [ नित् होने पर आद्युदात्त होता है। ] (५) कसे,—प्रेषे भगाय [ प्रपूर्वक √इण्+क्से=प्र+इ+से, मूर्धन्यादेश और "आद्गुणः" ६।१।८७ से अ+इ का गुण 'ए'—प्रेषे—प्रकृष्ट रूप से जाने के लिये। ] (६) कसेन्—श्रियसे [ श्रि+कसेन्=असे, इ का इयङ् आदेश—सेवा के लिये। ] (७) अध्यै, (८) अध्यैन्—कर्मणि उपाचरध्ये [ काममुपाचरध्यै। उपाचर्+अध्यै अथवा अध्यैन्। उपाचर के लिये—अर्थ है। नित् में आद्युदात्त ] स्वर का भेद हो जाता है। (९) कध्यै—इन्द्राग्नी आहुवध्यै [ आङ्पूर्वक √हु+कध्यै=अध्यै, उ का उवङ्=उव आदेश—आहुवध्यै—हवन के लिये ] (१०) कध्यैन्—श्रियध्यै [ √श्रि+कध्यैन्=अध्यै, इ का इयङ् आदेश। सेवा के लिये। ] (११) शध्यै, (१२) शध्यैन्—पिबध्यै [ √पा+शध्यै अथवा शध्यैन्, शित् होने से

## ११४३. प्रयै रोहिष्यै अव्यथिष्यै ॥ १० ॥ ( ३४३७ )

'तुमर्थे छन्दसि' इत्येव । प्रयै, रोहिष्यै, अव्यथिष्यै – इत्येते शब्दा निपात्यन्ते छन्दसि विषये । प्रपूर्वस्य यातेः कैप्रत्ययः – प्रयै देवेभ्यः, ( ऋ० १.१४२.६ ) । प्रयातुम् । रुहेः इष्यैप्रत्ययः – अपामोषधीनां रोहिष्यै ( तै० सं० १.३.१०.२ ) । रोहणाय । व्यथेर्नञ्पूर्वस्य इष्यैप्रत्ययः – अव्यथिष्यै, ( का० सं० ३.७ ) । अव्यथनाय ॥

## ११४४. दृशे विख्ये च ॥ ११ ॥ ( ३४३८ )

'तुमर्थे', 'छन्दसि' इत्येव । दृशे, विख्ये—इत्येतौ छन्दसि विषये निपात्येते । दृशेः के प्रत्ययः – दृशे विश्वाय सूर्यम्, ( ऋ० १.५०.१ ) द्रष्टुम् । विख्ये त्वा हरामि, विख्यातुम् ॥

### न्यासः

प्रयै रोहिष्यै अव्यथिष्यै ॥ प्रयै इति । 'आतो लोप इटि च' इत्याकारलोपः ॥ १० ॥

दृशे विख्ये च ॥ दृशे इति । दृशेः केप्रत्ययः । विख्ये इति । विपूर्वाच्चक्षिङः ख्यातेर्वा केप्रत्ययो निपात्यते ॥ ११ ॥

### पदमञ्जरी

दृशे विख्ये च ॥ योगविभागश्चिन्त्यप्रयोजनः ॥ ११ ॥

### भावबोधिनी

सार्वधातुक मान कर "पाघ्राध्मा०" ७।३।७८ से पा का पिब आदेश । नित्स्वर आद्युदात्त होता है । ] सह मादयध्यै [ प्रेरणार्थक णिच्प्रत्ययान्त √मादि + शध्यै, शध्यैन् = अध्यै, इ का गुण ए और ए का अय् आदेश—'हर्षित करने के लिये'—यह अर्थ है । स्वर में भेद है । ] ( १३ ) तवै—सोममिन्द्राय पातवै [ √पा + तवै—पीने के लिये । ] (१४) तवेङ्—दशमे मासि सूतवे । [ √सू√तवेङ्, ङित् होने से "क्ङिति च" १।१।४ से गुणनिषेध । उत्पन्न करने के लिये ] (१५) तवेन् – स्वर्देवेषु गन्तवे । [ √गम् + तवेन् = तवे । म् का अनुस्वार और परसवर्ण – जाने के लिये । ] कर्तवे √कृ + तवेन्, ऋ का गुण रपर—करने के लिये । ] हर्तवे [ √हृ + तवेन्, ऋ का गुण रपर—हरने के लिये । 'न्' अनुबन्ध इत् होने से "ञ्नित्यादिर्नित्यम्" ६।१।१९७ से आद्युदात्त होता है । ] ॥ ९ ॥

"तुमर्थे छन्दसि" इतनी ही अनुवृत्ति होती है । वेदविषय में (१) प्रयै, (२) रोहिष्यै और (३) अव्यथिष्यै—इन तीन शब्दों की निपातनात् सिद्धि होती है । प्रपूर्वक √या से कै प्रत्यय प्रया + कै = ऐ [ "आतो लोप इटि च" ६।४।६४ से धातु के आ का लोप ]—प्रयै देवेभ्यः, प्रयातुम् । [ देवताओं के उद्देश्य से जाने के लिये ] √रुह् से इष्यै प्रत्यय होता है—अपामोषधीनां रोहिष्यै । रोहण = चढ़ाने के लिये—यह अर्थ है । [ √रुह् + इष्यै, उपधा का गुण करने पर – रोहिष्यै । ] नञ्पूर्वक व्यथ धातु से इष्यै प्रत्यय होता है—अव्यथिष्यै । [ नञ् = अ + व्यथ् + इष्यै ] व्यथित न करने के लिये [ इन्हीं तीन में ऐसे प्रत्यय होते हैं, इसको सूचित करने के लिये यह पृथक् सूत्र बनाया गया है अन्यथा पूर्ववर्नी सूत्र में ही इन प्रत्ययों को भी लिख दिया जाता ] ॥ १० ॥

'तुमर्थे' और 'छन्दसि' इनकी ही अनुवृत्ति होती है । वेद में 'दृशे' और 'विख्ये' इन दो का निपातन होता है । दृश धातु से 'के' प्रत्यय होता है—दृशे विश्वाय सूर्यम् । [ दृश् + के = ए, कित् होने के गुण का निषेध—यह तुमर्थ में है अतः ] द्रष्टुम् = देखने के लिये—[ यह अर्थ है । ] विख्ये त्वा हरामि [ विपूर्वक ख्या + के = ए, आ का लोप । तुमर्थ में है अतः ] विख्यातुम् [ कहने के लिये – यह अर्थ है ] ।

विमर्श—पूर्व सूत्र में तीन शब्दों का निपातन किया गया है । वहीं इन दोनों का निपातन किया जा सकता था, अतः इस सूत्र को पृथक् बनाने का प्रयोजन स्पष्ट नहीं है ॥ ११ ॥

## ११४५. शकि णमुल्कमुलौ ॥ १२ ॥ ( ३४३९ )

[ तुमर्थे ] 'छन्दसि' इत्येव। शक्नोतौ धातावुपपदे छन्दसि विषये तुमर्थे णमुल्, कमुल् – इत्येतौ प्रत्ययौ भवतः। णकारो वृद्ध्यर्थः। ककारो गुणवृद्धिप्रतिषेधार्थः। लकारः स्वरार्थः। अ॒ग्निं वै दे॒वा वि॒भाज॒ं ना॑श॒क्नु॒वन् ( मै० सं० १.६.४ ) विभक्तुमित्यर्थः। अ॒पलु॑म्प॒ं नाशक्नोत् ( मै० सं० १.६.५ )। अपलोप्तुमित्यर्थः॥

## ११४६. ईश्वरे तोसुन्कसुनौ ॥ १३ ॥ ( ३४४० )

'तुमर्थे', 'छन्दसि' इत्येव। ईश्वरशब्द उपपदे छन्दसि विषये तुमर्थे धातोः तोसुन्कसुन्प्रत्ययौ भवतः। ईश्वरोऽभिचरितोः। अभिचरितुमित्यर्थः। ईश्वरो विलिखः। विलिखितुमित्यर्थः। ईश्वरो वितृदः। वितर्दितुमित्यर्थः॥

## ११४७. कृत्यार्थे तवैकेन्केन्यत्वनः ॥ १४ ॥ ( ३४४१ )

**न्यासः**

शकि णमुल्कमुलौ॥ विभाजमिति। विपूर्वाद् भजेर्णमुल्। अपलुपमिति। 'लुप्लृच्छेदने', कमुल्॥ १२॥

ईश्वरे तोसुन्कसुनौ॥ अभिचरितोरिति। चरतेरभिपूर्वात् तोसुन् प्रत्ययः। विलिखः, वितृद इति। लिखतेः, 'तृदिर् हिंसादानयोः' इत्येतस्माच्च कसुन्॥ १३॥

कृत्यार्थे तवैकेन्केन्यत्वनः॥ कृत्यानामर्थो भावकर्मणी इति। 'तयोरेव कृत्यक्तखलर्थाः' इति भावकर्मणोः

**पदमञ्जरी**

ईश्वरे तोसुन्कसुनौ॥ वितृद इति। 'ओतृदिर् हिंसानादरयोः'॥ १२॥ १३॥

कृत्यार्थे तवैकेन्केन्यत्वनः॥ कृत्यानामर्थो भावकर्मणी इति। यद्यपि भव्यगेयादिषु कर्त्तार्प्यर्थः, वह्यं

**भावबोधिनी**

'छन्दसि' इतनी ही अनुवृत्ति होती है। शक्नोति=शक् धातु उपपद रहते, वेदविषय में तुमर्थ में णमुल् और कमुल् ये दो प्रत्यय होते हैं। णकार वृद्धि करने के लिये है। ककार [ "क्ङिति च" १।१।५ से ] गुण और वृद्धि दोनों का प्रतिषेध करने के लिये है। लकार [ "लिति च" ६।१।१९३ से आद्युदात ] स्वर करने के लिये है। उदा०-- अग्निं वै देवा विभाजं नाशक्नुवन्॥ [ विभज् + णमुल् = अम्, उपधावृद्धि करने पर--विभाजम्--] विभक्तुम् [ =विभाग करने के लिये ]--यह अर्थ है। अपलुम्पं नाशक्नुवन् [ नाशक्नोत्। अपपूर्वक √लुप् + कमुल् = अम्, कित् होने से गुणनिषेध ] अपलोप्तुम् [ अपलोप करने के लिये ]--यह अर्थ है।

विमर्श--काशिकार ने 'छन्दसि' इत्येव—ऐसा लिखकर 'तुमर्थे' की अनुवृत्ति का संकेत नहीं किया है, परन्तु अर्थ तो तुमर्थ की अनुवृत्ति मानकर ही लिखा है। सम्भवतः उनकी असावधानी से अथवा उत्तरवर्ती प्रतिलिपिकर्त्ता आदि की असावधानी से ही 'तुमर्थे' इसका उल्लेख होना छूट गया है; क्योंकि पूर्ववर्ती और उत्तरवर्ती सूत्रों में 'तुमर्थे' 'छन्दसि' ऐसा लिखकर दोनों की अनुवृत्ति स्पष्टतया स्वीकार की है॥ १२॥

'तुमर्थे' 'छन्दसि' [ तुमुन् के अर्थ में वेदविषय में ] इनकी ही अनुवृत्ति होती है। वेदविषय में 'ईश्वर' शब्द उपपद रहते धातु से तुमर्थ में ( १ ) तोसुन् और ( २ ) कसुन् ये दो प्रत्यय होते हैं। उदा०—( १ ) ईश्वरोऽभिचरितोः [ अभि + चर् + तोसुन् = तोस्, इट् आगम, स् का रुत्व और विसर्ग—अभिचरितोः। अभिचरितुम् [ अभिचार के लिये ] यह अर्थ है। ( २ ) ईश्वरो विलिखः [ विलिख् + कसुन् = अस्, कित् होने से गुण का निषेध ] विलिखितुम् [ लिखने के लिये ]—यह अर्थ है। ईश्वरो वितृदः [ वितृद् + कसुन् = अस्, कित् होने से गुण का निषेध ] वितर्दितुम् [ मारने के लिये अथवा दान करने के लिये ]—यह अर्थ है॥ १३॥

'छन्दसि' [ वेदविषय में ] इतनी ही अनुवृत्ति होती है। कृत्य प्रत्ययों के अर्थ—भाव और कर्म हैं। इन

**'छन्दसि' इत्येव । कृत्यानामर्थो भावकर्मणी । तस्मिन् कृत्यार्थे छन्दसि विषये तवै, केन्, केन्य, त्वन् — इत्येते प्रत्यया भवन्ति । तवै-अन्वेतवै, ( ऋ० ७.४४.५ ) अन्वेतव्यम् । परिधातवै, ( अ० २.१३ २ ) परिधातव्यम् । परिस्तरितवै, ( काठ० सं० ३२.७ ) परिस्तरितव्यम् । केन्-नावगाहे, नावगाहितव्यम् । केन्य-दिदृक्षेण्यः, ( ऋ० १.१.४६.५ ) ? शुश्रूषेण्यः; ( तै० आ० ४.१ ) दिदृक्षितव्यम्, शुश्रूषितव्यम् । त्वन्-कर्त्वं हविः, ( अ० वं० १.४.३ ) कर्त्तव्यम् ।**

**'तुमर्थे छन्दसि' ( ३.४.९ ) इति सयादिसूत्रेऽपि तवै विहितः, तस्य तुमर्थादन्यत्र कारके विधिर्द्रष्टव्यः ॥**

**न्यासः**

कृत्यानां विधानात् । **अन्वेतवै इति** । अनुपूर्वादिणस्तवै । **परिधातवै इति** । परिपूर्वाद्दधातेः । **परिस्तरितवै इति** । परिपूर्वादेव 'स्तॄञ् आच्छादने' इत्यस्मात् । **अवगाहे इति** । 'गाहू विलोडने' अवपूर्वः । **दिदृक्षेण्य इति** । दृशेः सन्, द्विर्वचनम्, उरदत्त्वम्, रपरत्वम्, 'सन्यतः' इतीत्त्वम्, 'हलन्ताच्च' इति गुणाभावः, व्रश्चादिसूत्रेण षत्वम्, 'षढोः कः सि' इति कत्वम्, दिदृक्ष इति स्थिते केन्यप्रत्ययः, 'अतो लोपः' । **शुश्रूषेण्य इति** । शृणोतेः सन्, 'अज्झनगमां सनि' इति दीर्घः, द्विर्वचनमभ्यासकार्यम्, शुश्रूष इति स्थिते केन्यप्रत्ययः । **कर्त्वमिति** । करोतेस्त्वन् । **सयादिसूत्रेऽपि तवै विहित इति** । सयादीनां सूत्रं सयादिसूत्रम्, येन सयादयो विहितास्तत्रापि तवैप्रत्ययो विहितः । **तस्य तुमर्थादित्यादि** । यदि तु तस्य तुमर्थ एव भावे विधिः स्यात् तस्यानर्थक्यं स्यात्; **अनेनैव** सिद्धत्वात् । तस्माद् यद्यपि तत्र तुमर्थ इत्युच्यते, तथापि ततोऽन्यत्र कर्मकारके कर्त्रादौ तवैप्रत्ययविधानं वेदितव्यम् ॥ १४ ॥

**पदमञ्जरी**

करणम्, स्नानीयं चूर्णमित्यादिषु करणादयः; तथापि न तत्र कृत्यत्वेन कर्त्रादिषु विधानम्, किं तर्हि ? स्वरूपेण, अतः कृत्यतया विधानं भावकर्मणोरेवेति भावः ! **दिदृक्षेण्य इति** । दृशेः सन्नन्तात्केन्यः । **शुश्रूषेण्य इति** । शृणोतेः । **सयादिसूत्रेऽपीति** । येन सयादयो विधीयन्ते तत्र 'तुमर्थे सेसेनसे' इत्यत्रेत्यर्थः । **तस्य तुमर्थादन्यत्रेति** । अन्यथाऽनेनैव तुमर्थे भावेऽपि सिद्धत्वादनर्थकं तत्स्यात् ॥ १४ ॥

**भावबोधिनी**

कृत्य प्रत्ययों के अर्थ में वेदविषय में ( १ ) तवै, ( २ ) केन्, ( ३ ) केन्य और ( ४ ) त्वन्—इतने [ चार ] प्रत्यय होते हैं । उदा०—( १ ) तवै—अन्वेतवै । [ अनु + √इण् + तवै, धातु का गुण ए, उकार का यण् वकार अन्व् + ए + तवै ] अन्वेतव्यम् [ अनुगमनयोग्य ]—यह अर्थ है । परिधातवै [ परिपूर्वक √धा + तवै ] परिधातव्यम् [ धारणयोग्य ]—यह अर्थ है । परितस्तरितवै । [ परिपूर्वक √स्तॄ + तवै; इट्, ऋ का गुण रपर परिस्तर् + इ + तवै ] परिस्तरितव्यम् [ समो ओर से ढकने योग्य ] यह अर्थ है । ( २ ) केन्—नावगाहे । [ न अव + √गाह् + केन् = ए ] न अवगाहितव्यम् [ अवगाहन नहीं करने योग्य ]—यह अर्थ है । ( ३ ) केन्य—दिदृक्षेण्यः । [ सन्नन्त दृश् के √दिदृक्ष + केन्य = एन्य, कित् होने से "अतो लोपः" ६।४।४८ से अ का लोप करने पर दिदृक्षेन्य, न् का ण् ] दिदृक्षितव्यम् [ देखने की इच्छा करने योग्य ]—यह अर्थ है । शुश्रूषेण्यः [ सन्नन्त श्रु धातु के शुश्रूष + केन्य = एन्य, अलोप, न का ण् ] शुश्रूषितव्यम् [ सुनने की इच्छा करने योग्य ]—यह अर्थ है । ( ४ ) त्वन्—कर्त्वं हविः [ कृ + त्वन्, ऋ का गुण रपर ] कर्तव्यम् [ करने योग्य ]—यह अर्थ है ।

तुमर्थ में वेदविषय में 'तुमर्थे से" ३।४।९ इस सूत्र में भी 'तवै' प्रत्यय का विधान किया गया है, वह तुमर्थ में किया गया है । अतः उससे भिन्न स्थल पर कारक [ कर्मकर्ता आदि अर्थों ] में इसका विधान समझना चाहिये । [ अतः 'तवै' के उदाहरण—अन्वेतवै = अनुगमनयोग्य, परिधातवै = परिधानयोग्य ऐसा—अर्थ करना चाहिये ] ॥ १४ ॥

**११४८. अवचक्षे च ॥ १५ ॥ ( ३४४२ )**

**'कृत्यार्थे' 'छन्दसि' इत्येव । अवपूर्वाच्चक्षिङ एश् प्रत्ययो निपात्यते । रिपुणा नावचक्षे ( वाज० सं० १७.९३ ) नावख्यातव्यमित्यर्थः ॥**

**११४९. भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ॥ १६ ॥ (३४४३ )**

**'कृत्यार्थे' इति निवृत्तम् । 'तुमर्थे' इति वर्त्तते । प्रकृत्यर्थविशेषणं भावलक्षणग्रहणम् । भावो लक्ष्यते येन तस्मिन्नर्थे वर्त्तमानेभ्यः स्थादिभ्यो धातुभ्यश्छन्दसि विषये तुमर्थे तोसुन्प्रत्ययो भवति । आ संस्थातोर्वेद्यां शेरते ( काठ० सं० ११.६ ) । आ समाप्तेः सीदन्तीत्यर्थः । इण्-पुरा सूर्यस्योदेतोराधेयः ( काठ० सं० ८.३ ) । कृञ्-पुरा वत्सानामपाकर्त्तोः ( काठ० सं० ३१.१५ ) । वदि-पुरा प्रवदितोरग्नौ प्रहोतव्यम् । चरि-पुरा प्रचरितोराग्नीध्रीये होतव्यम् ( गो० ब्रा० २.२.१० ) । हु-आ होतोरप्रमत्तस्तिष्ठति ( तै० सं० १.४.९.५ ) । तमि-आ तमितोरासीत ( तै० ब्रा० १.६.९.५ ) । जनि-आ विजनितोः सम्भवामेति ( तै० सं० २.५ १.५ ) ॥**

न्यासः

**अवचक्षे च ॥ एश् प्रत्ययो निपात्यत इति ।** शित्करणं सार्वधातुकसंज्ञार्थम् । तेनार्धधातुके विधीयमानः सार्वधातुके 'चक्षिङः ख्याञ्' इति ख्याञादेशो न भवति ॥ १५ ॥

**भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ॥ आसंस्थातोरित्यादि ।** आसंस्थातोः शब्देन समाप्तिरुच्यते, तया वेद्यां सदनं लक्ष्यते । **पुरा सूर्यस्योदेतोराधेय इति ।** अत्राप्याधानक्रिया सूर्यस्योदयेन । **पुरा वत्सानामित्यादौ** वत्सानामपाकरणेनासनम् । **पुरा प्रवदितोरित्यादौ** प्रवदनेन हवनम् । **पुरा प्रचरितोरित्यादौ** प्रचरणेन हवनमेव । उत्तरयोरुदाहरणयोराहवनेनावस्थानम् । **आ तमितोरिति ।** 'तमु काङ्क्षायाम्' । **आ विजनितोरित्यादा**वाविजननेन सम्भवतम् ॥ १६ ॥

पदमञ्जरी

**अवचक्षे च ॥ एश्प्रत्यय इति ।** शित्करणं सार्वधातुकत्वार्थम्, तेन चक्षिङः ख्याञ् न भवति ॥ १५ ॥

**भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ॥** संस्थानादीनामवधित्वेन लक्षणभावः । **आ समाप्ते-**

भावबोधिनी

'कृत्यार्थे' 'छन्दसि' इतनी अनुवृत्ति होती है । अवपूर्वक चक्षिङ् धातु से एश् प्रत्यय निपातन किया जाता है । उदा०—न अवचक्षे [ अवपूर्वक √चक्षिङ् = एश् = अव चक्ष् ए । शित् प्रत्यय सार्वधातुक होने से चक्षिङ् का ख्याञ् आदेश २।४।५४ नहीं होता है ] न अवख्यातव्यम् [ नहीं कहने योग्य ]—यह अर्थ होता है ॥ १५ ॥

'कृत्यार्थे' [ कृत्य प्रत्ययों के अर्थ, भाव और कर्म में ] की निवृत्ति हो जाती है । 'तुमर्थे' [ तुमुन् के अर्थ में-]- इसकी अनुवृत्ति होती है । भावलक्षण प्रकृत्यर्थ [ धात्वर्थ ] का विशेषण है । भाव लक्षित होता है जिसके द्वारा उस अर्थ में वर्तमान √स्था आदि आठ धातुओं से वैदिक विषय में, तुमुन् के अर्थ में तोसुन् प्रत्यय होता है । [ जब एक क्रिया दूसरी क्रिया का ज्ञान कराती है, तब पहले वाली क्रिया भावलक्षण होती है । भाव = धात्वर्थ क्रिया; लक्षण = लक्षक = सूचक = ज्ञापक । ] उदा०—( १ ) असंस्थातोर्वेद्यां सीदन्ति । समाप्तिपर्यन्त यज्ञादि में बैठते हैं—यह अर्थ है [ सम्पूर्वक स्था धातु समाप्ति अर्थ में रूढ़ मानी गयी है । संस्था+तोसुन् = तोस्, स् का रुत्व विसर्ग । ये आसंस्थातः आदि शब्द अवधि =सीमा के वाचक हैं, अतः सदन = बैठना भाव = क्रिया के लक्षण = सूचक हैं । ] ( २ ) इण्- पुरा सूर्यस्योदेतोराधेयः । [ सूर्य के उदय से आधान क्रिया लक्षित होती है । उद् + इण् + तोसुन् = उद् + इ + तोस्, धातु का गुण और स् का रुत्व विसर्ग = उदेतोः । ( ३ ) कृञ्—पुरा वत्सानामपाकर्तोः । [ अप + आ + कृ + तोसुन, ऋ का गुण, रपर—अपाकर्तोः । वत्सों के अपाकरण से आसन क्रिया लक्षित होती है । ] ( ४ ) वदि—पुरा प्रवदितोरग्नौ प्रहोतव्यम् । [ यहां प्रवदन से हवन क्रिया लक्षित होती है, प्र + वद + तोसुन् = तोस्, इट् आगम, प्रवदितोस् । स् का रुत्व विसर्ग ]

## ११५०. सृपितृदोः कसुन् ॥ १७ ॥ ( ३४४४ )

**'भावलक्षणे' 'छन्दसि' इति वर्त्तते। सृपितृदोर्धात्वोर्भावलक्षणेऽर्थे वर्तमानयोश्छन्दसि विषये तुमर्थे कसुन् प्रत्ययो भवति। 'पु_रा क्रू_रस्यं विसृपो' विरप्शिन् ( तै० सं० १.१.९.३ )। 'पु_रा ज_र्तृभ्यं आ_तृदंः ( ऋ० ८.१.१२ )।**

## ११५१. अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ॥ १८ ॥ ( ३३१६ )

**'छन्दसि' 'भावलक्षणे' इति सर्वं निवृत्तम्। अलं, खलु-इत्येतयोः प्रतिषेधवाचिनोरुपपदयोर्धातोः क्त्वा प्रत्ययो भवति प्राचामाचार्याणां मतेन। अलं कृत्वा। खलु कृत्वा। अलं बाले रुदित्वा।**

**न्यासः**

**सृपितृदोः कसुन्** ॥ १७ ॥ **अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा** ॥ **प्रतिषेधवाचिनोरिति**। प्रतिषेधयो-रित्यस्येदं विवरणम्। एतेन प्रतिषेधवाचित्वादलंखलुशब्दौ सूत्रे प्रतिषेधशब्देनोक्ताविति दर्शयति। भवति हि तद्वाचित्वात्ताच्छब्द्यम्, यथा—'क्षुद्रजन्तवः' इति, तत्र क्षुद्रजन्तुवाचित्वाद् यूकालिक्षादयः शब्दा क्षुद्रजन्तु-शब्देनोक्ताः ॥

**अलङ्कार इति**। भावे घञ्। भूषणवचनोऽत्रालंशब्दः।

**पदमञ्जरी**

**रिति**। सम्पूर्वो हि तिष्ठतिः समाप्तौ रूढः; सन्तिष्ठते पिण्डपितृयज्ञ इत्यादौ दर्शनात्। **आतमितोरिति**। 'तमु ग्लानौ' ॥ १६ ॥ १७ ॥

**अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा** ॥ 'तुमर्थे' इत्येव। **अलंकृत्वेति**। 'अमैवाव्ययेन' इति नियमादुप-पदसमासाभावः। न कर्त्तव्यमित्यर्थः।

**भावबोधिनी**

( ५ ) चरि—पुरा प्रचरितोराग्नीध्रे होतव्यम् [ यहाँ प्रचरण से हवन क्रिया लक्षित होती है। प्रचर् + तोसुन्, इट्, स् का रुत्व विसर्ग ] ( ६ ) हु—आ होतोरप्रमत्तस्तिष्ठति। [ यहाँ हवन से अवस्थान क्रिया लक्षित हो रही है। √हु + तोसुन् = तोस्, धातु का गुण, स् का रुत्व विसर्ग ] ( ७ ) तमि—आ तमितोरासीत। [ तमन = ग्लानि अथवा इच्छा से आसन क्रिया लक्षित हो रही है। √तम् + तोसुन्, इट्, स् का रुत्व विसर्ग ] ( ८ ) जनि—आविजनितोः सम्भवाम [ यहाँ विजन = प्रसव से सम्भवन क्रिया लक्षित होती है। √जन् + तोसुन्, इट्, स् का रुत्व विसर्ग ] ॥ १६ ॥

'भावलक्षणे' 'छन्दसि' [ वैदिक विषय में, भावलक्षण में ] इनकी अनुवृत्ति होती है। भावलक्षण [ अन्य क्रिया के लक्षकत्व ] अर्थ में वर्तमान सृप् और तृद इन धातुओं से, वेदविषय में, तुमुन् के अर्थ में कसुन् प्रत्यय होता है। उदा०—पुरा क्रूरस्य विसृपो विरप्शिन् [ विसृप् + कसुन् = अस्, कित् होने से गुण का निषेध, स् का रुत्व विसर्ग ]। पुरा जर्तृभ्य आ तृदः [ आ तृद + कसुन् = अस् स् का रुत्व विसर्ग ] ॥ १७ ॥

'छन्दसि' 'भावलक्षणे' इन सबकी निवृत्ति हो जाती है, अनुवृत्ति नहीं होती है। प्रतिषेधवाची अलम् तथा खलु इन शब्दों के उपपद रहते धातु से क्त्वा प्रत्यय, प्राच्य आचार्यों के मत में होता है। उदा०—अलं कृत्वा [ √कृ + क्त्वा, त्वा—कृत्वा, कित् होने से गुणनिषेध, अव्यय हो जाने से सु का लोप। मत करो—यह अर्थ है। ] खलु कृत्वा [ मत करो। ] अलं बाले ! रुदित्वा। [ हे बालिके ! अब मत रोओ ]।

अलम् और खलु—ये उपपद रहें—इसका क्या फल है ? मा कार्षीः [ मत करो। यहाँ निषेध की प्रतीति तो है परन्तु अलं या खलु नहीं है, मा शब्द है। अतः क्त्वा नहीं होता है। ] प्रतिषेध अर्थवाले—इसके ग्रहण का क्या लाभ है ? अलङ्कारः [ यहाँ आभूषण अर्थ होने से क्त्वा न होकर घञ् होता है। ] प्राचाम्—इसका ग्रहण विकल्प-सिद्धि के

**अलंखल्वोरिति किम् ? मा कार्षीः । प्रतिषेधयोरिति किम् ? अलंकारः । प्राचांग्रहणं विकल्पार्थम् । अलं रोदनेन । वाऽसरूपविधिश्चेत्, पूजार्थम् ॥**

## ११७२. उदीचां माङो व्यतीहारे ॥ १९ ॥ ( ३३१७ )

**'क्त्वा' तु वर्त्तते । माङो धातोर्व्यतीहारे वर्तमानादुदीचामाचार्याणां मतेन क्त्वा प्रत्ययो भवति । अपमित्य याचते । अपमित्य हरति । अपूर्वकालत्वादप्राप्तः क्त्वा विधीयते । उदीचांग्रहणात्तु यथाप्राप्तमपि भवति – याचित्वाऽपमयते, हृत्वाऽपमयते ।**

### न्यासः

**अलं बाले रोदनेनेति** । भावे ल्युट् । **वाऽसरूपविधिरिति चेदिति** । विनापि प्राग्ग्रहणेन विकल्पो लभ्यत एव । यस्मादसरूपोऽपवादो बाधको भवतीत्येवं चेन्मन्यसे एवं तर्हि पूजार्थं प्राग्ग्रहणम्, पूर्वं स्त्र्यधिकारात् । परेण वासरूपविधिर्नास्तीति चेतसि कृत्वा विकल्पार्थं प्राग्ग्रहणमुक्तम् ॥ १८ ॥

**उदीचां माङो व्यतीहारे** ॥ **अपमित्येति** । 'आदेच उपदेशेऽशिति' इत्यात्वम्, 'कुगतिप्रादयः' इति समासः, 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यप्, 'मयतेरिदन्यतरस्याम्,' 'ह्रस्वस्य पिति कृति तुक्' । ननु च 'समानकर्तृकयोः पूर्वकाले' इत्यनेनैवात्र क्त्वाप्रत्ययो भवति, अस्ति ह्यत्रापि समानकर्तृकत्वम् । तथा हि—य एवापमयतेः कर्त्ता स एव याचतेः, तत् किमर्थं विधीयते ? इत्याह—**अपूर्वकालत्वादित्यादि** । पूर्वं ह्यसौ याचते पश्चादपमयत इति नास्ति पूर्वकालत्वम्, तस्मादप्राप्त एव क्त्वा विधीयते । विधीयतान्नाम; अयन्तु दोषः—

### पदमञ्जरी

**वाऽसरूप इति चेदिति** । पूर्वं तु प्रैषादिषु कृत्यानां वचनेन 'स्त्र्यधिकारादूर्ध्वं वाऽसरूपविधिर्नावश्यमस्ति' इति ज्ञापितत्वादिह तदभावमभिप्रेत्य प्राग्ग्रहणं विकल्पार्थमित्युक्तम् ॥ १८ ॥

**उदीचां माङो व्यतीहारे** ॥ **अपमित्येति** । 'मेङ् प्रणिदाने' क्त्वो ल्यपि 'मयतेरिदन्यतरस्याम्' इतीत्वं, ह्रस्वस्य तुक् । **अपूर्वकालत्वादिति** । पूर्वं ह्यसौ याचते पश्चादपमयते । यदा चास्माद्वचनान्मयतेः क्त्वो भवति तदा 'समानकर्तृकयोः' इत्यादिना याचेर्न भवति, अनेन बाधितत्वात्, तथा द्वितोयद्विर्वचनेन प्रथमद्विर्वचनम् । अनभिधानाद्वा । **मेङ इत्यादि** । मेङोऽयं कृतात्वस्य निर्देशः कृतः, न पुनः 'माङ् माने' इत्यस्य, तस्य व्यतिहारे

### भावबोधिनी

लिये है । अतः—'अलं रोदनेन' यहाँ √रुद् + ल्युट् भी होता है । यदि "वाऽसरूपोऽस्त्रियाम्" ३।१।९४ की प्रवृत्ति मानें तब तो केवल पूजा = सम्मान के लिये ही 'प्राचाम्' का ग्रहण है ।

**विमर्श**—अगले सूत्र में 'उदीचाम्' का और इस सूत्र में 'प्राचाम्' का ग्रहण है । अतः यहाँ 'प्राचाम्' को प्राग्देशवर्त्ती आचार्यों का बोधक मान लेना उचित प्रतीत होता है । इस पर विचार अपेक्षित है ॥ १८ ॥

'क्त्वा' इसकी अनुवृत्ति होती है । व्यतीहार = विनिमय [ अदला-बदली ] अर्थ में वर्तमान माङ् = मेङ् धातु से क्त्वा प्रत्यय उदीच्य [ उत्तर देशवर्त्ती ] आचार्यों के मत में होता है । [ सूत्र में √मेङ् के 'ए' का "आदेच उपदेशेऽशिति" ६।१।४४ सूत्र से आत्व करके निर्देश है । उदा०—अपमित्य याचते । अपमित्य हरति [ अपपूर्वक √मेङ् + क्त्वा, "आदेच उपदेशेऽशिति" ६।१।४४ से ए का आत्व और समास करने से क्त्वा का ल्यप् "समासेऽनञ्पूर्वे क्त्वो ल्यप्" ७।१।३७ अप + मा + य । "मयतेरिदन्यतरस्याम्" ६।४।७० से आ का इ—अपमि + य, 'तुक् = त् आगम । तुम यदि गाय दोगे तो मैं भैंस दूंगा—इस प्रकार विनिमय करने के लिये गाय माँगता है—यह अर्थ है।

**मेङः कृतात्वस्यायं निर्देशः कृतो ज्ञापनार्थः-'नानुबन्धकृतमनेजन्तत्वम्' ( शा० प० १५ ) इति, तेन 'दाधा घ्वदाप्' ( १.१.२० ) इति दैपोऽपि प्रतिषेधो भवति ॥**

**न्यासः**

यदैवास्माद्वचनान्मयतेः क्त्वा भवति, तदैव समानकर्त्तृकयोरित्यस्माद्वचनाद् याचतेरपि स्यात् ? नैष दोषः; यस्मात् 'समानकर्त्तृकयोः' इत्यत्र 'उदीचाम्' इति वर्त्तते, सा च व्यवस्थितविभाषा, तेन यदा मयतेः क्त्वा भवति तदा याचतेः क्त्वा न भविष्यति । **उदीचांग्रहणादित्यादि** । उदीचांग्रहणमिह विकल्पार्थम् । तेन यथाप्राप्तमपि पक्षे भवति । याचतेः क्त्वा । मयतेर्लडादिः ।

माङिति 'माङ् माने' इत्यस्यायं निर्देश इति कस्यचिदाशङ्का स्यात्, अतस्तां निराकर्त्तुमाह—**मेङः कृतात्वस्यायं निर्देश इति** । कुतः पुनरेतदवगतम् ? व्यतीहारग्रहणात् । मेङेव व्यतीहारे वर्त्तते, न माङ्, तस्मान्मेङ एवायं निर्देश इति विज्ञायते । किमर्थं पुनरेवं निर्देशः कृतः, कृते यत्र सति सन्देहः स्यात्, न मेङ इत्येवासन्दिग्धः कर्त्तव्यः स्यादित्यत आह—**ज्ञापनार्थं इति** । मेङ इत्येवं निर्देशे कर्त्तव्ये यः सानुबन्धकस्य कृतात्त्वस्य निर्देशः कृतः स ज्ञापनार्थः । तेनैतज् ज्ञाप्यते—**नानुबन्धकृतमनेजन्तत्वमिति** । तेनेत्यादिना ज्ञापन-प्रयोजनं दर्शयति । यद्ययमर्थो न ज्ञाप्येत ततो हलन्तत्वाद् दैप एजन्तत्वं न स्यात् । तत्र को दोषः ? दाब्ग्रहणेन दैब्ग्रहणं न स्यात्; भिन्नरूपत्वात् । ततश्च 'दाधा घ्वदाप्' इत्यत्र दैपः प्रतिषेधो न स्यात् । अस्मिंस्त्वर्थे ज्ञापिते सति भवति ॥ १९ ॥

**पदमञ्जरी**

वृत्त्यसम्भवादित्यर्थः । यद्येवम्, मेङ इत्येव वक्तव्यम्, तत्रायमप्यर्थो व्यतीहारग्रहणं न कर्त्तव्यं भवति, तत्राह—**ज्ञापनार्थमिति** । किं ज्ञाप्यत इत्याह—**नानुबन्धकृतमिति** । प्रयोजनमाह—**तेनेत** । यद्ययमर्थो न ज्ञाप्येत, ततः श्रूयमाणे पकारे दैप आत्वं न स्यात्; अनेजन्तत्वात्, ततश्चादाबिति प्रतिषेधे तस्य ग्रहणं न स्याद्, 'दाप् लवने' इत्यस्यैव तु स्यात् ॥ १९ ॥

**भावबोधिनी**

इसी प्रकार—ले जाता है—यह दूसरे वाक्य का अर्थ है । ] यहाँ [ विनिमय ] पूर्वकालिक नहीं है अतः अप्राप्त क्त्वा का विधान किया जाता है [ क्योंकि "समानकर्तृकयोः पूर्वकाले" ७।१।३७ से पूर्वकालिक क्रियावाचक से ही क्त्वा प्रत्यय होता है । और यहाँ पहले माँगना है तब विनिमय करना है । ] उदीचाम्—इसके ग्रहण से तो यथाप्राप्त प्रत्यय भी होता है—याचित्वा अपमयते [ याच् + क्त्वा, इट्, माँग कर विनिमय करता है । ] कृत्वा अपमयते [ लेकर विनिमय करता है । ]

आत्व किये गये मेङ् का यह 'माङ्' ऐसा निर्देश ज्ञापनार्थ किया गया है—'अनुबन्ध को मान कर अनेजन्तत्व [ एजन्त न होना ] नहीं होता है।' इससे "दाधा घ्वदाप्" १।१।२० इससे [अदाप्—से] दैप् का भी प्रतिषेध हो जाता है।

विमर्श—प्रस्तुत सूत्र में मेङ् का उल्लेख न करके माङ् का किया गया है । मेङ् धातु ही विनिमय अर्थ में है, माङ् नहीं । यह आत्व "आदेच उपदेशेऽशिति" ६।१।४५ से होता है । यह सूत्र एजन्त का ही आत्व करता है । मेङ् में 'ङ्' अनुबन्ध अन्त में है । अतः उसमें एजन्तत्व न होने पर भी आत्व किया गया है । यह आत्व इस बात को ज्ञापित करता है कि कहीं कहीं अनुबन्ध लगा देने से एजन्तत्व में बाधा नहीं आती है । अनुबन्धमुक्त को देखकर एजन्तत्व समझना चाहिये । इसका फल यह होता है कि दैप् धातु को भी एजन्त मान कर आत्व हो जाने से दाप् बन जाता है । और "दाधा घ्वदाप्" १।१।२० से 'अदाप्' यह प्रतिषेध प्रवृत्त हो जाता है, दैप् की भी 'घु' संज्ञा नहीं होती है ॥ १६ ॥

## ११६३. परावरयोगे च ॥ २० ॥ ( ३३१९ )

**परावराभ्यां योगः = परावरयोगः। परेण पूर्वस्य योगे गम्यमाने अवरेण च परस्य, धातोः क्त्वा प्रत्ययो भवति। परेण तावत् – अप्राप्य नदीं पर्वतः स्थितः। परनदीयोगेन पर्वतो विशिष्यते। अवरयोगे-अतिक्रम्य तु पर्वतं नदी स्थिता। अवरपर्वतयोगेन नदी विशिष्यते।**

## ११६४. समानकर्तृकयोः पूर्वकाले ॥ २१ ॥ ( ३३२० )

न्यासः

**परावरयोगे च** ॥ इहेमौ परावरशब्दौ सम्बन्धिशब्दौ। पूर्वञ्चापेक्ष्य परो भवति, परञ्चापेक्ष्यावरः, सम्बन्धिशब्दाश्च नियतमेव प्रतियोगिनमुपस्थापयन्ति, तस्मात् सूत्रे यद्यपि विशिष्टप्रतियोगी न निर्दिश्यते, तथापि पूर्वपरयोरेव परावराभ्यां योगो गम्यत इत्याह—**परेण पूर्वस्येत्यादि**। **परनदीयोगेन पर्वतो विशिष्यत इति**। तथा ह्यप्राप्य नदीं पर्वत इत्युक्ते परया नद्या पर्वतस्य यो योगस्तद्विशिष्टः पर्वतः प्रतीयते। **अवरपर्वतयोगेन नदी विशिष्यत इति**। यस्मादतिक्रम्य पर्वतं नदीत्युक्तेऽवरेण पर्वतेन नद्या च यो योगस्तद्विशिष्टा नदी विज्ञायते ॥ २० ॥

**समानकर्तृकयोः पूर्वकाले** ॥ धात्वधिकाराद् धात्वर्थस्यैव समानकर्तृकत्वं विज्ञायत इत्याह **समानः कर्त्ता ययोर्धात्वर्थयोरित्यादि**। निर्धारणे चायं षष्ठी। समानशब्दश्चायमेकवाची। ननु शक्तिः कारकम्, अन्या च

पदमञ्जरी

**परावरयोगे च** ॥ परावरशब्दयोः सम्बन्धिशब्दत्वाद्यदपेक्षं परावरत्वम्, तयोः पूर्वपरयोरेव परावराभ्यां योगो गम्यते, इत्याह—**परेण पूर्वस्येति**। पूर्वशब्देनात्रावरो विवक्षितः। **अप्राप्य नदीमिति**। नद्याः पूर्वदेश इत्यर्थः। **ततश्च नदी परा भवतीति**। परनदीयोगेन पर्वतो विशेष्यते। **अतिक्रम्य पर्वतमिति**। पर्वतस्य परस्तादित्यर्थः। ततश्चावरः पर्वतो भवति तेनावरपर्वतयोगेन नदी विशेष्यते। अयमप्यपूर्वकालार्थ आरम्भः, अतिक्रमोऽत्र कीदृश इति चिन्त्यम् ॥ २० ॥

**समानकर्तृकयोः पूर्वकाले** ॥ क्रियापेक्षत्वात्कर्तृभावस्य धात्वधिकारेऽपि तदर्थस्यैव समानकर्तृकत्वं विज्ञायते, न धातोरित्याह—**समानः कर्त्ता ययोर्धात्वर्थयोरिति**। समानशब्दोऽयमेकवाची, तत्रेति निर्धारणे

भावबोधिनी

पर और अवर के साथ योग—परावरयोग है। परवर्ती के साथ पूर्ववर्त्ती का योग गम्यमान रहने पर और अवर = पूर्ववर्त्ती के साथ परवर्त्ती का योग = सम्बन्ध गम्यमान रहने पर [ अर्थात् पूर्व का पर के साथ अथवा पर का पूर्व के साथ योग प्रतीत हो रहा हो तो ] धातु से क्त्वा प्रत्यय होता है। उदा०—पर के साथ—अप्राप्य नदीं पर्वतः। पर नदी के योग से पर्वत विशेषित किया जाता है। [ पर भाग में स्थित नदी से पूर्व पर्वत स्थित है। यहां नदी बाद में है पर्वत पहले है—ऐसा योग प्रतीत होता है। प्र + आप् + क्त्वा, प्र के योग में समास करने पर क्त्वा का ल्यप् = य होने से प्राप्य बनता है। पुनः नञ्-समास होता है। ] अवर = पूर्व के योग में—अतिक्रम्य तु पर्वतं नदी स्थिता। अवर = पूर्ववर्त्ती पर्वत के योग से नदी विशेषित की जाती है। [ पर्वत के बाद नदी है। यहां पर्वत पहले है उसके साथ परवर्ती नदी का योग प्रतीत हो रहा है। अति + क्रम् + क्त्वा = ल्यप् —अतिक्रम्य = दूसरी ओर। इस प्रकार पर्वत अवर = पूर्व हो जाता है और उसके साथ नदी विशेषित की जाती है। ] ॥ २० ॥

समान = एक ही कर्ता है जिन दो धात्वर्थों [ या अनेक धात्वर्थों ] का उनमें पूर्वकालिक धात्वर्थ [ क्रिया ] में वर्तमान [ = उसकी वाचक ] धातु से क्त्वा प्रत्यय होता है। [ कारकत्व ] शक्ति और [ कारकत्व ]-शक्तिमान् [ कारक ] में भेद नहीं विवक्षित है, अतः समानकर्तृता हो जाती है। [ भाव यह है कि शक्ति को कारक माना जाता है

**समानः कर्त्ता ययोर्धात्वर्थयोस्तत्र पूर्वकाले धात्वर्थे वर्तमानाद्धातोः क्त्वा प्रत्ययो भवति। शक्तिशक्तिमतोर्भेदस्याविवक्षितत्वात् समानकर्तृकता। भुक्त्वा व्रजति। पीत्वा व्रजति। द्विवचनमतन्त्रम्। स्नात्वा, पीत्वा, भुक्त्वा, दत्त्वा व्रजति।**

**न्यासः**

पूर्वकालक्रियायाः शक्तिः, अन्या चोत्तरकालक्रियायाः, तत् कुतः समानकर्तृकत्वं विज्ञायते? इत्याह—**शक्तिशक्तिमतोरित्यादि**। शक्तिः शक्तिमांश्च—शक्तिशक्तिमन्तौ। यश्च शक्त्याधारो या च शक्तिस्तयोरिह भेदो न विवक्षितः। तेन शक्त्याधार एक एव देवदत्तः कर्त्ता, स चोभयोरपि क्रिययोरेक एवेति युक्तं समानकर्त्तृकत्वम्। **पीत्वेति**। पूर्ववदीत्वम्। इह 'समानकर्त्तृकयोः' इति द्विवचनेन निर्देशः कृतः, तेन द्वे एव क्रिये प्रत्युपस्थास्येते, न बह्व्यः, ततश्च द्वयोरेव क्रिययोः प्रत्युपस्थापितयोः स्यात्, न बह्वीषु? इत्याह—**द्विवचनमित्यादि**। क्रियाप्रधानत्वादस्य निर्देशस्य। नात्र द्विवचनं प्रधानम्; नान्तरीयकत्वात्। तेन द्विवचनेन निर्देशः कृतः। अवश्यं येन केनचिद् वचनेन निर्देशः कर्त्तव्यः, तस्मादतन्त्रत्वाद् द्विवचनस्य, बह्वीष्वपि क्रियासु भवत्येव।

**पदमञ्जरी**

सप्तमीं दर्शयति। षष्ठ्यामपि न दोषः। सप्तमी त्वाश्रिता। **पूर्वकाले धात्वर्थे वर्तमानादिति। प्राभाकरास्तु** पूर्वप्रयुज्यमानादिति व्याचक्षते, अनुष्ठाने पौर्वकाल्यं नाद्रियन्ते; तद्भाष्यवार्त्तिकविरोधादुपेक्ष्यम्। उक्तं हि—आस्यं व्यादाय स्वपिति संमील्य हसतीत्युपसंख्यानमपूर्वकालत्वादिति। ननु च शक्तिः कारकम्, सा च प्रतिक्रियं भिद्यते, तत्कुतः समानकर्तृकत्वम्? इत्यत आह—**शक्तिशक्तिमतोरिति**। इह समानकर्तृकयोरिति द्विवचननिर्देशः क्रियते, तेन द्वयोरेव पौर्वकाल्ये स्यात्, बहूनां न स्यात्, तत्राह—**द्विवचनमतन्त्रमिति**। अवश्यं येन केनचिद्वचनेन निर्देशः कर्त्तव्यः, तत्र समानकर्तृकत्वस्य पूर्वकालत्वस्य च भेदाधिष्ठानत्वाद् भेदनिबन्धनयोर्द्विवचनबहुवचनयोः प्रथमभावित्वाद् द्विवचनं प्रयुक्तम्, न त्वेतत्तन्त्रमित्यर्थः। एवमपि लोकविज्ञानान्न सिद्ध्यति, तद्यथा लोके - अमीषां ब्राह्मणानां पूर्व आनीयताम् इत्युक्ते सर्वपूर्व एवानीयते; एवमिहापि सर्वपूर्वायाः प्राप्नोति, तस्मादेवं वक्तव्यम्—सर्वेषामेवात्र व्रजिं प्रति पौर्वकाल्यम्, स्नात्वा व्रजति भुक्त्वा व्रजति पीत्वा व्रजतीति। आख्यातवाच्या हि क्रिया विशेष्यत्वात्प्रधानम्, तेन तां प्रति सर्वासां विशेषणत्वात्परस्परेणासम्बन्धः, तदुक्तम्—'गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात्' इति। एवं च कृत्वा प्रयोगोऽप्यनियतो भवति—स्नात्वा भुक्त्वा पीत्वा व्रजति, पीत्वा स्नात्वा भुक्त्वा व्रजतीति।

**भावबोधिनी**

वह प्रत्येक क्रिया को मान कर भिन्न भिन्न होती है। तब समान = एककर्तृकत्व कैसे सम्भव होगा? इसका उत्तर यह है कि इन दोनों में अभेद मान लिया गया है। इस लिये दोनों क्रियायों की एक ही कारकत्व शक्ति है।] उदा०—**भुक्त्वा** व्रजति। [ खाकर जाता है। यहाँ पूर्वकालिक क्रियावाची √ भुज् + क्त्वा ] पीत्वा व्रजति। [ पीकर जाता है। पा + क्त्वा "घुमास्थागापाजहाति०" ६।४।६६ से आ का ई, पीत्वा, अव्यय होने से सुलोप।] सूत्र में [ समानकर्तृकयोः—यहाँ ] द्विवचन अविवक्षित है। [ अतः पूर्वकालिक क्रियावाचक अनेक धातुओं से भी क्त्वा होता है ]—स्नात्वा, पीत्वा, भुक्त्वा, दत्त्वा व्रजति। [ नहाकर, पीकर, खाकर, देकर जाता है। यहाँ व्रजन से पहले ये सभी क्रियायें हैं। अतः इन सभी की वाचक धातुओं से क्त्वा प्रत्यय होता है।]

समानकर्तृकों में—इसके ग्रहण का क्या फल है? भुक्तवति ब्राह्मणे गच्छति देवदत्तः। [ ब्राह्मण के खा लेने पर देवदत्त जाता है। यहाँ भोजन का कर्ता ब्राह्मण है और गमन का कर्ता देवदत्त है। समानकर्तृक न होने से क्त्वा नहीं होता है।] पूर्वकाल वाला रहने पर—इसका क्या फल है? व्रजति च जल्पति च [ जाता भी है और बात भी करता है। दोनों क्रियायें एक साथ हो रहीं हैं। पौर्वापर्य नहीं है। अतः क्त्वा नहीं होता है।]

समानकर्तृकयोरिति किम् ? **भुक्तवति ब्राह्मणे गच्छति देवदत्तः। पूर्वकाले इति किम् ? व्रजति च जल्पति च।। ❀ आस्यं व्यादाय स्वपिति चक्षुः संमील्य हसतीत्युपसंख्यानमपूर्वकालत्वात् ❀ ।। (म० भा० ३.४.२१ वा० ४ )**

**न्यासः**

**भुक्तवति ब्राह्मणे व्रजतीति**। अत्र भुजिक्रियाया ब्राह्मणः कर्त्ता, व्रजतिक्रियायास्तु देवदत इति समानकर्तृकत्वाभावः। **व्रजति च जल्पति चेति**। यौगपद्यादिह क्रियायाः पूर्वकालता नास्ति।

**व्यादायेति**। ददातेर्व्याङ्पूर्वस्य रूपम्। **संमील्येति**। 'मील स्मील क्ष्मील निमेषणे' इत्यस्य संपूर्वस्य हेतुमण्ण्यन्तस्य। किं पुनः कारणं न सिध्यतीत्याह—**अपूर्वकालत्वादित्यादि**। यदैव ह्यसौ स्वपिति तदैव व्याददाति, यदैव हसति तदैव संमीलयतीति—इह नास्ति पूर्वकालत्वम्। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्—पूर्वयोगाच्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः, तेन मुखं व्यादाय स्वपितीत्यादौ पूर्वकालत्वाभावेऽपि भविष्यतीति ।। २१ ।।

**पदमञ्जरी**

**भुक्तवति ब्राह्मण इति**। ननु तुमर्थाधिकाराद्भावे क्त्वाप्रत्ययः, क्तवतुस्तु कर्तरि ? एवं तर्ह्यस्मिन्विषये भावे न भवतीति प्रत्युदाहरणत्वं वाच्यम्, 'श्रीशैलशिखरं दृष्ट्वा सर्वपापैः प्रमुच्यते' इत्येवमादीनां कर्तृभेदविषयाणां प्रयोगाणामसाधुत्वमेव। **व्रजति जल्पति चेति**। यौगपद्यादिह पूर्वकालता नास्ति। **अपूर्वकालत्वादि**। पूर्वं ह्यसो स्वपिति पश्चाद् व्याददाति, यदैव हसति तदैव संमीलयति, न वा स्वप्नस्यापरकालत्वात्, अवश्यं त्वसौ व्यादाय मुहूर्त्तमपि स्वपिति संमील्य च हसति, ततश्चोत्तरकालभाविस्वापहासाद्यपेक्षं पौर्वकाल्यं तदाश्रयश्च प्रत्ययः। इह कस्मान्न भवति—पूर्वं भुङ्क्ते, ततो व्रजतीति ? स्वशब्देनोक्तत्वात्। 'विभाषाग्रे' इत्यनेनापि न भवति, किं कारणम् ? साधनपौर्वकाल्यविषयाणामग्र्यादीनां तत्र ग्रहणम्, अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा ततो व्रजतीति। इह तु व्रज्यपेक्षं भोजनस्य यत्पौर्वकाल्यं तत्र क्त्वाप्रत्ययश्चोद्यते, तत्पूर्वशब्देनोक्तम्। न च वचनसामर्थ्यादुक्तेऽपि प्रसङ्गः; साधनपौर्वकाल्यविषयेऽग्र्यादावुपपदे चरितार्थत्वात्। क्रियाविषयत्वाच्च कालव्यवहारस्य तद्द्वारकमेव साधनपौर्वकाल्यं द्रष्टव्यम्। उक्तं हि—

क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका। इति।

इहास्यते भोक्तुमिति वाऽसरूपेण लङ् भवति, यदा आसेः क्त्वा भवति तदा भुजेर्लडादय एव भवन्ति—आसित्वा भुङ्क्त इति, न तु तुमुन्; अनभिधानात्। आसित्वा भोक्तुमित्युक्ते प्रक्रमत इत्यादीनां सम्बन्धः प्रतीयते ।। २१ ।।

**भावबोधिनी**

❀'मुंह खोलकर सोता है, आँखें बन्द कर हसता है'—इनका भी उपसंख्यान करना चाहिये क्योंकि इनमें पूर्वकाल नहीं रहता है।' [ अर्थात् पहले शयन क्रिया होती है बाद में मुख खोलना क्रिया; इसी प्रकार पहले हँसना क्रिया होती है बादमें आँखें बन्द करना। अतः यहाँ पूर्वकाल में न होने के कारण सूत्र से प्रत्यय प्राप्त नहीं होता है। अतः यह वार्त्तिक है। ]

**विमर्श**—वि + आ + √दा + क्त्वा = ल्यप् = य—व्यादाय = खोलकर । सम् + मील् + क्त्वा = ल्यप् = य—सम्मील्य = बन्दकर। 'चक्षुः संमील्य हसति' यह वाक्य काशिकाकार ने अपनी ओर से जोड़ा है। भाष्य में "व्यादाय स्वपितीत्युपसंख्यानम् अपूर्वकालत्वात्" [ म० भा० ३।४।२१वा० ४ ] इतना ही उपलब्ध होता है। इस वार्त्तिक का खण्डन भी वहीं किया गया है "न वा स्वप्नस्यापरकालत्वात्"—[ म० भा० ३।४।२१ वा० ५ ] अर्थात् मुख खोलने के बाद भी जो शयन क्रिया होती रहती है, उसकी अपेक्षा मुख खोलना पूर्वकालिक है ही। अतः "समानकर्तृकयोः" सूत्र से ही निर्वाह हो जाता है। वार्त्तिक अनावश्यक है ।। २१ ।।

११६७. आभीक्ष्ण्ये णमुल् च ॥ २२ ॥ ( ३३४३ )

'समानकर्तृकयोः पूर्वकाले' इत्येव । आभीक्ष्ण्यम् = पौनःपुन्यम् । प्रकृत्यर्थविशेषणं चैतत् । आभीक्ष्ण्य-विशिष्टेऽर्थे वर्तमानाद्धातोर्णमुल् प्रत्ययो भवति, चकारात् क्त्वा च । द्विर्वचनसहितौ क्त्वाणमुलावाभीक्ष्ण्यं द्योतयतः, न केवलौ । 'आभीक्ष्ण्ये द्वे भवतः' ( ८.१.१२ ) इत्युपसंख्यानाद् द्विर्वचनम् । भोजं भोजं व्रजति, भुक्त्वा भुक्त्वा व्रजति । पायं पायं व्रजति, पीत्वा पीत्वा व्रजति ॥

११६८. न यद्यनाकाङ्क्षे ॥ २३ ॥ ( ३३४४ )

यच्छब्द उपपदे धातोः क्त्वाणमुलौ प्रत्ययौ न भवतोऽनाकांक्षे वाच्ये । यत्र पूर्वोत्तरे क्रिये स्तः, तच्चेद्वाक्यं न परं किञ्चिदाकांक्षत इति । णमुलनन्तरः क्त्वा तु पूर्वसूत्रविहितोऽपि प्रतिषिध्यते । यदयं भुङ्क्ते ततः पचति । यदयमधीते ततः शेते ।

न्यासः

आभीक्ष्ण्ये णमुल् च ॥ द्विर्वचनसहितावित्यादि । आभीक्ष्ण्यं हि द्योतयितुं द्विर्वचनसहितयोरेव क्त्वाणमुलोः सामर्थ्यम्, न केवलयोः; शब्दशक्तिस्वाभाव्यात् । तस्माद् द्विर्वचनं विधेयमिति भावः । केन पुनरत्र द्विर्वचन-मित्याह—आभीक्ष्ण्य इत्यादि । पायं पायमिति । 'आतो युक्' ॥ २२ ॥

न यद्यनाकाङ्क्षे ॥ अनाकाङ्क्ष इति । न विद्यत आकाङ्क्षा = अपेक्षा यस्य स तथोक्तः । क्त्वा तु पूर्वसूत्रविहितोऽपीति । अपिशब्दादनन्तरविहितोऽपि युक्तं यदनन्तरसूत्रविहितः प्रतिषिध्यते—'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति कृत्वा । पूर्वसूत्रेण विहितस्य तु कथं प्रतिषेधः ? प्रकरणापेक्षया प्रतिषेधविधानात् । पूर्वकालप्रकरणे यत् प्राप्नोति तन्न भवतीत्येवमयं पूर्वकालप्रकरणापेक्षया प्रतिषेधः क्रियते । तस्माद् युक्तः पूर्वसूत्रविहितस्यापि प्रतिषेधः ॥ २३ ॥

पदमञ्जरी

आभीक्ष्ण्ये णमुल् च ॥ द्विर्वचनसहिताविति । केन पुनरत्र द्विर्वचनमित्याह— आभीक्ष्ण्ये द्वे भवत इत्युप-सङ्ख्यानाद् द्विर्वचनमिति । 'नित्यवीप्सयोः' इत्यत्र तु वामनो वक्ष्यति—'तिङ्क्षु नित्यता अव्ययकृत्सु च' इति । तन्मते नित्यग्रहणादेवात्र द्विर्वचनम् । पायंपायमिति । 'आतो युक्' ॥ २२ ॥

न यद्यनाकाङ्क्षे ॥ अनाकाङ्क्ष इति । पचाद्यजन्तेन नञ्समासः, तद्दर्शितम् । नापरं किञ्चिदाकाङ्क्षते इति । क्त्वा तु पूर्वसूत्रविहितोऽपीति । णमुल् चेत्युक्तम्, तदपेक्षं पूर्वत्वमपिशब्दादनन्तरसूत्रविहितोऽपि

भावबोधिनी

"समानकर्तृकयोः पूर्वकाले" इसी की अनुवृत्ति होती है । आभीक्ष्ण्य = बार बार होना । यह प्रकृत्यर्थ का विशेषण है । आभीक्ष्ण्य—विशिष्ट अर्थ में वर्तमान धातु से णमुल् होता है, 'च' के प्रयोगबलात् क्त्वा भी होता है । द्वित्व के साथ ही क्त्वा और णमुल् [ क्त्वाप्रत्ययान्त और णमुल्प्रत्ययान्त ] 'आभीक्ष्ण्य = पौनः पुन्य' को द्योतित करते हैं, अकेले नहीं । "आभीक्ष्ण्य में द्वित्व होता है ।" इस वचन से द्वित्व होता है । उदा०—भोजं भोजं व्रजति । [ √भुज् + णमुल् = अम्, उपधागुण भोजम्, द्वित्व करने पर भोजं भोजम् । ] भुक्त्वा भुक्त्वा व्रजति [ बार बार खाकर जाता है । ] पायं पायं व्रजति, पीत्वा पीत्वा व्रजति [ पा + णमुल् = अम् "आतो युक् चिण्कृतोः" ७।३।३३ से युक् = य् आगम पा + य् + अम् = पायम्, द्वित्व पायं पायम् । पक्ष में पा + क्त्वा = त्वा, आ का ई पीत्वा—द्वित्व ] पी पी करके जाता है ] ॥ २२ ॥

यत् शब्द उपपद रहते धातु से क्त्वा और णमुल् प्रत्यय नहीं होते हैं यदि अनाकाङ्क्ष क्रियायें वाच्य हों । जहाँ पूर्व और उत्तर कालवाली क्रियायें हैं, वह वाक्य किसी को आकाङ्क्षा न रखता हो । णमुल् अव्यवहित [ पूर्ववर्त्ती है ], किन्तु क्त्वा तो पूर्वसूत्र से व्यवहित भी निषिद्ध हो जाता है अर्थात् व्यवहित अव्यवहित क्त्वा और णमुल् दोनों प्रत्ययों

**अनाकाङ्क्ष इति किम् ? यदयं भुक्त्वा व्रजति अधीत एव ततः परम् ॥**

**११५७. विभाषाग्रेप्रथमपूर्वेषु ॥ २४ ॥ ( ३३४९ )**

**अप्राप्तविभाषेयम्** । 'आभीक्ष्ण्ये' इति नानुवर्त्तते । अग्रे, प्रथम, पूर्व – इत्येतेषूपपदेषु **समानकर्तृकयोः पूर्वकाले** धातोः क्त्वाणमुलौ प्रत्ययौ विभाषा भवतः । अग्रे भोजं व्रजति, अग्रे भुक्त्वा व्रजति । प्रथमं भोजं व्रजति, प्रथमं भुक्त्वा व्रजति । पूर्वं भोजं व्रजति, पूर्वं भुक्त्वा व्रजति । **विभाषाग्रहणम् – एताभ्यां मुक्ते**

**न्यासः**

**विभाषाग्रेप्रथमपूर्वेषु** ॥ **'आभीक्ष्ण्ये' इति नानुवर्त्तत इति । अप्राप्तविभाषेयमित्यत्रेयं युक्तिः** । ननु च प्राप्तविभाषेयं युक्ता, णमुल्यप्राप्ते क्त्वाप्रत्यये 'समानकर्तृकयोः' इत्यादिना प्राप्ते सत्यारम्भात् ? नैतदस्ति; अनन्तरसूत्रविहितौ हि क्त्वाणमुलावित्यधिकृत्याप्राप्तविभाषेयमित्युच्यते । यस्तु 'समानकर्तृकयोः' इत्यादिना केवलः क्त्वा विहितस्तं प्रति विभाषाग्रहणं न कर्त्तव्यमेव; वाऽसरूपविधिना तत्प्रतिपादितस्यार्थस्य सिद्धत्वात् । ननु चेत्यादिनाऽनन्तरोक्तविभाषाग्रहणस्य प्रयोजनं विघटयति । **क्त्वाणमुलौ यत्रेत्यादि** । **वासरूपविधिनैव पक्षे** लडादिषु सिद्धेषु यत् तदर्थं विभाषाग्रहणं क्रियते तेन यत्र क्त्वाणमुलौ युगपद् विधीयेते तत्र वासरूपविधिर्नास्तीत्येषोऽर्थो ज्ञाप्यते । किमेतस्य प्रयोजनं ज्ञापनस्य ? इत्याह – **तेनेत्यादि** ।

**पदमञ्जरी**

आभीक्ष्ण्येऽनाभीक्ष्ण्ये च क्त्वामात्रस्य प्रतिषेध इत्यर्थः । एतच्च पूर्वकाले यत्प्राप्नोति तन्न भवतीत्येवं प्रकरणापेक्षया प्रतिषेधविज्ञानाल्लभ्यते ॥ २३ ॥

**विभाषाग्रेप्रथमपूर्वेषु** ॥ अग्रशब्दो देशविशेषवचनोऽप्यस्ति—प्रभोरग्रे भुङ्क्ते इति, इह तु प्रथमशब्दसाहचर्यात्कालविशेषवाचिनो ग्रहणम् । अनुकरणत्वाच्चाग्रे इति विभक्तेर्लुगभावः—अस्यवामीयमिति यथा । **आभीक्ष्ण्य इति नानुवर्त्तत इति** । अप्राप्तविभाषेयमित्यत्रेयं युक्तिः । तदनुवृत्तौ हि पूर्वसूत्रेण प्राप्ते विभाषा स्याद्, एवं च ब्रुवता साधनपौर्वकाल्यविषया अग्रचादय इत्युक्तं भवति । क्रियापौर्वकाल्ये हि अग्र्यादिभिरेव तस्योक्तत्वादाभीक्ष्ण्येऽपि क्त्वाणमुलोरप्राप्तिरिति 'आभीक्ष्ण्ये' इत्यनुवृत्तावप्यप्राप्तविभाषैव स्यात् । न च द्विर्वचनमन्तरेणाभीक्ष्ण्यं द्योतयितुं शक्यमिति न तद्द्योतनायापि क्त्वाणमुलोर्विधानमुपपद्यते । नन्वननुवर्तमानेऽप्याभीक्ष्ण्यग्रहणे पूर्वसूत्रस्यावकाशो यत्राग्रचादयो न सन्ति, अस्य तु यत्राभीक्ष्ण्यं नास्ति सोऽवकाशः; आभीक्ष्ण्ये चाग्रत्रादिषु च सत्सूभयप्रसङ्गे परत्वादियमेव विभाषा प्राप्नोतीत्युभयत्र विभाषेयं युक्ता ? एवं मन्यते—पूर्वविप्रतिषेधेनाभीक्ष्ण्ये नित्य एव विधिर्भवतीति—अग्रेभोजंभोजं व्रजति, अग्रेभुक्त्वाभुक्त्वा व्रजति । एवं पूर्वप्रथमयोरपि द्रष्टव्यम् । नन्वेवं णमुल्यप्राप्ते क्त्वाप्रत्यये तु 'समानकर्तृकयोः'

**भावबोधिनी**

का निषेध करता है । उदा० - यद् अयं भुङ्क्ते ततः पचति [ यह पहले खा लेता है तब पकाता है । ] यद् अयम् अधीते ततः शेते [ यह पहले पढ़ता है फिर सोता है । [ यत् शब्द के प्रयोग के कारण पूर्वकालिक क्रियावाची धातु से क्त्वा और णमुल् दोनों नहीं होते हैं । आभीक्ष्ण्यविषयक णमुल् का निषेधक होने से यहाँ भी इसके अर्थ की प्रतीति करनी चाहिये । ]

'अनाकाङ्क्ष में—इसका क्या फल है ? 'यदयं भुक्त्वा व्रजति अधीत एव ततः परम् [जो यह खाकर जाता है उसके बाद पढ़ता ही है । यहाँ साकाङ्क्ष होने से निषेध नहीं होता है । पूर्वकालिक क्रियावाची भुज् से क्त्वा हो जाताहै ॥ २३ ॥

यह अप्राप्त-विभाषा है । अर्थात् किसी से प्राप्ति न रहते हो यहाँ विकल्प का विधान किया गया है । "आभीक्ष्ण्ये" [पौनःपुन्य] की अनुवृत्ति नहीं होती है । (१) अग्रे (२) प्रथम और (३) पूर्व —ये शब्द उपपद रहें तो समानकर्तृक क्रियाओं की वाचक धातुओं में पूर्वकालवाली क्रिया के वाचक धातु से क्त्वा और णमुल् प्रत्यय विकल्प से होते हैं । उदा० —

**लडादयोऽपि यथा स्युः। अग्रे भुङ्क्ते ततो व्रजति। ननु च वाऽसरूप इति भविष्यति? क्त्वाणमुलौ यत्र सह विधीयेते तत्र वाऽसरूपविधिर्नास्तीत्येतदनेन ज्ञाप्यते, तेनाभीक्ष्ण्ये लडादयो न भवन्ति।**

**उपपदसमासः कस्मान्न क्रियते? उक्तं तत्रैवकारस्य प्रयोजनम्—'अमैव यत्तुल्यविधानमुपपदं तत्समस्यते, नान्यत्' ( २.२.२० ) इति॥**

**न्यासः**

**उपपदसमास इत्यादि।** 'अमैवाव्ययेन' इत्युपपदसमासः प्राप्नोति, स कस्मान्न भवतीत्याह—**उक्तमित्यादि।** 'अमैव यत् तुल्यविधानमुपपदं तत् समस्यते' इत्युक्तं प्राक्। अग्रेप्रभृतीन्युपपदान्यमा चान्येन क्त्वाप्रत्ययेन तुल्यविधानम्, अतो न समस्यन्ते॥ २४॥

**पदमञ्जरी**

इत्यादिना प्राप्ते सत्ययमारम्भ इति पुनरप्युभयत्रविभाषैव युक्ता? नैतदस्ति; सह विहितौ यौ क्त्वाणमुलौ यद्विषये वाऽसरूपविधेरभावो ज्ञापयितुमिष्टः, तावनन्तरसूत्रविहितौ क्त्वाणमुलावभिप्रेत्याप्राप्तविभाषेयमुच्यते; न तु क्त्वाणमुलमात्रापेक्षया। **क्त्वाणमुलौ प्रत्ययौ भवत इति।** किमर्थं पुनः क्त्वा विधीयते, यावता नाभीक्ष्ण्येऽपि समानकर्तृकयोरित्येवासौ सिद्धः? सत्यम्; विभाषाग्रहणेन वाऽसरूपविधेरभावो ज्ञाप्यत इति वक्ष्यति। न च केवलं णमुलविधौ तदभावो ज्ञापयितुमिष्यते, किं तर्हि? क्त्वासहितणमुलविधौ। तस्माण्णमुलः क्त्वासहितस्य विधिर्यथा स्यादिति णमुल् चेत्यनुवृत्त्या क्त्वोऽप्यनुवादः क्रियते। एवं हि द्वयोः सह विधातुमुपादीयमानं विभाषाग्रहणं तादृश एव विषये वाऽसरूपविधेरभावं ज्ञापयतीति सिद्धमिष्टम्। **अग्रेभोजं व्रजतीति।** अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा व्रजतीत्यर्थः। **आभीक्ष्ण्ये लडादयो न भवन्तीति।** अग्रे भुङ्क्ते ततो व्रजतीत्येवं न भवतीत्यर्थः।

**उपपदसमासः कस्मान्न भवतीति।** प्राप्तविभाषायामस्यामग्र्यादीनां पक्षे प्रत्ययनिवृत्तौ निमित्तत्वम्, न तु प्रत्ययोत्पत्तौ, तयोः 'आभीक्ष्ण्ये णमुल् च' इत्यनेनाविशेषेण विहितत्वादित्यनुपपदत्वम्। अप्राप्तविभाषायां त्वग्र्यादीनां प्रत्ययोत्पत्तिं प्रति निमित्तत्वान्निमित्तस्य चोपपदसंज्ञाविधानादुपपदसमासः प्राप्नोतीति भावः। **अमैव यत्तुल्यविधानमिति।** एतच्च तत्रैव व्याख्यातम्॥ २४॥

**भावबोधिनी**

(१) अग्रे भोजं व्रजति, अग्रे भुक्त्वा व्रजति [ आगे खाकर जाता है। √भुज् + णमुल् = अम् उपधागुण -- भोजम्। पक्ष में √भुज् + क्त्वा = त्वा कुत्व -- भुक्त्वा ] (२) प्रथमं भोजं व्रजति, प्रथमं भुक्त्वा व्रजति, [ पहले खाकर जाता है। ] (३) पूर्वं भोजं व्रजति, पूर्वं भुक्त्वा व्रजति [ पहले खाकर जाता है। ] विभाषा का ग्रहण —इस लिये है कि इसके न होने पर लट् आदि [ यथाप्राप्त प्रत्यय ] हो सकें। उदा० — अग्रे भुङ्क्ते ततो व्रजति।

प्रश्न — "वाऽसरूप०" ३।१।९४ से ही [ दोनों प्रकार के प्रत्यय ] हो जायेगें? क्त्वा और णमुल् का एक साथ जहाँ विधान किया जाता है वहाँ "वाऽसरूप०" विधि नहीं प्रवृत्त होती है--यह विभाषाग्रहण से ज्ञापित होता है। इस लिये आभीक्ष्ण्य में लट् आदि भी नहीं होते हैं।

यहाँ उपपदसमास क्यों नहीं होता है? उस "अमैवाव्ययेन" २।२।२० सूत्र में ही 'एवकार' के ग्रहण का प्रयोजन कहा गया है "जिससे केवल अम् [ णमुल् आदि ] प्रत्यय का ही विधान है तदन्त के साथ ही समास हो अन्य का न हो अर्थात् क्त्वा और णमुल् दोनों प्रत्ययों का एक साथ विधान हो वहाँ इससे समास न हो।' [ अतः अग्रे भोजम् और अग्रे भुक्त्वा में समास नहीं होता है। ]॥ २४॥

**११५८. कर्मण्याक्रोशे कृञः खमुञ् ॥ २५ ॥ ( ३३४६ )**

**कर्मण्युपपदे कृञो धातोः खमुञ् प्रत्ययो भवति आक्रोशे गम्यमाने। चोरंकारमाक्रोशति। चोरोऽसि दस्युरसि इत्याक्रोशति। चोरकरणमाक्रोशसम्पादनार्थमेव, न त्वसौ चोरः क्रियते ॥**

**११५९. स्वादुमि णमुल् ॥ २६ ॥ ( ३३४७ )**

**न्यासः**

**कर्मण्याक्रोशे कृञः खमुञ् ॥ चोरङ्कारमिति।** 'अरुर्द्विषदजन्तस्य मुम्' इति मुम्। **चौरकरणमित्यादि।** करोतिरत्रोच्चारणक्रियः। **चौरोऽसीत्याक्रोशवाक्ये** चौरशब्दस्य यत् करणमुच्चारणं तदाक्रोशस्यैव सम्पादनार्थम्। न हि तेन विनाऽऽक्रोशः शक्यते प्रतिपादयितुम्। **न त्वसौ चौरः क्रियत इति।** अशक्यत्वात्। न च चौरोऽसीति शतकृत्वोऽपि ब्रुवता पुरुषस्य शक्यते चौरत्वमुत्पादयितुम् ॥ २५ ॥

**स्वादुमि णमुल् ॥ स्वादुमीत्यर्थग्रहणमिति।** ननु च 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति वचनात् स्वरूपस्यैव ग्रहणेन भवितव्यम्? नैतदस्ति; शब्दानुशासनप्रस्तावादेव हि शब्दस्येति सिद्धे शब्दग्रहणं यत्र शब्दपरो निर्देशस्तत्र स्वं रूपं गृह्यते नार्थपरनिर्देश इति ज्ञापनार्थं कृतम्, इह चार्थपरो निर्देशः। तस्मादर्थग्रहणमेव युक्तम्। अर्थपरत्वं तु निर्देशस्याविच्छिन्नाचार्यपारम्पर्योपदेशाद् विज्ञायते। अर्थग्रहणे च सति तत्पर्यायेष्वपि

**पदमञ्जरी**

**कर्मण्याक्रोशे कृञः खमुञ् ॥** उदाहरणेषु करोतिरुच्चारणे वर्त्तते, तस्य शब्दात्मकमेव कर्म भवति। तत्र चोरादिशब्दाः शब्दप्रधानाः। **चोरङ्कारम्।** कोऽर्थः? चोरशब्दमुच्चार्येत्यर्थः, तदाह—**चोरोऽसीत्यादि। चोरकरणमिति।** चोरशब्दोच्चारणम्। **आक्रोशसम्पादनार्थमिति।** निन्दितशब्दोच्चारणमन्तरेण तस्य सम्पादयितुशक्यत्वात्। **न त्वसाविति।** न हि चोरोऽसीति वचनेन चोरः क्रियते ॥ २५ ॥

**स्वादुमि णमुल् ॥ स्वादुमीत्यर्थग्रहणमिति।** एतच्च व्याख्यानाल्लभ्यते। **स्वाद्वर्थेष्विति।** मान्तत्वमपि सर्वेषां भवति; अर्थे सम्भवात्। लवणसम्पन्नशब्दावपि स्वादुशब्दपर्यायौ। अथ 'स्वादुमि' इति मकारान्तनिपातनं किमर्थम्, यावता खमुञ् प्रकृतः, सोऽनुवर्त्तिष्यते, तत्र 'अरुर्द्विषदजन्तस्य मुम्' इति मान्तत्वं सिद्धमिति? तत्राह—**मकारान्तनिपातनमीकाराभावार्थमिति।** भावप्रत्ययविषये मान्तत्वे निपात्यमाने 'वोतो गुणवचनात्' इति ङीप् न भवति, मकारान्तत्वादुकारान्तत्वाभावादित्यर्थः। **च्व्यन्तस्येति।** खमुञ्यपि न सर्वत्र मुम् सिद्धयति; तद्विधौ 'अनव्ययस्य' इत्यधिकारादिति भावः। एवं तर्हि मान्तत्वमेव निपात्यताम्, प्रत्ययस्तु प्रकृतः खमुञेव विधेयः? नैतदस्ति; अव्ययार्थमेव मान्तनिपातनं स्यादिति ङीप्स्यादेव। णमुलि तु मान्तत्वमपूर्वं विधीयमानमीकारा-

**भावबोधिनी**

आक्रोश गम्यमान [ प्रतीयमान ] रहने पर कर्म उपपद रहते धातु से खमुञ् प्रत्यय होता है। [ यहाँ भी समानकर्तृक क्रियावाची धातु होनी चाहिये। ] उदा०—चोरङ्कारम् आक्रोशति। [ चोर है—ऐसा कह कर बुलाता है। ] 'चोर हो, डकैत हो—ऐसा कहता है। चोर कहना आक्रोश-सम्पादन [ आक्रोश व्यक्त करने ] के लिये ही है, न कि उसे चोर बनाया जा रहा है।

**विमर्श**—चोरम् उपपद √कृ + खमुञ् = अम्, ञित् होने से ऋ की वृद्धि रपर—कार् अम् = कारम् उपपदसमास और विभक्तिलोप करने पर - चोर—कारम्। खिदन्त उत्तर पद रहते "अरुर्द्विषदजन्तस्य मुम्" ६।३।६७ से मुम् = म् आगम, अनुस्वार परसवर्ण करने पर—चोरङ्कारम्। इसमें कृ धातु का अर्थ उच्चारण = कहना है। जो चोर नहीं है उसके प्रति आक्रोश व्यक्त करने के लिये 'चोर हो' डकैत हो' आदि कह कर आक्रोश व्यक्त किया जाता है ॥ २५ ॥

'समानकर्तृकयोः पूर्वकाले" और 'कृञः' इन दो कि अनुवृत्ति होती है। 'स्वादुमि' इसके अर्थ का ग्रहण है। स्वादु—अर्थ वाले पद उपपद रहने पर कृञ् धातु से णमुल् = अम् प्रत्यय होता है। उदा०—स्वादुङ्कारं भुङ्क्ते।

'समानकर्तृकयोः पूर्वकाले', 'कृञः' इति चानुवर्त्तते। 'स्वादुमि' इत्यर्थग्रहणम्। स्वाद्वर्थेषूपपदेषु कृञो णमुल् प्रत्ययो भवति। स्वादुङ्कारं भुङ्क्ते। संपन्नङ्कारं भुङ्क्ते। लवणङ्कारम्। स्वादुमीति मकारान्तनिपातनमीकाराभावार्थम्, च्व्यन्तस्यापि मकारार्थं दीर्घाभावार्थं च ( म० भा० ३.४.२६ वा० १,२ )। अस्वाद्वीं

**न्यासः**

प्रत्ययो लभ्यत इत्याह—**स्वाद्वर्थेष्वित्यादि**। अथ 'स्वादुमि' इति किमर्थं मकारान्तत्वं निपात्यते, मान्तस्योपपदस्य श्रवणं यथा स्यादिति चेत्? न; यद्येतत् प्रयोजनम्, न निपातयितव्यम्, अनन्तरसूत्रे खमुञः प्रकृतत्वात् स एव विधास्यते। अस्मिंश्च विहिते मुमैव मान्तत्वमुपपदस्य भविष्यतीत्येतच्चोद्यमपाकर्तुमाह-**स्वादुमीत्यादि**। एतेनैतद् दर्शयति—यद्यपि खमुञि सति सिध्यति मकारान्तत्वम्, ईकारप्रतिषेधस्तु न सिध्यति, ततश्च स्वादुशब्दादुपपदाद् 'वोतो गुणवचनात्' इति ङीष् प्रसज्येत, तथा चानिष्टं रूपं स्यात्। मकारान्तत्वनिपातने हि निमित्तस्य विहतत्वात् ङीष्प्रसङ्गो नास्ति। तस्माद् योऽपि खमुञं विदधाति तेनाप्यवश्यमीकारप्रतिषेधार्थं मकारान्तत्वं निपातयितव्यमिति। यदपि परस्याभिमतम्-'खमुञि विहिते मुमैव मकारान्तत्वं भविष्यति' इति, तदपि न सर्वत्रेति सूचयितुमाह—**च्व्यन्तस्येत्यादि**। अनेनैतद् दर्शयति—यदि मकारान्तत्वं न निपात्येत तदा सत्यपि खमुञि मकारान्तत्वं च्व्यन्तस्योपपदस्य न स्यात्; तस्याव्ययत्वात्। मुम्विधौ च 'खित्यनव्ययस्य' इत्यधिकारात्। तस्माद् योऽपि खमुञं विदधाति तेनापि मकारान्तत्वनिपातनं कर्त्तव्यम्। एवं हि मकारान्तत्वनिपातनमेव क्रियताम्, प्रत्ययस्तु प्रकृतः खमुञेव विधातव्यः? अशक्यः खमुञ् विधातुम्; खमुञ्प्रत्यये हि मकारान्त-

**पदमञ्जरी**

भावार्थं च च्व्यन्तस्य च मकारान्तार्थं विज्ञायते। अवश्यं चोत्तरत्र णमुल् विधेय इति लाघवाभावादिहैव कृतः। **अस्वाद्वीं स्वाद्वीं कृत्वेति**। द्वयोर्वाक्ययोस्तन्त्रेणोपादानमेतत्। स्वाद्वीं कृत्वा यवागूं भुङ्क्त इतीकाराभावस्योदाहरणम् अस्वादु स्वादु भुङ्क्त इत्यव्ययस्य। इह यदि क्त्वादयः प्रत्ययाः 'कर्त्तरि कृत्' इति वचनात्कर्त्तरि स्युः, इह पक्त्वौदनो भुज्यते देवदत्तेनेति देवदत्तात्तृतीया न स्यात्, क्त्वाप्रत्ययेनाभिहितः कर्त्तेति। अथ क्त्वाप्रत्ययेनाभिधाने सत्यपि भुजिप्रत्ययेनानभिहितः कर्तेति कृत्वाऽनभिहिताश्रया विभक्तिर्भवति तृतीया? यद्येवम्, ओदने द्वितीया प्राप्नोति, किं कारणम्? भुजिप्रत्ययेनाभिधानेऽपि क्त्वाप्रत्ययेनानभिहितं कर्मेति। तथा यदि कर्मणि स्युः, पक्त्वौदनं भुङ्क्ते देवदत्त इति देवदत्तात्तृतीया प्राप्नोति, ओदनात् प्रथमा - पक्त्वौदनो भुङ्क्ते देवदत्तेन, पक्त्वौदनं भुङ्क्ते देवदत्त इत्येव तु भवति। तथास्मिन् णमुल्यपि स्वादुङ्कारं भुज्यते यवागूर्देवदत्तेनेति यवाग्वा द्वितीया न भवति, स्वादुङ्कारं यवागूं भुङ्क्ते देवदत्त इत्यत्रापि कर्मणि द्वितीया भवति, कर्त्तरि तृतीया च न भवति। एवमेव तुमुनो द्रष्टव्यम्। तथा 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' 'समानकर्तृकेषु तुमुन्' इत्यत्रापि तुमुनि भोक्तुमोदनः पच्यते देवदत्तेन, इष्यते ग्रामो गन्तुं देवदत्तेन, भोक्तुमोदनं पचति देवदत्तः, ग्रामं गन्तुमिच्छति देवदत्त इति सर्वत्रानुप्रयोगात् यत्र लादयस्तदनुरोधेनैव कर्तृकर्मणोर्विभक्तिर्भवति। तस्मादव्ययकृतः समानाधिकरणे इति वक्तव्यम्, केन सामानाधिकरण्ये? अनुप्रयोगेण। एतदुक्तं भवति—अनुप्रयुज्यमानाद्धातोर्यस्मिन्कारके लादयो विहितास्तत्रैवाव्ययकृतोऽपि भवन्तीति। एवं ह्युभाभ्यां कर्तृकर्मणोरभिहितत्वाद्यथायथं विभक्तयः सिद्ध्यन्ति।

**भावबोधिनी**

[ स्वादयुक्त बनाकर खाता है। स्वादुम् उपपद √कृ + णमुल् = अम्, ऋ की वृद्धि, रपर—कारम्, "अमेवाव्ययेन" २.२.२० से उपपदसमास विभक्ति का लोप—स्वादुकारम् ] इसी सूत्र से मकारान्तत्व भी निपातन होता है। स्वादुम् कारम्। म् का अनुस्वार और परसवर्ण करने पर—स्वादुङ्कारम् ] सम्पन्नङ्कारं भुङ्क्ते [ सम्पन्न = अच्छा बनाकर खाता है ] असम्पन्नं सम्पन्नं कृत्वा भुङ्क्ते—यह विग्रह है। ] लवणङ्कारं भुङ्क्ते [ नमकीन बनाकर खाता है। अलवणं लवणं कृत्वा भुङ्क्ते यह विग्रह है। लवण शब्द लवणयुक्त का वाचक है। ]

**स्वाद्वीं कृत्वा (यवागूं) भुङ्क्ते स्वादुङ्कारं भुङ्क्ते (म० भा० ३.४.२६ )। वाऽसरूपेण क्त्वापि भवति - (अस्वादु) स्वादुं कृत्वा भुङ्क्ते। तुमर्थाधिकाराच्च सर्व एते भावे प्रत्ययाः। यद्येवम्, स्वादुङ्कारं भुङ्क्ते देवदत्त इति णमुला**

**न्यासः**

त्वनिपातनमव्ययार्थं विज्ञायते, ततश्च 'च्वौ च' इति दीर्घत्वं स्यादेव। णमुलि सति सर्वविषयपवादस्तु विज्ञायेत, तेन दीर्घत्वमपि न भवति। अवश्यञ्चोत्तरार्थं णमुल् विधेयः, न च तस्मिन्नुत्तरत्र विधीयमाने लाघवं भवति, नापीह गौरवम्।

क्व पुनरर्थ एते प्रत्यया भवन्तीत्याह- **तुमर्थाधिकाराच्चेत्यादि**। **एत इति**। ये तुमर्थाधिकारे विहिताः। **यद्येवमिति**। यदि तुमर्थे भवन्तीत्यर्थः। **भुजिप्रत्ययेनेत्यादि**। यद्यपि णमुलाऽनभिहितः कर्त्ता, तथापि भुजिप्रत्ययेन लटाभिहित इति न भवितव्यं तृतीयया। ननु च शक्तिलक्षणः कर्त्ता, अन्या च स्वादुकरणविषया शक्तिः, अन्या च भुजिक्रियाविषया, तत्र लटाभिहितायामपि भुजिक्रियाविषयायां शक्ताावितरस्याः शक्तेः कर्तृसंज्ञाया अनभिधानात् प्राप्नोतीत्येव तृतीयेत्याह— **न चास्मिन्नित्यादि**। अत्र हि समानकर्तृकप्रकरणे शक्तिमतः शक्तीनाञ्च

**पदमञ्जरी**

**वृत्तिकार**स्त्विममर्थमन्यथा साधयितुमाह— **तुमर्थाधिकाराच्चेति**। तत्र सयादिसूत्रे तुमर्थग्रहणात् तुमुन् भावे भवतीति ज्ञापितम्, तदेव च तुमर्थग्रहणं 'शकधृषज्ञा' इतियावदनुवर्त्तते, अतः सर्व एते क्त्वादयो भावे भवन्तीति तत्र चोदयति— **यद्येवमिति**। **तृतीया कस्मान्न भवतीति**। एतच्चोपलक्षणम्, स्वादुङ्कारं यवागूः भुज्यते देवदत्तेनेत्यत्र कर्मणि द्वितीया कस्मान्न भवतीत्यपि द्रष्टव्यम्। 'अनभिहिते' इति पर्युदासे चैतच्चोद्यम्— तदा हि सत्यभिधानेऽनभिधाने च यतोऽनभिधानं तदाश्रया विभक्तिः प्राप्नोति। परिहरति— **भुजिप्रत्ययेनेति**। 'अनभिहिते' इति प्रसज्यप्रतिषेध आश्रीयते इति भावः। तदा हि यतोऽभिधानं तदाश्रयः प्रतिषेधो भवति। ननु च शक्तिः कारकम्, अन्या च करणविषया शक्तिः, अन्या च भुजिविषया, तत्र यद्येकस्या शक्तेरभिधानमनभिधानं च स्यात्, स्यादयं परिहारः, यतोऽभिधानं तदाश्रयः प्रतिषेध इति शक्तिभेदात्त्वयुक्तः ? इत्यत्राह- **न चास्मिन्निति**। किं कारणं भेदो न विवक्षितः ? इत्याह— **समानकर्तृकत्वं हि विरुध्यत इति**। ननु च मा नामास्मिन्प्रकरणे शक्तिभेदो विवक्षितः, 'अनभिहितेन' इत्यत्र कस्मान्न विवक्ष्यते ? असम्बद्धमेतत्; कथं हि तस्मिन्नेव प्रयोगे तदैव विवक्षाविवक्षे स्याताम्। किञ्च— 'अनभिहिते' इत्येकत्वादीनामाधारनिर्देशोऽनभिहिते कर्मादौ यदेकत्वादि तत्रेति, द्रव्यमेव चैकत्वादीनामाधारो न शक्तिः, अतस्तत्रापि द्रव्यमेवानभिहितमित्युच्यते, तस्य च शक्तिद्वारेणा-

**भावबोधिनी**

'स्वादुमि' यह मकारान्तत्व का निपातन ईकार का अभाव सिद्ध करने के लिये है [ अर्थात् = मकारान्त न रहने पर "वोतो गुणवचनात्" ४।१।४४ सूत्र से ङीष् = ई होने लगेगा और अनिष्ट रूप होने लगेगा। ] और च्व्यन्त का भी मकार सिद्ध हो जाय और दीर्घ न हो— इन कार्यों के लिये मकारान्तत्व का निपातन है। अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते। [ यह विग्रह है ]—स्वादुङ्कारं भुङ्क्ते। "वाऽसरूपोऽस्त्रियाम्" ३।१।९४ सूत्र के अनुस्वार क्त्वा प्रत्यय भी होता है— स्वादुं कृत्वा भुङ्क्ते [ अर्थ पूर्वोक्त ही है। ]

'तुमर्थे'— इसका अधिकार होने से ये सभी प्रत्यय भाव अर्थ में होते हैं। यदि ऐसा है तो 'स्वादुङ्कारं भुङ्क्ते देवदत्तः' यहाँ णमुल् प्रत्यय से कर्ता का अभिधान [ कथन ] नहीं हो रहा है अतः कर्ता [ देवदत्त ] में [ "कर्तृकरणयोस्तृतीया" २।३।१८ सूत्र से ] तृतीया क्यों नहीं होती है ? भुङ्क्ते में 'ते' प्रत्यय से कर्ता अभिहित = उक्त है। इस प्रकरण में शक्तिमान् और शक्ति [ कारकत्व शक्ति और कारक शक्तिमान् में ] भेद विवक्षित नहीं है; अन्यथा समानकर्तृत्व का विरोध होने लगेगा [ अर्थात् कृ का कर्तृत्व और भुज् का कर्तृत्व पृथक् पृथक् मान लेने पर दोनों का समानकर्तृत्व न रहने पर इस प्रकरण में प्रत्यय ही नहीं हो सकेंगे। ] प्रधान शक्ति का अभिधान हो जाने पर गुणशक्ति अभिहित के समान प्रकाशित हो जाती हैं।

**कर्तुरनभिहितत्वात् कर्त्तरि कस्मात्तृतीया न भवति ? भुजिप्रत्ययेनाभिहितः कर्त्ता, न चास्मिन्प्रकरणे शक्तिशक्ति-मतोर्भेदो विवक्ष्यते, समानकर्तृत्वं हि विरुध्यते । प्रधानशक्त्यभिधाने वा गुणशक्तिरभिहितवत् प्रकाशते ॥**

**११६०. अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ॥ २७ ॥ ( ३३४८ )**

**'कृञः' इत्येव । अन्यथादिषूपपदेषु कृञो णमुल् प्रत्ययो भवति, सिद्धाप्रयोगश्चेत्करोतेर्भवति । कथं**

न्यासः

भेदो न विवक्ष्यते । तेनशक्तिमान् देवदत्तः कर्त्ता । स चैक एवाभिहितश्चेति कुतस्तृतीयाप्रसङ्गः ! किं कारणं भेदेनोपादानं न विवक्षितम् ? इत्याह—**समानकर्तृकत्वं हीत्यादि** । अभ्युपगम्यापि भेदविवक्षाम्, परिहारान्तर-माह – **प्रधानशक्त्यभिधान इत्यादि** । किंकृतः पुनरत्र कर्तृशक्त्योः प्रधानगुणभावः ? क्रियाकृतः; स्वादुङ्कारं हि गुणभूतम्, भुजिक्रियार्थत्वात् । भुजिक्रिया तु प्रधानम्; तेनोपकार्यत्वात् । क्रियायाश्च गुणप्रधानभावात् तद्विषययोरपि कर्तृशक्त्योः प्रधानगुणभावो भवति । तत्र प्रधानशक्तावभिहितायामप्रधानशक्तिरभिहितत्वात् प्रकाशते = प्रतिभासते; प्रधानानुयायित्वाद् गुणानाम् । तेन तृतीया न भवतीति भावः ॥ २६ ॥

**अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ॥ सिद्धाप्रयोग इति** । सिद्धोऽप्रयोगो यस्य स तथोक्तः । **निरर्थक-त्वादित्यादि** । अभिधेयाभावात् प्रयोजनाभावाद्वा निरर्थकत्वम् । **एवमेवेति** । निरर्थकत्वमेवेत्यर्थः, **अन्यथा**

पदमञ्जरी

भिधानानभिधानयोः सतोर्यतोऽभिधानं तदाश्रयः प्रतिषेधो भवतीति युक्तमेव । अभ्युपेत्यापि शक्तिभेदविवक्षां परिहारमाह—**प्रधानशक्त्यभिधाने चेति** । आख्यातपदवाच्या क्रिया विशेष्यत्वात् प्रधानम्, विशेषणभूता त्वप्रधानम् तद्द्वारेण तद्विषययोः शक्त्योरपि गुणप्रधानभावः । तत्र प्रधानानुवर्तित्वाद् गुणानां तन्मुखप्रेक्षित्वात् तद्विरुद्धस्वकार्यारम्भाभावाद्यथायथं विभक्तिसिद्धिरित्यर्थः । उक्तं च—

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुद्ध्यते ॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा गुणे तदा तद्वदनुक्तापि प्रतीयते ॥ इति । (वा० प० ३.७.८१–८२)

वयं तु ब्रूमः—सकृत् श्रुतस्य युगपदुभाभ्यां सम्बन्धाभावादेकेनैव प्रधानेन शाब्दोऽन्वय इति, इतरेण तु सन्निधानादार्थ इति ॥ २६ ॥

**अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ॥ कथं पुनरसौ सिद्धाप्रयोग इति** । सिद्ध ओदन इत्यादौ सिद्धशब्दो निष्पन्नवचनः, ततश्च सिद्धश्चेदप्रयोगः कथमप्रयुज्यमानात्ततो णमुल्विधिरिति प्रश्नः । 'सिद्धे सत्यारम्भो

भावबोधिनी

विमर्श—स्वादुङ्कारं भुङ्क्ते देवदत्तः—आदि में णमुल् प्रत्यय भावार्थक है । अतः उससे कर्ता का अभिधान न होने से अनुक्त कर्ता मानकर देवदत्त में तृतीया होनी चाहिये । ऐसी शंका यहाँ सर्वत्र हो सकती है क्योंकि सर्वत्र दो क्रिया-पद रहते हैं । समाधान यह है कि ऐसे स्थलों पर दोनों क्रियाओं की कर्तृत्वशक्ति [ कारकत्व ] में भेद नहीं माना जाता है और जब तिङन्त क्रियापद से कर्तृत्व उक्त हो जाता है तो कृदन्त क्रियापद जो गौण होता है उसके द्वारा भी [ कर्तृत्व ] उक्त ही मान लिया जाता है । इस प्रकार यहाँ अनुक्त कर्ता नहीं रहता, तृतीया की आपत्ति नहीं होती है । इस विषय में भर्तृहरि का स्पष्ट मत पदमञ्जरी में कारिकारूप में उद्धृत है, वहीं देखें ॥ २६ ॥

'कृञः' इतनी ही अनुवृत्ति होती है । (१) अन्यथा, (२) एवम्, (३) कथम् और (४) इत्थम्—इन शब्दों के उपपद रहते कृञ् धातु से णमुल् प्रत्यय होता है यदि कृञ् धातु का अप्रयोग [ प्रयोग न करना ] सिद्ध रहता है तो ।

**पुनरसौ सिद्धाप्रयोगः ? निरर्थकत्वान्न प्रयोगमर्हतीति एवमेव प्रयुज्यते । अन्यथा भुङ्क्ते इति यावानर्थस्तावानेव अन्यथाकारं भुङ्क्ते इति गम्यते । अन्यथाकारं भुङ्क्ते । एवङ्कारं भुङ्क्ते । कथङ्कारं भुङ्क्ते । इत्थङ्कारं भुङ्क्ते । सिद्धाप्रयोग इति किम् ? अन्यथा कृत्वा शिरो भुङ्क्ते ॥**

**११६१. यथातथयोरसूयाप्रतिवचने ॥ २८ ॥ ( ३३४९ )**

**न्यासः**

**भुङ्क्त इत्यादिना** तदेवानर्थकत्वं चेतसि कृत्वा सिद्धाप्रयोगतां दर्शयति । अन्यथा भुङ्क्त इति यावानेवार्थः करोतावप्रयुज्यमाने गम्यते तावानेवार्थोऽन्यथाकारं भुङ्क्त इति करोतौ प्रयुज्यमानेऽपि । तस्मादनर्थकः करोतिः । कथं पुनः प्रयुज्यमान एवानर्थको भवति ? अन्यथादय एते प्रकारवचनाः, ते यदानुप्रयोगधातोरर्थस्य प्रकारमाचक्षते तदा कृञपि तैर्विशेष्यमाणस्तदीयप्रकारमाचष्टे, स चान्यत एवागत इत्यनर्थको भवति । यद्येवम्, अवगतार्थत्वात् तस्य प्रयोगो न प्राप्नोति ? नैवम्; अवगतार्थस्यापि प्रयोगो दृश्यते, यथा—अपूपौ द्वावानय, पचाम्यहमिति ।

**अन्यथा कृत्वा शिरो भुङ्क्त** इत्यत्रान्यथाशब्देन पदान्तरस्य शिरसः प्रकारमाख्यायते । स विना करोतिना नावगम्यते । यदि हि करोतिर्न प्रयुज्येत, भुजिक्रियागत एव प्रकारोऽन्यथालक्षणः प्रतीयेत, न शिरोगतः । शिरसस्तु भुज्यमानतैवावगम्येत । तस्मान्नात्र करोतिः सिद्धाप्रयोगः ॥ २७ ॥

**यथातथयोरसूयाप्रतिवचने ॥ असूयाप्रतिवचन इति ।** असूयाप्रभवं प्रतिवचनमसूयाप्रतिवचनम् ।

**पदमञ्जरी**

नियमार्थः' इतिवत्प्राप्तवचनः सिद्धशब्द इत्युत्तरम् । **निरर्थकत्वादिति** । निष्प्रयोजनत्वात् । **एवमेवेति** । निरर्थक एव सन्नित्यर्थः । एतदेव स्फोरयति—**अन्यथा भुङ्क्त इति । यावानर्थ इति ।** उदाहरणेष्वनुप्रयोगेषु या क्रिया तत्प्रकारवचना अत्रान्यथादयः । **अन्यथा कृत्वा शिरो भुङ्क्त इति ।** अत्र तु विना करोतिना शिरसोऽन्यथाकरणं न प्रतीयते, भुजिक्रियागत एव प्रकारो गम्यते, अतोऽवश्यं प्रयोज्यः करोतिः ॥ २७ ॥

**यथातथयोरसूयाप्रतिवचने ॥ यद्यसूयन् पृच्छति प्रतिवक्तीति** । पृच्छति सति यद्यसूयन् प्रतिवक्तीत्यर्थः ।

**भावबोधिनी**

यह अप्रयोग कैसे सिद्ध रहता है ? निरर्थक होने से प्रयोग के योग्य नहीं होता है, अतः यों ही [ निरर्थक ही ] प्रयुक्त कर दिया जाता है । अन्यथा भुङ्क्ते [ दूसरे प्रकार से = विकृत करके खाता है ]—इससे जितना अर्थ प्रतीत होता है उतना ही अर्थ—अन्यथाकारं भुङ्क्ते—इससे भी प्रतीत होता है । उदा०—अन्यथाकारं भुङ्क्ते । [ अन्य प्रकार से खाता है । ] एवङ्कारं भुङ्क्ते [ इस प्रकार खाता है । ] कथङ्कारं भुङ्क्ते [ किस प्रकार खाता है । ] एवङ्कारं भुङ्क्ते [ इस प्रकार खाता है ] । अन्यथा उपपद √ कृ + णमुल् = अम्, ऋ की वृद्धि, रपर – कारम् । अमन्त मानकर उपपदसमास अन्यथाकारम् । ] इनका अप्रयोग सिद्ध हो—इसके ग्रहण का क्या फल है ? अन्यथा कृत्वा शिरो भुङ्क्ते [ सिर दूसरी ओर करके खाता है । यहाँ कृ धातु सार्थक है और इसका सम्बन्ध 'शिरः' के साथ है न कि 'अन्यथा' के साथ । इसलिये इस 'कृ' के प्रयोग की आवश्यकता है । अतः प्रस्तुत सूत्र नहीं प्रवृत्त होता है ।

**विमर्श** जब 'कृ' धातु का प्रयोग किये बिना और प्रयोग करने पर बराबर एक प्रकार का ही अर्थ प्रतीत होता है वहाँ 'कृ' का प्रयोग करने की आवश्यकता नहीं रहती है । फिर भी यदि 'अन्यथा' आदि शब्दों के साथ प्रयोग कर ही दिया जाय तो 'कृ' से णमुल् प्रत्यय होता है । परन्तु इस णमुलन्त 'कारम्' का कोई अतिरिक्त अर्थ नहीं होता है । अतः अन्यथा भुङ्क्ते और अन्यथाकारं भुङ्क्ते में अर्थ की दृष्टि से कोई भेद नहीं है ॥ २७ ॥

'कृञः' 'सिद्धाप्रयोगे' इनकी अनुवृत्ति होती है । असूया से प्रतिवचन = उत्तर देना गम्यमान रहने पर यथा और तथा शब्द उपपद रहते कृञ् धातु से णमुल् प्रत्यय होता है । [ पृच्छति सति यदि असूयन् प्रतिवक्ति तत्र प्रति-

'कृञः' 'सिद्धाप्रयोगे' इति वर्त्तते। यथातथाशब्दयोरुपपदयोः कृञो णमुल् प्रत्ययो भवति, असूयाप्रतिवचने गम्यमाने। यद्यसूयन् पृच्छति प्रतिवक्ति तत्र प्रतिवचनम् – यथाकारमहं भोक्ष्ये तथाकारमहम्, किं तवानेन ?

असूयाप्रतिवचन इति किम् ? यथा कृत्वाऽहं भोक्ष्ये तथा द्रक्ष्यसि।

सिद्धाप्रयोग इत्येव– यथा कृत्वाऽहं शिरो भोक्ष्ये किं तवानेन ?

## ११६२. कर्मणि दृशिविदोः साकल्ये ॥ २९ ॥ ( ३३५० )

**न्यासः**

**यद्यसूयन्नित्यादि**। असूयन्निति शत्रन्तमेतत्। कण्ड्वादियगन्तः। अस्य प्रतिवक्तीत्यनेन सम्बन्धः। प्रतिवक्ति=प्रतिभणति, प्रतिवचनं ददातीत्यर्थः। पृच्छतीति। सप्तम्यन्तमेतत्। पृच्छति सति यद्यसूयन्= असूयां कुर्वन् प्रतिवक्ति तदा तत्र पृच्छति यत् प्रतिवचनं तदसूयाप्रतिवचनम्। **यथाकारमित्यादि**। कथं भवान् भोक्ष्यते इत्येवं वचनं पृच्छति सत्यसूयाप्रतिवचनमेतत्। **यथा कृत्वाहं भोक्ष्ये तथा द्रक्ष्यसीति**। नैतदसूयाप्रतिवचनम्। किं तर्हि ? तद्व्याख्यानम् ॥ २८ ॥

**कर्मणि दृशिविदोः साकल्ये ॥ कर्मण्युपपदे साकल्यविशिष्ट इति। एतेन साकल्यग्रहणं कर्मविशेषणमिति**

**पदमञ्जरी**

'असु मानसोपतापे' कण्ड्वादिः। **तत्रेति**। एवम्भूते विषये यत्प्रतिवचनं तदसूयाप्रतिवचनमित्यर्थः। **यथाकारमिति**। प्रष्टुमनर्हः सन् यदि पृच्छति तदेदमुत्तरम्। **यथा कृत्वाहं भोक्ष्य इति**। तत्त्वकथनमेतत्। कथं पुनरत्र क्त्वाप्रत्ययः, यावता 'सिद्धाप्रयोगे' इति वचनादनर्थकोऽत्र करोतिः, ततश्च भेदनिबन्धनस्य पौर्वकाल्यस्य समानकर्तृकत्वस्य चाभावान्नात्र प्राप्नोति, णमुल् पुनरुभयाभावेऽपि वचनसामर्थ्याद्भवति ? उच्यते; क्रियासामान्यवचनः करोतिस्तद्विषयप्रकारो यथातथाशब्दाभ्यामुच्यते, तत्र सामान्यस्य सन्निहिते विशेषे पर्यवसानात्तद्विषय एव प्रकार उक्तो भवति, ततश्च यथा भोक्ष्यते इति यावानर्थस्तावानेव सत्यपि करोतावित्येतावता सिद्धाप्रयोगत्वमुच्यते, न पुनरत्यन्तमभिधेयाभावात्, ततश्च क्रियाभेदनिबन्धन उपपन्न एव क्त्वाप्रत्ययः। एवं च कृत्वा पूर्वसूत्रेऽपि वाऽसरूपेण क्त्वा भवति। **भाष्येऽपि** तत्र तत्र प्रयुज्यते—'अन्यथा कृत्वा चोदितमन्यथा कृत्वा परिहार उक्तः', 'कथं कृत्वा बाधकम्' इत्यादि ॥ २८ ॥

**कर्मणि दृशिविदोः साकल्ये ॥ कर्मण्युपपदे साकल्यविशिष्ट इति**। सकलस्य भावः साकल्यम्, तद्विशिष्टे

**भावबोधिनी**

वचनम्—ऐसा अन्वय है ] दूसरे के द्वारा पूछे जाने पर यदि निन्दा करता हुआ उत्तर देता है तो वहाँ [ असूया—] प्रतिवचन होता है; जैसे—यथाकारम् अहं भोक्ष्ये तथाकारम् अहं भोक्ष्ये किं तवानेन ? [ मैं जैसे भी खाऊँगा, वैसे खाऊँगा आपको इससे क्या ? यहाँ 'यथा भोक्ष्ये तथा भोक्ष्ये' इतना कहने पर और 'यथाकारं भोक्ष्ये तथाकारं भोक्ष्ये' कहने पर अर्थ में कोई अन्तर नहीं होता। अतः 'कृञ्' का अप्रयोग सिद्ध होने से णमुल् होता है। सिद्धि की प्रक्रिया पूर्ववत् ही है। ]

असूया से उत्तर देने में—इसके ग्रहण का क्या लाभ ? यथा कृत्वाऽहं भोक्ष्ये तथा त्वं द्रक्ष्यसि [ मैं जैसे खाऊँगा वैसा तुम देखना। यहाँ सामान्य कथन है। इसलिये णमुल् न होकर क्त्वा होने से 'यथा कृत्वा' होता है। 'किं तवानेन' आदि का प्रयोग करने पर असूया प्रतीत होती है।

कृञ् का अप्रयोग सिद्ध रहने पर—यही होना चाहिये—यथा कृत्वाहं शिरः भोक्ष्ये किं तव अनेन ? [ मैं शिर को जैसा भी करके खाऊँगा आपको इससे क्या ? यहाँ 'कृ' का प्रयोग सार्थक है। इसका सम्बन्ध 'शिर' के साथ है। अतः णमुल् न होकर क्त्वा होता है ] ॥ २८ ॥

साकल्यविशिष्ट [=सम्पूर्णतायुक्त ] कर्म उपपद रहते दृश् और विद् धातुओं से णमुल् प्रत्यय होता है। उदा०—कन्यादर्शं वरयति। जिन-जिन कन्याओं को देखता है उन-उन का वरण कर लेता है यह अर्थ है। ब्राह्मणवेदं

कर्मण्युपपदे साकल्यविशिष्टेऽर्थे दृशिविदोर्धात्वोर्णमुल् प्रत्ययो भवति । **कन्यादर्शं वरयति । या याः कन्याः पश्यति तास्ता वरयतीत्यर्थः । ब्राह्मणवेदं भोजयति । यं यं ब्राह्मणं जानाति लभते विचारयति वा तान् सर्वान् भोजयतीत्यर्थः ॥** साकल्ये इति किम् ? ब्राह्मणं दृष्ट्वा भोजयति ॥

**११६३. यावति विन्दजीवोः ॥ ३० ॥ ( ३३५१ )**

यावच्छब्द उपपदे विन्दतेर्जीवतेश्च णमुल् प्रत्ययो भवति । **यावद्वेदं भुङ्क्ते । यावल्लभते तावद् भुङ्क्त इत्यर्थः । यावज्जीवमधीते । यावज्जीवति तावदधीत इत्यर्थः ॥**

**न्यासः**

दर्शयति । यं यं जानासि लभते विचारयति वेति । एतेन ज्ञानलाभविचारणार्थानां विदीनां ग्रहणमिति दर्शयति । कुतः पुनः सत्तार्थस्य ग्रहणं न भवति ? तस्याकर्मकत्वात्, कर्मणीति चोपादानात् ॥ २९ ॥

**यावति विन्दजीवोः ॥ विन्दतेरिति । 'विद्लृ लाभे' इत्यस्य ॥ ३० ॥**

**पदमञ्जरी**

कर्मण्युपपदे इत्यर्थः । **कन्यादर्शं वरयतीति ।** अत्र दर्शनविषयभूतानां सर्वासामेव कन्यानां वाक्यार्थेनान्वयात् साकल्यम्, सर्वाः कन्या वरयतीत्यत्रापि दर्शनविषयभूता इत्यर्थः । अतिशयप्रतिपादनपरं चैतत्; यस्मात् कस्याश्चित्परित्यागेऽपि भवत्येव । **जानाति लभते विचारयति वेति ।** सत्तार्थस्य तु विदेरकर्मकत्वादग्रहणमिति भावः ॥ २९ ॥

**यावति विन्दजीवोः ॥ विन्देति** विदेर्लाभार्थस्यानुकरणम्, तस्य हि विन्दतीत्यादौ 'शे मुचादीनाम्' इति नुमस्ति । **यावल्लभते तावद् भुङ्क्ते इत्यर्थ इति ।** एतेनासाकल्यं दर्शयति, साकल्ये हि पूर्वेणैव सिद्धम् ॥ ३० ॥

**भावबोधिनी**

भोजयति । जिस जिसको ब्राह्मण जानता है, प्राप्त करता है, सोचता है उन सभी को खिलाता है - यह अर्थ है । साकल्ये - इसका क्या लाभ ? ब्राह्मणं दृष्ट्वा भोजयति [ एक ब्राह्मण को देखकर खिलाता है । यहाँ नहीं होता है ।

**विमर्श**—कर्मणि उपपदे साकल्यविशिष्टेऽर्थे दृशिविदोः धात्वोः णमुल् प्रत्ययो भवति - यह काशिकाकार ने वृत्ति में लिखा है । यहाँ 'अर्थे' पद का अन्वय अस्पष्ट है । सभी व्याख्याकारों ने 'साकल्यविशिष्टे कर्मणि उपपदे' ऐसा लिखा है । सिद्धान्तकौमुदीकार ने 'साकल्य' के अन्वय का स्पर्श वृत्ति में नहीं किया है । इस स्थिति में 'अर्थे' पाठ की संगति करने के लिये 'वर्तमानयोः' इतना और अधिक जोड़कर 'साकल्यविशिष्टे अर्थे वर्तमानयोः' ऐसा कहा जा सकता है । तब सभी व्याख्याकारों से विरोध होता है । अतः 'अर्थे' यह पाठ प्रक्षिप्त प्रतीत होता है । बालमनोरमाकार की व्याख्या सबसे अच्छी प्रतीत होती है—"कर्मणि उपपदे तदर्थस्य = धात्वर्थं प्रति कर्मभूतस्य साकल्ये गम्ये दृशिविदिभ्यां णमुल् इति फलितम् ।" [ द्र० प्रस्तुत सूत्र पर बालमनोरमा ] ।

विद धातु ज्ञान, लाभ, विचार और सत्ता—इन चार अर्थों में प्रयुक्त होती है । इनमें सत्ता अर्थ का ग्रहण नहीं होता है क्योंकि उसमें विद धातु अकर्मक रहती है और यहाँ कर्म उपपद मानने से सकर्मक का ही ग्रहण सम्भव है ॥ २९ ॥

यावत् शब्द उपपद रहते विद्लृ [ लाभार्थक ] और जीव [ प्राणधारणार्थक ] —इन दो धातुओं से णमुल् प्रत्यय होता है । उदा०- यावद्वेदं भुङ्क्ते । जितना ( भी ) पाता है उतना खा जाता है । यह अर्थ है । यावज्जीवम् अधीते । जब तक जीवित रहता है तब तक पढ़ता रहता है । [ यावद् उपपद √विद् + णमुल् = अम्, उपधागुण, उपपदसमास - यावद्वेदम् । इसी प्रकार यावद् + जीव् + णमुल् = अम्, श्चुत्व से द् का ज्—यावज्जीवम् ] ॥ ३० ॥

## ११६४. चर्मोदरयोः पूरेः ॥ ३१ ॥ ( ३३७२ )

**'कर्मणि'** इत्येव। **चर्मोदरयोः कर्मणोरुपपदयोः पूरयतेर्णमुल् प्रत्ययो भवति। चर्मपूरं स्तृणाति। उदरपूरं भुङ्क्ते ॥**

## ११६५. वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ॥ ३२ ॥ ( ३३७३ )

**'कर्मणि' इत्येव। पूरयतेर्धातोर्णमुल् प्रत्ययो भवति, ऊलोपश्चास्य पूरयतेरन्यतरस्यां भवति, समुदायेन**

न्यासः

**चर्मोदरयोः पूरेः ॥ पूरयतेरिति।** एतेन निर्देशे ण्यन्तस्येदं ग्रहणमित्याचष्टे। इह कर्मणीति वर्त्तते। न चाण्यन्तस्य पूरेः कर्म सम्भवति; अकर्मकत्वात्। ण्यन्तस्य सम्भवति; अकर्मका हि धातवो ण्यन्ताः सकर्मका भवन्ति। तस्माण्ण्यन्तस्येदं ग्रहणं विज्ञायते ॥ ३१ ॥

**वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ॥ समुदायेनेति।** प्रकृतिप्रत्ययोपपदसमुदायेन। एतेन वर्षप्रमाणस्य समुदायोपाधित्वं दर्शयति।

**अस्यग्रहणं किमर्थमिति।** प्रकृतत्वात् पूरयतेः, अस्येति वचनमन्तरेणापि तस्यैव लोपो विज्ञास्यत इत्यभिप्रायः। **उपपदस्य मा भूदिति**—यद्यस्येति नोच्येत ततो यथा वर्षप्रमाणं समुदायोपाधिर्विज्ञायते,

पदमञ्जरी

**चर्मोदरयोः पूरेः ॥** कर्मणीत्यनुवृत्तेः पूरेरिति ण्यन्तस्येदं ग्रहणम्, केवलस्याकर्मकत्वादित्याह— **पूरयतेरिति। उदरपूरं भुङ्क्त इति।** उदरं पूरयन् भुङ्क्त इत्यर्थः। एवमादिषु प्रायेण पौर्वकाल्यं नास्ति, तस्मात् 'पूर्वकाले' इति न सम्बन्धनीयमित्याहुः ॥ ३१ ॥

**वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ॥ गोष्पदपूरमिति।** गोः पदं पूरयन्वृष्ट इत्यर्थ, वृषेरकर्मकत्वात्कर्त्तरि क्तः। अत्रापि 'पूर्वकाले' इति न सम्बन्धनीयमित्याहुः। **सीतापूरमिति।** सीता = लाङ्गलपद्धतिः।

**अस्यग्रहणं किमर्थमिति।** सन्निधानादेव पूरयतेरूलोपो विज्ञास्यत इति प्रश्नः। **उपपदस्य मा भूदिति।** अस्येत्यनुच्यमाने वर्षप्रमाणवदूलोपोऽपि समुदायविषयो विज्ञायेत—प्रकृत्युपपदसमुदाये सन्निहितो य ऊकारस्तस्य लोप इति, ततश्चोपपदस्यापि स्यादिति भावः।

'ऊलोपश्चास्यान्यतरस्याम्' इति शक्यमकर्तुंम्। कथं गोष्पदप्रमिति? 'प्रा पूरणे' इत्यस्माद्धातोः 'आतोऽनुपसर्गे कः', क्रियाविशेषणत्वात्कर्मत्वनपुंसकत्वे, न रूपभेदः, नार्थभेदः, न स्वरभेदः। कप्रत्यये थाथादि-सूत्रेणान्तोदात्तत्वम्; णमुल्यूलोपे कृते पूर्वस्य स्वरभाजोऽभावात् 'लिति' इत्यस्याप्रवृत्तौ प्रत्ययस्वरः, तस्य कृदुत्तरपदप्रकृतिस्वरेणावस्थानमित्यन्तोदात्तत्वमेव। ननु च णमुलि सति 'कृन्मेजन्तः' इत्यव्ययत्वाद्विभक्तीनां

भावबोधिनी

'कर्मणि' इसी की अनुवृत्ति होती है। चर्म और उदर इन कर्मों के उपपद रहने पर [ णिजन्त ] 'पूरि' धातु से णमुल् = अम् प्रत्यय होता है। उदा०—चर्मपूरं स्तृणाति। [ पूरे = सब चमड़े को ढाँकता = आवृत करता है। ] उदरपूरं भुङ्क्ते [ पेट भर खाता है। उदरं पूरयन् भुङ्क्ते यह तात्पर्य है। उदरम् उपपद √पूरि + णमुल् = अम्, णिलोप और उपपदसमास ] ॥ ३१ ॥

'कर्मणि' इसकी अनुवृत्ति होती है। समुदाय [ प्रकृति-प्रत्यय-उपपद से निष्पन्न शब्द ] के द्वारा वर्षा का प्रमाण = माप प्रतीयमान रहने पर णिजन्त पूरि धातु से णमुल् = अम् प्रत्यय होता है और इस पूरि धातु के उकार का लोप विकल्प से हो जाता है। उदा०—गोष्पदपूरं वृष्टो देवः, गोष्पदप्रं वृष्टो देवः। [ जमीन में गाय के खुर द्वारा बने हुये गड्ढे के भरने के बराबर पानी बरसा ] सीतापूरं वृष्टो देवः सीताप्रं वृष्टो देवः [ सीता = हल के

**चेद्वर्षस्य प्रमाणम् = इयत्ता गम्यते। गोष्पदपूरं वृष्टो देवः, गोष्पदप्रं वृष्टो देवः। सीतापूरं वृष्टो देवः, सीताप्रं वृष्टो देवः। अस्यग्रहणं किमर्थम्? उपपदस्य मा भूत् – मूषिकाबिलपूरं वृष्टो देवः, मूषिकाबिलप्रम्॥**

**११६६. चेले क्नोपेः॥ ३३॥ (३३५४)**

**'कर्मणि' इत्येव। 'क्नूयी शब्दे उन्दने च' (धा० पा० ४८५)—अस्माण्ण्यन्ताद्धातोश्चेलार्थेषु कर्मसु उपपदेषु णमुल् प्रत्ययो भवति वर्षप्रमाणे गम्यमाने। चेलक्नोपं वृष्टो देवः। वस्त्रक्नोपम्। वसनक्नोपम्॥**

**न्यासः**

ऊलोपोऽपि तथा समुदायोपाधिर्विज्ञायेत। प्रकृतिप्रत्ययोपपदस्य समुदायस्य य ऊकारस्तस्य लोपो भवतीति, ततश्चोपपदस्यापि स्यात्। तस्मात् मा भूदेष दोष इति 'अस्य इत्युच्यते॥ ३२॥

**चेले क्नोपेः॥ ण्यन्तादिति।** सपुक्कस्यायं निर्देशः। पुक् च 'अर्त्तिह्री' इत्यादिना णावेव परतो भवतीति। तस्मादत एव निर्देशाण्ण्यन्तताऽवगम्यते। **चेलार्थेष्विति।** चेलमर्थो येषामिति बहुव्रीहिः। एतेन 'चेल' इत्यस्यार्थग्रहणतां दर्शयति। अर्थग्रहणे च या युक्तिः सा 'स्वादुमि णमुल्' इत्यत्रोक्ता, सैवेहार्थग्रहणे द्रष्टव्या। **चेलक्नोपमिति।** वलि यलोपः, 'पुगन्तलघूपधस्य' इति गुणः, णिलोपः॥ ३३॥

**पदमञ्जरी**

श्रवणं न भवति, तरपि च गोष्पदप्रतरमिति भवति, कल्पबादौ च गोष्पदप्रकल्प इति भवति, अज्ञातादिषु चाव्ययत्वादकज्भवति, के तु सति सर्वमेतन्न सिद्ध्यति? उच्यते; इष्यते तावद्विभक्तीनां श्रवणमेकेन गोष्पदप्रेणेति, तरबादिषु चोपन्यस्तानि रूपाणि नेष्यन्त एव। एतच्च भाष्ये ऊलोपप्रत्याख्यानादवसीयते।

ननु च गोष्पदपूरमित्याद्यपि घञैव सिद्धम्? न सिद्ध्यति, यदि तावत्करणे घञं विधाय तदन्तेन कर्मणि षष्ठ्याः समासः क्रियते, ततस्थाथादिस्वरेणान्तोदात्तत्वं स्याद्। अथ भावे घञि व्यधिकरणपदो बहुव्रीहिः क्रियते - गोष्पदस्य पूरणमस्मिन्वर्ष इति, ततः पूर्वपदप्रकृतिस्वरप्रसङ्गः। गोष्पदपूरन्तराम्, गोष्पदपूरङ्कल्पमित्यादि च न सिद्ध्यति, तस्माद् 'वर्षप्रमाणे' इति वक्तव्यम्॥ ३२॥

**चेलेः क्नोपेः॥ अस्माद्धातोर्ण्यन्तादिति॥** पुका निर्देशादेव ण्यन्तत्वमवसीयते, व्याख्यानाच्चेल इत्यर्थग्रहणमित्याह— **चेलार्थेष्विति। चेलक्नोपं वृष्ट इति।** चेलं क्नोपयन् = शब्दाययन्वृष्ट इत्यर्थः। यथा वर्षणे चेलानि शब्दायन्ते तथा वृष्ट इति यावत्॥ ३३॥

**भावबोधिनी**

**फाल** = लोहे के अग्रभाग द्वारा किये गये गड्ढे के भरने के बराबर पानी बरसा। यहाँ गोष्पदम् उपपद णिजन्त पूरि + **णमुल्** = अम्, णिलोप, उपपद समास करने पर गोष्पदपूरम् में विकल्प से 'ऊ' का लोप होने पर (१) गोष्पदप्रम् और लोप न होने पर (२) गोष्पदपूरम् ये दो रूप बनते हैं। इसी प्रकार (१) सीताप्रम् और (२) सीतापूरं की सिद्धि करनी चाहिए। प्राचीन काल में वर्षा नापने के लिए इन्हीं उपायों का सहारा लिया जाता था। ]

सूत्र में 'अस्य' [पूरयतेः] इसके ग्रहण का क्या लाभ है? उपपद [ के ऊ ] का लोप न होने लगे—मूषिकाबिलपूरं वृष्टो देवः, मूषिकाबिलप्रम्। [ चूहिया के बिल के गड्ढे के समान वर्षा हुई। यहाँ मूषिका के 'ऊ' का लोप नहीं होता है। ]

**विमर्श**—'वर्णप्रमाणे ऊलोपश्च अस्य अन्यतरस्याम्' इस सूत्र में 'अस्य' इस सर्वनाम के द्वारा पूर्वसूत्र के 'पूरि' धातु का परामर्श होता है और उसी के 'ऊ' का लोप होता है। यदि 'अस्य' नहीं रहता तो जैसे समुदाय से वर्षा का प्रमाण प्रतीत होता है वैसे ही ऊ का लोप भी समुदाय का ही होने लग जाता। फलतः मूषिकाबिलपूरम् आदि में उपपद मूषिका के ऊ का भी लोप होने लग जाता। इसी को रोकने के लिये 'अस्य' [ पूरि धातोः ] का ग्रहण है॥ ३२॥

'कर्मणि' इतनी ही अनुवृत्ति होती है। √क्नूयी धातु शब्द करना और गोला करना इन दो अर्थों में प्रयुक्त होती है। चेलार्थक कर्म उपपद रहने पर णिजन्त पूरि धातु से णमुल प्रत्यय होता है यदि वर्षा का प्रमाण प्रतीत हो रहा हो

## ११६७. निमूलसमूलयोः कषः ॥ ३४ ॥ ( ३३५५ )

'कर्मणि' इत्येव । निमूलसमूलशब्दयोः कर्मवाचिनोरुपपदयोः कषेर्धातोर्णमुल्प्रत्ययो भवति । निमूलकाषं कषति । समूलकाषं कषति । निमूलं समूलं कषतीत्यर्थः । इतः प्रभृति कषादीन् यान् वक्ष्यति, तत्र 'कषादिषु यथाविध्यनुप्रयोगः' ( ३.४.४६ ) इति ॥

## ११६८. शुष्कचूर्णरूक्षेषु पिषः ॥ ३५ ॥ ( ३३५६ )

'कर्मणि' इत्येव । शुष्कादिषु कर्मवाचिषूपपदेषु पिषेर्धातोर्णमुल् प्रत्ययो भवति । शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः । चूर्णपेषं पिनष्टि । चूर्णं पिनष्टीत्यर्थः । रूक्षपेषं पिनष्टि । रूक्षं पिनष्टीत्यर्थः ॥

### न्यासः

**निमूलसमूलयोः कषः ॥ कष इति ।** 'कष शिष' इति हिंसार्थधातुवर्गे पठ्यते ॥ ३४॥३५ ॥

**शुष्कचूर्णरुक्षेषु पिषः ॥ पिष इति ।** 'पिष्लृ सञ्चूर्णने' ॥ ३५ ॥

### पदमञ्जरी

**निमूलसमूलयोः कषः ॥** अत्र प्रकरणे समानकर्तृकत्वमेव । **निमूलकाषमिति ।** कषतिर्हिंसार्थः । एकस्यैव धात्वर्थस्य सामान्यविशेषभावेन भेदे सति विशेषण-विशेष्यभावः । निगतं मूलमस्य निमूलम् ! सह मूलेन समूलं कषणं करोति, सह मूलेन कर्षतीत्यर्थः । एवं सर्वत्र प्रकरणे द्रष्टव्यम् ॥ ३४ ॥

### भावबोधिनी

तो । उदा०—चेलक्नोपं वृष्टो देवः [ कपड़ा गीला हो गया इतनी वर्षा हुई । ] वस्त्रक्नोपम्, वसनक्नोपम् । [ इनका भी पूर्वोक्त ही अर्थ है । णिजन्त क्नूय् + णि धातु से "अर्तिह्रीब्लीरीक्नूयीक्ष्माय्यातां पुग्णौ" ७।३।३६ पुक् = प् आगम करने पर "लोपो व्योर्वलि" ६।१।६४ से धातु के य् का लोप होकर क्नूप् + इ, पुगन्त मानकर "पुगन्तलघूपधस्य च" ७।३।८६ से उपधागुण क्नोपि बनता है । चेलम् उपपद क्नोपि + णमुल् = अम्, णिलोप और उपपदसमास करने पर चेलक्नोपम् बनता है । चेल, वस्त्र, वसन सभी पर्याय शब्द है । सूत्र में अर्थ ग्रहण होने से सभी के साथ णमुल् होता है ] ॥ ३३ ॥

'कर्मणि' इसकी अनुवृत्ति होती है । कर्मवाची निमूल और समूल शब्दों के उपपद रहने पर कष् धातु से णमुल् = अम् प्रत्यय होता है । उदा०—निमूलकाषं कषति । समूलकाषं कषति । निमूल = मूल को छोड़ कर काटता है, समूल = जड़ के साथ काटता है । यह अर्थ है । यहाँ से आगे अब कषादि कहें जायेंगे उनमें "कषादिषु यथाविध्यनुप्रयोगः' ( ३।४.४६ ) से यथाविधि = जिस प्रकार की धातु से णमुल् होता है उसी प्रकार की धातु का अनुप्रयोग होता है ।"

**विमर्श**—यहाँ से लेकर "कषादिषु यथाविध्यनुप्रयोगः" ३।४।४६ तक जितने भी सूत्रों के लक्ष्य है उनम जिस धातु से प्रत्यय होता हे उसी के तिङन्त रूप का अनुप्रयोग भो होता है । इसलिये दोनों को मिलाकर ही अर्थ की प्रतीति होती है जैसे समूलकाषं कषति । इनमें एक विशेषण और एक विशेष्य रहता है जिसमें परस्पर सामान्यविशेषभाव से अन्वय होता है यहाँ 'पूर्वकाले' का सम्बन्ध नहीं है । समूलम् उपपद √कष् + णमुल् = अम्, उपधावृद्धि, उपपद-समास समूलकाषं कषति । समूलकषणात्मक कषण इस प्रकार का सामान्यविशेषभाव प्रतीत होता है । जैसे—आम्रो वृक्षः में वृक्ष सामान्य है, आम्र विशेष है ॥ ३४ ॥

'कर्मणि' इसकी अनुवृत्ति होती है । शुष्क आदि कर्मवाची शब्द उपपद रहते पिष् धातु से णमुल् प्रत्यय होता है । उदा०—शुष्कपेषं पिनष्टि । शुष्क = सूखे को पीसता है, यह अर्थ है । चूर्णपेषं पिनष्टि । चूर्ण को पीसता है । रूक्षपेषं पिनष्टि । रूखे को पीसता है । [ इसके उदाहरणों में शुष्क, चूर्ण और रुक्ष शब्द उपपद + पिष् + णमुल् = अम्, उपधा का गुण और उपपदसमास होता है ] ॥ ३५ ॥

**११६९. समूलाकृतजीवेषु हन्कृञ्ग्रहः ॥ ३६ ॥ ( ३३५७ )**

**'कर्मणि' इत्येव । समूल, अकृत, जीव-इत्येतेषु शब्देषु कर्मसूपपदेषु यथासंख्यं हन्, कृञ्, ग्रह-इत्येतेभ्यो धातुभ्यो णमुल् प्रत्ययो भवति । समूलघातं हन्ति । समूलं हन्तीत्यर्थः । अकृतकारं करोति । जीवग्राहं गृह्णाति ॥**

**११७०. करणे हनः ॥ ३७ ॥ ( ३३५८ )**

**करणे उपपदे हन्तेर्धातोर्णमुल् प्रत्ययो भवति । पाणिघातं वेदिं हन्ति । पादघातं भूमिं हन्ति । 'हिंसार्थानां**

**न्यासः**

**समूलाकृतजीवेषु हन्कृञ्ग्रहः ॥ समूलघातमिति ।** 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वम्, 'हनस्तोऽचिण्णलोः' इति तत्वम् ॥ ३६ ॥

**करणे हनः ॥ अहिंसार्थोऽयमारम्भ इति ।** हिंसायाम् 'हिंसार्थानाम्' इति वक्ष्यमाणेन सिद्धत्वात् । **नित्यसमासार्थ इति ।** हिंसार्थस्यापीति शेषः । 'उपपदमतिङ्' इति नित्यसमासो यथा स्यादित्येवमर्थोऽयमारम्भः । तेन तु प्रत्यये सति 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति विकल्पेन स्यात् । **यथाविध्यनुप्रयोगार्थश्चेति ।** 'कषादिषु यथाविध्यनुप्रयोगः' इति । यस्माद् धातोर्णमुल् विहितस्तस्यैवानुप्रयोगो यथा स्यात्, तेन तु प्रत्यये सति धात्वन्तरस्यानुप्रयोगः स्यात् ।

**पदमञ्जरी**

**समूलाकृतजीवेषु हन्कृञ्ग्रहः ॥ जीवग्राहमिति ।** जीवतीति जीवः, इगुपधलक्षणः कः जीवन्तं गृह्णातीत्यर्थः ॥ ३६ ॥

**करणे हनः ॥ नित्यसमासार्थं चेति ।** 'हिंसार्थानाम्' इत्यनेन णमुलि 'तृतीया प्रभृतीन्यन्यतरस्याम्' इति विकल्पितः समासः स्याद्, अतो हिंसार्थेऽप्यनेनैव णमुलेषितव्य इत्यर्थः ।

कथं पुनरिष्यमाणोऽपि लभ्यते, यावताऽहिंसार्थे हन्तौ सावकाशोऽयं विधिः, 'हिंसार्थानाम्' इत्यस्य तु हन्तिव्यतिरिक्तो हिंसार्थोऽवकाशः; हिंसार्थे हन्तावुभयप्रसङ्गे परत्वात्स एव विधिः प्राप्नोति ? तत्राह— **पूर्वविप्रतिषेधेनेति ।** कथं तर्हि 'हिंसार्थानाम्' इत्यत्रोदाहरिष्यते—दण्डोपघातं गाः कालयति, दण्डेनोपघातं वेति ? अत्राहुः—यत्रैक एव धात्वर्थः सामान्यविशेषभावेन भिद्यमानो विशेषणविशेष्यभावमनुभवति सोऽस्य विषयः; 'कषादिषु यथाविध्यनुप्रयोगः' इति वचनात् । अत्यन्तभिन्नधात्वर्थसम्बन्धे तु तेनैव णमुल् भवतीति । एवं च नित्यसमासार्थो यथाविध्यनुप्रयोगार्थश्चेति, कोऽर्थः ? यथाविध्यनुप्रयोगार्थः सन्नित्यसमासार्थ इत्यर्थः ।

**भावबोधिनी**

'कर्मणि' इसकी अनुवृत्ति होती है । (१) समूल, (२) अकृत और (३) जीव—ये कर्मवाची शब्द उपपद रहते क्रमशः (१) हन्, (२) कृञ्, (३) ग्रह—इन धातुओं से णमुल्=अम् प्रत्यय होता है । उदा०—समूलघातं हन्ति । समूल मारता है यह अर्थ है । अकृतकारं करोति । [ न किये हुये को करता है । जीवग्राहं गृह्णाति । [ जीव को पकड़ता है । समूलम् उपपद हन्+णमुल्=अम्, उपधावृद्धि, ह का कुत्व = घ, न् का त्—घातम्, उपपदसमास—समूलघातं हन्ति । यहाँ भी सामान्यविशेषभाव की ही प्रतीति होती है । समूलाघातात्मक हनन । ] ॥ ३६ ॥

करण [ कारकवाची शब्द ] उपपद रहने पर हन् धातु से णमुल् प्रत्यय होता है । उदा०—पाणिघातं वेदिं हन्ति । [ हाथ से वेदी को कूटता है । ] पादघातं भूमिं हन्ति । [ पैर से जमीन को कूटता है ] यहाँ पाणिना और पादेन इन करण कारकवाची पदों के उपपद रहते √हन्+णमुल्=अम् उपधावृद्धि, ह् का घ और न् का त् करने पर—घातम् बनता है । तृतीयान्त के साथ समास करने पर उक्त प्रयोग सिद्ध होते हैं । ]

च समानकर्मकाणाम्' ( ३.४.४८ ) इति णमुलं वक्ष्यति, अहिंसार्थोऽयमारम्भः । नित्यसमासार्थो वा यथाविध्यनुप्रयोगार्थश्च ।

पूर्वविप्रतिषेधेन हन्तेर्हिंसार्थस्यापि प्रत्ययोऽनेनैवेष्यते – असिघातं हन्ति, शरघातं हन्ति ॥

**११७१. स्नेहने पिषः ॥ ३८ ॥ ( ३३७९ )**

'करणे' इत्येव। स्निह्यते येन तत् स्नेहनम्। स्नेहनवाचिनि करणे उपपदे पिषेर्धातोर्णमुल् प्रत्ययो भवति। उदपेषं पिनष्टि। तैलपेषं पिनष्टि। तैलेन पिनष्टीत्यर्थः ॥

**न्यासः**

ननु च यदा हन्तिर्हिंसार्थो भवति तदा परत्वात् तेनैव भवितव्यम्, तत् कथं नित्यसमासार्थो यथाविध्यनुप्रयोगार्थश्च हिंसार्थस्य हन्तेरयमारम्भो युज्यते? इत्यत आह—**पूर्वविप्रतिषेधेनेत्यादि** ॥ ३७ ॥

**स्नेहने पिषः ॥ स्नेहनवाचिनीत्यनेन 'स्नेहने'** इत्यस्यार्थमाचष्टे ॥ ३८ ॥

**पदमञ्जरी**

इह द्विर्हन्ग्रहणं समूलग्रहणं च क्रियते, सकृदेव तु शक्यं कर्तुम्, कथम्? एवं वक्ष्यामि—जीवाकृतयोर्ग्रहकृञः; शुष्कचूर्णरुक्षेषु पिषः निमूले कषः, समूले हनश्च, चकारात्कषश्च, ततः करणे हन इत्येव, यदेतत्कषादिषु यथाविध्यनुप्रयोग इति एतद्ग्रहादिष्विति वक्तव्यम्। तथा तु न कृतमित्येव ॥ ३७ ॥

**स्नेहने पिषः ॥** व्याख्यानात्स्नेहने इत्यर्थग्रहणमित्याह—**स्नेहनवाचिनीति। उदपेषमिति।** 'पेषंवासवाहनधिषु च' इत्युदकस्योदभावः। 'शुष्कचूर्ण' इत्यत्र स्नेहनग्रहणं न कृतम्, कर्मणि तत्र प्रत्ययः, इह तु करणे ॥ ३८ ॥

**भावबोधिनी**

'हिंसार्थानां समान-कर्मणाम्' ३।४।४८ [ अनुप्रयोग की गयीं समान कर्मवाली हिंसार्थक धातुओं से भी तृतीयान्त उपपद रहते णमुल् प्रत्यय होता है। ] इस सूत्र से णमुल् कहा जायगा, अतः अहिंसार्थक [ हन् धातु से णमुल् ] के लिये यह सूत्र बनाया गया है। अथवा नित्यसमास [ उपपदसमास ] के लिये है और यथाविधि [ जिससे णमुल् होता है उसी के ] अनुप्रयोग के लिये है। पूर्वविप्रतिषेध के द्वारा हिंसार्थक भी हन् का प्रत्यय इसी से करना इष्ट है—असिघातं हन्ति। शरघातं हन्ति। [ तलवार से मारता है। बाण से मारता है। असिना और बाणेन इन करण तृतीयान्त पदों के उपपद रहते हन्+णमुल्=अम्, शेष प्रक्रिया पूर्ववत्। ]

**विमर्श**—अहिंसार्थक हन् के योग में यह सूत्र चरितार्थ है और हन्भिन्न हिंसार्थक धातुओं के योग में "हिंसार्थानां च समानकर्मणाम्" ३.४ ४८ यह चरितार्थ है। अतः हिंसार्थक हन् धातु के योग में दोनों की प्राप्ति होने से तुल्यबलविरोधरूपी विप्रतिषेध है। अतः "विप्रतिषेधे परं कार्यम्" १.४.२० से परवर्ती सूत्र की ही प्रवृत्ति होनी चाहिये? इसका समाधान यह है कि उक्त सूत्र में 'पर' का अर्थ केवल 'बादवाला सूत्र' ऐसा नहीं है अपितु 'परम्=इष्टम् कार्यम्' यह है। वह प्रायः पर ही होता है, कहीं कहीं पूर्व भी होता है। अतः यहाँ पूर्वविप्रतिषेध मानकर प्रस्तुत सूत्र से ही णमुल् होता है ॥ ३७ ॥

'करणे' की अनुवृत्ति होती है। स्निग्ध=चिकना या गीला किया जाय जिसके द्वारा वह स्नेहन है। स्नेहनवाची करण उपपद रहते पिष् धातु से णमुल् होता है। उदा०—उदपेषं पिनष्टि [ जल से पीसता है ] तैलपेषं पिनष्टि। तैल से पीसता है, यह अर्थ है। [ उदकेन इस करण तृतीयान्त के उपपद रहते √पिष्+णमुल्=अम्, उपधागुण पेषम्, उपपदसमास करने पर 'पेषंवासवाहनधिषु च' ६।३।५८ से उदक का उद आदेश होता है। ] ॥ ३८ ॥

## ११७२. हस्ते वर्त्तिग्रहोः ॥ ३९ ॥ ( ३३६० )

'करणे' इत्येव । 'हस्ते' इत्यर्थग्रहणम् । वर्त्तिर्ण्यन्तः । हस्तवाचिनि करण उपपदे वर्त्तयतेर्गृह्णातेश्च णमुल् प्रत्ययो भवति । हस्तेन वर्त्तयति, हस्तवर्त्तं वर्त्तयति । करवर्त्तम् । पाणिवर्त्तम् । ग्रहेः खल्वपि – हस्तेन गृह्णाति, हस्तग्राहं गृह्णाति । करग्राहम् । पाणिग्राहम् ।

## ११७३. स्वे पुषः ॥ ४० ॥ ( ३३६१ )

'करणे' इत्येव । 'स्वे' इत्यर्थग्रहणम् । स्ववाचिनि करणे उपपदे पुषेर्धातोर्णमुल्प्रत्ययो भवति । आत्मीयज्ञातिधनवचनः स्वशब्दः । स्वपोषं पुष्णाति । आत्मपोषम् । गोपोषम् । पितृपोषम् । धनपोषम् । रैपोषम् ॥

## ११७४. अधिकरणे बन्धः ॥ ४१ ॥ ( ३३६२ )

अधिकरणवाचिन्युपपदे बध्नातेर्धातोर्णमुल्प्रत्ययो भवति । चक्रबन्धं बध्नाति । कूटबन्धं बध्नाति । मुष्टिबन्धं बध्नाति । चोरकबन्धं बध्नाति । चोरके बध्नातीत्यर्थः ॥

### न्यासः

**हस्ते वर्त्तिग्रहोः ॥ वर्त्तिर्ण्यन्त इति ।** निर्देशादेव वर्त्तेर्ण्यन्तत्वं प्रतीयते ॥ ३९ ॥

**स्वे पुषः ॥ स्वपोषमिति ।** आत्मवाचिनि स्वशब्द उपपदे प्रत्ययः । **गोपोषमिति ।** आत्मीयवाचिनि । **धनपोषमिति** धनवाचिनि । **पितृपोषमिति** ज्ञातिवाचिनि ॥ ४० ॥

**अधिकरणे बन्धः ॥ ४१ ॥**

### पदमञ्जरी

**हस्ते वर्त्तिग्रहोः ॥** 'जीवे ग्रहः, हस्ते च, वर्त्तेश्च' इति नोक्तम्, तत्र कर्मोपपदम्, इह तु करणम् । **वर्त्तिर्ण्यन्त इति ।** निर्देश एवात्र प्रमाणम् । **हस्तवर्त्तं वर्त्तयतीति ।** हस्तेन वर्त्तयति, गुलिकां करोतीत्यर्थः ॥ ३९ ॥

**स्वे पुषः ॥ स्वपोषमिति ।** [ पितपर्यायवचनस्य चेति । ] स्वरूपेऽपि भवति ॥ ४०॥४१ ॥

### भावबोधिनी

'करणे' इसकी अनुवृत्ति होती है । 'हस्ते' यह अर्थपरक है शब्दपरक नहीं । √वर्त्ति यह णिजन्त है । हस्तवाचक करण उपपद रहते ( णिजन्त ) वर्त्ति धातु और ग्रह धातु से णमुल् प्रत्यय होता है । उदा०—हस्तेन वर्त्तयति—हस्तवर्तं वर्तयति । [ हाथ से करता है । ] करवर्तं वर्तयति, पाणिवर्तं वर्तयति । [ अर्थ पूर्वोक्त ही है । हस्तेन उपपद णिजन्त वर्त्ति + णमुल् = अम्, णिलोप, उपपदसमास होता है । ] √ग्रह से भी—हस्तेन गृह्णाति—हस्तग्राहं गृह्णाति [ हाथ से ग्रहण करता है । ] करग्राहं गृह्णाति, पाणिग्राहं गृह्णाति । [ अर्थ पूर्वोक्त ही है । हस्तेन आदि करण तृतीयान्त उपपद रहते ग्रह् + णमुल् = अम्, उपधावृद्धि, उपपदसमास होता है । ] ॥ ३९ ॥

'करणे' की अनुवृत्ति होती है । स्वे—यह अर्थपरक है । स्व = आत्मीयवाची करण उपपद रहने पर पुष् धातु से णमुल् होता है । आत्मीय, ज्ञाति = बन्धु, बान्धव और धन का वाचक स्व शब्द है । [ अतः इन तीनों के उदाहरण लक्ष्य हैं । ] उदा०—स्वपोषं पुष्णाति । [ अपने द्वारा पुष्ट करता है ] । आत्मपोषं पुष्णाति [ अर्थ पूर्वोक्त ] । गोपोषं पुष्णाति [ यहाँ आत्मीयवाची स्व है । गाय द्वारा पुष्ट करता है । पितृपोषं पुष्णाति [ पिता द्वारा पुष्ट करता है । ] अब धनवाची के उदाहरण है—] धनपोषं पुष्णाति [ धन से पुष्ट करता है । ] रैपोषं पुष्णाति [ धन से पुष्ट करता है । यहाँ सभी में स्व आदि करणतृतीयान्त शब्दों के उपपद रहते √पुष् + णमुल् = अम्, उपधागुण और उपपदसमास होता है ] ॥ ४० ॥

अधिकरणवाची शब्द उपपद रहते बन्ध् धातु से णमुल् प्रत्यय होता है । उदा०—चक्रबन्धं बध्नाति [ चक्रे बध्नाति

## ११७५. संज्ञायाम् ॥ ४२ ॥ ( ३३६३ )

**संज्ञायां विषये बध्नातेर्धातोर्णमुल् प्रत्ययो भवति । क्रौञ्चबन्धं बध्नाति । मयूरिकाबन्धं बध्नाति । [ मयूरिकाबन्धम्, ] अट्टालिकाबन्धं बद्धः । बन्धविशेषाणां नामधेयान्येतानि ॥**

## ११७६. कर्त्रोर्जीवपुरुषयोर्नशिवहोः ॥ ४३ ॥ ( ३३६४ )

**जीवपुरुषयोः कर्तृवाचिनोरुपपदयोर्यथासंख्यं नशिवहोर्धात्वोर्णमुल् प्रत्ययो भवति । जीवनाशं नश्यति । जीवो नश्यतीत्यर्थः । पुरुषवाहं वहति । पुरुषः प्रेष्यो भूत्वा वहतीत्यर्थः ॥ कर्त्तरीति किम् ? जीवेन नष्टः । पुरुषेणोढः ॥**

### न्यासः

**संज्ञायाम् ॥ ४२ ॥**

**कर्त्रोर्जीवपुरुषयोर्नशिवहोः ॥ नष्ट इति ।** नशेर्व्रश्चादि सूत्रेण षत्वम्, 'मस्जिनशोर्झलि' इत्यागमस्य नुमः 'अनिदिताम्' इत्यादिना लोपः । **पुरुषेणोढ इति ।** वहेर्वच्यादिसूत्रेण संप्रसारणम्, 'संप्रसारणाच्च' इति परपूर्वत्वम्, 'हो ढः', 'झषस्तथोर्धोऽधः', 'ष्टुना ष्टुः', 'ढो ढे लोपः', 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घः ॥ ४३ ॥

### पदमञ्जरी

**संज्ञायाम् ॥** अनधिकरणार्थोऽयमारम्भः, पूर्वयोगस्त्वसंज्ञार्थः । कथं तर्हि ग्रामे बन्ध इति ? वाऽसरूप-विधिना घञ् भविष्यति ॥ ४२ ॥

**कर्त्रोर्जीवपुरुषयोर्नशिवहोः ॥ जीवेन नष्ट इति ।** जीवेन करणेनापदं प्राप्त इत्यर्थः । **पुरुषेणोढ इति ।** पुरुषेण करणेन देशान्तरं प्रापितो देवदत्तादिरित्यर्थः ॥ ४३ ॥

### भावबोधिनी

इस विग्रह में चक्रे उपपद √बन्ध् + णमुल् = अम्, उपपदसमास विभक्तिलोप, चक्रबन्धम्, बध्नाति का अनुप्रयोग । ] कूटबन्धं बध्नाति [ लोहे के मुद्गर आदि में बांधता है । मुष्टिबन्धं बध्नाति । [ मुट्ठी में बांधता है । ] चोरकं बध्नाति । चोरक = एक प्रकार के विशेष बन्धन में बांधता है । यह अर्थ है ॥ ४१ ॥

संज्ञाविषय में बन्ध् धातु से णमुल् प्रत्यय होता है । उदा०—क्रौञ्चबन्धं बध्नाति । मयूरिकाबन्धं बध्नाति । अट्टालिकाबन्धं बद्धः । ये [ प्राचीनकाल के ] विशेष विशेष बन्धों के नाम = संज्ञा में हैं । [ पूर्व सूत्र अधिकरण उपपद रहते √बन्ध से प्रत्यय करता है । अतः यह सूत्र बनाया गया ॥ छन्दोविशेष में वर्णों के विशिष्ट रूप से विन्यास भी बन्ध कहे जाते हैं । ] ॥ ४२ ॥

कर्तृवाचक ( १ ) जीव और (२) पुरुष शब्द उपपद रहते क्रमशः (१) √नश और (२) √वह धातु से णमुल् प्रत्यय होता है । उदा०—जीवनाशं नश्यति—जीव नष्ट होता है, यह अर्थ है । [ जीव उपपद नश् + णमुल् = अम् उपधावृद्धि, उपपदसमास । जीवनाशं नश्यति । ] पुरुषवाहं वहति । पुरुष प्रेष्य = नौकर बनकर ढोता है, यह अर्थ है । कर्ता रहने पर—इसका क्या लाभ है ? जीवेन नष्टः [ यहाँ जीव करण है । अतः जीव द्वारा नष्ट = आपत्ति को प्राप्त कराया गया । ] पुरुषेण ऊढः । [ पुरुष द्वारा देवदत्त आदि दूसरे स्थान पर पहुँचाया गया । यहाँ भी करण है । अतः णमुल् नहीं होता है ] ॥ ४३ ॥

११७७. ऊर्ध्वे शुषिपूरोः ॥ ४४ ॥ ( ३३६५ )

कर्तृग्रहणमनुवर्त्तते। ऊर्ध्वशब्दे कर्तृवाचिन्युपपदे शुषिपूरोर्धात्वोर्णमुल् प्रत्ययो भवति। ऊर्ध्वशोषं शुष्यति। ऊर्ध्वं शुष्यतीत्यर्थः। ऊर्ध्वपूरं पूर्यते। ऊर्ध्वं पूर्यते इत्यर्थः॥

११७८. उपमाने कर्मणि च ॥ ४५ ॥ ( ३३६६ )

उपमीयतेऽनेनेत्युपमानम्। उपमाने कर्मण्युपपदे चकारात् कर्त्तरि धातोर्णमुल् प्रत्ययो भवति। घृतनिधायं निहितः। घृतमिव निहित इत्यर्थः। सुवर्णनिधायं निहितः। सुवर्णमिव निहित इत्यर्थः। कर्त्तरि खल्वपि-अजकनाशं नष्टः। अजक इव नष्टः। चूडकनाशम्। दन्तनाशम्॥

११७९. कषादिषु यथाविध्यनुप्रयोगः ॥ ४६ ॥ ( ३३६७ )

'निमूलसमूलयोः' ( ३.४.३४ ) इत्येतदारभ्य कषादयः, एतेषु यथाविध्यनुप्रयोगो भवति। यस्माद्धातोर्णमुल् प्रत्ययो भवति स एवानुप्रयोक्तव्यः। ननु धातुसंबन्धे प्रत्ययविधानादनुप्रयोगः सिद्ध एव? 'यथाविधि' इति नियमार्थं वचनम्, तथा चैवोदाहृतम्॥

न्यासः

ऊर्ध्वे शुषिपूरोः॥ ऊर्ध्वं पूर्यत इति। ऊर्ध्वं पूरितो भवतीत्यर्थः। अनुदात्तेत्त्वादात्मनेपदम्, दिवादित्वाच्छ्यन्॥ ४४॥

उपमाने कर्मणि च॥ घृतनिधायमिति। पूर्ववद् युक्॥ ४५॥

कषादिषु यथाविध्यनुप्रयोगः॥ ४६॥ उपदंशस्तृतीयायाम्॥ इह मूलकेनोपदंशं भुङ्क्ते इत्यादौ करणे तृतीया, तदन्तं मूलकाद्युपपदम्। तच्च करणमुपदंशेर्वा स्यात्, भुजेर्वा? तत्रोपदंशेस्तावन्नोपपद्यते;

पदमञ्जरी

ऊर्ध्वे शुषिपूरोः॥ ऊर्ध्वशोषं शुष्यतीति। वृक्षादिरूर्ध्व एव तिष्ठन् शुष्यतीत्यर्थः। ऊर्ध्वः पूर्यत इत्यर्थ इति। ऊर्ध्वमुख एव सन् घटादिर्वर्षोदकादिना पूर्णो भवतीत्यर्थः॥ ४४॥४५॥४६॥

भावबोधिनी

कर्तृग्रहण की अनुवृत्ति होती है। कर्तृवाचक ऊर्ध्व शब्द उपपद रहते शुष् और पूर् इन धातुओं से णमुल् = अम् प्रत्यय होता है। उदा०—ऊर्ध्वशोषं शुष्यति—ऊपर सूखता है, यह अर्थ है। ऊर्ध्वपूरं पूर्यते। ऊपर जलादि से पूरित होता है, यह अर्थ है।

विमर्श—यहाँ ऊर्ध्व शब्द अधिकरण-शक्तिप्रधान न होकर कर्तृशक्तिप्रधान है। अतः पेड़ आदि ऊर्ध्व रहता हुआ ही सूख जाता है। घड़ा ऊर्ध्वमुख रहता हुआ ही वर्षा आदि के पानी से भर जाता है, ऐसा अर्थ करना चाहिये॥ ४४॥

जिससे सादृश्य किया जाता है, वह उपमान है। उपमानवाची कर्म और चकार के बल से कर्ता उपपद रहते धातुमात्र से णमुल् प्रत्यय होता है। उदा०—घृतनिधायं निहितः। घृत के समान रखा गया—यह अर्थ है। सुवर्णनिधायं निहितः। सुवर्ण के समान रखा गया—यह अर्थ है। [ घृतम् इव निहितः यहाँ घृतम् यह उपमान है और कर्म है। अतः घृतम् उपपद नि+धा+णमुल् = अम्, युक् = य् आगम, उपपद-समास—घृतनिधायं निहितः—अनुप्रयोग करने पर होता है। ] कर्ता उपमान उपपद रहने पर भी होता है—अजकनाशं नष्टः। अजक के समान नष्ट हो गया [—यह अर्थ है। ] चूडकनाशं नष्टः [ चूडक के समान नष्ट हो गया। ] दन्तनाशं नष्टः। [ दाँत के समान नष्ट हो गया ] ॥ ४५॥

"निमूलसमूलयोः" ३।४।३४ से लेकर यहाँ तक कषादि हैं। इनमें यथाविधि अनुप्रयोग होता है। जिस धातु से णमुल् प्रत्यय होता है, उसी का अनुप्रयोग करना चाहिये।

## ११८०. उपदंशस्तृतीयायाम् ॥ ४७ ॥ ( ३३६८ )

**'दंश दशने' ( धा० पा० ९९० )-अस्माद्धातोरुपपूर्वात्तृतीयान्त उपपदे णमुल्प्रत्ययो भवति । मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशम् । आर्द्रकोपदंशम्, आर्द्रकेणोपदंशम् । अत्र विकल्पेनोपपदसमासः 'तृतीयाप्रभृतीन्यन्यतरस्याम्' ( २.२.२१ ) इति । मूलकादि चोपदंशेः कर्म । भुजेः करणम् ।**

**सर्वस्मिन्नेवात्र णमुल्प्रकरणे क्रियाभेदे सति वाऽसरूपविधिना क्त्वापि भवति – मूलकेनोपदश्य भुङ्क्ते ॥**

**न्यासः**

अन्यस्मिन् ह्युपदिश्यमानेऽन्यत् करणं भवति, इह च तदेव मूलकाद्युपदश्यते, नापरं किञ्चित् । भुजिं तु प्रत्युपपद्यत एव करणभावः, किन्तूपपदसंज्ञा न स्यात्, तदभावादुपपदसमासश्च; यस्मादुपपदमिति महत्याः संज्ञायाः करणं समर्थपरिभाषाया व्यापारार्थम्, तेनेह तस्यामुपस्थितायां यमेव प्रति यस्य सामर्थ्यं तमेव प्रति तस्योपपदसंज्ञया भवितव्यम् । भुजिं तु प्रति मूलकादेः सामर्थ्यम्, नोपदंशिं प्रतीति चोद्यमाशङ्क्याह—**मूलकादि चोपदंशेरित्यादि** । यद्यपि भुजिं प्रति मूलकादेः करणभावः, तथाप्युपदंशिना सह सामर्थ्यमुपपद्यत एव; यतस्तस्य कर्म । न च भुजिना सह सम्बन्धे सत्युपदंशिना सह सम्बन्धो निवर्त्तते; विरोधाभावात् । तस्मादुपपद्यत एवोपपदत्वम्, तस्मिंश्च सत्युपपदसमासः ।

**क्रियाभेदे सतीति** । क्रियाभेदग्रहणेन क्त्वाप्रत्ययविषयमुपलक्षयति । यत्र क्रियाणां पौर्वापर्यं समानकर्तृकत्वञ्च स क्त्वाप्रत्ययस्य विषयः । एतच्चोभयं क्रियाभेदे सति भवतीति क्त्वाप्रत्ययस्य विषय उपलक्ष्यते । **मूलकेनोपदश्य भुङ्क्त इति** । 'अनिदिताम्' इत्यनुनासिकलोपः ॥ ४७ ॥

**पदमञ्जरी**

**उपदंशस्तृतीयायाम्** ॥ इतः प्रभृति पौर्वकाल्यमप्यस्ति । **मूलकोपदशं भुङ्क्ते इति** । ननु च नात्र तृतीयान्तस्योपदंशिना संबन्धः, न हि मूलकेनान्य उपदश्यते, किं तर्हि ? तदेवोपदश्यते, भुजिना तु संबन्ध उपपद्यते; तं प्रति करणत्वात्, किं तूपदंशिना सामर्थ्याभावात् प्रत्ययो न प्राप्नोति, उपपदसंज्ञा च न स्यात्, तदभावादुपपदसमासोऽपि न प्राप्नोति, वचनस्य तु दशनैरुपदश्य भुङ्क्ते इत्यादिरवकाशः स्यात् ? इत्यत आह–**मूलकादि चेति** । सत्यं मूलकादेर्भुजिनैव शाब्दोऽन्वयः उपदंशिना तु कर्मापेक्षायां सन्निधानाद्योग्यत्वाच्च वस्तुतः सम्बन्धोऽस्त्येव, भुजिं प्रति करणत्वमन्यथा नोपपद्यते, ततश्चायमर्थः---मूलकेन भुङ्क्ते, किं कृत्वा ? उपदश्य, किमुपदश्य ? तदेव मूलकमिति । यदि तु यत्र तृतीयान्तेनैव शाब्दोऽन्वयस्तत्रैवायं प्रत्ययोऽभिमतः स्यात्, करण इत्येव ब्रूयाद्, यथा–करणे हन इति । तस्मादार्थेन सम्बन्धेन सामर्थ्ये सति प्रत्ययादिकं सर्वं भविष्यति ॥ ४७ ॥

**भावबोधिनी**

**प्रश्न**---धात्वर्थों के सम्बन्ध में ही यहाँ प्रत्ययों का विधान होने के कारण अनुप्रयोग सिद्ध ही है । [ अर्थात् सम्बन्ध दो या अधिक में ही होता है, एक में नहीं । अतः दूसरी धातु का अनुप्रयोग सिद्ध ही है, तब इस सूत्र से अनुप्रयोग का विधान क्यों ] ? 'यथाविधि' इस नियम के लिए यह सूत्र है । [ अर्थात् जिस प्रकार की धातु से प्रत्यय होता है, उसी प्रकार की धातु का अनुप्रयोग होना चाहिये---इस नियम की सिद्धि के लिए यह सूत्र है । ] और इसी प्रकार के उदाहरण भी दिये गये हैं ॥ ४६ ॥

तृतीयान्त शब्द उपपद रहते उपपूर्वक दंश धातु से णमुल् प्रत्यय होता है । उदा०---मूलकोपदंशं भुङ्क्ते, मूलकेन उपदंशं भुङ्क्ते [ मूली से काट काटकर खाता है । ] आर्द्रकोपदंशं भुङ्क्ते, आर्द्रकेण उपदंशं भुङ्क्ते [ अदरक से काट काटकर खाता है । यहाँ विकल्प से उपपद-समास होता है—"तृतीयाप्रभृतीनि अन्यतरस्याम्" २।२।२१ [ अतः विभक्ति का वैकल्पिक लोप होता है । ] यहाँ मूलक = मूली आदि उपदंशन = काटने का कर्म है और भुज धात्वर्थ का करण है । [ अतः करण-तृतीया होती है । ]

## ११८१. हिंसार्थानां च समानकर्मकाणाम् ॥ ४८ ॥ ( ३३६९ )

**'तृतीयायाम्' इत्येव । हिंसा = प्राण्युपघातः । तदर्थानां धातूनामनुप्रयोगधातुना समानकर्मकाणां तृतीयान्त उपपदे णमुल् प्रत्ययो भवति । दण्डोपघातं गाः कालयति, दण्डेनोपघातम् । दण्डताडम्, दण्डेन ताडम् । समानकर्मकाणामिति किम् ? चोरं दण्डेनोपहत्य[1] गोपालको गाः कालयति ।**

## ११८२. सप्तम्यां चोपपीडरुधकर्षः ॥ ४९ ॥ ( ३३७० )

**न्यासः**

**हिंसार्थानाञ्च समानकर्मकाणाम् ॥** धातुसम्बन्धाधिकारादनुप्रयोगेण भवितव्यम्, द्विष्ठत्वात् सम्बन्धस्य । तत्र प्रत्यासत्तेरनुप्रयोगधात्वपेक्षयैव समानकर्मत्वं विज्ञायत इत्याह—**अनुप्रयोगधातुनेत्यादि । कालयतीति ।** 'कल विक्षेपे' । **दन्तताडमिति ।** 'तड आघाते', चुरादिरेव । **दण्डेनाहत्येत्यादि ।** अत्र हन्तेश्चौरः कर्म, अनुप्रयोगधातोश्च गौरिति समानकर्मकत्वाभावः । तेन क्त्वाप्रत्यय एव भवति । **आहत्येति ।** 'अनुदात्तोपदेश' इत्यादिनानुनासिकलोपः, 'ह्रस्वस्य पिति कृति तुक्' ॥ ४८ ॥

**सप्तम्यां चोपपीडरुधकर्षः ॥ उपशब्दः प्रत्येकमभिसम्बध्यत इति ।** रुधिकषिभ्यामुपपूर्वाभ्यामेव यथा स्यात् । **पार्श्वोपपीडमिति ।** 'पीड अवगाहने', चुरादिः कर्षतेरित्यादि । 'कृष विलेखने' भ्वादौ तुदादौ च पठ्यते,

**पदमञ्जरी**

**हिंसार्थानां च समानकर्मकाणाम् ॥** 'धातुसम्बन्धे' इत्यधिकारादनुप्रयोगधातुना समानकर्मत्वं विज्ञायते, इत्याह—**अनुप्रयोगधातुना समानकर्मकाणामिति । कालयति ।** 'कल विक्षेपे' चुरादिः । **दण्डताडमिति ।** 'तड आघाते' चुरादिरेव । **उपहत्येति ।** 'वा ल्यपि' इत्यनुनासिकलोपः, ह्रस्वस्य तुक् ॥ ४८ ॥

**सप्तम्याञ्चोपपीडरुधकर्षः ॥ उपशब्दः प्रत्येकमिति ।** पीडादीनां समाहारद्वन्द्वं कृत्वोपपूर्वः 'पीडरुधकर्ष' इत्युत्तरपदलोपी समासः । सौत्रः पुंल्लिङ्गनिर्देशः । करणाधिकरणविवक्षाभेदेनोपपदेषु विभक्तिद्वयम् । **कर्षतेरिति**

**भावबोधिनी**

इस सम्पूर्ण णमुल् के प्रकरण में क्रियाभेद रहने पर "वाऽसरूपोऽस्त्रियाम्" ३।१।९४ इससे क्त्वा प्रत्यय भी होता है—मूलकेन उपदश्य भुङ्क्ते । [ उपदंश् + क्त्वा = ल्यप् "अनिदितां हल उपधायाः क्ङिति" ६।४।२४ से अनुस्वार का लोप हो जाता है । ] ॥ ४७ ॥

"तृतीयायाम्" इसी की अनुवृत्ति होती है । हिंसा = प्राणी का वध । अनुप्रयोगवाली धातु के समान कर्मवाली, हिंसा अर्थवाली धातुओं से भी, तृतीयान्त उपपद रहते णमुल् प्रत्यय होता है । [ यहाँ अनुप्रयोग को गयी धातु और जिससे णमुल् करना है ऐसी धातु से प्रतीत क्रियाओं का एक ही कर्म रहना चाहिये । ] उदा०—दण्डोपघातं गाः कालयति, दण्डेन उपघातं गाः कालयति [ दण्डे से मार कर गाय को हटाता है । यहाँ हनन और कालन = हटाना दोनों क्रियाओं का एक = समान गौ ही कर्म है, अतः दण्डेन तृतीयान्त उपपद रहते हन् धातु से णमुल् होता है । ह् का घ् और न् का त् करके घातम् के साथ "तृतीया प्रभृतीन्यन्यतरस्याम्" २।२।२१ से विकल्प से समास और विकल्प से विभक्तिलोप होता है—दण्डोपघातम् और विभक्तिलोप न होने पर दण्डेनोपघातम् दो रूप बनते हैं । ] दण्डताडम्, दण्डेन ताडम् । [ दण्डेन उपपद ताड् + णमुल् = अम्, वैकल्पिक समास और विभक्तिलोप । ]

समान-कर्मवाली धातुओं का—इसके ग्रहण का क्या प्रयोजन है ? चोरं दण्डेन उपहत्य गोपालको गाः कालयति । [ चोर को डंडे से मारकर गोपालक गायों को हटाता है । यहाँ उपहनन क्रिया का कर्म 'चोर' है और कालन का कर्म 'गौ' है । अतः समानकर्मक न होने से णमुल् न होकर क्त्वा = ल्यप् होता है ॥ ४८ ॥

उप शब्द का प्रत्येक के साथ सम्बन्ध रहता है । सप्तम्यन्त और चकार के बल से तृतीयान्त उपपद रहते उपपूर्वक पीड, रुध और कर्ष धातुओं से णमुल् प्रत्यय होता है । उदा०—पार्श्वोपपीडं शेते, पार्श्वयोरुपपीडम्, पार्श्वाभ्यामुपपीडम्

उपशब्दः प्रत्येकमभिसंबध्यते। उपपूर्वेभ्यः पीडरुधकर्षेभ्यः सप्तम्यन्त उपपदे चकारात्तृतीयान्त उपपदे णमुल्प्रत्ययो भवति। पार्श्वोपपीडं शेते, पार्श्वयोरुपपीडम्, पार्श्वाभ्यामुपपीडम्। व्रजोपरोधं गाः स्थापयति, व्रजे उपरोधम्, व्रजेनोपरोधम्। पाण्युपकर्षं धानाः संगृह्णाति, पाणावुपकर्षम्, पाणिनोपकर्षम्। कर्षतेरिदं ग्रहणं न कृषतेः॥

११८३. समासत्तौ ॥ ५० ॥ ( ३३७१ )

'सप्तम्याम्', 'तृतीयायाम्' इति वर्त्तते। समासत्तिः=सन्निकर्षः। समासत्तौ गम्यमानायां तृतीयासप्तम्योरुपपदयोर्धातोर्णमुल् प्रत्ययो भवति। केशग्राहं युद्धचन्ते, केशेषु ग्राहम्, केशैर्ग्राहम्। हस्तग्राहम्, हस्तेषु ग्राहम्, हस्तैर्ग्राहम्। युद्धसंरम्भादत्यन्तं सन्निकृष्यन्ते इत्यर्थः॥

**न्यासः**

तत्रेह भौवादिकस्य ग्रहणम्, न तौदादिकस्य; शपा निर्देशात्। शपा निर्देशस्तस्य कृतगुणस्योच्चारणाल्लभ्यते॥ ४९॥

**समासत्तौ॥ युद्धसंरम्भादिति।** संरम्भः=मनःसंक्षोभपूर्वको वाक्कायविकारविशेषः, युद्धाय संरम्भो युद्धसंरम्भः, तस्मादत्यन्तं सन्निकृष्यन्ते, प्रत्यासीदन्तीति यावत्॥ ५०॥

**पदमञ्जरी**

भौवादिकस्य, न कृषतेरिति तौदादिकस्य; शपा निर्देशात्। शपा निर्देशस्तु विहितगुणस्योच्चारणाद्विज्ञायते। सूत्रे तु पञ्चम्यर्थे प्रथमा, किञ्च स्याद्यदि तौदादिकस्य ग्रहणं स्यात्, यावतोभयोरपि विलेखनार्थत्वान्नार्थभेदो नापि रूपभेदः? यद्यप्युभयोरपि विलेखने पाठः, तथापि तौदादिकस्य क्षेत्रविषये विलेखने वृत्तिः—पञ्चभिर्हलैः कृषतीति। तेन क्षेत्रे उपकृष्य हलेनोपकृष्येति तौदादिकात् क्त्वाप्रत्यय एव भवति, न णमुल्॥ ४९॥

**समासत्तौ॥ सप्तम्यां तृतीयायामित्यनुवर्त्तते इति।** पूर्वसूत्रेऽपि स्वरितत्वादेव तृतीयाऽनुवर्त्तते, सप्तम्यां तु तस्या निवृत्तिर्मा विज्ञायीति चकारः क्रियते। तेन चानुकृष्टमुत्तरत्र नानुवर्त्तते इति न चोदनीयम्। **युद्धसंरम्भादिति।** कोपादिना मनःक्षोभपूर्वको वाक्कायविकारः=संरम्भः, युद्धार्थं संरम्भो युद्धसंरम्भः, अश्वघासादिवत्षष्ठीसमासः। **अत्यन्तं सन्निकृष्य युद्धचन्ते इत्यर्थ इति।** सन्निकर्षप्रतिपादनपरमेतत्केशग्रहणं भवतु, मा वा भूदिति॥ ५०॥

**भावबोधिनी**

[ बगल से या बगल में दबा कर सोता है। पार्श्वयोः उपपद उपपूर्वक पीड् + णमुल् वैकल्पिक उपपदसमास वैकल्पिक विभक्तिलोप करने पर (१) पार्श्वोपपीडम्, (२) पार्श्वयोरुपपीडम् और (३) पार्श्वाभ्यामुपपीडम्—ये तीन रूप होते हैं। ] व्रजोपरोधम्, व्रजे उपरोधम्, व्रजेन उपरोधम्—गाः स्थापयति [ व्रज में रोककर गायों को ठहराता है। ] पाण्युपकर्षम्, पाणावुपकर्षम् पाणिनोपकर्षं धानाः संगृहणाति [ हाथ में या हाथ से खींचकर धान=अन्न का संग्रह करता है। ] [ भ्वादि की ] कृष् धातु यह है तुदादि की नहीं॥ ४९॥

'सप्तम्याम्' और 'तृतीययाम्' इन दो की अनुवृत्ति होती है। समासत्ति=सन्निकर्ष=अतिसमीप होना। समासत्ति=अति समीपता प्रतीत रहने पर तृतीयान्त और सप्तम्यन्त उपपद रहने पर धातु से णमुल् प्रत्यय होता है। उदा०—केशग्राहम्, केशेषु ग्राहम्, केशैः ग्राहम् युध्यन्ते [ केशेषु अथवा केशैः उपपद √ग्रह + णमुल्=अम्, उपधावृद्धि, विकल्प से उपपदसमास और विकल्प से ही विभक्ति का लोप होने से तीन रूप होते हैं। बालों में पकड़ कर लड़ते हैं—यह अर्थ है। ] हस्तग्राहम्, हस्तेषु ग्राहम्, हस्तैर्ग्राहम् [ युध्यन्ते। हाथों से या हाथों में पकड़ कर लड़ते हैं ]। युद्ध के लिये होने वाले संरम्भ [ मन क्षुब्ध होने से वाणी और शरीर की विकृत्ति ] के कारण अत्यन्त समीप आ जाते हैं—यह अर्थ है ]॥ ५०॥

## ११८४. प्रमाणे च ॥ ५१ ॥ ( ३३७२ )

**'तृतीयासप्तम्योः' इत्येव। प्रमाणम्—आयामः, दैर्घ्यम्। प्रमाणे गम्यमाने तृतीयासप्तम्योरुपपपद-योर्धातोर्णमुल् प्रत्ययो भवति। द्वयङ्गुलोत्कर्षं खण्डिकां छिनत्ति, द्वयङ्गुले उत्कर्षम्, द्वयङ्गुलेनोत्कर्षम्। त्र्यङ्गुलोत्कर्षम् ॥**

## ११८५. अपादाने परीप्सायाम् ॥ ५२ ॥ ( ३३७३ )

**परीप्सा=त्वरा। परीप्सायां गम्यमानायामपादान उपपदे धातोर्णमुल् प्रत्ययो भवति। शय्योत्थायं धावति, शय्याया उत्त्थायम्। एवं नाम त्वरते यदवश्यंकर्त्तव्यमपि नापेक्षते। शय्योत्थानमात्रमाद्रियते। रन्ध्रापकर्षं पयः पिबति। भ्राष्ट्रापकर्षमपूपान् भक्षयति। परीप्सायामिति किम्? आसनादुत्थाय गच्छति ॥**

### न्यासः

**प्रमाणे च ॥ प्रमाणमायाम इति**। 'आयामस्तु प्रमाणं स्यात्' इति वचनात् दैर्घ्यमिति प्रसिद्धतरार्थेन शब्दान्तरेण प्रमाणशब्दस्यैवार्थं स्पष्टीकरोति। **द्वयङ्गुलोत्कर्षमिति**। द्वयोरङ्गुल्योः समाहारो द्वयङ्गुलम्, 'तत्पुरुषस्याङ्गुलेः' इत्यादिनाऽच्। तेन द्वयङ्गुलेन खण्डिकाया दैर्घ्यं परिच्छिद्यते ॥ ५१ ॥

**अपादाने परीप्सायाम् ॥ शय्योत्थायमिति**। 'उदः स्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णः, 'आतो युक्'। **एवमित्यादिना** परीप्सां दर्शयति। **रन्ध्रापकर्षमिति**। एवं नाम त्वरते यत् पात्रमपि नापेक्षते, स्तनरन्ध्रादेवापकृष्य मुखेन पयः पिबतीत्यर्थः। **भ्राष्ट्रापकर्षमिति**। एवं नाम त्वरते यद् भाजनमपि दीयमानं नापेक्षते,

### पदमञ्जरी

**प्रमाणे च ॥ तृतीयासप्तम्योरित्येवेति**। अर्थानुवृत्तिप्रदर्शनमेतत्, न ह्येवंविधः शब्दः प्रकृतोऽस्ति। **द्वयङ्गुलोत्कर्षमिति**। द्वयोरङ्गुल्योः समाहारो द्वयङ्गुलम्, 'तत्पुरुषस्याङ्गुलेः' इत्यच् समासान्तः, द्वयङ्गुलेनोत्कृष्य=परिच्छिद्येत्यर्थः। ह्रस्वाः खण्डाः=खण्डिकाः ॥ ५१ ॥

**अपादाने परीप्सायाम् ॥ परीप्सा त्वरेति**। 'ञित्वरा सम्भ्रमे' घटादिः 'घटादयः षितः', षित्त्वादङ्। **शय्योत्थायमिति**। 'उदः स्थास्तम्भोः' इति तिष्ठतिसकारस्य तकारः, पूर्ववद्युक्। **अवश्यकर्त्तव्यमपीति**। अक्षिप्रक्षालनादिकम् ॥ ५२ ॥

### भावबोधिनी

'तृतीययाम्' और 'सप्तम्याम्' इनकी अनुवृत्ति होती है। प्रमाण=आयाम=लम्बाई। प्रमाण प्रतीयमान रहने पर तृतीयान्त और सप्तम्यन्त उपपद रहते धातु से णमुल् प्रत्यय होता है। उदा०—(१) द्वयङ्गुलोत्कर्षं खण्डिकां छिनत्ति, (२) द्वयङ्गुले उत्कर्षम्, (३) द्वयङ्गुलेनोत्कर्षम्। [ सप्तम्यन्त अथवा तृतीयान्त उपपद रहते उत्पूर्वक कृष् धातु से णमुल् प्रत्यय, वैकल्पिक समास और वैकल्पिक विभक्तिलोप होने से तीन रूप बनते हैं। दो दो अंगुल छोड़ कर लकड़ी काटता है। ] (१) त्र्यङ्गुलोत्कर्षम्, [ (२) त्र्यङ्गुले उत्कर्षम्, (३) त्र्यङ्गुलेन उत्कर्षम्—ये भी तीन रूप होते हैं। तीन अंगुल छोड़कर लकड़ी काटता है—यह अर्थ है ] ॥ ५१ ॥

परीप्सा=त्वरा=शीघ्रता। शीघ्रता प्रतीत होने पर, अपादान कारक उपपद रहते धातु से णमुल् प्रत्यय होता है। उदा०—शय्योत्थायं धावति, शय्याया उत्थाय। [ पलंग से उठते ही भागता है। शय्यायाः इस अपादन के उपपद रहते उत्पूर्वक स्था धातु से णमुल=अम्, युक्=य् आगम उत्+स्थायम्, स् का "उदः स्थास्तम्भोः पूर्वस्य" ८।४।६१ से पूर्वसवर्णादि करने पर 'उत्थायम्' बनता है। समास और विभक्तिलोप विकल्प से होने से दो रूप बनते हैं। कभी-कभी अचानक कोई विपत्ति आ जाने पर लोग पलंग से उठते ही भागने लगते हैं, उस स्थिति के लिए यह प्रयोग है। ] इतनी शीघ्रता करता है कि आवश्यक कार्य की भी अपेक्षा नहीं करता है। पलंग से उठने को ही महत्त्व देता है। रन्ध्रापकर्षं पयः पिबति। [ स्तनछिद्र से ही खींच कर दूध पीने लगता है। शीघ्रता में पात्रादि में दूध

## ११८६. द्वितीयायां च ॥ ५३ ॥ ( ३३७४ )

'परीप्सायाम्' इत्येव । द्वितीयान्त उपपदे परीप्सायां गम्यमानायां धातोर्णमुल् प्रत्ययो भवति । यष्टिग्राहं युध्यन्ते; यष्टिं ग्राहम्, लोष्टग्राहम्, लोष्टं ग्राहम् । एवं त्वरते यदायुधग्रहणमपि नाद्रियते । लोष्टादिकं यत्किंचिदासन्नं तद् गृह्णाति ॥

## ११८७. स्वाङ्गेऽध्रुवे ॥ ५४ ॥ ( ३३७६ )

'द्वितीयायाम्' इत्येव । अध्रुवे स्वाङ्गवाचिनि द्वितीयान्त उपपदे धातोर्णमुल् प्रत्ययो भवति । अक्षिनिकाणं जल्पति । भ्रूविक्षेपं कथयति । अध्रुव इति किम् ? उत्क्षिप्य शिरः कथयति । यस्मिन्नङ्गे छिन्नेऽपि प्राणी न म्रियते तदध्रुवम् – 'अद्रवं मूर्त्तिमत्स्वाङ्गम्' ( काशिका ४.१.५४ ) ॥

### न्यासः

भ्राष्ट्रादेवापकृष्य हस्तेन भक्षयति ॥ ५२ ॥ द्वितीयायाञ्च ॥ ५३ ॥

**स्वाङ्गेऽध्रुवे** ॥ स्वाङ्गलक्षणमद्रवादि चतुर्थे वक्ष्यति । **अक्षिनिकाणमिति** । 'कण निमीलने', चुरादिर्निपूर्वः । **यस्मिन्नङ्गे च्छिन्ने प्राणी न म्रियते तदध्रुवमिति** । पाणिपादादिकम् । अध्रुवत्वं पुनस्तस्य जीवत्यपि प्राणिनि कदाचिदभावाद् । यस्मिंस्त्वङ्गे च्छिन्ने प्राणी म्रियते तद् ध्रुवम्, शिरः प्रभृति । ध्रुवत्वं पुनस्तस्य सदा प्राणिनि सन्निवेशात् ॥ ५४ ॥

### पदमञ्जरी

**द्वितीयायां परीप्सायामित्येवेति** । 'अनुदात्तं पदमेकवर्जम्' इत्यत्रापि परीप्सा भवत्येव, कथम् ? परिभाषेयम्, पदग्रहणं च परिभाषार्थम् । तेनोदात्तः स्वरितो वा यत्र विधीयते तत्र तत्समकालमेवैकमचं वर्जयित्वा परिशिष्टमनुदात्तं कर्त्तव्यम्, न विलम्बितव्यमिति ॥ ५३ ॥

**स्वाङ्गेऽध्रुवे** ॥ स्वाङ्गलक्षणं चतुर्थे वक्ष्यते—अद्रवं मूर्त्तिमदित्यादि । **अक्षिनिकाणमिति** । 'कण निमीलने' चुरादिर्निपूर्वः । **उत्क्षिप्य शिरः कथयतीति** । ननु च ध्रुवमिति नित्यमुच्यते—ध्रुवा द्यौर्ध्रुवा पृथिवीति यथा; अध्रुवमनित्यम्, शिरश्चाप्यनित्यमेव, प्राणिनामेवानित्यत्वादत आह—**यस्मिन्नङ्ग इति** । अयं भावः—विशेषणसामर्थ्यात्प्रकर्ष आश्रीयते, प्रकर्षेण यदध्रुवमिति । प्रकर्षश्च जीवत्यपि प्राणिनि कदाचिदभाव इति ॥ ५४ ॥

### भावबोधिनी

नहीं लेता है। भ्राष्ट्रापकर्षम् अपूपान् भक्षयति [ भाड़ से खींच कर पुआ खाने लगता है। यहाँ वर्तनादि में रख कर नहीं खाता है। ]

परीप्सा में—इसका क्या लाभ ? आसनाद् उत्थाय गच्छति [ आसन से उठ कर जाता है। यहाँ स्वाभाविक स्थिति है। अतः णमुल नहीं होता है। क्त्वा = ल्यप् होता है ] ॥ ५२ ॥

'परीप्सायाम्' की अनुवृत्ति होती है परीप्सा = शीघ्रता प्रतीयमान रहने पर द्वितीयान्त उपपद रहते धातु से णमुल् प्रत्यय होता है। उदा—यष्टिग्राहं युध्यन्ते, यष्टिं ग्राहम् [ लाठी या छड़ी लेकर लड़ते हैं। यहाँ 'यष्टिम्' इस द्वितीयान्त के उपपद रहते ग्रह धातु से णमुल् = अम्, उपधावृद्धि, विकल्प से समास और विभक्तिलोप करने पर दो रूप होते हैं। ] लोष्टग्राहम्, लोष्टं ग्राहम् [ मिट्टी का ढेला लेकर लड़ता है। ] इतनी शीघ्रता करता है कि आयुध लेने को भी महत्त्व नहीं देता। मिट्टी का ढेला आदि जो भी पास में मिलता है उसी को लेकर लड़ने लगता है। [ इस प्रकार परीप्सा प्रतीत हो रही है ] ॥ ५३ ॥

'द्वितीयायाम्' इसकी अनुवृत्ति होती है। अध्रुव = चञ्चल, स्वाङ्गवाची द्वितीयान्त उपपद रहते धातु से णमुल् प्रत्यय होता है। उदा०—अक्षिनिकाणं जल्पति [ आँख बन्द करके बोलता है = बड़बड़ाता है। ] भ्रूविक्षेपं कथयति

**११८८. परिक्लिश्यमाने च ॥ ५५ ॥ ( ३३७७ )**

'स्वाङ्गे', 'द्वितीयायाम्' इत्येव। **परिक्लिश्यमाने स्वाङ्गवाचिनि द्वितीयान्त उपपदे धातोर्णमुल् प्रत्ययो भवति। परिक्लेशः=सर्वतो विबाधनम्, दुःखनम्। उरःपेषं युद्धचन्ते, उरःप्रतिपेषं युद्धचन्ते। शिरःपेषम्, शिरःप्रतिपेषम्। कृत्स्नमुरः पीडयन्तो युध्यन्ते। ध्रुवार्थोऽयमारम्भः॥**

**११८९. विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ॥ ५६ ॥ ( ३३७८ )**

'द्वितीयायाम्' इत्येव। **द्वितीयान्ते उपपदे विश्यादिभ्यो धातुभ्यो णमुल् प्रत्ययो भवति, व्याप्यमाने**

**न्यासः**

**परिक्लिश्यमाने च॥ परिक्लेशःसर्वतो विबाधनमिति।** सर्वतःशब्देन परिशब्दस्यार्थमाचष्टे। विबाधनशब्देनापि क्लिशेर्धातोः ॥ ५५ ॥

**विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः॥ विश्यादिभिः क्रियाभिरिति।** आदिशब्देन पत्यादित्रयाणां ग्रहणम्। **अनवयवेनेति।** साकल्येन। **पदार्थानामिति।** गेहादीनाम्। **तात्पर्यमिति।** क्रियाणां पौनः पुन्यमाभीक्ष्ण्यमित्यर्थः। **द्रव्ये व्याप्तिरित्यादिना** व्याप्यमानासेव्यमानयोर्विषयविभागं दर्शयति। यदि व्याप्यमान आसेव्यमाने चार्थे प्रत्ययो भवति, एवञ्च सति तयोरर्थयोर्नित्यता वीप्सा च विद्यत इति 'नित्यवीप्सयोः' इति द्विर्वचनेन भवितव्यम्, तत् कस्मान्न भवति? इत्याह—**समासेनेत्यादि।** यद्यपि समासस्तयोरर्थयोर्न विधीयते,

**पदमञ्जरी**

**परिक्लिश्यमाने च[1]॥ परिक्लिश्यमान इति।** 'क्लिशू विबाधने' इत्येतस्यैतद् रूपम्, न तु 'क्लिश उपतापे' इत्यस्य, परिश्च सर्वतो भाव इत्याह—**परिक्लेशः सर्वतो विबाधनमिति॥ ५५॥**

**विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः॥ अनवयवेनेति।** साकल्येन। **पदार्थानामिति।** गेहादीनाम्। **तात्पर्यमिति।** पौनःपुन्यमाभीक्ष्ण्यमित्यर्थः। **द्रव्ये व्याप्तिरित्यादिना** व्याप्त्यासेवयोर्विषयविभागं दर्शयति। **गेहानुप्रवेशमिति।** ननु व्याप्तौ वीप्सा गम्यते, आसेवायां च नित्यत्वमिति 'नित्यवीप्सयोः' इति द्विर्वचनं प्राप्नोति, तत्कस्मान्न भवतीत्याह--**समासेनेति।** यद्यपि समास एतयोरर्थयोर्न विधीयते, तथापि स्वभावत एतयोस्तेनाभिधानम्, यथा--सप्तपर्वा इति, पर्वगताया वीप्सायाः—पर्वणि पर्वणि सप्त पर्णान्यस्येति।

**भावबोधिनी**

[ भौंह चलाकर=टेढ़ी करके कहता है। यहां आंख और भौंह स्वाङ्गवाची हैं और उनकी अध्रुवता है, अतः णमुल् होता है। ] अध्रुव रहने पर—इसके ग्रहण का क्या प्रयोजन है? उत्क्षिप्य शिरः कथयति [ शिर उठाकर कहता है। ] जिस अंग के काट देने पर भी प्राणी नहीं मरता है वह अध्रुव है—अद्रव, मूर्तिमान् स्वाङ्ग होता है। [ अतः शिर ध्रुव है। ]॥ ५४॥

'स्वाङ्गे' और 'द्वितीयायाम्' इनकी अनुवृत्ति होती है। परिक्लिश्यमान=सभी ओर से क्लेश पाने वाले, स्वाङ्गवाची द्वितीयान्त के उपपद रहते धातु से णमुल् प्रत्यय होता है। परिक्लेश=सभी ओर से बाधित होना, दुःख होना। उदा०—उरः पेषं युद्धचन्ते, उरः प्रतिपेषं युध्यन्ते। [ यहाँ सम्पूर्ण छाती को पीड़ित करता हुआ लड़ता है, ऐसा अर्थ है। अतः उरः यह कर्मवाची उपपद रहते कृष् धातु से णमुल् होता है। उपपदसमास और विभक्तिलोप है। ] शिरः पेषम्, शिरः प्रतिपेषम्। [ यहाँ शिरः कर्म उपपद रहते पिष् धातु से णमुल् होता है। ] पूरी छाती=वक्षस्थल को पीड़ित करता हुआ [ उसकी पीड़ा को सहन करता हुआ ] लड़ता है—यह अर्थ है। [ पूर्ववर्ती सूत्र अध्रुव अङ्ग के विषय में था और ] यह सूत्र ध्रुव के लिये बनाया जा रहा है॥ ५५॥

'द्वितीयायाम्' इसकी अनुवृत्ति होती है। 'व्याप्यमान और आसेव्यमान' अर्थ प्रतीयमान रहने पर, द्वितीयान्त उपपद रहते विश् आदि धातुओं से णमुल् प्रत्यय होता है। विश आदि [ से प्रतीत ] क्रियाओं के द्वारा अनवयव=सम्पूर्णरूप से

१. 'परिक्लिश्यमानसिद्धौ च' इति मुद्रितवंगसंस्करणे पाठोऽपपाठः।

आसेव्यमाने चार्थे गम्यमाने । विश्यादिभिः क्रियाभिरनवयवेन पदार्थानां संबन्धो व्याप्तिः । तात्पर्यम्= आसेवा । द्रव्ये व्याप्तिः, क्रियायामासेवा । गेहानुप्रवेशमास्ते । समासेन व्याप्त्यासेवयोरुक्तत्वात् 'नित्यवीप्सयोः' ( ८.१.४ ) इति द्विर्वचनं न भवति । असमासपक्षे तु व्याप्यमानतायां द्रव्यवचनस्य द्विर्वचनम्, आसेव्यमानतायां तु क्रियावचनस्य । तथा च वक्ष्यति – 'सुप्सु वीप्सा, तिङ्क्षु नित्यता' इति ।

गेहंगेहमनुप्रवेशमास्ते । आसेवायाम्—गेहमनुप्रवेशमनुप्रवेशमास्ते । पति—गेहानुप्रपातमास्ते, गेहंगेहमनुप्रपातमास्ते, गेहमनुप्रपातमनुप्रपातमास्ते । पदि—गेहानुप्रपादमास्ते, गेहंगेहमनुप्रपादम्, गेहमनुप्रपादमनुप्रपादम् । स्कन्दि—गेहावस्कन्दमास्ते, गेहंगेहमवस्कन्दम्, गेहमवस्कन्दमवस्कन्दम् ॥

न्यासः

तथापि स्वभाव एव तेन तयोरभिधानम् । न हि शब्दैरर्थाभिधानं वाचनिकम्, अपि तु स्वाभाविकमिति पुरस्तादेव प्रतिपादितम् । **तथा च वक्ष्यतीति** । भाष्यकारः । **सुप्सु वीप्सेति** वचनाद् 'व्याप्यमानतायां द्रव्यवचनस्य द्विर्वचनं भवति' इत्युक्तं भवति । **तिङ्क्षु नित्यतेति** वचनात् 'आसेव्यमानतायां क्रियावचनस्य द्विर्वचनं भवति' इत्युक्तं भवति ।

**गेहंगेहमिति** । द्रव्यवचनस्य द्विर्वचनम् । **गेहमनुप्रवेशमनुप्रवेशमिति** क्रियावचनस्य ।

पदमञ्जरी

**तथा च वक्ष्यतीति** । 'नित्यवीप्सयोः' इत्यत्र वक्ष्यति **भाष्यकारः** । **तिङ्क्षु नित्यतेति** । उपलक्षणम्, 'अव्ययकृत्सु च' इत्यपि द्रष्टव्यम् ।

**क्त्वानिवृत्त्यर्थमिति चेदिति** । 'आभीक्ष्ण्ये णमुल् च' इत्यनेन क्त्वाणमुलौ द्वावपि विहितौ, तत्र विश्यादिभ्यो णमुलेव यथा स्यात्, क्त्वाप्रत्ययो मा भूदित्येवमर्थं पुनर्णमुलुच्यत इति चेदित्यर्थः । दूषयति—

भावबोधिनी

पदार्थों का सम्बन्ध होना व्याप्ति है । तात्पर्यम् = आसेवा [ क्रियाओं का पुनः पुनः होना, आभीक्ष्ण्य ] । द्रव्य के विषय में व्याप्ति [ पूर्णरूपेण सम्बन्ध ] और क्रिया के विषय में आसेवा [ पुनः पुनः होना ] । उदा०—गेहानुप्रवेशम् आस्ते [ घर घर में प्रवेश करके रहता है । गेहम् उपपद प्रविश् + णमुल्, धातु को उपधा का गुण, उपपदसमास—गेहानुप्रवेशम् । ] समासशक्ति के द्वारा व्याप्ति और आसेवा अर्थों के उक्त हो जाने से "नित्यवीप्सयोः" ८।१।४ इससे द्वित्व नहीं होता है । असमासपक्ष में तो व्याप्यमानता [ व्याप्त होना ] में द्रव्य [ गेह आदि ] का द्वित्व होता है किन्तु आसेव्यमानता में क्रियावाचक का द्वित्व होता है, जैसा कि आगे कहा जायगा—"सुबन्तों में वीप्सा = व्याप्त करने की इच्छा और तिङन्तों में नित्यता = आभीक्ष्ण्य" ।

क्रमशः उदा० (१) गेहं गेहम् अनुप्रवेशम् आस्ते । [ घर-घर में प्रवेश करके रहता है । समास न होने के कारण पदार्थ = द्रव्यवाचक का द्वित्व होता है । ] आसेवा में—गेहम् अनुप्रवेशम् अनुप्रवेशम् आस्ते । [ घर में प्रवेश कर करके रहता है । ]

(२) पति = पत् धातु का उदा०—गेहानुप्रपातम् आस्ते, गेहं गेहम् अनुप्रपातम् आस्ते [ घर घर में घुस कर रहता है । ] गेहम् अनुप्रपातम् अनुप्रपातम् आस्ते । [ घर में घुस घुस कर रहता है । ] (३) पद् धातु का उदा०—गेहानुप्रपादम् आस्ते, गेहं गेहम् अनुप्रपादम् आस्ते । [ घर घर में घुस कर रहता है । ] गेहम् अनुप्रपादम् अनुप्रपादम् [ घर में घुस घुस कर रहता है । ] (४) स्कन्द धातु का उदा०—गेहावस्कन्दम् आस्ते, गेहं गेहम् अवस्कन्दम् आस्ते [ घर घर में जाकर रहता है ] गेहम् अवस्कन्दम् अवस्कन्दम् आस्ते [ घर में घुस घुस कर रहता है । [ इनमें द्रव्य = गेह का और क्रिया प्रवेश आदि का द्वित्व प्रस्तुत किया गया है । ]

व्याप्यमान और आसेव्यमान अर्थों में—इसका क्या फल है ? गेहम् अनुप्रविश्य भुङ्क्ते [ घर में घुस कर खाता है । यहाँ प्रस्तुत दोनों अर्थों में से कोई नहीं है । अतः णमुल् नहीं होता है । ]

**व्याप्यमानासेव्यमानयोरिति किम्? गेहमनुप्रविश्य भुङ्क्ते।**

**ननु चाभीक्ष्ण्ये णमुल् विहित एव, आसेवा चाभीक्ष्ण्यमेव, किमर्थं पुनरासेवायां णमुल् उच्यते? क्त्वानिवृत्त्यर्थमिति चेत्, न; इष्टत्वात्तस्य। द्वितीयोपपदार्थं तर्हि वचनम्—उपपदसमासः पक्षे यथा स्यात्। तेन हि सत्युपपदाभावः॥**

## ११९०. अस्यतितृषोः क्रियान्तरे कालेषु ॥ ५७ ॥ ( ३३७९ )

**न्यासः**

**ननु चेत्यादि** देश्यं **क्त्वानिवृत्त्यर्थमित्यादिना** परमतमाशङ्क्य निराकरोति। स्यादेतत्—'आभीक्ष्ण्ये णमुल् च' इत्यनेन क्त्वाणमुलौ द्वावपि विहितौ, तत्र यदि विश्यादिभ्यः पुनरासेवायां णमुल् विधीयेत तदा क्त्वाप्रत्ययोऽपि स्यात्। अतस्तन्निवृत्त्यर्थं पुनर्णमुलुच्यत इति? एतच्च नास्ति; इष्टत्वात्। इष्यते ह्यासेवायां विशिप्रभृतिभ्यः क्त्वा—गेहमनुप्रविश्यानुप्रविश्यास्त इति। तस्मादयुक्तं तन्निवृत्त्यर्थं पुनर्णमुलग्रहणम्।

**द्वितीयान्तोपपदार्थमित्यादि**। यदि क्त्वानिवृत्त्यर्थं न प्रयुज्यते तदा द्वितीयान्तस्योपपदसंज्ञार्थं पुनर्वचनम्। अनेन 'द्वितीयायाञ्च' इत्यधिकाराद् द्वितीयान्त उपपदे प्रत्ययविधानम्। अतो द्वितीयान्तस्योपपद-संज्ञा लभ्यते। किमर्थं पुनर्द्वितीयान्तस्योपपदत्वमिष्यते? इत्याह—**उपपदसमास इत्यादि**। पक्षग्रहणं 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति विकल्पेन समासविधानात्। स्यादेतत्—तेनापि णमुल्विधान उपपदसंज्ञा भविष्यतीत्यत आह—**तेन हीत्यादि**। न हि तेनोपपदसम्बन्धे णमुल् विधीयते; सप्तमीस्थस्य कस्यचिच्छब्दस्या-भावात्। तस्मात् तेन णमुल्विधाने सत्युपपदत्वाभाव एव स्यात्॥ ५६॥

**अस्यतितृषोः क्रियान्तरे कालेषु ॥ अस्यतितृषोरिति**। 'असु क्षेपणे', 'ञितृषा पिपासायाम्'। **क्रियामन्तर-यतीत्यादि**। अन्तरं करोतीति 'तत्करोति' इत्यादिना णिच्। **क्रियामन्तरयति क्रियान्तरः**। कर्मण्यण्, णिलोपः।

**पदमञ्जरी**

**नेष्टत्वादिति**। इष्यते ह्यासेवायां विशिप्रभृतिभ्यः क्त्वा—गेहमनुप्रविश्यानुप्रविश्यास्त इति। **द्वितीयोपपदार्थं तर्हीति**। अत्र हि 'द्वितीयायां च' इत्यधिकाराद् द्वितीयान्तस्योपपदसंज्ञा लभ्यते, किमर्थं पुनरुपपदत्वमिष्यते? इत्याह—**उपसदसमास इति**। 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति वचनात्पक्ष इत्युक्तम्। **तेन हि सत्युपपदाभाव इति**। सप्तमीस्थस्य कस्यचिदभावात्॥ ५६॥

**अस्यतितृषोः क्रियान्तरे कालेषु ॥** 'असु क्षेपणे', 'ञितृषा पिपासायाम्'। **क्रियामन्तरयतीति क्रियान्तर इति**। व्यवधानवाचिनोऽन्तरशब्दात्तत्करोतीति णिचि 'कर्मण्यण्'। **पाययतीति**। पिबतेर्णिचि 'शाच्छासाह्वा'

**भावबोधिनी**

प्रश्न—[ "आभीक्ष्ण्ये णमुल् च" ३।४।२२ इसके द्वारा ] आभीक्ष्ण्य = क्रियाओं के पौनः पुन्य में णमुल् किया ही जा चुका है और आसेवा आभीक्ष्ण्य ही है। तो पुनः आसेवा अर्थ में णमुल् क्यों किया जा रहा है? क्त्वा न हो, उसे रोकने के लिये, यदि ऐसा कहें तो नहीं कह सकते, क्योंकि क्त्वा तो इष्ट है? [ उत्तर० ] तब तो द्वितीयान्त को उपपद बनाने के लिये यह सूत्र है—जिस कारण पक्ष में उपपदसमास हो सके [ अर्थात् "तृतीयाप्रभृतीन्यन्यतरस्याम्" ] इस सूत्र से विकल्प से समास हो सके, इसी उद्देश्य से यह सूत्र बनाया गया है। ] उस "आभीक्ष्ण्ये णमुल् च" ३।४।२२ इससे णमुल् होने पर कोई उपपद नहीं रहता है। [ अतः उपपदसमास की पाक्षिक सिद्धि करना ही इस सूत्र का उद्देश्य है ]॥ ५६॥

"द्वितीयायाम्" इसकी अनुवृत्ति होती है। क्रिया का अन्तर करने वाला—क्रियान्तर = क्रिया का व्यवधायक। क्रिया के अन्तर = व्यवधानकारक धात्वर्थ में वर्तमान [ उसके वाचक ] अस् और तृष् धातुओं से, द्वितीयान्त-कालवाची शब्दों के उपपद रहने पर, णमुल् प्रत्यय होता है। उदा०—द्व्यहात्यासं गाः पाययति, द्व्यहम् अत्यासं गाः पाययति।

'द्वितीयायाम्' इत्येव । क्रियामन्तरयति क्रियान्तरः = क्रियाव्यवधायकः । क्रियान्तरे धात्वर्थे वर्तमानाभ्यामस्यतितृषिभ्यां द्वितीयान्तेषु कालवाचिषूपपदेषु णमुल् प्रत्ययो भवति । द्व्यहात्यासं गाः पाययति, द्व्यहमत्यासं गाः पाययति । त्र्यहात्यासं गाः पाययति, त्र्यहमत्यासं गाः पाययति । द्व्यहतर्षं गाः पाययति, द्व्यहं तर्षं गाः पाययति । अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते = विच्छिद्यते । अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः ।

अस्यतितृषोरिति किम् ? द्व्यहमुपोष्य भुङ्क्ते । क्रियान्तर इति किम् ? अहरत्यस्येषून् गतः । न गतिर्व्यवधीयते । कालेष्विति किम् ? योजनमत्यस्य गाः पाययति । अध्वकर्मकमत्यसनं व्यवधायकम्, न कालकर्मकम् ॥

**न्यासः**

अन्तरशब्दश्चायमिह व्यवधाने वर्त्तत इति दर्शयन्नाह—**क्रियाव्यवधायक इति । पाययतीति** 'पा पाने', णिच् । 'शाच्छा' इत्यादिना युक् । **अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयत इति** । यच्चाद्य पानं यच्च द्व्यहेऽतीते पानं भविता तन्मध्यवर्त्तित्वादत्यसनतर्षणयोः । **अद्य पाययित्वेत्यादिना** द्व्यहात्यासं गाः पाययतीत्यस्यार्थमाचष्टे । एतदनुसारेणान्यस्याप्यर्थो गम्यत इति न व्याख्यातः ।

**द्व्यहमुपोष्येति** । 'वस निवासे', वच्यादिना संप्रसारणम्, क्त्वो ल्यबादेशः, 'शासिवसिघसीनाञ्च' इति षत्वम् । अत्रोपवसने भुजिक्रियाव्यवधायके वसिर्वर्त्तते । तत्र 'अस्यतितृषोः' इति यदि नोच्येत तदेहापि स्यात् । **न गतिर्व्यवधीयत इति** । यथा मूलोदाहरणेऽत्यसनेन तर्षणेन च मध्यवर्त्तिना पानक्रिया व्यवधीयते, न तथेह गतिः । तत्र चाहञ्छब्दात् 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । सकलस्याह्न इष्वत्यसनेन[1] व्याप्तत्वादिषुशब्दात् कर्मण्येव । **योजनमत्यस्य गाः पाययतीति** । अत्राध्ववाच्युपपदम् । क्वचित् स्रुघ्नादौ पाययित्वा योजनमतिक्रम्य पाययतीत्यर्थः । 'अध्वकर्मकम्', 'न कालकर्मकम्' इति द्वावपि बहुव्रीही ॥ ५७ ॥

**पदमञ्जरी**

इत्यादिना युक् । **अत्यसनेनेत्यादि** । यच्चाद्य पानं यच्च द्व्यहे गते भविता, तन्मध्यवर्त्तित्वादत्यसनतर्षणयोः, एतदेव स्पष्टयन्नुदाहरणस्यार्थमाह—**अद्य पाययित्वेत्यादि** ।

**द्व्यहमुपोष्येति** । उपपूर्वाद्वसेः क्त्वा ल्यप्, यजादित्वात्सम्प्रसारणम्, 'शासिवसिघसीनां च' इति षत्वम्, अत्रोपवासेन भोजनं व्यवधीयते । **अहरिति** । 'कालाध्वनोः' इति द्वितीया । कृत्स्नमहरिषूनत्यस्य = क्षिप्त्वा गत इत्यर्थः । **योजनमत्यस्येति** । क्वचित्स्रुघ्नादौ पाययित्वा ततो योजनमतिक्रम्य पाययतीत्यर्थः ॥५७॥

**भावबोधिनी**

[ दो दिनों के बाद गायों को पिलाता है । ] त्र्यहात्यासं गाः पाययति, त्र्यहम् अत्यासं गाः पाययति [ तीन दिनों के बाद गायों को पानी पिलाता है । ] द्व्यहतर्षं गाः पाययति, द्व्यहं तर्षं गाः पाययति । [ दो दिन प्यासी रखकर गायों को पानी पिलाता है । ] अत्यसन और तर्षण के कारण गायों की पानक्रिया का व्यवधान = व्यवच्छेद होता है । आज पिला कर दो दिन बिता कर पुनः पिलाता है । [ इस प्रकार प्रथम दिन की पानक्रिया और दो दिन बाद की पानक्रिया के मध्य में व्यवधान होना स्वाभाविक है । अस् = क्षेपण = अलग करना, फेंकना । तृष् = पिपासा । ]

अस् और तृष् इन्हीं से होता है—इसका क्या फल है ? द्व्यहम् उपोष्य भुङ्क्ते । [ दो दिन व्रत रख कर खाता है । यहाँ उपवस् धातु है । अतः णमुल् नहीं होता है । ] क्रिया का अन्तर = व्यवधान रहने पर—इसका क्या फल है ? अहः अत्यस्य इषून् गतः [ दिन भर बाणों को चला कर चला गया । यहाँ क्रिया का व्यवधान नहीं है अपितु लगातार प्रतीति है । अतः णमुल् नहीं होता है । ] यहाँ गति = बाणों का चलना व्यवहित नहीं होता है । कालवाची उपपद रहते—इसका क्या फल है ? योजनम् अत्यस्य गाः पाययति [ एक योजन के बाद गायों को पानी पिलाता है । यहाँ काल नहीं स्थान का व्यवधान है । ] यहाँ अध्वकर्मक अत्यसन = व्यवधायक है, कालकर्मक नहीं है ॥ ५७ ॥

---

१. √असु क्षेपणे । असनम् = क्षेपणम् । बाणक्षेपणेनेत्यर्थः ।

**११९१. नाम्न्यादिशिग्रहोः ॥ ५८ ॥ ( ३३८० )**

**'द्वितीयायाम्' इत्येव । नामशब्दे द्वितीयान्त उपपदे आदिशेर्ग्रहेश्च धातोर्णमुल् प्रत्ययो भवति । नामादेशमाचष्टे । नामग्राहमाचष्टे ॥**

**११९२. अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ॥ ५९ ॥ ( ३३८१ )**

**अव्यय उपपदेऽयथाभिप्रेताख्याने गम्यमाने करोतेः क्त्वाणमुलौ भवतः । ब्राह्मण ! पुत्रस्ते जातः । किं तर्हि वृषल ! नीचैःकृत्याचक्षे नीचैःकृत्वा, नीचैःकारम् । उच्चैर्नाम प्रियमाख्येयम् । ब्राह्मण ! कन्या ते गर्भिणी, किं तर्हि वृषल ! उच्चैःकृत्याचक्षे, उच्चैः कृत्वा, उच्चैःकारम् । नीचैर्नामाप्रियमाख्येयम् ।**

**न्यासः**

**नाम्न्यादिशिग्रहोः ॥ आदिशेरिति ।** 'दिश अतिसर्जने', आङ्पूर्वः ॥ ५८ ॥

**अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ॥ अयथाभिप्रेताख्यान इति ।** यद् यदभिप्रेतमिष्टम् यथाभिप्रेतम्, 'यथाऽसादृश्ये' इति वीप्सायामव्ययीभावसमासः, न यथाभिप्रेतमयथाभिप्रेतम् । अप्रियमित्यर्थः । **आचक्ष इति ।** आङ्पूर्वाच्चक्षिङो लट्, 'थासः से', 'स्कोः संयोगाद्योरन्ते च' इति ककारलोपः, 'षढोः कः सि' इति कत्वम्, 'इण्कोः' इति षत्वम् ।

**उक्तमिति ।** क्वोक्तम् ? 'उपदंशस्तृतीयायाम्' इत्यत्र । उपपदसमासार्थं वचनमिति च । 'क्त्वा च' इत्यनेन उपपदसमासः पक्षे यथा स्यात् । कस्मात् पुनरनेन यः क्त्वा विहितस्तेन समासो भवति ? यस्तु 'समानकर्तृकयोः' इत्यादिना विहितस्तेन न भवति ? इत्याह—**तथा होत्यादि ।** '**क्त्वा च**' इत्यत्र 'तृतीया-

**पदमञ्जरी**

**नाम्न्यादिशिग्रहोः ॥ आदिशेर्ग्रहेश्चेति ।** एतेनाङो दिशिनैव सम्बन्धः, न ग्रहिणेति दर्शयति ॥ ५८ ॥

**अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ॥** 'अयथाभिप्रेताख्याने' इति नञः प्रश्लेषः पश्चान्निर्देशाद्विज्ञायते, अन्यथाऽसन्देहार्थं पूर्वं निर्दिशेत्, अयथाभिप्रेतशब्दश्चाख्यानक्रियाविशेषणं यथाभिप्रेतं न भवति तथाख्यान इत्यर्थः । पुत्रजन्म प्रार्थयमानं ब्राह्मणं गत्वा केनचिद्गोपनीयवन्नीचैराख्यातम्—ब्राह्मण ! पुत्रस्ते जात इति, तममृष्यमाणो ब्राह्मण आह—**किं तर्हीति ।** पुत्रजन्माख्यानस्य प्रियत्वेऽपि आख्यानप्रकारस्यानभिप्रेतत्वाद्भवत्युदाहरणम्, अत एवायथाभिप्रेताख्यान इत्युक्तम्, न पुनरप्रियाख्यान इति । **आचक्ष इति ।** लट्, 'थासस्से', शपो लुकि 'स्कोः संयोगाद्योः' इति ककारलोपः, 'षढोः कः सि' । उदाहरणेऽयथाभि-

**भावबोधिनी**

'द्वितीयायाम्" इसकी अनुवृत्ति होती है । द्वितीयान्त नाम शब्द उपपद रहते आङ्पूर्वक दिश् धातु और ग्रह् धातु से णमुल् प्रत्यय होता है । उदा० नामादेशम् आचष्टे । [ नाम लेकर बुलाता है । नाम उपपद आङ् पूर्वक √दिश् + णमुल् = अम्, उपधागुण, उपपदसमास—नामादेशम् ], नामग्राहम्, [ नाम उपपद ग्रह् + णमुल् = अम्, उपधावृद्धि, उपपदसमास नामग्राहम् [ नाम लेकर बुलाता है ] ॥ ५८ ॥

अयथाभिप्रेत [ जैसा इष्ट नहीं वैसा ] आख्यान = कथन प्रतीयमान रहने पर अव्यय उपपद रहते कृञ् धातु से क्त्वा और णमुल् होते हैं । उदा०—हे ब्राह्मण ! पुत्रस्ते जातः, [ हे ब्राह्मण ! आपका लड़का पैदा हुआ है ] किं तर्हि वृषल ! नीचैः कृत्य आचक्षे, नीचैः कृत्वा, नीचैः कारम् । [ तो नीच ! धीरे से क्यों कह रहा है । ] हर्ष की बात को जोर से कहना चाहिये । [ इसलिये यहाँ कथन का प्रकार जैसा अभिप्रेत है वैसा नहीं होने से क्त्वा और णमुल् दोनों होते हैं । यहाँ "क्त्वाच" २।२।२२ से वैकल्पिक समास होने पर समासपक्ष में क्त्वा का ल्यप् होने से तीन रूप बनते हैं । नीचैः उपपद √कृ + क्त्वा, समासपक्ष में ल्यप् = य, तुक् = त् आगम (१) नीचैः कृत्य, (२) नीचैः कृत्वा, (३) णमुल् = अम् में

**अयथाभिप्रेताख्यान इति किम् ? उच्चैः कृत्वाऽऽचष्टे, पुत्रस्ते जात इति। क्त्वाग्रहणं किम्, यावता सर्वस्मिन्नेवात्र प्रकरणे वाऽसरूपेण क्त्वा भवतीत्युक्तम् ? समासार्थं वचनम्। तथा च 'क्त्वा च' ( २.२.२२ ) इत्यस्मिन्सूत्रे 'तृतीयाप्रभृतीन्यन्यतरस्याम्' ( २.२.२१ ) इति वर्त्तते। णमुलधिकारे पुनर्णमुल्ग्रहणं तुल्यकक्षत्वज्ञापनार्थम्, तेनोत्तरत्र द्वयोरप्यनुवृत्तिर्भविष्यति॥**

**न्यासः**

प्रभृतीनि' इत्यनुवर्त्तते। तस्मादनेन यः क्त्वा विहितस्तेनैव पक्षे समासो भवति, न तु तेन, तृतीयाप्रभृतिषूपपदेषु क्त्वा विधीयते। अथ णमुल्ग्रहणं किमर्थम्, यावता णमुलनुवर्त्तत एव, ततः क्त्वा चेति वक्तव्यम् ? इत्याह—**णमुलधिकार इत्यादि**। तुल्यकक्षत्वं तद्वत् तुल्यबलत्वम्। **तेनेत्यादि**। ज्ञापकस्य प्रयोजनं दर्शयति। यदि क्त्वा चेत्युच्येत चकारेण यत्नादनुकृष्टो णमुलुत्तरत्र नानुवर्त्तेत; यत्नाभावात्। यथा तेन क्त्वाप्रत्ययस्यान्वाचीयमानता विज्ञायेत ततश्चोत्तरत्र तस्याप्राधान्यादनुवृत्तिर्न स्यात्। पुनर्णमुल्ग्रहणे सति सहनिर्देशात् क्त्वाणमुलोर्गुणप्रधानभावो न भवतीति द्वयोरप्यनुवृत्तिर्भवति॥ ५९॥

**पदमञ्जरी**

प्रेताख्यानं दर्शयति--**उच्चैर्नमिति**। नामशब्दः प्रसिद्धौ, न पुनरिदं ब्राह्मणवाक्यमुक्तमिति 'उपदंशस्तृतीयायाम्' इत्यत्रेदमुक्तम्। **समासार्थं वचनमिति**। एतदेवोपपादयति--**तथा हीति**। 'क्त्वा च' इत्यत्र 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति वर्त्तते, तस्मादनेन यः क्त्वा विहितस्तेनैव पक्षे समासो लभ्यते, न तु समानादिसूत्रविहितेन, न हि तेन तृनीयाप्रभृतिषूपपदेषु क्त्वा विधीयत इत्यर्थः। णमुल्ग्रहणमनर्थकम्, प्रकृतो ह्यसौ तत्र क्त्वा चेति वक्तव्यम् ? इत्यत आह—**णमुलधिकार इत्यादि**। तुल्यकक्षत्वम् = तुल्यबलत्वम्। **तेनेत्यादि**। यदि तु चकारेण यत्नेन णमुलनुकृष्येत, उत्तरत्र नानुवर्त्तेत, यत्नाभावात्। पुनर्णमुल्ग्रहणे तु द्वन्द्वनिर्दिष्टयोर्द्वयोरप्युत्तरत्रानुवृत्तिः सिद्धा भवति॥ ५९॥

**भावबोधिनी**

उपधावृद्धि और रपर होने पर—नीचैः कारम्। ] ब्राह्मण ! तुम्हारी कन्या गर्भिणी हो गयी है। अरे नीच ! तो इस बात को जोर से क्यों कह रहा हैं। [ यहाँ उच्चैः इस अव्यय के उपपद रहते √कृ + क्त्वा, वैकल्पिक समास होने पर ल्यप् = य, तुक्—(१) नीचैः कृत्य, (२) नीचैः कृत्वा, (३) णमुल होने पर नीचैः कारम्। ] अप्रिय बात को नीचैः = धीरे से कहना चाहिये। [ यहाँ जोर से कहा जाना अयथाभिप्रेताख्यान है। ]

अयथाभिप्रेत [ जो जैसा इष्ट नहीं है उसे वैसा कहना ]--इसका क्या लाभ है ? उच्चैः कृत्वा आचष्टे, पुत्रस्ते जात इति [ जोर से कह रहा है, आपका लड़का पैदा हुआ है। यहाँ जोर से कहना ही अभीष्ट है। अतः यथाभिप्रेताख्यान है, अयथाभिप्रेत नहीं। इसलिये यह सूत्र नहीं प्रवृत्त होता है। ] प्रश्न—क्त्वा का ग्रहण किस लिये है, क्योंकि इस सम्पूर्ण प्रकरण में "वाऽसरूपोऽस्त्रियाम्" ३।१।९४ इस सूत्र से [ विकल्प से ] क्त्वा होता है, ऐसा कहा जा चुका है ? उत्तर--यह सूत्र समाससिद्धि के लिये है। वह इस प्रकार है "क्त्वा च" २।२।२२ इस सूत्र में "तृतीयाप्रभृतीन्यन्यतरस्याम्' २।२।२२ इसकी अनुवृत्ति होती है। [ इसका तात्पर्य यह है कि इस सूत्र से जहाँ क्त्वा होता है वहीं "क्त्वा च" २।२।२२ से पाक्षिक समास होता है न कि "समानकर्तृकयोः" ३।४।२१ से होने वाले क्त्वा के प्रसंग में। क्योंकि वह सूत्र तृतीयान्त आदि के उपपद रहते क्त्वा का विधान नहीं करता है। ] णमुल् का अधिकार=अनुवृत्ति. रहने पर पुनः णमुल् का ग्रहण तुल्यकक्षत्व=तुल्यबलता को [ क्त्वा और णमुल् की हर दृष्टि से समानताको ] ज्ञापित करने के लिये है। इस लिये आगे सूत्र में दोनों की अनुवृत्ति होगी। [ यदि 'क्त्वा च' ऐसा यहाँ कहा जाता तो केवल 'क्त्वा' की ही अनुवृत्ति आगे हो पाती। द्वन्द्वनिर्दिष्ट होने से क्त्वा और णमुल् इन दोनों की अनुवृत्ति सम्भव है। ] ॥ ५९ ॥

**११९३. तिर्यच्यपवर्गे ॥ ६० ॥ ( ३३८२ )**

**तिर्यक्शब्दे उपपदे कृञः क्त्वाणमुलौ प्रत्ययौ भवतः अपवर्गे गम्यमाने । अपवर्गः=समाप्तिः । तिर्यक्कृत्य गतः, तिर्यक्कृत्वा गतः, तिर्यक्कारं गतः । समाप्य गत इत्यर्थः । अपवर्ग इति किम् ? तिर्यक्कृत्वा**

**न्यासः**

**तिर्यच्यपवर्गे ॥ तिर्यक्कृत्वेति** । तिरोऽञ्चतीति ऋत्विगादिना क्विन् । 'झलां जशोऽन्ते' इति चकारस्य जकारे कृते 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्—गकारः, तस्यापि चर्त्वम्—ककारः, 'तिरसस्तिर्यलोपे' इति तिर्यादेशः ।

**तिर्यक् कृत्वा काण्डं गत इति** । अनृजु कृत्वा । पार्श्वतः कृत्वेत्यर्थः ।

अथ 'तिर्यचि' इति कोऽयं निर्देशः, यावता भसंज्ञायां सत्याम् 'अचः' इत्यकारलोपे कृते तिरश्चीति भवितव्यमित्यत आह—**तिर्यचीत्यादि** । सर्वत्र ह्यनुकरणभूतशब्दः शब्दस्वरूपस्यैवानुकरणम् । एतावांस्तु विशेषः-क्वचिच्छब्दपदार्थकस्यानुकरणम्, क्वचिदर्थपदार्थस्येति । तत्रानुकरणमित्येतावति वक्तव्ये शब्दरूपग्रहणं शब्दरूपमात्रस्यार्थरहितस्यैतदनुकरणमिति ज्ञापनार्थम् । तदेतदुक्तं भवति—शब्दपदार्थको यस्तिर्यक्छब्दस्तस्येद-मनुकरणम्, न तु स एव । तेन शब्दान्तरत्वादकारलोपो न भवतीति भावः । नन्वेवमपि 'प्रकृतिवदनुकरणं भवति' इति भवितव्यमेवात्र प्रकृतिकार्येणाकारलोपेन ? इत्यत आह—**न चेत्यादि** । अत्रैवोपपत्तिमाह—

**पदमञ्जरी**

**तिर्यच्यपवर्गे ॥ तिर्यक्कृत्येति** । तिरोऽञ्चतीति 'ऋत्विग्' इत्यादिना क्विन्, 'तिरसस्तिर्यलोपे' इति तिर्यादेशः । व्युत्पत्तिमात्रं चैतत्, न त्वत्रावयवार्थोऽस्ति, समुदायो ह्ययमपवर्गे वर्त्तते तद्दर्शितम् । **समाप्य गत इत्यर्थ इति** । **तिर्यक्कृत्वेति** । अनृजु कृत्वा, अग्रतः स्थितं पार्श्वे क्षिप्त्वेत्यर्थः ।

'तिर्यचि' इत्ययुक्तोऽयं निर्देशः, भसंज्ञायां सत्याम् 'अचः' इत्यकारलोपे तिरश्चीति भवितव्यम् ? अत आह—**तिर्यचीति शब्दानुकरणमेतदिति** । 'अच' इत्यर्थवतोऽजित्यस्य ग्रहणम् । स चार्थो लोकप्रसिद्धो गृह्यते; 'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः' इति न्यायात् । अतोऽञ्चेः स्वार्थे वर्तमानस्याल्लोपः । एतत्तु तत्र स्थितस्य शब्दरूपस्यानुकरणम्, तेनानुकार्येण रूपेणार्थवन्न तु लौकिकार्थेन, तेन लोपाभाव इति भावः । नन्वेवमपि 'प्रकृतिवदनुकरणं भवति' इति लोपः प्राप्नोत्येवात आह—**न च प्रकृतिवदनुकरणेन भवितव्यमिति** ।

**भावबोधिनी**

अपवर्ग प्रतीयमान रहने पर, तिर्यक् शब्द उपपद रहते कृञ् धातु से क्त्वा और णमुल् दोनों प्रत्यय होते हैं । अपवर्ग=समाप्ति । उदा०—तिर्यक्कृत्य गतः, तिर्यक् कृत्वा गतः, तिर्यक्कारं गतः । समाप्त=नष्ट करके चला गया—यह अर्थ है । अपवर्ग=समाप्ति में--इसका क्या फल है ? तिर्यक् कृत्वा काष्ठं गतः । [ लकड़ी को टेढ़ी करके चला गया । ] [ तिरश्चि--यह होना चाहिये तिर्यचि यह कैसे ? ] 'तिर्यचि' यह शब्द का अनुकरण है [ यहाँ अर्थवान् शब्द का ग्रहण नहीं है । अतः उसकी आनुपूर्वी भी नहीं है । ] 'अनुकरण तो प्रकृति [ मूल शब्द ] के समान होना चाहिये' ? अनुकरण किये जाने वाले शब्द के रूप का विनाश होने लगेगा [ जैसे रूप का अनुकरण इष्ट है वैसा न होकर दूसरे प्रकार का होने लगेगा और उससे अर्थप्रतीति होने लगेगी । अतः इनमें भी शब्दरूप का ही अनुकरण है--] "एतदोऽश्" २।४।२३ "अदसो मात्" १।१।१२ ।

**विमर्श**--तिरः अञ्चति--इस अर्थ में क्विन् प्रत्यय और सर्वापहारी लोप कर देने पर--तिरस्+अञ्च् रहता है । "तिरसस्तिर्यलोपे" ६।३।९४ से तिरस् का तिरि आदेश, अनुनासिकलोप, तिर्यच्, जश्त्व और कुत्व करने पर तिर्यक् बनता है । इसको उपपद मानकर √कृ+क्त्वा, वैकल्पिक-समासपक्ष में क्त्वा का ल्यप्=य, तुक्=त् आगम करने पर (१) तिर्यक्कृत्य, समासाभावपक्ष में (२) तिर्यक्कृत्वा और णमुल् करने पर (३) तिर्यक्कारम् ।

**काष्ठं गतः। 'तिर्यचि' इति शब्दानुकरणम्। न च प्रकृतिवदनुकरणेन भवितव्यम्; अनुक्रियमाणरूपविनाश-प्रसङ्गात्—'एतदोऽश्, (२.४.३३) 'अदसो मात्' (१.१.१२) इति ॥**

**११९४. स्वाङ्गे तस्प्रत्यये कृभ्वोः ॥ ६१ ॥ ( ३३८३ )**

**न्यासः**

**अनुक्रियमाणरूपविनाशप्रसङ्गादिति।** यद्यत्र प्रकृतिकार्यं स्यात् ततो यादृशमनुकरणं तिर्यगिति शब्दरूपं तस्य विनाशोऽनुपलब्धिः स्यात्। यादृशमनुकर्तुमिष्टमकृताकारलोपं तादृशं न प्रतीयेतेत्यर्थः। यत एवं प्रकृतिवदनुकरण-भावे सत्येष दोष आपतति, ततो नेह प्रकृतिवदनुकरणेन भवितव्यम्। 'प्रकृतिवदनुकरणं भवति' इत्यस्य तु यत्रार्थपदार्थस्यानुकरणं सोऽवकाशो वेदितव्यः। क्व च यथा प्रकृतिवदनुकरणं भवतीत्याह—**एतदोऽशित्यादि।** एतदोऽदस इत्युभयमप्येतच्छब्दरूपपदार्थकस्यानुकरणम्। यदि च शब्दपदार्थकस्य यदनुकरणं तस्यापि प्रकृतिभावः स्यात्, तदा त्यदाद्यत्वादिके प्रकृतिकार्ये कृते—एतस्य, अमुष्येति रूपं स्यात्। तस्माद् यथेह प्रकृति-भावो न भवति, तथा तिर्यचीत्यत्रापि ॥ ६० ॥

**स्वाङ्गे तस्प्रत्यये कृभ्वोः ॥ यथासंख्यमत्र नेष्यत इति।** कथं पुनरिष्यमाणमपि न भवति, यावता द्वे प्रकृती, प्रत्ययावपि द्वावेवेत्यस्ति यथासंख्यप्राप्तिनिमित्तम्? 'कृभ्वोः' इति निर्देशाल्लक्षणव्यभिचारचिह्नात्।

**पदमञ्जरी**

कस्मादित्याह—**अनुक्रियमाणरूपविनाशप्रसङ्गादिति।** यादृशं रूपमनुकर्तुमिष्टं तादृशं न प्रीतयेत, लौकिक एव त्वर्थः प्रतीयेतेत्यर्थः। क्व च यथा प्रकृतिवदनुकरणं भवतीत्याह—**एतदोऽशित्यादि।** यद्यनुक्रियमाणरूप-विनाशेऽपि प्रकृतिवदनुकरणं स्यात्, एतदः, अदस इत्यत्रोभयत्रापि त्यदाद्यत्वादिके प्रकृतिकार्ये सति एतस्य, अमुष्येति रूपं स्यात् ननु प्रयोजनानुवर्त्ति प्रमाणं ततश्चेल्लोपः प्राप्नोति कर्तव्य एवायम्? कथम्? 'यत्तदेतेभ्यः' इति त्यदाद्यत्वम्, अस्यवामीयमिति यस्येति लोपः, गवित्ययमाहेत्यवादेशः, पटिति करोतीत्यनुक्रियमाणरूप-विनाशे सत्यपि 'अव्यक्तानुकरणस्यात इतौ' इति पररूपत्वं वा भवति। तस्मादुभयथा निर्देशदर्शनात् क्वचित्प्रकृतिवदनुकरणं भवति, क्वचिन्नेति वाच्यभ्। तथा चास्मिन्नेव सूत्रे भाष्यम्-सौत्रो निर्देश इति ॥६०॥

**स्वाङ्गे तस्प्रत्यये कृभ्वोः ॥** 'तस्प्रत्यये' इति बहुव्रीहिनिर्देश इत्याह—**तस्प्रत्ययो यतः स्वाङ्गात्तदेव-मुच्यत इति।** न च 'क्विन्प्रत्ययस्य कुः' इतिवत्कदाचित्तस्प्रत्ययान्तत्वेन दृष्टे संप्रत्यतदन्तेऽपि स्वाङ्गे प्रसङ्गः,

**भावबोधिनी**

सूत्रस्थ 'तिर्यचि' यह प्रयोग असंगत है क्योंकि सप्तमी में भसंज्ञा होने से अलोप हो जाने पर 'तिरश्चि' ऐसा ही होना चाहिये? इस शंका का समाधान यह है कि यहाँ शब्द=आनुपूर्वी का अनुकरण है। अर्थज्ञान कराना इष्ट नहीं हैं। अतः 'तियच्' इस शब्दरूप के उपपद रहते प्रत्यय होते हैं. यही व्याख्या की जाती है। अनेक सूत्रों में इसी प्रकार के शब्दरूपों के अनुकरण देखे जाते हैं। जैसे 'एतदः अश्' 'अदसः मात्' आदि में 'एतद्' 'अदस्' का अनुकरण करके ही प्रयोग है ॥ ६० ॥

तस् प्रत्यय होता है जिस स्वाङ्गवाचक से वह 'तस्प्रत्यय' कहा जाता है। तस्प्रत्ययान्त, स्वाङ्गवाचक उपपद रहते कृ और भू धातुओं से क्त्वा और णमुल् दोनों प्रत्यय होते हैं। यहाँ स्वरितसंकेत न होने से यथासंख्य विधि नहीं है। [ अर्थात् कृ से क्त्वा और भू से णमुल् हो—ऐसा क्रमशः विधान नहीं है। "अपादाने चाहीयरुहोः" ५।४।४५ सूत्र से सप्तम्यर्थ में तसि प्रत्यय हुआ है—] उदा०—( १ ) मुखतः कृत्य, ( २ ) मुखतः कृत्वा, ( ३ ) मुखतः कारं गतः। [ सामने करके चला गया। स्वाङ्गवाची मुख शब्द से तस् प्रत्यय होने पर तस्प्रत्ययान्त स्वाङ्गव.ची मुखतः उपपद रहते √कृ+क्त्वा, वैकल्पिक समासपक्ष में ल्यप्=य, तुक् करने पर पहला रूप; समासाभाव पक्ष में दूसरा

तस्प्रत्ययो यतः स्वाङ्गात्तदेवमुच्यते। तस्प्रत्यये स्वाङ्गवाचिन्युपपदे करोतेर्भवतेश्च धात्वोः क्त्वाणमुलौ प्रत्ययौ भवतः। यथासंख्यमत्र नेष्यते; अस्वरितत्वात्। मुखतःकृत्य गतः, मुखतः कृत्वा गतः, मुखतःकारं गतः। मुखतोभूय तिष्ठति, मुखतो भूत्वा तिष्ठति, मुखतोभावं तिष्ठति। पृष्ठतःकृत्य गतः, पृष्ठतः कृत्वा गतः, पृष्ठतःकारं गतः। पृष्ठतोभूय गतः, पृष्ठतो भूत्वा, पृष्ठतोभावम्।

स्वाङ्ग इति किम्? सर्वतः कृत्वा गतः। तस्ग्रहणं किम्? मुखीकृत्य गतः। मुखीभूय गतः। प्रत्ययग्रहणं किम्? मुखे तस्यतीति मुखतः, मुखतः कृत्वा गतः॥

**न्यासः**

इह प्रत्यये विधीयमाने 'परश्च' इति सम्बन्धाद् दिग्योगलक्षणया पञ्चम्या भवितव्यम्, तत्र कृभूभ्यामिति पञ्चमीनिर्देशे कर्त्तव्ये योऽयम् 'कृभ्वोः' इति षष्ठीनिर्देशः स लक्षणव्यभिचारचिह्नम्, तेन यथासंख्याभाव इति वेदितव्यम्। **मुखत इति**। 'अपादाने चाहीयरुहोः' इति तसिः।

**मुखीकृत्येति**। अत्र मुखशब्दश्च्व्यन्तः। 'अभूततद्भावे' इत्यादिना च्विः, 'अस्य च्वौ' इतीत्वम्। **मुखे तस्यतीति**। 'तसु उपक्षये', 'अन्येभ्योऽपि दृश्यते' इति क्विप्, हल्ङ्याादिना सुलोपः रुत्वविसर्जनीयौ। धातुरत्र तस्शब्दः, न तु प्रत्ययः। तेन तदन्त उपदेशे क्त्वाणमुलौ न भवतः, 'समानकर्तृकयोः' इति क्त्वैव भवति॥ ६१॥

**पदमञ्जरी**

तस्प्रत्ययग्रहणसामर्थ्यात्। कर्मधारयो वायम्—तस्प्रत्यये परतो यत्स्वाङ्गं तस्मिन्नुपपदे इति। वृत्तौ तु वस्तुमात्रं प्रदर्शितम्। **यथासंख्यमत्र नेष्यत इति**। व्याख्यानात्। **मुखत इति**। आद्यादित्वात्सप्तम्यर्थे तसिः।

**मुखे तस्यतीत्यादि**। 'तसु उपक्षये' इत्यस्मान्मुखशब्द उपपदे 'अन्येभ्योऽपि दृश्यते' इति क्विप्—मुखतः, 'अत्वसन्तस्य च' इति दीर्घो न भवति; 'अधातोः' इति प्रतिषेधात्। प्रत्ययाप्रत्ययपरिभाषयैवात्राप्रसङ्गात् नार्थः प्रत्ययग्रहणेन॥ ६१॥

**भावबोधिनी**

रूप और णमुल् होने पर तीसरा रूप बनता है। इसी प्रकार स्वाङ्गवाची मुख शब्द उपपद रहते भू धातु से भी क्त्वा, ल्यप् और णमुल् होने पर तीन रूप बनते हैं—] (१) मुखतोभूय, (२) मुखतोभूत्वा, (३) मुखतोभाव तिष्ठति। [सामने होकर बैठता है, यह अर्थ है। स्वाङ्गवाची पृष्ठ शब्द के उपपद रहते भी इसी प्रकार से तीन रूप होते हैं—] (१) पृष्ठतः कृत्य, (२) पृष्ठतः कृत्वा, (३) पृष्ठतः कारं गतः। [पीछे करके चला गया। भू के साथ भी तीनों प्रत्यय होने पर तीनों रूप होते हैं—] (१) पृष्ठतो भूय, (२) पृष्ठतो भूत्वा, (३) पृष्ठतो भावम् [पीछे होकर चला गया।]

स्वाङ्गवाची रहने पर—इसका क्या फल है? सर्वतः कृत्वा गतः। [सब ओर से करके चला गया। यहाँ स्वाङ्गवाची न होने से प्रत्यय नहीं होते हैं।] तस्प्रत्ययान्त रहे—इसके ग्रहण का क्या लाभ? मुखीकृत्य गतः [यहाँ अमुखं मुखं कृत्वा गतः—इस प्रकार अभूततद्भाव में च्वि प्रत्यय हुआ है। तस् प्रत्यय नहीं है। अतः इससे क्त्वा-णमुल् नहीं होते हैं। इसी प्रकार मुखीभूय [सामने होकर। यहाँ भी नहीं होते हैं]। प्रत्यय रहने पर—इसके ग्रहण का क्या लाभ है? मुखे तस्यति [—इस विग्रह में मुखे उपपद ✓तस् धातु से क्विप् प्रत्यय और उसका सर्वापहारी लोप होने पर मुखतस्, रुत्वविसर्ग—] मुखतः, मुखतः कृत्वा गतः [मुख में दुःखी होने वाला बनाकर चला गया। यहाँ तस्प्रत्यय नहीं, अपितु धातु है। अतः इससे क्त्वा-णमुल् न होकर सामान्य सूत्र से पूर्वकाल अर्थ में क्त्वा होता है]॥ ६१॥

**११९७. नाधार्थप्रत्यये च्व्यर्थे ॥ ६२ ॥ ( ३३८४ )**

**नार्थो धार्थश्च प्रत्ययो यस्मात्स एवमुच्यते । नाधार्थप्रत्यये शब्दे च्व्यर्थ उपपदे कृभ्वोर्धात्वोः क्त्वाणमुलौ प्रत्ययौ भवतः । अनाना नाना कृत्वा गतः नानाकृत्यगतः, नाना कृत्वा गतः, नानाकारं गतः । विनाकृत्यगतः, विना कृत्वा गतः, विनाकारं गतः । नानाभूय गतः, नाना भूत्वा गतः, नानाभावं गतः । विनाभूय गतः, विना भूत्वा गतः, विनाभावं गतः । द्विधाकृत्य गतः, द्विधा कृत्वा गतः द्विधाकारं गतः । द्विधाभूय गतः, द्विधा**

**न्यासः**

**नाधार्थप्रत्यये च्व्यर्थे ॥ नार्थो धार्थश्चेति** । नाप्रत्ययसहचरितोऽर्थो ना इत्युच्यते, धाप्रत्ययसहचरितश्च धा इति । नाऽर्थो यस्य प्रत्ययस्य स नार्थः, धाऽर्थो यस्य प्रत्ययस्य स धार्थ इति । **द्विधाकृत्येति** । 'संख्याया विधार्थे धा' । **द्वैधं कृत्वेति** । 'द्वित्र्योश्च धमुञ्' इति धमुञ् । **द्वेधाकृत्येति** । 'एधाच्च' इत्येधाच् ।

**हिरुक् कृत्वा, पृथक् कृत्वेति** । असति प्रत्ययग्रहणे हिरुक्पृथक्शब्दयोरसहार्थत्वात् नार्थत्वमस्तीति तयोरप्युपपदयोः क्त्वाणमुलौ स्याताम् । पूर्वसूत्रादेव प्रत्ययग्रहणानुवृत्त्यासिद्धे पुनरिह प्रत्ययग्रहणं सुखप्रतिपत्त्यर्थम् । पूर्वकं हि प्रत्ययग्रहणं समासैकदेशत्वाद् यत्नानुवृत्तं स्यात् । **नाना कृत्वा काष्ठानि गत इति** । च्व्यर्थोऽत्र नास्ति; प्रकृत्यन्यावस्थाया अविवक्षितत्वात् । **धार्थमर्थग्रहणमिति** । धाप्रत्ययोऽर्थः प्रयोजनं यस्य तत् तथोक्तः । धार्था हि प्रत्यया बहवः, तत्रासत्यर्थग्रहणे धाप्रत्ययस्यैव ग्रहणं स्यात्, नान्येषां तदर्थानाम् । अर्थग्रहणे तु सति तेषामपि ग्रहणं भवति । अथ नार्थमप्यर्थग्रहणं कस्मान्न भवति ? इत्याह–**ना पुनरेक एवेति** । अर्थग्रहणं हि तत्र क्रियते

**पदमञ्जरी**

**नाधार्थप्रत्यये च्व्यर्थे ॥ नार्थो धार्थश्चेति** । नाधासहचरितोऽर्थो नाधाशब्दाभ्यामुक्तः, नार्थो यस्य स नार्थः, नार्थार्थ इत्यर्थः । एतेन धार्थो व्याख्यातः । **प्रत्ययो यस्मादिति** । यदि पञ्चभ्यां विग्रहः क्रियते, ततः प्रकृतेरुपलक्षणं नाधार्थग्रहणं स्यादिति सम्प्रत्यतदन्तत्वेऽपि प्रकृतिमात्रे प्रसङ्गः ? न प्रसङ्गः, एवं हि विनञ्सङ्ख्यास्विति वक्तव्यं स्यात्, षष्ठ्या विग्रहः कर्त्तव्यः––नाधार्थः प्रत्ययो यस्य समुदायस्यावयव इति । ल्यब्लोपे वा पञ्चमी व्याख्येया––यं समुदायमुद्दिश्य नाधार्थः प्रत्ययो विधीयत इति । **विनाकृत्य नानाकृत्येति** । 'विनञ्भ्यां नानाञौ नसह' इति नानाञौ । **द्विधाकृत्येति** । 'सङ्ख्याया विधार्थे धा' । **द्वैधंकृत्येति** । 'द्वित्र्योश्च धमुञ्' । हिरुक्पृथक्शब्दौ विनार्थे ।

**नाना कृत्वा काष्ठानि गत इति** । पूर्वमेव नाना सन्ति काष्ठान्यन्यत्र कृत्वा गत इत्यर्थः । **धार्थमर्थग्रहण-**

**भावबोधिनी**

ना-अर्थवाला और धा-अर्थवाला प्रत्यय जिससे होता है वह नाधार्थप्रत्यय कहा जाता है । च्व्यर्थ में वर्तमान, ना—अर्थवाले प्रत्यययुक्त और धा—अर्थवाले प्रत्यययुक्त शब्द उपपद रहते कृ और भू धातुओं से क्त्वा तथा णमुल् दोनों प्रत्यय होते हैं । [ वि से ना और नञ् से नाञ् प्रत्यय होते हैं––इत्यर्थक "विनञ्भ्यां नानाञौ नसह" ५।२।२७ से प्रत्यय करके 'विना' और 'नाना' शब्द बनते हैं । ] उदा०—अनाना नाना कृत्वा गतः—[ इस विग्रह में ] (१) नानाकृत्य गतः, (२) नाना कृत्वा गतः, (३) नानाकारं गतः । [ जो अनेक नहीं था उसे अनेक बनाकर चला गया । ] (१) विनाकृत्य गतः, (२) विना कृत्वा गतः, (३) विनाकारं गतः । [ अरहित रहित होकर चला गया । नाना को उपपद मान कर भी तीन रूप होते हैं । अनाना नाना भूत्वा गतः––यह विग्रह है ] (१) नानाभूय, (२) नानाभूत्वा, (३) नानाभावं गतः [ जो अनेक नहीं था वह अनेक होकर चला गया––यह अर्थ है । विना के साथ भी भू से तीन प्रत्ययों में तीन रूप होते हैं ]––(१) विनाभूय, (२) विना भूत्वा (३) विनाभावं गतः । [ अरहित रहित होकर चला गया । ] [ अब धाप्रत्यय के उदाहरण दे रहे हैं । अद्विधा द्विधा कृत्वा गतः—इस विग्रह में द्विधा उपपद कृ धातु से क्त्वा = ल्यप्, क्त्वा और णमुल् तीन प्रत्ययों के तीन उदाहरण होते हैं—] (१) द्विधा कृत्य, (२) द्विधा कृत्वा;

**भूत्वा गतः, द्विधाभावं गतः। द्वैधंकृत्य गतः, द्वैधं कृत्वा गतः, द्वैधंकारं गतः। द्वैधंभूय गतः, द्वैधं भूत्वा गतः, द्वैधं भावं गतः।**

**प्रत्ययग्रहणं किम् ? हिरुक् कृत्वा। पृथक् कृत्वा। च्व्यर्थ इति किम् ? नाना कृत्वा काष्ठानि गतः। धार्थमर्थग्रहणम्, ना पुनरेक एव – 'विनञ्भ्यां नानाञौ' (५.२.२७) इति॥**

**११९६. तूष्णीमि भुवः॥ ६३॥ (३३८९)**

**न्यासः**

यत्र बहवो ग्राह्याः सम्भवन्ति, नाप्रत्ययस्त्वेक एव, तस्य चार्थग्रहणमन्तरेण सिध्यतीति न तदर्थमर्थग्रहणम्। ननु च धमुञादीनामपि स्थानिवद्भावादेव धाग्रहणेन ग्रहणं भविष्यति, अतो धार्थमप्यर्थग्रहणमयुक्तम् ? नैष दोषः; अधादेशोऽपि धार्थप्रत्ययोऽस्ति, 'धमुञन्तात् स्वार्थे डदर्शनम्' इति वचनात्। तस्माद्धार्थमर्थग्रहणं कर्त्तव्यम्।

वयं तु ब्रूमः—नार्थमप्यर्थग्रहणं कर्त्तव्यमेव। तथा हि—द्वौ नाप्रत्ययौ; एको निरनुबन्धकः, द्वितीयः सानुबन्धकः। तत्रासत्यर्थग्रहणे 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति नाप्रत्ययस्यैव ग्रहणं स्यात्, न सानुबन्धकस्य नाञः। अर्थग्रहणे तु सति तस्यापि ग्रहणं भवति॥ ६२॥

**तूष्णीमि भुवः॥** ननु च स्वाङ्गे तस्प्रत्यये 'कृभ्वोः' इत्यतो भूग्रहणमनुवर्त्तत एव, तत् किमर्थं भुव

**पदमञ्जरी**

**मिति।** बहवो हि धार्थाः प्रत्ययाः, तत्रासत्यर्थग्रहणे प्रत्ययस्यैव ग्रहणं स्यात्, नान्येषाम्; तदर्थानामर्थग्रहणे तु तेषामपि भवति। यश्चाधादेशो धार्थः 'धमुञन्तात्स्वार्थे डदर्शनम्' इति तदर्थमर्थग्रहणम्—द्वैधकृत्य द्वैधकारं द्वैधभूय द्वैधभावमिति। धमुञादीनां तु स्थानिवद्भावादेव सिद्धं तद्विधौ ध इत्यधिकारेणादेशपक्षस्याश्रयणात्। अथ नार्थमप्यर्थग्रहणं कस्मान्न भवतीत्यत आह—**ना पुनरेक एवेति।** ननु च नाप्रत्ययावपि द्वौ भवतः—निरनुबन्धकः, सानुबन्धकश्चेति, तत्रासत्यर्थग्रहणे निरनुबन्धकस्यैव ग्रहणं स्यात्, नेतरस्य ? एवं मन्यते—तन्त्रावृत्त्येकशेषाणामन्यतमस्याश्रयणात्तस्यापि भविष्यति॥ ६२॥ ६३॥

**भावबोधिनी**

द्विधाकारं गतः। [ जो दो प्रकार का नहीं है उसे दो प्रकार का बनाकर चला गया। भू के साथ भी ३ तीन रूप होते हैं—] (१) द्विधा भूय, (२) द्विधा भूत्वा, (३) द्विधाभावम् गतः। [ जो दो प्रकार का नहीं था वह दो प्रकार का होकर चला गया ]। द्विधा शब्द में "संख्याया विधार्थे धा" ५।३।४२ से धा प्रत्यय होता है। और "द्वित्र्योश्च धमुञ्" ५।३।४३ से द्वि और त्रि से धमुञ् = धम् प्रत्यय भी होता है। ञित् होने से आदिवृद्धि हो जाती है—"तद्धितेष्वचामादेः" ७।२।११३। अब उसी के उदाहरण हैं—] (१) द्वैधं कृत्य, (२) द्वैधं कृत्वा, (३) द्वैधंकारं गतः [ जो दो प्रकार का नहीं, उसे दो प्रकार का बनाकर चला गया। भू के साथ भी तीन रूप होते हैं—] (१) द्वैधंभूय, (२) द्वैधं भूत्वा, (२) द्वैधंभावं गतः [ जो दो प्रकार का नहीं वह दो प्रकार का होकर चला गया ]।

प्रत्ययग्रहण का क्या प्रयोजन है ? हिरुक् कृत्वा, पृथक् कृत्वा। [ हिरुक् और पृथक् शब्दों का भी वही अर्थ है जो विना का है। परन्तु नार्थक-प्रत्ययान्त न होने से ये प्रत्यय नहीं होते हैं। ] च्वि का अर्थ—अभूत-तद्भाव रहने पर—इसका क्या फल है ? नाना कृत्वा काष्ठानि गतः। [ यहाँ अनाना नाना कृत्वा—ऐसा अभूत-तद्भाव अर्थ नहीं प्रतीत होता है। पहले से ही नाना = अनेक काष्ठ हैं, उन्हें अन्यत्र करके चला गया—ऐसा अर्थ है। ] सूत्र में अर्थ का ग्रहण 'धा' के लिये है क्योंकि [ धा के अर्थ में 'धा' और 'धमुञ्' आदि प्रत्यय होते हैं किन्तु ] 'ना' तो एक ही प्रत्यय है—"विनञ्भ्यां नानाञौ नसह" ५।२।२७। [ अतः इसके लिये अर्थ-ग्रहण की कोई उपयोगिता नहीं है। ]॥ ६२॥

तूष्णीम् शब्द उपपद रहते भू धातु से क्त्वा और णमुल् प्रत्यय होते हैं। उदा०—(१) तूष्णींभूय, (२) तूष्णीं भूत्वा, (३) तूष्णीं भावम् [ गतः। चुप होकर चला गया। यहाँ भी क्त्वा में विकल्प से समासपक्ष में ल्यप् और पक्ष में

तूष्णींशब्द उपपदे भवतेर्धातोः क्त्वाणमुलौ प्रत्ययौ भवतः। तूष्णींभूय, तूष्णीं भूत्वा, तूष्णींभावम्। भूग्रहणं कृञो निवृत्त्यर्थम्॥

११९७. अन्वच्यानुलोम्ये ॥ ६४ ॥ ( ३३८६ )

अन्वक्शब्द उपपदे भवतेर्धातोरानुलोम्ये [ गम्यमाने ] क्त्वाणमुलौ भवतः। आनुलोम्यम् = अनुलोमता, अनुकूलत्वम्, परचित्तानुविधानम्। अन्वग्भूयास्ते। अन्वग्भूत्वाऽऽस्ते। अन्वग्भावमास्ते।

आनुलोम्य इति किम्? अन्वग्भूत्वा तिष्ठति॥

११९८. शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ॥ ६५ ॥ ( ३१७७ )

न्यासः

इतीहोच्यते? इत्याह—भूग्रहणमित्यादि। पूर्वं हि भूग्रहणं कृञा सम्बद्धम्; अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्; अतस्तन्निवृत्त्यर्थं पुनरिह भूग्रहणम्॥ ६३॥

अन्वच्यानुलोम्ये॥ अन्वचीति निर्देशस्तिर्यचीत्यनेन व्याख्यातः। अन्वग्भूयेति। पूर्ववत् क्विनि कृते तदन्तस्य जश्त्वे कुत्वे च रूपम्। अन्वग्भूत्वेति। अनुचरो भूत्वा तिष्ठतीत्यर्थः॥ ६४॥

शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्॥ ननु च 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इत्येवं शकादिषूपपदेषु तुमुन् सिद्धः, तत् किमर्थोऽयमारम्भ इत्याह—अक्रियार्थोऽयमारम्भ इति। अक्रियार्थेष्वपि

पदमञ्जरी

अन्वच्यानुलोम्ये॥ अन्वग्भूयेति। अग्रतः पार्श्वतः पृष्ठतो वाऽनुकूलो भूत्वाऽऽस्ते इत्यर्थः। अन्वग्भूत्वेति। पृष्ठतो भूत्वेत्यर्थः। अनुकूलोऽननुकूल इति शब्देन न स्पृश्यते॥ ६४॥

शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्॥ अत्रानन्तरेणास्तिशब्देनैवार्थशब्दः सम्बद्ध्यते, शकधृषज्ञानां घटार्हयोश्च पृथगुपादानात्, तदाह—शकादिषूपपदेषु अस्त्यर्थेषु वेति। तुमुन् प्रत्ययो भवतीति। भावे। अक्रियार्थोपपदार्थं आरम्भ इति। 'क्रियार्थोपपदे तुमुन्ण्वुलौ' इत्यादिनैव सिद्धत्वात्। तत्र तावत्

भावबोधिनी

क्त्वा के दो रूप तथा णमुल् का तीसरा रूप होता है। प्रक्रिया पूर्व के उदाहरणों के समान ही है। ] 'भू' का ग्रहण कृञ् की निवृत्ति के लिये है। [ अर्थात् "स्वाङ्गे तस्प्रत्यये कृभ्वोः" ३।४।६१ से भू के साथ कृ की भी अनुवृत्ति होने लगती। कृ से प्रत्यय न हों—इसी के लिये 'भू' का ग्रहण है ]॥ ६३॥

आनुलोम्य = अनुकूलता प्रतीयमान रहने पर, अन्वक् शब्द उपपद रहते भू धातु से क्त्वा और णमुल् प्रत्यय होते हैं। आनुलोम्य = अनुलोमता, अनुकूल होना, दूसरे के मन के अनुसार काम करना। उदा०—(१) अन्वग्भूय, (२) अन्वग्भूत्वा, (३) अन्वग्भावम् आस्ते। [ अनुकूल होकर रहता है। प्रक्रिया पूर्ववत् ही है। वैकल्पिक समासपक्ष में क्त्वा का ल्यप्, समासाभाव में क्त्वा और णमुल् दोनों होने से तीन रूप बनते हैं। ] आनुलोम्य में—इसका क्या प्रयोजन है? अन्वग् भूत्वा तिष्ठति। [ अनुचर होकर बैठता है या उलटा होकर बैठता है—यहाँ नहीं होता है। सामान्य क्त्वा प्रत्यय ही होता है ]॥ ६४॥

शक् आदि और अस्त्यर्थक धातुयें उपपद रहने पर सभी धातुओं से तुमुन् प्रत्यय होता है। अक्रियार्थक [ पद ] उपपद रहने पर तुमुन् प्रत्यय के विधान के लिये यह सूत्र है। अर्थात् शक आदि से प्रतीयमान क्रियायें क्रियार्थक नहीं होती हैं तो भी तुमुन् करने के लिये यह सूत्र है। अतः इससे क्रियार्थक क्रिया की प्रतीति नहीं होती है। ] उदा०—(१) शक्—शक्नोति भोक्तुम्। [ भोजन करने में प्रवीण = चतुर—यह अर्थ है। √भुज् + तुमुन् = तुम्, उपधागुण, ज् का कुत्वादि—भोक्तुम्। ] (२) धृष्—धृष्णाति भोक्तुम्। [ भोजन करने में प्रवीण। ] (३) ज्ञा—जानाति भोक्तुम्।

**शकादिषूपपदेषु अस्त्यर्थेषु वा धातुमात्रात् तुमुन् प्रत्ययो भवति। अक्रियार्थोपपदार्थोऽयमारम्भः। शक्नोति भोक्तुम्। धृष्णोति भोक्तुम्। जानाति भोक्तुम्। ग्लायति भोक्तुम्। घटते भोक्तुम्। आरभते भोक्तुम्। लभते भोक्तुम्। प्रक्रमते भोक्तुम्। [ उत्- ] सहते भोक्तुम्। अर्हति भोक्तुम्। अस्त्यर्थेषु खल्वपि—अस्ति भोक्तुम्। भवति भोक्तुम्। विद्यते भोक्तुम्॥**

## ११९९. पर्याप्तिवचनेष्वलमर्थेषु॥ ६६॥ (३१७८)

**पर्याप्तिः=अन्यूनता। पर्याप्तिवचनेष्वलमर्थेषूपपदेषु धातोस्तुमुन् प्रत्ययो भवति। पर्याप्तो भोक्तुम्। अलं**

**न्यासः**

शकादिषु तुमुन् यथा स्यादित्येवमर्थोऽयमारम्भः। न हि शक्नोति भोक्तुमित्यादौ क्रियार्थोपपदं गम्यते। किं तर्हि? अर्थान्तरम्, अन्यदेव। इह **तावच्छक्नोति भोक्तुम्, उत्सहते भोक्तुम्, जानाति भोक्तुमिति** प्रावीण्यं गम्यते। **ग्लायति भोक्तुमिति** तदशक्तता गम्यते, **घटयति भोक्तुम्, अर्हति भोक्तुमिति** तद्योग्यतामात्रम्। **आरभते भोक्तुम्, प्रक्रमते भोक्तुमिति** भुजेरेवाद्यावस्थानक्रियान्तरम्। **लभते भोक्तुमिति**। अप्रत्याख्यानम्। **अस्ति भोक्तुमित्यादौ** सम्भवमात्रम्॥ ६५॥

**पर्याप्तिवचनेष्वलमर्थेषु॥ पर्याप्तिरन्यूनतेति**। परिपूर्णतेत्यर्थः। **अलमर्थविशिष्टेष्विति**। यद्यपि भूषणादयोऽलमर्थाः, तथापि पर्याप्तिवचने सामर्थ्यमेव सम्भवतीति तदेव गृह्यते। प्रयोगदर्शनार्थबोधेन व्याख्यानतो वा। तेनालमर्थविशिष्टेष्वित्ययमर्थो भवति। यद्येवम्, सामर्थ्येष्वित्येवं कस्मान्नोक्तम्? नैवं शक्यम्; एवं ह्युच्यमाने सामर्थ्येन भुङ्क्ते, बलेन भुङ्क्त इत्यादावपि स्यात्। यथान्यासे तु न दोषः; न ह्यत्र पर्याप्तिर्दृश्यते। किं तर्हि? सामर्थ्यमात्रम्।

**पदमञ्जरी**

**शक्नोति भोक्तुम्, धृष्णोति, जानातीति** भोजने प्रावीण्यं गम्यते। **ग्लायति भोक्तुमिति**। तत्राशक्तिः। **घटतेऽर्हतीति** योग्यता। **आरभते प्रक्रमत इति**। भुजेरेवाद्यावस्था। **लभते भोक्तुमिति**। अप्रत्याख्यातं भोजनं लभते इत्यर्थः। **उत्सहते भोक्तुमिति**। भोजने व्याप्रियत इत्यर्थः। **अस्ति भोक्तुमिति**। भोजनमस्तीत्यर्थः। प्रवीणो भोक्तुम्, कुशलो भोक्तुम्, पटुर्भोक्तुमित्यादौ पर्याप्तिविवक्षायामुत्तरसूत्रेण तुमुन् भवति॥ ६५॥

**पर्याप्तिवचनेष्वलमर्थेषु॥ पर्याप्तिः**=अन्यूनता, परिपूर्णतेत्यर्थः। अन्यूनता च द्विधा सम्भवति—भोजनस्य प्रभूततया वा, भोक्तुः समर्थतया वा, अतः सामर्थ्येनालमर्थेन विशिनष्टि। **अलमर्थेषु पर्याप्तिवचनेष्विति। पर्याप्तो भोक्तुमिति**। भोजने न न्यूनीभवति समर्थ इत्यर्थः। **पर्याप्तमिति**। प्रभूतमित्यर्थः।

**भावबोधिनी**

भोजन करने में कुशल। ] (४) ग्लै—ग्लायति भोक्तुम्। [ भोजन करने में असमर्थ। ] (५) घट—भोक्तुं घटते [ भोजन करने में योग्य। ] (६) रम्—भोक्तुम् आरभते [ भोजन करना आरम्भ करता है। ] (७) लभ्—लभते भोक्तुम् [ भोजन प्राप्त करता है। ] (८) क्रम्—प्रक्रमते भोक्तुम् [ भोजन आरम्भ करता है। ] (९) सह—उत्सहते भोक्तुम् [ भोजन करने में प्रवृत्त होता है। ] (१०) अर्ह—अर्हति भोक्तुम् [ भोजन में योग्य=कुशल। ] (११) अस्ति—अर्थवाली धातुओं के उपपद रहते भी—अस्ति भोक्तुम्, भवति भोक्तुम्, विद्यते भोक्तुम्, [ भोजन है, यही तीनों वाक्यों का अर्थ है। ] अस्त्यर्थक धातुओं के योग में केवल अस्तित्व की प्रतीति होती है। ]॥ ६५॥

पर्याप्ति=अन्यूनता=परिपूर्ण होना। अलम्=सामर्थ्य अर्थवाले पर्याप्ति [=परिपूर्णता ]—वाचक शब्दों के उपपद रहने पर सभी धातुओं से तुमुन् प्रत्यय होता है। उदा०—पर्याप्तः भोक्तुम् [ खाने में समर्थ ]। अलं भोक्तुम् [ खाने में समर्थ ]। भोक्तुं पारयति। [ भोजन करने में समर्थ, भोजन कर सकता है। ] पर्याप्ति=अन्यूनतावाचक उपपद रहने पर—इसका क्या फल है? अलं कृत्वा। [ मत करो। यहाँ निषेध अर्थ है। ] अलम् अर्थवाले—इसका क्या फल है?

**भोक्तुम्** । भोक्तुं पारयति । **पर्याप्तिवचनेष्विति किम्** ? **अलं कृत्वा** । **अलमर्थेष्विति किम्** ? **पर्याप्तं भुङ्क्ते** ।

**पूर्वसूत्रे शकिग्रहणमनलमर्थम् – शक्यमेवं कर्तुमिति ॥**

## १२००. कर्त्तरि कृत् ॥ ६७ ॥ ( २८३२ )

**न्यासः**

**अलं कृत्वेति** । प्रतिषेधवचनोऽत्रालंशब्दः । 'अलंखल्वोः' इत्यादिना क्त्वा । **पर्याप्तं भुङ्क्ते इति** नात्र सामर्थ्यं विवक्षितम्, किं तर्हि ? पर्याप्तिमात्रम् । **अन्यूनं भुङ्क्ते इति** । प्रभूतं भुङ्क्त इत्यर्थः ।

यदि पर्याप्तिवचनेष्वलमर्थेषु तुमुन् विधीयते, अनेनैव सिद्धत्वात् पूर्वसूत्रे शकिग्रहणं किमर्थम् ? इत्यत आह—**पूर्वसूत्र इत्यादि** । **शक्यमेव कर्तुमिति** । नात्रालमर्थो विवक्षितः, किं तर्हि ? सौकर्यम् । सुकरमेतदित्यर्थः । यथाविध्यस्य सम्भवमात्रं विवक्षितम्, सम्भवत्येवंविधस्य करणमित्यर्थः ॥ ६६ ॥

**कर्त्तरि कृत्** ॥ किमर्थमिदम् ? कर्त्तरि तृजादयो यथा स्युः । क्व तर्हि स्युः ? अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे । ननु च स्वार्थे यत्र प्रत्ययमिच्छति तत्र भावग्रहणं करोति, यथा—घञादिविधौ भाव इति, न चैते घञादयः स्वार्थे भवन्ति, किं तर्हि ? तस्य धर्मे सिद्धताख्ये; तथा लकारादिविधौ 'लः कर्मणि च भावे चाकर्मकेभ्यः' इत्यत्र सूत्रे लकारा अपि नैव स्वार्थे विधीयन्ते, किं तर्हि ? तस्य धर्मे साध्यताख्ये ? यद्यपि घञादीनां

**पदमञ्जरी**

**शक्यमेवं कर्त्तुमिति** । सुकरमेतद् इत्यर्थः । सम्भवमात्रं वाऽत्र विवक्षितम्—सम्भवत्येवंविधस्य करणमिति ॥ ६६ ॥

**कर्त्तरि कृत्** ॥ किमर्थमिदमुच्यते ? कर्त्तरि कृद्वचनमनादेशे स्वार्थविज्ञानात् । यत्र वचनेनार्थो निर्दिश्यते तत्र प्रत्यासत्त्या प्रकृत्यर्थ एव प्रत्ययो भवति, तद्यथा—'गुप्तिज्किद्भ्यः सन्', 'यावादिभ्यः कन्' इति, एवमिमे कृतः स्वार्थे स्युः, स्वार्थे मा भूवन् कर्त्तरि स्युरिति । ननु च यमिच्छति स्वार्थे, आह तं भावे घञ् भवतीति ? तन्नियमार्थं भविष्यति—घञेव भावे नान्यः कृदिति । असति ह्येतस्मिन्सूत्रे घञित्येतावत्सूत्रं कर्त्तव्यम्—धातोर्घञ् भवतीति, तत्रानिर्दिष्टार्थत्वाद्भाव एव घञ् भविष्यतीति; ततः 'पदरुजविश' इति द्वितीयं सूत्रं कर्त्तव्यम्, ततश्च 'भावे' इति न कर्त्तव्यम्, क्रियमाणं तु नियमार्थं भविष्यति--घञेव भावे नान्यः कृदिति, ततश्चान्यः कृद्धात्वर्थाक्षिप्ते कर्त्तरि भविष्यति । स्यादेतत्–कर्मादीनामपि धात्वर्थेनाक्षेपात्तेष्वपि कृतः स्युरिति ? न; 'धः कर्मणि ष्ट्रन्', 'करणाधिकरणयोर्ल्युट्', 'दाशगोघ्नौ सम्प्रदाने', 'भीमादयोऽपादाने' इत्यत्र 'ष्ट्रनेव कर्मणि नान्यः' इत्यादिको नियमो विज्ञास्यते । यद्येकं कर्मादि नियतं प्रत्ययास्त्वनियता इति कारकान्तरेऽपि ष्ट्रनादयः स्युः ?

**भावबोधिनी**

पर्याप्तं भुङ्क्ते । बहुत खाता है । यहाँ 'सामर्थ्य' की प्रतीति नहीं है अतः तुमुन् नहीं होता है । ] पूर्ववर्त्ती सूत्र में शक धातु का ग्रहण अनलम् [ असमर्थता ] अर्थ के लिये है—शक्यम् एवं कर्तुम् [ यह करना सरल है ] ।

विमर्श--पर्याप्ति = अन्यूनता = परिपूर्णता । यह दो प्रकार से होती है । (१) भोजन का प्रचुरमात्रा में होना, (२) खाने वाले का सामर्थ्य होना । सूत्र में अलमर्थवाची का प्रयोग होने से सामर्थ्य की ही प्रतीति होती है । अतः उदाहरण-वाक्यों में भोजनकर्ता की समर्थता की ही प्रतीति होती है ॥ ६६ ॥

कृत्संज्ञावाले प्रत्यय कर्ता कारक अर्थ में होते हैं । कृत् प्रत्ययविधायक वाक्य [ सूत्रों ] का यह शेष = पूरक है । उन [ प्रत्ययविधायक सूत्रों ] में जिनमें अर्थ का निर्देश नहीं है, उनमें इस सूत्र की उपस्थिति होती है, क्योंकि उनमें अर्थ की आकाङ्क्षा होती है । ल्युट् आदि प्रत्यय के विधायक सूत्रों में उपस्थिति नहीं होती है, क्योंकि साक्षात् अर्थनिर्देश हो जाने पर वे निराकांक्ष हो जाते हैं [ उन्हें अर्थ की आकाङ्क्षा नहीं रहती है ] । उदा०—कारकः [ √कृ + ण्वुल् = वु = अक, "अचो ञ्णिति" ७।२।११५ सूत्र से ऋ की वृद्धि और रपर करने पर कार् + अक—कारकः = करने वाला । ]

कृत्संज्ञकाः प्रत्ययाः कर्त्तरि कारके भवन्ति। कृदुत्पत्तिवाक्यानामयं शेषः। तत्र येष्वर्थनिर्देशो नास्ति

**न्यासः**

लकारानाञ्च भावे विधानम्, तथापि शब्दशक्तिस्वाभाव्यादेव विषयविभागो लभ्यते। घञादीनां हि धात्वर्थस्य सिद्धतामेवाभिधातुं सामर्थ्यम्, लकाराणां साध्यतामेव। तदेवं यदनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति तस्मात् तृजादयोऽपि तत्रैव भवेयुः, अतः कर्तर्येव ते यथा स्युरित्येवमर्थमिदमारभ्यते।

अत्र च द्वैधम्—कृदुत्पत्तिवाक्यानामयं शेषो वा स्याद्—ण्वुल्तृचौ कर्त्तरि, नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः कर्त्तरीति? अर्थादेशो वा? निरपेक्षैः स्वैः स्वैर्विधायकैर्वाक्यैर्विहितानां कृतां पश्चादनेनार्थ आदिश्येत—ये न लक्षणान्तरैः कृतो विहितास्ते कर्त्तरि वाच्ये भवन्तीति। तत्र यदि द्वितीयः पक्ष आश्रीयेत ततो यथा तृजादीनामनेनार्थ आख्यायते, तथा ख्युन्नादीनामपि; विशेषानुपादानात्, ततस्तेऽपि कर्त्तरि स्युः। स्वेषु विधिवाक्येषु करणादीनामुपादानात् करणादिष्वपि। यद्यप्येकस्य प्रत्ययस्य कर्तरि करणे च युगपद्वृत्तिर्न सम्भवति, तथापि वचनसामर्थ्यात् पर्यायेण कर्तरि करणे च स्युरिति। तस्माद् दुष्टोऽयं पक्ष इति प्रथमं

**पदमञ्जरी**

नैष दोषः; एकमिदं वाक्यम्—धः कर्मणि ष्ट्रनिति, तेन च कर्मणि विधीयमानः कथं कारकान्तरेऽपि स्यात्? द्वितीयोऽपि वा नियमो विज्ञास्यते—कर्मण्येव ष्ट्रनिति, एवं सर्वत्र। य इदानीमतोऽन्यः प्रत्ययः शेषः सोऽन्तरेणापि वचनं कर्त्तर्येव भविष्यति। 'कर्त्तरि भुवः खिष्णुच्खुकञौ' 'कर्त्तरि चर्षिदेवतयोः' इत्युभयत्रापि करणनिवृत्त्यर्था कर्तृश्रुतिर्विध्यर्थैवेति खिष्णुजादिषु कर्तृनियमो न भविष्यति। तदेव तर्हि प्रयोजनम्—स्वार्थे मा भूवन्निति? ननु चोक्तम्—'भावे इति नियमो विज्ञास्यते' इति? स्वार्थादन्यः स भावो धात्वर्थस्य सिद्धता नाम। शुद्धे स्वार्थे कृतः स्युः, लः कर्मणि च भावे चेति। अयं तर्हि नियमो भविष्यति—ल एव भावे इति? नायं नियमः शक्यो विज्ञातुम्, कर्तृकर्मणोर्निर्देशेन निर्दिष्टार्थत्वात् लकाराः स्वार्थे न स्युः, 'अकर्मकेभ्यः' इति च वक्ष्यामीत्येवमर्थमेतत् स्यात्। अतः सुष्ठूक्तम्—कर्त्तरि कृद्वचनमनादेशे स्वार्थविज्ञानादिति।

अत्र च द्वैधम्—एतद्वाक्यनिरपेक्षैः स्वैर्विधायकैर्वाक्यैर्विहितानां कृतां पश्चादेनेनार्थ आदिश्येत? कृदुत्पत्तिवाक्यानां वायं शेषः स्यात्—ण्वुल्तृचौ कर्त्तरि नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः कर्त्तरीति? तत्राद्ये पक्षे यथानेन तृजादीनामर्थ आदिश्यते, तथा ख्युनादीनामप्यादिश्येत; विशेषानुपादानात्। ततश्चैतेऽप्यनेन कर्त्तरि च स्युः, स्वेषु स्वेषु विधिवाक्येषु करणादीनामप्युपादानात् करणादिषु च। ननु च ख्युनादिषु करणादिरर्थो

**भावबोधिनी**

कर्त्ता [ √कृ+तृच्=तृ, ऋ का गुण रपर कर्तृ, प्रथमा एकवचन में सु प्रत्यय, ऋ का अनङ् आदेश, उपधादीर्घ—कर्तान्+सु। सुलोप और नलोप—कर्ता। त् का वैकल्पिक द्वित्व—कर्त्ता। ण्वुल् और तृच् "ण्वुल्तृचौ" ३।१।१३३ से होते हैं। ] नन्दनः [आनन्दित करने वाला। नन्द्+ल्यु="नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" ३।१।१३४ सूत्र से; "युवोरनाकौ" ७।१।१ से यु का अन और वु का अक होता है—नन्द्+अन ] ग्राही [ पकड़ने वाला, ग्रहण करने वाला। √ग्रह्+णिन्=इन् उपधावृद्धि, ग्राहिन्। प्रातिपदिक-संज्ञा को मानकर विभक्तिसम्बन्धी कार्य ] पचः [ पकाने वाला। "नन्दि" ३।१।१३४ से ही अच् प्रत्यय √पच्+अच्=अ। ]

विमर्श—समस्या यह है कि प्रस्तुत सूत्र का उद्देश्य क्या है? ( १ ) अपने अपने प्रत्ययों के विधायक सूत्रों द्वारा प्रत्यय का विधान हो जाने के बाद इस सूत्र से अर्थ का निर्देश किया जा रहा है अथवा ( २ ) कृत्-प्रत्यय-विधायक सूत्र वाक्यों के साथ मिलकर उनका अंश बनकर कर्ता अर्थ का ज्ञान कराया जा रहा है; जैसे—"ण्वुल्तृचौ कर्तरि", "नन्दिग्रहपचादिभ्यो ल्युणिन्यचः कर्तरि" अर्थात् ये प्रत्यय कर्ता अर्थ में होने चाहिये। इस प्रकार के दो पक्ष सम्भव हैं।

**तत्रेदमुपतिष्ठते, अर्थाकांक्षत्वात्। न ल्युन्नादिवाक्येषु, साक्षादर्थनिर्देशे सति तेषां निराकांक्षत्वात्। कारकः। कर्त्ता। नन्दनः। ग्राही। पचः॥**

**न्यासः**

पक्षमाश्रित्याह—**कृदुत्पत्तिवाक्यानामित्यादि**। अनेन तेषामस्य चैकवाक्यतामाह। यद्येवम्, ल्युन्नादिवाक्येष्वप्यनेनोपस्थातव्यम्—तेषामप्ययं शेष इति कृत्वा, ततश्चास्मिन्नपि पक्षे द्वितीये पक्षे भावी दोषः स्यात्? इत्यत आह—**तत्र येष्वित्यादि**। तत्रैव हेतुमाह—**अर्थाकाङ्क्षत्वादिति**। शेषो हि तेषां भवति यान्यपरिसमाप्तत्वादर्थमाकाङ्क्षन्ति, नान्येषाम्। अतो येषु वाक्येष्वर्थो नादिश्यते तेषामेव साकाङ्क्षत्वात् शेषोऽयं युक्तः। तृजादीनामेव विधायकानि वाक्यान्यर्थानादेशादर्थाकाङ्क्षाणि। तथा हि—'ण्वुल्तृचौ भवतः' इत्युक्तेऽर्थविशेषाकाङ्क्षा भवति—क्वेमौ भवत इति। तस्मात् तेषामेवायं शेष इति तेष्वेवोपतिष्ठते। **न ल्युन्नादिवाक्येष्विति**। **उपतिष्ठते इति**। प्रकृतेनैव सम्बन्धः। **साक्षादित्यादि**। अनुपस्थाने कारणम्। ल्युन्नादिवाक्यान्यर्थाकाङ्क्षाणि न भवन्ति, तेषु करणादीनामर्थानां साक्षान्निर्देशात्। तस्मान्न तेषामयं शेष इति न तेषूपतिष्ठते, अतो न भवत्येष दोषप्रसङ्गः॥ ६७॥

**पदमञ्जरी**

विशेषविहितत्वात् कर्त्तुश्च बाधको भविष्यति? **न**; नानावाक्यत्वात्। इह 'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय' इति अभिन्नकालत्वादेकं वाक्यं विशिष्टदानस्य प्रतिपादकमिति तक्रेण दधि बाध्यते। यदा तु पूर्वाह्णे ब्राह्मणभोजनप्रकरणे 'दधि ब्राह्मणेभ्यो दीयताम्' इत्युच्यते, अपराह्णे तु 'तक्रं कौण्डिन्याय दीयताम्' इति, न तदा बाध्यबाधकभावः। तथास्मिन्पक्षेऽपि कालभेदेन वाक्यद्वयोच्चारणाद् बाध्यबाधकभावो न लभ्यते। तस्माद् दुष्ट एवायं पक्ष इति द्वितीयं पक्षमाश्रित्याह—**कृदुत्पत्तिवाक्यानामयं शेषः स्यादिति**। प्रागुक्तो दोषस्तदवस्थ एव? तत्राह—**येष्वित्यादि**। कुत एतदित्याह—**अर्थाकाङ्क्षत्वादिति**। येषु वाक्येष्वर्थो न निर्दिश्यते तान्यर्थाकाङ्क्षाणि। तथा हि—'ण्वुल्तृचौ भवतः' इत्युक्तेऽर्थविषया आकाङ्क्षा जायते—क्वैतौ भवत इति? 'कर्तरि कृत्' इत्यस्याकाङ्क्षा भवति—कः कृत् कर्त्तरि भवतीति? अतस्तृजादिविध्यनुपस्थाने शेषशेषिणोरुभयोरप्याकाङ्क्षापूर्तये ततस्तत्रैवोपतिष्ठत इत्यर्थः। **ल्युनादिवाक्येष्विति**। उपतिष्ठत इत्यनुषङ्गः। कारणमाह—**साक्षादर्थनिर्देशे सति तेषां निराकाङ्क्षत्वादिति**। न च रक्तपटन्यायेनाकाङ्क्षोत्थापनेनोपस्थानं युज्यते; स्वत एव साकाङ्क्षे तृजादिविध्यनुपस्थानेन शेषस्यापि चरितार्थत्वात्। रक्तः पटो भवतीत्यत्र तु पटो भवतीत्यस्य निराकाङ्क्षत्वेऽपि रक्तपदार्थस्य साकाङ्क्षत्वादाकाङ्क्षोत्थापनेनान्वयः। न च विदेशस्थानां कथमेकवाक्यत्वमिति वाच्यम्; शास्त्रे विदेशस्थानामप्यवान्तरवाक्यानामाकाङ्क्षावशादेकवाक्यत्वदर्शनात्। यथा—द्वितीयेऽध्याये लुगुच्यते, तस्य चतुर्थषष्ठयोरलुगपवादः 'गोत्रेऽलुगचि', 'अलुगुत्तरपदे' इति॥ ६७॥

**भावबोधिनी**

उपर्युक्त प्रथम पक्ष ठीक नहीं है, क्योंकि जैसे यह तृच् आदि प्रत्ययों के अर्थ का आदेश करता है, उसी प्रकार ल्युन् आदि प्रत्ययों के भी अर्थ का आदेश करने लगेगा। इससे यह होगा कि ल्युन् आदि प्रत्यय अपने अपने अर्थ में तो होंगे ही, साथ में कर्ता अर्थ में भी होने लगेंगे। चूंकि अलग अलग वाक्यार्थ-बोध हो रहा है, अतः परस्पर बाध्यबाधकभाव भी नहीं माना सकता, अतः द्वितीयपक्ष—कृत्-प्रत्ययविधायकों का शेष=पूरक—यही ठीक है। फलतः जिन स्थलों पर अर्थनिर्देश नहीं है, वहां आकाङ्क्षा होने से इस सूत्र की उपस्थिति होती है। और जहां स्वतः अर्थनिर्देश है, वहां अर्थ की आकाङ्क्षा ही नहीं होती है। अतः यह सूत्र उपस्थित नहीं होता है। विशेष सूत्रद्वारा बोधित अर्थ में ही प्रत्ययों का विधान होता है। अतः 'ल्युन्' आदि प्रत्ययों से दो अर्थ प्रतीत नहीं होते हैं। इसी आशय से लिखा है—"कृदुत्पत्तिवाक्यानामयं शेषः" ॥ ६७॥

## १२०१. भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ॥ ६८ ॥ ( २८९४ )

भव्यादयः शब्दाः कर्त्तरि वा निपात्यन्ते । 'तयोरेव कृत्यक्तखलर्थाः' ( ३.४.७० ) इति भावकर्मणोः प्राप्तयोः कर्ता च वाच्यः पक्षे उच्यते । भवत्यसौ भव्यः, भव्यमनेनेति वा । गेयो माणवकः साम्नाम्, गेयानि माणवकेन सामानीति वा । प्रवचनीयो गुरुः स्वाध्यायस्य, प्रवचनीयो गुरुणा स्वाध्याय इति वा । उपस्थानीयोऽन्तेवासी गुरोः, उपस्थानीयः शिष्येण वा गुरुः । जायतेऽसौ जन्यः, जन्यमनेनेति वा । आप्लवतेऽसावाप्लाव्यः, आप्लाव्यमनेनेति वा । आपतत्यसावापात्यः । आपात्यमनेनेति वा ॥

न्यासः

**भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ॥** भव्यादिषु गेयप्रवचनीयोपस्थानीयाः सकर्मकाः । तेन तेषां कर्मणि प्राप्ते कर्तरि च निपातनम् । शेषाणामकर्मकाणां भावे कर्त्तरि च । **भव्य इति ।** 'अचो यत्', गुणः, 'धातोस्तन्निमित्तस्यैव' इत्यवादेशः । **गेय इति ।** 'ईद् यति' इतीत्वम्, गुणः । **साम्नामिति ।** कर्मणि कृद्योगलक्षणा षष्ठी । **उपस्थानीय इति ।** अनीयर् । **जन्य इति ।** 'अचो यत्' इत्यत्र 'तकिशसियतिचतिजनीनामुपसंख्यानम्' इति यत् । **आप्लाव्य इति ।** प्लवतेः 'ओरावश्यके ण्यत्', वृद्धिः, पूर्ववदावादेशः । **आपात्य इति ।** 'ऋहलोर्ण्यत्' ॥ ६८ ॥

पदमञ्जरी

**भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ॥ भव्य इति ।** 'अचो यत्', गुणः, 'वान्तो यि प्रत्यये' इति वान्तादेशः । **गेयो माणवकः साम्नामिति ।** एतेन 'कै गै शब्दे' इत्यस्येदं निपातनम्, न 'गाङ् गतौ' इत्यस्येति दर्शयति । एतच्च निपातनाल्लभ्यते । 'ईद्यति' इतीत्वम् । **जन्य इति ।** 'अचो यत्' इत्यत्र तकिशसिचतियतिजनीनामुपसङ्ख्यानम्' इति वचनाद्यत् । **आप्लाव्य इति ।** 'ओरावश्यके' । **आपात्य इति ।** 'ऋहलोर्ण्यत्' ॥ ६८ ॥

भावबोधिनी

भव्य, गेय आदि [ कृत्प्रत्ययान्त ] शब्द कर्ता अर्थ में विकल्प से निपातित होते हैं । [ कृत्यक्त और खलर्थक प्रत्यय भाव तथा कर्म में ही होते हैं । इत्यर्थक ] "तयोरेव कृत्यक्तखलर्थाः" ३।४।७० इससे भाव और कर्म अर्थों में ही प्राप्त रहने पर पक्ष में कर्ता अर्थ भी कहा जाता है अर्थात् इन शब्दों से भाव, कर्म और कर्ता—इन तीनों अर्थों की प्रतीति होती है । उदा०—(१) भव्यः—भवति असौ [ होने वाला । यहाँ कर्ता अर्थ है ] अथवा भव्यम् अनेन [ यहाँ भाव अर्थ है । √भू + यत् = य, गुण भो + य, "धातोस्तन्निमित्तस्यैव" ६।१।८० से ओ का अव् आदेश । ] ( २ ) गेयः माणवकः साम्नाम् [ सामवेद का गाने वाला लड़का । गायति—इस विग्रह में √गै धातु का आत्व करके यत् प्रत्यय होता है । "ईद्यति" ६।४।६५ से आ का ईत्व—गी + य, गुण गेयः ] अथवा गेयानि सामानि माणवकेन [ लड़के द्वारा गाने योग्य सामवेद । यहाँ कर्म अर्थ में प्रत्यय है । ] ( ३ ) प्रवचनीयः गुरुः स्वाध्यायस्य [ प्रवक्ति—इस कर्ता अर्थ में प्रपूर्वक वच् + अनीयर । वेद को कहने वाले गुरु ] अथवा 'प्रवचनीयः स्वाध्यायः गुरुणा' [ गुरु द्वारा पढ़ाये जाने वाले मन्त्र । यहाँ कर्म अर्थ में प्रत्यय है । ] ( ४ ) उपस्थानीयः अन्तेवासी गुरोः [ गुरु के समीप उपस्थित होने वाला शिष्य । उपतिष्ठते—इस कर्ता अर्थ में—उपपूर्वक स्था + अनीयर् ] अथवा उपस्थानीयः गुरुः शिष्येण । [ शिष्य द्वारा उपस्थित होने योग्य गुरु । यहाँ कर्म अर्थ है । ] ( ५ ) जन्यः । [ जायतेऽसौ—जन्म लेने वाला । यहाँ कर्ता अर्थ में जन् + यत् = य ] अथवा जन्यम् अनेन । इसके द्वारा पैदा होने योग्य—यहाँ कर्म अर्थ है । ] ( ६ ) आप्लाव्यः—आप्लवतेऽसौ [ कूदकर जाने वाला । यहाँ कर्ता अर्थ में आङ्पूर्वक 'प्लुङ्' धातु से "ओरावश्यके" ३।१।१२५ से ण्यत्, वृद्धि आ + प्लौ + य, "धातोस्तन्निमित्तस्यैव" ६।१।८० से आव् आदेश—आप्लाव्यः ] अथवा आप्लाव्यम् अनेन [ कर्म अर्थ है । इसके द्वारा कूदने योग्य ] ( ७ ) आपात्यः—आपतति असौ [ कर्ता अर्थ है । गिरने वाला । आङ्पूर्वक √पत् + ण्यत्, उपधावृद्धि ] अथवा आपात्यम् अनेन [ यहाँ कर्म अर्थ है । इसके द्वारा गिरने योग्य ] ॥

## १२०२. लः कर्मणि च भावे चाकर्मकेभ्यः ॥ ६९ ॥ ( २१५२ )

'लः' इत्युत्सृष्टानुबन्धं सामान्यं गृह्यते, प्रथमाबहुवचनान्तं चैतत् ॥ लकाराः कर्मणि कारके भवन्ति,

**न्यासः**

**लः कर्मणि च भावे चाकर्मकेभ्यः** ॥ पूर्वसूत्रेण कृत्संज्ञकत्वाल्लकारः कर्त्तर्येव प्राप्नोति, न भावकर्मणोः, अतस्तयोरपि यथा स्यादित्येवमर्थमिदमारब्धम् । **ल इत्युत्सृष्टानुबन्धकमित्यादि** । लडादीनां दशानां लकाराणां विशेषकराननुबन्धानुत्सृज्य 'लः' इति सामान्यं गृह्यते । **प्रथमाबहुवचनान्तञ्चैतदिति** । पञ्चमीषष्ठ्येकवचना-शङ्कां निराकरोति । पञ्चम्यां ह्यस्यां लकारात् परो यस्तस्यैवार्थो निर्दिष्टः स्यात्, ततश्च कर्तर्येव लकारः स्यात्, षष्ठ्यामेवास्यामानन्तर्यलक्षणा विज्ञायेत । तथा च लकारस्य योऽनन्तरस्तस्यैवार्थनिर्देशः स्यात्, ततश्च स एव दोषो यः पञ्चम्याम् । अत्राप्यादेशापेक्षया षष्ठी विज्ञायते ? एवमपि लकारादेशानामनेनार्थो

**पदमञ्जरी**

**लः कर्मणि च भावे चाकर्मकेभ्यः** ॥ 'लः' इति लङ्लटोरकारानुबन्धयोः सामान्येन ग्रहणमेकवचनं चेति शङ्कामपाकरोति—**ल इत्युत्सृष्टानुबन्धसामान्यमेकं गृह्यत इति । प्रथमाबहुवचनं चैतदिति** । सामान्यस्यै-कत्वेऽपि 'जात्याख्यायामेकस्मिन् बहुवचनम्' । अथादेशापेक्षया षष्ठ्येकवचनं कस्मान्नाश्रीयते—लः = लस्य य आदेश इति, यथा—'लः परस्मैपदम्' इति ? उच्यते; एवं विज्ञायमाने लादेशानामनेनार्थो निर्दिश्येत, ततश्चाम्विषयस्य लकारस्यार्थो न निर्दिष्टः स्यात्, लुगत्रादेशः । न चाभावरूपस्य तस्यार्थादेशनं युज्यते ततश्चासौ 'कर्त्तरि कृत्' इति कर्तर्येव स्यात् । ननु च तस्य 'आमः' इति लुकापहारे सत्यनुप्रयोगे ये लादेशास्तैरेव भावादीनामभिव्यक्तिर्भविष्यति ? नैतदस्ति; यदा ह्याम्विषयो लकारः कर्तर्येवेति स्थितम्, तदा विरोधाद्भावकर्मवाचिप्रत्ययपरोऽनुप्रयोगो नैव प्राप्नोति, श्रुतस्यैव च संबन्धोपपत्तावादेश इत्यध्याहारो न युक्तः । तस्मात्प्रथमाबहुवचनान्तमेव युक्तम् । तत्र द्विविधो लकारः—तिङ्भावी, अतिङ्भावी च । तत्र तिङ्भाविनः कृत्संज्ञानिषेधात् 'कर्तरि कृत्' इत्यस्यानुपस्थानात् स्वार्थे भावे विधानं प्राप्नोति, अतिङ्भाविनस्तु 'कर्तरि कृत्' इति वचनात् कर्त्तर्येव साधुत्वं प्राप्नोति, न भावकर्मणोः—आस्यमानं शय्यमानमित्यादाविति वचनमिदमारभ्यते ।

ननु च भावकर्मणोरात्मनेपदं विधीयते, शेषात्कर्तरि परस्मैपदम्, ततश्च लकारस्य भावकर्मकर्त्तारोऽर्था अनुमास्यन्ते । यद्वा लकारस्य प्रयोगेऽसमवायादादेशानामेव तेऽर्था भविष्यन्ति, नार्थ एतेन ? इत्याशङ्क्याह—**सकर्मकेभ्यो भावे न भवन्तीति** । अनारभ्यमाण एतस्मिन्यथा भावे विधीयमाना घञादयः सकर्मकेभ्योऽपि भावे भवन्ति-ओदनस्य पाकः, सूत्रस्य कृतिरिति, तथा 'भावकर्मणोः' इत्यनेन भावे आत्मनेपदं सकर्मकेभ्योऽपि

**भावबोधिनी**

विमर्श—कृत्य प्रत्ययों के भाव और कर्म ये दो ही अर्थ होते हैं, परन्तु भव्य आदि सात शब्दों से कर्ता, कर्म और भाव इन तीनों अर्थों की प्रतीति होती है, इसके लिए यह सूत्र है ॥ ६८ ॥

'लः' इसमें अनुबन्ध [ अट् इट् आदि ] को हटाकर सामान्यरूप से लिया जाता है, और यह प्रथमा बहुवचनान्त है [ षष्ठ्यन्त नहीं ] । लकार कर्मकारक अर्थ में और 'च' के बल से कर्ता-कारक अर्थ में होते हैं । [ यह सकर्मक धातुओं के लिये है । ] अकर्मक धातुओं से भाव अर्थ में और चकारबलात् कर्ता अर्थ में [ लकार ] होते हैं । [ इस प्रकार सकर्मक धातु के बाद आने वाले लकार के (१) कर्ता और (२) कर्म ये दो अर्थ हैं । तथा अकर्मक धातु के बाद आने वाले लकार के (१) कर्ता और (२) भाव ये दो अर्थ हैं । कर्ता अर्थ में प्रत्यय दोनों प्रकार की धातुओं से होता है । ] उदा०—गम्यते ग्रामः देवदत्तेन । [ देवदत्त द्वारा गाँव जाया जाता है । गम् + लट् = कर्म अर्थ में आत्मनेपद होने से 'त' गम् + त,

**चकारात् कर्तरि च। अकर्मकेभ्यो धातुभ्यो भावे भवन्ति, पुनश्चकारात् कर्तरि च। गम्यते ग्रामो देवदत्तेन। गच्छति ग्रामं देवदत्तः। अकर्मकेभ्यः—आस्यते देवदत्तेन। आस्ते देवदत्तः। सकर्मकेभ्यो भावे न भवन्ति॥**

## १२०३. तयोरेव कृत्यक्तखलर्थाः॥ ७०॥ (२८३३)

**तयोरेव = भावकर्मणोः कृत्यसंज्ञकाः क्तखलर्थाश्च प्रत्यया भवन्ति। एवकारः कर्तुरपकर्षणार्थः।**

**न्यासः**

निर्दिश्यत इत्ययमेव विषयार्थो न निर्दिष्टः स्यात्। ननु च लकारस्य प्रयोग एव नास्ति, तत् कथं तस्यैव कर्त्रादयोऽर्थाः। सामर्थ्यात् तदादेशानामेतेऽर्था विज्ञास्यन्त इत्यदोषः। **सकर्मकेभ्यो भावे न भवन्तीति।** अकर्मकेभ्य इति वचनात्, अन्यथा हि तदनर्थकं स्यात्॥ ६९॥

**तयोरेव कृत्यक्तखलर्थाः॥ तयोरेव भावकर्मणोरिति।** एतेन 'तयोः' इत्यनेन 'भावकर्मणोः' इत्यस्य प्रत्यवमर्श इति दर्शयति। ननु चानन्तरसूत्रे द्वे वाक्ये—'लः कर्मणि भवन्ति कर्तरि च' इत्येकं वाक्यम्, 'भावे चाकर्मकेभ्योऽपि भवन्ति कर्तरि च' इति द्वितीयम्; तत्रानन्तरवाक्यश्रुतयोः कर्तृभावयोरेव तयोरित्यनेन

**पदमञ्जरी**

स्यात्, ततश्च पच्यते यवागूं देवदत्तेनेति प्रयोग; प्राप्नोति, अतः 'भावे चाकर्मकेभ्यः' इति वक्ष्यामीतययमारब्धः। अथ तत्रैव 'भावकर्मणोरकर्मकात्' इत्युच्यते, तत्राकर्मकग्रहणं कर्तव्यं स्यात्, ननु चेहापि क्रियते? इहावश्यं कर्तव्यम्—'तयोरेव कृत्यक्तखलर्था भावे चाकर्मकेभ्यः' इति, तस्मात्सकर्मकेभ्यो भावे मा भूदित्येवमर्थमयमारम्भ इति स्थितम्। किं चाम्विषयस्य लकारस्यार्थादेशनार्थमपीदं वक्तव्यम्; इतरथा पूर्वोक्तदोषप्रसङ्गादित्यलमियता॥ ६९॥

**तयोरेव कृत्यक्तखलर्थाः॥ तयोर्भावकर्मणोरिति।** पूर्वसूत्रे साक्षात् श्रुतयोर्भावकर्मणोस्तच्छब्देन परामर्शः, न चकारेण संनिधापितस्य कर्तुरिति भावः। अत एवोत्तरसूत्र पुनः 'कर्तरि च' इत्युक्तम्। यदि ह्यनन्तरवाक्ये चकारेण संनिधापितस्य कर्तुर्भानस्य चात्र प्रत्यदमर्शः स्यात् तत्र कर्तृग्रहणमनर्थकं स्यात्; कर्तर्यनेनैव

**भावबोधिनी**

"सार्वधातुके यक्" ३।१।६७ से यक् और टि का एत्व करने पर गम्यते।] गच्छति ग्रामं देवदत्तः [देवदत्त गाँव जाता है। यहाँ कर्ता अर्थ में प्रत्यय है। गम् + लट्, तिप्, शप्—गम + अ + ति, "इषुगमि-यमां छः" ७।३।७७ से मकार का छकार आदेश, "छे च" ६।१।७३ से तुक् = त् आगम और श्चुत्व—गच्छति।] अकर्मक धातुओं से—आस्यते देवदत्तेन [देवदत्त के द्वारा बैठा जाता है। आस् + लट् भाव अर्थ में, आत्मनेपद होने से त आदेश, यक् आस् + य + त, टि का एत्व—आस्यते।] आस्ते देवदत्तः [देवदत्त बैठता है। कर्ता अर्थ है। आस् + लट् त, एत्व—आस्ते।] सकर्मक धातुओं से भाव अर्थ में लकार नहीं होते हैं। [और अकर्मक धातुओं से कर्म अर्थ में नहीं होते हैं।]॥ ६६॥

कृत्यसंज्ञक प्रत्यय और खलर्थक प्रत्यय भाव तथा कर्म इन्हीं दो अर्थों में होते हैं। 'कर्ता' की निवृत्ति = असम्बन्ध कराने के लिए 'एव' का प्रयोग है। [पूर्व सूत्र में 'कर्मणि भावे च' यह उल्लेख है। इन्हीं का परामर्श हो और पूर्ववर्ती सूत्र के 'कर्तरि' का न हो, इसी के लिए 'एव' का प्रयोग है।]

कर्म में कृत्य प्रत्यय - उदा० कर्तव्यः कटः भवता। [आपके द्वारा चटाई बनायी जानी चाहिये। √कृ + तव्यत्, गुण, रपर करने पर कर्तव्यः] भोक्तव्यः ओदनः भवता [आपके द्वारा चावल खाया जाना चाहिये। √भुज् + तव्यत्, उपधागुण, ज् का कुत्व भोक्तव्यः।] भाव में—आसितव्यं भवता [आपके द्वारा बैठा जाना चाहिये। √आस् + तव्यत्, इट्] शयितव्यं भवता [आपके द्वारा सोया जाना चाहिये। √शी + तव्यत्, इट्, गुण, अयादेश।]

कृत्याः कर्मणि–कर्तव्यः कटो भवता । भोक्तव्य ओदनो भवता । भावे–आसितव्यं भवता । शयितव्यं भवता । क्तः कर्मणि–कृतः कटो भवता । भुक्त ओदनो भवता । भावे–आसितं भवता । शयितं भवता ।। खलर्थाः कर्मणि–ईषत्करः कटो भवता । सुकरः । दुष्करः । भावे–ईषदाढ्यंभवं भवता । स्वाढ्यंभवं भवता । 'भावे चाकर्मकेभ्यः' ( ३.४.६९ ) इत्यनुवृत्तेस्सकर्मकेभ्यो भावे न भवन्ति ।।

**न्यासः**

प्रत्यवमर्शो युक्तः ? नैष दोषः, यदयमुत्तरसूत्रे 'कर्तरि च' इति करोति, ततोऽवसीयते—भावकर्मणोरेव प्रत्यवमर्श इति । यदि भावकर्त्रोरेव प्रत्यवमर्शः स्यात्, कर्तृग्रहणमनर्थकं स्यात्; कर्तर्यनेनैव सिद्धत्वात् । एवं हि तत्र वक्तुं युक्तं स्यात्—कर्मणि चेति, कर्मणि केनचिदप्राप्तः स्यात् ! यदा पुनरिह भावकर्मणोः प्रत्यवमर्शस्तदा युक्तं कर्तरिग्रहणम्, कर्तर्यप्राप्ते यथा स्यात् । यथाप्राप्तं भावकर्मणोः तस्माद् भावकर्मणोरेव प्रत्यवमर्शो युक्तः । **एवकार** इत्यादिना एवकारस्य व्यवच्छेद्यं दर्शयति । **अपकर्षणार्थः**=निवृत्त्यर्थः ।

**शयितमिति** । 'निष्ठा शीङ' इत्यादिना कित्त्वप्रतिषेधाद् गुणः । **ईषत्करः, सुकर इति** । 'ईषद्दुःसुषु' इत्यादिना खल् । **ईषदाढ्यंभवमिति** । अत्रापि 'कर्तृकर्मणोश्च भूकृञोः' ।। ७० ।।

**पदमञ्जरी**

सिद्धत्वात् । **एवकार इत्यादि** । कृत्वात्कर्तरि कृत्याः प्राप्ता एवकारेण कर्तुरवकृष्यन्ते=व्यावर्त्यन्ते । ननु च तक्रकौण्डिन्यन्यायेन कर्तुरपकर्षो भविष्यति, यथा 'वडवाया वृषे वाच्ये' इत्यत्र वक्ष्यते—अपत्ये प्राप्तस्ततोऽपकृष्य वृषे विधीयते, अपत्ये त्वणेव भवति इति ? सत्यम्; न्यायप्राप्त एवाथ एवकारेणानूद्यते ।

**शयितमिति** । 'निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः' इत्यकित्त्वाद् गुणो भवति ।

**भावे चाकर्मकेभ्यो इति वर्त्तत इति** । वयं तु ब्रूमः—एवकारः कर्तुरपकर्षणाय न कर्तव्य इत्युक्तम्, तस्यात्रोपयोगः—ययोर्भावकर्मणोर्लकार उक्तस्तयोरेवान्यूनानतिरिक्तयोः कृत्यादयो भवन्तीति । यदि च सकर्मकेभ्यो भावे स्युस्तयोस्तादृशयोरेव तु न कृताः स्युरिति ।। ७० ।।

**भावबोधिनी**

कर्म अर्थ में क्त [ प्रत्यय के उदा० ] कृतः कटः भवता । [ आपके द्वारा चटाई बनायी गयी । ] भुक्त ओदनः भवता । [ आपके द्वारा चावल खाया गया । ] भाव अर्थ में [ क्त के उदा० ] – आसितं भवता । [ आपके द्वारा बैठा गया । ] शयितं भवता । [ आपके द्वारा सोया गया । कृ धातु से "निष्ठा" ३।२।१०२ सूत्र से भूतकाल कर्म अर्थ में क्त=त प्रत्यय करने पर कृतः आदि और 'शीङ' धातु से "नपुंसके भावे क्त" ३।३।११४ से भाव अर्थ में क्त=त प्रत्यय; इट् गुण आदि करने पर शयितम् आदि रूप होते हैं । ]

कर्म अर्थ में खलर्थक प्रत्यय [ के उदा०—]—ईषत्करः कटः भवता । [ आपके द्वारा चटाई बनाना सरल है । ] सुकरः । [ अर्थ पूर्वोक्त ] दुष्करः [ आपके द्वारा बनाना कठिन है । ] [ इनमें "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" ३।३।१२६ से ईषत्, सु और दुर् उपपद रहते कृ धातु से खल्=अ प्रत्यय होने पर ऋ का गुण और रपर आदि हो जाता है । ] भाव में [खलर्थक प्रत्यय के उदा०]—ईषदाढ्यंभवं भवता। स्वाढ्यंभवं भवता [ अधनवान् आपके द्वारा धनवान होना सरल है । ] [ "कर्तृकर्मणोश्च भूकृञोः" ३।३।१२७ से च्वि-अर्थ में, कर्ता और कर्म उपपद रहते खल् प्रत्यय का विधान है, परन्तु यहाँ 'भाव' में भी मानकर काशिकाकार ने उदाहरण दे दिया है । अतः यह ठीक नहीं प्रतीत होता है । ] "भावे च अकर्मकेभ्य," [ और अकर्मक धातुओं से भाव में प्रत्यय होते हैं ]—इसकी अनुवृत्ति होने से सकर्मक धातुओं से भाव अर्थ में प्रत्यय नहीं होते हैं । [ इसी प्रकार अकर्मक धातु से कर्म में प्रत्यय नहीं होते हैं । ] ।। ७० ।।

## १२०४. आदिकर्मणि क्तः कर्तरि च ॥ ७१ ॥ ( ३०५३ )

**आदिकर्मणि यः क्तो विहितः स कर्तरि भवति । चकाराद् यथाप्राप्तं भावकर्मणोः । आदिभूतः क्रियाक्षण आदिकर्म, तस्मिन्नादिकर्मणि भूतत्वेन विवक्षिते यः क्तो विहितस्तस्यायमर्थनिर्देशः । प्रकृतः कटं देवदत्तः, प्रकृतः कटो देवदत्तेन, प्रकृतं देवदत्तेन । प्रभुक्त ओदनं देवदत्तः, प्रभुक्त ओदनो देवदत्तेन, प्रभुक्तं देवदत्तेन ॥**

न्यासः

**आदिकर्मणि क्तः कर्त्तरि च ॥ आदिकर्मणीति ।** आदिश्चासौ कर्म चेति विशेषणसमासः । **क्रियाक्षण इति ।** एतेन कर्मशब्दोऽत्र क्रियां कर्माचष्टे, न साधनं कर्मेति दर्शयति । कुतः पुनरेतदवसितम्—क्रियां कर्माचष्ट इति । आदिशब्देन विशेषणात् । बहूनां क्रियाक्षणानामादिमध्यान्तभावे सत्यनादिभूतक्रियाक्षणव्यवच्छेदादिभूतो यः क्रियाक्षणस्तदादिकर्मेति युक्तं प्रतिपादयितुम् । आदिग्रहणेन साधनं कर्म त्वेकमेवेत्यादिशब्देन विशेषयितुं न शक्यते, आदेरनादिभूतत्वापेक्षत्वादादिशब्दस्य तत्राप्रवृत्तिः, व्यवच्छेद्याभावात् । आदिकर्मणि च 'भूते' इत्यनुवर्तमाने 'निष्ठा' इत्यनेनैव विहित इति दर्शयन्नाह—**तस्मिन्नित्यादि ।** आद्यो यः क्रियाक्षणः स परिनिष्पन्नत्वाद् भूतो भवतीति युक्ता तस्य भूतत्वेन विवक्षितता । **प्रकृतः कटं देवदत्त इति ।** कर्तरि क्तः । तेनैव कर्ताभिहित इति देवदत्तशब्दात् तृतीया न भवति । कर्मणस्त्वनभिहितत्वात् कटशब्दाद् द्वितीया भवत्येव । **प्रकृतः कटो देवदत्तेनेति ।** अत्र कर्मणि क्तः । तेनैव कर्मणोऽभिहितत्वाद् द्वितीया न भवति । कर्तुरनभिहितत्वाद् देवदत्तशब्दात् तृतीया भवत्येव । **प्रकृतं देवदत्तेनेति ।** भावे क्तप्रत्ययः । सर्वत्र प्रशब्द आदिकर्म द्योतयति । ननु चादिभूतक्रियाक्षणकाले कटोऽनभिनिर्वृत्त एव भवति, कटकारणभूता एव वीरणादयस्तदानीं सन्ति, न च तदवस्थः कटः, तत् कथं प्रकृतः कट इति भूतकालेन प्रकृतशब्देन कटस्य सामानाधिकरण्यम् ? आद्येन क्रियाक्षणेन यो वीरणादीनां विशेष आहितस्तत्र तादर्थ्यात् कटशब्दो वर्तते, स च भूत एवेत्यदोषः ॥ ७१ ॥

पदमञ्जरी

**आदिकर्मणिः क्तः कर्त्तरि च ॥ आदिकर्मणीति ।** कर्मधारयः, कर्मशब्दश्च क्रियावचन इत्याह—**आदिभूतः क्रियाक्षण आदिकर्मेति ।** साधनकर्म तु न गृह्यते, आदिशब्देन विशेषणात् । बहूनां समवाये आदिमध्यान्तभावः, साधनकर्मकत्वेमेवेति किं तत्रादिशब्देन । **तस्मिन्नादिकर्मणि भूतत्वेन विवक्षित इति ।** एतेन 'निष्ठा' इत्यनेनैवादिकर्मणि क्तः सिद्धः, न पुनरादिकर्मणि निष्ठा वक्तव्येति दर्शयति । आद्ये हि क्रियाक्षणे भूते समूहरूपारोपादेकदेशे समूहे चेति न्यायाद्वा धात्वर्थ एव भूतो भवतीति युक्त एव क्तः । **प्रकृतः कटं देवदत्त इति ।** प्रारब्धवानित्यर्थः । **प्रकृतं देवदत्तेनेति ।** अत्र कर्मणोऽविवक्षितत्वेन धातोरकर्मकत्वाद्भाव एव क्तः । एवं प्रभुक्तं देवदत्तेनेत्यत्रापि ॥ ७१ ॥

भावबोधिनी

आदिकर्म अर्थ में जिस क्त प्रत्यय का विधान किया गया है वह कर्ता अर्थ में होता है और चकार के बल से यथाप्राप्त भाव और कर्म अर्थों में भी होता है । [ सूत्र में कर्म शब्द क्रियावाची है, अतः ] क्रिया का आदिभूत क्षण = आदिकर्म है; इस आदिकर्म में भूतत्वरूप से विवक्षित होने पर जिस क्त प्रत्यय का विधान किया गया है उसके अर्थ का निर्देश यहाँ किया गया है । (१) कर्ता में - प्रकृतः कटं देवदत्तः । [ देवदत्त चटाई बनाने लगा ] (२) कर्म में—प्रकृतः कटः देवदत्तेन । [ देवदत्त के द्वारा चटाई बनानी आरम्भ की गयी ] (३) भाव में—प्रकृतं देवदत्तेन । [ देवदत्त द्वारा प्रारम्भ किया गया । ] कर्ता में—प्रभुक्त ओदनं देवदत्तः । [ देवदत्त ने चावल खाना प्रारम्भ किया । ] कर्म में—प्रभुक्तः ओदनः देवदत्तेन । [ देवदत्त के द्वारा चावल खाया जाना प्रारम्भ किया गया । ] भाव में—प्रभुक्तं देवदत्तेन । [ देवदत्त के द्वारा खाया जाना प्रारम्भ किया गया । ]

## १२०५. गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ।। ७२ ।। ( ३०८६ )

**गत्यर्थेभ्यो धातुभ्योऽकर्मकेभ्यः श्लिषादिभ्यश्च यः क्तः स कर्तरि भवति । चकाराद् यथाप्राप्तं च भावकर्मणोः । गतो देवदत्तो ग्रामम्, गतो देवदत्तेन ग्रामः, गतं देवदत्तेन । अकर्मकेभ्यः – ग्लानो भवान् । ग्लानं भवता । आसितो भवान् । आसितं भवता । श्लिष – उपश्लिष्टो गुरुं भवान्, उपश्लिष्टो गुरुर्भवता, उपश्लिष्टं भवता । शीङ्-उपशयितो गुरुं भवान्, उपशयितो गुरुर्भवता, उपशयितं भवता । स्था-उपस्थितो गुरुं भवान्, उपस्थितो गुरुर्भवता, उपस्थितं भवता । आस-उपासितो गुरुं भवान्, उपासितो गुरुर्भवता, उपासितं**

न्यासः

गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ।। उपस्थित इति । 'द्यतिस्यतिमास्थामित्ति किति' इतीत्वम् । अनूषित इति । वच्यादिना सम्प्रसारणम्, 'वसतिक्षुधोः' इतीट्, 'शासिवसिघसीनाञ्च' इति षत्वम् । **अनुजात इति** । 'जनसनखनां सञ्झलोः' इत्यात्वम् । **आरूढ इति** । 'हो ढः', 'झषस्तथोर्धोऽधः' इति धत्वम्, 'ष्टुना ष्टुः', 'ढो ढे लोपः', 'ढ्रलोपे पूर्वस्य' इति दीर्घः । **अनुजीर्ण इति** । 'जॄ वयोहानौ', 'ॠत इद्धातोः' इतीत्वम्, 'हलि च' इति दीर्घत्वम्, 'रदाभ्याम्' इत्यादिना नत्वञ्च ।

पदमञ्जरी

गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ।। अनूषित इति । 'वसति क्षुधोरिट्' । अनुप्राप्य

भावबोधिनी

**विमर्श**—क्रिया अनेक-क्षणस्थायिनी होती है । उसके आदि के क्षण का भूतकाल मानकर जब प्रत्यय करना होता है तब इस सूत्र का उपयोग होता है । इससे प्रत्यय करने पर आंशिक रूप से भूत, वर्तमान और भविष्यत् की प्रतीति होती रहती है । यह लक्ष्यानुसार समझनी चाहिये । जैसे—प्रभुक्तः ओदनं देवदत्तः । यहाँ देवदत्त द्वारा चावलभक्षण प्रारम्भ हो चुका है परन्तु प्रयोगकाल में भी भक्षण होता रहता है । यही प्रतीति कराना इस सूत्र का उद्देश्य है ।

प्रकृतं देवदत्तेन—और प्रभुक्तं देवदत्तेन—ये दोनों उदा० भाव में क्त प्रत्यय के दिये गये हैं । परन्तु ये दोनों सकर्मक धातुयें है । अतः भाव में 'क्त' उचित नहीं हैं । दूसरे उदा० देना अधिक तर्कसंगत रहता । अथवा इसमें कर्म की अविवक्षा मानकर किसी प्रकार भाव अर्थ में क्त प्रत्यय का उपपादन करना चाहिये ।। ७१ ।।

गमनार्थक, अकर्मक श्लिष् आदि [ आठ ] धातुओं से जो क्त होता है वह कर्ता अर्थ में होता है और चकार-बलात् यथाप्राप्त कर्म एवं भाव अर्थों में भी होता है । उदा०—(१) गत्यर्थ—(क) कर्ता में—देवदत्तः ग्रामं गतः [ देवदत्त गाँव गया । यहाँ सकर्मक गम् धातु से कर्ता अर्थ में क्त प्रत्यय हुआ है √गम् + क्त = त, क्ङित् होने से अनुनासिकलोप—गतः ] (ख) कर्म में—देवदत्तेन ग्रामः गतः । [ यहाँ कर्म में क्त प्रत्यय हुआ है । अतएव कर्म उक्त होने से ग्राम में द्वितीया न होकर प्रथमा होती है । ] (ग) भाव में—देवदत्तेन गतम् । [ यहाँ कर्म की अविवक्षा मानकर भाव में क्त है ।] (२) अकर्मक—(क) कर्ता में—ग्लानः भवान—आप ग्लान = दुःखी हुये । (ख) भाव में – ग्लानं भवता [ आप के द्वारा दुखी हुआ गया, आप दुखी हुये । 'ग्लै' में "आदेच उपदेशेऽशिति" ६।१।४५ से आत्व करने पर ग्ला बनाकर क्त प्रत्यय ग्ला + क्त = त "संयोगादेरातोधातोर्यण्वतः" ८।२।४३ से 'त' का नत्वादेश—ग्लानः ] । आसितो भवान् । [ आप बैठे । कर्ता में क्त है ] । आसितं भवता । [ आपके द्वारा बैठा गया । 'भाव में' क्त है ] । (३) श्लिष्—(क) कर्ता में—उपश्लिष्टो गुरुं भवान् [ आपने गुरु का उपश्लेषः = आलिंगन, स्पर्श आदि किया । उपपूर्वक √श्लिष् + क्त = त, ष्टुत्व—उपश्लिष्टः ] (ख) कर्म में—उपश्लिष्टः गुरुः भवता । [ आपके द्वारा गुरु का उपश्लेष किया गया । यहाँ कर्म में क्त हुआ है ] (ग) भाव में—उपश्लिष्टं भवता । [ आपने उपश्लेष किया । यहाँ अविवक्षित कर्म मानकर भाव में क्त है ।] (४) शीङ्—(क) उपशयितः गुरुं भवान् । [ आप गुरु के पास रहे । ] (ख) उपशयितः गुरुः भवता [ आपके द्वारा गुरु के पास रहा गया । ] (ग) उपशयितं भवता [ आपके द्वारा रहा गया ] । (५) स्था—(क) उपस्थितो गुरुं भवान्

**भवता। वस-अनूषितो गुरुं भवान्, अनूषितो गुरुर्भवता, अनूषितं भवता। जन-अनुजातो माणवको माणविकाम्, अनुजाता माणवकेन माणविका, अनुजातं माणवकेन। रुह-आरूढो वृक्षं भवान्, आरूढो वृक्षो भवता, आरूढं भवता। जीर्यति-अनुजीर्णो वृषलीं देवदत्तः, अनुजीर्णा वृषली देवदत्तेन, अनुजीर्णं देवदत्तेन। श्लिषादयस्सोपसर्गास्सकर्मका भवन्ति, तदर्थमेषामुपादानम्॥**

## १२०६. दाशगोघ्नौ संप्रदाने ॥ ७३ ॥ ( ३१७२ )

**न्यासः**

ननु च श्लिषादीनामकर्मकत्वादेव सिध्यतीति तत् किमर्थमेषां ग्रहणमित्याह- **श्लिषादय इत्यादि। तदर्थमिति**। सकर्मकार्थमित्यर्थः॥ ७२॥

**दाशगोघ्नौ सम्प्रदाने॥ गोघ्न इति**। स एव हन्तेः पचाद्यच्। सम्प्रदानेऽच् निपात्यत, उपधालोपश्च।

**पदमञ्जरी**

जातोऽनुजातः। **एवमनुजीर्णः**। सकर्मकेभ्यः कर्माविवक्षायां भावे क्तः॥ ७२॥

**दाशगोघ्नौ सम्प्रदाने॥ गोघ्न इति**। अत्र दानपूर्वके हनने हन्तिर्वर्तते। **अर्घार्ह इति**। अर्घः=मधुपर्कं,

**भावबोधिनी**

[आप गुरु के पास उपस्थित हुये।] (ख) उपस्थितः गुरुः भवता [आपके द्वारा गुरु के पास उपस्थित हुआ गया]। (ग) उपस्थितं भवता [आपके द्वारा उपस्थित हुआ गया। उपपूर्वक √स्था + क्त = त, "द्यति-स्यति-मा स्थामित्ति किति" ७।४।४० से आ का इत्वादेश करने उपस्थित शब्द बनता है।] (५) आस्—(क) उपासितः गुरुं भवान्। [आपने गुरु की उपासना की।] (ख) उपासितः गुरुः भवता। [आपके द्वारा गुरु उपासित किये गये।] (ग) उपासितं भवता। [आपने उपासना की।] (६) वस्—(क) अनूषितः गुरुं भवान्। [आप गुरु के पास रहे।] (ख) अनूषितः गुरुः भवता [आपके द्वारा गुरु के पास रहा गया।] (ग) अनूषितं भवता [आपके द्वारा रहा गया। वस् + क्त = त, "वचिस्वपि०" ६।१।१५ से 'व्' का सम्प्रसारण, 'अ' का पूर्वरूप उस् + त, इट् आगम, "शासिवसिघसीनां च" ८।३।६० से स् का ष्—उषित।] (७) जन्—(क) अनुजातः माणवकः माणविकाम्। [लड़की के बाद लड़का पैदा हुआ] (ख) अनुजाता माणविका माणवकेन। [कन्या के बाद लड़के द्वारा जन्म लिया गया।] (ग) अनुजातं माणवकेन। [माणवक द्वारा जन्म लिया गया। अनुपूर्वक √जन् + क्त = त, "जनसनखनां सञ्झलोः" ६।४।४२ से न् का आत्व, सवर्णदीर्घ—करने पर—अनुजातः] (८) रुह—(क) आरूढः वृक्षं भवान्। [आप पेड़ पर चढ़े।] (ख) आरूढः वृक्षः भवता। [आपके द्वारा वृक्ष पर चढ़ा गया।] (ग) आरूढं भवता [आप द्वारा चढ़ा गया। आङ्पूर्वक √रुह् + क्त = त, "हो ढ." ८।२।३१ से ह् का ढ् और 'झषस्तथोर्धोऽधः" ८।२।४० से त का ध आरुढ् + ध, ष्टुत्व—आरुढ् + ढ, "ढो ढे लोपः" ८।३।१३ प्रथम ढ का लोप, "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ६।३।१११ से अण् = उ का दीर्घ करने पर—आरूढः बनता है।] (९) जॄ—(क) अनुजीर्णः वृषलीं देवदत्तः। [देवदत्त ने वृषली को मारकर जीर्ण=क्षीण कर डाला।] (ख) अनुजीर्णा वृषली देवदत्तेन। [देवदत्त द्वारा मार मार कर वृषली क्षीण बना दी गयी।] (ग) अनुजीर्णं देवदत्तेन। [देवदत्त द्वारा जीर्ण=क्षीण हुआ गया।] अनुपूर्वक जॄ + क्त = त, "ॠत इद्धातोः" ७।१।१०० से ॠ का इत्व और रपर करने पर जिर् + त, "हलि च" ८।२।७७ से उपधा का दीर्घ, "रदाभ्याम्०" ८।२।४२ से निष्ठा त का न, और न का णत्व करने पर ण होता है—अनुजीर्णः] श्लिष् आदि धातुयें उपसर्गविशिष्ट होने पर सकर्मक हो जाती हैं। [अतः सूत्रस्थ—अकर्मक—से इनमें क्त नहीं हो सकता] इसलिये इनसे प्रत्यय करने के लिये श्लिष् आदि का उल्लेख है।

**विमर्श**—यहाँ ध्यान रखना आवश्यक है कि जब किसी अन्य सकर्मक धातु से क्त प्रत्यय करना है तब कर्म की अविवक्षा करके उसे अकर्मक मानकर क्त सम्भव है॥ ७२॥

सम्प्रदान कारक में 'दाश' और 'गोघ्न' शब्दों की निपातन से सिद्धि होती है। √दाशृ दान अर्थ में—"नन्दिग्रहिपचादिभ्यः" ३।१।१३४ से अच् प्रत्यय होता है, वह कृत्संज्ञक होने से कर्ता अर्थ में प्राप्त होता है, यहाँ सम्प्रदान

**दाशगोघ्नौ शब्दौ संप्रदाने कारके निपात्येते। 'दाशृ दाने' ततः पचाद्यच्। स कृत्संज्ञकत्वात् कर्तरि प्राप्तः, संप्रदाने निपात्यते। दाशन्ति तस्मै इति दाशः। आगताय तस्मै दातुं गां घ्नन्तीति गोघ्नः, अर्घार्होऽतिथिः। टगत्र निपात्यते। निपातनसामर्थ्यादेव गोघ्न ऋत्विगादिरुच्यते, न तु चाण्डालादिः। असत्यपि च गोहनने तस्य योग्यतया गोघ्न इत्यभिधीयते॥**

## १२०७. भीमादयोऽपादाने ॥ ७४ ॥ ( ३१७३ )

**भीमादयः शब्दा अपादाने निपात्यन्ते। उणादिप्रत्ययान्ता एते, 'श्याधूसूभ्यो मक्' ( उ० १.१४४ )**

**न्यासः**

अथ वा—टक् प्रत्ययो निपात्यते, उपधालोपश्च 'गमहन' इत्यनेनैव सिद्धः 'हो हन्तेः' इत्यादिना कुत्वम्। यदि सम्प्रदाने 'गोघ्नः' इति निपात्यते, ततश्चाण्डालादेरपि तेनाभिधानं प्राप्नोति; यस्मात् तस्मै अपि ये ह्यागताय गां दातुं घ्नन्ति तेऽपि सुकृत इत्यत आह—**निपातनसामर्थ्यादित्यादि**। यथैव ह्यत्र निपातनसामर्थ्यात् किञ्चिदलाक्षणिकं कार्यं लभ्यते तथार्थविशेषोऽपि। तस्माद् यद्यपि 'गोघ्नः' इत्यविशेषेण निपात्यते, तथापि विशिष्टस्यैव। तेन ऋत्विगादेरभिधानम्, नान्यस्य चाण्डालादेः। यदा तर्हि तस्मै दातुं गौर्न हन्यते तदा तस्य गोघ्न इत्यभिधानं न प्राप्नोतीत्यत आह—**असत्यपीत्यादि**। यथा ह्यपचन्नपि योग्यतया पाचक इत्युच्यते, तथाऽसत्यपि गोहनने गोघ्न इति ॥ ७३ ॥

**भीमादयोऽपादाने ॥ उणादिप्रत्यया एत इति**। उणादयः प्रत्यया येषां ते तथोक्ताः। के पुनस्त उणादयः प्रत्ययाः? इत्यत आह—**श्याधूसूभ्यो मगित्यादि**। आदिशब्देन मङ्क्वन्नादीनां ग्रहणम्। यदि

**पदमञ्जरी**

तदङ्गत्वेन गोहननं विहितम्। एतावद् गोरालम्भनस्थानम्—अतिथिः, पितरः, विवाहश्चेति। यदि सम्प्रदाने गोघ्न इति निपात्यते चाण्डालादेरपि तेनाभिधानं प्राप्नोति, अस्मै अपि ह्यागताय गां दातुमर्हन्ति सुहृदादयः? अत आह—**निपातनसामर्थ्यादिति। असत्यपि चेति**। यथाऽपचन्नपि योग्यतया पाचकः' इत्युच्यते, तथेहापीत्यर्थः ॥ ७३ ॥

**भीमादयोऽपादाने ॥ उणादिप्रत्ययान्ता एत इति**। बाहुल्यादेतदुक्तम्, प्रस्कन्दनप्रपतनयोरप्यौणादिकत्वात्। **ताभ्यामन्यत्रोणादय इति पर्युदासे प्राप्त इति'**। यद्यप्यसत्यस्मिन्सूत्रेऽपादानस्य प्रकृतत्वात्ताभ्यामिति

**भावबोधिनी**

अर्थ में निपातन किया जाता है। दाशन्ति तस्मै इस विग्रह में [ — दाश्+अच्= ] दाशः [ जिसे दिया जाय ]। आने वाले जिसको देने के लिये गाय ] बछिया ] का हनन किया जाता है—वह गोघ्न—अर्घयोग्य अतिथि होता है। यहां टक् प्रत्यय का निपातन है [ गाम् उपपद हन् धातु से टक्=अ प्रत्यय, उपपदसमास विभक्तिलोप करने पर गोहन्+अ, कित् होने से अलोप और कुत्व करने पर गोघ्न ]। निपातनसामर्थ्य से ही ऋत्विक् आदि को गोघ्न कहा जाता है, चाण्डालादि को नहीं। गोहनन न होने पर भी उसकी योग्यता के कारण गोघ्न ऐसा कहा जाता है।

विमर्श—प्राचीन काल में किसी विशिष्ट अतिथि के स्वागत में अर्घ्य आदि के लिये गाय का हनन किया जाता था। यहाँ गो का अर्थ उसके विकार दूध, घी आदि हैं। और हनन का अर्थ गति=प्राप्ति आदि हैं। अतः इससे गोहत्या सिद्ध करना ठीक नहीं हैं। गोघ्न यह अतिथिसामान्य के लिये प्रयुक्त होता है। यद्यपि जिसके लिये गोहनन नहीं होता है वहाँ यह प्रयोग नहीं होना चाहिये, तथापि वहाँ वह हननयोग्यता मानकर प्रत्यय हो जाता है ॥ ७३ ॥

भीम आदि शब्द अपादान अर्थ में निपातनात् सिद्ध होते हैं। ये शब्द उणादिप्रत्ययान्त हैं, "इषियुधीन्धिदसिश्याधूसूभ्यो मक्" [ उ० सू० १।१४२ इष् आदि धातुओं से मक् होता है। ] और "भियः षुक् वा" [ उ० सू० १।१४५ भी धातु से मक् प्रत्यय होता है और विकल्प से षुक् आगम होता है। ] आदि हैं। "ताभ्याम् अन्यत्र उणादयः"

**'भियष्षुक्च'** ( उ० १.१४७ ) इत्येवमादयः। 'ताभ्यामन्यत्रोणादयः' ( ३.४.७५ ) **इति पर्युदासे प्राप्ते निपातनमारभ्यते। भीमः। भीष्मः। भयानकः। वरुः। चरुः। भूमिः। रजः। संस्कारः। संक्रन्दनः। प्रपतनः। समुद्रः। स्रुचः। स्रुक्। खलतिः।**

**१२०८. ताभ्यामन्यत्रोणादयः॥ ७५॥ ( ३१७४ )**

**न्यासः**

तर्ह्युणादिप्रत्यया एते, एवं सत्युणादिप्रत्ययानां रूढिशब्दात् क्रियाकारकसम्बन्धाभावादपादाने वृत्तिर्न सम्भवत्येव? नैष दोषः, रूढिशब्देष्वपि केषाञ्चित् क्रियाकारकसम्बन्धोऽस्त्येव, यथा—तैलपायिकादिषु। अतोऽदेश्यमेतत्। **ताभ्यामित्यादि**। ननु चासत्यस्मिन् सूत्रे ताभ्यामित्येष निर्देशो नोपपद्यते; अपादानस्याप्रकृतत्वात्, तत् कुतः पर्युदासस्य प्रसङ्गः? नैष दोषः; अर्थकथनमेतत् अस्मिन् ह्यसति तत्रैवं सूत्रं कर्तव्यम्—ततोऽपादानाच्चान्यत्रोणादय इति। तथा च यदीदं नोच्येत, तदा स्यादेव पर्युदासः॥ ७४॥

**ताभ्यामन्यत्रोणादयः**॥ अथ किमर्थं ताभ्यामित्यनेन संप्रदानापादानप्रत्यवमर्शः क्रियते, एतावदेव वक्तव्यम्—अन्यत्रोणादय इति प्रकृतत्वादेव हि तयोस्ताभ्यामन्यत्रोणादयो विज्ञास्यन्ते? अत आह—**सम्प्रदान-**

**पदमञ्जरी**

निर्देशो नोपपद्यते तथाप्ययमर्थस्तावत्तत्र वक्तव्यः—ततोऽपादानाच्चान्यत्रोणादय इति, ततश्च स्यादेव पर्युदास इत्यर्थः॥ ७४॥

**ताभ्यामन्यत्रोणादयः**॥ ननु च 'अन्यत्रोणादयः' इत्यप्युक्ते प्रकृतत्वादेव ताभ्यामन्यत्रेति विज्ञास्यते? अत आह—**सम्प्रदानार्थ इति**। **कृषित इत्यादिना** कर्मणि वृत्तिं दर्शयति। अत्रेडागमश्चिन्त्यः। **एवं तनित** इत्यत्रापि।

**भावबोधिनी**

[ ३।४।७५। उन सम्प्रदान और अपादान से भिन्न अर्थों में उणादि प्रत्यय होते हैं ] इससे पर्युदास प्राप्त रहने पर इस निपातन का विधान किया गया है। उदा०—भीमः, भीष्मः [ बिभ्यति अस्मात् जनाः—इस अपादान में भी + मक् = म, वैकल्पिक षुक् = ष् आगम होने पर भीष्मः और भीमः दो रूप होते हैं। जिससे लोग डरते हैं। ] भयानकः [ बिभेत्यस्मात्—इसी विग्रह में यह भी बना है। ] वरुः। चरुः [ हविर्द्रव्य ]। भूमि = पृथ्वी। रजः [ धूलिकण ]। संस्कारः [ जिससे संस्कृत किया जाय ] संक्रन्दनः [ जिससे लोग डरकर चिल्लायें। ] प्रपतनः [ प्रपतति अस्मात्—जिससे गिरता है ]। समुद्रः [ सागर ]। स्रुचः [ यज्ञ का उपयोगी काष्ठनिर्मित पात्रविशेष ]। स्रुक् [ यज्ञोपयोगी पात्रविशेष जिससे यज्ञ में घी छोड़ा जाता है। ] खलतिः = मूर्ख।

**विमर्श**—काशिकाकार ने जितने शब्द भीमादिगण में उद्धृत किये हैं उतने इस समय नहीं प्राप्त होते हैं। कुछ नवीन शब्द मिलते हैं और कुछ परिवर्तित रूप में हैं। इस समय गणपाठ में ये शब्द हैं—

भीम। भीष्म। भयानक। वहचर ( वहचरु )। प्रस्कन्दन। प्रपतन ( प्रतपन )। समुद्र। स्रुव। स्रुक्। वृष्टि। ( दृष्टि )। रक्षः। संकशुक ( शंकुसुक )। मूर्ख। खलति। आकृतिगणोऽयम्॥ इति भीमादिः॥

वर्तमान गणपाठ में इसे आकृतिगण मानकर अपेक्षित शब्दों के सन्निवेश का मार्ग प्रस्तुत कर दिया गया है। इसके विपरीत काशिकाकार ने इसका संकेत नहीं किया है।

गणपाठ में उपलब्ध सभी शब्दों से अपादान कारक की प्रतीति करनी चाहिये। परन्तु उपलब्ध प्रायः सभी टीकाओं में इनकी व्युत्पत्ति पर ध्यान नहीं दिया गया है। इसका कारण है इन शब्दों का रूढ अर्थ में प्रयोग होना॥ ७४॥

उन सम्प्रदान और अपादान कारकों से भिन्न कारक अर्थ में भी उणादि शब्द = प्रत्यय होते हैं। कृत् होने के कारण [ सामान्यरूप से ] कर्ता अर्थ में ही होते हैं, [ इस सूत्र से ] कर्म अर्थ में कहे जा रहे हैं। 'ताभ्याम्' यह

उणादयः शब्दाः ताभ्यामपादानसंप्रदानाभ्यामन्यत्र कारके भवन्ति। कृत्त्वात् कर्तर्येव प्राप्ताः कर्मादिषु कथ्यन्ते। 'ताभ्याम्' इति संप्रदानार्थः प्रत्यवमर्शः, अन्यथा ह्यपादानमेव पर्युदस्येत; अनन्तरत्वात्। कृषितोऽसौ कृषिः। तनित इति तन्तुः। वृत्तमिति वर्त्म। चरितं चर्म॥

**१२०९. क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः॥ ७६॥ ( ३०८० )**

**ध्रौव्यार्थाः**=अकर्मकाः, प्रत्यवसानार्थाः=अभ्यवहारार्था इति स्वनिकायप्रसिद्धिः। **ध्रौव्यगतिप्रत्यवसानार्थेभ्यो यः क्तो विहितः, सोऽधिकरणे भवति। चकाराद्यथाप्राप्तं च। ध्रौव्यार्थेभ्यः—कर्तृभावाधिकरणेषु,**

न्यासः

**प्रत्यवमर्शार्थमित्यादि। अन्यथा हीत्यादि।** यदि 'ताभ्याम्' इत्यनेन तयोः प्रत्यवमर्शो न क्रियत इत्यर्थः। **अनन्तरत्वादित्यादि।** 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति न्यायादपादानस्यैव पर्युदासः स्याद्, यदि ताभ्यामिति निर्देशो न क्रियेत। **कृषिरिति।** 'इक् कृष्यादिभ्यः' इतीक्। **तन्तुरिति।** 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' इति तुन्। **चर्मेति।** मनिन्॥ ७५॥

**क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः॥** ननु च नेयं लोके प्रसिद्धिः—ध्रौव्यार्था अकर्मकाः, प्रत्यवसानार्था अभ्यवहारार्था इति, तत् कथमयमर्थो लभ्यते? इत्यत आह—**स्वनिकायप्रसिद्धिरिति।** स्वनिकायः=वैयाकरणसङ्घः, तत्रेयं प्रसिद्धिः। **कर्तृभावाधिकरणेष्विति।** कर्तरि 'गत्यर्थाकर्मक' इत्यादिना, भावे 'तयोरेव' इत्यादिना। **कर्तृकर्मभावाधिकरणेष्विति।** कर्त्तरि पूर्ववत्। भावकर्मणोस्तु 'तयोरेव' इत्यादिना। **कर्मभावाधिकरणेष्विति।** भावकर्मणोः 'तयोरेव' इत्यादिना। **इदमेषामिति।** 'अधिकरणवाचिनश्च' इति' इति षष्ठी।

पदमञ्जरी

केचिदाहुः—'यस्य विभाषा' इतीट्प्रतिषेधोऽनित्यः, कृतिनृत्योरीदित्करणात्। तद्धि 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधार्थं क्रियते तत्र 'सेऽसिचि कृति' इति विभाषितेट्त्वादेव 'यस्य विभाषा' इतीट्प्रतिषेधो भविष्यतीति किमीदित्करणेन।

अपर आह—चुरादावदन्तौ कृपितनी पठितव्याविति॥ ७५॥

**क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः॥ स्वनिकायप्रसिद्धिरिति।** यथा यूपचषालादयो याज्ञिकानामेव प्रसिद्धास्तथा वैयाकरणानां निकाये एषां प्रसिद्धिः। **निघण्टुषु** तु अभ्यवहारपर्यायतया प्रत्यवसानशब्दस्य पाठो वैयाकरणप्रसिद्धिमूलः। **इदमेषामासितमिति।** 'अधिकरणवाचिनश्च' इति षष्ठी।

भावबोधिनी

द्विवचनान्त सम्प्रदान का परामर्श करने के लिये है, अन्यथा [ द्विवचनान्त प्रयोग न करते तो 'अन्यत्र उणादयः' के द्वारा केवल पूर्ववर्ती ] अपादान का ही पर्युदास [ निषेध ] होता, क्योंकि वही अव्यवहित पूर्व है। उदा०—कृषितः कृष्यते वासौ—[ इस विग्रह में ] कृषिः [ खेती, कृष् धातु से "इक कृष्यादय" से इक् होता है। ] तन्तुः [ तनितः तन्यते वासौ—इस विग्रह में तन् धातु से "सितनि ( उ० सू० १।६६ ) से तुन् प्रत्यय होने पर तन्+तु=तन्तुः=सूत्र ]। वर्त्म [ वृत्तम् इति – वृत्+मनिन्=मन्, ऋ का गुण, रपर वर्त्म=मार्ग ] चर्म [ चरितं तद इति चर्+मनिन्=मन्—चर्म=चमड़ा ]॥ ७५॥

ध्रौव्य अर्थवाली=अकर्मक, प्रत्यवसानार्थ=अभ्यवहारार्थक=भोजनार्थक—ऐसी व्याकरण-शास्त्र में प्रसिद्धि है। ध्रौव्य, गति और प्रत्यवसान अर्थवाली धातुओं से जो क्त किया जा रहा है वह 'अधिकरण' अर्थ में होता है। और चकार के बल से जो अर्थ प्राप्त होता है उसमें भी होता है—(१) ध्रौव्य=अकर्मक अर्थवाली धातुओं से—कर्ता, भाव और अधिकरण इन तीन अर्थों में; (२) गति अर्थवाली धातुओं से—कर्ता, कर्म, भाव और अधिकरण इन चार अर्थों में; (३)

गत्यर्थेभ्यः–कर्तृकर्मभावाधिकरणेषु, प्रत्यवसानार्थेभ्यः—कर्मभावाधिकरणेषु। ध्रौव्यार्थेभ्यस्तावत्–आसितो देवदत्तः, आसितं तेन, इदमेषामासितम्। गत्यर्थेभ्यः–यातो देवदत्तो ग्रामम्, यातो देवदत्तेन ग्रामः, यातं देवदत्तेन, इदमेषां यातम्। प्रत्यवसानार्थेभ्यः–भुक्त ओदनो देवदत्तेन, देवदत्तेन भुक्तम्, इदमेषां भुक्तम्॥

कथं भुक्ता ब्राह्मणाः, पीता गाव इति ? अकारो मत्वर्थीयः–भुक्तमेषामस्ति, पीतमेषामस्तीति।

न्यासः

**कथमित्यादि**। **भुक्ता ब्राह्मणाः पीता गाव इति**। कर्तरि निष्ठा, अन्यथानभिहितत्वात् कर्तुर्ब्राह्मण-शब्दाद् गोशब्दाच्च कर्तरि तृतीया स्यात्। न प्रत्यवसानार्थेभ्यः केनचित् कर्तरि क्तो विहितः, तत् कथमेतौ प्रयोगावुपपद्येते ? इत्याह–**मत्वर्थीयोऽकार इति**। अर्शआदित्वात्। अथ गत्यर्थाकर्मकादिसूत्रादनन्तरमिदं कस्मान्न पठ्यते, एकः एवं सति गुणो भवति, द्विः क्तग्रहणं न कर्तव्यं भवति। तदेवं वक्तव्यम्—आदिकर्मणि क्तः कर्तरि च, ततः श्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च, ततोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्य इति, एवञ्च द्विः क्तग्रहणं गत्यर्थाकर्मग्रहणञ्च न कर्तव्यं भवति ? अशक्यमेवं वक्तुम्; एवं ह्युच्यमाने यथा ध्रौव्यार्थेभ्यः कर्तरि क्तो भवति, तथा प्रत्यवसानार्थेभ्योऽपि स्यात्, स च नेष्यते। तस्माद् यथा-न्यासमेवास्तु॥ ७६॥

पदमञ्जरी

**कथमित्यादि**। कर्तरि निष्ठां मन्यमानस्य प्रश्नः। **अकारो मत्वर्थीय इति**। अर्शआदेराकृतिगणत्वादच् प्रत्यय इत्यर्थः।

इह द्विर्गत्यर्थाकर्मकग्रहणं च क्तग्रहणं च क्रियते, सकृदेव तु शक्यं कर्तुम्, कथम् ? एवं वक्ष्यामि—'क्त्वोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः, ततो गत्यर्थाकर्मकेभ्यः कर्तरि च, चकारादधिकरणे च,' अनु-वृत्ताच्चकाराद्यथाप्राप्तं च, ततः श्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च, कर्तरीत्येव, एतेभ्यश्च कर्तरि क्तो भवति चकाराद्यथाप्राप्तं च, अधिकरण [ ग्रहण (?) ] तु नात्रानुवर्तते, योगविभागकरणसामर्थ्यात्, तत आदिकर्मणि च कर्तरि क्तो भवति चकाराद्यथाप्राप्तं च, ततो दाशगोघ्नावित्यादि ? तथा तु न कृतमित्येव॥ ७६॥

भावबोधिनी

प्रत्यवसान = भक्षण अर्थवाली धातुओं से—कर्म, भाव और अधिकरण इन तीन अर्थों में [ क्त होता है ] (१) पहले ध्रौव्य अर्थवाली = अकर्मक से [ क्त के ] उदा० – आसितः देवदत्तः [ देवदत्त बैठा। आस् + क्त, इट् ]। आसितं तेन। [ देवदत्त के द्वारा बैठा गया। यहाँ कर्म अर्थ में क्त है ]। इदम् एषाम् आसितम्। [ यह इनका आसित = आसन है—आस्यते-ऽस्मिन्—जिस पर बैठा जाता है—यहाँ अधिकरण में क्त है "अधिकरणवाचिनश्च" २।२।६८ से षष्ठी है। ] (२) गति अर्थवाली— देवदत्तः ग्रामं यातः। [ देवदत्त गाँव गया। या + क्त, कर्ता अर्थ में ]। देवदत्तेन ग्रामः यातः। [ देवदत्त द्वारा गाँव जाया गया। यहाँ कर्म में क्त है। ] यातं देवदत्तेन। [ देवदत्त द्वारा जाया गया। यहाँ भाव में क्त है। ] 'इदम् एषां यातम्। [ यह इनका मार्ग है, जिस पर चला जाय—यह अधिकरण अर्थ है। ] (३) भक्षणार्थक से—भुक्तः ओदनः देवदत्तेन [ देवदत्त के द्वारा चावल खाया गया। यहाँ भुज् + क्त, कर्म में ]। देवदत्तेन भुक्तम् [ देवदत्त द्वारा खाया गया। यहाँ भाव में क्त है। ] इदम् एषां भुक्तम्। [ यह इनका भोजनपात्र है, भुज्यतेऽस्मिन्—यह अधिकरण में क्त है।]

'भुक्ताः ब्राह्मणाः, पीताः गावः [ ब्राह्मणों ने खा लिया, गायों ने पी लिया ]—ये प्रयोग कैसे होते हैं ? [ अर्थात् प्रत्यवसानार्थक से कर्ता अर्थ में प्रत्यय कैसे होता है ? ] यहाँ [ "अर्श आदिभ्योऽच्" ५।२।१२७ सूत्र से मतुप् अर्थवाला अकार प्रत्यय भी है – भुक्तम् = भोजनम् एषाम् अस्ति, पीतम् = पानम् अस्ति एषाम्। [ इस प्रकार खाये हुये ब्राह्मण और पान की हुई गायें—यह अर्थ प्रतीत हो जाता है। ]॥ ७६॥

१२१०. लस्य ॥ ७७ ॥ ( २१७३ )

**'लस्य' इत्ययमधिकारः। अकार उच्चारणार्थः। लकारमात्रं स्थानित्वेनाधिक्रियते। यदित ऊर्ध्वमनुक्रमिष्यामो लस्येत्येवं तद्वेदितव्यम्। किं चेदं लस्येति? दश लकारा अनुबन्धविशिष्टा विहिता अर्थविशेषे कालविशेषे च, तेषां विशेषकराननुबन्धानुत्सृज्य यत्सामान्यं तद् गृह्यते। षट् टितः, चत्वारो ङितः अक्षरसमाम्नायवदानुपूर्व्या कथ्यन्ते – लट्। लिट्। लुट्। लृट्। लेट्। लोट्। लङ्। लिङ्। लुङ्। लृङ्। इति॥**

**अथ लकारमात्रस्य ग्रहणं कस्मान्न भवति–लुनाति, चूडाल इति? धात्वधिकारोऽनुवर्तते, कर्त्रादयश्च**

न्यासः

**लस्य॥ अकार उच्चारणार्थ इति।** एतेनानुबन्धशङ्कां निराकरोति। अनुबन्धे ह्यस्मिन्नकारानुबन्धविशिष्टयोरेव लङ्लटोर्ग्रहणं स्यात्, नान्येषां लिडादीनाम्। **अर्थविशेषे इति।** कर्तृकर्मादौ। **कालविशेषे इति। वर्तमानादौ। अक्षरसमाम्नायवदिति।** यथाक्षरसमाम्नाये प्रत्याहारेऽकारादयो वर्णा आनुपूर्व्या कथ्यन्ते, तद्वदित्यर्थः।

**अथ लकारमात्रस्य ग्रहणं कस्मान्न भवतीति।** विशेषानुपादानादिति भावः। **चूडाल इति।** 'प्राणिस्थादातो लजन्यतरस्याम्' इति लच्। **धात्वधिकार इति।** 'धातोः' इति पञ्चम्यन्तमनुवर्तते, तेन च लकारो विशिष्यते—धातोर्विहितस्य लस्येति। 'लः कर्मणि च भावे चाकर्मकेभ्यः' इत्यादौ प्रकरणे येऽर्थाः कर्तृकर्म-

पदमञ्जरी

**लस्य॥ अकार उच्चारणार्थ इति।** नानुबन्धः, अन्यथा, लङ्लटोरेव ग्रहणं स्यात्; ततश्च परस्मैपदानां णलादयः, 'लोटो लङ्वत्', 'एरुः' इत्यादिकार्यविधानमनुपपन्नं स्यात्; लिङ्लोटोस्तिबादीनामभावात्। **लकारमात्रं स्थानित्वेनाधिक्रियत इति।** ननु चेत्संज्ञायां लोपः प्राप्नोति? वचनसामर्थ्यात् सत्यामपीत्संज्ञायां लोपो न भविष्यति। एवमपि लित्स्वरः प्राप्नोति? णलो लित्करणं ज्ञापकम्—न लादेशेषु लित्स्वरो भवतीति। **किञ्चेदमिति।** लकारमात्रस्य ग्रहणं प्राप्नोतीति मन्यमानस्य प्रश्नः। 'धात्वधिकारोऽनुवर्तते' इति वक्ष्यमाणाभिप्रायेणाह—**दश लकारा इति।** अक्षरसमाम्नाये ययानुपूर्व्याऽकारादयः, तदानुपूर्वीविशिष्टैरकारादिभिरनुबन्धैः कथ्यन्ते; न तु विधानक्रमेणेत्यर्थः।

**लकारमात्रस्य ग्रहणं कस्मान्न प्राप्नोतीति।** विशेषानुपादानात् प्राप्नोत्येवेति भावः। वर्णग्रहणेषु चार्थवद्ग्रहणपरिभाषा न प्रवर्तते, तथा च यस्येति लोपोऽनर्थकस्यापि भवति—दैवदत्तिरिति, अकुर्वह्यत्रेति यणादेशः। **धात्वधिकारोऽनुवर्तत इति।** धातुग्रहणमनुवर्तत इत्यर्थः। एवमप्यग्निचिल्लुनाति—अत्रापि प्राप्नोति? विहितविशेषणं धातुग्रहणम्। एवमपि 'शामामलिभ्यो लः' औणादिकः—शाला, माला, मल्लः, अत्रापि प्राप्नोति? उणादयोऽव्युत्पन्नानि प्रातिपदिकानि। तथापि परिहारान्तरमाह—**कर्त्रादय इति।** 'लः कर्मणि च'

भावबोधिनी

'लस्य' [ ल् के स्थान पर हो ] यह अधिकार सूत्र है। इसमें अकार उच्चारण [ की सुविधा ] के लिये है। केवल लकार ही स्थानी है--इस रूप से अधिकार चलता है। इसके आगे [ पादसमाप्तिपर्यन्त जो कहे जायेंगे वे लकार के स्थान पर होते हैं—ऐसा समझना चाहिये। ल का यह क्या किया जा रहा है? [ अकार टकार आदि ] अनुबन्धों से विशिष्ट दश लकारों का विधान [ कर्तृ, कर्म भाव-इन ] अर्थविशेषों में और [ वर्तमान भूत भविष्यत्—इन कालविशेषों में किया गया है, उन लकारों के विशेषकर = विशेष अनुबन्धों को हटाकर जो सामान्य [ 'ल्' ] बचता है उसी का ग्रहण होता है। इनमें छह टित् और चार ङित् अक्षरसमाम्नाय के समान आनुपूर्वी से कहे जाते हैं। [ अइउण्। ऋऌक्। ए ओङ्—में जो क्रम है उसी प्रकार यहाँ भी कहे जाते हैं ]—(१) लट्, (२) लिट्, (३) लुट्, (४) लृट् (५) लेट्, (६) लोट्, (७) लङ्, (८) लिङ्, (९) लुङ्, (१०) लृङ्। केवल लकार का ही ग्रहण करने पर इनमें क्यों नहीं होता है—लुनाति, चूडालः? [ लु धातु है, चूडालः में लच् प्रत्यय है। ] यहाँ "धातोः" ३।१।९१ इसका अधिकार है [ अर्थात् धातु से परे

विशेषकाः ॥

**१२११. तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ॥ ७८ ॥ ( २१५४ )**

**लस्य तिबादय आदेशा भवन्ति। तिप्सिप्मिपां पकारः स्वरार्थः। इटष्टकारः 'इटोऽत्' ( ३.४.१०४ )**

न्यासः

भावा निर्दिष्टास्त इहानुवर्तन्ते, तैश्च लकारो विशिष्यते—कर्त्रादिषु विहितस्य लस्येति। तेन विशिष्टस्यैव लकारस्य ग्रहणं भवति, न सर्वस्येति भावः॥ ७७॥

**तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्॥ पकारः स्वरार्थ इति।** 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तो यथा स्यात्। **इटष्टकार इत्यादि**। ननु चासत्यप्येतस्मिन् विशेषणार्थे नैव किञ्चिदनिष्टं प्राप्नोति, 'इटोऽत्' इत्यत्र सूत्रे लिङादेशस्येटोऽद्विधानात्, ततोऽन्यस्य लिङादेशस्येकारस्यासम्भवात्। तिबाद्यवयवोऽस्तीति चेत्? न तस्यालादेशत्वात्। तिबादयो हि समुदाया लादेशाः, न च तदवयवा इकारादयः अर्थवद्ग्रहणपरिभाषयार्थवदिकारस्य ग्रहणे सति कुतस्तिबाद्यवयवस्य प्रसङ्गः। न हि तेऽर्थवन्तः; तिबादीनामेव समुदायानामर्थवत्वात्। तस्मान्न कर्तव्य एव टकारः? सत्यं न कर्तव्यं य एवं प्रतिपत्तुं समर्थस्तं प्रति, यस्त्वसमर्थस्तं प्रति कर्तव्य एव। अथ 'आद्यन्तौ टकितौ' इति विशिष्टदेश आगमभूतस्यास्य विधानं यथा स्यादित्येवमर्थष्टकारः कस्मान्न विज्ञायते? इत्याह—**तिबादिभिरित्यादि**। तुल्यत्वम् = सदृशत्वम्, तत् पुनरेकयोगनिर्दिष्टत्वेन। तस्मिन् सति लस्येत्यनया षष्ठ्या सर्वेषां तिबादीनां सम्बन्धो भवति। सा स्थानषष्ठी समाश्रीयेत। अवयवषष्ठी वा। तत्राद्ये पक्षे सर्वेषां तिबादीनामनुग्रहो भवति; द्वितीये त्विट एव। तत्र यस्मिन् पक्ष आश्रीयमाणे सर्वेषामनुग्रहो भवति स एवाश्रयितुं युक्त इति स्थानषष्ठीय-

पदमञ्जरी

इत्यत्र निर्दिष्टा अर्थाः कर्तृकर्मभावा इहानुवर्तन्ते, तैश्च लकारो विशिष्यते—कर्त्रादिषु विहितस्य लस्येति, तेन विशिष्टविषयस्यैव लस्य ग्रहणम्, न सर्वस्य॥ ७७॥

**तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्॥** तिबादीनां समाहारद्वन्द्वः। **पकारः स्वरार्थ इति**। प्रदर्शनमेतत्, 'सार्वधातुकमपित्' इत्याद्यपि प्रयोजनम्। **इटष्टकार इत्यादि**। ननु 'इटोऽत्' इत्यत्र लिङित्यनुवर्तते, तेनेकारस्यात्वविधानेऽपि नास्त्यतिप्रसङ्गः? एवमपि तिबाद्यवयवस्य प्राप्नोति, यथा 'एरुः' इत्येतल्लोट इत्यनुवृत्तावपि तिबाद्यवयवस्य भवति। न हि तत्रावयवषष्ठी, लिङ इति तु स्थानषष्ठीत्यत्र प्रमाणमस्ति। अथ 'आद्यन्तौ टकितौ' इति देशविध्यर्थष्टकारः कस्मान्न भवतीत्याह—**तिबादिभिरित्यादि**। तुल्यत्वम् = सदृशत्वम्, तच्चैकयोगनिर्दिष्टत्वेन। लस्येत्येका षष्ठी, तत्र तिबादयः सप्तदशादेशाः स्थाने योगं प्रयोजयन्ति, तानेको नोत्सहते विहन्तुमित्यर्थः। **महिङो ङकार इत्यादि**। तिङित्युपलक्षणम्। तङित्यपि

भावबोधिनी

लकार का ग्रहण है ] और कर्ता आदि उसके विशेषक हैं। [ कर्ता अर्थ में होने वाला लकार, कर्म अर्थ में होने वाला लकार। अतः इनमें अतिप्रसंग नहीं प्राप्त होता है। ]॥ ७७॥

लकार के स्थान पर तिप् आदि [ अठारह प्रत्यय ] आदेश होते हैं। तिप्, सिप् और मिप् का पकार [ अनुबन्ध ] स्वरसिद्धि के लिये है। [ "अनुदात्तौ सुप्पितौ" ३।१।४ से अनुदात्तस्वर करने के लिये है। साथ ही "सार्वधातुकमपित्" १।२।४ अपित् सार्वधातुक ङिद्वत् होता—आदि की सिद्धि भी प्रयोजन है। ] 'इट्' प्रत्यय का टकार 'इटोऽत्' ३।४।१०६ इस विशेषण के लिये है। तिप् आदि [ सत्तरह ] आदेशों के समान होने के कारण [ यहाँ इट् का ट् देशविधान के लिये नहीं है। [ अर्थात् टित् मानकर 'आद्यन्तौ टकितौ' १।१।४६ आद्यवयव हो जाय, ऐसा सम्भव नहीं है। ] महिङ् का का ङकार [ अनुबन्ध ] 'तिङ्' इस प्रत्याहार के ज्ञान [ सिद्धि ] के लिये है। उदा० —

**इति विशेषणार्थः, तिबादिभिरादेशैस्तुल्यत्वान्न देशविध्यर्थः। महिङो ङकारस्तिङिति प्रत्याहारग्रहणार्थः। पचति। पचतः। पचन्ति। पचसि। पचथः। पचथ। पचामि। पचावः। पचामः। पचते। पचेते। पचन्ते। पचसे। पचेथे। पचध्वे। पचे। पचावहे। पचामहे। एवमन्येष्वपि लकारेषूदाहार्यम् ॥**

**न्यासः**

मङ्गीकर्तव्या। इटोऽप्यादेशत्वं तेन भवतीति न भवति देशविध्यर्थष्टकारः। अथ वा—तिबादिभिरेकयोगनिर्दिष्टत्वेन यत् तिबादिभिस्तुल्यत्वं तत् साहचर्योपलक्षणम्। तिबादिभिस्तुल्यत्वात् = तत्साहचर्यादित्यर्थः। साहचर्येण सन्दिग्धार्थनिश्चयो भवति, यथा—सवत्सा धेनुरिति। तथेहापि सन्देहो जायते—किमयमादेशः? उताागमः इति? तथापि तिबादिभिरसन्दिग्धादेशभावैः साहचर्यादादेशोऽयमिति निश्चीयते। तेन देशविध्यर्थता टकारस्य न भवति। यद्येवम्, 'फलपाटिनमिमनिजनां गुक् पटिनाकिधतश्च' इत्यत्रापि पट्यादिभिरादेशैस्तुल्यत्वाद् गुगागमोऽप्यादेशः स्यात्? नैष दोषः, 'संज्ञायाम्' इति तत्रानुवर्तते, न चादेशेन संज्ञा गम्यते, किन्त्वागमेन। तस्माद् गुक आगमत्वं वेदितव्यम्। तत्रैकापि षष्ठी यदादेशेन सम्बध्यते, तदा स्थानषष्ठी भवति, यदा त्वागमेन तदावयवषष्ठी। **महिङो ङकार इत्यादि**। अथ ङित्वार्थो ङकारः कस्मान्न भवति? तस्य 'सार्वधातुकमपित्' इत्यनेनैव सिद्धत्वात् ॥ ७८ ॥

**पदमञ्जरी**

प्रत्याहारो भवति। चिनुमहे इत्यादौ तु गुणप्रतिषेधार्थो न भवति; 'सार्वधातुकमपित्' इत्यनेनैव सिद्धत्वात्। यत्र ह्यार्धधातुकम् एषिषिमहीति, तत्र ङित्त्वार्थः कस्मान्न भवति? प्रत्याहारे चरितार्थस्य समुदायानुबन्धस्यावयवानुबन्धत्वे प्रमाणाभावात्। तृनि कथम्? तस्यापि हि नकार 'न लोकाव्यय' इत्यत्र प्रत्याहारे चरितार्थः' 'औङ आप' इत्यत्र च वक्ष्यते—'सामान्यग्रहाणार्थो ङकारः, अन्यथा निरनुबन्धकस्य प्रथमाद्विवनचस्यैव ग्रहणं स्याद्, न सानुबन्धकस्यौटः' इति, तच्च विरुध्येत; तस्यापि टकारस्य सुडिति प्रत्याहारे चरितार्थतया औकारस्य निरनुबन्धकत्वात्। तस्मान्महिङो ङकारः प्रत्याहारार्थः, न त्ववयवानुबन्ध इत्याचार्याणां स्मृतिपरम्परैवात्र शरणम् ॥ ७८ ॥

**भावबोधिनी**

(क) परस्मैपद के प्रथमपुरुष, मध्यमपुरुष और उत्तमपुरुष —

(१) पचति—√पच् + लट् = तिप् = ति, शप् = अ—पचति। [ वह पकाता है। ]

(२) पचतः—√पच् + लट् = तस्, शप् = अ—पचतस्, स् का रुत्व विसर्ग [ वे दोनों पकाते हैं। ]

(३) पचन्ति—√पच् + लट् = झि, "झोऽन्तः" ७।१।३ से झ् = अन्त् आदेश, शप् = अ—पच् अ + अन्ति = "अतो गुणे" ६।१।९७ पररूप [ वे सब पकाते हैं। ]

(१) पचसि—√पच् + लट् = सिप् = सि, शप् = अ [ तुम पकाते हो। ]

(२) पचथः—√पच् + लट् = थस्, शप् = अ, स् का रुत्व विसर्ग [ तुम दोनों पकाते हो। ]

(३) पचथ—√पच् + लट् = थ, शप् = अ, [ तुम सब पकाते हो। ]

(१) पचामि—√पच् + लट् = मिप् = मि, शप् = अ, पच + मि "अतो दीर्घो यञि" ७।३।१०१ से दीर्घ—पचामि, [ मैं पकाता हूँ। ]

(२) पचावः—√पच् + लट् = वस्, शप् = अ, स् का विसर्ग, [ हम दोनो पकाते हैं। ]

(३) पचामः—√पच् + लट् = मस्, शप् = अ, दीर्घ, स् का विसर्ग, [ हम सब पकाते हैं। ]

(ख) आत्मनेपद के प्रथमपुरुष, मध्यमपुरुष और उत्तमपुरुष के रूप—

(१) पचते—पच् + लट् = त, शप् = अ, "टित आत्मनेपदानां टेरे" ३।४।७९ से सभी प्रत्ययों की टि [ अन्त्य स्वर, और व्यञ्जन ] का एत्व—पचते।

## १२१२. टित आत्मनेपदानां टेरे ॥ ७९ ॥ ( २२३३ )

**टितो लकारस्य स्थाने यान्यात्मनेपदानि तेषां टेरेकारादेशो भवति । तथा चैवोदाहृतम् ॥**

**इह कस्मान्न भवति—पचमानः, यजमानः ? प्रकृतैस्तिबादिभिरात्मनेपदानि विशेष्यन्ते ॥**

न्यासः

**टित आत्मनेपदानां टेरे ॥ इह कस्मान्न भवतीत्यादि ।** शानजपि टितो लकारस्य सम्बन्ध्यात्मनेपदसंज्ञकश्च, तस्मात् तस्यापि टेरेत्वेन भवितव्यमित्यभिप्रायः । **प्रकृतैरित्यादि ।** प्रकृतानां तिबादीनां मध्ये यान्यात्मनेपदानि--इत्येवमिहात्मनेपदानि विशिष्यन्ते, तेन न भवत्येष दोषः । न हि शानच् तिबादिषु सन्निविष्टः । लाघवार्थम् 'टितस्तङाम्' इति वाच्ये 'आत्मनेपदानाम्' इति वचनं वैचित्र्यार्थम् । ननु च 'तङाम्' इत्युच्यमाने तसस्तकारेण प्रत्याहारग्रहणं स्यात् ? अर्थवद्ग्रहणपरिभाषया न भविष्यति । यस्तर्हि यस्य स्थान आदिश्यते तेन स्यात् ? न, तिबादिषु सन्निविष्टा ये तेषां तिङां ग्रहणं विज्ञास्यते । प्रत्यासत्तेर्वा आत्मनेपदीयेन तशब्देन प्रत्याहारग्रहणं विज्ञास्यते । व्याप्तेस्त्वनाश्रय, लक्ष्यस्थित्यनुरोधात् ॥ ७९ ॥

पदमञ्जरी

**टित आत्मनेपदानां टेरे ॥ टितो लकारस्य स्थाने इति ।** एतेन टितः, आत्मनेपदानामिति व्यधिकरणे षष्ठ्याविति दर्शयति । यदि तु प्रत्येकसम्बन्धादेकवचनमित्याश्रित्य टितामात्मनेपदानामित्याश्रीयते, अकुर्वीत्यत्रापि प्रसज्येतेति भावः ।

**प्रकृतैरित्यादि ।** य एते तिबादयः प्रकृतास्तेषां मध्ये यान्यात्मनेपदानि विहितानीत्येवमात्मनेपदानि विशिष्यन्ते । न च तिबादीनां मध्ये शानच् सन्निविशिष्टस्ततो न तस्य प्रसङ्ग इत्यर्थः । एवं च तङामित्येव वक्तव्यम् । केचित्तु 'आने मुक्' इति निर्देशं वर्णयन्ति—तिङामेवैत्वं नान्येषामिति; इतरथा ह्यानयीति वक्तव्यं स्यात् । नेति वयम्, योऽलादेश आनः 'पूङ्यजोः शानन्' तस्यायं निर्देशः स्याद् [ पवमानः वयमानः, यजमान इति ॥ ७९ ॥

भावबोधिनी

(२) पचेते—√पच् + लट् = आताम्, शप् = अ, टि का एत्व—पच + आते "आतो ङितः" ७।२।८१ से आ का का इय्, गुण, यलोप—पचेते ।

(३) पचन्ते – √पच् + लट् = झ = अन्त, शप् = अ, टि का एत्व--पचन्ते ।

(१) पचसे—√पच् + लट् = थास् = से, शप् = अ—पचसे ।

(२) पचेथे—√पच् + लट् = आथाम्, टि का ए–पच + आथे, आ का इय् गुण, यलोप—पचेथे ।

(३) पचध्वे—पच् + लट् + ध्वम्, शप् = अ, टि का ए—पचध्वे ।

(१) पचे—पच् + लट्, इट् = इ, शप्, गुण, टि का ए, पररूप—पचे ।

(२) पचावहे—पच् + लट्, वहि, शप्, दीर्घ, टि का एत्व,—पचावहे ।

(३) पचामहे—पच् + लट् = महि, शप्, दीर्घ, टि का एत्व—पचामहे ॥ ७८ ॥

टित् [ जिनमें ट् अनुबन्ध की इत् संज्ञा होती है—लट् से लोट् तक ] लकार के स्थान पर जो आत्मनेपद प्रत्यय होते हैं उनकी टि [ "अचोऽन्त्यादि टि" १।१।६३ अन्त्यस्वर या अन्त्यस्वर के सहित बादवाला व्यञ्जन ] का एत्व हो जाता है । ऊपर आत्मनेपद के नौ रूपों में उदाहरण दिया जा चुका है ।

पचमानः, यजमानः—[ इनमें लट् का शानच् होता है आत्मनेपद है, अतः ] यहाँ ( एत्व ) क्यों नहीं होता है ? प्रस्तुत तिप् आदि के द्वारा आत्मनेपद प्रत्ययों को विशेषित किया जा रहा है । [ अर्थात् प्रस्तुत स्थल पर जो तिप् आदि हैं उनमें जो आत्मनेपद हैं उन्हीं [ तङ् ] की टि का एत्व होता है, अन्यत्र नहीं । ] ॥ ७९ ॥

**१२१३. थासः से ॥ ८० ॥ ( २२३६ )**

**'टितः' इत्येव। टितो लकारस्य यस्थास् तस्य सेशब्द आदेशो भवति। पचसे। पेचिषे। पक्तासे। पक्ष्यसे ॥**

**१२१४. लिटस्तझयोरेशिरेच् ॥ ८१ ॥ ( २२४१ )**

**लिडादेशयोस्तझयोर्यथासंख्यम् एश्, इरेच् – इत्येतावादेशौ भवतः। शकारः सर्वादेशार्थः। चकारः स्वरार्थः। पेचे, पेचाते, पेचिरे। लेभे, लेभाते, लेभिरे ॥**

**न्यासः**

**थासः से। पेचिष इति ॥** लिट्, 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येत्वाभ्यासलोपौ। **पक्तास इति।** लुट्, तासिः, 'तासस्त्योर्लोपः' इति सकारलोपः। **पक्ष्यस इति।** लृट् 'चोः कुः' इति कुत्वम्—ककारः। अथ थकारमात्रस्यैव सकारादेशः कस्मान्न भवति—थः स इति, थकारस्य सकारे कृते परस्य भागस्य टेरेत्वे सत्यभीष्टं सिध्यत्येव ? नैतच् शक्यम्, एवं ह्याथांशब्दस्य यस्थकारस्तस्यापि स्यात्। धात्वधिकाराद्धातार्यो विहित इति विशेषणान्न भवतीति चेत् ? न, असम्भवात्। न हि तथाविधस्तकारो धातोर्विहितः सम्भवति। अथ धातोरनन्तरस्येति विशिष्येत ? एवमप्यनादित्व एव परस्य स्यात्, नेतरेभ्यो विकरणेभ्यः, व्यवधानादिति यथान्यासमेवास्तु। टेरेत्वेनैव सिद्ध एकारान्तत्वे यदेकान्तत्वमादेशस्य क्रियते तत् 'तिङामादेशानां टेरेत्वं न भवति' इति ज्ञापनार्थम्। तेन डारौरस्प्रभृतिषु टेरेत्वं न भवतीति—पक्ता, पक्तारौ, पक्तार इति ॥ ८० ॥

**लिटस्तझयोरेशिरेच् ॥ शकारः सर्वादेशार्थ इति।** असति तस्मिन् धात्वधिकारात् 'तस्मादित्युत्तरस्य' इत्यादेः परस्य तकारस्य प्रसज्येत। शकारे तु सति 'अनेकाल्शित् सर्वस्य' इति वचनात् सर्वस्य भवति।

**पदमञ्जरी**

**थासः से ॥ पेचिषे इति।** लिट्, 'अत एकहल्मध्ये' इत्यादिना एत्वाभ्यासलोपौ, क्रादिनियमादिट्। इह 'थः सः' इति वक्तव्यम्, थकारस्य सकारे कृते परभागस्य टेरेत्वे सति सिद्धमिष्टम्। पचथः पचथ अत्रापि प्राप्नोति ? 'आत्मनेपदानाम्' इति वर्तते। एवमप्याथामस्थकारस्य प्राप्नोति ? धातोरिति वर्तते—धातोरनन्तरो यस्थकार इति। इहापि तर्हि न प्राप्नोति—पचसे, चिनुषे इति ? विकरणेन व्यवधानात्। क्व तर्हि स्यात् ? य एते लुग्विकरणाः, श्लुविकरणाः, श्नम्विकरणाः। तस्मात् 'थासः से' इति वक्तव्यम्। एवमपि सशब्द एवादेशो विधेयो टेरेत्वेनैव सिद्धम् ? ज्ञापकार्थम्। एतज्ज्ञापयति—आत्मनेपदानां य आदेशास्तेषां टेरेत्वं न भवतीति। तेन पक्ता, पक्तारौ, पक्तार इति डारौरसामेत्वं न भवति ॥ ८० ॥

**लिटस्तझयोरेशिरेच् ॥** पूर्वसूत्रे ज्ञापितम्—आत्मनेपदादेशानां टेरेत्वं न भवतीति, तेन इशिरच्-इत्येतावादेशौ न विहितौ। **शकारः सर्वादेशार्थ इति।** अन्यथा धातोरित्यधिकाराद् 'आदेः परस्य' इति तकारस्य प्रसज्येत। अथ 'शे' इत्येव कस्मान्नोक्तम्, शइरेजिति ह्युक्ते मात्रालाघवं भवति ? नैवं शक्यम्; 'शे' इति

**भावबोधिनी**

'टितः' इसकी अनुवृत्ति होती है। टित् लकार के स्थान पर होने वाला जो 'थास्' उसके स्थान पर 'से' यह आदेश हो जाता है। उदा०—पचसे [ पच्+लट्=थास्=से, शप् ]। पेचिषे [ पच्+लिट्=थास्=से, द्वित्व, एत्व और अभ्यास का लोप, इट्, स् का ष्—पेचिषे ] पक्तासे [ पच्+लुट्=थास्=से, तास्, च् का क्, स् का लोप पक्तासे ] पक्ष्यसे [ पच्+लृट्=थास्=से, "स्यतासी लृलुटोः" ३।१।३३ से लुट् में तास् और लृट् में स्य होने से पच्+स्य+से, च् का क्, स् का ष्, क्+ष्=क्ष्—पक्ष्यसे। [ लोट् में पचसे के 'ए' का 'व' होने पर पचस्व होता है। ] ॥ ८० ॥

लिट् के स्थान पर आदेश होने वाले (१) त और (२) झ के स्थान पर क्रमशः (१) एश् और (२) इरेच्—ये दो आदेश होते हैं। शकार अनुबन्ध [ "अनेकाल्शित् सर्वस्य" १।१।५५ से ] सम्पूर्ण 'त' का आदेश करने के लिये है। [ इरेच् का ] चकार [ "चितः" ६।१।१६३ से अन्तोदात्त ] स्वर करने के लिये है। उदा०—पेचे [ पच्+लिट्=त=एश्=ए,

## १२१८. परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥ ८२ ॥ ( २१७३ )

**'लिटः' इत्येव । लिडादेशानां परस्मैपदसंज्ञकानां यथासंख्यं तिबादीनां णलादयो नवादेशा भवन्ति । लकारः स्वरार्थः । णकारो वृद्धयर्थः । पपाच । पेचतुः । पेचुः । पेचिथ, पपक्थ । पेचथुः । पेच । पपाच, पपच । पेचिव । पेचिम ॥**

**न्यासः**

अथ 'शे' इत्येव कस्मान्नोक्तम् ? नैवं शक्यम्, 'शे' इति हि प्रगृह्यसंज्ञा स्यात् । इह च व्यतिपप इति पिबादेशः स्यात् । एशि तु सति न भवति वक्ष्यति ह्येतत्—'वर्णे यत् स्यात् तच्च विद्यात् तदादौ' इति ॥ ८१ ॥

**परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥ पपक्थेति ।** 'उपदेशेऽत्वतः' इतीडभावः । **पेचिथेति** क्वचित् पाठः, तत्र हि 'ऋतो भारद्वाजस्य' इति नियमादिट् । 'थलि च सेटि' इत्येत्वाभ्यासलोपौ । **पेचेति ।** 'धातोः' इत्यधिकारात् 'तस्मादित्युत्तरस्य' 'आदेः परस्य' इति थकारस्याकारादेशः । द्वयोरकारयोः 'अतो गुणे' पररूपत्वम् । अथ वा—आन्तरतम्याद् बह्वर्थ एव स्थानी युक्त इति समुदायस्यैव भवति । **पेचिव, पेचिमेति ।** क्रादिनियमादिट् ॥ ८२ ॥

**पदमञ्जरी**

प्रगृह्यसंज्ञा स्यात् । इह च पपे सोममिति पिबादेशः प्राप्नोति, जग्ले मम्ले इत्यादौ चात्वं न स्यात् । एशि तु न दोषः, 'वर्णे यत्स्यात्तच्च विद्यात्तदादौ' इति न्यायात् ॥ ८१ ॥

**परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥ तिबादीनामिति ।** एतच्च प्रकरणाल्लभ्यते, तेन क्वसोर्णलादयो न भवन्ति । विधानसामर्थ्याद्वा क्वसोर्णलाद्यभावः । **लकारः स्वरार्थ इति ।** अन्यथा प्रत्ययस्य पित्त्वादनुदात्तत्वेऽपि धातुस्वरे कृते द्विः प्रयोगो द्विर्वचनमिति द्वयोरप्युदात्तत्वं प्राप्नोति । 'अनुदात्तं पदमेकवर्जम्' इति नास्ति, यौगपद्येन सम्भवः पर्यायेण प्रसज्येत । **णकारो वृद्धयर्थ इति ।** इदमन्यथासिद्धम्, 'णलुत्तमो वा' इत्यत्र योगविभागः—अल् णिद्भवतीति, तत उत्तमो वा—वा णिद्भवतीति ; **पपाचेति ।** कथमयं सर्वादेशः, यावता 'नानुबन्धकृतमनेकाल्त्वम्', ततश्च 'धातोः' इत्यधिकाराद् 'आदेः परस्य' इति वकारस्य प्राप्नोति ? अनित्त्वात्सिद्धम् ? न ह्ययं णल्विधानसमये प्रत्यय इत्यनित्त्वाद् णकारस्यानेकाल्त्वात्सर्वादेशः, ततो णकारस्येत्संज्ञेत्यानुपूर्व्यात्सिद्धम् । ननु च णकारो न कर्तव्य इत्युक्तम् ? एवं तर्हि लकार आदौ क्रियते तस्याप्यनित्त्वात्सिद्धम्, ल उत्तमो वेति वक्तव्यम्, एवम् आत औ ल्स्येति, हल्ङ्यादिसूत्रे चाप्यपृक्तं हलिति हल्ग्रहणं लिङ्गं सर्वादेशो णलिति, तद्धि पपाचेत्यादौ मा भूदिति । सर्वादेशत्वे च तदुपपद्यते । **पपक्थेति ।** क्रादिनियमात्प्राप्त इट्

**भावबोधिनी**

द्वित्व पच् पच् + ए, "अत एकहल्मध्येऽनादेशादेर्लिटि" ६।४।१२० से अभ्यास का लोप और अ का एत्व—पेच् + ए = पेचे ] । पेचाते [ पच् + आताम्, प्रक्रिया पूर्ववत् ] । पेचिरे [ पच् + लिट् = झ = इरेच्—द्वित्व, अभ्यासलोप, अ का एत्व—पेचिरे ] लेभे [ लभ् + लिट् = त = एश् शेष पूर्ववत् ] । लेभाते [ लभ् + लिट् = आताम् शेष पूर्ववत् ] । लेभिरे [ लभ् + लिट् = झ = इरच्, द्वित्व, अभ्यासलोप और एत्व—लेभ् + इरे ] ॥ ८१ ॥

'लिटः' इसकी अनुवृत्ति होती है । लिट् के आदेशभूत परस्मैपदसंज्ञक तिप् आदि नौ प्रत्ययों के स्थान पर क्रमशः (१) णल्, (२) अतुस्, (३) उस्, (४) थल्, (५) अथुस्, (६) अ, (७) णल्, (८) व, (९) म—ये नौ आदेश होते हैं । लकार [ "लिति" ६।१।१९३ से उदात्त ] स्वर की सिद्धि के लिये हैं । णकार [ णित् मानकर "अत उपधायाः" ७।२।११६ "अचो ञ्णिति" ७।२।११५ से ] वृद्धि करने के लिये है । उदा०—पपाच [ पच् + लिट् = तिप् = णल् = अ, "लिटि धातोरनभ्यासस्य" ६।१।१८ से द्वित्व, "हलादिः शेषः" ७।४।६० आदि हल् शेष, अन्य का लोप, प पच् + अ, उपधा की वृद्धि—पपाच ] । पेचतुः [ पच् + लिट् = तस् = अतुस्, द्वित्व, अभ्यासलोप, एत्व—पेच् + अतुस् स् का

## १२१६. विदो लटो वा ॥ ८३ ॥ ( २४६४ )

**'परस्मैपदानाम्' इत्येव। 'विद ज्ञाने'-अस्माद्धातोः परेषां लडादेशानां परस्मैपदानां णलादयो नव विकल्पेनादेशा भवन्ति। वेद, विदतुः, विदुः। वेत्थ, विदथुः, विद। वेद, विद्व:, विद्मः॥ न च भवति-वेत्ति, वित्तः, विदन्ति। वेत्सि, वित्थः, वित्थ। वेद्मि, विद्वः, विद्मः॥**

न्यासः

**विदो लटो वा॥ 'विद ज्ञाने' इति।** एतेन ज्ञानार्थस्य विदेर्ग्रहणम्, नान्येषामिति दर्शयति। एवं मन्यते—विद इति पञ्चमी, तेन 'तस्मादित्युत्तरस्य' इत्यनन्तराणां तिबादीनामादेशेन भवितव्यम्। न चान्यस्माद् विदेः परस्मैपदान्यनन्तराणि सम्भवन्ति; विकरणैर्व्यवधानात्। विचारसत्तार्थयोश्चात्मनेपदित्वात् परस्मैपदानुपपत्तिः। तस्मात् ज्ञानार्थस्यैव ग्रहणमिति॥ ८३॥

पदमञ्जरी

'उपदेशेऽत्वतः' इति प्रतिषेधान्न भवति। **क्वचित्पेचियेति** पाठः, 'ऋतो भारद्वाजस्य' इति नियमादिट्, 'थलि च सेटि' इत्येत्वाभ्यासलोपौ। **पेचेति**। धातोरित्यधिकारात् 'तस्मादित्युत्तरस्य' 'आदेः परस्य' इति थकारस्याकारे द्वयोरतो गुणे पररूपत्वम्॥ ८२॥

**विदो लटो वा॥ विद ज्ञाने इति।** सत्ताविचारार्थयोस्त्वात्मनेपदित्वात्तिबादीनामसम्भवः लाभार्थस्यापि विकरणेन व्यवधानादनन्तराणामसम्भव इति भावः॥ ८३॥

भावबोधिनी

रुत्वविसर्ग—] पेचुः [ पच् + लिट = झि = उस्, शेष प्रक्रिया पूर्ववत् ]। पेचिथ, पपक्थ। [ पच् + लिट् = सिप् = थल्= थ, द्वित्व करने पर पच् पच् + थ, "ऋतो भारद्वाजस्य" ७।२।६३ इस नियम सूत्र से वैकल्पिक इट् करने पर "थलि च सेटि" ६।४।१२१ सूत्र से अभ्यासलोप और अ का ए—पेचिथ। इट् न होने पर हलादिशेष पपच् + थ, च् का कुत्व—पपक्थ ]। पेचथुः [ पच्+लिट् = थस् = अथुस्—शेष पूर्ववत् ]। पेच [ पच् + लिट् = थ = अ, शेष पूर्ववत् ]। पपाच, पपच। [ पच् + लिट् = मिप् = णल् = अ, द्वित्व, हलादिशेष, "णलुत्तमो वा" ७।१।९१ से वैकल्पिक णित्वपक्ष में उपधा की वृद्धि—पपाच। णित्वाभावपक्ष में पपच ] पेचिव [ पच् + लिट् = वस् = व, शेष पूर्ववत् ]। पेचिम [ पच्+ लिट्=मस्=म, शेष प्रक्रिया पूर्ववत् ]॥ ८२॥

'परस्मैपदानाम्' इसकी अनुवृत्ति होती है। ज्ञानार्थक विद्—इस धातु से परे लट् के आदेशभूत परस्मैपद प्रत्ययों के स्थान पर णल आदि नौ आदेश विकल्प से होते हैं। उदा०—वेद [ विद् + लट् = तिप् = णल् = अ, उपधागुण, यहाँ द्वित्वादि की शंका नहीं करनी चाहिये क्योंकि लिट् परे रहते ही धातु का द्वित्व होता है। अर्थ—वह जानता है ] विदतुः। [ विद् + लट् = तस् = अतुस् वे दोनों जानते हैं ] विदुः। [ विद् + लट् = झि = उस्। वे सब जानते हैं। ] वेत्थ। [ विद् + लिट् = सिप् = थल् गुण, चर्त्वं। तुम जानते हो। ] विदथुः [ विद्+लट्=थस् = अथुस्। तुम दोनों जानते हो। ] विद। [ विद् + लट् = थ = अ। तुम सब जानते हो। ] वेद। [ विद् + लट् = मिप् = णल् = अ। मैं जानता हूँ। ] विद्वः। [ विद् + लट् = वस् = व। हम दोनों जानते हैं। ] विद्मः। [ विद् + लट् = मस् = म। हम सब जानते हैं। ]।

और णलादि आदेश नहीं भी होते हैं। [तब तिप् आदि के साथ रूप बनते हैं]—वेत्ति [ विद् + लट् = तिप् = ति, गुण ]। वित्तः [ विद् + लट् = तस्, चर्त्वं ]। विदन्ति [ विद् + लट् = झि = अन्ति ]। वेत्सि [ विद् + लट् = सिप् गुण ]। वित्थः [ विद् + लट् = थस्, चर्त्वं ]। वित्थ [ विद् + लट् = थ, चर्त्वं ]। वेद्मि [ विद् + लट् = मिप् ] विद्वः [ विद् + लट् = वस् ]। विद्मः [ विद् + लट् = मस्। इनके अर्थ पूर्वोक्त ही हैं ]॥ ८३॥

## १२१७. ब्रुवः पञ्चानामादित आहो ब्रुवः ॥ ८४ ॥ ( २४८० )

**'परस्मैपदानाम्' इत्येव 'लटो वा' इति च । ब्रुवः परस्य लटः परस्मैपदानां पञ्चानामादिभूतानां पञ्चैव णलादय आदेशा भवन्ति, तत्सन्नियोगेन च ब्रुव आहशब्द आदेशो भवति । आह । आहतुः । आहुः । आत्थ ।**

### न्यासः

**ब्रुवः पञ्चानामादित आहो ब्रुवः ॥ पञ्चैवेत्यादि ।** ननु च नेह द्वितीयं पञ्चग्रहणम्, नाप्यादिग्रहणमादेशविशेषणम्, तत्र पञ्चानामाद्यानां स्थाने सर्वैरेव णलादिभिः पर्यायेण भवितव्यम्, तत् कथं पञ्चैव णलादय आदेशा भवन्तीत्येषोऽर्थो लभ्यते ? इत्यत आह—**स्थानिसम्बन्धादित्यादि ।** इह हि स्थानिनः पञ्चैवाऽद्या निर्दिष्टाः, तेषाञ्च 'स्थानेऽन्तरतमः' इति परिभाषया पञ्चभिरेवाद्यैः सम्बन्धः सम्भवति, नेतरैश्च । तथा हि—पञ्चानामेवाद्यानामान्तरतम्यमस्ति, तुल्यार्थत्वात् । नान्येषाम्, विपर्ययात् । तस्मात् स्थानिसम्बन्धादादेशेष्वपि पञ्चत्वमादित्वञ्च विज्ञायत इति युक्तम्—पञ्चैव णलादय आदेशा भवन्तीति । **आत्थेति ।** 'आहस्थः' इति हकारस्य थकारः, तस्य 'खरि च' इति चर्त्वम्—तकारः । **ब्रवीतीति ।** 'ब्रुव ईट्' ।

**परेषामिति ।** थादीनाम् । अथ 'ब्रुवः' इति किमर्थं पुनरिदमुच्यते, यावता ब्रुव इति यदेतत् पञ्चम्यन्तं तदेवार्थाद्विभक्तेर्विपरिणामो भविष्यतीति षष्ठ्यन्तं विज्ञास्यत इत्याह—**ब्रुव इति पुनर्वचनमित्यादि ।** असति हि

### पदमञ्जरी

**ब्रुवः पञ्चानामादित आहो ब्रुवः ॥ पञ्च णलादय इति ।** आदेशा अपि पञ्चैव, तत्राप्यादितो णलादयः पञ्च, न पुनरिच्छातः पञ्चेत्यर्थः । कथं पुनर्द्वितीयं पञ्चग्रहणमादिग्रहणं चान्तरेणादेशेष्वयं विशेषो लभ्यते, ननु सर्वैरेव णलादिभिः पञ्चानां स्थाने युक्तम्भवितुम् ? उच्यते; पूर्वसूत्रे तावद्यथासङ्ख्यं प्रवर्तते, ततश्च तत्रैव निर्ज्ञातः स्थानिविशेषेण णलादीनां सम्बन्धः, त एवेहानुवर्तन्त इत्यत्रापि तथैव भविष्यति, ततश्च स्थानिसम्बन्धादिति

### भावबोधिनी

'परस्मैपदानाम्' और 'लटो वा' इन दो की अनुवृत्ति होती है । ब्रू धातु से परे लट् के [ स्थान पर आदेश होने वाले ] परस्मैपदसंज्ञक आदिभूत पाँच [ तिप्, तस्, झि, सिप्, थस् ] के स्थान पर क्रमशः पाँच ही णल् आदि [ णल्, अतुस्, उस्, थल्, अथुस् ] आदेश विकल्प से होते हैं । और इन आदेशों के सन्नियोग से 'ब्रू' धातु के स्थान पर 'आह' आदेश भी हो जाता है । [ अर्थात् जहाँ ये पाँच आदेश होते हैं वहाँ √ब्रू धातु का प्रयोग न होकर 'आह' आदेश का प्रयोग होता है । ] उदा०—आह । [ ब्रू + लट् = तिप् = णल् = अ, ब्रू का आह आदेश । वह कहता है । ] आहतुः । [ ब्रू = आह + लट् = तस् = अतुस् । वे दोनों कहते हैं । ] आहुः । [ ब्रू = आह + लट् = झि = उस् । वे सब कहते हैं । ] आत्थ [ ब्रू + लट् = सिप् = थल्, ब्रू = आह् = आह + थ "आहस्थः" ८।३।३५ से हकार का थकार आदेश—आथ् + थ, "खरि च" ८।४।५५ से चर्त्व करके थ् का त् आत्थ बना । तुम कहते हो । ] और ये आदेश नहीं भी होते हैं ।—ब्रवीति [ ब्रू + लट्, तिप्, शप् का लुक्, "ब्रुव ईट्" ७।३।९३ से ईट् = ई आगम ब्रू + ई ति, ऊ का गुण और अव् आदेश—ब्रवीति ] ब्रूतः [ ब्रू + लट् = तस् ] । ब्रुवन्ति [ ब्रू + लट् = झि = अन्ति, ऊ का उवङ् आदेश—ब्रुव् अन्ति = ब्रुवन्ति ] । ब्रवीषि [ ब्रू + लट् = सिप्, ईट् आगम, ब्रू + ई सि, ऊ का गुण अवादेश, स् का ष्,—ब्रवीषि । ] ब्रूथः [ ब्रू + लट् = थस् । ]

आदि के पाँच प्रत्ययों के स्थान पर ही होते हैं—इसका क्या प्रयोजन है ? ब्रूथ । ब्रवीमि । ब्रूवः । ब्रूमः [ इन चार में 'आह' आदेश और प्रत्ययों के णलादि आदेश नहीं होते हैं । ] 'ब्रुवः' यह दूसरी बार प्रयोग स्थानी की सिद्धि के लिये है अन्यथा परस्मैपद प्रत्ययों के स्थान पर ही 'आह' आदेश होने लगता ।

**विमर्श**—"ब्रुवः पञ्चानाम् आदितः आहो ब्रुवः" इस प्रस्तुत सूत्र में 'ब्रुवः' इसका दो बार प्रयोग क्यों किया गया है, क्योंकि प्रथम पञ्चम्यन्त का ही विभक्तिविपरिणाम करके षष्ठ्यन्त बनाया जा सकता था ? इस शंका का समाधान

**आहथुः । न च भवति ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रवीषि । ब्रूथः । पञ्चानामिति किम् ? ब्रूथ । ब्रवीमि । ब्रूवः । ब्रूमः । आदित इति किम् ? परेषां मा भूत् । 'ब्रुवः' इति पुनर्वचनं स्थान्यर्थम्, परस्मैपदानामेव हि स्यात् ॥**

## १२१८. लोटो लङ्वत् ॥ ८५ ॥ ( २१९८ )

**अतिदेशोऽयम् । लोटो लङ्वत्कार्यं भवति – तामादयः, सलोपश्च । पचताम् । पचतम् । पचत । पचाव । पचाम ।**

**न्यासः**

श्रुते सम्बन्धिनि विभक्तिविपरिणामो युक्तः । इह परस्मैपदानामिति प्रकृता एव तिबादयः षष्ठ्यन्ताः सम्बन्धिन इति न युक्तो विभक्तिविपरिणामः । 'ब्रुवः' इति यदि पुनर्नोच्येत ततो यथा णलादयः परस्मैपदानां भवति, एवमाहादेशोऽपि स्यात् । तस्मात् तं प्रति ब्रुवः स्थानित्वं यथा स्यादित्येवमर्थं 'ब्रुवः' इति पुनरुच्यते । **परस्मैपदानामेव हि स्यादिति** । यदि 'ब्रुवः' इति पुनर्नोच्येतेति शेषः । अयञ्च 'ब्रुवः' इति पुनर्वचनस्य हेतुः । हिशब्दो यस्मादर्थे । यस्मादसति पुनर्वचने परस्मैपदानामेवाहादेशः स्यात्, तस्माद् 'ब्रुवः' इति पुनर्वचनं स्थान्यर्थं कर्त्तव्यम् ।। ८४ ॥

**लोटो लङ्वत्** ॥ **तमादय इति** । येषाम् 'तस्थस्थ' इत्यादिना विधानम् । **सलोपश्चेति** । यस्य 'नित्यं ङितः' इति विधानम् ।

**पदमञ्जरी**

पूर्वसूत्रे स्थानिविशेषेण सम्बन्धस्य निर्ज्ञातत्वादित्यर्थः । **आत्थेति** । 'आहस्थः' । **परेषामिति** । थादीनाम् । ननु च 'ब्रुवः' इति यदेतत्पञ्चम्यन्तं तदेवार्थाद्विभक्तिविपरिणामो भवतीत्यादेशसम्बन्धे षष्ठ्यन्तं विज्ञास्यते, नार्थो ब्रुव इति पुनर्वचनेन ? तत्राह—**ब्रुव इति । पुनर्वचनमित्यादि । परस्मैपदानामेव हि स्यादिति** । असति श्रुते सम्बन्धिनि विभक्तिविपरिणामो भवति, इह तु परस्मैपदानामिति श्रुतत्वात्तेषामेव स्यादित्यर्थः ॥ ८४ ॥

**लोटो लङ्वत् ॥ लोटो लङ्वत्कार्यं भवतीति** । अत्र लोडादेशेषु लोट्शब्दो वर्तते, लङादेशेषु च लङ्शब्दः, लोडादेशानां लङादेशवत्कार्यं भवतीत्यर्थः, तदाह—**तामादयः सलोपश्चेति** । यद्यप्येते लङ्याहृत्य न विहितास्तथापि लङि दृष्टत्वादतिदिश्यन्ते । **अडाटौ कस्मान्न भवत इति** । लङ्येवाहृत्य विहितत्वात्, प्रत्युत

**भावबोधिनी**

यह है कि यदि दुबारा 'ब्रुवः' इस षष्ठ्यन्त का प्रयोग नहीं किया जाता तो पञ्चानाम् इससे बोधित णलादि पाँच के स्थान पर ही 'आह' आदेश होने लग जाता क्योंकि इसे रोकने का कोई कारण वहाँ नहीं था । किन्तु जब दुबारा 'ब्रुवः' इस षष्ठ्यन्त का प्रयोगकर दिया गया तो 'स्थाने' की उपस्थिति होकर 'ब्रू के स्थानपर 'आह' आदेश होता है—'यह असन्दिग्ध अर्थ प्रतीत हो जाता है । दूसरी बात यह भी है कि पाँच णलादि के साथ ही इस 'आह' आदेश का विधान है क्योंकि सन्नियोगशिष्ट की यही स्थिति रहती है । अतः मध्यमपुरुष बहुवचन और उत्तमपुरुष के तीन वचनों में केवल ब्रू के ही रूप होते हैं । पूर्ववर्त्ती पाँच प्रत्ययों में 'आह' और 'ब्रू' दोनों के रूप होते हैं ॥ ८४ ॥

यह अतिदेश [ सूत्र ] है । लोट् लकार का लङ् के समान कार्य होता है—ताम् आदि आदेश [ "तस्थस्थमिपां तांतंतामः" ३।४।१०१ सूत्र से ] और स् का लोप [ नित्यं ङितः" ३।४।९९ सूत्र से ] होता है । उदा०—पचताम् । [ पच् + लोट् = तस्, शप् = अ, पचतस्, लङ्वत् मानकर तस् का ताम्—पचताम् । वे दोनों पकायें । ] पचतम् [ पच् + लोट् = थस् = तम्, शप् = अ । तुम दोनों पकाओ । ] पचत । [ पच् + लोट् = थ = त, शप् = अ । तुम सब पकाओ । ] पचाव । [ पच् + लोट् = वस्, शप् = अ, "आडुत्तमस्य पिच्च" ३।४।९२ से आट् आगम, सवर्णदीर्घ — पचा + वस्, "नित्यं ङितः" ३।४।९९ से स् का लोप । हम दोनों पकायें । ] पचाम । [ पच् + लोट् = मस्, शप्, आट् सवर्ण दीर्घ पचा + मस्, स् का लोप । हम सब पकायें । ]

**अडाटौ कस्मान्न भवतः, तथा झेर्जुसादेशः ( ३.४.१०८ ) – 'लङः शाकटायनस्यैव' ( ३.४.१११ ) इति – वान्तु, यान्तु ? 'विदो लटो वा' ( ३.४.८३ ) इत्यतो वाग्रहणमनुवर्तते, सा च व्यवस्थितविभाषा भविष्यति ॥**

**१२१९. एरुः ॥ ८६ ॥ ( २१९६ )**

**'लोटः' इत्येव । लोडादेशानामिकारस्य उकारादेशो भवति । पचतु । पचन्तु ।**

**न्यासः**

**अडाटावित्यादि** । 'लुङ्लङ्लृङ्क्षु' इत्यादिनाट्, 'आडजादीनाम्' इत्याट् लङः कार्यं विधास्यते । 'लङः शाकटायनस्यैव' इति झेर्जुसादेशश्च । न चेह कश्चिद्विशेष उपादीयते, ततश्च यस्मादतिदेशात् तामादिकार्यं भवति तथा 'आडजादीनाम्' लङ्कार्येणापि भवितव्यमित्यभिप्रायः । 'इतश्च' इति लोपः, मिपोऽम्भावश्च । न देश्यमेतत्; तयोः 'एरुः' इत्युत्वस्य 'मेर्निः' इति निरादेशस्य चापवादस्य विधास्यमानत्वात् । **सा च व्यवस्थितविभाषेति** । तेन तामादिरेवादेशो भवति, न त्वडादिरिति मन्यते ॥ ८५ ॥

**एरुः ॥ हिन्योरित्यादि** । हिश्च निश्च हिनी, तयोरुत्वप्रतिषेधो वक्तव्यः, अन्यथा हि लुनीहि पचानीति न सिध्येत् । **न वोच्चारणसामर्थ्यादिति** । यदि हीकारे कृते सत्युकारेण भवितव्यं तदोकारमेवोच्चारयेत् । अयं

**पदमञ्जरी**

तयोरेवातिदेशो युक्त इति प्रश्नः । **तथा झेर्जुसादेश इति** । कस्मान्न भवतीति विभक्तिविपरिणामेनानुषङ्गः । 'लङः शाकटायनस्य' इति जुस्भावोऽपि लङ एवाहत्य विहितः । इह तु जाग्रतु, विदन्तु 'सिजभ्यस्तविदिभ्यश्च' इति लङि दृष्टो जुस्भावः प्राप्नोति । **वाग्रहणमनुवर्तत इति** । लोट इत्युपमेये षष्ठीनिर्देशादुपमानं षष्ठ्यन्तं विज्ञायते – लङो यत्कार्यं तल्लोटो भवतीति, न तु लङि यत्कार्यं तल्लोटीत्यडाटोः परिहारान्तरम् । झेर्जुस्भावस्य तु परिहारान्तरम् 'लङः शाकटायनस्य' इत्यत्र स्वयमेव वक्ष्यति ॥ ८५ ॥

**एरुः ॥ लोडादेशानामिकारस्येति** । अथ तु —लोडादेशो य इकारस्तस्य इत्यर्थोऽभिप्रेतः स्यादिट इत्येव ब्रूयात्, 'तुह्योः' विदाङ्कुर्वन्तु' इति च निर्देशोऽनुपपन्नः स्याद् । अथेदानीमिटोऽपि व्यपदेशिवद्भावेनोत्वं कस्मान्न भवति ? पुनः प्रसङ्गविज्ञानात् टेरेत्वं भविष्यति । **न वोच्चारणसामर्थ्यादिति** । यदि हिन्योरुत्वं स्यात्

**भावबोधिनी**

[ लङ् के समान मान लेने पर "लुङ्लङ्लृङ्क्ष्वडुदात्तः" ६।४।७१ से ] अट् और [ आडजादीनाम्" ६।४।७२ से ] आट् आगम भी क्यों नहीं होते हैं ? और "लङः शाकटायनस्यैव" ३।४।१११ से झि का जुस् आदेश भी क्यों नहीं होता—वान्तु, यान्तु [ आदि में ] ? समाधान यह है कि "विदो लटो वा" ३।३।८३ इस सूत्र से 'वा' ग्रहण की अनुवृत्ति होती है और वह व्यवस्थितविभाषा होती है । [ अर्थात् "लोटा लङ्वत् वा" ३।४।८५ यह सूत्र होता है । और निश्चित लक्ष्यों पर ही लङ् के समान कार्य होते हैं । अन्यत्र नहीं होते हैं । अतः तामादि आदेश तथा स्लोप के लिये ही यह अतिदेश है अन्य कार्यों के लिये नहीं । फलतः अट्, आट् आगम और झि का जुस् आदेश आदि का अतिप्रसंग नहीं होता है ] । ८५ ॥

'लोटः' इसकी अनुवृत्ति होती है । लोट् के स्थान पर होने वाले आदेशभूत प्रत्ययों के इकार का उकार आदेश हो जाता है । उदा०—पचतु । [ पच् + लोट् = तिप्, शप्—पच + ति, इ का उ । ] पचन्तु । [ पच् + लोट् = झि = अन्ति, शप् = अ, अ का पररूप—पचन्ति । प्रस्तुत सूत्र से इ का उ—पचन्तु । ]

'हि' तथा 'नि' के इकार के उकारादेश का प्रतिषेध कहना चाहिये ।" अथवा नहीं कहना चाहिये, क्योंकि इकारोच्चारणसामर्थ्य से ही इनका उकारादेश नहीं होता है । [ यदि पाणिनि को इनमें उकारादेश अभीष्ट होता तो

❀ **हिन्योरुत्वप्रतिषेधो वक्तव्यः** ❀ **( म० भा० ३.४.८६ वा० १ )। न वा, उच्चारणसामर्थ्यात् । अथ वा 'वा' इति वर्तते, सा च व्यवस्थितविभाषा ॥**

**१२२०. सेर्ह्यपिच्च ॥ ८७ ॥ ( २२०१ )**

**'लोटः' इत्येव । लोडादेशस्य सेः 'हि' इत्ययमादेशो भवति, अपिच्च भवति । स्थानिवद्भावात्पित्त्वं प्राप्तं प्रतिषिध्यते । लुनीहि । पुनीहि । राध्नुहि । तक्ष्णुहि ॥**

**न्यासः**

हि लघीयान् शब्दव्युत्पत्तावुपायः । न चेकारोच्चारणे सूत्रस्य लाघवं भवति, तदुकार एवोच्चारयितव्ये यदिकारोच्चारणं करोति, तस्यैतत् प्रयोजनम्--उत्वं मा भूदिति ॥ ८६ ॥

**सेर्ह्यपिच्च । लुनीहीति ॥** पित्वे प्रतिषिद्धे 'सार्वधातुकमपित्' इति ङित्त्वम्, ततस्तन्निबन्धनम् 'ई हल्यघोः' इतीत्वं भवति । **राध्नुहीति** । 'राध साध संसिद्धौ', स्वादित्वाच् श्नुः । **तक्ष्णुहीति** 'तक्षू त्वक्षू तनूकरणे', 'तनूकरणे तक्षः' इति श्नुः । अत्रापि पूर्ववद् ङित्वे सति गुणो न भवति । अथ किमर्थं गुरुसूत्रं क्रियते, न 'सेर्हि ङिच्च' इत्येवोच्येत ? नैवं शक्यम्; ङित्त्वस्य विधाने स्थानिवद्भावात् पित्वं स्यादेव । ततश्च ङित्वाद् ङित्कार्यं गुणनिषेधादिकं स्यात्, पित्त्वाच्चानुदात्तत्वम् । तस्माद् यथान्यासमेवास्तु ॥ ८७ ॥

**पदमञ्जरी**

'सेहुः' 'मेर्नुः' इत्येव ब्रूयाद्, एवं हि प्रक्रियालाघवं भवतीति भावः । 'आनि लोट्', 'हुझल्भ्यो हेर्धिः' इति लिङ्गं हिन्योरुत्वाभावस्य ॥ ८६ ॥

**सेर्ह्यपिच्च ॥ लुनीहीति** । पित्त्वाभावान्ङित्त्वे सति 'ई हल्यघोः' इतीत्वं भवति । **राध्नुहीत्यत्र** गुणाभावः । इह सेर्हिङिच्चेति वक्तव्यम् । नन्वेवं ङित्वान्ङित्कार्यं भवतु, स्थानिवद्भावेन पित्त्वमप्यस्तीत्यनुदात्तत्वमपि प्राप्नोति ? 'ङिच्च पिन्न भवति' इति वचनान्न भविष्यति, यथा—अपि स्तुयाद्राजानमिति, अत्र 'उतो वृद्धिर्लुकि हलि' इति पिति विधीयमाना वृद्धिर्न भवति । ब्रूताद्भवानिति, ब्रुव इण्न भवति । किं च नाप्राप्ते पित्वे ङित्त्वमारभ्यमाणं तद्बाधिष्यते ॥ ८७ ॥

**भावबोधिनी**

"सेहु अपिच्च" "मेर्नुः" यही सूत्र बनाते । परन्तु उन्होंने "सेर्हि०' 'मेर्निः' ऐसा इकारविशिष्ट आदेश रखा है । अतः इनका उकारादेश नहीं होता है । ] अथवा "विदो लटो वा" ३।३।८३ से 'वा' ग्रहण की अनुवृत्ति होती है और वह व्यवस्थित विभाषा है । [ निश्चित लक्ष्यों में उकारादेश होता है अन्यत्र नहीं होता है । अतः इनमें नहीं होता है । ] ॥८६॥

'लोटः' इसकी अनुवृत्ति होती है । लोट् के आदेशभूत 'सि' के स्थान पर 'हि' यह आदेश होता है और यह अपित् होता है । स्थानिवद्भाव से प्राप्त होने वाले पित्त्व का निषेध किया जाता है । [ सिप् में पित् है, अतः इसमें पित्त्व व्यर्थ है । "स्थानिवदादेशोऽनल्विधौ" १।१।५६ से यह पित्त्व हि में अतिदिष्ट होता है । उसका निषेध करना है । फलतः पित्त्वनिमित्तक कार्य न होकर "सार्वधातुकमपित्" १।२।४ से ङित्त्वनिमित्तक कार्य---गुणनिषेध, "ई हल्यघोः" ६।४।११३ से ईत्व करना । ] उदा०—लुनीहि [ लू = लु + लोट् = सि, श्ना = ना विकरण—लु + ना + सि, सि का हि आदेश, हि को अपित् = ङिद्वत् मान लेने से 'श्ना' के आ का ई लु + नी + हि । तुम काटो ] । पुनीहि । [ पू = पु = लोट् = सिप् = हि, श्ना = ना—पु + ना + हि ईत्व । तुम पवित्र करो । ] राध्नुहि । [ राध्+लोट् = सिप् = हि, श्नु = नु विकरण—राध् + नु + हि । सिद्ध करो । ] तक्ष्णुहि [ तक्ष् + लोट् = सिप् = हि, श्नु = नु = तक्ष्णुहि । तुम काटो । इनमें 'हि' ङित् होने से गुण भी नहीं होता है । ] ॥ ८७ ॥

१२२१. वाच्छन्दसि ॥ ८८ ॥ ( ३५५२ )

अपित्त्वं विकल्प्यते । लादेशश्छन्दसि विषये हिशब्दो वाऽपिद् भवति । युयोध्यस्मज्जुहुराणमेनः ( ऋ० १.१८९.१ ', प्रीणाहि, प्रीणीहि, ( काठ० सं० ४०.१२ ) ॥

१२२२. मेर्निः ॥ ८९ ॥ ( २२०३ )

'लोटः' इत्येव । लोडादेशस्य मेर्निरादेशो भवति । उत्वलोपयोरपवादः । पचानि । पठानि ॥

१२२३. आमेतः ॥ ९० ॥ ( २२५१ )

न्यासः

**वाच्छन्दसि** ॥ **अपित्त्वं विकल्प्यते** । **लादेश इति** । तस्यानन्तरत्वात् । आदेशस्तु तेन व्यवहितत्वादनन्तरो न भवतीति विकल्प्यते । **युयोधीति** । 'यु मिश्रणे', 'बहुलं छन्दसि' इति शपः श्लुः, 'श्लौ' इति द्विर्वचनम् । अत्रापि पित्त्वेन ङित्त्वं नास्ति, तेन गुणो भवति । 'अङितश्च' इति धिभावः । **प्रीणीहीति** । 'प्रीञ् तर्पणे', क्र्यादित्वाच् श्ना । अत्राप्यपित्त्वे सति पूर्ववदीत्वम् ॥ ८८ ॥

**मेर्निः** ॥ **उत्वलोपयोरपवाद इति** । यथाक्रमम् 'एरुः' 'लोटो लङ्वत्' इत्यतिदेशेन प्राप्तयोः । इकारलोपस्य च लङि 'इतश्च' इति विधानादतिदेशेन तस्य प्राप्तिः । पचानीत्यत्र 'आडुत्तमस्य पिच्च' इत्याट् ॥ ८९ ॥

**आमेतः** ॥ अत्रैकारेण लोड् विशिष्यते, लोटा वैकार इति द्वौ पक्षौ । तत्र यद्याद्यः पक्ष आश्रीयेत

पदमञ्जरी

**वाच्छन्दसि** ॥ **अपित्त्वं विकल्प्यत इति** । अनन्तरत्वात् । नादेश इति, व्यवहितत्वात् । **युयोधीति** । 'बहुलं छन्दसि' इति शपः श्लौ द्विर्वचनम् । अत्र पित्वान् ङित्त्वाभावे 'अङितश्च' इति धिभावः ॥ ८८ ॥

**मेर्निः** ॥ **उत्वलोपयोरपवाद इति** । यथाक्रमम् 'एरुः' 'लोटो लङ्वत्' इति प्राप्तयोः, 'इतश्च' इतीकारलोपस्यापि लङि दृष्टत्वादतिदेशतः प्राप्तिः । वयं तु ब्रूमः—'लोटो लङ्वत्' इति प्राप्तस्यामादेशस्यापवाद इति ॥ ८९ ॥

**आमेतः** ॥ **लोट्सम्बन्धिन इति** । लोडादेशसम्बन्धिन इत्यर्थं एतेन लोटैकारो विशेष्यत इति दर्शयति ।

भावबोधिनी

अपित्त्व का विकल्प से विधान=किया जाता है । लकार के स्थानपर आदेश होनेवाला 'हि' शब्द, वेदविषय में, विकल्प से अपित् होता है । उदा०—युयोधि अस्मज्जुहुराणमेनः । [ यु + लोट् = सि = हि, "बहुलं छन्दसि" २।४।७६ से शप् का श्लु आदेश, "श्लौ" ६।१।१७ से धातु का द्वित्व—यु यु + हि । यहाँ पित्त्व होने से ङित्व नहीं रहता है अतः गुण होता है—यु यो + हि "अङितश्च" ६।४।१०३ से हि का धि हो जाता है—युयोधि । ] प्रीणाहि, प्रीणीहि [ प्रा + श्ना + लोट् = सिप् = हि, प्रा + ना + हि, अपित्त्व = ङित्त्वपक्ष में "ई हल्यघोः" ६।४।११३ से ईत्व करने पर प्रीनीहि और पित्त्व = अङित्त्वपक्ष में ईत्व न होने पर प्रीनाहि, णत्व करने पर (१) प्रीणीहि (२) प्रीणाहि—ये दो रूप बनते हैं । ] ॥ ८८ ॥

'लोटः' इसकी अनुवृत्ति आती है । लोट् के आदेशभूत 'मि' का 'नि' आदेश होता है । [ "एरुः" ३।४।८६ से प्राप्त इकार के ] उकारादेश का और [ ङिद्वत् होने से "इतश्च" ३।४।१०० से प्राप्त ] इकारलोप का अपवाद है । उदा०—पचानि । [ पच् + लोट् = मिप्, शप् = अ, पच् + अ + मि, "आडुत्तमस्य पिच्च" ३।४।९२ से आट् आगम, दीर्घ पचा + मि, मि का नि - पचानि । मैं पकाऊं । ] पठानि । [ पठ् + लोट् = मि = नि, शप् = अ, आट् = आ, दीर्घ । मैं पढ़ूं । ] ॥ ८९ ॥

'लोटः' इसकी अनुवृत्ति होती है । लोट्सम्बन्धी एकार का 'आम्' यह आदेश होता है । उदा०—पचताम् । [ पच्+लोट् = त, शप् = अ, पचत, 'टित आत्मनेपदानां टेरे" ३।४।७९ से टि का 'एत्व—पचते । प्रस्तुत सूत्र से 'ए'

**'लोटः' इत्येव । लोट्संबन्धिन एकारस्य आमित्ययमादेशो भवति । पचताम् । पचेताम् । पचन्ताम् ॥**

## १२२४. सवाभ्यां वामौ ॥ ९१ ॥ ( २२५२ )

**'लोटः' इत्येव । सकारवकाराभ्यामुत्तरस्य लोड्संबन्धिन एकारस्य यथासंख्यं व, अम् – इत्येतावादेशौ भवतः । आमोऽपवादः । पचस्व । पचध्वम् ॥**

## १२२५. आडुत्तमस्य पिच्च ॥ ९२ ॥ ( २२०४ )

**'लोटः' इत्येव । लोट्संबन्धिन उत्तमपुरुषस्याऽऽडागमो भवति, स चोत्तमपुरुषः पिद्भवति । करवाणि, करवाव, करवाम । करवै, करवावहै, करवामहै ॥**

### न्यासः

तदैकारस्य विशेषणत्वाद्विशेषणेन च तदन्तविधिर्भवतीत्येकारान्तस्य लोट आम् विधीयमानोऽनेकाल्त्वात् सर्वादेशः स्यादित्येष दोषः प्रतिविधेयः। द्वितीये तु पक्ष एकार एव विशेष्यत्वात् प्रधानम्। न च प्रधाने तदन्तविधिरित्येकारस्यैव भविष्यतीति न किञ्चित् प्रतिविधेयम् । तेन द्वितीयपक्षमाश्रित्याह – **लोट्सम्बन्धिन एकारस्येत्यादि । पचतामिति** । टेरेत्वे कृत आम् । इह पचावेदम्, यजावेदमिति यद्यप्यन्तादिवद्भावाद् गुणो लोड्ग्रहणेन गृह्यते, तथापि 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यन्तरङ्ग आमादेशे कर्तव्ये बहिरङ्गस्याद् गुणस्यासिद्धत्वादामादेशो न भवति । बहिरङ्गत्वं तु गुणस्य द्विपदाश्रयत्वात् । आमस्त्वन्तरङ्गत्वमेकपदाश्रयत्वात् ॥९०॥

**सवाभ्यां वामौ ॥ पचस्वेति** । 'थासः से' इति कृते वकारः । **पचध्वमिति** । टेरेत्वे कृतेऽमादेशः ॥ ९१ ॥

**आडुत्तमस्य पिच्च ॥ स चोत्तमपुरुषः पिद्भवतीति** । अथाट एव पित्त्वं कस्मान्न क्रियते ? निरर्थकत्वात् । पित्त्वं ह्यनुदात्तार्थं वा स्याद्, गुणवृद्ध्यर्थं वा; तत्राटोऽनुदात्तत्वमागमत्वादेव सिद्धम्, गुणवृद्ध्योस्तु नैवासौ निमित्तम्; अप्रत्ययत्वात् । तस्मादाटं प्रति पित्त्वमनर्थकमित्युत्तमस्यैव विधीयते । **करवाणीति** । पित्त्वादुत्तमस्य ङित्त्वं नास्ति, तेन गुणो भवति । **करवै इति** । 'एत ऐ', 'आटश्च' इति वृद्धिः ॥ ९२ ॥

### पदमञ्जरी

एकारेण तु लोटि विशेष्यमाणे तदन्तविधौ सत्येकारान्तस्य लोट आम्विधीयमानोऽनेकाल्त्वात्सर्वादेशः स्यात्, तत्र हि 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिहारो वाच्यः स्यादित्यर्थः ॥ ९०-९१ ॥

**आडुमत्तमस्य पिच्च ॥ स चोत्तमपुरुषः पिद्भवतीति** । आट एव पित्त्वं कस्मान्न विज्ञायते, तुल्यविभक्तिकयोर्हि युक्तः सम्बन्धः—आट् पिदिति ? निरर्थकत्वात् । अनुदात्तत्वं तावदागमत्वादेव सिद्धम्; करवाणि, मार्जानीत्यादौ गुणवृद्ध्योरपि प्रत्यय एव निमित्तं न त्वागमः ॥ ९२ ॥

### भावबोधिनी

का आम् आदेश—पचताम् । वह पकाये] पचेताम् । [ पच् + लोट् = आताम्, शप् = अ, "आतो ङितः" ७।२।८१ आ का इय्, गुण, यलोप, पचे + ताम्, टि का एत्व, पचेते । प्रस्तुत सूत्र से 'ए' का आम्—पचेताम् । वे दोनों पकावें ] पचन्ताम् [ पच् + लोट् = झ = अन्त, शप् = अ, टि का एत्व—पचन्ते । ए का आम्—पचन्ताम् । वे सब पकावें । ] ॥ ९० ॥

'लोटः' इसका अनुवृत्ति होती है । सकार और वकार के बाद आने वाले लोट्सम्बन्धी एकार के क्रमशः 'व' तथा 'अम्'—ये दो आदेश हो जाते हैं । यह [ पूर्वसूत्र से प्राप्त ] आम् आदेश का अपवाद है । उदा०—पचस्व । [ पच् + लोट् = थास् = से, पच् + से, शप् = अ, पचसे, सकारोत्तरवर्त्ती 'ए' का 'व' आदेश—पचस्व ! तुम पकाओ ] पचध्वम् । [ पच् + लोट्, ध्वम्, शप् = अ, पचध्वम्, टि का एत्व—पचध्वे । वकारोत्तरवर्त्ती 'ए' का 'अम्' आदेश—पचध्वम् । तुम सब पकाओ । ] ॥ ९१ ॥

'लोटः' इसकी अनुवृत्ति होती है । लोट्सम्बन्धी उत्तमपुरुष [ प्रत्ययों ] को आट् का आगम होता है और वह उत्तमपुरुष पित् हो जाता है । उदा०—करवाणि [ कृ + लोट् = मिप्, "तनादिकृञ्भ्य उः" ३।१।७९ सूत्र से 'उ'

## १२२६. एत ऐ ॥ ९३ ॥ ( २२५३ )

'लोट्' 'उत्तमस्य' इति वर्तते । लोडुत्तमसम्बन्धिन एकारस्य ऐकारादेशो भवति । **आमोऽपवादः । करवै, करवावहै, करवामहै । इह कस्मान्न भवति – पचावेदम्, यजावेदम् ? बहिरङ्गलक्षणत्वाद् गुणस्य ॥**

## १२२७. लेटोऽडाटौ ॥ ९४ ॥ ( ३४२७ )

**न्यासः**

**एत ऐ ॥ आमोऽपवाद इति** । 'आमेतः' इति प्राप्तस्य । **पचावेदं यजावेदमिति** । 'लोटो लङ्वत्' इति सलोपे सति 'आद्गुणः' ॥ ९३ ॥

**लेटोऽडाटौ ॥ पर्यायेणेति** । अथ युगपदेव कस्मान्न भवतः ? एवं मन्यते—टितावेतौ विधीयेते, टित्त्वञ्चादिविधानार्थम् । न च युगपद् द्वयोरादित्वं भवति, एकेनैवादिदेशस्यावष्टब्धत्वान्न युक्तं यौगपद्यमिति । **जोषिष-**

**पदमञ्जरी**

**एत ऐ ॥ इह कस्मादिति** । गुणस्यान्तवद्भावेन लोड्ग्रहणेन ग्रहणादस्ति प्रसङ्ग इति भावः। **बहिरङ्गलक्षणत्वादिति** । द्विपदाश्रयत्वाद् गुणस्य बहिरङ्गत्वम्, ऐकारस्त्वेकपदाश्रयत्वादन्तरङ्गः, अत एव हेतोः 'आमेतः' इत्ययमपि विधिर्न भवति ॥ ९३ ॥

**लेटोऽडाटौ ॥ पर्यायेणेति** । न यौगपद्येन; अड्विधानसामर्थ्यात्, अन्यथा सवर्णदीर्घत्वे सत्यड्विधान-

**भावबोधिनी**

विकरण कृ+उ + मि, प्रस्तुत सूत्र से आट् आगम और पित् करने से 'उ' का गुण कृ+ओ + आ + मि, ऋ का गुण रपर—कर् + ओ+आमि, ओ का अव् आदेश –कर् अव्+आमि, मि का नि और न का णत्व—करवाणि । मैं करूँ । ]करवाव । [ कृ+लोट = वस् उ, आट् गुण, रपर, कर्+उ+आवस्, पित् होने से उ का गुण, ओ का अव्, स् का लोप—करवाव । हम दोनों करें । ] करवाम । [ कृ + लोट् = मस्, शेष पूर्ववत् । हम सब करें । ] करवै [ कृ + लोट् आत्मनेपद उत्तमपुरुष इट् प्रत्यय, कृ + इ, उ विकरण, आट् आगम, गुण, रपर, कर्+उ+आ + इ, उ का गुण, अव् आदेश – करव् + ए, "एत ऐ" ३।४।९३ ए का ऐ आदेश—करवै । मैं करूँ । ] करवावहै । [ कृ + लोट = वहि, 'उ' प्रत्यय, आट् आगम, ऋ का गुण रपर कर् + उ + आ+वहि, उ का गुण, अवादेश, टि का एत्व कर् अव् आ वहि, ए का ऐकारादेश-करवावहै । हम दोनों करें । ] करवामहै । [ कृ+लोट् = महि, शेषपूर्ववत् । हम सब करें ] ॥ ९२ ॥

'लोडुत्तमस्य' इस अंश की अनुवृत्ति होती है । लोट् के उत्तमपुरुषसम्बन्धी एकार का ऐकार आदेश होता है । [ "आमेतः" ३।४।९० से प्राप्त ] आम् का अपवाद है । उदा०—करवै, करवावहै, करवामहै । [ इनकी सिद्धि ऊपर सूत्र में प्रस्तुत की जा चुकी है । ]

पचावेदम् [ पचाव+इदम् ], यजावेदम् [ यजाव+इदम् ]—इनमें [ "अन्तादिवच्च" ६।१।८५ से अन्तवद्भाव से लोट् का एकार हो जाने से 'ऐ' ] क्यों नहीं होता है ? गुण के बहिरङ्गलक्षण होने से नहीं होता है ।

**विमर्श** पचाव + इदम् आदि में "आद्गुणः" से गुणादेश 'ए' करने पर—पचावेदम् में "अन्तादिवच्च" ६।१।८५ से ए में लोट्त्व का अतिदेश हो जाता है । अतः लोट् उत्तमपुरुष का ए होने से 'ऐ' हो जाना चाहिये ? समाधान यह है कि "आद्गुणः" ६।१।८७ से होने वाला गुण, दो पदों के दो वर्णों को मानकर हुआ है, वह एकपदाश्रित एत्वादेश की दृष्टि में बहिरङ्ग है, अतः असिद्ध हो जाता है । इसी कारण "आमेतः" ३।४।९० से आम् आदेश भी नहीं होता है । ९३ ॥

लेट् को पर्याय से अट् और आट् ये दोनों आगम होते हैं । उदा०—जोषिषत् जुष् + लेट् = तिप्, "सिब्बहुलं लेटि" ३।१।३४ से सिप् = स् जुस् + स् + ति, "आर्धधातुकस्येड्वलादेः" ७।२।३५ से इट् आगम, उपधागुण, जोस् + इ स् + ति, प्रस्तुत सूत्र से अट् आगम, 'इतश्च' ३।४।१०० इलोप, 'आदेशप्रत्यययोः' ८।३।५९ से दोनों

लेटोऽडाटावागमौ भवतः पर्यायेण । जोषिषत् ( ऋ० २.३५.१ )। तारिषत् ( वाज० सं० २३.३२ )। मन्दिषत् । पताति विद्युत् ( ऋ० ४.१६.१७ )। प्रजापतिरुदधिं च्यावयाति ( तै० सं० ३.५.५.२ )॥

१२२८. आत ऐ ॥ ९५ ॥ ( ३४२९ )

'लेटः' इत्येव । लेट्सम्बन्धिन आकारस्य ऐकारादेशो भवति प्रथमपुरुषमध्यमपुरुषात्मनेपदद्विवचनयोः। मन्त्रयैते, मन्त्रयैथे । करवैते, करवैथे । आटः कस्मान्न भवति ? विधानसामर्थ्यात् ॥

**न्यासः**

दित्यादीन्युदाहरणानि 'सिब्बहुलं लेटि' इत्यत्र व्युत्पादितानि । अत्रापि व्युत्पाद्यन्ते । **जोषिषदिति** –'जुषी प्रीतिसेवनयोः', सिप इकार उच्चारणार्थः, अनेनाट्, 'इतश्च लोपः परस्मैपदेषु' इतीकारलोपः 'आर्धधातुकस्येड् वलादेः' इतीट्, लघूपधगुणः, 'आदेशप्रत्यययोः' इति षत्वम् । **तारिषदिति**--'तॄ प्लवनतरणयोः', 'सार्वधातुकार्धधातुकयोः' इति व्यत्ययेन धात्वकारस्य दीर्घः । शेषं पूर्ववत् । **मन्दिषदिति**-- मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' 'इदितो नुम्' । **पदातीति** । 'पद गतौ' दिवादावनुदात्तेत्, व्यत्ययेन परस्मैपदम्, शप्प्रत्ययश्च, अटा सहाकः सवर्णे दीर्घत्वम्, तिप् । इकारलोपोऽत्र न भवति; तद्विधौ 'वैतोऽन्यत्र' इत्यतो वाग्रहणानुवृत्तेः । **च्यावयातीति** । 'च्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ', हेतुमण्णिच् ॥ ९४ ॥

**आत ऐ ॥ मन्त्रयैते इति** । 'मत्रि गुप्तभाषणे', चुरादि णिच्, शप्, गुणायादेशः । **आटः कस्मान्न भवतीति** । पदाति [पताति[1]] विद्युदित्यादौ । **विधानसामर्थ्यादिति** । यद्याट ऐत्त्वं स्यात् ऐडागममेव विदध्यात्, एवं प्रक्रियालाघवं भवतीति मन्यते ॥ ९५ ॥

**पदमञ्जरी**

मकिञ्चित्करं स्यात् ॥ ९४ ॥

**आत ऐ ॥ करवैते इति** । 'छन्दस्युभयथा' इति सार्वधातुकत्वाद्विकरणः, आर्द्धधातुकत्वान् ङित्त्वाभावे विकरणस्य गुणः, करोतेश्चोत्वाभावः, पवैते, अश्नवैथे, प्रवैते, विग्रन्थैथे ॥ ९५ ॥

**भावबोधिनी**

सकारों के मूर्धन्य षकार---जोषिषत् । सेवन करना चाहिये । ] तारिषत् [ तॄ + लेट्, णिद्वत् मानने से ऋ की वृद्धि आर रपर के अतिरिक्त शेष कार्य पूर्ववत् होते हैं । तरण करना चाहिये । ] मन्दिषत् [ मदि के इकार की इत्संज्ञा लोप करने पर "इदितो नुम् धातोः" ७।१।५८ से नुम्--मन्द् + लेट्, शेष प्रक्रिया पूर्ववत् । स्तुति करनी चाहिये --√मद 'स्तुतिमोदमदस्वप्नकान्तिगतिषु' ] पताति विद्युत् । [ पत् + लेट् = तिप्, आट् आगम--पताति ] । उदधिं च्यावयति गमनार्थक च्युधातु से प्रेरणार्थक णिच् उकार की वृद्धि और आव् आदेश करने पर--च्यावि + लेट् = तिप्, आट् आगम, इ का गुण ए, अयादे च्यावय् आति--च्यावयाति । ]

**विमर्श**--इस लेट् का प्रयोग केवल वैदिक साहित्य में है । "लिङर्थे लेट्" ३।४।७ से विध्यादि अर्थों में विकल्प से लेट् होता है । पताति विद्युत्--यह पाठ अधिकांशतः मिलता है, परन्तु न्यासकार ने--'पदाति' यह माना है । "पदातीति । 'पद गतौ' दिवादानुदात्तेत्.........।"

'लेटः' इसकी अनुवृत्ति होती है । प्रथमपुरुष और मध्यमपुरुष आत्मनेपद द्विवचन के लेट्सम्बन्धी आकार का ऐकार आदेश होता है । उदा०--मन्त्रयैते [ इदित् णिजन्त मन्त्रि + लेट् = आताम्, शप् = अ, इकार का गुण अयादेश--मन्त्रय् + आताम् टि का एत्व, आ का ऐ, वृद्धि--मन्त्रयैते । इसी प्रकार आगे के रूपों में भी आताम् और आथाम् के 'आ' का 'ऐ' आदेश करना चाहिये--] मन्त्रयैथे, करवैते, करवैथे । आट् के आ का ऐ क्यों नहीं होता है ? विधानसामर्थ्य से अर्थात् यदि 'ऐ' ही करना होता तो साक्षात् 'ऐ' ही कर दिया गया होता, आट् करके उसका 'ऐ' करने का यही उद्देश्य है कि वह 'आ' ही रहता है ॥ ९५ ॥

---

१. 'पताति' इत्येव शुद्धः पाठः । ऋग्वेदस्य उद्धरणोऽयम् । किन्तु ऋ० ६. ७३. ६ 'पदाति' इत्यपि दृश्यते । 'पद गतौ'। लेटयाडागमः ।' इति तत्र सायणः ।

## १२२९. वैतोऽन्यत्र ॥ ९६ ॥ ( ३४३० )

**'लेटः' इत्येव। लेट्सम्बन्धिन एकारस्य वा ऐकारादेशो भवति। अन्यत्रेत्यनन्तरो विधिरपेक्ष्यते— 'आत ऐ' इत्येतद्विषयं वर्जयित्वा एत ऐ भवति। सप्ताहानि शासै। अहमेव पशूनामीशै ( काठ० सं० २५.१ )। मदग्रा एव वो ग्रहा गृह्यान्तै ( तै० सं० ६.४.७.१ ) मद्दे वत्यान्ये व वः पात्राण्युच्यान्तै ( तै० सं० ६.४.७.२ )। न च भवति-यत्र क्वं च ते मनो दक्षं दधस उत्तरम् ( ऋ० ६.१६.१७ )।**

**अन्यत्रेति किम् ? मन्त्रयैते। मन्त्रयैथे ॥**

## १२३०. इतश्च लोपः परस्मैपदेषु ॥ ९७ ॥ ( ३४२६ )

**'लेटः' इत्येव। लेट्सम्बन्धिन इकारस्य परस्मैपदविषयस्य लोपो भवति। वानुवृत्तेः पक्षे श्रवणमपि भवति। जोषिषत् ( ऋ० २.३५.१ ) ( वाज० सं० २३.३२ )। तारिषत्। मन्दिषत्। न च भवति—पताति विद्युत् ( ऋ० ४.१६.१७ ) प्रजायतिरुदधि च्यावयाति ( तै० सं० ३.५.५.२ )।**

**परस्मैपदग्रहणम्—इड्वहिमहिङां मा भूत् ॥**

### न्यासः

**वैतोऽन्यत्र ॥ शासै इति।** उत्तमपुरुषैकवचनमिट् टेरेत्वम्। **ईशै इत्यादीनि** उदाहरणानि 'उपसंवादाशङ्कयोः' इत्यत्र व्युत्पादितानि। **दधस इति।** 'डुधाञ् धारणपोषणयोः', 'थासः से', शपः श्लुः, 'श्लौ' इति द्विर्वचनम्, अट्, 'घोर्लोपो लेटि वा' इत्यकारलोपः ॥ ९६ ॥

**इतश्च लोपः परस्मैपदेषु ॥ परस्मैपदग्रहणमित्यादि।** ननु च टेरेत्त्वमिडादिषु बाधकं भविष्यति, तत् किं परस्मैपदग्रहणेन ? नैतदस्ति; टेरेत्वस्यावकाश अन्येषु लकारादिषु, **इतो लोपस्य च** परस्मैपदेषु; उभयप्रसङ्गे परत्वादितो लोपः स्यात् ॥ ९७ ॥

### पदमञ्जरी

**वैतोऽन्यत्र ॥ एतद्विषयमिति।** षष्ठीसमासः। **एवंविषयमिति** तु युक्तः पाठः। उदाहरणानि 'उपसंवादाशङ्कयोश्च' इत्यत्र व्युत्पादितानि।

**दधस इति।** 'थासः से', शपः श्लुः, अट्, 'घोर्लोपो लेटि वा' इत्याकारलोपः ॥ ९६ ॥

**इतश्च लोपः परस्मैपदेषु ॥ परस्मैपदग्रहणमित्यादि।** अन्यथा टेरेत्वस्यावकाशः—अन्ये लकाराः, लेट्यपीकारादन्यत्र इतो लोपस्य परस्मैपदानि; इडादिषूभयप्रसङ्गे परत्वादितो लोपः स्यात् ॥ ९७ ॥

### भावबोधिनी

'लेटः' इसकी अनुवृत्ति होती है। लेट्सम्बन्धी एकार का ऐकार आदेश विकल्प से होता है। अन्यत्र—इससे अव्यवहित पूर्ववर्ती विधि की अपेक्षा है—"आत ऐ" ३।४।९५ इसके विषय को छोड़कर एकार का ऐकार आदेश होता है। उदा०—सप्ताहानि शासै [ शास् + लेट = इट्, टि = इ का ए—शासे। प्रस्तुत सूत्र से ए का ऐ—शासै। ] अहमेव पशूनाम् ईशै। [ ईश् + लेट् = इट्—शेष पूर्ववत् ] मदग्रा एव वो ग्रहा गृह्यान्तै। [ ग्रह् + लेट् = झ = अन्त, यक्, रेफ का सम्प्रसारण पूर्वरूप—गृह् य + अन्त, टि का ए, ए का ऐ—गृह्यान्तै ] मद्देवत्यान्येव वः पात्राणि उच्यान्तै। [ वच् + लेट् = झ = अन्त, यक्, सम्प्रसारण, पूर्वरूप, टि का एत्व, एकार का ऐकारादेश—उच्यान्तै। ]

ए का ऐ नहीं भी होता है—दधसे [ धा + लेट् = थास् = से, शप् का श्लु, द्वित्व अभ्यासकार्य, अट्, आकार का लोप—दधसे—इसमें ए का ऐ नहीं होता है। ]

[ "आत ऐ" ३।४।९५ के विषय से ] अन्यत्र—इसका क्या प्रयोजन है ? मन्त्रयैते, मन्त्रयैथे। [ यहाँ विकल्प न होकर नित्य ऐ होता है। ] ॥ ९६ ॥

'लेटः' इसकी अनुवृत्ति होती है। परस्मैपदविषयक, लेट् लकारसम्बन्धी इकार का लोप होता है। पूर्व सूत्र से

## १२३१. स उत्तमस्य ॥ ९८ ॥ ( ३४२८ )

**'लेटः' इति, 'वा' इति च वर्तते । लेट्सम्बन्धिन उत्तमपुरुषस्य सकारस्य वा लोपो भवति । करवाव, करवाम । न च भवति–करवावः, करवामः । उत्तमग्रहणम् – पुरुषान्तरे मा भूत् ॥**

## १२३२. नित्यं ङितः ॥ ९९ ॥ ( २२०० )

**'लेटः' इति निवृत्ततम् । ङितो लकारस्य य उत्तमस्तस्य नित्यं सकारस्य लोपो भवति । अपचाव । अपचाम । नित्यग्रहणं विकल्पनिवृत्त्यर्थम् ॥**

### न्यासः

**स उत्तमस्य ॥ करवावेति** । 'लेटोऽडाटौ' इत्याट् । **उत्तमग्रहणमित्यादि** । यदि तर्हि पुरुषान्तरे मा भूदित्येवमर्थमुत्तमग्रहणं क्रियते ? न; वस्मस्ग्रहणमेव कर्तव्यम्, अत्राप्ययमर्थः—सकारग्रहणं कर्तव्यं न भवति, अलोऽन्त्यपरिभाषयैव सकारलोपो भवति ? अशक्यं वस्मस्ग्रहणं कर्तुम्; तस्मिन् सति यदा व्यत्ययेन पुरुषान्तरस्य स्थाने तौ भवतस्तदापि लोपः स्यात्, यदा चोत्तमपुरुषस्य स्थाने थस् क्रियते तदा लोपो न स्यात् । उत्तमग्रहणे सत्येष दोषो न भवति स्थानिवद्भावेन मध्यमोत्तमसंज्ञयोर्भवन्त्योरेकसंज्ञाधिकारादसति समावेश उत्तमसंज्ञया मध्यमसंज्ञाया निवृत्तिः सकारग्रहणञ्च यदि न क्रियेत, तदोत्तमस्य व्यत्ययेन वचनान्तरेषु कृतेषु वर्णान्तरस्यापि लोपः स्यात् । तस्माद् यथान्यासमेवास्तु ॥ ९८ ॥

**नित्यं ङितः ॥ अपचावापचामेति** । लङ्, 'अतो दीर्घो यञि' इति दीर्घः ॥ ९९ ॥

### पदमञ्जरी

**स उत्तमस्य ॥ करवाव, करवामेति** । पूर्ववद्गुणोत्वाभावौ, 'लेटोऽडाटौ' इत्याट् । **उत्तरग्रहणमित्यादि** । इह वस्मस्ग्रहणमेव कर्तव्यम् । तत्रायमप्यर्थः—स इति न वक्तव्यं भवति, 'अलोऽन्त्यस्य' इत्येव सिद्धम् । यदा च

### भावबोधिनी

'वा' की अनुवृत्ति होने के कारण पक्ष में इकार का श्रवण भी होता है । उदा० - जोषिषत्, तारिषत्, मन्दिषत् । इनकी सिद्धि "लेटोऽडाटौ" ३।४।९४ की व्याख्या में की जा चुकी है । ] और [इकारलोप] नहीं भी होता है—पताति विद्युत् । उदधि च्यावयाति । [ इनकी भी सिद्धि "लेटोऽडाटौ" ३।४।९४ की व्याख्या में की जा चुकी है । परस्मैपद का ग्रहण इसलिये है कि – [ आत्मनेपद उत्तमपुरुष ] इट्, वहि और महि के इकार का [ लोप ] न हो ॥ ६७ ॥

'लेटः' और 'वा' इन दो की अनुवृत्ति होती है । लेट्सम्बन्धी उत्तम पुरुष के सकार का लोप विकल्प से होता है । उदा०—करवाव । करवाम । [ कृ+लेट्=वस्, 'उ' गुण, रपर, आट् कर्+उ+आ+वस्, उ का गुण आवादेश—कर्+अव्+आ+वस्, स् लोप करने पर—करवाव । इसी प्रकार कृ+लेट्=मस् में शेष प्रक्रिया पूर्ववत् । ] और स् का लोप नहीं भी होता है—करवावः, करवामः [ सलोप को छोड़ कर सभी प्रक्रिया पूर्ववत् होती है । ] उत्तम [ पुरुष ] का ग्रहण इसलिये है कि अन्य पुरुषों में [ स् लोप ] न होने लग जाय ॥ ९८ ॥

'लेटः' इसकी निवृत्ति हो जाती है । ङित् लकार का जो उत्तमपुरुष उसके सकार का नित्य लोप होता है । उदा०—अपचाव । अपचाम । [ पच्+लङ्, अट् आगम, लङ् का वस् आदेश अपच्+वस्, शप्=अ, "अतो दीर्घो यञि" ७।३।१०१ से अ का दीर्घ-अपचावस् ] प्रस्तुत सूत्र से स का लोप—अपचाव=हम दोनों ने पकाया । इसी प्रकार पच्+लङ्=मस् शेष प्रक्रिया पूर्ववत् । हम सबने पकाया । ] नित्य का ग्रहण विकल्प की निवृत्ति के लिये है ॥ ६६ ॥

१२३३. इतश्च ॥ १०० ॥ ( २२०७ )

'ङितः' इत्येव। ङिल्लकारसम्बन्धिन इकारस्य नित्यं लोपो भवति। अपचत्। अपाक्षीत्। परस्मैपदेष्वि-त्येव-अपचावहि, अपचामहि॥

१२३४. तस्थस्थमिपां तांतंतामः ॥ १०१ ॥ ( २१९९ )

'ङितः' इत्येव। ङिल्लकारसम्बन्धिनां चतुर्णां यथासंख्यं तामादय आदेशा भवन्ति। अपचताम्, अपचतम्, अपचत, अपचम्। अपाक्ताम्, अपाक्तम्, अपाक्त, अपाक्षम्॥

१२३५. लिङः सीयुट् ॥ १०२ ॥ ( २२५५ )

**न्यासः**

इतश्च॥ अपचदिति। लङ्। अपाक्षीदिति। लुङ्, 'वदव्रज' इत्यादिना वृद्धिः, 'अस्तिसिचोऽपृक्ते' इतीट्॥ १००॥

तस्थस्थमिपां तान्तन्तामः॥ अपाक्तामिति। पूर्ववद् वृद्धिः, 'झलो झलि' इति सिचो लोपः॥ १०१॥

लिङः सीयुट्॥ पचेतेत्यादौ 'विधिनिमन्त्रण' इत्यादिना लिङ्, 'लिङः सलोपोऽनन्त्यस्य' इति सकार-

**पदमञ्जरी**

पुरुषान्तरस्य स्थाने वसमसौ भवतः, एतयोश्च स्थाने सकारान्तं पुरुषान्तरम्, तदापि वाग्रहणानुवृत्त्यैव लोपालोपौ यथादर्शनं व्यवस्थितौ भविष्यतः। यथाक्रियमाणेऽप्युत्तमग्रहणे वाग्रहणं चानुवर्तते, उत्तरत्र नित्यग्रहणं स्यात् 'नित्यं ङितः'॥ ९८-१०१॥

लिङः सीयुट्॥ लिङ्शब्दोऽत्र लिङादेशेषु स्थानिवद्भावात् प्रयुक्त इत्याह—लिङादेशानामिति।

**भावबोधिनी**

'ङितः' इसकी अनुवृत्ति होती है। ङित् लकार-सम्बन्धी इकार का लोप नित्य होता है। उदा०—अपचत् [ पच्+लङ्=तिप्, अट् आगम, शप्=अ, अपच्+अ+ति, इ का लोप —अपचत्। उसने पकाया। ] अपाक्षीत् [ पच्+लुङ्=तिप् अट्, च्लि=सिच्=स्—अपच्+स्+ति, इकार का लोप करने के बाद "अस्तिसिचोऽपृक्ते" ७।३।९६ से ईट् आगम अपच्+स्+ई+त्, च् का क्, स् का ष्, क्+ष्=क्ष, "वदव्रज०" ७।२।३ से वृद्धि—अपाक्षीत्। ] परस्मैपद प्रत्यय परे रहते ही [ इलोप होता है ]—अपचावहि। अपचामहि। [ पच्+लङ्=वहि, अट्, शप्, दीर्घ आदि करने पर अपचावहि और महि प्रत्यय परे रहते अपचामहि रूप आत्मनेपद में होते हैं। अतः इकार लोप नहीं होता है। ]॥ १००॥

'ङितः' इसकी अनुवृत्ति होती है। ङित्लकार-सम्बन्धी चार (२) तस् (१) थस् (३) थ और (४) मिप् के स्थान पर क्रमशः (१) ताम् (२) तम् (३) त और (४) अम्—ये आदेश होते हैं। उदा०—अपचताम् [ पच्+लङ्=तस्, अट् आगम, शप्=अ—अपचतस्, प्रस्तुत सूत्र से तस् का ताम् करने पर अपचताम् बना। उन दोनों ने पकाया ] अपचतम् [ पच्+लङ्=थस्, अट्, शप् अपच+थस्, थस् का तम्—अपचतम्। तुम दोनों ने पकाया ] अपचत। [ पच्+लङ्=थ, अट्, शप्, थ का त अपचत। तुम सबने पकाया ] अपचम् [ पच्+लङ्=मिप्=अम् शेष पूर्ववत्। मैंने पकाया ] अपाक्ताम् [ पच्+लुङ्=तस्=ताम्, च्लि=सिच्=स् अट्, अपच्+तस्=ताम्, वृद्धि "झलो झलि" ८।२।२६ से स् का लोप च् का कुत्व क्—अपाक्ताम्। उन दोनों ने पकाया ] अपाक्तम्। [ पच्+लुङ्=थस्=तम्, शेष पूर्ववत् ] अपाक्त। [ पच्+लुङ्=थ=त, शेष पूर्ववत् ] अपाक्षम् [ पच्+लुङ्=मिप्=अम्, सिच्, वृद्धि अपाच्+स्+अम्, च् का कुत्व, स् का ष, क्+ष्=क्ष्—अपाक्षम्। ]॥ १०१॥

लिङ् के आदेशभूत प्रत्ययों को सीयुट् का आगम होता है। टकार अनुबन्ध [ आदि ] देश=स्थान का विधान करने के लिये है [ अर्थात् "आद्यन्तौ टकितौ" १।१।४६ से टित् मानकर प्रत्यय का आदि अवयव बनाने के लिये ट्

**लिङादेशानां सीयुडागमो भवति । टकारो देशविध्यर्थः । उकार उच्चारणार्थः । पचेत, पचेयाताम्, पचेरन् । पक्षीष्ट, पक्षीयास्ताम्, पक्षीरन् ॥**

**१२३६. यासुट् परस्मैपदेषूदात्तो ङिच्च ॥ १०३ ॥ ( २२०९ )**

**'लिङः' इत्येव । परस्मैपदविषयस्य लिङो यासुडागमो भवति, स चोदात्तो भवति, ङिच्च । सीयुटोऽपवादः । आगमानुदात्तत्वे प्राप्ते, [ उदात्तवचनम् ] ङित्वं तु लिङ एव विधीयते; तत्र तत्कार्याणां संभवाद्, नागमस्य । कुर्यात् । कुर्याताम् । कुर्युः ।**

**न्यासः**

लोपः, शपा सह 'आद्गुणः', वलि लोपः । **पक्षीष्टेत्यादौ** आशिषि लिङ्, चकारस्य 'चोः कुः' इति कुत्वम्, 'इण्कोः' इति षत्वम् ॥ १०२ ॥

**यासुट् परस्मैपदेषूदात्तो ङिच्च ॥ परस्मैपदविषयस्येति** । एतेन 'परस्मैपदेषु' इत्यस्याः सप्तम्या विषयसप्तमीत्वं दर्शयति, न परसप्तमीत्वम् । परसप्तमीत्वं तु न सम्भवति; लिङःपरस्मैपदानामसम्भवात् ।

**पदमञ्जरी**

सीयुट्सकारस्यार्धधातुके लिङि श्रवणम्, सार्वधातुके 'लिङः सलोपोऽनन्त्यस्य' इति सलोपः । यकारस्याजादिषु श्रवणम्, अन्यत्र लोपः ॥ १०२ ॥

**यासुट् परस्मैपदेषूदात्तो ङिच्च ॥ परस्मैपदविषयस्येति** । लिङः परेषां परस्मैपदानामसम्भवात् । **सीयुटोऽपवाद इति** । नाप्राप्ते तस्मिन्नारम्भात्, तेन यासुटि कृते तस्य तिङ्भक्तत्वात्तदादेः सीयुट्प्रसङ्ग इति न चोदनीयम् । सत्यपि हि सम्भवे सामान्यविधेर्विशेषविधिर्बाधकः । कथं तर्हि कृषीष्ट इत्यादिषु सुटि कृते सीयुड् भवति, ननु तत्रापि सुटा सीयुड् बाधनीयः ? अत्र परिहारं सुड्विधौ **वृत्तिकारः** स्वयमेव वक्ष्यति । **आगमत्वादनुदात्तत्वे प्राप्त इति** । अत एव यासुडुदात्तवचनाद्विज्ञायते--आगमा अनुदात्ता भवन्तीति, अन्यथा यासुटः प्रत्ययभक्तत्वात् प्रत्ययस्वरेणैव सिद्धमुदात्तत्वम् । नैतदस्ति ज्ञापकम्, यानि पिद्वचनानि तदर्थमेतत्स्यात् । यद्येतावत्प्रयोजनम, अपिदित्येव ब्रूयात् । तदेतदुदात्तवचनं ज्ञापकमेव-आगमा अनुदात्ता भवन्तीति । **तत्र तत्कार्याणां सम्भवादिति** । ग्रहिज्यादिसूत्रेऽपि धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् प्रत्ययस्यैव ग्रहणम् । **कुर्यादिति** । विकरणाश्रयो धातोर्गुणः, 'अत उत्सार्वधातुके' इत्युत्वम्, 'ये च' इत्युकारलोपः । **कुर्युरिति** । झेर्जुस्, 'लिङः सलोपोऽनन्त्यस्य' 'उस्यपदान्तात्' ।

**भावबोधिनी**

अनुबन्ध है । ] उकार उच्चारणार्थ है । उदा०—पचेत [ पच् + लिङ् = त, शप् = अ, प्रस्तुत सूत्र से सीयुट् = सीय् आगम 'पच + सीय् + त, "लिङः सलोपोऽनन्त्यस्य" ७।२।७९ से स् का लोप, "आद्गुणः" ६।१।८७ से शप् के अ और सीय् के ई के स्थान पर 'ए' गुण पचेय्त, "लोपो व्योर्वलि" ६।१।६६ से य् का लोप—पचेत । वह पकाये । ] पचेयाताम् [ पच् + लिङ् = आताम् य् का लोप छोड़कर शेष प्रक्रिया पूर्ववत् । वे दोनों पकायें ] पचेरन् [ पच् + लिङ् = झ, "झस्य रन्" ३।४।१०५ सूत्र से झ का रन् शेष प्रक्रिया पूर्ववत् । वे सब पकायें । ] पक्षीष्ट [ पच् + लिङ्—आशीः, लिङ् का त, सीयुट् = सीय्, 'सुट्तिथोः" ३।४।१०७ से सुट् = स् आगम पच् + सीय् + त, य् लोप, च् का क्, स् का ष्, क् + ष् = क्ष् पक्षीस् + त, षत्व और ष्टुत्व—पक्षीष्ट । वह पकावे । ] पक्षीयास्ताम् [ पच् + लिङ् = आशीः लिङ् का आताम्, शेष प्रक्रिया पूर्ववत् । वे दोनों पकावें ] पक्षीरन् [ पच् + लिङ्—आशीः, लिङ् का झ, झ का रन्, शेष प्रक्रिया पूर्ववत् । ] ॥ १०२ ॥

'लिङः' इसकी अनुवृत्ति होती है । परस्मैपदविषयक लिङ् को यासुट् आगम होता है, और यह उदात्त तथा ङित् होता है । यह सीयुट् का अपवाद है । आगम का अनुदात्तत्व प्राप्त रहते यह उदात्तत्ववचन है । ङित्त्व तो लिङ् का ही

**स्थानिवद्भावादेव लिङादेशस्य ङित्त्वे सिद्धे यासुटो ङिद्वचनं ज्ञापनार्थम्—लकाराश्रयङित्त्वमादेशानां न भवतीति। अचिनवम्। अकरवम्॥**

## १२३७. किदाशिषि ॥ १०४ ॥ ( २२१६ )

**न्यासः**

**आगमानुदात्तत्वे प्राप्त इति।** कुतः पुनरागमानुदात्तत्वं भवतीति निश्चितम्? अत एव यासुट उदात्तवचनात्। यदि ह्यागमा अनुदात्ता न स्युस्तदोदात्तवचनमनर्थकं स्यात्; प्रत्ययभक्तत्वेनैव यासुटः प्रत्ययस्वरेणैवोद्युदात्तस्य सिद्धत्वात्। ननु यानि पिद्वचनानि तदर्थमुदात्तवचनं स्यात्, तेषां ह्यनुदात्तत्वात् तद्भक्तो यासुडनुदात्त एव स्याद् यद्युदात्त इति नोच्येत? नैतदस्ति; यद्येतत् प्रयोजनमभिमतं स्यात्, अपिदित्येवं ब्रूयात्। तदैतदुदात्तवचनमागमानुदात्तस्य ज्ञापकमेव। **तत्र ङित्कार्याणामसम्भवादिति।** न सर्वेषामित्यभिप्रायः। कुत एतत्? यावता उष्यात् इत्यत्र ग्रहिज्यादिसूत्रेण यत् संप्रसारणं तत् यासुट्यपि ङिति सम्भवति। ङिन्मात्रनिबन्धनं हि संप्रसारणम्; विशेषानुपादानात्। तत्र यदि यासुटो ङित्त्वं विधीयेत तदा ग्रहेः संप्रसारणस्यैवेकस्यानुग्रहः स्यात्। लिङस्तु ङित्त्वे विधाने सर्वस्य ङित्कार्यस्य गुणवृद्धिप्रतिषेधादेवानुग्रहो भवतीति लिङ एव ङित्त्वं विधीयते। **ङित्कार्याणामिति।** ङिति कार्याणामित्यर्थः। **कुर्यादिति।** विकरणाश्रयो धातुर्गुणः, 'अत उत् सार्वधातुके' इत्युत्त्वम्, 'ये च' इत्युकारलोपः। **कुर्युरिति।** 'उस्यपदान्तात्' इति पररूपत्वम्। **अचिनवमिति।** मिपोऽम्। अत्र ङित्त्वाभावाद् गुणः। एतच्च ज्ञापकस्य प्रयोजनम्॥ १०३॥

**किदाशिषि॥ प्रत्ययस्यैवेदं कित्त्वमिति।** यद्येवम्, आशिषि लिङ् विहितस्तस्य यासुट् किद् भवतीत्येतद् विरुध्यते? नास्ति विरोधः; यासुड्वचनं लिङ एवोपलक्षणम्। तेन लिङवयवद्वारेण लिङ एव

**पदमञ्जरी**

**स्थानिवद्भावादेवेति।** 'सार्वधातुकमपित्' इत्यतिदेशादिति नोक्तम्; पिदर्थत्वान् ङिद्वचनस्य। **यासुटो ङिद्वचनमिति।** यासुडादेर्लिङो ङिद्वचनमित्यर्थः। इदानीमेव ह्युक्तम्-ङित्त्वं तु लिङ एव विधीयते इति? एतच्च ज्ञापनम्—'पिच्च ङिन्न भवति' इत्येतदनाश्रित्योच्यते। तदाश्रयणे तु स्थानिवद्भावेन प्राप्तं ङित्त्वमौपदेशिकेन पित्त्वेन बाध्यते इति प्राप्त्यर्थमेव ङिद्वचनं स्यात्॥ १०३॥

**किदाशिषि॥ तस्य यासुट्... किद्भवतीति।** तस्य यासुड् भवति स च लिङ्किद्वद्भवतीत्यर्थः। अन्यथा 'प्रत्ययस्येदं कित्त्वम्' इत्यनन्तरग्रन्थेन विरोधः स्यात्। **प्रयोजनाभावादिति।** 'वचिस्वपि' इत्यत्रापि 'धातोः

**भावबोधिनी**

विधान किया जाता है क्योंकि उसी में ङित्त्वप्रयुक्त कार्य सम्भव होते हैं, आगम का नहीं [ किया जाता है क्योंकि आगम को ङित्त्वप्रयुक्त कोई कार्य नहीं करना है। ] उदा० – कुर्यात् [ कृ + लिङ् = तिप्, "तनादिकृञ्भ्य उः" ३।१।७९ से उ विकरण, ऋ का गुण, रपर करु + ति, "अत उत् सार्वधातुके" ६।४।११० से अ का उ कुरु + ति, यासुट् = यास् आगम, "इतश्च" ३।४।१०० से इलोप, "स्कोः संयोगाद्योरन्ते च" ८।२।२९ से स् का लोप और "ये च" ६।४।१०९ सूत्र से 'उ' [ विकरण ] का लोप – कुर् + या + त् = कुर्यात् ] कुर्याताम् [ कृ + लिङ् = तस् = ताम्, यासुट् आदि, शेष प्रक्रिया पूर्ववत् ]। कुर्युः [ कृ + लिङ् = झि, झि का जुस् = उस्, शेष प्रक्रिया पूर्ववत् करने पर कुर्या + उस् स्थिति में "उस्यपदान्तात्" ६।१।९६ से आ का पररूप, स् का विसर्ग। ]

स्थानिवद्भाव से ही लिङादेश का ङित्त्व सिद्ध रहने पर भी यासुट् को ङित् कहना ज्ञापन के लिये है—लकार का ङित्त्व मानकर आदेशों का, ङित्त्व नहीं होता है। [ अतः इनमें गुणनिषेध नहीं होता है— ] अचिनवम्, अकरवम्॥ १०३॥

आशीर्वाद अर्थ में जो लिङ् है और उसको यासुट् आगम होता है, वह उदात्त और किद्वत् होता है। यह कित्त्व प्रत्यय का ही होता है, आगम का नहीं, क्योंकि कोई प्रयोजन नहीं है। [ पूर्व सूत्र से यासुट् का ङित्त्व प्राप्त

**आशिषि यो लिङ् तस्य यासुडागमो भवति, स चोदात्तः किद्भवति । प्रत्ययस्यैवेदं कित्त्वम्, नागमस्य; प्रयोजनाभावात् । ङित्त्वे प्राप्ते कित्त्वं विधीयते । गुणवृद्धिप्रतिषेधस्तुल्यः, संप्रसारणम्, जागर्तेर्गुणे च विशेषः। इष्यात्, इष्यास्ताम्, इष्यासुः । जागर्यात्, जागर्यास्ताम्, जागर्यासुः । आशिषीति किम् ? वच्यात् । जागृयात् ॥**

**१२३८. झस्य रन् ॥ १०५ ॥ ( २२५६ )**

**'लिङः' इत्येव । झस्य लिङादेशस्य रन्-इत्ययमादेशो भवति । झोऽन्तापवादः । पचेरन् । यजेरन् । कृषीरन् ॥**

**न्यासः**

कित्त्वमनेन विधीयते; यासुडवयवत्वाल्लिङः । **नागमस्येति** । अत्रापि नागममात्रस्येत्येषोऽर्थो वेदितव्यः । **प्रयोजनाभावादिति** । न सर्वस्य कित्त्वप्रयोजनस्याभावादिति भावः । कुतः ? वच्यादिसूत्रेण यद् वचिस्वप्योः संप्रसारणं तस्य यासुट्यपि किति सम्भवात् । किन्मात्रे हि संप्रसारणमुच्यते, विशेषापरिग्रहात् । यदि गुणवृद्धिप्रतिषेधस्तुल्य एवेति कस्तर्हि ङित्त्वात् कित्त्वस्य विशेषो येन तस्मिन् प्राप्ते कित्त्वं विधीयेत ? इत्याह—**संप्रसारणमित्यादि** । ङित्त्वे हि वच्यादिसूत्रेण किति विधीयमानं संप्रसारणं न स्यात् । 'जाग्रोऽविचिण्णल्ङित्सु' इति विधीयमानो गुणः । **इष्यादिति** । 'स्कोः संयोगाद्योरन्ते च' इति सकारलोपः ।

**वच्यादिति** । कित्त्वाभावाद्वचेः संप्रसारणं न भवति । **जागृयादिति** । पूर्वसूत्रेण ङित्त्वम्, तेन गुणो न भवति । उभयत्रादादिकत्वाच्छपो लुक् ॥ १०४ ॥

**झस्य रन्** ॥ **कृषीरन्निति** । आशिषि लिङ् ॥ १०५ ॥

**पदमञ्जरी**

स्वरूपग्रहणे' इति प्रत्ययस्यैवेदं ग्रहणं स्यात्; अन्यथा वाच्यति वाचिकं कथयति, वाग्जहातीत्यत्रापि स्यात् । **गुणवृद्धिप्रतिषेधस्तुल्य इति** । किमर्थं तर्हि कित्त्वविधानमित्यत आह—**सम्प्रसारणमिति** । **जागर्यादिति** । 'जाग्रोऽविचिण्णल्ङित्सु' इति गुणः ॥ १०४ ॥

**झस्य रन्** ॥ झस्येत्यकारोच्चारणात्सङ्घातस्यैव ग्रहणं न वर्णस्य, अन्यथान्तादेशविधाविव 'झः' इत्येव ब्रूयादिति मन्यमान आह--**लिङादेशस्य झस्येति** । **झोऽन्तापवाद इति** । झकारस्य योऽन्तादेशस्तस्यापवाद

**भावबोधिनी**

रहने पर कित्व का विधान किया जा रहा है । [ ङित् और कित् इन दोनों में ] गुण एवं वृद्धि का प्रतिषेध तो तुल्य ही है, सम्प्रसारण में और जागृधातु के गुण में विशेष है । [ भाव यह है कि "वचिस्वपियजादीनां किति च" ६।१।१५ से कित् परे रहते सम्प्रसारण होता है और "जाग्रोऽविचिण्णल्ङित्सु" ७।३।८५ से ङित् परे गुणनिषेध होता है किन्तु आशीर्लिङ् का यासुट् कित् होता है । अतः गुण का निषेध नहीं होता है, गुण हो जाता है । ] उदा० —इष्यात् [ इष्+लिङ् = आशीः, तिप्, यासुट् = यास् इष् + यास् + ति, इकार का लोप, कित् होने से "स्कोः संयोगाद्योरन्ते च" ८।२।२९ से स् का लोप—इष्यात् ] इष्यास्ताम् [ इष् + यास् + तस् = ताम् ] इष्यासु [ इष् + यास् + झि = जुस् = उस्, विसर्ग--इष्यासुः । जगर्यात् [ जागृ + लिङ् = आशीः तिप् यासुट् = यास्, "जाग्रोऽविचिण्णल्ङित्सु" ७।३।८५ से ऋ का गुण, रपर, इकारलोप, सकार का लोप—जागर्यात् ] जागर्यास्ताम् । [ जागृ + यास् + तस् = ताम्, शेष पूर्ववत् ] जागर्यासुः [ जागृ+यास् + झि = जुस् = उस्, स् का विसर्ग, शेष पूर्ववत् – जागर्यासुः ] आशीर्वाद में लिङ् में ही कित् होता है – इसका क्या फल है ? वच्यात् [ वच् + लिङ् = विधि, तिप्, यासुट आदि कार्य । आशीर्लिङ् न होने से कित् नहीं होता है । अतः सम्प्रसारण नहीं होता है ] । जागृयात् [ जागृ+लिङ् = विधि, तिप्, यहाँ पूर्व सूत्र से ङित् यासुट् होता है अतः "जागृ०" ७।३।८५ से गुण नहीं होता है, शेष प्रक्रिया पूर्ववत् ] ॥ १०४ ॥

'लिङः' इसकी अनुवृत्ति होती है । लिङ् के आदेशभूत 'झ' के स्थान पर 'रन्' यह आदेश हो जाता है । यह ] "झोऽन्तः" ७।१।३ से प्राप्त ] झ के अन्त् आदेश का अपवाद है । उदा० --पचेरन् । [ पच् + लिङ् = विधि लिङ्

## १२३९. इटोऽत् ॥ १०६ ॥ ( २२५७ )

**लिङादेशस्य इटः 'अत्'-इत्ययमादेशो भवति। पचेय। यजेय। कृषीय। हृषीय। तकारस्येत्संज्ञाप्रतिषेधः प्राप्नोति 'न विभक्तौ तुस्माः' ( १.३.४ ) इति ? नैवायमादेशावयवस्तकारः किं तर्हि ? मुखसुखार्थं उच्चार्यते। आगमस्येटो ग्रहणं न भवति, 'अर्थवद्ग्रहणे नानर्थकस्य' ( व्या० परि० १ ) इति॥**

**न्यासः**

**इटोऽत्॥ कृषीयेति।** आशिषि लिङ्। **नैवायमादेशावयव इति।** अकारमात्रस्यादेशत्वात्। यद्येवम्, अकारोऽयमादेशो विधीयत इति 'अणुदित्सवर्णस्य चाप्रत्ययः' इति सवर्णानां ग्राहकः स्यात्? 'भाव्यमानोऽण् सवर्णान् न गृह्णाति' इति न भविष्यति। सत्यपि वा सवर्णग्रहणे मात्रिकस्यान्तरतम्यान्मात्रिक एव भविष्यति। अथ लविषीष्टेत्यत्रागमस्येटः कस्मादकारो न भवतीत्याह—**आगमस्येटो ग्रहणं न भवतीति।** अत्र कारणमाह **अर्थवद्ग्रहणे नेत्यादि।** ननु चागमानामप्यर्थवत्त्वमस्त्येव, तथा हि—यासुट्सहितेनैव लिङोऽर्थोऽभिधीयते, न केवलेन? नैतदेवम्, अन्येषु लकारेषु विनापि तेनार्थवत्ता दृष्टा, आगमानां तु न क्वचित्। तेन तेऽर्थवन्तो न भवन्तीति॥ १०६॥

**पदमञ्जरी**

इत्यर्थः। 'झोऽन्तः' इत्यस्य वा विधेरपवाद इत्यर्थः। ननु झवर्णस्यान्तादेशः समुदायस्य रन्निति कथं भिन्नविषययोर्बाध्यबाधकभावः? विरोधात्, येन नाप्राप्तिन्यायाच्च झोऽन्तापवाद इत्युपलक्षणम्; कृषीरन्, तृषीरन्नित्यत्र 'आत्मनेपदेष्वनतः' इत्यस्याप्यपवादः। ननु चापवादविप्रतिषेधादद्भाव एव प्राप्नोति, न; प्रतिपदविधेर्बलीयस्त्वात्, प्रतिपदविहितो हि रन्भावः। यद्वा—कृषीरन्, तृषीरन्नित्यत्रापि प्रवर्त्ततामद्भावः, सत्यपि तु तस्मिन्पुनः प्रसङ्गविज्ञानात् सङ्घातस्य रन् भविष्यति॥ १०५॥

**इटोऽत्॥ नैवायमादेशावयव इति।** तेन नास्येत्संज्ञया प्रयोजनम्, स्वयमेव निवृत्तत्वादित्यर्थः। प्रत्युतेत्संज्ञायां स्वरितत्वं स्यात्, 'न विभक्तौ तुस्माः' इत्यत्राभ्युपगमादेवोक्तम्—'किमादिटोदिति चात्र प्रतिषेधो न भवत्यनित्यत्वादस्य' इति। **अर्थवद्ग्रहण इत्यादि।** ल स्थाने य इडिति विशेषणादप्यागमस्येटो ग्रहणाभावः॥ १०६॥

**भावबोधिनी**

का झ, और झ का रन्, पच्+रन्, शप्=अ, सीयुट्=सीय्, स् का लोप—पच+इय्+रन्, गुण, यलोप—पचेरन्। वे पकावें] यजेरन्। [यज्+लिङ्=झ=रन् शेष पूर्ववत्। वे याग करें] कृषीरन् [कृ+लिङ्=आशीः, झ=रन्, सीयुट्, मूर्धन्य कृ+षीय्+रन्, य्लोप,—कृषीरन्! यहाँ "आत्मनेपदेष्वनतः" ६।१।५ से 'झ' का 'अत' आदेश प्राप्त होता है उसका भी यह अपवाद है]॥ १०५॥

लिङ् के आदेशभूत [उत्तमपुरुष एकवचन के] इट् के स्थान पर 'अत्' यह आदेश होता है। उदा०—पचेय। [पच्+लिङ्=विधि, उत्तमपुरुष एकवचन में इट् प्रत्यय, इट् का अत्=अ आदेश—पच्+अ, शप्=अ, सीयुट्=ईय् पच+ईय्+अ, "आद्गुणः" ६।१।८७ से अ+ई का गुण 'ए'—पचेय। मैं पकाऊँ। यजेय भी इसी प्रकार सिद्ध होता है। मैं यज्ञ करूँ, अर्थ होता है।] कृषीय। [कृ+लिङ्=आशीः,=इट्=अत् सीयुट्=ईय्, कृष्+ईय्+अ—कृषीय। मैं करूँ।] हृषीय। [सिद्धि पूर्ववत् हृ+लिङ्=आशीः। मैं हरण करूँ।] [अत् के] तकार की इत्संज्ञा का प्रतिषेध "न विभक्तौ तुस्माः" १।३।४ सूत्र से प्राप्त होता है? यह आदेश का अवयव तकार नहीं है; तो क्या है? मुखसुख के लिये उच्चारित किया जाता है। यहाँ आगम होने वाले इट् का ग्रहण नहीं है क्योंकि 'अर्थवान् के ग्रहण के प्रसङ्ग में अनर्थक का ग्रहण नहीं होता है' यह [परिभाषा] है।

विमर्श—[आगम का अपना स्वतन्त्र अर्थ नहीं होता है, "यदागमास्तद्गुणीभूताः तद्ग्रहणेन गृह्यन्ते" इस

## १२४०. सुट् तिथोः ॥ १०७ ॥ ( २२१० )

**'लिङः' इत्येव । लिङ्संबन्धिनोस्तकारथकारयोः सुडागमो भवति । तकारथकारावागमिनौ, लिङ् तद्विशेषणम् । सीयुटस्तु लिङेवागमी । तेन भिन्नविषयत्वात् सुटा बाधनं न भवति । तकारे इकार उच्चारणार्थः । कृषीष्ट, कृषीयास्ताम् । कृषीष्ठाः, कृषीयास्थाम् ॥**

### न्यासः

**सुट् तिथोः** ॥ अथ तकारथकाराभ्यां लिङ् **विशिष्यते**—तकारथकारयोर्यो लिङ् स्थानीति ? तेन वा तौ लिङ्सम्बन्धिनोस्तकारथकारयोरिति ? तत्र यद्याद्यः पक्ष आश्रीयेत, तदा विशेष्यत्वाल्लिङः प्राधान्यम् । ततश्च प्रधाने कार्यसंप्रत्ययाल्लिङ एव सुडागमः स्यात् । एवञ्च परत्वाद् विशेषविहितत्वाच्च सुटा सीयुड् बाध्येत । तस्माद् दुष्टोऽयं पक्ष इति द्वितीयं पक्षमाश्रित्याह—**लिङ्सम्बन्धिनोरिति** । यदुक्तम्—तकारथकारयोः सुडागमो भवतीति, तस्यार्थं स्पष्टीकर्तुमाह—**तकारथकारावागमिनाविति** । विशेष्यत्वेन प्राधान्यादिति भावः । यदुक्तञ्च—लिङ्सम्बन्धिनोरिति, तस्यार्थं स्पष्टीकर्तुमाह—**लिङ् तद्विशेषणमिति** । **सीयुटस्तु लिङेवागमीति** । तकारथकारावेवकारेण व्यवच्छिद्येते **तेनेत्यादि** । यत एवं तकारथकारावागमिनौ सुटः, सीयुटस्तु लिङेव, तेन भिन्नदेशत्वात् सुटा सीयुड् न बाध्यते । न च भिन्नदेशयोर्बाध्यबाधकभावो युक्त; विरोधाभावात् । **कृषीष्ट, कृषीष्ठा इति** । तथासोरेकवचनयो रूपे । **कृषीयास्ताम्, कृषीयास्थामिति** । आतामाथामोः । सर्वत्राशिषि लिङ्, 'उश्च' इति कित्त्वाद् गुणाभावः ॥ १०७ ॥

### पदमञ्जरी

**सुट् तिथोः** ॥ 'तिथोः' इति सप्तमी वा स्यात् ? षष्ठी वा ? आद्ये पक्षे 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति तकारथकारादेर्लिङादेशस्य सुटा भाव्यमिति कृषीष्ट कृषीष्ठा इत्यत्रैव स्यात्, कृषीयास्तां कृषीयास्थामित्यत्र न स्यात्; सुटा च सीयुटो बाधः स्यात्, उभयोरपि लिङादेशभक्तत्वादिति द्वितीयं पक्षमाश्रित्याह—**लिङ्सम्बन्धिनोस्तकारथकारयोरिति** । एतदेव स्पष्टयति—**तकारथकाराविति** । **लिङ् तद्विशेषणमिति** । लिङ्शब्देन तदादेशा उच्यन्ते । एवं लिङ्सम्बन्धिनोरित्यत्रापि । **कृषीष्टेति** । विध्यादौ लिङि सार्वधातुकत्वात् 'लिङः सलोपः' इति लोपेन सुटः श्रवणाभावादाशिषि लिङेवोदाहृतः ॥ १०७ ॥

### भावबोधिनी

परिभाषा से आगम जिसके लिये किये जाते हैं उसी के ग्रहण से आगम का भी ग्रहण होता है । अतः अर्थ भी उसी का होता है । आगम का अपना स्वतन्त्र अर्थ नहीं होता है । इट् प्रत्यय का अपना स्वतन्त्र अर्थ होता है । अतः वही यहाँ लिया जाता है ॥ १०६ ॥

'लिङः' इसकी अनुवृत्ति होती है । लिङ्-सम्बन्धी तकार और थकार के पूर्व सुट् आगम होता है । तकार और थकार आगमी है, लिङ् उनका विशेषण है [—लिङ् के तकार और थकार ] । परन्तु सीयुट् का तो लिङ् ही आगमी है । [ अतः यह लिङ् = आदेश प्रत्यय के पूर्व होता है और सुट् लिङादेशभूत प्रत्यय के तकार और थकार के पूर्व होता है । ] इस प्रकार दोनों का विषय भिन्न होने के कारण सुट् से [ सीयुट् का ] बाध नहीं होता है । [ तिथोः इसमें ] ति में इकार उच्चारण [—सौविध्य ] के लिये है । उदा०—कृषीष्ट [ कृ + लिङ् = आशीः, त, सीयुट् = सीय्—कृ + सीय् + त, त से पूर्व सुट् = स् आगम, कृ + सीय् + स् त, दोनों सकारों का मूर्धन्यादेश कृषीष्ट । वह करे । ] कृषीयास्ताम् [ कृ + लिङ् = आशीः, आताम्, सीयुट् = सीय्—कृ + सीय् + आताम् । त से पूर्व सुट् का आगम कृषीयास्ताम् । वे दोनों करें । ] कृषीष्ठाः । [ कृ + लिङ् = आशीः, थास् प्रत्यय, शेष प्रक्रिया कृषीष्ट के समान करके अन्त्य स का रुत्व विसर्ग—कृषीष्ठाः । तुम करो ] कृषीयास्थाम् । [ कृ + लिङ् = आशीः, आथाम्, शेष प्रक्रिया कृषीयास्ताम्' के समान है । तुम दोनों करो । ] ॥ १०७ ॥

**१२४१. झेर्जुस् ॥ १०८ ॥ ( २२१३ )**

'लिङः' इत्येव । लिङादेशस्य झेर्जुस् आदेशो भवति । झोऽन्तापवादः । पचेयुः । यजेयुः ॥

**१२४२. सिजभ्यस्तविदिभ्यश्च ॥ १०९ ॥ ( २२२६ )**

अलिङर्थ आरम्भः । सिचः परस्य अभ्यस्तसंज्ञकेभ्यो वेत्तेश्चोत्तरस्य झेर्जुस् आदेशो भवति । अभ्यस्त-विदिग्रहणमसिजर्थम् । 'ङितः' इति चानुवर्तते । सिचस्तावत्-अकार्षुः, अहार्षुः । अभ्यस्तात्-अबिभयुः, अजिह्रयुः, अजागरुः । विदेः – अविदुः ॥

**न्यासः**

**झेर्जुस् ॥ पचेयुरिति** । 'अतो येयः' इतीयादेशः, 'आद् गुणः, पररूपत्वम् ॥ १०८ ॥

**सिजभ्यस्तविदिभ्यश्च ॥ वेत्तेश्चेति** निर्देशेन लुग्विकरणस्यैवेह ग्रहणमिति दर्शयति । तस्यैव हि झिरनन्तरः सम्भवति, नान्येषां विदीनाम्; विकरणैर्व्यवधानात् । सत्ताविचारणार्थयोरात्मनेपदित्वात् झेरसम्भव एव, तस्माल् लुग्विकरणस्यैव ग्रहणं युक्तम् । **अभ्यस्तविदिग्रहणमसिजर्थमिति** । यद्यभ्यस्तविदिग्रहणमसिजर्थम्, एवं सति लडादिसम्बन्धिनोऽपि झेः प्राप्नोतीत्यत आह – ङित इति **चानुवर्तत इति** । तेन ङिल्लकारसम्बन्धिन एव झेर्जुस् भविष्यति, नान्येषामित्यभिप्रायः । **अबिभयुः, अजिह्रयुरिति** । 'ञिभी भये', 'ह्री लज्जायाम्', 'जुसि च' इति गुणः, 'जुहोत्यादिभ्यः शपः श्लुः', 'श्लौ' इति द्विर्वचनम् । **अजागरुरिति** । अदादित्वाच्छपो लुक्, जागर्तेः 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा ॥ १०९ ॥

**पदमञ्जरी**

**झेर्जुस् ॥ झोऽन्तापवाद इति** । पूर्ववद् व्याख्येयम् । जागृयुरित्यादौ च पूर्ववदेव 'अदभ्यस्तात्' इत्यस्यापि बाधः । **पचेयुरिति** । 'अतो येयः' इतीयादेशः, शपा सह 'आद्गुणः' ॥ १०८ ।

**सिजभ्यस्तविदिभ्यश्च** ॥ सत्ताविचारणार्थयोर्विदोरात्मनेपदित्वादसम्भव एव झेः, लाभार्थस्यापि विकरणेन व्यवधानादनन्तरस्य झेरसम्भवः, तस्माल्लुग्विकरणस्यैव विदेर्ग्रहणमित्याह—**वेत्तेश्चेति** । **अभ्यस्तविदिग्रहणमसिजर्थमिति** । न चैवं लोडादिष्वपि प्रसङ्ग इत्याह—**ङित इति चानुवर्तत इति** ॥ १०९ ॥

**भावबोधिनी**

'लिङः' इसकी अनुवृत्ति होती है । लिङ् के आदेशभूत 'झि' का 'जुस्' आदेश हो जाता है । यह झ के अन्त आदेश का अपवाद है । उदा०—पचेयुः । [ पच् + लिङ् = विधि, झि, शप् = अ, यासुट् = यास् = ईय् – पच् अ + इय् + झि, झि का जुस् = उस् , अ + इ का "आद्गुणः" ६।१।८७ गुण ए—पच् एय् उस् , स् का रुत्व विसर्ग—पचेयुः । वे पकावें । ] यजेयुः [ यज् + लिङ् = विधि, झि = जुस् शेष पूर्ववत् । वे यज्ञ करें । ] ॥ १०८ ॥

लिङ् से भिन्न स्थलों के लिये यह सूत्र बनाया गया है । सिच् के बाद आने वाले और अभ्यस्तसञ्ज्ञक एवं विद् धातु के बाद आने वाले झि का जुस् आदेश होता है । अभ्यस्त और विद् का ग्रहण सिच् – रहित [ लङ् लिङ् आदि ] स्थल के लिये है । और 'ङितः' इसकी अनुवृत्ति होती है ।—सिच् से परे झि का पहले उदा०—अकार्षुः [ कृ + लुङ् = झि, अट् , च्लि = सिच् = स् – अकृ + स् + झि, झि का जुस् = उस् , "सिचि वृद्धिः परस्मैपदेषु" ७।२।१ से ऋ की वृद्धि रपर—अकार् + स् + उस् , प्रथम सकार का मूर्धन्यादेश द्वितीय का रुत्व विसर्ग—अकार्षुः । उन्होंने किया । ] अहार्षुः । [ हृ + लुङ् = झि शेष पूर्ववत् । उन्होंने हरण किया । ] अभ्यस्तसंज्ञक से परे [ झि के जुस् आदेश ] का उदा०—अबिभयुः [ भी + लङ् , अट् , झि, शप् का "जुहोत्यादिभ्यः श्लु" २।४।७५ से श्लु और "श्लौ" ६।१।१० सूत्र से धातु का द्वित्व अभ्यासकार्य, जश्त्व – अबिभी + झि = जुस् = उस् "जुसि च" ७।३ ८३ से ई का गुण अय् आदेश, स् का रुत्व विसर्ग—अबिभयुः । वे डरे । ] अजिह्रयुः [ लज्जार्थक ह्री + लङ् = झि = जुस् शेष प्रक्रिया पूर्ववत् । उन्होंने लज्जा की । ] अजागरुः [ जागृ + लङ् = झि, "जक्षित्यादयः षट्" ६।१।६ से इसकी अभ्यस्तसंज्ञा होने से

## १२४३. आतः ॥ ११० ॥ ( २२२७ )

**सिज्ग्रहणमनुवर्तते । सिच आकारान्ताच्च परस्य झेर्जुसादेशो भवति । कथमाभ्यामानन्तर्यम् ? सिचो लुकि कृते प्रत्ययलक्षणेन सिचोऽनन्तरः, श्रुत्या चाकारान्तादिति । अदुः, अधुः, अस्थुः । तकारो मुखसुखार्थः ।**

**पूर्वेणैव सिद्धे नियमार्थं वचनम्-आत एव सिज्लुगन्तात्, नान्यस्मादिति । अभूवन् । प्रत्ययलक्षणेन जुस्प्राप्तः प्रतिषिध्यते, तुल्यजातीयापेक्षत्वान्नियमस्य । श्रूयमाणे हि सिचि भवत्येव - अकार्षुः; अहार्षुः ॥**

**न्यासः**

**आतः** ॥ सिचः परस्याकारान्तादुत्तरस्य झेरिति ब्रुवता द्वाभ्यामप्यनन्तरस्य झेरित्युक्तं भवति । उभाभ्याश्चानन्तर्यं न सम्भवति, आतः सिचा व्यवधानादिति मन्यमानः पृच्छति **कथमित्यादि । सिचो लुकीति ।** 'गातिस्था' इत्यादिना यदा सिचो लुक् क्रियते तदा प्रत्ययलक्षणेन सिचोऽनन्तरः सम्भवति । **श्रुत्या चाकारान्तादिति ।** तदनन्तरश्रूयमाणत्वात् । श्रुत्येति श्रोत्रेन्द्रियसाध्योपलब्ध्येत्यर्थः । तदेवं द्वाभ्यामप्यानन्तर्यस्याश्रयणात् सामर्थ्यादातः सिज्लुगन्ताद् झेर्जुस् भवतीत्युक्तं भवति । न हि श्रूयमाणे सिचि द्वाभ्यामानन्तर्यं सम्भवति । **तकारो मुखसुखार्थ इति ।** व्यावर्त्याभावात् । न हि ह्रस्वात् प्लुताद्वा वर्णात् परः सिच् सम्भवति ।

**पूर्वेणैव सिद्ध इति ।** लुप्तेऽपि सिचि प्रत्ययलक्षणेन झेः सिजनन्तरत्वादभूवन्निति नियमस्य व्यावर्त्यं दर्शयति । 'भुवो वुग् लुङ्लिटोः' इति वुक् । ननु च नैवेह पूर्वसूत्रेण प्राप्नोति, न हीह सिजपेक्षयानन्तर्यं झेर्विद्यते, तत् किं प्रतिषिध्यत इत्याह—प्रत्ययलक्षणेनेत्यादि । लुप्ते हि प्रत्ययलक्षणेनानन्तर्यमस्ति, अतः पूर्वेण प्राप्नोति । जुस् नियमेन प्रतिषिध्यते । यदि तर्हि नियमार्थमिदम्, अकार्षुरित्यत्रापि न स्यात्, न ह्यत्रातः

**पदमञ्जरी**

**आतः ॥ सिच आकारान्ताच्च परस्य झेरिति ।** द्वाभ्यामनन्तरस्येत्यर्थः । **कथमिति** । आतः सिचा व्यवधानाद् द्वाभ्यामानन्तर्यं न सम्भवतीति प्रश्नः । सिज्लुगन्ताद् झेर्जुस् भवतीत्युक्तं भवति । **अभूवन्निति ।** 'भुवो वुग्लुङ्लिटोः' इति वुक् । **तुल्यजातीयापेक्षत्वाच्चेति** । द्वाभ्यामानन्तर्यस्याश्रवणात् सिज्लुगन्तस्य ग्रहणमित्युक्तम् । तेन—सिज्लुगन्ताद्यदि भवति आत एवेति नियमाश्रयणात् श्रूयमाणे सिचि अकार्षुरित्यादावनाकारान्तादपि भवत्येवेत्यर्थः ॥ ११० ॥

**भावबोधिनी**

झि का जुस् जागृ + उस्, अट् आगम, ऋ का गुण रपर—अजागरुस्, स् का रुत्व विसर्ग । वे जागे ] विद् से परे — अविदुः । [ विद् + लङ् = झि = जुस् = उस्, अट् आगम, शप् और उसका लुक्—अविदुस्, स् का रुत्व विसर्ग — अविदुः । उन्होंने जाना । ] ॥ १०९

सिच्ग्रहण की अनुवृत्ति होती है । सिच् और आकारान्त से परे झि का जुस् आदेश होता है । सिच् और आकारान्त इन दोनों का आनन्तर्य = व्यवधान [ झि के साथ ] कैसे होता है ? [ अर्थात् आकारान्त के बाद सिच्, इसके बाद झि होता है, अतः सिच् का व्यवधान होता है । ] सिच् का लुक् कर देने पर प्रत्ययलक्षण से सिच् के अनन्तर [ अव्यवहित ] और श्रुति [ साक्षात् श्रवण ] के द्वारा आकारान्त के अनन्तर [ झि सम्भव हो जाता है । इसलिए इन दोनों के अव्यवहितोत्तर झि का जुस् होना सम्भव है । ] उदा०—अदुः [ दा + लुङ् = झि, अट्, सिच् = स्—अदा + स् + झि "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" २।४।७७ से सिच् का लुक्, झि का जुस् = उस् अदा + उस् "उस्यपदान्तात्" ६।१।९६ से आ और उ के स्थान पर पररूप एकादेश —अदुस् । स् का रुत्वविसर्ग - अदुः । उन्होंने दिया । ] अधुः । [ धा + लुङ् = झि, शेष पूर्ववत् । उन्होंने धारण किया ] अस्थुः । [ स्था + लुङ् = झि, शेष पूर्ववत् । वे बैठे । ] आत् का तकार मुखसुख [ उच्चारणसौविध्य ] के लिए है । [ क्योंकि ह्रस्व या प्लुत अकार से परे सिच् सम्भव नहीं है, अतः 'तत्काल' का ग्रहण कराने के लिए तपर मानना सम्भव नहीं है । ]

## १२४४. लङः शाकटायनस्यैव ।। १११ ।। ( २४६३ )

**'आतः' इत्येव । आकारान्तादुत्तरस्य लङादेशस्य झेर्जुसादेशो भवति, शाकटायनस्याचार्यस्य मतेन । अयुः । अवुः । अन्येषां मते - अयान् ।**

**न्यासः**

सिज्लुगन्तात्परो झिर्भवति ? इत्यत आह—**तुल्यजातीयेत्यादि** । आतः सिज्लुगन्तान्नियमार्थमयं जुस् विधीयते । स च नियमस्तुल्यजातीयापेक्षः, तेन समानजातीयमेव व्यवच्छिनत्ति । कश्च समानजातीयः ? अन्यः सिजलुगन्तः । न चाकार्षुरित्यत्र झेः पूर्वः सिज्लुगन्त इति नायं नियमस्य विषयः, तेन भवत्येव जुस् ।। ११० ।।

**लङः शाकटायनस्यैव** ।। **अयुः, अवुरिति** । पूर्ववच्छपो लुक्, पूर्ववच्च पररूपत्वम् ।

**लङेवेत्यादि** । यत्सम्बन्धिनो झेर्जुस्भावो विधेयः । तिङ्त्वमधिकृत्येदमुक्तम् । कुत एतत् ? लङ्लिङो-रप्याकारान्तादनन्तरयोः सम्भवात् । तत्सम्बन्धिनोस्तु 'झेर्जुस' इत्येवमादिनैव शास्त्रेण जुस्भावो विहित इति न तावदधिकृत्येदमुच्यते । एवकारस्तु लृङ्व्यवच्छेदार्थः स्यप्रत्ययेन झेर्व्यवधानात् । **लङेव यो लङिति** । येन केनचित् प्रकारेण यो लङ् न भवति स लङेव लङ् । स पुनर्मुख्यो लङ् यथा स्यात् । स चातिदेशद्वारेण यस्य लङ्वद्भावो न भवति स वेदितव्यः । यस्य ह्यतिदेशद्वारेण लङ्वद्भावो विहितः स उपचारेण लङित्युच्यते । परमार्थतस्तु लोडेवासौ, न लङेव । **लङ्वद्भावेन य इति** । लङिति सम्बध्यते । लङा तुल्यं वर्तत इति लङ्वत्,

**पदमञ्जरी**

**लङः शाकटायनस्यैव ।। अयुः, अवुरिति** । शपो लुक्, 'उस्यपदान्तात्' इति पररूपत्वम् ।

**लङेवेति** । लुङ्लिङोस्तावद्भवितव्यम्, लृङस्तु स्यप्रत्ययेन झेर्व्यवधानमिति भावः । **यान्तु, वान्त्विति** । 'लोटो लङ्वत्' इत्यत्र तु वाग्रहणानुवृत्त्याप्ययमर्थः साधितः । ननु च लङ्ग्रहणाद्यत्नाज्जुस्भावोऽयं लोटो मा भूत्, 'सिजभ्यस्त' इत्ययं तु स्यादेव ? तत्राह—**सिजभ्यस्तेत्यादि** । कथमित्यत्राह—**जुस्भावमात्रं हीति** ।

**भावबोधिनी**

पूर्ववर्ती सूत्र के द्वारा ही [ झि का जुस् आदेश ] सिद्ध रहने पर नियम करने के लिए यह सूत्र है—'सिच्लुगन्त [ सिच् का लुक् हुआ है जिससे उस ] आकारान्त धातु से ही परे झि का जुस् होता है, अन्य परे से नहीं ।' इसलिए अभुवन् । [ यहाँ भू + लुङ् = झि, सिच् और इसका लुक् कर देने पर भी जुस् आदेश नहीं होता है, क्योंकि यह आकारान्त धातु नहीं है । झ् का अन्त आदेश और वुक् = व् आगम आदि करने पर अभुवन् रूप सिद्ध होता है । ] यहाँ [ झि का लुक् कर देने पर भी ] प्रत्ययलक्षण से [ सिच् के अनन्तर झि सम्भव होने से ] जुस् प्राप्त होता है, इस नियम से निषेध हो जाता है, क्योंकि नियम तुल्यजातीय की अपेक्षा रखता है । [ यदि यह सूत्र नियमार्थ है तो 'अकार्षुः' यहाँ भी जुस् नहीं होना चाहिये, क्योंकि यहाँ सिज्लुगन्त से परे झि नहीं मिलता है । इसका समाधान यह है कि नियम समानजातीय दूसरे की व्यावृत्ति करने के लिए होता है, अतः जो अन्य सिज्लुगन्त रहता है, उसी से परे जुस् आदेश का वारण होता है । सिज्लुगन्त न होने से जुस् होता ही है । ] सिच् का श्रवण रहने पर झि का जुस् होता ही है—अकार्षुः अहार्षुः [ कृ + लुङ् = झि, अट्, सिच् = स्, ऋ की वृद्धि रपर अकार् + स् + झि, यहाँ सिच् है, अतः जुस् होता है अकार् + स् + उस्, मूर्धन्यादेश, स् का रुत्वविसर्ग अकार्षुः । उन्होंने किया । ] अहार्षुः [ हृ + लुङ् = झि = जुस् शेष पूर्ववत् । उन्होंने हरण किया । ] ।। ११० ।।

'आतः' इसकी अनुवृत्ति होती है । आकारान्त धातु के बाद, लङ् के आदेशभूत झि का जुस् आदेश होता है, यह शाकटायन आचार्य के मत से होता है । उदा०—अयुः [ या + लङ् = झि, अट् आगम, शप् लुक्, शाकटायन के मत में झि का जुस् = उस्, "उस्यपदान्तात्" ६।१।९६ से आ और उ दोनों का पररूप एकादेश, स् का रुत्व-विसर्ग अयुः । वे गये । ] अवुः [ वा + लुङ् = झि, शेष पूर्ववत् । वे चले । ] अन्य आचार्यों के मत में—अयान् [ या + लुङ् = झि = अन्ति, अट्, शप् लुक्, अयान्ति, "इतश्च" ३।४।१०० इकारलोप, संयोगान्त त् लोप—अयान् । ]

**ननु 'ङितः' इत्यनुवर्तते, अत्र लङेवाकारान्तादनन्तरो ङित्संभवति नान्यः, तत्किं लङ्ग्रहणेन ? एवं तर्हि लङेव यो लङ् विहितस्तस्य यथा स्यात्, लङ्वद्भावेन यस्तस्य मा भूत्, 'लोटो लङ्वत्' ( ३.४.८५ ) इति – यान्तु, वान्तु । 'सिजभ्यस्तविदिभ्यश्च' ( ३.४.१०९ ) इत्ययमपि झेर्जुस् लोटो न भवति—बिभ्यतु, जाग्रतु, विदन्तु । जुस्भावमात्रं हि मुख्येन लङा विशेष्यते । एवकार उत्तरार्थः ॥**

**१२४७. द्विषश्च ॥ ११२ ॥ ( २४३९ )**

**'लङः शाकटायनस्यैव' ( ३.४.१११ ) इत्येव । द्विषः परस्य लङादेशस्य झेर्जुसादेशो भवति, शाकटायन-स्याचार्यस्य मतेन । अद्विषुः । अन्येषां मते-अद्विषन् ॥**

न्यासः

लङ्सदृश इत्यर्थः, तस्य भावो लङ्वद्भावः । येन लङ्वद्भावेन लङ् व्यपदिश्यते तस्य मा भूदिति मुख्यस्यैव लङो ग्रहणं यथा स्यादित्येवमर्थं लङ्ग्रहणं क्रियते । केन पुनर्लङ्वद्भावो भवतीत्याह—**लोटो लङ्वदिति । अनेन** हि सूत्रेण लोटो लङ्वत् कार्येष्वतिदिष्टेषु लङ्कार्ययोगात् तस्य लङ्वद्भावो भवति । तेन लङ्सदृशभूत उपचारेण लङिति व्यपदिश्यते । अत्रायमर्थः—यदि मुख्यस्य लङः परिग्रहार्थं लङ्ग्रहणं न क्रियते, ततः 'लोटो लङ्वत्' इत्यतिदेशाद् यथा तामादि कार्यं लोटो भवति, तथेदमपि स्यात् । अतोऽस्य दोषस्य निवृत्त्यर्थं लङ्ग्रहणं क्रियत इति मा भून्नामायं जुस्; लोटो लङ्ग्रहणाद् यत्नात् । यस्तु 'सिजभ्यस्तविदिभ्यश्च' इत्यनेन विधीयते स बिभ्यतु, जाग्रतु, विदन्त्वित्यादौ कस्मान्न भवति, न हि किञ्चित् तत्र यत्नान्तरमस्ति ? इत्याह—**सिजभ्यस्तेत्यादि** । कथं पुनर्विना यत्नेन पूर्वको जुस लोटो न भवतीत्याह **जुस्भावमात्रं हीत्यादि ।** न ह्ययमेव जुस् मुख्येन लङा विशिष्यते, किं तर्हि ? जुस्भावमात्रम् । योऽस्मिन् प्रकरणे जुस् विहितः स मुख्यस्यैव लङो भवति, नेतरस्येति । तेन पूर्वकोऽपि जुस् न भवति । **एवकार उत्तरार्थ इति** । अथ तदर्थ एवकारः कस्मान्न भवति ? विध्यर्थत्वात् तस्य । नहि विध्यर्थवाक्य एवकारस्यार्थवत्त्वमुपपद्यते । स हि नियमार्थेषूपयुज्यते, न हि विध्यर्थेषु । न चेदं नियमार्थम्; सिद्धे हि विधिरारभ्यमाणो नियमार्थो भवति, न च सिद्धेऽयमारभ्यते । तस्मादुत्तरार्थ एवकारः । **ननु शाकटायनस्यैव मतेन** यथा स्यादन्येषां मते मा भूदित्येवमर्थमिहैवकारः स्यात् ? न; तेन विनाप्यस्य नियमस्य सिद्धत्वात् । यद्यन्येषां मते न स्यात्, शाकटायनग्रहणमनर्थकं स्यात् ॥ १११ ॥ **द्विषश्च ॥ अद्विषुरिति** । अदादित्वाच्छपो लुक् ॥ ११२ ॥

पदमञ्जरी

कथं पुनः 'आतः' इत्यनुवर्तमाने जुस्भावमात्रं मुख्येन लङा शक्यं विशेषयितुम् ? 'लङः' इति योगविभागः कर्तव्य इति मन्यते । ननु च 'आत इत्येतत्सिज्ग्रहणानुवृत्त्या नियमार्थम्' इत्युक्तम्, ततश्चायुरित्यत्र केनचिद-प्राप्तत्वाद्विध्यर्थमेतत्किमेवकारेण ? इत्यत्राह—**एवकार उत्तरार्थ इति** । 'लिट् च', 'लिङाशिषि' इत्यत्रास्य प्रयोजनं दर्शयिष्यति ॥ १११ ॥ **द्विषश्च** ॥ द्विषिरदादिः ॥ ११२ ॥

भावबोधिनी

प्रश्न—'ङितः' इसकी अनुवृत्ति होती है, यहाँ आकारान्त से अव्यवहित परे लङ् ही ङित् सम्भव है अन्य नहीं, तो फिर लङ् के ग्रहण का क्या फल है ? यदि ऐसी बात है तो लङ् ही जो लङ् किया गया है, उसी के झि का आदेश जिस प्रकार से हो सके, लङ्वद्भाव से जो लङ् है, उसके झि का आदेश न हो—जैसे "लोटो लङ्वत्" ३।४।८५ [ लोट् को लङ्वत् कार्य होते हैं ] यह है—यान्तु, वान्तु [ यहाँ स्वतः लङ् नहीं है, अतिदेश से लङ्वद्भाव है । अतः झि का जुस् नहीं होता है । ] "सिजभ्यस्तविदिभ्यश्च" ४।४।१०९ से भी होने वाला झि का जुस् आदेश लोट् के स्थान पर नहीं होता है—बिभ्यतु, जाग्रतु, विदन्तु । यहाँ केवल जुस्भाव=जुस् होने को ही मुख्य लङ् से विशेषित किया जाता है । एवकार का प्रयोग अगले सूत्रों के लिये है ॥ १११ ॥

'लङः शाकटायनस्यैव' इसकी अनुवृत्ति होती है । शाकटायन आचार्य के मत से द्विष् धातु से परे लङ् के आदेशभूत झि का जुस् आदेश होता है । उदा०—अद्विषुः । [ द्विष्+लङ्=झि, अट्, शप् और उसका लुक्, प्रस्तुत

## १२४६. तिङ् शित् सार्वधातुकम् ॥ ११३ ॥ ( २१६६ )

**तिङः शितश्च प्रत्ययाः सार्वधातुकसंज्ञा भवन्ति । भवति । नयति । स्वपिति । रोदिति । पवमानः । यजमानः । सार्वधातुकप्रदेशाः – 'सार्वधातुके यक्' ( ३.१.६७ ) इत्येवमादयः ॥**

## १२४७. आर्धधातुकं शेषः ॥ ११४ ॥ ( २१८७ )

**तिङः शितश्च वर्जयित्वाऽन्यः प्रत्ययः शेषो धातुसंशब्दनेन विहित आर्धधातुकसंज्ञो भवति । लविता ।**

**न्यासः**

**तिङ् शित् सार्वधातुकम् ॥ भवति नयतीति ।** तिङः सार्वधातुकसंज्ञायां तन्निबन्धनः कर्तरि शप्, तस्यापि शितः सार्वधातुकत्वात् 'सार्वधातुकार्धधातुकयोः' इति गुणः । **रोदितीति** । पूर्ववच्छपो लोपः, 'रुदादिभ्यः सार्वधातुके' इतीट् । **पवमानः, यजमान इति** । 'पूङ्यजोः शानन्', तस्य सार्वधातुकत्वात् शप्, तस्यापि सार्वधातुकत्वाद्धातोर्गुणः ॥ ११३ ॥

**आर्धधातुकं शेषः ॥ लवितेति ।** तृच्, 'आर्धधातुकस्येड् वलादेः' इतीट् । **वृक्षत्वमिति** । 'तस्य भावस्त्वतलौ' । **लूभ्यामिति** । लुनातेः क्विबन्ताद्भ्याम् । **जुगुप्सत इति** । गुपादिसूत्रेण सन् । त्वतलादीनामार्धधातुकत्वाभावादिडभावः । युक्तं वृक्षत्वं प्रत्युदाहरणम्, त्वप्रत्ययस्य धातोरविधानात्,

**पदमञ्जरी**

**तिङ् शित्सार्वधातुकम् ॥ तरति नयतीति** । तिङः सार्वधातुकत्वाच्छप् शपः सार्वधातुकत्वाद्धातोर्गुणः । **रोदितीति** । शपो लुकि 'रुदादिभ्यः सार्वधातुके' इतीट् । **पवमानो यजमान इति** । पूर्ववच्छब्गुणौ ॥ ११३ ॥

**आर्धधातुकं शेषः ॥ धातुसंशब्दनेनेति** । धातुशब्दमुच्चार्येत्यर्थः । अत्र हि यङ्विधौ यद्धातुग्रहणं शमिधातोरिति वा, यच्च धातोरिति, तदुभयमनुवर्तते; तत्रैकेनाधातुप्रत्ययो व्यावर्त्यते, अपरेण धातुप्रत्ययो

**भावबोधिनी**

सूत्र से झि का जुस् = उस्, स् का रुत्व, विसर्ग—अद्विषुः । उन्होंने शत्रुता की । ] दूसरे आचार्यों के मत में अद्विषन् [ द्विष् + लङ् = झि = अन्ति, अडागम, शप् और उसका लुक्, अद्विष् + अन्ति, इकारलोप, संयोगान्त त् का लोप—अद्विषन् । ] ॥ ११२ ॥

तिङ् [ तिप् आदि अठारह प्रत्यय ] और शित् [ शकार की इत्संज्ञावाले ] प्रत्ययों की सार्वधातुक संज्ञा होती है । उदा०—भवति । [ भू + तिप् इससे सार्वधातुक मानकर "कर्तरि शप्" ३।१।६८ से शप् होता है, उसमें श और प् की इत्संज्ञालोप होने से शित् और पित् 'अ' बचता है—भू + अ + ति, 'अ' को सार्वधातुक मानकर 'भू' का गुण "सार्वधातुकार्धधातुकयोः" ७।३।८४ से होता है । भो + अ + ति, ओ का अव् आदेश—भवति । होता है । ] नयति । [ णी = नी + लट् = तिप्, शप् आदि होता है । ले जाता है । ] स्वपिति । [ स्वप् + लट्, शप्, "अदिप्रभृतिभ्यः शपः" २।४।७२ से शप् का लुक्, परन्तु 'तिप्' को सार्वधातुक मानकर "रुदादिभ्यः सार्वधातुके" ७।२।७६ से इट् आगम होता है, स्वपिति । सोता है । ] 'रोदिति [ रुद् + लट् = तिप्, उपधागुण के अतिरिक्त शेष कार्य स्वपिति के समान होता है । रोता है । ] पवमानः । यजमानः । [ "पूङ्यजोः शानन्" ३।२।१२८ से √पू + शानन् = आन, √यज् + शानन् = आन, शित् प्रत्यय के सार्वधातुक होने से शप् = अ, पू + अ + आन, यज् + अ + आन; शप् भी शित् होने से सार्वधातुक है । अतः 'पू' के ऊ का गुण, अव् आदेश—पव + आन, यज + आन, "आने मुक्" ७।२।८२ से मुक् = म् आगम—पवमानः; यजमानः रूप होते हैं । ] सार्वधातुक के प्रयोगस्थल "सार्वधातुके यक्" ३।१।६७ आदि हैं ॥ ११३ ॥

धातुशब्द का उच्चारण करके किया गया, तिङ् और शित् से भिन्न प्रत्यय शेष है, वह आर्धधातुकसंज्ञक होता है । [ धातु से किया जाने वाला, तिङ् और शित् से भिन्न जो प्रत्यय है वह शेष है, वह आर्धधातुक कहा जाता है । ]

**लवितुम् । लवितव्यम् । 'धातोः' ( ३.१.९१ ) इत्येव—वृक्षत्वम्, वृक्षताऽस्ति । लूभ्याम्, लूभिः । जुगुप्सते ॥**

## १२४८. लिट् च ॥ ११५ ॥ ( २१७२)

**न्यासः**

लूभ्यामित्याद्ययुक्तम्, 'क्विबन्ता धातुत्वं न जहति' इति न्यायाद् भ्याम्प्रत्ययो धातोरेव विहितः, सन्प्रत्ययोऽपि धातोः, गुपादेर्धातुत्वात् ? नैतदस्ति; अस्यैव हि दोषस्य परीहाराय धातुशब्देन यो विहित इत्युक्तम् । तस्य चायमर्थः--धातोरित्येवं वो विहितो धातुशब्दमुच्चार्य यो विहित इति यावत् । यस्य विधायकलक्षणे धातुग्रहणमस्ति, न चैवं भ्यांसनौ विहितौ; तद्विधौ धात्वधिकारस्य धातुग्रहणस्य चासम्भवात् । कथं पुनर्धातुसंशब्दनेन यो विहित इत्येषोऽर्थो लभ्यते, यावता धातोरित्येकमेव धातुग्रहणमनुवर्तते, तच्चाधातुप्रत्ययनिवृत्तौ चरितार्थत्वान्नापरं किञ्चिद्विशिष्टमभिधातुमुत्सहते ? एवं मन्यते—यङ्विधानसूत्रात् 'शमिधातोः संज्ञायाम्' इत्यतो वा द्वितीयधातुग्रहणमनुवर्तते, तत्रैकेन धातुना अधातुप्रत्ययो निवर्तते, अपरेण धातुप्रत्ययो विशिष्यते धातोरित्येवं यो विहित इति । शेषग्रहणं किम् ? तिङ्शितोर्मा भूत्, अन्यथा ह्येकसंज्ञाधिकाराभावात् प्रत्ययादिसंज्ञानामिव समावेशः स्यात् ॥ ११४ ॥

**लिट् च ॥ शेकिथेति** । आर्धधातुकत्वाल्लिटः 'ऋतो भारद्वाजस्य' इतीट् । तत्र ऋत एव भारद्वाजस्य नान्येषां धातूनामित्येषोऽर्थोऽभिमतः । 'थलि च सेटि' इत्येत्वाभ्यासलोपौ । **जग्ले, मम्ले इति** । आर्धधातुकत्वाद् 'आतो लोप इटि च' इत्याकारलोपः ।

**पदमञ्जरी**

विशिष्यते, धातोरित्येवं यो विहित इति, तेनायमर्थः । **लूभ्याम्, लूभिः, जुगुप्सते इति** । यद्यप्यत्र धातोरेव विहितस्तथापि धातुशब्दमुच्चार्य न विहित इति भवति प्रत्युदाहरणम् । शेषग्रहणम्—तिङ्शितोर्मा भूत; अन्यथैकसंज्ञाधिकाराभावात् प्रत्ययादिसंज्ञानामिव समावेशः स्यात् ।

यद्येवकारोऽनुवर्तते शक्यं शेषग्रहणमकर्तुम् ॥ ११४ ॥

**लिट् च ॥ पेचिथ, शेकिथेति** । 'ऋतो भारद्वाजस्य' इति नियमादिट्, 'थलि च' सेटि इत्येत्वाभ्यासलोपौ ।

**भावबोधिनी**

उदा०—लविता [ √लू + तृच्, आर्धधातुक होने से "आर्धधातुकस्येड् वलादेः" ७।२।३५ से इट् करके गुण, अवादेश और विभक्ति कार्य होते हैं—लविता । काटने वाला ] लवितुम् [ लू + तुमुन्, इट् आदि । काटने के लिये ] । लवितव्यम् [ लू + तव्यत्, इट्, गुण अवादेश । काटना चाहिये ] ।

"धातोः" की अनुवृत्ति होती है । [ अतः धातु से परे ही शेष प्रत्यय आर्धधातुक होता है । अतः इनमें नहीं है—] वृक्षत्वम्, वृक्षता अस्ति [ "तस्य भावस्त्वतलौ" ५।१।११९ से त्व और तल्—प्रत्यय प्रातिपदिक से है ] । लूभ्याम्, लूभिः [ यहाँ लू धातु से क्विप् और उसका सर्वापहारी लोप होकर यद्यपि लू धातु दिखाई देती है किन्तु उसके कृदन्त हो जाने से प्रातिपदिक संज्ञा करके ही भ्याम्, भिस् प्रत्यय होते हैं; और भी, "क्विबन्ता धातुत्वं न जहति" इस भाष्य-वचन से भी यहाँ आर्धधातुक संज्ञा नहीं हो सकती, क्योंकि 'धातु से' —ऐसा कहकर इन प्रत्ययों का विधान नहीं है । ] जुगुप्सते । [ घृणा करता है । गुप् से जो सन् होता है वह 'धातोः' इस सूत्र के अनुसार नहीं है । अतः इसकी भी आर्धधातुक संज्ञा नहीं होती है । ] ॥ ११४ ॥

लिट् के आदेशभूत तिङ् की भी आर्धधातुक संज्ञा होती है । यह सार्वधातुक संज्ञा का अपवाद है । उदा०—पेचिथ [ पच् + लिट् = सिप् = थल्, द्वित्व पच् पच् + थ, "ऋतो भारद्वाजस्य" ७।२।६३ इस नियम से इट्, "थलि च सेटि" ६।४।१२१ से अभ्यासलोप और अ का एत्व—पेचिथ । इट् वैकल्पिक है । अतः पक्ष में पपक्थ ] । शेकिथ [ शक् + लिट् = सिप् = थल् शेष पूर्ववत् ] । जग्ले । [ √ग्लै "आदेच उपदेशेऽशिति" ६।१।४५ से ऐ का आत्व ग्ला + लिट्

लिडादेशस्तिङार्धधातुकसंज्ञो भवति। सार्वधातुकसंज्ञाया अपवादः। पेचिथ। शेकिथ। जग्ले। मम्ले। ननु चैकसंज्ञाधिकारादन्यत्र समावेशो भवति? सत्यमेतत्; इह त्वेवकारोऽनुवर्तते, स नियमं करिष्यति॥

१२४९. लिङाशिषि॥ ११६॥ ( २२१९ )

आशिषि विषये यो लिङ् स आर्धधातुकसंज्ञो भवति। सार्वधातुकसंज्ञाया अपवादः। समावेशश्चैवकारानुवृत्तेर्न भवति। लविषीष्ट। पविषीष्ट। आशिषीति किम्? लुनीयात्। पुनीयात्॥

१२५०. छन्दस्युभयथा॥ ११७॥ ( ३४३९ )

छन्दसि विषये उभयथा भवति – सार्वधातुकमार्धधातुकं च। किं लिङेवानन्तरः सम्बध्यते? नैतदस्ति; सर्वमेव प्रकरणमपेक्ष्यैतदुच्यते। तिङ्शिदादि छन्दस्युभयथा भवति। वर्धन्तु त्वा सुष्टुतयः ( ऋ० ७.९९.७ )।

न्यासः

**ननु चेत्यादिना** यदुक्तम् 'सार्वधातुकसंज्ञाया अपवादः' इति तद् विघटयति। एकसंज्ञाधिकारादन्यत्र समावेशो भवति, यथा – प्रत्ययादिसंज्ञानाम्। न चात्रैकसंज्ञाधिकारोऽस्ति, तदयुक्तमस्याः सार्वधातुकसंज्ञाया अपवादत्वमित्यभिप्रायः सत्यमेतदित्यादिना अपवादत्वमेव समर्थ्यते॥ ११५॥

**लिङाशिषि॥ लविषीष्ठा इति।** थास्, 'सुट् तिथोः' इति सुट्, षत्वम्, ष्टुत्वञ्च॥ ११६॥

**छन्दस्युभयथा॥ अस्तय इति।** 'अस भुवि', स्त्रियां क्तिन्। सार्वधातुकत्वादस्तेर्भूभावो न भवति। **विशृण्विरे इति।** अत्र लिटः सार्वधातुकत्वात् 'श्रुवः शृ च' इति श्नुप्रत्ययः, शृभावश्च। सुन्विरे इति।

पदमञ्जरी

**जग्ले मम्ल इति।** आर्धधातुकत्वात् 'आतो लोप इटि च' इत्याकारलोपः। यदुक्तम्—सार्वधातुकसंज्ञाया अपवाद इति, तद्विघटयति—**ननु चेति। सत्यमित्यादिना** अपवादत्वं समर्थ्यते॥ ११५॥११६॥

**छन्दस्युभयथा॥ सर्वमेव प्रकरणमिति।** 'तिङ्शित्सार्वधातुकम्' इत्यारभ्य चतुःसूत्रीप्रकरणम्।

भावबोधिनी

=त=एश्, द्वित्व अभ्यासकार्य जग्ला+ए, आर्धधातुक होने से "आतो लोप इटि च" ६।४।६४ से आकार का लोप जग्ल्+ए=जग्ले। ग्लान हुआ ] मम्ले [ म्लै=म्ला+लिट्=त=एश्, शेष पूर्ववत्। म्लान हुआ। ]

[ प्रश्न– ] एक संज्ञा होती है [ "आकडारादेका संज्ञा" १।४।१ ] इससे भिन्न स्थल पर [ अनेक ] संज्ञाओं का समावेश हो जाता है? [ अर्थात् एक साथ अनेक संज्ञाओं का व्यवहार होता है? ] [ उत्तर ] यह कथन सत्य है; परन्तु यहाँ [ "लङः शाकटायनस्य एव" ३।४।१११ से ] एवकार की अनुवृत्ति होती है, वह नियम करेगा। [ आर्धधातुक एव—न तु सार्वधातुक अपि।' अतः एक प्रत्यय की एक ही संज्ञा रहती है। ]॥ ११५॥

आशीर्वाद विषय में जो लिङ् होता है उसकी भी आर्धधातुक संज्ञा होती है। सार्वधातुक संज्ञा का अपवाद है। 'एव' की अनुवृत्ति के कारण दोनों संज्ञाओं का समावेश नहीं होता है। उदा०—लविषीष्ट [ लू+लिङ्=आशीः, त, सीयुट्=सीय्, आर्धधातुक होने से इट् आगम लु+इ+सीय्+त, सुट्=स् आगम, उ का गुण अवादेश लव्+इ+सीय्स्त, य् लोप, मूर्धन्यादेश, ष्टुत्व-लविषीष्ट। वह काटे। ] पविषीष्ट [ पू+लिङ्=आशीः, शेष प्रक्रिया पूर्ववत्। वह पवित्र करे। ]आशीर्लिङ् में—इसका क्या फल है? लुनीयात्, पुनीयात् [ यहाँ विधिलिङ् में आर्धधातुक संज्ञा नहीं होने से इट् नहीं होता है। ] [ न्यासकार ने—लविषीष्ठाः पाठ रखा है। ]॥ ११६॥

वेदविषय में सार्वधातुक और आर्धधातुक—ये दोनों संज्ञायें होती है। क्या अव्यवहित पूर्ववर्त्ती लिङ् का ही इस वाक्य से सम्बन्ध होता है? नहीं, ऐसा नहीं है; सम्पूर्ण प्रकरण की अपेक्षा रखकर ऐसा कहा जा रहा है। "तिङ्शित् सार्वधातुकम्" ३।४।११३ से लेकर चार सूत्रों तक होने वाली संज्ञायें वेद में दोनों प्रकार की होती हैं। उदा०—

आर्धधातुकत्वाण्णिलोपः। वर्धयन्तु—इति प्राप्ते। शेषं च सार्वधातुकम्—स्वस्तये नावमिवारुहेम। (ऋ० १०.१७८.२) क्तिनः सार्वधातुकत्वादस्तेर्भूभावो न भवति। लिट् सार्वधातुकम्—ससृवांसो विश्रृण्विरे (ऋ० ४.८.६)। सोममिन्द्राय सुन्विरे (ऋ० ७.३२.४)।

लिङ् उभयथा भवति – उपस्थेयाम शरणं बृहन्तम् (ऋ० ६.४७.८)। सार्वधातुकत्वात् – 'लिङः सलोपः', (७.२.७९) आर्धधातुकत्वात् – एत्वम्। व्यत्ययो बहुलम्' (३.१.८५) इत्यस्यैवायं प्रपञ्चः।

॥ इति श्रीजयादित्यविरचितायां काशिकावृत्तौ तृतीयाध्यायस्य चतुर्थः पादः॥

●

न्यासः

'स्वादिभ्यः श्नुः'। **उपस्थेयामेति**। तिष्ठतेर्लिङ्, यासुट्, मस्, 'एर्तेलिङि' इत्येत्वम्। ननु 'व्यत्ययो बहुलम्' इत्यनेनेव सिद्धं सर्वमेवेदम्, तत् किमर्थोऽयमारम्भ इत्याह—व्यत्ययो बहुलम् इत्यस्यैवेति। गतार्थम्॥ ११७॥

॥ श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरण-
पञ्चिकायां तृतीयाध्यायस्य चतुर्थः पादः समाप्तः॥

●

पदमञ्जरी

**भूभावो न भवतीति**। तदानीमेवार्धधातुकत्वात् 'श्नसोरल्लोपः' इत्यस्याभावः॥ ११७॥

॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां तृतीयाध्यायस्य चतुर्थः पादः॥

●

भावबोधिनी

वर्धन्तु त्वा सुष्टुतयः। [ सुन्दर स्तुतियाँ तुम्हें बढ़ावें वृध् + णि + अन्तु में झि = अन्तु ] आर्धधातुक हो जाने से णि का लोप होता है। वर्धयन्तु--यह रूप प्राप्त होता है, और शेष सभी सार्वधातुक भी होते हैं--स्वस्तये नावमिवारुहेम [ कल्याण के लिये चढ़ूँ। सु + अस् + क्तिन् यहाँ ] क्तिन् प्रत्यय के सार्वधातुकसज्ञक हो जाने से "अस्तेर्भू" २।४।५२ से अस् धातु का भू आदेश नहीं होता है। [ सु-अस्तये यह चतुर्थी एकवचन है। ] लिट् सार्वधातुक भी होता है--ससृवांसो विश्रृण्विरे [ विधिपूर्वक श्रु + लिट् = झ = इरेच्, लिट् के सार्वधातुक हो जाने से "श्रुवः शृ च" ३।१।७४ से श्रु का शृ आदेश और श्नु = नु विकरण भी होता है--विश्रृणु + इरे यण्--विश्रृण्विरे। ] सोममिन्द्राय सुन्विरे। [ इन्द्र के लिए सोम निचोड़ा जाता है। सु + लिट् = झ = इरेच्, लिट् के सार्वधातुक हो जाने से "स्वादिभ्यः श्नुः" ३।१।७३ से श्नु = नु विकरण होने पर सु + नु + इरे; यणादेश--सुन्विरे। ] लिङ् दोनों प्रकार का होता है—उपस्थेयाम शरणं बृहन्तम् [ उपपूर्वक स्था + लिङ्, = मस्, यासुट = यास्—उपस्था + यास् + मस् ] सार्वधातुक होने से "लिङः सलोपोऽनन्त्यस्य" ७।२।७९ से स् का लोप होता है और आर्धधातुक होने से "एर्तेलिङ्" ७।४।२४ से आ का एत्व होता है [ उपस्थेयामस् "नित्यं ङितः" ३।४।९९ से स् का लोप—उपस्थेयाम ] "व्यत्ययो बहुलम्" ३।१।८५ इसी का प्रपञ्च [ विस्तृत रूप ] यह है॥ ११७॥

॥ इस प्रकार जयादित्यविरचित काशिकावृत्ति में तृतीय अध्याय का चतुर्थपाद समाप्त हुआ॥

॥ आचार्य जयशङ्करलाल-त्रिपाठीविरचित-भावबोधिनी हिन्दी-व्याख्या में काशिकावृत्ति के तृतीय अध्याय का चतुर्थपाद समाप्त॥

●

॥ समाप्तश्चाऽयं तृतीयोऽध्यायः॥

न्यास-पदमञ्जरी-'भावबोधिनी' हिन्दी व्याख्यासहिता

# काशिकावृत्तिः

## अथ चतुर्थाध्याये प्रथमः पादः

—:०:—

१२५१. ङ्याप्प्रातिपदिकात् ॥ १ ॥ (१८२)

**अधिकारोऽयम्। यदित ऊर्ध्वमनुक्रमिष्याम आ पञ्चमाध्यायपरिसमाप्तेः ङ्याप्प्रातिपदिकात्--इत्येवं तद्वेदितव्यम्। स्वादिषु कप्पर्यन्तेषु प्रकृतिरधिक्रियते। 'ङी' इति-ङीब्ङीष्ङीनां सामान्येन ग्रहणम्, टाब्डाप्चा-**

न्यासः

**ङ्याप्प्रातिपदिकात् ॥ अधिकारोऽमिति।** स्वरितेनासञ्जितत्वात्। **आ पञ्चमाध्यायपरिसमाप्तेरिति।** अनेनाधिकारस्यावधिं दर्शयति। ततः परं नायमनुवर्तते; अस्वरितत्वात्। **स्वादिषु कप्पर्यन्तेष्विति।** अधिकारस्य विषयमाचष्टे। **ङी इति ङीष्ङीष्ङीनां सामान्येन ग्रहणमित्यादि।** 'ङी' इति विशेषकराननुबन्धानुत्सृज्य यत् सामान्यं ङीमात्रं तदिह गृह्यते। **टाब्डाप्चापामाबिति।** सामान्येन ग्रहणमिति प्रकृतेन सम्बन्धः। ननु च ङ्यादीनां बहुत्वाद् बहुवचनेन भवितव्यम्, तत् कथं 'ङ्याप्प्रातिपदिकात्' इत्येकवचनेन निर्देश इत्याह—**तेषामित्यादि।** समाहारद्वन्द्वेनेह ङ्यादीनामयं निर्देशः कृत इत्यर्थः। इतरेतरयोगे हि द्वन्द्वे[1] स्याद् बहुवचनम्। न चायमितरेतरयोगे द्वन्द्वः, किं तर्हि ? समाहारे। तस्य चैकार्थत्वादेकवचनमेव युक्तम्। **समाहारनिर्देश इति** वचनमितरेतरयोगनिवृत्त्यर्थम्, समासान्तरनिवृत्त्यर्थञ्च, अन्यथा हि ङ्यापोः प्रातिपदिकं ङ्याप्प्रातिपदिकमित्यपि षष्ठीसमास आशङ्क्येत। ततो ङ्यन्तमाबन्तञ्च समासप्रातिपदिकं यत् ततः स्याद् राजकुमार्यादिभ्यः, न तु केवलेभ्यः कुमार्यादिभ्यः। ङ्यापोस्तु विधानेनैव प्रातिपदिकं प्रकृतिः स्यात्। तस्मात् समाहारद्वन्द्वेनायं निर्देशः। तत्र तु त्रयं प्रकृतित्वेनाधिक्रियते तेन सर्वतो भवति।

पदमञ्जरी

**ङ्याप्प्रातिपदिकात् ॥ अधिकारोऽयमिति।** विधेयपरिभाष्ययोरनिर्देशात् वक्ष्यमाणानां च स्वादीनां प्रकृत्यपेक्षत्वात् स्वरितत्वाच्च। **आ पञ्चमाध्यायपरिसमाप्तेरिति।** अधिकारस्यावधिं दर्शयति। अधिकारोऽनेकप्रकारः—**संज्ञाधिकारः,** विशेषणाधिकारः, प्रकृत्यधिकारश्चेति, तत्र कीदृशोऽयमधिकारः ? इत्यत आह—**स्वादिषु कप्पर्यन्तेषु प्रकृतिरधिक्रियते इति। टाब्डाप्चापामाबितीति।** सामान्यग्रहणमित्यनुषङ्गः। **समाहारनिर्देश इति।** समाहारद्वन्द्वेन तेषां ङ्यादीनामयं निर्देश इत्यर्थः। ततश्च समाहारस्यैकत्वादेकवचनमेव युक्तम्, न बहुवचनमिति भावः।

भावबोधिनी

ङ्याप्प्रातिपदिकात् यह अधिकार [ सूत्र ] है। यहाँ से आगे पञ्चम अध्याय की समाप्ति तक जो कहे जायेंगे, वे ङी, आप् और प्रातिपदिक से होते हैं--ऐसा समझना चाहिये। [ प्रत्यय के ग्रहण में प्रत्ययान्त का ग्रहण होता है--इस नियम से ङी = ङ्यन्त, आप् = आबन्त ऐसा समझकर--ङ्यन्त से, आबन्त से और प्रातिपदिक से होता है--ऐसी व्याख्या करनी चाहिये। ] सु आदि से कप्-प्रत्यय-पर्यन्त [ अर्थात् "स्वौजस०" ४।१।२ से विहित सु प्रत्यय से लेकर पञ्चम अध्याय की समाप्ति तक के सूत्रों द्वारा विहित कप् प्रत्यय तक ] प्रकृति का अधिकार है। ङी--इससे ङीप्,

---

१. 'द्वन्द्वपदार्थस्य बहुत्वाद् बहुवचनं स्यात्' इति वा पाठः।

**पाम् – आबिति, प्रातिपदिकमुक्तम् – 'अर्थवत्' ( १.२.४५ ), 'कृत्तद्धितसमासाश्च' ( १.२.४६ ) इति, तेषां समाहारनिर्देशः— ङ्याप्प्रातिपदिकादिति।**

**न्यासः**

अथ कथं पुनरत्र विग्रहः ? **केचिदाहुः**—"ङीश्च आप्च प्रातिपदिकञ्चेति। ननु च 'अप्रत्ययः' इति प्रातिपदिकसंज्ञाप्रतिषेधाद् ङीश्चेति विभक्त्युत्पत्तिर्न स्यात् ? उच्यते; नायं प्रत्ययः, अपि तु प्रत्ययानुकरणमिदम्। एवमपि 'प्रकृतिवदनुकरणं भवति' इति स्यादेव प्रतिषेधः ? नैष दोषः; अनुकरणं द्वैधम्—अर्थस्य, शब्दमात्रस्य चेति। ज्ञापितमाचार्येणैतद् द्वेधा निर्देशात्—'परिव्यवेभ्यः क्रियः' 'विपराभ्यां जेः' इतीयङादेशस्य करणाकरणाभ्याम्। अतोऽत्र शब्दमात्रमनुकृतम्, न त्वर्थसहितम्। तेनात्र 'अप्रत्ययः' इति नास्त्येव प्रतिषेधः। प्रकृतिवदतिदेशस्त्वर्थवत्यनुकरणे। ननु चैवमपि हल्ङ्यादिलोपेन भाव्यम् ? उच्यते; ङ्यन्तात् सुलोपः, न ङीमात्रात्। व्यपदेशिवद्भावात् स्यादिति चेत् ? न; 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इत्युच्यते, प्रातिपदिकञ्चेदम्। तस्मान् ङीश्च" इति। अथ प्रत्ययविधिविषयैषा परिभाषा, 'पूर्वादिनिः सपूर्वाच्च' इत्यत्र ज्ञापितत्वात् ? न चायं प्रत्ययविधिः, कस्तर्हि ? लोपविधिरिति, अतः परिभाषा न प्रवर्त्तत इत्यस्त्येव व्यपदेशिवद्भाव इति ततः प्रवर्त्तते लोपशास्त्रम्। अतः सुलोपेन भवितव्यम्—ङी चेति। सामान्येन परिभाषाप्रवृत्तिमाश्रित्य ङीश्चेति विग्रहः।

**पदमञ्जरी**

किमर्थमिदमुच्यते ? ङ्याप्प्रातिपदिकात् परे स्वादयो यथा स्युरिति केवलानां प्रयोगो मा भूत् ! 'परश्च' इति वचनात् केवलानां प्रयोगो न भविष्यति ? इदं तर्हि प्रयोजनम्—ङ्याप्प्रातिपदिकादेव यथा स्युरिति प्रकृत्यन्तरान्मा भूवन्। असति ह्यस्मिन्नधिकारे धातुः, तिङन्तम्, वाक्यम्, सुबन्तं चेति ङ्याप्प्रातिपदिकव्यतिरिक्तापि चतुर्विधा प्रकृतिरस्ति, वक्ष्यमाणाश्च प्रत्ययाश्चतुर्विधाः—स्वादयः, टाबादयः, अणादयः, स्वार्थिकाश्चेति; तदिह चतुर्विधाभ्यः प्रकृतिभ्यश्चतुर्विधाः प्रत्यया मा भूवन्निति कर्त्तव्य एवायमधिकारः।

न कर्त्तव्यः। ननु चासत्यस्मिन् धात्वधिकाराद्धातोरेव स्युः, कृदुपपदसंज्ञे च स्याताम्, वाऽसरूपविधिश्च स्यात् ? न; निवृत्तत्वाद्धातुग्रहणस्य। यदि परं धातोरपि स्युः, तदपि न; कर्मादीनामभावात्। कर्मादिषु च कारकेष्वेकत्वादिकायां च संख्यायां स्वादयो विधीयन्ते, न च धात्वर्थस्य कर्मादिभिर्योगः सम्भवति। कथं तर्हि कर्मणि तव्यदादयो भवन्ति ? नैव धात्वर्थस्य कर्मत्वे तव्यदादयो भवन्ति, किं तर्हि ? धात्वर्थं प्रति यत्कर्म तस्मिन्वाच्ये—कर्त्तव्यः कट इति। स्वादयस्तु प्रकृत्यर्थस्य कर्मत्वे चरितार्था नान्यस्य कर्मत्वे भवितुमर्हन्ति, तव्यदादिभिश्च बाधितत्वाद्धातोः स्वादीनामभावः। ननु च धात्वर्थस्यैव कर्मत्वं दृष्टम्—सन्प्रकृतौ चिकीर्षतीत्यादौ ? एवमपि संख्याभावः सिद्ध एव, अव्ययेभ्यस्तु 'अव्ययादाप्सुपः' इति ज्ञापकात् स्वादयो भवन्ति। यत्पुनः 'बहुषु बहुवचनम्' इत्यत्रोक्तम्—यत्र च संख्या सम्भवतीति, तदस्यां दशायां तथा नाश्रीयते। टाबादयस्तर्हि धातोर्मा भूवन्निति ? स्त्रियां टाबादयो विधीयन्ते, न च धात्वर्थस्य स्त्रीत्वेन योगोऽस्ति। कथं तर्हि स्त्रियां क्तिन्नादयो विधीयन्ते ? नैवात्र धात्वर्थस्य स्त्रीत्वे क्तिन्नादयः स्मर्यन्ते, कस्य तर्हि ? यस्तस्य सिद्धत्वं नाम धर्मस्तस्य। क्तिन्नादिभिश्च बाधितत्वाट्टाबादीनामभावः।

**भावबोधिनी**

ङीष् और ङीन् इन तीनों का सामान्यरूप से ग्रहण है, आप्—इससे टाप्, डाप् और चाप् इन तीनों का सामान्यरूप से ग्रहण है, "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" १।२।४५ और "कृत्तद्धितसमासाश्च" १।२।४६ से प्रातिपदिक कहा जा चुका है; इनका [ ङी च, आप् च, प्रातिपदिकं च—एषाम् समाहारः ] समाहारद्वन्द्व से निर्देश है—ङ्याप्प्रातिपदिकात्। [ इसलिए एकवचन का प्रयोग शुद्ध है। इतरेतरयोगद्वन्द्व में बहुवचन प्रसक्त होता है। ]

**न्यासः**

अन्यस्त्वाह—"प्रयोगस्थ एव कुमारी-गौरीत्यादिषु य ईकारः सोऽत्रानुकृत एव लुप्तविभक्तिकः, तेन ङी इत्येव भवति। यद्येवम्, कुतो ङकारः सामान्यग्रहणार्थं आसज्यते? ननु चानुक्रियमाणेनार्थेनार्थवत्त्वात् पुनरपि विभक्त्युत्पत्तिः प्राप्नोति, ततश्च ङीश्चेति भवितव्यम्? नैतदस्ति; प्राक्कालभाविनी या विभक्तिस्तां प्रत्ययलक्षणेनाश्रित्याप्रत्यय इति प्रतिषेधात्। अथापि स्यात्—'न ङिसम्बुद्धयोः' इति ज्ञापकात् प्रत्ययलक्षणेनाप्रत्यय इति प्रातिपदिकसंज्ञा न प्रतिषिध्यते" इति। असदेतत्; नलोपविधिविषयमेवैतज्ज्ञापकम्। अतोऽत्र नास्त्येव प्रत्ययलक्षणेन प्रातिपदिकसंज्ञाप्रतिषेध इति स्थितमेतत्।

ननु च प्रत्ययत्वे सति 'परश्च' इति वचनात् परे भवन्तः स्वादयः पूर्वां प्रकृतिमाक्षिप्य भवन्ति, न ह्यन्यथा परत्वमुपपद्यते, तस्य परत्वस्य पूर्वापेक्षत्वात्, न च ङ्यादिभ्योऽन्या प्रकृतिरुपपद्यते। तत्र ङ्याप्प्रातिपदिकग्रहणमन्तरेणापि पारिशेष्यादियमेव प्रकृतिर्लभ्यते। तथा हि, प्रकृत्यन्तरं धातुरस्ति—तिङन्तञ्च, वाक्यञ्च। प्रत्यया अपि स्वादयः, टाबादयः, अणादयश्च। तत्र धातोस्तावत् स्वादिभिर्न भवितव्यम्, ते ह्येकत्वादिष्वर्थेषु विधीयमानास्तद्वन्तं शब्दमाक्षिपन्ति। न च धातुरेकत्वादिमान्। अथाप्यविशेषेणोत्पद्यन्ते, उत्पन्नानां तु नियमः क्रियते? तथापि नैव तेषां धातोरुत्पत्तिर्युक्ताः, सामान्यविहितानां स्वादीनां विशेषविहितैस्तव्यदादिभिर्बाधितत्वात्। टाबादयस्तर्हि धातोर्भवेयुरिति चेत्? स्यादेतत् असति ङ्याप्प्रातिपदिकग्रहणेऽकारान्तेभ्यो धातुभ्यो जुगुप्सादिभ्यः 'अतः' इति टाप् स्यात्, उगिद्भ्यो वञ्चुप्रभृतिभ्यः 'उगितश्च' इति ङीप् स्यात्, नकारान्तेभ्यो मन्प्रभृतिभ्यः 'ऋन्नेभ्यो ङीप्' इति ङीप्प्रत्यय इति? एतच्च नास्ति, यतः स्त्रियां टाबादयो विधीयन्ते, क्रियावचनश्च धातुः। क्रियायाश्चासत्त्वभूतत्वाल्लिङ्गेन योगो नास्ति, तस्य द्रव्यधर्मत्वात्। एतेन तिङन्ताद् वाक्याच्च टाबादीनामुत्पत्तिः प्रतिक्षिप्ता, तयोरपि क्रियाप्रधानत्वात्। अणादीनामपि नैव धातोरुत्पत्तिरुपपद्यते। ते ह्यपत्यादिनार्थेन सम्बन्धे सति विधीयन्ते। धातुवाच्यस्यार्थस्यासत्त्वभूतत्वाद् यथा स्त्रीत्वेन योगो न सम्भवति तथाप्यपत्यादिना ह्यर्थेन। एतेन तिङन्ताद् वाक्याच्चाणादीनामुत्पत्तिर्निरस्ता, तदर्थस्यापि क्रियाप्रधानस्यापत्यादिना सम्बन्धाभावात्। देवदत्तस्य पचति यस्तस्यापत्यमिति सत्यपि सम्बन्धे 'तिङश्च' इति ज्ञापकान्न भवति। येऽपत्यादिनार्थेन सम्बन्धे तद्धिता विधीयन्ते तेऽनन्तरोक्तया नीत्या मा भूवन्, ये तु स्वार्थे विधीयन्ते तैर्युक्तमेव भवितुमिति चेत्? वार्त्तमेतत्; यथैव

**पदमञ्जरी**

अणादयस्तर्हि धातोर्मा भूवन्निति? अपत्यादिष्वर्थेष्वणादयो विधीयन्ते, न च धात्वर्थस्यापत्यादिभिर्योगोऽस्ति, समर्थविभक्त्यभावाच्चाणादीनामनुत्पत्तिः, 'तस्यापत्यम्', 'तेन रक्तम्', 'तत्र भवः' इत्येवमादिभिः षष्ठ्यादिविभक्त्यन्तादणादयो विधीयन्ते, न च धातोर्विभक्तिः सम्भवति। स्वार्थिका अपि स्वार्थकैस्तुमुन्नादिभिर्बाधितत्वादेव धातोर्न भविष्यन्ति।

तिङन्तात्तर्हि स्वादयो मा भूवन्निति? तिङन्तेषु क्रिया प्रधानभूता, साधनं गुणभूतम्, तत्र प्रधानभूतायाः क्रियायाः कर्मादीनामभावात् स्वादयो न भविष्यन्ति। पचति भवति, भवति वै किञ्चिदाचार्याः क्रियमाणमपि चोदयन्तीत्यादौ कर्तृत्वं दृष्टमिति चेत्, एवमपि संख्याया अभावः सिद्ध एव। यस्तु गुणभूतः कर्त्ताऽभिधीयते; तत्र अभिहितत्वादेव विभक्त्यभावः सिद्धः। न च गुणभूतस्य कर्तुः क्रियान्तरावेशः सम्भवति; पाचकं पश्येत्यादिवद् द्वितीयादयो भवेयुः। ननु पुत्रीयवदेतत् स्यात्, तद्यथा—पुत्रीयशब्दादन्तर्भूतक्रियाकर्मवाचिनः कर्त्तरि लकार उत्पद्यते—पुत्रीयतीति, तथेहापि पचतिशब्दात् कर्तृविशिष्टक्रियावाचिनः कर्मादिषु द्वितीयादयः स्युरेव? नैष दोषः; उक्तमेतत्—प्रकृत्यर्थस्य कर्मत्वे चरितार्थाः स्वादयो नान्यस्य कर्मत्वे भवितुमर्हन्तीति। न चैकक्रियापेक्षयोर्भिन्नयोः साधनयोरेकस्मिन्पदे युगपदभिधानं सम्भवति। पुत्रीयशब्दस्तु जीवत्यादिधातुवद्विशिष्टक्रियावचन

यद्यपि च प्रत्ययपरत्वेन पारिशेष्यादियमेव प्रकृतिर्लभ्यते, तथापि वृद्धावृद्धावर्णस्वरद्व्यच्लक्षणप्रत्यय-

**न्यासः**

हि स्वादीनां सामान्यविहितानां विशेषविहितैस्तव्यदादिभिर्बाधितत्वात् तदुत्पत्तिर्नोपपद्यते तथा स्वार्थिकानामपि सामान्यविहितानां स्वार्थिकैस्तुमुन्नादिभिर्विशेषविहितैर्बाधितत्वान्नोपपद्यत एव। तिङन्तात् तर्हि के स्युरिति

**पदमञ्जरी**

इति, ततः कर्त्तरि लकारोत्पत्तिरविरुद्धा। अवश्यं चैतदेवं विज्ञेयम्—अर्थाभावादेव तिङन्ताद् द्वितीयादयो न भवन्तीति। यो हि मन्यते—ङ्याप्प्रातिपदिकाधिकारान्न भवन्तोति; रूपबाद्यन्तात्तस्य द्वितीयादयः स्युरेव, पचतिरूपं पश्य, पचतिरूपेण कृतमित्यादि, भवति ह्येतत्प्रातिपदिकम्। कथं तर्हि रूपबाद्यन्तात् प्रथमैकवचनमपि भवति ? उक्तत्वात् सङ्ख्यायाः, न हि तत्कर्तुः सङ्ख्यायामेकवचनम्। यदि तथा स्यात् पचतेरूपं पचन्तिरूपमिति द्विवचनबहुवचने स्याताम्। 'प्रातिपदिकार्थ' इत्यत्र तु प्रातिपदिकग्रहणात् प्रातिपदिकमात्रानुबन्धिनी प्रथमा भवति। तत्राप्येकवचनमेव; 'एकवचनमुत्सर्गः करिष्यते' इति वचनात्। न चैवं तिङन्तेऽपि प्रसङ्गः; तस्या-प्रातिपदिकत्वात्।

टाबादयस्तर्हि तिङन्तान्मा भूवन्निति ? स्त्रियां टाबादयो विधीयन्ते, न च तिङन्ते प्रधानस्यार्थस्य स्त्रीत्वेन योगोऽस्ति। यदि परं साधनस्य स्त्रीत्वे टाबादयः स्युः पचेद् ब्राह्मणः, पचेरन् ब्राह्मण्य इति ? तदपि न; स्वभावतो हि तिङन्तानि साधनाश्रयां सङ्ख्यामेवोपाददते, न लिङ्गम्। उक्तं च—

एकत्वेऽपि क्रियाख्याते साधनाश्रयसंख्यया।
भिद्यते न तु लिङ्गाख्यो भेदस्तत्र तदाश्रयः॥ ( वा० प० ३.१२.१६ ) इति।

शोभनं पचतीत्यादौ क्रियाविशेषणस्यैव लिङ्गेन योगः, न क्रियायाः, तत्रापि नपुंसकेन। पचति रूप-मित्यादावपि रूपबाद्यन्तवाच्यायाः क्रियायाः स्वभावतो लिङ्गेन योगः, तत्रापि नपुंसकेन। विचित्रा हि शब्दानां शक्तयो यथादर्शनमभ्युपगन्तव्याः, न सामान्यतो दृष्टेनानुमानेन व्यवस्थापयितुं शक्यन्ते। अवश्यं चैतदेवं विज्ञेयम्—स्त्रीत्वाभावात् तिङन्ताट्टाबादयो न भवन्तीति, अन्यथा पचतिरूपं ब्राह्मणीत्यादौ रूपबाद्यन्ताट्टाप्स्यादेव।

अणादयस्तर्हि तिङन्तान्मा भूवन्निति ? अपत्यादिष्वर्थेष्वणादयो विधीयन्ते, न च तिङन्ते प्रधानस्याप-त्यादिभिर्योगोऽस्ति। अप्रधानस्य त्वप्रधानत्वादेवापत्यादिभिर्योगाभावः, समर्थविभक्त्यभावाच्चाणाद्यभावः सिद्धः। अवश्यं चैतदेवं विज्ञेयमः अन्यथा यः पचतिरूपं तस्यापत्यमिति रूपबाद्यन्तादणादयः स्युरेव।

स्वार्थिका अपि ज्ञापकात्तिङन्तान्न भविष्यन्ति, यदयं क्वचित्तद्धितविधौ तिङ्ग्रहणं करोति—'अतिशायने तमबिष्ठनौ', 'तिङश्च' इति। वाक्यादपि नैव स्वादयो भवितुमर्हन्ति; कर्मादीनामभावात्। न खलु क्रियारूपस्य संसर्गरूपस्य भेदरूपस्य वा वाक्यार्थस्य कर्मादिभिः स्त्रीत्वेनापत्यादिभिर्वा योगः सम्भवति। 'पश्य मृगो धावति' इत्यादौ दृष्टमिति चेत् ? एवमपि संख्यायोगाभावः सिद्धः। स्वार्थिका अप्यभिधानाभावान्न

**भावबोधिनी**

यद्यपि प्रत्ययपरत्वरूप से पारिशेष्यात् अर्थात् प्रत्यय परे है, जिनके उस रूप से परिशेष होने के कारण यही [ ङ्यन्त, आबन्त और प्रातिपदिक रूप ही ] प्रकृति प्राप्त = ज्ञात होती है, तथापि वृद्ध, अवृद्ध, अवर्ण, स्वर-लक्षण = मानकर होने वाली प्रत्यय की विधि में उस [ ङ्यन्त, आबन्त और प्रातिपदिक ] का ज्ञान कराने के लिए ङी, आप् और प्रातिपदिक का ग्रहण करना चाहिये अन्यथा [ यदि ङ्याप्-प्रातिपदिक का ग्रहण नहीं किया जायगा तो ] यह [ वृद्ध आदि पूर्वोक्त ] समर्थ का विशेषण बनने लग जायगा [—सुबन्त = समर्थ वृद्ध को मानकर प्रत्यय होने लगेंगे। ]

**विधौ तत्सम्प्रत्ययार्थं ङ्याप्प्रातिपदिकग्रहणं कर्तव्यम् ( म० भा० ); इतरथा हि समर्थविशेषणमेतत् स्यात् ।**

न्यासः

चेत् ? ज्ञापकान्न भविष्यन्ति । यदयं क्वचित् तद्धितविधौ तिङ्ग्रहणं करोति --'अतिशायने तमबिष्ठनौ' तिङश्च' इति, तज्ज्ञापयति - तिङन्तात् तद्धिता न भवन्तीति । वाक्यात् तर्हि भवेयुरिति चेत् ? अनभिधानान्न भविष्यन्ति । न हि 'देवदत्तस्याश्वकः' इत्युक्ते वाक्यार्थगता अज्ञातादयोऽर्थाः कप्रत्ययेन द्योत्यन्ते । किं तर्हि ? अश्वशब्दगता एव ।

स्वादिभिरपि नैव तिङन्ताद् भवितव्यम्, तेषां ह्येकत्वादयोऽर्थाः, ते च तिङ्भिरेवोक्ताः । न चोक्तार्थानां प्रयोगो युक्तः; 'उक्तार्थानामप्रयोगः' इति वचनात् । ननु चोक्तार्थानामपि प्रयोगो दृश्यते, यथा—एको द्वौ बहव इति चेत् ? युक्तोऽत्र प्रयोगः, वचनग्रहणात् । 'प्रातिपदिक' इत्यादौ हि सूत्रे वचनग्रहणस्यैतत् प्रयोजनं व्यवस्थापितम्—उक्तेष्वप्येकत्वादिषु प्रथमा यथा स्यादिति । इह तु यत्नाभावात् तिङन्तादुक्तार्थानां स्वादीनामुत्पत्तिर्न युक्ता ।

वाक्यादपि हि स्वादयो नैव भवितुमुत्सहन्ते; 'कर्मणि द्वितीया' इत्यादिना शास्त्रान्तरेणैकवाक्यात् तेषां निर्वर्त्तितत्वात् । न हि वाक्यार्थस्य क्रियात्मनः कर्मादौ क्वचिदन्तर्भावोऽस्ति, नापि प्रातिपदिकार्थलिङ्गादिषु । न च ङ्यादिभ्योऽन्या प्रकृतिरस्ति यत एते वक्ष्यमाणाः प्रत्यया उत्पद्येरन् । अतः पारिशेष्यादियमेव प्रकृतिर्लभ्यते, तत् किं ङ्याप्प्रातिपदिकग्रहणेन ? इत्यत आह—**यद्यपीत्यादि** । **प्रत्ययपरत्वेनेति** । हेतौ तृतीया । अङ्गभपदसंज्ञार्थं यच्छयोश्च लुगर्थमित्याद्युपक्षिप्य भाष्यानुसारेण तदन्यप्रयोजननिरासेन प्रत्याख्यातस्य सूत्रस्य वृत्तिकारः प्रयोजनमाह **वृद्धावृद्धेत्यादिना** । वृद्धादीनां द्व्यच्पर्यन्तानां द्वन्द्वं कृत्वा लक्षणशब्देन बहुव्रीहिनिर्देशः कृतः । वृद्धादयो लक्षणं चिह्नं कारणं वा यस्य प्रत्ययविधेः स तथोक्तः । प्रत्ययविधिशब्दः प्रत्येकमभिसम्बध्यते । **तत्संप्रत्ययार्थमिति** । ङ्याप्प्रातिपदिकसम्प्रत्ययार्थम् । एतदुक्तं भवति—वृद्धादीनि

पदमञ्जरी

वाक्याद्भविष्यन्ति । तथा हि - 'देवदत्तारोहाश्वम्' इत्यस्माद्वाक्यात् प्रागिवीयेष्वर्थेषु के सुब्लुकि च कृते वाक्यार्थस्यासत्त्वभूतत्वाच्छक्तिलिङ्गसङ्ख्यायोगाभावात् स्वाद्युत्पत्तेरभावाद् देवदत्तारोहाश्वकेति भवितव्यम्, न चैवम्भूतेन वाक्यार्थगताः कुत्सादयो गम्यन्त इति ।

सुबन्तादपि नैव स्वादयो भवितुमर्हन्ति । न हि स्वादिषु विधीयमानेषु तदन्ता प्रकृतिः सम्भवति, यथोक्तम् —'सनन्तान्न सनिष्यते' इति । किञ्च सुबन्तमपि सङ्ख्याप्रधानं कारकशक्तिप्रधानं वा, न चास्यापरैः कर्मादिभिर्योगः सम्भवति ।

टाबादयोऽपि स्त्रीत्वाभावान्न भविष्यन्ति । अणादिषु पुनर्नास्ति विशेषः, सुबन्ताद्वोत्पत्तौ सत्यां प्रातिपदिकाद्वा । यथा चैतत्तथा 'समर्थानां प्रथमाद्वा' इत्यत्र प्रतिपादयिष्यामः । सर्वथा रूपबाद्यन्तात् प्रातिपदिकादव्यभिचारिणः प्रत्ययो यद्वत् तद्वद्वात्वादिकादपीति नार्थ एतेनेत्याक्षेप्ता शङ्कते तावत्—**यद्यपीति** । **प्रत्ययपरत्वेन प्रकृतिर्लभ्यते** । पारिशेष्याच्चेयमेव प्रकृतिर्लभ्यत इत्यर्थः ।

परिहरति - **तथापीति** । वृद्धादयो लक्षणं निमित्तं यस्य प्रत्ययविधेस्तत्र ङ्याप्प्रातिपदिकस्य विशेष्यत्वेन सम्प्रत्ययो यथा स्यादित्येवमर्थमित्यर्थः । **इतरथा हीति** । यदि ङ्याप्प्रातिपदिकग्रहणं न क्रियेतेत्यर्थः । **समर्थविशेषणमेतत्स्यादिति** । 'समर्थानां प्रथमाद्वा' इत्यधिकारात् । किं च समर्थम् ? सुबन्तम् । समर्थविशेषणे सति को दोषः ? 'उदीचां वृद्धादगोत्रात्' इति फिञ् । इह च प्रसज्येत - ज्ञानां ब्राह्मणानामपत्यमिति, एतद्धि समर्थं वृद्धम् । इह च न स्यात्—ज्ञयोर्ब्राह्मणयोरपत्यमिति, न ह्येतत्समर्थं वृद्धम् । अवृद्धं—'प्राचामवृद्धात्फिन् बहुलम्', इह च प्रसज्येत—ज्ञयोर्ब्राह्मणयोरपत्यमिति, एतद्धि समर्थमवृद्धम् । इह च न स्यात्—ज्ञानां ब्राह्मणानामपत्यमिति, न ह्येतत्समर्थमवृद्धम् । यत्र ह्यादेशादिवशेन सङ्ख्याविशेषाभिव्यक्तिर्भवति न भवति तत्र द्विवचनबहुवच-

न्यासः

ङ्याप्प्रातिपदिकविशेषणानीत्येष संप्रत्ययो यथा स्यादित्येवमर्थं ङ्याप्प्रातिपदिकग्रहणं कर्त्तव्यम्। **इतरथा हीत्यादि**। यदि ङ्याप्प्रातिपदिकग्रहणं न क्रियेतेत्यर्थः। **समर्थविशेषणमेतत् स्यादिति**। 'समर्थानां प्रथमाद्वा' इत्यनेन समर्थानां प्रत्ययविधानाद् यतः प्रत्ययो विधीयते तस्यैव समर्थस्य सुबन्तस्यैतद् वृद्धादिकं विशेषणं स्यात्, ङ्याप्प्रातिपदिकविशेषणं न स्यात्।

यदि ङ्याप्प्रातिपदिकग्रहणं न क्रियेत, कः पुनर्वृद्धादीनां समर्थविशेषणत्वे दोषो यतस्तन्नेष्यते? 'तिकादिभ्यः फिञ्' इति वर्तमाने 'उदीचां वृद्धादगोत्रम्' इतीह फिञ् प्रसज्येत। ज्ञानां ब्राह्मणानामपत्यमिति ज्ञशब्दोऽयम् 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययान्तो यद्यपि प्रातिपदिकावस्थायामवृद्धः, समर्थावस्थायां तु 'नामि' इति दीर्घत्वे कृते वृद्ध एव भवति। इह तु न स्यादेव—ज्ञयोर्ब्राह्मण्योरपत्यमिति, अत्र हि ज्ञाशब्दष्टाबन्तो यद्यपि प्राग् वृद्धः, षष्ठीद्विवचनान्तस्त्वोसि कृतेऽयादेशे च पश्चाद् वृद्धो न भवति। ननु च प्रत्यये कृते लुप्तायां विभक्तौ वाक्यगम्यः संख्याविशेषो वृत्तौ न प्रतीयते, तत् कथं द्विवचनबहुवचनान्तात् प्रत्ययप्राप्त्यप्राप्ती चोद्येते? वृत्तावपि कदाचिदर्थात् प्रकरणाद्वा विशेषप्रतीतिर्भवतीति युक्तं चोदयितुम्। 'प्राचामवृद्धात् फिञ् बहुलम्' इतीहैव स्यात्—ज्ञयोर्ब्राह्मण्योरपत्यमिति, एतद्धि समर्थमवृद्धं भवति। इह च न स्यात्—ज्ञानां ब्राह्मणानाम-

पदमञ्जरी

नान्तानामपि वृत्तिः - तावकः, मामक इति। यथा इह च फिञुत्पद्यमानो बहुत्वमन्तरेण वृद्धत्वानुपपत्तेर्बहुत्वं गमयेत्, एवं फिन्नपि द्वित्वमिति स्यादेवायं प्रसङ्गः। **अवर्णं**—'अत इञ्' इहैव स्यात् दक्षस्यापत्यमिति, दक्षयोः दक्षाणामित्यत्र तु न स्यात्। **स्वर**—'अनुदात्तादेरञ्', इह च प्रसज्येत—वाचो विकारः, त्वचो विकारः, एतद्धि समर्थमनुदात्तादि, 'सावेकाचः' इति विभक्तेरुदात्तत्वात्। नन्वत्रैकाचो नित्यं मयटमिच्छन्तीति मयटा भाव्यम्? इदं तर्हि पञ्चानां विकार इति 'षट्त्रिचतुर्भ्यो हलादिः' इति विभक्तेरुदात्तत्वे सति समर्थमनुदात्तादि, प्रातिपदिकं तु 'त्रः सङ्ख्यायाः' ( फिट् सूत्र २८ ) इत्याद्युदात्तम्। इह च न स्यात्–सर्वेषां विकार इति, 'सर्वस्य सुपि' इत्याद्युदात्तं पदम्, प्रातिपदिकं त्वन्तोदात्तं निपातितम्। **द्व्यच्**–'नौद्व्यचष्ठन्', इह च प्रसज्येत–वाचा तरति, त्वचा तरति एतद्धि समर्थं द्व्यच्। नौग्रहणं तु नियमार्थं स्यात् औकारान्ताद्यदि भवति नौशब्दादेवेति। इह च न स्यात्—घटेन तरतीति। साम्ना तरतीत्यादौ पुनरुभयथापि सिद्धम्। ङ्याप्प्रातिपदिकग्रहणे तु सति तत्सामर्थ्यात्तस्यैव विशेषणं वृद्धादि भवति, समर्थाधिकाराच्च समर्थात् प्रत्ययः। तत्रैवमभिसम्बन्धः—वृद्धादि यद् ङ्याप्प्रातिपदिकं तस्मात् समर्थात् प्रत्ययः इति।

'यस्मात्प्रत्ययविधिः' इति प्रत्ययविधौ पञ्चमीनिर्दिष्टस्य विधीयमाना अङ्गभपदसंज्ञा ङ्याप्प्रातिपदिकस्य यथा स्युरित्येतत्तु प्रयोजनं न भवति, कथम्? दैवेन हि जानता यतः प्रत्ययो विहितस्तस्यैताः संज्ञाः पञ्चम्या निर्दिश्यतां मा वा निर्देशि। इह च 'कंसीयपरशव्ययोर्यञञौ लुक्च' इति प्रातिपदिकात् परयोश्छयतोर्लुग्यथा स्यादौणादिकयोरुकारसशब्दयोर्मा भूदित्येतदपि न प्रयोजनम्, कथम्? 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि', उणादिषु नावश्यं व्युत्पत्तिकार्यं भवतीत्यर्थः। एतच्च 'अतः कृकमिकंस' इत्यत्र कमिग्रहणेनैव सिद्धे पुनः कंसग्रहणाद्विज्ञायते, तस्माद् वृद्धाद्येव प्रयोजनमधिकारस्य।

ङ्याब्ग्रहणं क्रियते; प्रत्ययान्तत्वेनाप्रातिपदिकत्वात्। 'यूनस्तिः' युवतिरित्यस्य तु तद्धितान्तत्वात्प्रातिपदिकत्वम्। 'ऊङुतः' इत्युवर्णान्तादूङ् विधीयते, तत्रैकादेशस्यान्तवद्भावात् प्रातिपदिकत्वम्। 'श्वशुरस्योकाराकारलोपश्च' इति श्वश्रूरित्यत्र 'श्वशुरः श्वश्र्वश्च' इति निपातनाद् विभक्त्यादिसिद्धिः, एवं स्थिते चोद्यम्—**अथेति। न प्रातिपदिकग्रहण इति**। नञः काक्वा प्रयोगात्सिद्धमेवेत्यर्थः। अनेकार्थत्वाद्वा निपातानाम्। ननुशब्दस्यार्थे नशब्दो द्रष्टव्यः। **लिङ्गविशिष्टस्येति**। लिङ्गनिमित्तप्रत्ययेनाधिकस्येत्यर्थः।

अथ ङ्याब्ग्रहणं किम्, न 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति' ( व्या० परि० २५ )

**न्यासः**

पत्यमिति, ञशब्दो हि प्रागवृद्धोऽपि पश्चात् सामर्थ्यावस्थायामिह वृद्धो भवति। **अवर्ण**—'अत इञ्' इहैव स्यात्—दक्षस्यापत्यमिति, एतद्धि समर्थमकारान्तं भवति। इह च न स्यात्—दक्षयोर्दक्षाणामपत्यमिति, एतद्धि समर्थमकारान्तं न भवति। स्वर—'ओरञ्', 'अनुदात्तादेश्च' इति, इहैव स्यात् त्वचो विकार इति, एतद्धि समर्थमनुदात्तादि भवति, 'सावेकाचस्तृतीयादिर्विभक्तिः' इति विभक्तेरुदात्तत्वे प्राप्ते शेषस्यानुदात्तत्वात्। प्रातिपदिकावस्थायां त्वेतदाद्युदात्तमेव, क्विबन्ताद् धातुस्वरेण। इह तु न स्यात् - सर्वेषां विकार इति, एतद्धि सुबन्तमाद्युदात्तम्; 'सर्वस्य सुपि' इत्याद्युदात्तत्वविधानात्। प्रातिपदिकावस्थायां त्वेतदनुदात्तादि। 'इण्शीभ्यां वन्' इति वर्तमाने 'सर्वनीघृष्वरिश्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे' इत्यन्तोदात्तस्य सर्वशब्दस्य निपातनात्। **द्व्यच्**—'नौद्व्यचष्ठन्' इहैव स्यात्—त्वचा तरतीति, एतद्धि समर्थं द्व्यच्। इह तु न स्याद्- घटेन तरतीति, एतद्धि समर्थं द्व्यज् न भवतीति।

ङ्याप्प्रातिपदिकग्रहणे तु सति यद्यपि समर्थात् प्रत्ययो विधीयते, तथापि ङ्याप्प्रातिपदिकस्यैव वृद्धादिकं विशेषणं विज्ञायते; तदुपादानसामर्थ्यात्। तत्रैवमभिसम्बन्धः कर्तव्यः—समर्थं हि यद् वृद्धादि ङ्याप्प्रातिपदिकं तस्मात् प्रत्ययो भवतीति। ननु चाक्रियमाणे ङ्याप्प्रातिपदिकग्रहणे वृद्धादीनि समर्थविशेषणानीति न भविष्यन्ति; ज्ञापकात्, यदयं 'नौ द्व्यचष्ठन्' इति नौग्रहणं करोति, तज्ज्ञापयति—नैतानि समर्थविशेषणानीति। यदि ह्येतानि समर्थविशेषणानि स्युः, नौग्रहणं न कुर्यात्; द्व्यच एव सिद्धत्वात्। एतदपि सुबन्तं द्व्यज्भवति—

**पदमञ्जरी**

अस्याश्च परिभाषायाः प्रयोजनम्—सर्वनामस्वरसमासोपचारेष्ठवद्भावाः। **सर्वनाम**—भवच्छब्दस्य विधीयमाना सर्वनामसंज्ञा भवतीशब्दस्यापि भवति, 'सर्वनाम्नस्तृतीया च', भवता हेतुना, भवतो हेतोः, भवत्या हेतुना, भवत्या हेतोरिति। **स्वर**—'कुशूलकूपकुम्भशालं बिले', कुशूलबिलं कुशूलीबिलम्। **समास**—'पूर्वसदृश', मातृसदृशः, मातृसदृशी; 'सदृशप्रतिरूपयोः' इति स्वरोऽप्यत्र भवति। तथा 'कुमारः श्रमणादिभिः'। कुमारीश्रमणा, कुमारश्रमणा, एवं युवतिर्वलिना, युववलिना। **उपचार**—'अतः कृकमिकंसकुम्भ', अयस्कुम्भः, अयस्कुम्भी। **इष्ठवद्भाव**—'णाविष्ठवत्प्रातिपदिकस्य', कुमारीमाचष्टे कुमारयति। इह तु 'अचित्तहस्तिधेनोष्ठक्', हस्तिनीनां समूहो हास्तिकमिति, 'भस्याढे तद्धिते' इति पुंवद्भावेन ङीपि निवृत्ते हस्तिशब्द एवायमिति ठक्सिद्धिः। 'तद्धिते' इत्येषा हि विषयसप्तमी। अवश्यं च पुंवद्भाव एवाश्रयणीयः, अन्यथा हस्तिनीशब्दाट्ठकि यस्येतिलोपस्य स्थानिवद्भावात् 'नस्तद्धिते' इति टिलोपो न स्यात्। इह च 'नेन्सिद्धबध्नातिषु च स्थण्डिलशायिनि' इति 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति वचनादनुत्पन्न एव ङीपि समासे सतीन्नन्तमेवोत्तरपदमित्यलुक्प्रतिषेधः सिद्धः। एवं 'शयवासवासिष्वकालात्' ग्रामेवासिनीत्यलुक्। तथा 'क्यङ्मानिनोश्च' 'स्वाङ्गाच्चेतोमानिनि' दर्शनीयमानिनी, दीर्घमुखमानिनी—मानिन्शब्द एवोत्तरपदमिति पुंवद्भावः सिद्धः। इह च 'तृजकाभ्यां कर्त्तरि' 'कर्त्तरि च' इति कर्त्तरि यौ तृजकौ ताभ्यां योगे या षष्ठी तस्या येन सह समासः प्राप्तः स सर्वो न भवतीति विज्ञानादपां स्रष्ट्रीत्यत्रापि समासनिषेधः सिद्धः। यदि 'प्रातिपदिक-

**भावबोधिनी**

अब प्रश्न यह है कि ङी और आप् का ग्रहण किसलिये है, क्योंकि 'प्रातिपदिक के ग्रहण के विषय में लिङ्गविशिष्ट का भी ग्रहण होता है', इसी से सिद्ध हो सकता था ? [ उत्तर ]—ऐसा नहीं है; यह परिभाषा स्वरूपविधि-विषय में प्रवृत्त होती है—"प्रातिपदिक के स्वरूप का ग्रहण होने पर लिङ्गविशिष्ट का ग्रहण होता है।" और इस प्रकार "युवा खलति०" २।१।६७ यह इसका ज्ञापक ऐसा ही है।

**इत्येव सिद्धम् ? नैतदस्ति; स्वरूपविधिविषये परिभाषेयम् – 'प्रातिपदिकस्वरूपग्रहणे सति लिङ्गविशिष्टग्रहण**

**न्यासः**

नावा तरतीति ? नैतदस्ति; नियमार्थमपि नौग्रहणं विज्ञायेत--औकारान्ताद् द्व्यचो नौशब्दादेव, नान्यस्मादिति । तेन ग्लौशब्दात् प्रत्ययो निर्वर्तितो भवति । तस्मात् कर्तव्यं ङ्याप्प्रातिपदिकग्रहणम् ।

**स्वरूपविधिविषय इति** । स्वरूपाश्रयो विधिः स्वरूपविधिः स एव विषयस्तस्य वा विषयः स्वरूपविधिविषयः; तत्रेयं परिभाषा । स्वरूपविधिस्तु यत्र प्रातिपदिकं स्वरूपेणोपादाय कार्यं विधीयते तत्र भवति । अत एवाह--**प्रातिपदिकस्वरूपग्रहणे सतीत्यादि** । कथं पुनर्ज्ञायते स्वरूपविधिविषयैव परिभाषा ? इत्यत आह--**तथा चेत्यादि** । तथा हीत्यर्थः । 'पूर्वकालैकसर्व' इत्यादेः सूत्रात् 'समानाधिकरणेन' इत्यनुवर्तमाने युवशब्दस्य जरतीशब्देन समानाधिकरणेन 'युवाखलतिपलित' इत्यादिशास्त्रेण समासो विधीयते, स च समासो नोपपद्यते; भिन्नलिङ्गेन सामानाधिकरण्याभावात् । न च शक्यते वक्तुम्--युवतिशब्दस्य समासो जरतीशब्देन सामानाधि-

**पदमञ्जरी**

ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' भवति, अतिप्रसङ्गो भवति – 'द्विषत्परयोस्तापे' द्विषतीतप इत्यत्रापि स्यात्' उक्तमत्र--'द्विषत्परयोरिति द्वितकारकोऽयं निर्देशः तकारान्तो द्विषच्छब्दः' इति । इह च गार्ग्या अपत्यम्, दाक्ष्या अपत्यमिति 'यञिञोश्च' इति फकं परत्वात् स्त्रीभ्यो ढग्बाधते । इह च 'ञ्नित्यादिर्नित्यम्' दाक्षिः, ग्लुचुकायनिरित्यस्यामवस्थायामाद्युदात्तत्वे कृते पश्चात् 'इतो मनुष्यजातेः' इति ङीषि सति शिष्टः प्रत्ययस्वर एव भवति — दाक्षीः ग्लुचुकायनी । न चास्यामवस्थायामाद्युदात्तत्वं पुनः प्रवर्त्तते; पूर्वमेव प्रवृत्तत्वात् । तथा बहवो गोमन्तोऽस्यां बहुगोमतीति प्रागेव बहुस्वरे प्रवृत्ते पश्चान्ङीप्, पित्त्वादनुदात्तो भवति । न च पुनरपि 'बहोर्नञ्वद्' इत्यस्य प्रवृत्तिः पूर्वमेव प्रवृत्तत्वात्समासाच्चात्र ङीबुत्पन्न इत्युत्तरपदं न लिङ्गविशिष्टम् । इह तर्हि 'राजाहःसखिभ्यष्टच्' मद्राणां राज्ञीति टच् स्यात्, ततश्च 'भस्याढे तद्धिते' इति पुंवद्भावेन ईकारे निवृत्ते टिलोपे च टित्त्वान्ङीपि मद्रराजीति स्यात्, मद्रराज्ञीति चेष्यते । तथा महती प्रिया यस्य महतीप्रिय इति पुंवद्भावप्रतिषेधविषये 'आन्महतः' इत्यात्वं स्यात् । तथाऽऽर्ययोर्ब्राह्मणकुमारयोः, राजा च राजब्राह्मणीत्यत्रापि स्यात् । तथा विभक्त्याश्रयं यत्कार्यं विभक्तौ परतो विभक्तेर्वा तत्रापि दोषः, यथा—'न गोश्वन्साववर्ण' इति शुना, शुन इत्यत्र 'सावेकाचः' इति प्राप्तं विभक्तेरुदात्तत्वं न भवति । तथा गौरादिङीषन्तात् शुन्या, शुन्यै इत्यादावपि 'उदात्तयणो हल्पूर्वात्' इत्यस्यापि निषेधः स्यात् । 'उगिदचाम्' इति नुम् गोमतीत्यादावपि स्यात् । 'चतुरनडुहोराम्' अनडुहीत्यत्रेकारात्परः स्याद् । 'पथिमथ्यृभुक्षामात्' शोभनः पन्था अस्यामिति 'न पूजनात्' इति समासान्ते निषिद्धे ऋन्नेभ्यो ङीपि भस्य टेर्लोपे सुपथीत्यत्रापि स्यात् । अङ्गाधिकारे तदन्तस्यापि ग्रहणात् सुपन्था इतिवत् 'पुंसोऽसुङ्' सुपुंसीत्यत्रापि स्यात् । शोभनाः पुमांसोऽस्यामिति, उरःप्रभृतिषु पुमानिति विभक्त्यन्तस्य पाठादेकवचनान्तादेव नित्यं कप् भवति, बहुवचनान्तस्य तु 'शेषाद्विभाषा' इति विकल्पित एवेति कबभावपक्षे पूञो ह्रस्वः, मसुश्च प्रत्ययः, आकार उच्चारणार्थः, तत्र प्रत्ययस्योगित्त्वात् 'उगितश्च' इति ङीप् । 'सख्युरसम्बुद्धौ' 'अनङ् सौ' इति णित्त्वानङौ सखी सख्यावित्यादावपि स्याताम् । 'सख्यशिश्वीति भाषायाम्' इति ङीष्विधानं तु सखीभ्यामित्याद्यर्थं स्यात् । 'विभाषा भवद्भगवदघवताम्' इत्यत्र त्ववशब्दः सम्बुद्धाविति विशेष्यते, तत्र 'येन नाव्यवधानम्' इत्येकेन वर्णेन व्यवाये ओत्वं प्रवर्त्तमानमिह न भवति—हे भगवति, हे अघवतीति, तदभावात्तत्सन्नियोगशिष्टस्य रुत्वस्याप्यभावः । 'श्वयुवमघोनामतद्धिते' इत्यत्रापि 'अल्लोपोऽनः' इत्यतः 'अनः' इत्यपकर्षाद्युवतीः पश्येति सम्प्रसारणाभावः ।

तदेवं लिङ्गविशिष्टपरिभाषायाः सन्ति प्रयोजनानि, सन्ति च दोषाः । यानि प्रयोजनानि तदर्थमेषा कर्तव्या, प्रतिविधेयं दोषेषु । प्रतिविधानं च 'शक्तिलाङ्गल' इत्यत्र घटग्रहणेनैव सिद्धे घटीग्रहणमस्याः परि-

भवति' ( व्या० परि० २५ ) इति। तथा च 'युवा खलतिपलितवलिनजरतीभिः' ( २.१.६७ ) इति ज्ञापकमस्यास्तादृशमेव।

**न्यासः**

करण्येन भवतीति; युवशब्दस्य समास उच्यमानो यथा शब्दान्तरस्य गोशब्दस्य न सिध्यति तथा युवतिशब्दस्यापि। तस्मात् तत्रैवायं ज्ञापयति--अस्तीयं परिभाषा 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति' इति। तस्यां हि सत्यां युवशब्दस्य ग्रहणे युवतिशब्दस्यापि ग्रहणं भविष्यतीति युज्यते तस्य जरतीशब्देन समानाधिकरणेन समासः। तदेवं युवशब्दस्यापि प्रातिपदिकस्य स्वरूपग्रहणे यस्मादियं परिभाषा ज्ञापिता, तस्मात् स्वरूपविधिविषय एवावतिष्ठते, यत्र प्रातिपदिकस्य स्वरूपेण ग्रहणम्। न चेह प्रातिपदिकस्य स्वरूपेण ग्रहणम्; अतो नोपतिष्ठते। **तादृशमेवेत्यादि।** यादृशोऽस्या विषयः प्रदर्शितः स्वरूपग्रहणविशिष्टस्तादृशं स्वरूपग्रहणविशिष्टमेव।

यदि तर्हि स्वरूपविधिविषये परिभाषेयमुपतिष्ठते, तर्हि 'सर्वनाम्नस्तृतीया च' इत्यत्र नोपतिष्ठते; अत्र स्वरूपग्रहणाभावात्, ततश्चेहैव तृतीयाषष्ठ्यौ स्याताम्—भवता हेतुना, भवतो हेतोरिति; इह तु न स्याताम्—भवत्या हेतुना, भवत्या हेतोरिति, भवच्छब्दस्यैव हि सर्वनामसंज्ञा; तस्य सर्वादिषु पाठात्? नैष दोषः; 'सर्वादीनि' इत्यत्र सूत्रे यद्यपि प्रत्येकं सर्वादीनि सूत्रे न पठ्यन्ते, सर्वादिगणे तु पठ्यन्ते। तत्र गणपठितानि सर्वादीनि स्वरूपेणोपदिश्य संज्ञा विधीयमाना लिङ्गविशिष्टानामपि तेषां भवति; तत्रास्याः परिभाषाया उपस्थानात्। तेन लिङ्गविशिष्टानामपि सर्वादीनां सर्वनामकार्यमुपपद्यते। यद्येवम्, इममेव न्यायमाश्रित्य शक्यं ङ्याब्ग्रहणमकर्तुम्? नैतदस्ति; न हि प्रातिपदिकसंज्ञा लिङ्गविशिष्टस्यार्थवतः शब्दरूपस्य भवितुमर्हति; 'अप्रत्यय' इति प्रतिषेधात्। न च प्रातिपदिकसंज्ञाविधौ सर्वेऽर्थवन्तः संज्ञिनः स्वरूपेण शक्या दर्शयितुम्;

**पदमञ्जरी**

भाषाया अनित्यत्वज्ञापनार्थमिति। तदेवं स्थितमेतत्-ङ्याब्ग्रहणमनर्थकं प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणादिति।

परिहरति—**नैतदस्तीति। स्वरूपविधिविषय इति।** स्वरूपाश्रयो विधिः स्वरूपविधिः, स चासौ विषयश्च तत्रेत्यर्थः। किमुक्तं भवतीत्याह—**प्रातिपदिकस्वरूपग्रहणे सतीति।** कुत एतदित्यत आह—**तथा चेति।** यथा च युवन्च्छब्दस्य जरतीशब्देन समासवचनमत्रार्थे ज्ञापकं तथा तत्रैव प्रतिपादितम्। **तादृशमेवेति।** 'प्रातिपदिकस्वरूपग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति' इति यदुक्तं तदनुगुणमेवेत्यर्थः। यदि स्वरूपविधिविषये परिभाषेयम्, कथमिष्ठवद्भावः—कुमारीमाचष्टे कुमारयतीति? बाहुलकात्सिद्धिं मन्यते, चुरादौ हीदं पठ्यते—'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति। भाष्ये तु यथाकथंचित्प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति स्थितम्। तथा च 'सर्वप्रातिपदिकेभ्य इत्येके' इति क्विप् ङ्यन्तादपि भवति—यामिनयन्त्यहानीति।

**भावबोधिनी**

और भी, तद्धितान्त से ही ङी और आप् प्रत्यय करने के लिए भी ङी और आप् का ग्रहण है। उदा०—कालितरा, हरिणितरा। खट्वातरा, मालातरा। विप्रतिषेध से तद्धित प्रत्यय की बलवत्ता हो जाती है ( म० भा० )॥

**विमर्श**—प्रस्तुत सूत्र अधिकार माना जाता है। इसकी उपयोगिता सिद्ध करने के लिये व्याख्याकारों ने बहुत कुछ लिखा है। उसका निष्कर्ष यह है—"प्रत्ययः" ३।१।१ और 'परश्च' ३।१।२--ये अधिकार सूत्र हैं। प्रत्यय परे ही होता है और पर शब्द सापेक्ष होने से पूर्व [ प्रकृति ] का आक्षेप कर लेता है। अतः प्रस्तुत सूत्र से प्रकृति का अधिकार अनावश्यक है। ङ्यन्त, आबन्त और प्रातिपदिक से भिन्न चार प्रकार की प्रकृति होती है—(१) धातु (२) तिङन्त (३) वाक्य (४) सुबन्त। प्रत्यय भी चार प्रकार के होते हैं—(१) स्वादि, (२) टाबादि, (३) अणादि,

**किञ्च – तदन्तात्तद्धितविधानार्थं ङ्याब्ग्रहणम् । कालितरा, हरिणितरा । खट्वातरा । मालातरा**

**न्यासः**

तेषामानन्त्यात् । यद्येवम्, 'णाविष्ठवत् प्रातिपदिकस्य' इत्यत्रापि तर्हीयं परिभाषा नोपतिष्ठते; स्वरूपाग्रहणात् ततश्च लिङ्गविशिष्टेष्विष्ठवद्भावो न स्यात् । तत्र को दोषः ? कुमारीमाचष्टे कुमारीयतीत्यत्र टिलोपो **न** स्यात् ? **नैष** दोषः; बहुलमिष्ठवद्भाव इष्यते, तथा च चुरादौ पठ्यते--'प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च' इति । तस्माद् बहुलवचनाल्लिङ्गविशिष्टस्यापीष्ठवद्भावो भविष्यति ।

**किञ्चेत्यादिना** प्रयोजनान्तरं समुच्चिनोति । तदिति ङ्यापोः प्रत्यवमर्शः । ङ्यन्तादाबन्ताच्च तद्धितविधानं यथा स्यादित्येवमर्थं च ङ्याब्ग्रहणम् । **कालितरेति** । कालशब्दाज्जनपदादिसूत्रेण ङीष्; तदन्तात् 'द्विवचनविभज्योपपदे' इत्यादिना तरप्, 'घरूपकल्प' इत्यादिना ह्रस्वः । **हरिणितरेति** । हरितशब्दाद् 'वर्णादनुदात्तात् तोपधात्तो नः' इति ङीप्, तकारस्य नकारः, 'अट्कुप्वाङ्' इति णत्वम् । किं पुनः कारणं न सिध्यतीत्यत आह—**विप्रतिषेधाद्धीत्यादि** । स्त्रीप्रत्ययस्यावकाशो यत्र स्त्रीत्वमेव विवक्ष्यते न तु प्रकर्षः--कालीति, प्रकर्षप्रत्ययस्यावकाशो यत्र प्रकर्षो विवक्ष्यते न तु स्त्रीत्वम्—कालतर इति; उभयविवक्षायां तूभयं प्राप्नोति । तत्र 'विप्रतिषेधे परं कार्यम्' इत्यसति ङ्याब्ग्रहणे परत्वादातिशयिकः स्यात् । अस्मिंस्तु सति

**पदमञ्जरी**

**किञ्चेत्यादिना** प्रयोजनान्तरं समुच्चिनोति । **कालितरेति** । कालशब्दात् जानपदादिसूत्रेण ङीषि तरपि 'घरूपकल्प' इत्यादिना ह्रस्वः । किं पुनः कारणं तदन्तात्तद्धितविधिर्न सिध्यतीत्याह--**विप्रतिषेधाद्धीति** । स्त्रीप्रत्ययस्यावकाशः—प्रकर्षाविवक्षायां कालीति, प्रकर्षप्रत्ययस्यावकाशः - स्त्रीत्वाविवक्षायां कालतर इति; उभयविवक्षायामुभयप्रसङ्गे परत्वात्तद्धितः स्यात् । ङ्याब्ग्रहणे तु सति तरब्विधौ प्रकृतित्रयाधिकारसामर्थ्यात्पूर्वं ङ्यापौ भवतः, पश्चात्तरबिति सिद्धमिष्टम् ।

ननु च स्त्रीत्वस्यान्तरङ्गत्वात्तन्निमित्तः प्रत्ययोऽन्तरङ्गः, प्रकर्षस्तु बाह्यप्रतियोग्यपेक्षत्वाद् बहिरङ्गः, ततस्तन्निमित्तस्य प्रत्ययस्यापि बहिरङ्गत्वम् । योऽप्यज्ञातादिष्वर्थेषु 'प्रागिवात्कः' विधीयते सोऽप्यज्ञाताद्यर्थापेक्षत्वाद् बहिरङ्ग एव, विभक्त्यन्तस्य हि सतः पश्चादज्ञातादियोगो भवति, विभक्तयश्च संख्याकर्माद्यपेक्षाः । प्रागेव संख्याकर्मादियोगाल्लिङ्गेन प्रातिपदिकं युज्यते । उक्तं च--'स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतम्, समवेतस्य तु वचने लिङ्गं संख्यां विभक्तिं चाभिधाय तान्विशेषानवेक्षमाणश्च पूर्णमात्मानमप्रिय-

**भावबोधिनी**

(४) स्वार्थिक । इन चार प्रकार की प्रकृतियों से चार प्रकार के प्रत्यय न होने लग जांय; इसके लिये यह अधिकार है—ऐसा कहना ठीक नहीं है—क्योंकि (१) धातु से प्रसक्त होने वाले सु आदि का बाध तव्यत् आदि से हो जाता है । (२) तिङन्त से एकत्व आदि संख्या उक्त ही है । धात्वर्थ का स्त्रीत्व के साथ योग न होने से अकारान्त धातु से टाप आदि नहीं हो सकते। इसके अतिरिक्त क्तिन् आदि से भी बाध है । अपत्यादि अर्थों के साथ भी धात्वर्थ का योग न होने से अणादि प्रत्यय भी नहीं हो सकते । सामर्थ्य न रहने से स्वार्थिक प्रत्यय भी नहीं हो सकते और भावार्थक तुमुन् आदि से इन प्रत्ययों का बाध हो जाता है । ये तद्धित अणादि विशेष प्रकृति को उद्देश्य मान कर बनाये गये हैं । स्त्रीत्व और अपत्यादि अर्थों का योग सम्भव न होने से तिङन्त से भी अणादि नहीं हो सकते । (३) 'पचति भवति' 'पश्य मृगो धावति' आदि वाक्यों से भी वक्ष्यमाण प्रत्यय नहीं हो सकते क्योंकि प्रातिपदिकार्थ न होने से प्रथमा नहीं हो सकती और संख्या **न होने से** अथवा उक्त हो जाने से द्वितीयादि नहीं हो सकती । (४) सुबन्त से भी नहीं हो सकते क्योंकि 'सन्नन्तात् न सन् इष्यते' के समान सुबन्त से सुप् प्रत्यय सम्भव नहीं है । इस प्रकार आक्षिप्त होने वाले ङ्यन्त, आबन्त और प्रातिपदिक **ही** प्रकृतिरूपेण ज्ञात होते हैं, इसीलिये लिखा है—"प्रत्ययपरत्वेन पारिच्छेद्यादियमेव प्रकृतिर्लभ्यते ।"

**( म० भा० ) इति । विप्रतिषेधाद्धि तद्धितबलीयस्त्वं स्यात् ( म० भा० ) ॥**

**न्यासः**

ङ्यापोस्तद्धितविधाने प्रकृतित्वेनाश्रयणात् पूर्वं ङ्याब्भ्यां भवितव्यमिति तदन्तात् तद्धितविधिः सिध्यति। ननु चान्तरङ्गः स्त्रीप्रत्ययः, बहिरङ्गास्तद्धिताः, तथा हि--'समर्थानां प्रथमाद्वा' इत्यधिकाराद् विभक्त्यन्तात्ते उत्पद्यन्ते, विभक्तयश्च कर्माद्यपेक्षाः' कर्मादयश्च बाह्यक्रियानिमित्तत्वाद् बहिरङ्गाः, ततश्च निमित्तस्य बहिरङ्गत्वात् तद्धिता अपि बहिरङ्गाश्रया एव भवन्ति; लिङ्गस्य तु सम्बन्ध्यन्तरानपेक्षत्वादन्तरङ्गत्वञ्च, अतस्तन्निमित्ता अपि टाबादयोऽन्तरङ्गा भवन्ति, ततश्चान्तरङ्गत्वादेव टाबादिभिस्तावद् भवितव्यम्, पश्चात् तदन्तात् तद्धितैरित्यपार्थकं ङ्याब्ग्रहणम्? नैतदस्ति; तदन्तात् तद्धितविधानार्थं ङ्याब्ग्रहणमित्यत्र हि वाक्ये तद्धितग्रहणेन स्वार्थिका ये तद्धितास्त एव विवक्षिताः। इममेवार्थं सूचयितुं कालितरा, हरिणितरेति स्त्रीप्रत्ययान्तात् स्वार्थिक एव तरप्प्रत्यय उदाहृतः।

स्वार्थिकेषु च 'समर्थानाम्' इत्येतन्नानुवर्त्तते। तथा हि वक्ष्यति **वृत्तिकारः**--"स्वार्थिकप्रत्ययावधिश्चायमधिकारः 'प्राग्दिशो विभक्तिः' इति यावत्। स्वार्थिकेषु ह्यस्योपयोगो नास्ति" इति। एवञ्च सति विभक्त्युत्पत्तिमनपेक्ष्य प्रातिपदिकादेव स्वार्थिकैर्भवितव्यमिति कुतस्तेषां बहिरङ्गत्वम्? नन्वेवमपि कालितरेत्याद्यनुदाहरणम्; तरप्प्रत्ययस्य बहिरङ्गत्वात्। स हि यद्यपि विभक्त्युत्पत्तिं नापेक्षते, प्रतियोगिनं तु बाह्यार्थमपेक्षत एव, स्त्रीप्रत्ययस्य तु न क्वचित् प्रतियोग्यपेक्षेति तस्यान्तरङ्गत्वम्? नैष दोषः; उदाहरणदिगियं वृत्तिकारेण दर्शिता।

**पदमञ्जरी**

कुत्सनादिषु ततः प्रवर्त्ततेऽसौ विभक्त्यन्ते' इति; युक्तं चैतत्, तथा हि—नागृहीतविशेषणा विशेष्ये बुद्धिरिति पूर्वं विशेषणभूतः स्वार्थोऽभिधातव्यः, पश्चात्तद्विशिष्टं द्रव्यम्; तस्य धर्मित्वेन प्रधानत्वात्, ततो लिङ्गमन्तरङ्गत्वात्। संख्या हि भेदापेक्षत्वाद् बहिरङ्गा, सापि तु सजातीयापेक्षा विजातीयकर्मादिकारकशक्त्यपेक्षेभ्यः कारकेभ्योऽन्तरङ्गेति ततस्तस्या अभिधानम्, ततः कारकाणाम्, एवं परिपूर्णार्थस्य पश्चात् कुत्सनादिभिर्योगः। स्वार्थादयो हि कुत्सनादिहेतवः, द्रव्यस्य पण्डितक इत्यादौ तथावसायात्। तदेवमन्तरङ्गः स्त्रीप्रत्ययः, बहिरङ्गास्तद्धिताः, अन्तरङ्गबहिरङ्गयोश्चायुक्तो विप्रतिषेधः? इह तर्हि 'वर्णे चानित्ये', 'रक्ते' 'कालाच्च' इत्यस्यावकाशः स्त्रीत्वाविवक्षायां कालक इति, स्त्रीप्रत्ययस्य कालीत्यवकाशः; कालिकेत्यत्रोभयप्रसङ्गे परत्वात्कन् स्यात्। तस्य चात्यन्तस्वार्थिकत्वान्न तदपेक्षं स्त्रीप्रत्ययस्यान्तरङ्गत्वमस्ति। नास्त्यत्र विशेषः, कालशब्दादव्युत्पत्तौ 'प्रत्ययस्थात्' इतीत्वे कालिकेति सिद्धम्? यदा तर्हि हरितशब्दात् 'न सामिवचने' इति प्रतिषेधेन ज्ञापितोऽत्यन्तस्वार्थिकः कन् क्रियते तदा 'वर्णादनुदात्तात्' इति ङीब्नकारौ बाधित्वा परत्वात् कन् स्यात्, ततश्च हरिणिकेति न स्यात्। हरितशब्देन समानार्थो हरिणशब्दोऽस्ति, ततः कनीत्वे च भविष्यति, हरितशब्दात्तु हरितिकेति? अयं तर्हि—'लोहितान्मणौ' इत्यन्तस्वार्थिकः कन् 'वर्णादनुदात्तात्' इति ङीब्नकारौ परत्वाद् बाधेत, ततश्च लोहितिकेत्येव स्यात्, न लोहिनिकेति; उभयमपीष्यते, तदर्थं ङ्याब्ग्रहणम्।

**भावबोधिनी**

इस अधिकार सूत्र की उपयोगिता इस प्रकार है - वृद्ध, अवृद्ध, अवर्ण, स्वर, द्व्यच् को मानकर होने वाले प्रत्यय-विधान में यह आवश्यक है। वृद्ध आदि प्रातिपदिक के विशेषण बनें; समर्थ के अथवा सुबन्त के न बनें—वृद्ध जो प्रातिपदिक उससे प्रत्यय हो। इसी प्रकार अवृद्ध प्रातिपदिक, अकारान्त प्रातिपदिक आदि अर्थ करने चाहिये। यदि इन्हें प्रातिपदिक का विशेषण नहीं माना जायगा तो ये दोष होंगे ( १ ) वृद्ध--"उदीचां वृद्धादगोत्रात्" ४।१।१५७ इससे 'ज्ञानां ब्राह्मणानामपत्यम्'-यहाँ फिञ् होने लगेगा और ज्ञस्य ब्राह्मणस्य अपत्यम्-यहाँ नहीं होगा, क्योंकि बहुवचन में

**न्यासः**

एतानि त्वत्रोदाहरणानि दर्शयितव्यानि—एनिका, श्येनिका, रोहिणिकेति। अत्र हि यदि पूर्वं तद्धितः स्यात् तदैतश्येतरोहितशब्देभ्योऽज्ञाताद्यर्थविवक्षायां कप्रत्यये कृते 'वर्णादनुदात्तात् तोपधात् तो नः' इत्यनेन ङीब्नकारौ न स्याताम्। यदि तर्हि ङ्याबन्तात् तद्धितविधानार्थं ङ्याब्ग्रहणम्, समासान्ता अपि तदन्तादेव स्युः, ततश्च बहवो गोमन्तोऽस्यां नगर्यामिति स्याद्, बहुव्रीहौ कृते 'उगितश्च' इति ङीप्, ततश्च 'नद्यृतश्च' इति कपि बहुगोमतोकेति रूपं स्यात्, बहुगोमत्केति चेष्यते? नैष दोषः; न हि समासान्ताः समासादुत्पद्यन्ते। किं तर्हि? अकृत एव समासे तदर्थादुत्तरपदात्। तथा हि 'न कपि' (७. ४. १४) इत्यत्र वक्ष्यति **वृत्तिकारः**—'गोस्त्रियोरुपसर्जनस्येत्ययमपि ह्रस्वः कपि न भवति, समासार्थे ह्युत्तरपदे कपि कृते पश्चात् समासेन भवितव्यमिति स्त्रीप्रत्ययान्तं समासप्रातिपदिकं न भवति' इति। न च बहवो गोमन्तोऽस्यां नगर्यामित्यत्र वाक्ये समासार्थमुत्तरपदं स्त्रियां वर्तत इति प्राक् कपैव भवितव्यम्, पश्चात् समासेन, ततः स्त्रीप्रत्ययेन प्रत्ययानुपूर्व्या बहुगोमत्केति सिद्धं भवति।

यदि तर्ह्यकृत एव समासे तदर्थादुत्तरपदात् समासान्ता भवन्ति, तदा 'नञस्तत्पुरुषात्' इत्यत्र 'नञः परे वक्ष्यमाणा य ऋगादयस्तदन्तात् तत्पुरुषात् समासान्ता न भवन्ति' इत्येष वृत्तिग्रन्थो विरुध्यते, तेभ्यस्तत्पुरुषसमासार्थेभ्यः समासान्ता न भवन्तीति वक्तव्यं स्यात्? नास्ति विरोधः; तत्र ह्यन्तशब्दः समीपवाची, ऋगादयोऽन्तभूताः समीपभूता यस्य स तथोक्तः। कः पुनरसौ? नञः प्रकृतत्वात् स एव विज्ञायते। 'तत्पुरुषात्' इत्यत्रापि तत्पुरुषशब्दस्तादर्थ्यात् तत्पुरुषार्थ उत्तरपदे वर्तते। तत्र पुनः ऋगादेः श्रुतत्वादृगादिरेव विज्ञायते, तदन्तात् तत्पुरुषादिति च व्यधिकरणे पञ्चम्यौ। ततोऽयमर्थः—नञः परे य ऋगादयस्ते समीपभूता यस्य

**पदमञ्जरी**

ननु च 'लोहिताल्लिङ्गबाधनं च' इत्यनेनैवैतत्सिद्धम्, तन्न वक्तव्यं भवति, कथम्? 'वर्णादनुदात्तात्' इत्यत्र वेति वर्तते, तत्र ङ्याबन्ताभ्यां लोहिनी-लोहिताशब्दाभ्यां कनि विहिते यथायोगं ह्रस्वत्वेत्वयोः कृतयोर्लोहिनिका लोहितिकेति सिद्धमिष्टम्। तदेवं सति ङ्याब्ग्रहणे लिङ्गनिमित्तेन प्रत्ययेन विकल्पेन बाधा यथा स्यान्नित्यं मा भूदित्येवमर्थं तावन्न वक्तव्यम्—लोहिताल्लिङ्गबाधनं वेति। नापि प्रतिपदविहितत्वेन कना लिङ्गनिमित्तस्य प्रत्ययस्य नित्ये बाधे प्राप्ते विकल्पेन बाधा यथा स्यादित्येवमर्थमपि वक्तव्यम्; ङ्याब्ग्रहणस्यानन्यार्थत्वात्। यदि ह्येतश्वेतशब्दाभ्यामत्यन्तस्वार्थिकः कन्निष्यते, तदा तत्र ङ्याब्ग्रहणस्य चरितार्थत्वाल्लोहितशब्दात् प्रतिपदविहितेन कना ङीपो नित्ये बाधे प्राप्ते तद् वक्तव्यम्? तदापि वा न वक्तव्यम्, 'लोहितान्मणौ' इत्यस्यापि पुन्नपुंसकयोश्चरितार्थत्वात्। तदेवमत्यन्तस्वार्थिकोऽपि कन् ङ्यन्ताद्यथा स्यादिति ङीब्ग्रहणं तावत्कर्त्तव्यम्।

आब्ग्रहणं तु विस्पष्टार्थम्। तत्र समासान्तेषु दोषः बहवो गोमन्तोऽस्यां नगर्यामिति बहुव्रीहौ कृते स्त्रिया अन्यपदार्थत्वान्ङीप् च प्राप्नोति कप् च, ङ्याब्ग्रहणान् ङीपि कृते कप् स्यात्, ततश्च बहुगोमतीकेति रूपं स्यात्, बहुगोमत्केति चेष्यते? नैष दोषः; समासार्थादुत्तरपदादकृत एव समासे समासान्ता भवन्ति पश्चात्तदन्तेन समासः, एवं हि समासं प्रत्यन्तावयवत्वमुपपद्यते समासान्तानाम्, तथा च 'न कपि' इत्यत्र वक्ष्यति। तत्र चोत्तरपदे समासार्थाया विभक्तेः पुरस्तात्समासान्ता इति केचित्। परस्तात्समासान्तेषु सुब्लुकि

**भावबोधिनी**

सुबन्त में दीर्घ होने से वृद्ध है, एकवचन में दीर्घ नहीं है। (२) अवृद्ध—ज्ञानाम् ब्राह्मणानाम् अपत्यम्–यहाँ 'प्राचाम् अवृद्धात् फिन् बहुलम्' ४।१।१६० से फिन् नहीं हो सकेगा और 'ज्ञयोः ब्राह्मणयो अपत्यम्'—यहाँ होगा। (३) अवर्ण—"अत इञ्" ४।१।९५ यह इञ् प्रत्यय दक्षस्य अपत्यम् यहाँ होगा क्योंकि अकारान्त सुबन्त है; किन्तु दक्षयोः अपत्यम्, दक्षाणाम् अपत्यम्—यहाँ नहीं होगा। (४) स्वर—"अनुदात्तादेरञ्" ४।२।४४ इससे अञ् प्रत्यय—वाचः विकारः यहाँ

**न्यासः**

नञः, तस्मात् परं यत् तत्पुरुषार्थमृगादिपदं ततः समासान्तो न भवतीति । अथ वा--अवयववचनोऽन्तशब्दः, समानाधिकरण एव पञ्चम्यौ; तादर्थ्यात् । ऋगाद्यन्तं तत्पुरुषार्थं यदुत्तरपदं तदेव । तदन्तात् तत्पुरुषार्थादित्युक्तम् । ततश्चायमर्थः--नञः परे य ऋगादयस्तदन्तात् तत्पुरुषार्थादुत्तरपदात् समासान्ता न भवन्तीति । तत् पुनस्तदन्ततत्पुरुषार्थम् उत्तरपदं सामर्थ्यादृगाद्येव विज्ञायते । 'बहुव्रीहौ संख्येये डजबहुगणात्' इत्यत्र तर्हि योऽयं वृत्तिग्रन्थः--'संख्येये योऽयं बहुव्रोहिर्वर्तते तस्माद् बहुगणान्ताड् डच्प्रत्ययो भवति' इति, तस्य विरोधः ? नास्ति विरोधः; अत्र हि बहुव्रीह्यर्थमुत्तरपदमेव तादर्थ्याद् बहुव्रीहिरित्युक्तं भवति । तदयमर्थः--संख्येये यद् बहुव्रीह्यर्थमुत्तरपदं वर्तते तस्माद् डच्प्रत्ययो भवतीति । अनया दिशाप्यन्य एवंजातीया विरोधाः परिहर्त्तव्याः । तदेवं स्थितमेवैतत्--तदन्तात् तद्धितविधानार्थं ङ्याब्ग्रहणमिति, विप्रतिषेधात् तद्धितविधानार्थं ङ्याब्ग्रहणमिति, विप्रतिषेधात् तद्धितबलीयस्त्वमिति ।

यद्येवम्, 'यूनस्तिः' 'ऊङुतः' इत्येतयोरपि त्यूङोर्ग्रहणं कस्मान्न विज्ञायते, तदन्तात् तद्धितोत्पत्तिर्यथा स्याद्--युवतितरा, ब्रह्मबन्धूतरेति ? 'नद्याः शेषस्यान्यतरस्याम्' इत्यूङो विकल्पेन ह्रस्वत्वं न कर्त्तव्यम्; ङ्याब्ग्रहणस्योपलक्षणार्थत्वात् । 'स्त्रियाम्' इति प्रकृत्य येषां विधानं तदुपलक्षणार्थमिह ङ्याब्ग्रहणम् । अतस्त्यूङोरपि ग्रहणमिह कृतमेव वेदितव्यम् ।

ङ्याब्ग्रहणं यद्युपलक्षणार्थम्, अन्यतरस्यैव ग्रहणं कर्त्तव्यम्, एकेनापि हि स्त्रीप्रत्ययाः उपलक्ष्यन्त एव ? सत्यमेतत्; वैचित्र्यार्थं तु द्वयोर्ग्रहणम् । 'यावादिभ्यः कन्' 'लोहितान्मणौ', 'वर्णे चानित्ये' इत्यनेन तु विकल्पेन स्वार्थिकेन स्त्रीप्रत्ययस्य बाधनमिष्यते । तत्र यदा बाधा तदा लोहितशब्दात् कनि टापि कृते चेत्त्वे लोहितिकेति भवितव्यम्; यदा तु न बाधा तदा 'वर्णादनुदात्तात्तोपधात् तो नः' इति ङीब्नकारयोः कनि च 'केऽणः' इति ह्रस्वत्वे कृते लोहिनिकेति भवितव्यम् । तस्माद् वक्तव्यमेवैतत्--लोहिताल्लिङ्गबाधनं वेति ॥ १ ॥

**पदमञ्जरी**

तद्धितान्तत्वेन ततः सुपि सुबन्तस्य समास इत्यन्ये । सर्वथा बहुचर्मिकेतीत्वं प्राप्नोति, 'असुपः' इति प्रतिषेधात्, यथा बहुपरिव्राजका मधुरेति ? कर्त्तव्योऽत्र यत्नः । 'नञस्तत्पुरुषात्' इत्यादौ तु ग्रन्थविरोधं तत्र तत्र परिहरिष्यामः । तदेवं स्थितमेतत्—तदन्तात्तद्धितविधानार्थं ङ्याब्ग्रहणं विप्रतिषेधाद्धि तद्धितबलीयस्त्वमिति ।

यद्येवम्, 'यूनस्तिः' 'ऊङुतः' इति त्यूङोरपि ग्रहणं कर्त्तव्यं तदन्तात्तद्धितविधानार्थम्—युवतितरा । भाष्यकारप्रयोगात् 'तसिलादिष्वाकृत्वसुचः' इति पुंवद्भावो न भवति, खिद्घादिषु पुंवद्भावाद् ह्रस्वत्वं विप्रतिषेधेनेति वा पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वेन बाधितत्वात् । ब्रह्मबन्धूतरा 'नद्याः शेषस्यान्यतरस्याम्' इति ह्रस्वाभावपक्षे 'जातेश्च' इति पुंवद्भावप्रतिषेधः । पूर्वत्र त्वनेन प्रतिषेधो न लभ्यते; यौवनस्याजातित्वात् । यावद्द्रव्यभाविनी हि जातिः, तथा च युवजानिरित्युदाहृतम् । नन्वत्रान्तरङ्गत्वादेव त्यूङौ भविष्यतः, अत्यन्तस्वार्थिके तु कनि ब्रह्मबन्धुकेत्यत्र 'केऽणः' इति ह्रस्वे सति नास्ति विशेषः—ऊङन्ताद्वोत्पत्तौ सत्याम्, उकारान्ताद्वा, युवतिशब्दादपि कनि पुंवद्भावेन भाव्यमिति नास्त्येव विशेषः । न चास्मात्कन्निष्यत इत्यत्रापि प्रमाणमस्ति । तस्मान्नार्थस्त्यूङोर्ग्रहणेन ॥ १ ॥

**भावबोधिनी**

होगा क्योंकि "सावेकाचः" ६।१।१८९ से विभक्ति उदात्त हो जाने से सुबन्त का आदि अनुदात्त हो जाता है, जैसा कि सूत्र है--"अनुदात्तं पदमेकवर्जम्" ६।१।१५८ । परन्तु 'सर्वेषां विकारः'—यहाँ नहीं हो सकेगा क्योंकि 'सर्वस्य सुपि' ६।१।१९१ इस सूत्र से स्वर-सम्बन्धी विभक्तियों में पद आद्युदात्त हो जाता है । ( ५ ) द्व्यच्—वाचा तरति--यहाँ "नौद्व्यचष्ठन्" ४।४।७ से ठन् होने लगेगा क्योंकि सुबन्त दो अचोंवाला है, परन्तु 'घटेन तरति'--यहाँ नहीं हो सकेगा क्योंकि यह तीन अचों वाला है ।

**१२५२. स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ॥२॥ (१८३)**

**'ङ्याप्प्रातिपदिकात्' ( ४.१.१ ) इत्यधिकृतम्। ङ्याप्प्रातिपदिकात् स्वादयः प्रत्यया भवन्ति। उकारादयोऽनुबन्धा यथायोगमुच्चारणविशेषणार्थाः। [ औटष्टकारः 'सुट्' इति प्रत्याहारग्रहणार्थः ][1]। पकारः 'सुप्' इति प्रत्याहारार्थः।**

**न्यासः**

**स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्॥ उकारादयोऽनुबन्धा इत्यादि।** तत्र प्रथमैकवचनस्योकार उच्चारणार्थः। 'अनङ्सौ' इति विशेषणार्थः कस्मान्न विज्ञायते ? व्यावर्त्याभावात्। जसो जकारोऽसंदिग्धोच्चारणार्थः, असति हि तस्मिन्नौकारस्यावादेशे कृते सन्देहः स्यात्—कीदृशस्य प्रत्ययस्योच्चारणमिति, तत्र व्याख्यानं कर्तव्यमापद्यते। अथ 'जसः शी' इत्यत्र विशेषणार्थः कस्मान्न विज्ञायते ? 'असः शी' इत्युच्यमानेऽप्यतिप्रसङ्गाभावात्। **औटष्टकारः सुडिति प्रत्याहारग्रहणार्थः।** वृत्तौ त्वेष ग्रन्थो नास्ति; भवितव्यं त्वनेन। लेखकप्रमाददोषादिदानीमन्तर्हितः। शसः शकार औटष्टकारस्य 'खरि च' इति चर्त्वेनासन्दिग्धोच्चारणार्थः। शकारः सन्देहनिरासार्थः, इतरथा ह्यौडसित्युच्यमाने सन्देहः स्यात्—किं टकारस्येदमुच्चारणम्, उत डकारस्येति ? तत्र डकारोच्चारणाट्टिलोपः स्यात्। ननु च सत्यपि शकारे भवितव्यमेव सन्देहेन—किमिदं कृतचर्त्वस्य डकारस्योच्चारणम् ? टकारस्य वेति ? नैतदस्ति; यदि हि डकारस्य स्यात्, शकारोच्चारणमनर्थकं स्यात्। अथ 'तस्माच्छसो नः पुंसि' इति तत्र विशेषणार्थः शकारः कस्मान्न भवति ? अस्ग्रहणेऽपि सत्यतिप्रसङ्गाभावात्। 'टा' इत्यत्र टकारो विशेषणार्थः 'टाङसिङसामिनात्स्याः' इत्यत्र। 'सुपां सुलुक्' इत्यादौ सुपां सुलुक् पूर्वसवर्ण आ आत् शे इत्याकारप्रश्लेषः, तत्रासति टकारे तस्यापि ग्रहणं स्यात्।

**पदमञ्जरी**

**स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसाम्ङ्योस्सुप्॥ उकारादयोऽनुबन्धा इत्यादि।** तत्र प्रथमैकवचनस्योकारः 'एतत्तदोः सुलोपः', दीर्घात् सुतिसि' इत्यत्र केवलस्य व्यञ्जनस्योच्चारयितुमशक्यत्वादुच्चारणार्थः। अत्र तु सूत्रे औकारोपश्लेषाच्छक्यते सकारमात्रमुच्चारयितुम्। 'अनङ् सौ' इत्यत्र विशेषणार्थस्तु न भवति; व्यावर्त्यस्याभावात्। न च 'अनङ् सि' इत्युच्यमाने वर्णनिर्देशे च तदादिविधिसम्भवात् सप्तमीबहुवचनेऽपि प्रसङ्गः, 'सर्वनामस्थाने' इत्यनुवृत्तेः। जसो जकारोऽस्मिन्नेव सूत्रेऽसन्दिग्धोच्चारणार्थः, अन्यथा ह्यौकारस्यावादेशे सन्देहः स्यात्—किमौकारस्योच्चारणम्, अथावित्यस्येति। 'जसः शी' इत्यादौ विशेषणार्थस्तु न भवति, 'असः शी' इत्युच्यमानेऽप्यतिप्रसङ्गाभावात्, शसादीनां सानुबन्धकत्वात्। शसश्शकार औटष्टकारस्यासन्दिग्धोच्चारणार्थः, अन्यथा डकारष्टकार इति सन्देहः स्यात्। 'तस्माच्छसः' इत्यादौ विशेषणार्थस्तु न

**भावबोधिनी**

जब प्रस्तुत अधिकार सूत्र है और उपर्युक्त पांच स्थलों पर वृद्ध आदि प्रातिपदिक के विशेषण बन जाते हैं, तब दोष नहीं है। क्योंकि वृद्ध अथवा अवृद्ध प्रातिपदिक ही लेना चाहिये, सुबन्त पद नहीं। अकारान्त भी प्रातिपदिक ही लेना चाहिये। अनुदात्तादि और दो अचों वाला प्रातिपदिक शब्दरूप ही देखना चाहिये। अतः सुबन्त को मानकर होनेवाले दोष नहीं आते हैं। इसके लिए प्रस्तुत अधिकार सूत्र को उपयोगिता स्पष्टरूप से सिद्ध है। १ ॥

'ङ्याप्प्रातिपदिकात्' ( ४।१।१ ) इसका अधिकार चलता है। ङी = ङ्यन्त, आप् = आबन्त और प्रातिपदिक से सु आदि २१ प्रत्यय होते हैं। [ इनमें ] उकार आदि अनुबन्ध सूत्रों के अनुसार उच्चारण को विशेषित करने के लिए हैं। [ जैसे—"अर्वणस्त्रसावनञः" ६।४।१२० यहाँ असौ यह सु का उकारविशिष्ट रूप मानकर तद्भिन्न में तृ आदेश का विधान किया गया है। ] 'औट्' इसका टकार 'सुट्' इस प्रत्याहार ज्ञान के लिए है। [ सुप् का ] पकार सुप्

---

१. बन्धनीचिह्नाङ्कितोऽयं पाठः न्यासे न दृश्यते।

**संख्याकर्मादयश्च स्वादीनामर्थाः शास्त्रान्तरेण विहितास्तेन सहास्यैकवाक्यता ।**

**ङ्यन्तात् तावत् कुमारी । गौरी । शार्ङ्गरवी । ङीब्ङीष्ङीनां क्रमेणोदाहरणम्—**

**कुमारी, कुमार्यौ, कुमार्यः । कुमारीम्, कुमार्यौ, कुमारीः । कुमार्या, कुमारीभ्याम्, कुमारीभिः ।**

**न्यासः**

चतुर्थ्येकवचनादिषु ङकारः 'घेर्ङिति' इति विशेषणार्थः । पञ्चम्या एकवचन इकारः षष्ठ्येकवचनाद् विशेषणार्थः, इतरथा हि 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यत्र पञ्चम्येकवचनस्यापि ग्रहणं स्यात् । **संख्याकर्मादयश्चेत्यादि ।** संख्या स्वादीनामर्थे विहिता 'बहुषु बहुवचनम्' इत्यादिना शास्त्रान्तरेण । कर्मादयश्च 'कर्मणि द्वितीया' इत्येवमादिना । **तेन सहास्यैकवाक्यतेति ।** कर्मणि बहुत्वे बहुवचनं शस् । कर्मणि द्वित्वैकत्वयोर्द्विवचनैकवचने औडमौ । एवमन्यत्राप्येकवाक्यता वेदितव्या ।

यदि तर्हि तेन सहास्यैकवाक्यता, तदा यदुक्तम् 'बहुषु बहुवचनम्' इत्यत्र—'यत्र च संख्या सम्भवति तत्रायमुपदेशः, अव्ययेभ्यस्तु निःसंख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एव' इति, तद् विरुध्यते; एकवाक्यतायां हि विशिष्ट एवार्थे कर्मादिसम्बन्धिन्येकत्वादौ स्वादीनां विधानात् सामान्यविहितत्वं नोपपद्यते ।

**पदमञ्जरी**

भवति, जसादीनां सानुबन्धकत्वात् । 'टा' इत्यत्र टकारः 'टाङसिङसामिनात्स्याः' इति विशेषणार्थः; अन्यथा 'सुपां सुलुक्' इत्यादिना विहितस्याकारस्यापि ग्रहणं स्यात् । तदेवमेषां चतुर्णामुकारादय उच्चारणविशेषणार्थाः । इत्संज्ञाप्येषां प्रयोगे श्रवणं मा भूदिति, न पुनरित्कार्यं किञ्चिदस्ति । औटष्टकारः सुडिति प्रत्याहार-

**भावबोधिनी**

[ प्रथमा एकवचन से लेकर सप्तमी बहुवचन तक के २१ प्रत्ययों के ] प्रत्याहार के लिए है । [ 'बहुषु बहुवचनम्' १।४।२१ 'कर्मणि द्वितीया' २।३।२ आदि ] अन्य शास्त्रों = सूत्रों से [ एकत्वादि ] संख्या और कर्म आदि [ कारक ] अर्थ भी इन सु आदि के किये गये हैं; उन शास्त्रों के साथ इस शास्त्र की एकवाक्यता होती है ।

**विमर्श**—प्रस्तुत सूत्र से सु आदि इक्कीस प्रत्ययों का विधान है । यह सूत्र संख्याबोधक और कारकबोधक सूत्रों के साथ मिलकर एक निराकांक्ष वाक्यार्थबोध कराता है । इन प्रत्ययों की विभक्ति संज्ञा है । प्राचीन वैयाकरणों ने सात विभक्तियों की कल्पना की है और प्रत्येक में तीन-तीन प्रत्यय माने हैं । इसके अतिरिक्त "द्व्येकयोर्द्विवचनैकवचने" १।४।२२ "बहुषु बहुवचनम्" १।४।२१ ये सूत्र एकत्व में एकवचन, द्वित्व में द्विवचन और बहुत्व में बहुवचन का ज्ञान कराते हैं और "कर्मणि द्वितीया" २।३।२ "कर्तृकरणयोस्तृतीया" २।३।१८ आदि सूत्र कर्मकारक में द्वितीया और कर्तृ आदि में तृतीया आदि विभक्तियों का विधान करते हैं । उन सभी के साथ मिलकर यह सूत्र एक वाक्य बनकर अपेक्षित अर्थ का ज्ञान कराता है - कर्म अर्थ में एकत्व संख्या में द्वितीया एकवचन में अम् प्रत्यय होता है । इसी प्रकार से अन्यत्र सभी में कल्पना कर लेनी चाहिये ।

[ अनु० ] पहले ङ्यन्त से—कुमारी । गौरी । शार्ङ्गरवी । ये क्रमशः (१) ङीप्, (२) ङीष् और (३) ङीन् के उदाहरण हैं । [ अब २१ प्रत्ययों के साथ रूपों का उल्लेख करते हैं—]

**प्रथमा** [ एकवचन ] कुमारी [ कुमारी + सु, "हल्ङ्यादि" ६।१।६८ से सुलोप । द्विवचन-] कुमार्यौ [ कुमारी + औ, यण् । बहुवचन-] कुमार्यः [ कुमारी + जस्, ज् की इत्संज्ञा 'चुटू' १।३।७, लोप—अस्, यण्, स् का रुत्व विसर्ग ] । द्वितीया—[ ए० व० ] कुमारीम् [ कुमारी + अम् ६।१।९७ पूर्वरूप । [ द्वि० व० ] कुमार्यौ [ कुमारी + औट् = औ, यण् । ब० व० ] कुमारीः [ कुमारी + शस् "लशकु०" १।३।८ से श् की इत्संज्ञा, लोप—अस् "प्रथमयोः पूर्वसवर्णः" ६।१।१०२ पूर्वसवर्णदीर्घ, स् का रुत्व और विसर्ग ] । तृतीया—[ ए० व० ] कुमार्या [ कुमारी + टा = आ,

**कुमार्यै, कुमारीभ्याम्, कुमारीभ्यः । कुमार्याः, कुमारीभ्याम्, कुमारीभ्यः । कुमार्याः, कुमार्योः, कुमारीणाम् । कुमार्याम्, कुमार्योः, कुमारीषु । एवं गौरी, शार्ङ्गरवी चोदाहार्यम् ।**

**न्यासः**

यदपीदं तत्रोक्तम्—'ङ्याप्प्रातिपदिकात् स्वादयो लस्य तिबादय इति बहुवचनं विहितं तस्यानेन बहुत्वसंख्यावाच्यत्वेन विधीयते' इति, तदपि विरुध्यत एव; न ह्येकवाक्यतायां विहितस्य बहुवचनस्य पश्चाद् बहुत्वसंख्याया वाच्यत्वेन विधानं युक्तम् । तेन शास्त्रान्तरेणानेन च संहत्य बहुत्वसंख्यायामेव बहुवचनविधानात् पूर्वकस्तावन्नास्ति विरोधः । एकवाक्यतायामपि हि यथा स्वादीनां सामान्येन विधानमुपपद्यते तथा 'बहुषु बहुवचनम्' इत्यत्रैव प्रतिपादितम् । योऽपि द्वितीयो विरोध उद्भावितः सोऽपि न भवत्येव; ङ्याप्प्रातिपदिकात् स्वादयो लस्य तिबादय इति बहुवचनं विहितमिति 'बहुषु बहुवचनम्' इत्यनेन सहैकवाक्यतामापन्नेनेत्ययं तत्राभिप्रायो वेदितव्यः । तस्यानेन सूत्रेण बहुत्वसंख्या वाच्यत्वेन विधीयत इत्यत्रापि स्वादिसूत्रेण 'लस्य' इत्यादिना च शास्त्रेण सहैकवाक्यतां प्रतिपन्नेनेत्येषोऽभिप्रायो द्रष्टव्यः । एवञ्च संहत्यैव बहुवचनं विहितम् । संहत्यैव च तस्य बहुत्वसंख्या वाच्यत्वेन विधीयत इति कुतो विरोधः; ननु च 'बहुषु बहुवचनम्' इत्येकमिदं शास्त्रम्, तस्य यदि स्वादिसूत्रेणैकवाक्यता, ततो 'लस्य' इत्यादिना शास्त्रान्तरेण सा नोपपद्यते ? अथ तेनैकवाक्यता, स्वादिसूत्रेण सा नोपपद्यते ? नैष दोषः; द्वे ह्येते वचने तन्त्रोच्चारिते, तत्रैकस्य स्वादिसूत्रेणैकवाक्यता, अपरस्य 'लस्य' इत्यादिना शास्त्रान्तरेण ।

**पदमञ्जरी**

ग्रहणार्थः । ङेप्रभृतिषु ङकारः 'घेर्ङिति' इति विशेषणार्थः । ङसेरिकारः 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यत्र ग्रहणं मा भूदित्येवमर्थः । **पकारः प्रत्याहारग्रहणार्थं इति । उकारादयोऽनुबन्धा यथायोगमुच्चारणविशेषणार्था** इत्यनेनागतार्थत्वादिदमुक्तम् । एवं च--'औटष्टकारः सुडिति प्रत्याहारार्थः' इत्यग्रिमग्रन्थेन भवितव्यम् ।

क्व पुनरिमेऽर्थे स्वादयो भवन्तीत्याह—**संख्याकर्मादयश्चेति । शास्त्रान्तरेणेति** । 'बहुषु बहुवचनम्',

**भावबोधिनी**

यण् । द्वि० व० ] कुमारीभ्याम् [ कुमारी + भ्याम् । ब० व० ] [ कुमारीभिः । कुमारी + भिस्, स् का रुत्व और विसर्ग ] । **चतुर्थी**--[ ए० व० ] कुमार्यै [ कुमारी + ङे = ए, "यू स्त्र्याख्यौ नदी" १।४।३ नदीसंज्ञा, "आण्नद्याः" ७।३।११२ आट् = आ आगम, वृद्धि करने पर—कुमारी + ऐ, यण् । द्वि० व० ] कुमारीभ्याम् [ कुमारी + भ्याम् । ब० व० ] कुमारीभ्यः [ कुमारी + भ्यस्, स् का रुत्व और विसर्ग ] । **पञ्चमी**--[ ए० व० ] कुमार्याः [ कुमारी + ङसि=अस् नदीसंज्ञा, आट्=आ आगम, वृद्धि—कुमारी + आस्, यण्, स् का रुत्व, विसर्ग । द्वि० व० ] कुमारीभ्याम् [ कुमारी + भ्याम् । ब० व० ] कुमारीभ्यः [ कुमारी + भ्यस् । स् का रुत्व, विसर्ग ] । **षष्ठी**--[ ए० व० ] कुमार्याः [ कुमारी + ङस्=अस्, आट् = आ आगम, वृद्धि, यण् । द्वि० व० ] कुमार्योः [ कुमारी + ओस्, यण्, स् का रुत्व, विसर्ग । ब० व० ] कुमारीणाम् [ कुमारी + आम्, नदीसंज्ञा के कारण नुट् = न् आगम, न् का णत्व ] । **सप्तमी**--[ ए० व० ] कुमार्याम् [ कुमारी + ङि, नदीसंज्ञा होने के कारण 'ङेराम्नद्याम्नीभ्यः' ७।१।११६ से ङि का आम्, यण् । द्वि० व० ] कुमार्योः [ कुमारी + ओस्, यण्, स् का रुत्व-विसर्ग । ब० व० ] कुमारीषु [ कुमारी + सुप् = सु, "आदेशप्रत्यययोः" ८।३।५९ से स् का षत्व ।] [काशिकाकार ने सम्बोधन के रूप नहीं लिखे हैं । "सम्बोधने च" २।३।४७ सूत्र से सम्बोधन में भी प्रथमा-विभक्ति होती है । अतः ए० व०--हे कुमारि ! ( कुमारी + सु नदीसंज्ञा के कारण "अम्बार्थनद्योर्ह्रस्वः" ७।३।१०७ सूत्र से ह्रस्व करने पर "एङ्ह्रस्वात् सम्बुद्धेः" ६।१।६९ से सुलोप होता है । द्वि० व० में ] हे कुमार्यौ ! [ कुमारी + औ, यण्, ब० व० में ] हे कुमार्यः ! [ कुमारी + जस् = अस्, यण्, स् का रुत्व-विसर्ग । ]

इस कुमारी शब्द के समान ही गौरी और शार्ङ्गरवी के उदाहरण देने [ समझने ] चाहिये ।

आप् [ आबन्त ] से--खट्वा । बहुराजा । कारीषगन्ध्या । ये क्रमशः टाप्, डाप् और चाप् के उदाहरण हैं । ]

आपः खल्वपि—खट्वा। बहुराजा। कारीषगन्ध्या। टाब्डाप्चापां क्रमेणोदाहरणम्। खट्वा, खट्वे, खट्वाः। खट्वाम्, खट्वे, खट्वाः। खट्वया, खट्वाभ्याम्, खट्वाभिः। खट्वायै, खट्वाभ्याम्, खट्वाभ्यः। खट्वायाः, खट्वाभ्याम्, खट्वाभ्यः। खट्वायाः, खट्वयोः खट्वानाम्। खट्वायाम्, खट्वयोः, खट्वासु। एवं बहुराजा-कारीषगन्ध्ये चोदाहार्ये।

**न्यासः**

अथ वा—अन्यथा विरोधाभावः प्रतिपाद्यते। इह हि स्वादयोऽनेन सूत्रेण 'कर्मणि द्वितीया' इत्येवमादिकं शास्त्रमनपेक्ष्य वा विधीयेरन् ? तद्वापेक्ष्य तेन सहैकवाक्यतामापन्ने ते ? इति द्वौ पक्षौ। तत्राद्ये पक्षेऽविशेषेणैव स्वादयो विधीयन्त इति, तथा विहितानां तु तेषां नियमः क्रियते—यत्र संख्या सम्भवति तत्रासौ 'बहुषु बहुवचनम्' इत्यादिना शास्त्रान्तरेण कर्मादिसम्बन्ध्येकत्वादिसंख्यावाच्यत्वेन विधीयते, यानि तु निःसंख्यान्यव्ययानि तेभ्यः सामान्यविहिताः स्वादयः सन्तीत्येव। द्वितीये तु पक्षे विशिष्ट एवार्थे कर्मादिसम्बन्धिनि बहुत्वादौ स्वादयो विधीयन्ते। तत्र 'बहुषु बहुवचनम्' इत्याद्यः पक्ष आश्रितः, इह तु द्वितीय इति नास्ति विरोध; पक्षान्तरमाश्रित्य तथाभिधानात्। अथ द्वितीये पक्षे कथमव्ययेभ्यः सुबुत्पत्तिः, न ह्येकवाक्यतायां संख्याकर्माद्यर्थरहितेभ्यः स्वाद्युत्पत्तिरुपपद्यते ? नैष दोषः; ज्ञापकाद् भविष्यति। यदयम् 'अव्ययादाप्सुपः' इत्यव्ययादुत्पन्नस्य सुपो लुकं शास्ति, तज्ज्ञापयति—भवत्यव्ययाद् विभक्त्युत्पत्तिरिति।

**पदमञ्जरी**

कर्मणि द्वितीया' इत्यादिना **तेन सहास्यैकवाक्यतेति**। पूर्वं त्ववान्तरवाक्यभेदापेक्षया शास्त्रान्तरेणेत्युक्तम्। आकांक्षायोग्यतावशेन भिन्नप्रकरणपठितानामप्येकवाक्यता भवत्येव। प्रकरणभेदेन तु पाठस्तिङादिविधिनाप्येकवाक्यत्वं यथा स्यादिति। 'बहुषु बहुवचनम्' इत्यत्र तु भिन्नवाक्यत्वमाश्रित्योक्तम्—ङ्याप्प्रातिपदिकात् स्वादयो लस्य तिबादय इति बहुवचनं विहितं तस्यानेन बहुत्वं संख्यावाच्यत्वेन विधीयते इति।

**भावबोधिनी**

**प्रथमा**—[ ए० व० ] खट्वा [ खट्वा+सु, "हल्ङ्यादि०" सुलोप। द्वि० व० ] खट्वे [ खट्वा+औ, "औङ आपः" ७।१।१८ से औ का शी = ई आदेश, "आद्गुण" ६।१।८७ से गुण। ब० व० ] खट्वाः [ खट्वा+जस् = अस् पूर्वसवर्णदीर्घ, स् का रुत्व विसर्ग ]। **द्वितीया**—[ एकवचन ] खट्वाम् [ खट्वा+अम्, पूर्वरूप। द्विवचन ] खट्वे [ खट्वा+औट् = शी = ई, बहुवचन ] खट्वाः [ खट्वा+शस् = अस्, पूर्वसवर्णदीर्घ, स् का रुत्व-विसर्ग ]। **तृतीया**—[ ए० व० ] खट्वया [ खट्वा+टा=आ, प्राचीन आचार्यों ने टा को आङ् कहा है, अतः "आङि चापः" ७।३।१०५ से आबन्त अङ्ग का एकारान्तादेश—खट्वा+आ, "एचोऽयवायावः" ६।१।७८ से ए का अय् आदेश। द्वि० व०] खट्वाभ्याम् [खट्वा+भ्याम्। ब० व०] खट्वाभिः [खट्वा+भिस्, स् का रुत्व विसर्ग]। **चतुर्थी**—[ ए० व० ] खट्वायै [ खट्वा+ङे=ए, "याडापः" ७।१।११३ से याट् = या आगम, खट्वा+या+ए, "वृद्धिरेचि" ६।१।८८ से वृद्धि। द्वि० व० ] खट्वाभ्याम् [ खट्वा+भ्याम्। ब० व० ] खट्वाभ्यः [ खट्वा+भ्यस्, स् का रुत्व और विसर्ग ]। **पञ्चमी**—[ए० व० ] खट्वायाः [ खट्वा + ङसि = अस्, 'याडापः' ७।३।११३ से याट् = या आगम, 'अकः सवर्णे दीर्घः' ६।१।१०१ सवर्ण दीर्घ, स् का रुत्व विसर्ग। द्वि० व० ] खट्वाभ्याम् [ खट्वा+भ्याम्। ब० व० ] खट्वाभ्यः [ खट्वा+भ्यस्, का रुत्व विसर्ग ]। **षष्ठी**—[ ए० व० ] खट्वायाः [ खट्वा + ङस्=अस्, याट् = या आगम, सवर्णदोर्घ, स् का रुत्व विसर्ग। द्वि० व० ] खट्वयोः [ खट्वा + ओस्, 'आङि चापः' ७।३।१०५ से एकारान्तादेश खट्वे + ओस्, ए का अय् आदेश, स् का रुत्वविसर्ग। ब० व० ] खट्वानाम् [ खट्वा + आम् "ह्रस्वनद्यापो नुट्" ७।१।५४ नुट् = न् आगम, ]। **सप्तमी**—[ ए० व० ] खट्वायाम् [ खट्वा+ङि, "ङेराम्नद्याम्नीभ्यः" ७।३।११६ से ङि का आम् आदेश, "याडापः" ७।३।११३ से याट् = या आगम। द्वि० व० ] खट्वयोः [ खट्वा+ओस्, सिद्धिप्रक्रिया पूर्ववत्। ब० व० ]

**एवं प्रातिपदिकात्—दृषद्, दृषदौ, दृषद् । दृषदम्, दृषदौ, दृषदः । दृषदा, दृषद्भ्याम्, दृषद्भिः । दृषदे, दृषद्भ्याम्, दृषद्भ्यः । दृषदः, दृषद्भ्याम्, दृषद्भ्यः । दृषदः, दृषदोः, दृषदाम् । दृषदि, दृषदोः, दृषत्सु ॥**

**न्यासः**

**कुमारीति** । 'वयसि प्रथमे' इति ङीप् । **गौरीति** । 'षिद्गौरादिभ्यश्च' इति ङीष् । **शार्ङ्गरवीति** । 'शार्ङ्गरवाद् यञो ङीन्' । **खट्वेति** । 'अजाद्यतष्टाप्' इति टाप् ॥ **बहुराजेति** । 'डाबुभाभ्यामन्यतरस्याम्' इति डाप् । **कारीषगन्ध्येति** । करीषस्य गन्ध इव गन्धो यस्येति । 'गन्धस्येदुत्पूतिसुसुरभिभ्यः', 'उपमानाच्च' इतीत्वम्; करीषगन्धेरपत्यमिति 'यस्येति च' इत्यकारलोपः, 'तद्धितेष्वचामादेः' इत्यादिवृद्धिः, 'अणिञोरनार्षयोर्गुरूपोत्तमयोः' इत्यादिना ष्यङादेशः, 'यङश्चाप्' इति चाप् ॥ २ ॥

**पदमञ्जरी**

अव्ययेयस्तु निःसंख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एवेति च । एकवाक्यतायां तु विशिष्टे एवार्थे कर्मादिसम्बन्धिन्येकत्वादौ स्वादीनां विधानात् सामान्यविहितत्वं नोपपद्यते । तस्माद् 'अव्ययादाप्सुपः' इत्यव्ययादुत्पन्नस्य सुपो लुग्विधानाल्लिङ्गादव्ययेभ्योऽस्मिन्पक्षे स्वाद्युत्पत्तिः । उदाहरणानि यथायोगं स्वे स्वे वाक्ये प्रकटीकरिष्यन्ते ॥ २ ॥

**भावबोधिनी**

खट्वासु [ खट्वा + सुप् = सु ] । [ सम्बोधन में भी प्रथमा विभक्ति होती है । ए० व० हे खट्वे ! खट्वा + सु "सम्बुद्धौ च" ७।३।१०६ से एकारान्तादेश खट्वे + सु, 'एङ्ह्रस्वात् सम्बुद्धेः' ६।१।६९ से सम्बुद्धि = सु का लोप । द्वि० व० ] खट्वे [ खट्वा + औ, औ का शीङ् = ई आदेश, गुण । ब० व० ] खट्वाः [ खट्वा + जस् = अस्, सवर्णदीर्घ, स् का रुत्वविसर्ग ] । इस खट्वा शब्द के रूपों के समान ही बहुराजा और कारीषगन्ध्या के भी उदाहरण समझने चाहिये ।

**विमर्श**—बहवो राजानो यस्यां नगर्यां सा—इस विग्रह में समास के बाद बहुराजन् यहाँ 'अनो बहुव्रीहेः' ४।१।१२ से ङीप् का निषेध कर देने पर 'डाबुभ्यामन्यतरस्याम्' ४।१।१३ से डाप् = आ प्रत्यय होता है । डित् होने से टि = अन् का लोप होने पर—बहुराजा—यह बनता है । इसके रूप खट्वा के समान ही होते है ।

कारीषगन्ध्या—करीषस्य गन्ध इव गन्धो यस्य इस अर्थप्रदर्शनपरक विग्रह में [ वास्तव में करीषं गन्धो यस्या यही विग्रह है ]—"उपमानाच्च" ५।४।१३७ से इकारान्तादेश करने पर करीषगन्धि शब्द बनता है । करीषगन्धि से गोत्रापत्य अर्थ में अण् प्रत्यय, "तद्धितेष्वचामादेः" ७।२।११७ से आदिवृद्धि, इकार का लोप करने पर—कारीषगन्ध् + अण् में 'अणिञोरनार्षयोर्गुरूपोत्तमयोः' ४।१।७८ से अण् का ष्यङ् = य आदेश —कारीषगन्ध्य—यहाँ "यङश्चाप्" ४।१।७४ से चाप् = आ प्रत्यय करने पर कारीषगन्ध्या शब्द बनता है । ( करीष = सूखा गोबर ) इस शब्द के रूप भी खट्वा के समान ही चलते हैं ।

[ अनु० ] इसी प्रकार प्रातिपदिक से भी [सु आदि २१ प्रत्यय] होते हैं—

**प्रथमा**—[ ए० व० ] दृषद् [ दृषद् + सु, "हल्ङ्यादि" ६।१।६८ से लोप । द्वि० व० ] दृषदौ [ दृषद् + औ । ब० व० ] दृषदः [ दृषद् + जस् = अस्, स् का रुत्व विसर्ग ] । **द्वितीया**-[ ए० व० ] दृषदम् [ दृषद् + अम् । द्वि० व० ] दृषदौ । [ ब० व० ] दृषदः [ दृषद् + शस् = अस्, स् का रुत्व विसर्ग ] । **तृतीया**—[ ए० व० ] दृषदा [ दृषद् + टा = आ । द्वि० व० ] दृषद्भ्याम् [ दृषद् + भ्याम् । ब० व० ] दृषद्भिः [ दृषद् + भिस्, स् का रुत्व विसर्ग ] । **चतुर्थी**—[ ए० व० ] दृषदे [ दृषद् + ङे = ए । द्वि० व० ] दृषद्भ्याम् [ बहु व० ] दृषद्भ्यः । **पञ्चमी**—[ ए० व० ] दृषदः [ दृषद् + ङसि = अस्, स् का रुत्व विसर्ग ] [ द्वि० व० ] दृषद्भ्याम् [ ब० व० ] दृषद्भ्यः । **षष्ठी**—[ ए० व० ] दृषदः [ दृषद् + ङस् = अस् । द्वि० व० ] दृषदोः [ दृषद् + ओस् । ब० व० ] दृषदाम् [ दृषद् + आम् ] । **सप्तमी**—[ ए० व० ] दृषदि [ दृषद् + ङि । द्वि० व० ] दृषदोः [ दृषद् + ओस् । ब० व० ] दृषत्सु [ दृषद् + सुप्, चर्त्व ] ।

## १२९३. स्त्रियाम् ॥ ३ ॥ ( ४९३ )

अधिकारोऽयम् । यदित ऊर्ध्वमनुक्रमिष्यामः स्त्रियामित्येवं तद्वेदितव्यम् । 'ङ्याप्प्रातिपदिकात्' (४.१.१) इति सर्वाधिकारेऽपि प्रातिपदिकमात्रमत्र प्रकरणे संबध्यते. ङ्यापोरनेनैव विधानात् ।

'स्त्रियाम्' इत्युच्यते, केयं स्त्री नाम ? सामान्यविशेषाः स्त्रीत्वादयो गोत्वादय इव बहुप्रकारा व्यक्तयः ।

**न्यासः**

**स्त्रियाम् ॥ ङ्यापोरनेनैव विधानादिति** । एतेन 'स्त्रियाम्' इत्यधिकृत्य प्रत्ययविधौ ङ्याबन्तायाः । प्रकृतेरभावमाह । एष **च प्रातिपदिकमात्रमत्र प्रकरणे सम्बध्यते** इत्यत्र हेतुः । यदि हि ङ्याबन्ता प्रकृतिरिह प्रकरणे सम्भवेत् ततो ङ्यापावपि सम्बध्येयाताम्, सा ङ्याब्रूपा न सम्भवति, अतो न ताविह सम्बध्येते ।

इह च स्त्रीत्वं प्रत्याचार्याणां दर्शनभेदः, क्वचिच्च दर्शने दोषो दृश्यते ।

तत्र केषाञ्चिद् दर्शनम्—

'स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः ।
उभयोरन्तरं यच्च तदभावे नपुंसकम्' ॥ ( म० भा० ४।१।३ )

'स्तनकेशवती' इति, भूम्न्यतिशायने वा मतुप् । 'लोमशः' इत्यत्रापि लोमादिपामादिसूत्रेण शप्रत्ययः

**पदमञ्जरी**

**स्त्रियाम् ॥ ङ्यापोरनेनैव विधानादिति** । प्रातिपदिकमात्रमत्र प्रकरणेऽभिसम्बध्यत इत्यत्रायं हेतुः । प्रकरणापेक्षया चैतदुच्यते, सूत्रान्तरव्यापारसमये तु सूत्रान्तरविहितप्रत्ययान्ता प्रकृतिः सम्भवत्येव । ननु चात्र प्रकरणे सर्वत्र सति सम्भवे 'अतः' इति सम्बध्यते, न च डयाबन्तमदन्तम् । उक्तार्थत्वाच्च डयाबन्तात् डयापोरप्रसङ्गः ? सत्यम्, न्यायस्तु निरूप्यते ।

चोदयति --**स्त्रियामित्युच्यते इति** । सप्तमीनिर्देशेन कार्यान्तरविधानार्थमनूद्यते इत्यर्थः । ततः किमित्याह-- **केयं स्त्री नामेति** । इह शास्त्रे स्त्रिया अपरिभाषितत्वाल्लौकिकस्त्रीग्रहणे च खट्वादावव्याप्तिप्रसङ्गात् प्रसिद्धवदनुवादोऽनुपपन्न इत्यर्थः । स्वरूपस्य च जिज्ञासितत्वात् प्रथमान्तेन प्रश्नः, कस्यां स्त्रियामिति तूच्यमाने विशेषविषयः प्रश्नः स्यात् । स्त्रीग्रहणं च प्रसङ्गेन पुन्नपुंसकयोरपि प्रदर्शनार्थम् । अत एवोत्तरे सामान्यविशेषाः स्त्रीत्वादय इति त्रयाणां स्वरूपं दर्शितम् । एवं च प्रथमोपनिपातिनि 'ह्रस्वो नपुंसके' इत्यत्र लिङ्गस्वरूपनिरूपणमुचितम्, तथा तु न कृतमित्येव । तत्र **लौकिकानां लक्षणम्**—

**स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः ।
उभयोरन्तरं यच्च तद्भावे नपुंसकम् ॥ ( म० भा० ४-१-३ )**

भूमादौ मतुप्, तथैव लोमश इति शः । स्तनकेशवत्त्वं च प्रसिद्धत्वादन्यस्यापि कुमार्यादिगतस्य स्त्रीप्रतिपत्तिहेतोरुपलक्षणम् । लोमशत्वं च पुंविज्ञानहेतोः कुमारादिगतस्य । उभयोरपि स्त्रीपुंसयोर्यदन्तरं सदृशं

**भावबोधिनी**

यह अधिकार है । इसके आगे जो कहे जायँगे उन्हें 'स्त्रीलिङ्ग में' ऐसा समझना चाहिये । 'ङ्याप्प्रातिपदिकात्' ४।२।१ इस सम्पूर्ण का अधिकार रहने पर भी यहाँ प्रकरण में केवल प्रातिपदिक का सम्बन्ध होता है, क्योंकि ङी और आप् का तो इसी [ प्रस्तुत सूत्र ] से विधान होता है ।

'स्त्रियाम्' [ स्त्री में ] यह कहा जा रहा है, वह स्त्री कौन पदार्थ है ? गोत्व आदि के समान स्त्रीत्व आदि सामान्य विशेष बहुत प्रकार के व्यक्ति = आश्रय होते हैं । कहीं आश्रय विशेष न होने के कारण उपदेश = कथन द्वारा ही व्यङ्ग्य = ज्ञानयोग्य होते हैं, जैसे - ब्राह्मणत्वादि ।

## न्यासः

'उभयोरन्तरम्' इति, उभयोः स्त्रीपुंसयोः सदृशमित्यर्थः। तत् पुनः सादृश्यं लिङ्गवत्वेन। एवं तर्हि तदुभयं समुदितं यत्र तन्नपुंसकं प्राप्नोति। भवति हि समुदायरूपं समुदायिरूपेण लिङ्गित्वेन सदृशमित्यत आह— 'तदभावे' इति। एतदुभयं यत्र नास्ति तत्र 'नपुंसकम्' इति। तेन न सम्भवत्येष दोषः। यदि तदभावे नपुंसकमित्येतदुच्यते ततोऽव्ययानां तिङन्तानाञ्चैव नपुंसकत्वं स्यात्। तथाप्युभयोरन्तरं यदित्येतावदुच्यते एवमपि कुक्कुटमयूर्यौ इत्येवमादीनां लिङ्गसमुदायवतां समुदायानां नपुंसकत्वं प्रसज्येत। तस्मादुभयोरन्तरं यत् तदभाव इति च द्वयमप्युक्तम्। तदेवं यन्न स्त्री न पुमान् लिङ्गवच्च वस्तु तन्नपुंसकमित्युच्यते, ततोऽव्ययानां तिङन्तानाञ्च नपुंसकत्वं न भवतीत्युक्तं भवति। अत्र दर्शने भ्रकुंसे च टाप् प्रसज्यते, तस्य हि स्तनकेशसम्बन्ध उपलभ्यते। भ्रकुंसः स्त्रीवेशधारी नर्तकः, पुरुष उच्यते। खट्वादीनाञ्च स्तनकेशाभावात् स्त्रीत्वं न स्यात्,

## पदमञ्जरी

स्तनलोमाद्युभयव्यञ्जनं तन्नपुंसकमित्यर्थः। तेनाव्ययाख्यातार्थस्य स्त्रीपुंसत्वाभावेऽपि नपुंसकत्वं न भवति, अन्यथा 'तदभावे' इत्येतावत्युक्ते स्यात् प्रसङ्गः, तदभाव इत्यनेन कुक्कुटमयूर्यादेः स्त्रीपुंससमुदायरूपस्य द्वन्द्वार्थस्य नपुंसकत्वं न भवति। भवति हि समुदायः समुदायिनः सदृश इति स्यात् प्रसङ्गः। नायं प्रसङ्गः, 'परवल्लिङ्गम्' इत्यनेन समुदायस्य परवल्लिङ्गातिदेशात्? सत्यम्; इदं तु वस्तुस्वरूपनिरूपणपरं द्रष्टव्यम्। तदनेन स्तनकेशादिसम्बन्धः, स्तनादय एव वा विशिष्टसंस्थानाः, तदुपव्यञ्जना वा जातयः स्त्रीत्वादय इत्युक्तं भवति।

अत्र पक्षे भ्रकुंसे टाप् प्रसज्येत, भ्रकुंसः=स्त्रीवेषधारी नटः, तस्य स्तनकेशसम्बन्ध उपलभ्यते, खरकुट्यादीनां च लोमशत्वात् पुंस्त्वे सति खरकुटीः पश्येत्यत्र नत्वं प्राप्नोति। खरकुटी=नापितगृहमुच्यते। ननु च स्वाभाविकपरिणामशालिभिः स्तनादिभिरत्र सम्बन्धो विवक्षितः, न यथाकथञ्चित्; स्तनादि च प्रसिद्ध-स्यान्यस्याप्युपलक्षणमुक्तं तत्कुतोऽयं प्रसङ्गः? एवं तर्हि खट्वावृक्षौ न सिध्यतः, खट्वावृक्षादीनां स्तनलोमाद्य-भावात्। स्यादेतत्—यथा वस्त्रान्तर्हितानि द्रव्याणि नोपलभ्यन्ते, तद्वत्खट्वावृक्षयोः सदेव लिङ्गं नोपलभ्यत इति? तन्न; वस्त्रान्तर्हितानि द्रव्याणि वस्त्रापाये उपलभ्यन्ते खट्वावृक्षयोस्तिलशस्तत्क्षणेऽपि लिङ्गं नोप-लभ्यते। यथा तर्ह्यादित्यगतिः सती प्रत्यक्षेण नोपलभ्यते देशान्तरप्राप्त्या त्वनुमीयते, तथा खट्वावृक्षयोरपि सदेव लिङ्गं सूक्ष्मत्वान्नोपलभ्यते।

सतामपि हि भावानां षड्भिः प्रकारैरनुपलब्धिर्भवति—अतिसन्निकर्षाद्, यथा-स्वचक्षुर्गतस्याञ्जनादेः। अतिविप्रकर्षात्, यथा-उड्डीनस्य शकुनेः। मूर्तान्तर्द्धानात्, यथा—कुड्यादिव्यवहितस्य सुवर्णादेः। अन्धकारा-वृतत्वात्, यथा-अन्धकाराक्रान्तस्य घटादेः। इन्द्रियदौर्बल्यात्–तिमिराद्युपघाते चक्षुरादेः। अतिप्रमादात्— 'प्रमादोऽनवधानता', विषयान्तरव्यासक्तचित्तो हि सन्निकृष्टमप्यर्थं नोपलभ्यते। सौक्ष्म्यं तु—इन्द्रियदौर्बल्य एवान्तर्भूतम्, दिव्यचक्षुःश्रोत्रो हि सूक्ष्ममप्यर्थमुपलभते। एवं समानाभिहारोऽपि तत्रैवान्तर्भूतः, तद्यथा माषराशौ माषः प्रक्षिप्तः पृथग्नोपलभ्यते। एवमभिभवोऽपि, तद्यथा सौरीभिः प्रभाभिरभिभूतानि नक्षत्राणि दिवा नोपलभ्यन्ते। केन पुनरेतदवसीयते खट्वावृक्षयोः सदेव लिङ्गं नोपलभ्यत इति? टाबादेस्तत्कृतस्यानन्यकार्यस्य दर्शनात्। यद्येवम्, इतरेतराश्रयं प्राप्नोति—लिङ्गावगमाट्टाबादिशब्दप्रयोगः, तद्योगाल्लिङ्गावगतिरिति? इन्द्रियदौर्बल्यं कदाचिदुपलब्धस्य कदाचिदनुपलम्भे कारणं शक्यमभिधातुम्, खट्वादिषु च लिङ्गस्य कदाचि-दप्यनुपलम्भाल्लिङ्गविविक्तखट्वादिवस्तुग्राहिणा प्रत्यक्षेण लिङ्गाभावनिश्चयात्तद्विरुद्धमनुमानं नोदेतुमर्हति। न हि शक्यते वक्तुम्—भिक्षुगृहं गजवद् देशत्वाद्गजशालावत्, प्रत्यक्षेणेन्द्रियदौर्बल्यात्तु गजो नोपलभ्यत इति, तस्मादसदेव लिङ्गं शब्दप्रयोगमहिम्न खट्वादिषु प्रतीयते। भवत्वेवं श्रोतुः प्रतीतिः, यस्त्वसौ प्रयोक्ता स केन लिङ्गमवगम्य तदनुरूपं शब्दं प्रयुङ्क्ते! किञ्च—कुमार्यर्थः, कुमारी वस्त्विति कुमार्यादिष्वर्थवस्तुशब्दयोः पुन्न-

पदमञ्जरी

पुंसकयोरनुपपत्तिः। भाष्ये तु—

आविर्भावस्तिरोभावः स्थितिश्चेत्यनपायिनः।
धर्मा मूर्त्तिषु सर्वासु लिङ्गत्वेनानुदर्शिताः॥ (वा० प० ३-१३-१३)

आविर्भावः = उपचयः, पुंस्त्वम्; तिरोभावः = अपचय॰, स्त्रीत्वम्; अन्तरालावस्था स्थितिर्नपुंसकत्वमित्यर्थः। कस्य पुनराविर्भावादिकं लिङ्गम्? सत्त्वरजस्तमसां गुणानां तत्परिणामरूपाणां च तदात्मकानां शब्दस्पर्शरूपरसगन्धानाम्। शब्दादिसङ्घातरूपाश्च सर्वा मूर्तयः प्रतिक्षणपरिणामस्वभावाश्च सत्त्वादयो गुणा न स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठन्ते। एवं शब्दादय आकाशादयो घटादयश्च। उक्तञ्च—

सर्वमूर्त्यात्मभूतानां शब्दादीनां गुणे गुणे।
त्रयः सत्त्वादिधर्मास्ते सर्वत्र समवस्थिताः॥ इति;
क्वथितोदकवच्चैषामनवस्थितवृत्तिता।[1]
अजस्रं सर्वभावानां भाष्य एवोपवर्णिता॥ (वा० प० ३-१३-१४, १६) इति च।

तथा—

रूपस्य चात्ममात्राणां शुक्लादीनां प्रतिक्षणम्।
काचित्प्रलीयते काचित् कथंचिदभिवर्धते[2]॥ (वा० प० ३-१३, १५) इति।
प्रवृत्तिमन्तः सर्वे हि तिसृभिश्च प्रवृत्तिभिः।
सततं न वियुज्यन्ते वाचश्चैवात्र सम्भवः॥ (वा० प० ३-१४-३२४) इति च।
टाबाद्यन्तः शब्द एवैता अवस्था गोचरयतीत्यर्थः। पुरुषो यद्यप्यपरिणामी, तथापि—
अचेतनेषु सङ्क्रान्तं चैतन्यमिव दृश्यते।
प्रतिबिम्बकधर्मेण यत्तद्वाचो निबन्धनम्॥ (वा० प० ३-१४, ३२७)

ततश्च—

यश्चाप्रवृत्तिधर्मार्थश्चितिरूपेण गृह्यते।
अनुयातीव सोऽन्येषां प्रवृत्तिर्विष्वगाश्रयाः॥ (वा० प० ३-१४-३२५)

सामान्यमपि गोत्वादि व्यक्तेरव्यतिरेकतः। प्रवृत्तिधर्मं तद्द्वारा शशशृङ्गादिवाक्षु तु॥
तस्मादुक्तपदार्थस्य सम्भवाल्लिङ्गयोगिता। प्रवृत्तेरपि विद्यन्ते तिस्रो ह्येताः प्रवृत्तयः॥
पुन्नपुंसकता स्त्रीत्वं तेन स्यादन्यलिङ्गता।

तदेवं सर्वपदार्थव्यापित्वादुपचयान्तरालावस्थास्त्रीणि लिङ्गानि। एवं च नक्षत्रे तारका तिष्यः, कुमार्यर्थो वस्तु इति एकस्याप्यर्थस्य नानालिङ्गयोग उपपद्यते; आविर्भावादित्रयस्यापि गुणभेदेन तस्मिन्नेवार्थे सर्वदा सम्भवात्। न चैवं तद्वृत्तेः सर्वस्यैव शब्दस्य त्रिलिङ्गताप्रसङ्गः; न ह्यस्ति नियमः—यः शब्दो यत्रार्थे पर्यवस्यति तत्र विद्यमानः सर्व एवाकारस्तेन शब्देनाभिधातव्य इति, किन्तु य आकारोऽभिधीयते तेन सता भवितव्यमित्येतावत्। तद्यथा—तक्षा, युवा, कृष्णः, कामुक इति तक्षादिशब्दानामेकार्थपर्यवसितानामपि व्यवस्थित एवाकारो वाच्यः। तथा लिङ्गेष्वपि द्रष्टव्यम्। उक्तं च—

सन्निधाने पदार्थानां किञ्चिदेव प्रवर्तकम्।

---

१. 'क्वथितोदककल्पैषा' इति वा पाठः वाक्यपदीये।
२. 'काचित् प्रचीयते काचित् कथंचिदपचीयते' इति वा पाठः वाक्यपदीये।

**क्वचिदाश्रयविशेषाभावादुपदेशव्यङ्ग्या एव भवन्ति, यथा -ब्राह्मणत्वादयः ।**

**न्यासः**

वृक्षादीनाञ्च लोमशत्वाभावात् पुंस्त्वाभावः प्राप्नोति, खरकुटयादीनाञ्च लोमशत्वात् पुंस्त्वम्, ततश्च खरकुटीः पश्येति 'तस्माच्छसो नः पुंसि' इति नत्वमापद्येत ।

अन्येषां तु दर्शनम्—संस्त्यानम्, प्रसवः, स्थितिश्चेति । संस्त्यानम् = अपचयस्वभावं स्त्रीत्वम्, तद् यत्रास्ति सोऽर्थः स्त्री । प्रसवः = उपचयात्मकः पुंस्त्वम्, तद् यत्रास्ति स पुमान् । उपचयापचयरहिता यावस्था तदात्मिका स्थितिर्नपुंसकत्वम्, तद् यत्रास्ति तन्नपुंसकमिति । अत्रापि दर्शने संस्त्यानादेस्त्रयस्य सर्वत्र भावादेकैकं वस्तु स्त्री, पुमान् नपुंसकञ्च प्रसज्येत । संस्त्यानविवक्षायामेव स्त्रीत्वं भवति, प्रसवविवक्षायामेव पुंस्त्वम्, स्थितिविवक्षायामेव नपुंसकत्वम्, अतोऽयमदोष इति चेत्? अयुक्तमेतत्; तथा हि—उपचीयते कुमारीत्यपि कुमारी स्त्री भवति, न पुमान् । अपचीयते वृक्ष इति संस्त्यानविवक्षायामपि वृक्षः पुमानेव भवति, न स्त्री । उपचीयते कुण्डमपचीयते वेत्युपचयापचययोरन्यतरविवक्षायामपि कुण्डं नपुंसकमेव भवति, न पुमान्, नापि स्त्री ।

तदेवमाचार्याणां स्त्रीत्वं प्रति दर्शनभेदाद् दोषदर्शनाच्च पृच्छति—**स्त्रियामित्युच्यते, केयं स्त्रीत्यादि ।** वृत्तिकारस्तु विदिताभिप्रायो दर्शनान्तरमाश्रित्याह—**सामान्यविशेषा इत्यादि** । सामान्यानि विशेषाश्चेति । तथा सामान्यानि च तानि तुल्यजातीयपदार्थसाधारणत्वाद् विशेषाश्च परस्परतो विजातीयेभ्यश्च विशिष्यन्ते=

**पदमञ्जरी**

यथा तक्षादिशब्दानां लिङ्गेषु नियमस्तथा ॥ ( वा० प० ३-१३-२० ) इति ।

उपचीयते कुमारीत्यत्रापि कुमारीशब्दः स्वमहिम्ना कस्यचिद्धर्मस्यापचयमेवाह । शब्दान्तरप्रयोगात्तु धर्मान्तरस्योपचयः प्रतीयते । एवं क्षीयते वृक्ष इत्यत्रापचयः, तदेवं सर्वमनाकुलमिदं दर्शनम् ।

**वृत्तिकारस्तु** लौकिकानामेवं प्रतिपत्तेरभावात्तत्प्रतिपत्त्यनुगुणं पक्षं दर्शयति—**सामान्यविशेषा इति** । कानिचित्सामान्यानीत्यर्थः । यद्वा—सत्ताव्यतिरिक्तेषु सामान्येषु सामान्यविशेषशब्दो रूढः । तिस्रोऽवान्तरजातय इत्यर्थः । उक्तं च [ हरिणा ]—

तिस्रो जातय एवैताः केषाञ्चित्समवस्थिताः ।
अविरुद्धा विरुद्धाभिर्गोमहिष्यादिजातिभिः ॥
हस्तिन्यां वडवायां च स्त्रीत्वबुद्धेः समन्वयः ।
अतस्तां जातिमिच्छन्ति द्रव्यादिसमवायिनीम् ॥ ( वा० प० ३-१३-४, ५ ) इति ।

ननु चैषां त्रयाणामपि सामान्यविशेषाणां सर्वार्थेषु सद्भावोऽभ्युपगन्तव्यः, न गोत्वादिवत्कतिपयेष्वेवार्थेषु, कथमन्यथार्थव्यक्तिवस्त्वादिशब्दानां भिन्नलिङ्गानामेकस्मिन्नर्थे प्रयोगः स्यात् ! ततश्च सर्वत्र त्रिलिङ्गप्रतिभासप्रसङ्ग इत्यत आह—**बहुप्रकारा व्यक्तय इति ।** व्यज्यन्ते सामान्यविशेषा आभिरिति व्यक्तयः— आश्रयाः । एतदुक्तं भवति—विचित्रत्वादाश्रयाणां व्यञ्जकानां कश्चिदाश्रयः कस्यचित्सामान्यविशेषस्य व्यञ्जकः, न सर्वः सर्वस्येति । तत्र चेतनेषु स्तनादिमती व्यक्तिः स्त्रीत्वस्य व्यञ्जिका, लोमशत्वादिमती पुंस्त्वस्य, उभयव्यञ्जना नपुंसकत्वस्य; अचेतनेषु कथम्, न हि तत्र किञ्चिदपि लिङ्गं व्यज्यते ? तथा चेतनेऽप्यर्थव्यक्तिवस्त्वादिशब्दानां भिन्नलिङ्गानामप्यनुपपत्तिः, दारशब्दस्य च पुंल्लिङ्गस्य भार्यायामनुपपत्तिः ? अत आह—**क्वचिदाश्रयविशेषाभावादिति** । तदभिव्यञ्जनसमर्थ आश्रयविशेषः । तत्राचेतनेषु सर्वत्रोपदेशादेवाभिव्यक्तिः । उपदेशः पुनर्लिङ्गानुशासनादिषु । अत्रैव दृष्टान्तमाह—**यथा ब्राह्मणत्वादय इति । ब्राह्मणक्षत्रियादिव्यक्तीनामत्यन्त**साद‍ृश्यादुपदेशादेव ब्राह्मणत्वादीनामभिव्यक्तिर्भवति; नो खलु ब्राह्मणक्षत्रिययोः पुरोऽवस्थितयोरयं ब्राह्मणः,

**स्त्रीत्वं च प्रत्ययार्थः, प्रकृत्यर्थविशेषणं चेत्युभयथापि युज्यते – स्त्रियामभिधेयायां स्त्रियां वा यत्प्राति-**

न्यासः

व्यावर्त्यन्त इति सामान्यविशेषाः। **स्त्रीत्वादयो गोत्वादय इवेति।** यथैव हि गोत्वादयः सामान्यविशेषा भिन्नेष्वपि स्वाश्रयेष्वभिन्नाकारबुद्धयभिधानहेतवस्था स्त्रीत्वादयोऽपि। यथैव हि गोत्वादयस्तुल्यजातीयेषु सर्वेषु वर्तन्ते, विजातीयेभ्यस्तु व्यावर्तन्ते, तथा स्त्रीत्वादयोऽपि। तस्मात् तद्वदेव तेऽपि सामान्यविशेषाः। ननु च सामान्यविशेषाणां सर्वव्यक्त्यनुगतत्वादस्मिन्नपि दर्शने स एवस र्वत्र सर्वलिङ्गताप्रसङ्गः. तत् किमिति दर्शनान्तर-मुत्सृज्येदं दर्शनमाश्रितमित्याह—**बहुप्रकारा व्यक्तय इति।** व्यज्यन्त आभिरिति व्यक्तयः—सामान्यविशेषाणा-माश्रयाः। बहुप्रकारा व्यक्तयो येषां सामान्यविशेषाणां ते तथोक्ताः अनेनैतत् सूचयति—विचित्रत्वात् सामान्य-विशेषाश्रयाणां व्यञ्जकानां कश्चिदेव सामान्यविशेषः केनचिदेवाश्रयेण व्यज्यते, न सर्वः सर्वेण। प्रतिनियत-विषयत्वात् पदार्थशक्तीनाम्। तत्र येनार्थेन स्त्रीत्वमेव व्यज्यते न पुंस्त्वं नापि नपुंसकत्वम्, सा स्त्र्येव भवति, न पुमान् नापि नपुंसकम्। येन पुंस्त्वमेव व्यज्यते स पुमानेव, येन नपुंसकत्वं तन्नपुंसकमेव। यस्तु द्वयोस्त्रयाणां वा व्यञ्जकः स द्विलिङ्गस्त्रिलिङ्गो वेष्यते - अर्धर्चः, अर्धर्चम्; पद्मः, पद्मम्; तटः, तटी, तटमिति। तेन नास्मिन् दर्शने पूर्वदोषावसरः। यस्तर्हि सामान्यविशेषस्याश्रयो व्यञ्जको न भवति स कथं तद्योगात् स्त्री भवति? पुमान् नपुंसकश्चेति? अत आह—**क्वचिदित्यादि।** आशात्माकाशादिषु हि सामान्यविशेषा स्त्रीत्वादयः क्वचिदु-पदेशमात्रव्यङ्ग्या एव, न त्वाश्रयव्यङ्ग्याः; तदाश्रयाणामतीन्द्रियत्वात्। यत्र यस्मिन्नुपदेशेन स्त्रीत्वं व्यज्यते सा स्त्री भवति, यथा—इयमाशेति। यत्र पुंस्त्वं स पुमान्, यथा—अयमात्मेति। यत्र नपुंसकत्वं तन्नपुंसकमेव, यथा—इदमाकाशमिति। कथं स्त्रीत्वादयः क्वचिदुपदेशमात्रव्यङ्ग्या भवन्तीत्याह—**यथेत्यादि।** ब्राह्मणत्व-

पदमञ्जरी

अयं क्षत्रिय इति प्रागेवोपदेशात् प्रत्यय उदेति। यथा गवाश्वव्यक्त्योरभावे शशविषाणादावप्युत्तरपदार्थद्वारकः सामान्ययोगः, सामान्यं जातिः, स्त्रीत्वं स्त्रीता पुंस्त्वं पुंस्तेत्यादौ सामान्येऽपि सामान्यान्तरस्य सद्भावः, यथा गोत्वादौ सत्तासामान्यस्य। न ह्यस्माकं वैशेषिकाणामिव निःसामान्यानि सामान्यानि।

स्त्रीशब्दोऽयं शुक्लादिशब्दवद् गुणमात्रे गुणिनि च वर्तते, तत्र यदा गुणमात्रे स्त्रीशब्दो वर्तते तदा द्रव्यवाचिनः प्रातिपदिकात् स्त्रीत्वेऽभिधेये टाबादयो भवन्तीति स्त्रीत्वं प्रत्ययार्थ इति पक्षो भवति। यदा तु स्त्रीत्वयुक्तं द्रव्यं स्त्रीशब्देनोच्यते तदा परं पक्षद्वयं सम्भवति-स्त्रीत्वमुपलक्षणम्, विशेषणं वेति। तत्राद्ये स्त्रीत्वोपलक्षितद्रव्यवाचिनः प्रातिपदिकाट्टाबादय इति, अयं स्त्रीसमानाधिकरणादिति पक्षो भवति। द्वितीये तु स्त्रीत्वयुक्तद्रव्यवाचिनोऽङ्गीकृतस्त्रीत्वात् प्रातिपदिकादिति प्रकृत्यर्थविशेषणं स्त्रीत्वमिति पक्षो भवति। तत्र स्त्रीसमानाधिकरणादिति चेद्, भूतादिष्वतिप्रसङ्गः—भूतमियं ब्राह्मणी, प्रधानमियं ब्राह्मणी आवपनमियमुष्ट्रि-केति। उभयोस्तु पक्षयोर्नैष दोषः, कथम्? भूतादयः चैतन्यप्राधान्यसम्भवनवद्वृत्तयः, न तु स्त्रीत्वाङ्गी-कारेण वर्तन्ते। तदेवमत्र पक्षे दोषदर्शनादितरयोरन्यतरदाश्रयणीयमित्याह—**स्त्रीत्वं चेति। उभयथापि युज्यते इति।** ननु प्रत्ययार्थपक्षे द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः, कथम्? एकोऽयमर्थः स्त्रीत्वं नाम, तदेव च प्रकृत्यर्थोपसर्जनं प्रत्ययेनाभिधीयते, तस्यैकत्वादेकवचनमेव प्राप्नोति? अनेकश्च प्रत्ययो नोपपद्यते—

भावबोधिनी

[ अनु० ] स्त्रीत्व प्रत्यय का अर्थ है और प्रकृत्यर्थ में विशेषण बनता है—ये दोनों ही ठीक हैं—'स्त्री अर्थ वाच्य रहने पर अथवा स्त्री अर्थ में जो प्रातिपदिक विद्यमान है।' आगे कहा जायगा—"अजाद्यतष्टाप्" ४।१।४ [ अज आदि प्रातिपदिकों से और अकारान्त प्रातिपदिक से स्त्री अर्थ में टाप् होता है ]—अजा। देवदत्ता। [ अज + टाप् = आ। देवदत्त + टाप् = आ। ] स्त्री अर्थ में – इसके ग्रहण का क्या फल है? अजः। देवदत्तः। [ यहाँ पुंल्लिङ्ग अर्थ प्रतीत होने के कारण टाप् नहीं होता है। ]

**पदिकं वर्तत इति । वक्ष्यति – 'अजाद्यतष्टाप्', ( ४.१.४ ) अजा । देवदत्ता । स्त्रियामिति किम् ? अजः । देवदत्तः ॥**

**न्यासः**

क्षत्रियत्वादीनां हि तथाविध आश्रयो नास्ति यस्तान्यभिव्यञ्जयेत्; सामान्यविशेषाश्रयाणामाशात्माकाशादीनामतीन्द्रियत्वात् । तदाश्रयाणामन्यत्र सादृश्यादुपदेशमात्रादेव तु ब्राह्मणत्वादीनामभिव्यक्तिर्भवति । यथा च तेषां तथा च क्वचित् स्त्रीत्वादीनाम् । किं पुनरिदं स्त्रीत्वम्, प्रत्ययार्थः ? उत प्रातिपदिकविशेषणम् ? इत्याह— **स्त्रीत्वं चेत्यादि** । यदा स्त्रीशब्दो विनापि भावप्रत्ययेन स्त्रीत्वे वर्तते तदा स्त्रियामभिधेयायां टाबादयो भवन्तीति स्त्रीत्वं प्रत्ययार्थो भवति । यथैव हि गोशब्दो जातिपदार्थपक्षे भावप्रत्ययरहितोऽपि गोत्वे वर्तते तथा स्त्रीशब्दोऽपि स्त्रीत्वे । यदा तु स्त्रीत्वं विशेषणमुपादाय तद्वति द्रव्ये स्त्रीशब्दोऽपि वर्तते तदायं पक्षोऽपि भवति – स्त्रियां यत् प्रातिपदिकं वर्तते तस्मात् टाबादय इति स्त्रीत्वं प्रकृतेर्विशेषणं भवति । **उभयथापि युज्यत इति** । कथं पुनरुभयथा युज्यते, यावता स्त्रीत्वस्य प्रत्ययार्थत्वे स्त्रीत्वं प्रधानमापद्यत इति तत्र व्यतिरेकलक्षणा षष्ठी प्राप्नोति, यथा —स्त्रीत्वं देवदत्ताया इति ततश्च कुमारी देवदत्तेति सामानाधिकरण्यं न स्यात् ? द्विवचने बहुवचने च कुमार्यौ कुमार्य इति न स्याताम्, एकत्वात् स्त्रीत्वस्य ? अनेकश्च प्रत्ययो नोपपद्यते – गार्ग्यायणी, कारीषगन्ध्या, कालितरेति; एकत्वात् स्त्रीत्वस्य, तस्य च प्रथमोत्पन्नेनैव ष्फष्यङादिनाभिहितत्वात् ? स्त्रीति च ईकारो न प्राप्नोति; संस्त्याने 'स्त्यायतेर्ड्रट्' इति ड्रट्प्रत्ययान्तेन स्त्रीत्यनेनैव प्रातिपदिकेनोक्तत्वाद् ? नैष दोषः; न हि सामान्यविशेषाणामाश्रयाद् भेदः स्त्रीप्रत्ययान्तेनाभिधीयते, यतो व्यतिरेकलक्षणा षष्ठी स्यात् । कस्मात् पुनर्नाभिधीयते ? शब्दशक्तिस्वाभाव्यात् । द्विवचनबहुवचने अपि चोपपद्येते; यस्मात् सामान्यविशेषाणामेकत्वेऽप्याश्रयसंख्यास्तद्वाचिन उपाददते, शब्दशक्तिस्वाभाव्यादेव । तेनाश्रयस्यानेकत्वात् द्विवचनबहुचने भविष्यतः । गार्ग्यायणीत्येवमादौ द्वाभ्यामेव स्त्रीप्रत्ययाभ्यां स्त्रीत्वं व्यज्यते । नैकेन ष्यङादिनेत्यनेकोऽपि

**पदमञ्जरी**

गार्ग्यायणी, कारीषगन्ध्या, कालितरेति, कथम् ? एकोऽयमर्थः स्त्रीत्वं नाम तस्यैकेनोक्तत्वाद् द्वितीयः प्रत्ययो न प्राप्नोति—उक्तार्थानामप्रयोग इति ? स्त्रीशब्दे चेकारो न प्राप्नोति, संस्त्याने 'स्त्यायतेर्ड्रट्' म० भा० ४-१-३ इति ड्रट्प्रत्ययान्तेन स्त्रीशब्देनोक्तत्वात् संस्त्यानं स्त्रीत्वम् ? सामानाधिकरण्यं च न स्यात्— कुमारी देवदत्तेति, स्वस्वप्रकृत्यर्थावच्छिन्नयोः स्त्रीत्वयोः प्राधान्येनाभिधानात्, तत्र व्यतिरेकनिबन्धा षष्ठी प्राप्नोति, कुतः ? न तावदन्यऽन्यतः, परस्परं गुणगुणिभावाभावात्, नापि स्त्रीप्रत्ययप्रकृतेः, टाबादिभिर्बाधितत्वात् ? यत्र तर्हि प्रतियोगिनि स्त्रीप्रत्ययः प्रतिषिध्यते तत्र षष्ठी प्राप्नोति—पञ्च ब्राह्मण्यः, स्वसाभिरूपेति ? पक्षान्तरे तु द्वयोरपि द्रव्यनिष्ठत्वाद्व्यतिरेकाभावः सामानाधिकरण्यं च भवति, द्रव्यस्य चानेकत्वाद् द्विवचनबहुवचने अपि युक्ते । यथैव च प्रातिपदिकेनोक्तेऽपि स्त्रीत्वे टाबादयो भवन्ति, तथानेकोऽपि प्रत्ययो नानुपपन्नः, तद्द्योतको हि तदा नानाप्रत्ययः, प्रदीपादेश्चानेकस्यापि द्योतकत्वं दृष्टम् । प्रत्ययार्थपक्षेऽपि न दोषः । यद्यपि स्त्रीत्वमात्रे वाच्ये प्रत्ययः क्रियते, तथापि स्त्रीत्वतदाश्रयोरभेदविवक्षया स्वाभाविकत्वाद्वा गुणप्रधानभावस्य द्वयोरपि दृष्टत्वेन सामानाधिकरण्यं वचनभेदश्च भविष्यति । गार्ग्यायणीत्यादौ च द्वाभ्यामेव स्त्रीत्वमभिधातुं शक्यते, नैकेन, स्वभावात् । यद्वा—ष्फस्य षित्करणसामर्थ्यान्ङीष् सिद्धः, ष्यङि 'यङश्चाप्' इति वचनसामर्थ्याच्चाब् भविष्यति । तथा हि—अत्र यङ्ष्यङोः सामान्यग्रहणाय तदविघाताय च ष्यङोनुबन्धद्वयं कृतम्, कालितरेत्यत्रान्यः प्रकर्षयुक्तोऽन्यश्चाप्रकर्षयुक्तः, तत्रावस्थाभेदादेक एवार्थो भिद्यत इति प्रकर्षयुक्तस्यानभिहितं स्त्रीत्वमिति तदभिधानाय टाबपि भविष्यति । स्त्रीशब्देऽपि 'स्त्रियाम्' इत्यस्मादेव निपातनादीकारः सिद्ध इति सुष्ठूक्तम्—उभयथापि युज्यत इति ॥ ३ ॥

## १२५४. अजाद्यतष्टाप् ॥ ४ ॥ ( ४५४ )

**अजादिभ्यः प्रातिपदिकेभ्योऽकारान्ताच्च प्रातिपदिकात् स्त्रियां टाप् प्रत्ययो भवति। पकारः [ स्वर ][1] सामान्यग्रहणार्थः। टकारः सामान्यग्रहणाविघातार्थः। अजा। एडका। कोकिला। चटका। अश्वा। खट्वा। देवदत्ता।**

**न्यासः**

प्रत्ययो युक्त एवं। अथ वा—गार्गायणीत्यत्र 'प्राचां ष्फ तद्धितः' इति विहितस्य ष्फस्य षित्करणसामर्थ्याद् ङीष् प्रत्ययो भविष्यति। **कारीषगन्ध्येति**। ष्यङन्ताद् 'यङश्चाप्' इति वचनसामार्थ्याच्चाब् भविष्यति। **कालितरेति**। जानपदादिसूत्रविहितेन ङीषा स्त्रीत्वमप्रकर्षविशिष्टमुक्तम्, न तु प्रकर्षविशिष्टम्, अतस्तस्यानभिहितत्वात् तरबन्ताद् टाब्भविष्यति। स्त्रीति 'स्त्रियाम्' इति निर्देशाल्लिङ्गात् टित्करणसामर्थ्याद्वा ङीब् भविष्यति। प्रकृत्यर्थविशेषणपक्षे तु प्रातिपदिकेन स्त्रीत्वविशिष्टं द्रव्यमेवोच्यते, टाबादयस्तु द्योतका इति। तत्र व्यतिरेकाभावात् षष्ठ्या अप्रसङ्गादेव द्विवचनबहुवचने अपि। अनेकत्वाद् द्रव्यस्य युक्तेऽनेकोऽपि प्रत्ययो युक्त एव। यथैव हि प्रातिपदिकेनोक्तेऽपि स्त्रीत्वे खट्वेत्यादौ टाबादयो भवन्ति, तथा गार्ग्यायणीत्यादावनेकेऽपि ष्फादयो भवन्ति। अनेनैव स्त्रीत्वस्य द्योतितत्वादिति युक्तमुक्तम्—उभयथापि युज्यत इति ॥ ३ ॥

**अजाद्यतष्टाप्॥ अजाद्यदन्ताच्चेति**। अकारान्तादित्यर्थः। अथ स्वरूपग्रहणं कस्मान्न विज्ञायते? अच्छब्दान्ताच् शरद्, दरदित्येवमादेरिति? लिङ्गात्। किं लिङ्गम्? 'तदाद्याचिख्यासायाम्' 'यक्पूर्वायाः' इत्येवमादिनिर्देशात्। स्वरूपग्रहणे हि ते नोपपद्येरन्। **पकारः सामान्यग्रहणार्थ इति**। 'ङ्याप्प्रातिपदिकात्' इत्यत्रासति हि पकारेऽस्य ग्रहणं न स्यात्। **टकारः सामान्यग्रहणाविघातार्थः**। असति हि टकारे 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' इति टापैकस्यैव ग्रहणं स्यात्, न डाप्चापोः; द्व्यनुबन्धकत्वात्। **शुभंयाः, कीलालपा इति**। 'अन्येभ्योऽपि दृश्यन्ते' इति विच्। किं पुनः स्याद्, यद्यत्रापि टाप् स्यात्? इत्याह— **हल्ङ्याब्भ्य इत्यादि**।

**पदमञ्जरी**

**अजाद्यतष्टाप्॥ अदन्ताच्चेति**। अकारान्तादित्यर्थः। स्वरूपग्रहणं तु न भवति, अच्छब्दान्तात् नीतत् परीतत् कलिङ्गगदित्यादेः स्त्रीलिङ्गादिति, 'तदाद्याचिख्यासायाम्' इत्यादेर्निर्देशात्। **पकारः सामान्यग्रहणार्थ इति**। 'ङ्याप्प्रातिपदिकात्' इत्यादौ। पकारानुरोधस्तु टाब्डापोः स्वरार्थः। **टकारः सामान्यग्रहणाविघातार्थ इति**। अन्यथैकानुबन्धकत्वादस्यैव ग्रहणं स्यात्, न तु डाप्चापोः। **खट्वेति**।

**भावबोधिनी**

**विमर्श**—यहाँ स्त्री का तात्पर्य क्या है? इसका समाधान करते हुये काशिकाकार का यह कहना है कि गोत्व आदि सामान्य हैं क्योंकि सभी गायों में रहते हैं और विजातीय महिषी आदि से व्यावृत्त करते हैं अतः विशेष हैं। इसी प्रकार स्त्रीत्व आदि भी सामान्य और विशेष हैं। व्यज्यन्ते आभिरिति व्यक्तयः = आश्रयाः। बहुप्रकाराः व्यक्तयः = आश्रयाः येषां ते सामान्यविशेषाः।

ये स्त्रीत्व आदि स्वतः नहीं प्रतीत होते हैं। जैसे शरीराकृति समान रहने पर कहा जाता है—'यह ब्राह्मण है, यह क्षत्रिय है' इसी प्रकार स्त्रीत्व, पुंस्त्व और नपुंसकत्व की प्रतीति के लिये भी उपदेश = कथन की आवश्यकता पड़ती हैं। यह लिङ्गज्ञान लोक-व्यवहार के अधीन है। अतः शास्त्रकारों ने जो लिङ्गानुशासन किया है वह प्रायिक ही समझना चाहिये। इस विषय में न्यास और पदमञ्जरी में अतिविस्तृत विवेचन है। अधिक जिज्ञासु को वहीं देखना चाहिये ॥ ३ ॥

अज आदि [ गण में पठित ] प्रातिपदिकों से और अकारान्त प्रातिपदिक से स्त्रीत्व वाच्य रहने पर टाप् प्रत्यय होता है। पकार [ ङ्याप् प्रातिपदिकात् ४।१।१ में ] आप् इस सामान्य के ग्रहण से ग्रहण करने के लिये है। [ केवल आप् का ग्रहण न करके ] टकार अनुबन्ध का ग्रहण सामान्यग्रहण का विघात न हो—इसके लिये है। [ अन्यथा एक

---

१. बन्धनी-चिह्नाङ्कितोऽयं पाठः न न्यासपदमञ्जर्योः दृश्यते।

तपरकरणं तत्कालार्थम्। शुभंयाः ( ऋ० ४.८.६ )। कीलालपाः ( ऋ० १०.९१.१४ ) ब्राह्मणी – 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हलः' ( ६.१.६८ ) इति सुलोपः स्यात्।

अजादिग्रहणं तु क्वचिज्जातिलक्षणे ङीषि प्राप्ते ( ४.१.६३ ) क्वचित्तु पुंयोगलक्षणे ( ४.१.४८ ) क्वचित्तु पुष्पफलोत्तरपदलक्षणे ( ४.१.६४ ), क्वचित्तु वयोलक्षणे ङीपि ( ४.१.२० ) क्वचिट्टिल्लक्षणे ( ४.१.१५ )।

हलन्तानां त्वप्राप्त एव कस्मिंश्चिदाब् विधीयते।

'शूद्रा चामहत्पूर्वा; जातिः' ( म० भा० ४.१.४ वा० १-२ ) इति पठ्यते, तस्यायमर्थः – शूद्रशब्दष्टाप-मुत्पादयति जातिश्चेद्भवति। शूद्रा। पुंयोगे ङीषैव भवितव्यम् – शूद्रस्य भार्या शूद्री। महत्पूर्वस्य प्रतिषेधः –

**न्यासः**

**जातिलक्षणे इति**। 'जातेरस्त्रीविषयादयोपधात्' इति। **पुंयोगलक्षण इति**। 'पुंयोगादाख्यायाम्' इति। **पुष्पफलोत्तरपदलक्षणे इति**। 'पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च' इति। **वयोलक्षण इति**। 'वयसि प्रथमे' इति। **टिल्लक्षण इति**। 'टिड्ढाणञ्' इति।

**शूद्रा चामहत्पूर्वेत्यादि**। ननु च 'आन्महतः' इत्यादिनात्त्वेनात्र भवितव्यम्, अत एवं वक्तव्यम्—अमहापूर्वेति ? नैतदस्ति; अर्थप्रधानस्य हि तदात्त्वमुच्यते, शब्दप्रधानश्चायम्। महच्छब्दः पूर्वो यस्याः सा महत्पूर्वेति। **महत्पूर्वस्य प्रतिषेध इति**। अमहत्पूर्वेत्यस्यार्थमाचष्टे। अत्रापि जातिरिति सम्बध्यते, जातिवचनस्य

**पदमञ्जरी**

कथं पुनरत्राकारान्ता प्रकृतिरवधार्यते, यावता नित्यमेवायमाबन्तः स्त्रियां वर्तते ? शास्त्रात्प्रयोगाच्च। शाकटायनदर्शने हि सर्वेषामेव व्युत्पत्तिः। पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्यादौ स्त्रीप्रत्यये लुप्ते प्रयोग एवाकारान्तत्वं दृश्यते। **शुभंयाः, कीलालपा इति**। 'अन्येभ्योऽपि दृश्यन्ते' इति विच्। कः पुनरत्र टापि सति दोष इत्याह—**हल्ङ्याब्भ्य इति सुलोपः स्यादिति**।

**क्वचिज्जातिलक्षण इति**। गणपाठावसरे विभागं दर्शयिष्यसि।

**हलन्तानां त्वित्यादि**। **अजादिग्रहणमिति**। प्रकृतस्य प्रथमान्तस्यान्वयासम्भवादर्थमजादिग्रहण-मिति शेषः।

**अमहत्पूर्वेति**। महच्छब्दस्यानुकरणत्वाल्लौकिकार्थाभिधायित्वाभावात् 'आन्महतः' इत्यात्त्वं न भवति। **पुंयोगे तु ङीषैवेति**। जातिग्रहणस्य प्रयोजनमाह। ननु पुंयोगे सोऽयमित्यभिसम्बन्धात् परशब्दः परत्र

**भावबोधिनी**

पकार ही अनुबन्ध होने पर केवल इसी का ग्रहण होता। डाप् और चाप् का ग्रहण नहीं हो पाता; क्योंकि एक अनुबन्ध वाले के ग्रहण में दो अनुबन्ध वालों का ग्रहण नहीं होता है। टकार का ग्रहण डाप्, चाप् में ड् और च् के समान हो जाता है। ] उदा०—अजा। [ बकरी। अज+टाप्, ट् की इत्संज्ञालोपः ] एडका [ भेंड़। एडक+टाप् ] कोकिला = कोयल। चटका [ चिड़िया। चटक+टाप् ]। अश्वा [ घोड़ी। अश्व+टाप् ]। खट्वा [ चारपाई ]। देवदत्ता [ इस नामवाली स्त्री ]।

अत् का तपरकरण तत्काल = एकमात्रिक काल का ग्रहण कराने के लिये हैं। शुभंयाः। कीलालपाः ब्राह्मणी—इनमें 'हल्ङ्यादि० ' ६।१।६८ से सुलोप होने लग जाता। [ शुभं याति, कीलालं पिबति—इस विग्रह में "अन्येभ्योऽपि दृश्यते" ३।२।७५ से विच् प्रत्यय और उसका सर्वापहारी लोप होने पर शुभंया, कीलालपा ये आकारान्त शब्दरूप होते हैं। अतः इनमें टाप् नहीं होता है। यद्यपि टाप् करने या न करने पर प्रकृतिरूप में कोई अन्तर नहीं है तथापि विभक्तिरूप में आबन्त मानकर 'हल्ङ्यादि' ६।१।६८ से सुलोप होने लग जाता। इसका वारण करने के लिये ही 'अत्' इस एक-मात्रिक का ग्रहण है। शोभनगमना सुधा पीनेवाली ब्राह्मणी'—अर्थ है। ]

**महाशूद्री ( म० भा० )। महाशूद्रशब्दो ह्याभीरजातिवचनः, तत्र तदन्तविधिना टाप् प्राप्तः प्रतिषिध्यते। 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न' ( व्या० परि० ८९ ) इति कथं तदन्तविधिः ? एतदेव ज्ञापकं भवति— 'अस्मिन् प्रकरणे तदन्तविधिः' इति। तेनातिधीवरी, अतिपीवरी, अतिभवती, अतिमहती—इति भवति।**

**न्यासः**

प्रतिषेधो यथा स्यात्। इह मा भूत्—महती शूद्रा महाशूद्रेति। अत्र ह्युत्तरपदं शूद्रशब्दो जातौ वर्तते, न समुदायो महतीशूद्रारूपः। कथं पुनर्जातिरित्युच्यमाने महत्पूर्वस्य प्राप्तिः, यतः प्रतिषेध उच्यत इत्याह— **महाशूद्रशब्दो ह्याभीरजातिवचन इति**। महाशूद्रशब्द एव हि समुदायो जातौ वर्तते। अत एव महाशूद्रीति 'जातेरस्त्री' इत्यादिना ङीब् भवति। नन्वेवमपि नास्त्येव टापः प्राप्तिः, शूद्रशब्दाद्धि प्रत्यय उत्पद्यमानः कथं महाशूद्रात् प्राप्नोतीत्यत आह—तत्र **तदन्तविधिर्नेत्यादि। कथं तदन्तविधिरिति**। न कथञ्चित्। ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधादिति मन्यते। **अतिधीवरी। अतिपीवरीति**। दधातेः पिबतेश्च 'आतो मनिन्क्वनिब्वनिपश्च' इति क्वनिप्, ईत्वं घुमास्थादिसूत्रेण। धीवानमतिक्रान्ता, पीवानमतिक्रान्तेति 'कुगतिप्रादयः' इति समासः। अत्र तदन्तविधौ ज्ञापिते सति 'वनो र च' इति ङीब्रौ न भवतः। यदि पुनस्तदन्तविधिर्न ज्ञाप्येत तदा 'वनः' इति प्रत्ययग्रहणमेतत्, ततश्च 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य च ग्रहणं

**पदमञ्जरी**

वर्तत इति गौणत्वादेव न भविष्यति ? तस्मात्सुखप्रतिपत्त्यर्थं जातिग्रहणम्। अमहत्पूर्वेत्यस्यार्थमाह— **महत्पूर्वस्येति**। अत्रापि जातिरिति सम्बध्यते, इह प्रतिषेधो मा भूत्—महती शूद्रा महाशूद्रेति, न ह्यत्र महत्पूर्वः समुदायो जातिवचनः। क्व तर्हि प्रतिषेधः ? यत्र समुदायो जातौ वर्तते। तदिदं दर्शितम्— **महाशूद्रशब्दो ह्याभीरजातिवचन इति**। यद्येवम्, समुदाये जातिवचने गौरखरादिवदवयवार्थाभावाद्व्युत्पत्तिमात्रं क्रियते, तत्रावयवार्थस्य स्त्रीत्वस्याविवक्षितत्वात् पुंसि समासे कृते टापः प्रसङ्ग इति ? तत्रामहत्पूर्वेति प्रतिषेधः सार्थकः। ततः किम् ? अमहत्पूर्वेत्यत्र जातिरिति न सम्बन्धनीयम्। कथं महती शूद्रा महाशूद्रेत्यान्तरङ्गत्वाट्टापि कृते पश्चात्सुप्, सुबन्तस्य समास, ततश्चाभिनिर्वृत्तत्वाट्टापः प्रतिषेधस्याप्रसङ्गः ?

**भावबोधिनी**

अजादि [ गण ] का ग्रहण तो—कहीं पर जातिलक्षण [ "जातेरस्त्रीविषयादयोपधात्" ४।१।६३ ] ङीप् प्राप्त रहने पर, कहीं [ 'पुंयोगादाख्यायाम्" ४।१।४८ से ] पुंयोगलक्षण ङीप् प्राप्त रहने पर, कहीं [ 'पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च" ४।१।६४ से ] पुष्प और फल को उत्तरपद मानकर प्राप्त होने वाले ङीप् की प्राप्ति रहने पर; कहीं [ वयसि प्रथमे' ४।१।२० से ] वयोलक्षण = अवस्था को मानकर ङीप् प्राप्त रहने पर और कहीं [ "टिड्ढाणञ्" ४।३।१५ से ] टित् मानकर ङीप् प्राप्त रहने पर—[ टाप् का विधान किया गया है ]।

हलन्त शब्दों को तो किसी की प्राप्ति न रहने पर आप् [ टाप् ] का विधान किया जा रहा है।

'शूद्रा चामहत्पूर्वा जातिः' ( गणसूत्र ) यह वचन पढ़ा गया है, इसका यह अर्थ है—जाति यदि होती है तो शूद्र शब्द टाप् का उत्पादन = विधान करता है। उदा०—शूद्रा [ शूद्र जाति ]। पुंयोग में ङीष् ही होना चाहिये—शूद्रस्य पुरुषस्य भार्या शूद्री [ शूद्र की स्त्री ]। महत्पूर्वक शूद्र के टाप् का प्रतिषेध है—महाशूद्री। महाशूद्र शब्द आभीरजाति = अहीरजाति का वाचक है, इसमें तदन्तविधि मानकर टाप् प्राप्त होता है, उसका निषेध कर दिया जाता है। 'जिस प्रातिपदिक का ग्रहण किया गया है उससे तदन्तविधि नहीं होती है।' [अतः शूद्र शब्द को मानकर होने वाला टाप् महाशूद्र से नहीं हो सकता है ]। अतः यहाँ तदन्तविधि कैसे होगी ? यही [ महाशूद्र से टाप् का निषेध करना ही [ ज्ञापक होता है कि—'इस प्रकरण में तदन्तविधि होती है'। इसीलिये—अतिधीवरी, अतिपीवरी। [ धीवानम् अतिक्रान्ता—इस विग्रह में अतिधीवन् शब्द से 'वनो र च' ४।१।७ से ङीप् = ई प्रत्यय और रेफान्त आदेश करने पर रूप सिद्ध होता है। धीवा = धारक या पोषक का अतिक्रमण करने वाली स्त्री। इसी प्रकार पीवानम् अतिक्रान्ता—इस विग्रह में अतिपीवन् शब्द से

**अजा, एडका, चटका, अश्वा, मूषिकेति जातिः। बाला, होढा, पाका, वत्सा, मन्दा, विलातेति वयः। पूर्वापहाणा[1], अपरापहाणा[1]। टित्, निपातनाण्णत्वम्। 'संभस्त्राजिनशणपिण्डेभ्यः फलात्' ( ग० सू० ३७ )। संफला, भस्त्रफला। अजिनफला। शणफला। पिण्डफला। 'त्रिफला[2]-द्विगौ' ( ग० सू० ३८ )। बहुव्रीहौ – त्रिफली संहतिः[2]। 'सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात्' ( ग० सू० ३९ )। सत्पुष्पा। प्राक्पुष्पा। काण्डपुष्पा।**

**न्यासः**

भवति' इति वचनादिहैव स्याताम्-धीवरी, पीवरीति; अतिधीवरी, अतिपीवरीत्यत्र तु न स्याताम्। **अतिभवती। अतिमहतीति**। भवतुशब्दः केवल उगित् सर्वादिषु पठ्यते, महदिति गौरादौ, तत्रासत्यस्मिञ् ज्ञापके केवलाभ्यामेव भवन्महच्छब्दाभ्यामुगिद्गोरादिलक्षणौ ङीब्ङीषौ स्याताम्। अतिभवती, अतिमहतीत्यत्र तु न स्याताम्, ज्ञापके तु सति भवतः। यद्येवम्, पञ्चानामजानां समाहारः पञ्चाजीति द्विगोरपि तदन्तविधिना टाप्

**पदमञ्जरी**

सत्यम्, विस्पष्टार्थमेवात्रापि जातिरिति सम्बध्यते। ननु च शूद्रशब्दः पठ्यते, कः प्रसङ्गो यन्महाशूद्रशब्दात्स्यात्? अत आह--**तदन्तविधिर्नेति**। **अतिधीवरी, अतिपीवरीति**। दधातेः पिबतेश्च 'आतो मनिन्क्वनिब्वनिपश्च' इति क्वनिपि कृते घुमास्थादिसूत्रेणेत्वम्, धीवानमतिक्रान्ता पीवानमतिक्रान्तेति प्रादिसमासः, अत्र 'वनो र च' इति ङीब्रौ भवतः। असति तु ज्ञापने वन इति प्रत्ययग्रहणम्। अथापि कृद्ग्रहणम्? सर्वथातिक्रान्तप्रधाने समासे न स्यात्। **अतिभवती, अतिमहतीति**। 'उगितश्च' इत्यत्रोगिदित्युगित्प्रातिपदिकस्यैव ग्रहणमित्यङ्गीकृत्येदं प्रयोजनं दर्शितम्। तत्र तु वक्ष्यति--'उगिदिति प्रातिपदिकाप्रातिपदिकग्रहणम्, तेन ग्रहणवता प्रातिपदिकेनेति निषेधाभावात्तदन्तविधिः' इति। यदाह--'उगिद्यस्य सम्भवति यथाकथञ्चिदिति तदन्तात्प्रातिपदिकात्' इति च।

अतिमहतीत्यत्र शतृवद्भावादौणादिकादुगिल्लक्षणो ङीप्। केचिद्गौरादिपाठाद् ङीषं वर्णयन्ति, तदयुक्तम्, अनुपसर्जनाधिकारात्। किञ्च, गौरादिपाठस्य प्रयोजनमपि न पश्यामः। ननु च महतीशब्दोऽन्तोदात्त इष्यते, सत्यम्, 'शतुरनुमः' इत्यत्र नद्यजाद्युदात्तत्वे 'बृहन्महतोरुपसंख्यानम्' इत्यनेनैव सिद्धम्। विभक्त्युदात्तार्थं तदिति चेत्? तदेव ङीबुदात्तार्थमपि भविष्यति। अतिमहतीत्यादौ च ङीषभावस्योक्तत्वान्

**भावबोधिनी**

ङीप् और रेफान्त आदेश होता है। ] अतिभवती, अतिमहती—यह होता है। [ भवन्तम् अधिक्रान्ता, महन्तम् अधिक्रान्ता—इस विग्रह में तदन्तविधि मानकर "उगितश्च" ४।१।६ से ङीप् = ई होता है। आपका अतिक्रमण करने वाली, महान् का अतिक्रमण करने वाली। ]

अजा, एडका, चटका, अश्वा और मूषिका ये जातिवाची हैं। बाला, वत्सा, होढा [ सिद्धान्तकौमुदी के अनुसार—होडा—], मन्दा, विलाता ये अवस्थावाचक हैं [ इनके अर्थ का स्पष्ट उल्लेख नहीं मिलता है। सम्भवतः ये तीनों कौमार्यवाची हैं। इसीलिये भट्टोजिदीक्षित ने लिखा है—"एषु 'वयसि प्रथमे' ( ४।१।२० ) इति ङीप् प्राप्तः।" ] पूर्वापहाणा, अपरापहाणा। [ ल्युट् होने से ] टित् है, निपातन से णत्व होता है। [ यहाँ टित् होने से ङीप् प्राप्त रहने पर टाप् होता है। इनके अर्थ चिन्तनीय हैं। ] सम्फला। [ समृद्धानि फलानि यस्याः सा—यह विग्रह है। यह एक औषधि जातिविशेष का वाचक है। ] भस्त्रफला। [ भस्त्रा इव फलं यस्याः सा। भस्त्रा = पानी भरने के लिये चमड़े का बना पात्रविशेष—मशक ] अजिनफला। [ अजिन = चर्मविकार, अजिनम् इव फलं यस्याः सा ] शणफला। [ शणस्य फलमिव फलं यस्याः सा, शण = पटसन जिससे रस्सी आदि बनाते हैं। ] पिण्डफला। [ पिण्डमिव फलं यस्याः सा, कड़वी लौकी ] त्रिफला। [ त्रयाणां फलानां समाहारः ] द्विगु होने पर [ङीप् प्राप्त रहता है उसका अपवाद यह टाप् है। आँवला हर्रा और बहेरा—

---

१-१. 'पूर्वापहरणा, अपरापहरणा' इत्येव शुद्धः पाठः। 'पूर्वापहाणा, अपरापहाणा' इति मुद्रितः पाठोऽसाधुः। द्र० मोनियरविलियम-संस्कृत-आंग्ल-भाषा-शब्दकोशः।

२-२. क्वचिदयं पाठो नास्ति।

**प्रान्तपुष्पा । शतपुष्पा । एकपुष्पा । 'पाककर्ण' ( ४.१.६४ ) इति ङीषोऽपवादः । 'शूद्रा चामहत्पूर्वा जातिः' ( ग० सू० ४० ) । क्रुञ्चा, उष्णिहा, देवविशा—हलन्ताः । ज्येष्ठा, कनिष्ठा, मध्यमा—पुंयोगः । कोकिला जातिः । 'मूलान्नञः' ( ग० सू० ४१ ) । अमूला ॥**

**न्यासः**

प्राप्नोति ? नैष दोषः; अजादिभिः स्त्रियामिति विशेषयिष्यामः, 'अजाद्यतः' इति हि षष्ठी, तत्रैवमभिसम्बन्धः कर्तव्यः—अजादीनां या स्त्री, अजादिशब्दानां वाच्येऽर्थे यत् स्त्रीत्वं समवायसम्बन्धेन वर्तमानम्, तत्र टाबिति । न च पञ्चाजीत्यत्राजाशब्दस्यार्थे वाच्ये स्त्रीत्वं समवेतम्, किं तर्हि ? समाहारे वाच्ये ।

**पूर्वापहाणा । अपरापहाणा । टिदिति ।** ल्युडन्तत्वात् ।

**प्राक्पुष्पेति ।** प्राञ्चन्तीति प्राञ्चि, 'ऋत्विग्दधृक्' इत्यादिना क्विन् । प्राञ्चि पुष्पाणि यस्याः सा प्राक्पुष्पा ॥ ४ ॥

**पदमञ्जरी**

ङीबुदात्तार्थमप्युपसंख्यानमेष्टव्यम्, यदि तदन्तविधिर्ज्ञाप्यते, पञ्चनामजानां समाहारः पञ्चाजी—द्विगोरपि टाप् प्राप्नोति ? अत्राहुः—'अजाद्यतः' इति षष्ठी अजादीनामजन्तानां च या स्त्री तद्वाच्येऽर्थे यत् स्त्रीत्वं समवेतं तत्र टाबिति, प्रत्यासत्त्या च स्त्रीत्वविशेषोपलक्षणानामेव प्रकृतित्वं विज्ञायते इति मत्वा **वृत्तिकारेणोक्तम्**—'अजादिभ्यः प्रातिपदिकेभ्योऽदन्ताच्च' इति । न च पञ्चाजीत्यत्राजार्थे समवेतं स्त्रीत्वम्, किं तर्हि ? समाहारे ।

एवं चामहत्पूर्वेति प्रतिषेधः शक्योऽकर्तुम्, न हि महाशूद्रीत्यत्र शूद्रार्थगतं स्त्रीत्वम् । तदन्तविधिस्तु 'अनुपसर्जनात्' इत्यत्र ज्ञापयिष्यते । **सत्प्राक्काण्डेति ।** पाककर्णेत्यत्र वार्तिकम्—'सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात् प्रतिषेधः' इति, तत्रैव भाष्यम्—'प्राक्पुष्पा च प्रत्यक्पुष्पा च' इति । तस्मादत्रापि प्राक्शब्दो न पठनीयः, सदच्काण्डेत्येव पठनीयम् ॥ ४ ॥

**भावबोधिनी**

इन तीनों को त्रिफला कहा जाता है । ] किन्तु बहुव्रीहि में—त्रिफली संहतिः [ त्रीणि फलानि यस्याः सा—इस विग्रह में ङीप् ही होता है । ] 'सत्, प्राक्, काण्ड, प्रान्त, शत और एक—इनसे परे पुष्प से टाप् होता है ।' उदा०—सत्पुष्पा [ सन्ति = साधूनि विद्यमानानि वा पुष्पाणि यस्याः सा—यह विग्रह है । ] प्राक्पुष्पा । [ प्राञ्चि = पूर्वकालिकानि पुष्पाणि यस्याः सा ] काण्डपुष्पा । [ काण्डे पुष्पाणि यस्याः सा ] । प्रान्तपुष्पा । [ प्रान्ते पुष्पाणि यस्याः सा ] शतपुष्पा । [ शतानि पुष्पाणि यस्याः सा ] एकपुष्पा । [ एकं पुष्पं यस्याः सा ] इन में "पाककर्णपर्णपुष्पफलमूलबालोत्तरपदाच्च" ४·१·६४ इससे प्राप्त होने वाले ङीप् का अपवाद यह है । 'महत्पूर्वक न होने पर शूद्रा शब्द से टाप् होता है जातिवाच्य रहने पर ।' [इसके विषय में पहले लिखा जा चुका है । ] क्रुञ्चा, उष्णिहा, देवविशा ये हलन्त [ के उदाहरण हैं—क्रुञ्च् + टाप्, उष्णिह् + टाप्, देवविश् + टाप् । भाष्यकार ने 'क्रुञ्चानालभेत, उष्णिहककुभौ, देवविशम्' ऐसे प्रयोग किये हैं अतः ये शब्द अदन्त भी हैं । इनके अर्थ—क्रौञ्च या हंस पक्षी का आलम्भन करना चाहिए उष्णिक् और ककुभ ( उष्णिक ) छन्दों के नाम हैं, देवताओं की प्रजा—यह है । ] ज्येष्ठा, कनिष्ठा और मध्यमा—पुंयोग में भी ये ही रूप होते हैं । कोकिला—जाति अर्थ में [ भी ] होता है । 'नञ् से परे मूल शब्द से टाप् होता है ।' अमूला [ मूल = जड़ से रहित ।

**विमर्श**—काशिकाकार ने 'सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात्' ऐसा वार्तिक लिखा है । सिद्धान्तकौमुदीकार ने 'सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्' ऐसा लिखा है "पाककर्णपर्णपुष्प०" ४।१।६४ सूत्र पर भाष्य में 'सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात् प्रतिषेधः' ऐसा वार्तिक है । अतः 'काशिकाकार द्वारा 'प्राक्' का उल्लेख प्रामादिक है अच्वूत्तर पद से परे पुष्पवाले सभी को लेना है । इसीलिये—प्रत्यक्पुष्पा आदि भी उदाहरण हैं ।

भाष्यकार ने 'शूद्रा चामहत्पूर्वा' इतना पहला वार्तिक और 'जातिः' यह दूसरा वार्तिक लिखा है । परन्तु उत्तरवर्ती व्याख्याग्रन्थों में दोनों को मिलाकर एक वार्तिक बना दिया गया है ॥ ४ ॥

**१२५५. ऋन्नेभ्यो ङीप् ॥ ५ ॥ ( ३०६ )**

**ऋकारान्तेभ्यो नकारान्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीप् प्रत्ययो भवति । ङकारः सामान्यग्रहणार्थः । कर्त्री । हर्त्री । दण्डिनी । छत्रिणी ॥**

**१२५६. उगितश्च ॥ ६ ॥ ( ४५५ )**

**उग् इद् यत्र संभवति यथाकथञ्चित् तदुगिच्छब्दरूपम्, तदन्तात् स्त्रियां ङीप् प्रत्ययो भवति । भवती ।**

न्यासः

**ऋन्नेभ्यो ङीप्** ॥ **ङकारः सामान्यग्रहणार्थ इति** । असति हि तस्मिन् 'ङ्याप्प्रातिपदिकात्' इत्यत्र ङीति ङीन्ङीषोरेव ग्रहणं स्यात्, न ङीपः ॥ ५ ॥

**उगितश्च** ॥ **यथा कथञ्चिदिति** । येन केनचित् प्रकारेण । यदि वर्णं उगित् सम्भवति यदि प्रत्ययः, अथापि प्रातिपदिकम्, सर्वथा यत्रैषामन्यतमः सम्भवति तद् **उगिच्छब्दरूपमिति** । अनेनोगिच्छब्दरूपस्य विशेषणं न प्रातिपदिकस्येति दर्शयति । यदि प्रातिपदिकस्यैव विशेषणं स्यादिहैव स्याद्—भवती, महतीति; अर्वतीत्यत्र तु न स्यात्, 'अर्वणस्त्रसावनञः' इति नकारस्य त्रादेशः कृत इति वर्ण एव तकार उगित्, न प्रातिपदिकम्; गोमतीत्यत्र च न स्यात्, अत्रापि हि मतुप् प्रत्यय एवोगित्, न प्रातिपदिकम्; तस्मादुगिच्छब्दरूपस्यैव विशेषणं युक्तमित्यभिप्रायः । तच्चोगिच्छब्दरूपं प्रातिपदिकस्य विशेषणम्, विशेषणेन च तदन्तविधिर्भवतीत्याह—तदन्तादित्यादि । यदि तर्ह्युगिच्छब्दरूपान्तात् प्रातिपदिकाद् ङीब् भवत्येवं सति भवतीति न सिध्यति, न ह्यत्रोगिच्छब्दरूपान्तं प्रातिपदिकं भवति, भवच्छब्दान्तादुगितः प्रातिपदिकादन्यस्य तदन्तस्याभावात् ?

पदमञ्जरी

**ऋन्नेभ्यो ङीप्** ॥ **ङकारः सामान्यग्रहणार्थ इति** । 'ङ्याप्प्रातिपदिकात्' इत्यादौ ।

'पकारः सामान्यग्रहणाविघातार्थः' इति तु पूर्वानुसारेण गम्यमानत्वान्नोक्तम्, अत्रापि पकारानुरोधोऽनुदात्तार्थः ॥ ५ ॥

**उगितश्च** ॥ **यथाकथञ्चिदिति** । यदि वर्ण उगित् संभवति, यदि वा प्रत्ययः, अथापि प्रातिपदिकम्—सर्वथा यत्रैषामन्यतमः प्रकारः संभवतीत्येष यथाकथञ्चिदित्यस्यार्थः । एतदेव स्पष्टयति—**तदुगिच्छब्दरूपमिति** । प्रत्ययाप्रत्यययोः प्रातिपदिकाप्रातिपदिकयोः शब्दरूपमन्यपदार्थः, न प्रातिपदिकमेव, नापि प्रत्यय एवेत्यर्थः । तत्रोगिता प्रातिपदिकस्य विशेषणात्तदन्तविधिर्भवतीत्याह—**तदन्तादिति** । **पचन्तीति** । अत्र शतृप्रत्यय उगित् तदन्तं प्रातिपदिकम्—अतिभवती अतिमहतीत्यत्रापि भवति । 'ग्रहणवता प्रातिपदिकेन' इत्ययं तु प्रतिषेधो

भावबोधिनी

ऋकारान्त और नकारान्त प्रातिपदिकों से स्त्रीलिङ्ग में ङीप् प्रत्यय होता है । ङकार [ "ङ्याप्प्रातिपदिकात्" ४।१।१ में ङी इस] सामान्य के ग्रहण के लिये है । [ ङ् न रहने पर उस सूत्र में ङीप् और ङीन् का ही ग्रहण हो पाता । ] उदा०—कर्त्री । [ करनेवाली । कर्तृ + ङीप् = ई, ऋ का यण् ] हर्त्री । [ हरण करनेवाली । हर्तृ + ङीप् = ई, ऋ का यण् ] । दण्डिनी । [ दण्डवाली । दण्डिन् + ङीप् = ई ] । छत्रिणी । [ छत्रवाली । छत्रिन् + ङीप् = ई ] ॥ ५ ॥

जिसमें किसी भी प्रकार उक् [ उ, ऋ, लृ ] इत् सम्भव रहता है वह 'उगित्' शब्द रूप है, उस उगिदन्त शब्द से स्त्रीलिङ्ग में ङीप् प्रत्यय होता है । उदा०—भवती [ सर्वादिगण में भवतु यह शब्द पठित है । इसके उकार की इत्संज्ञा करने पर उगित् हो जाने से भवत् + ङीप् = ई भवती शब्द बनता है । आप—यह अर्थ है । ] अतिभवती । [ आपका अतिक्रमण करनेवाली । भवन्तम् अतिक्रान्ता—अतिभवत् + ङीप् । ] पचन्ती । [ पकानेवाली । पच् + शतृ, शप् = अ, नुम् = न् में ऋकार = उक् की इत्संज्ञा होने से उगित् है । अतः पचन्त् + ङीप् = ई ] यजन्ती [ याग करनेवाली । यज् + शतृ = अत्, शप्, नुम्—यजन्त् + ङीप् ] ।

**अतिभवती । पचन्ती । यजन्ती । ※ धातोरुगितः प्रतिषेधो वक्तव्यः ※ ( म० भा० ४.१.६ वा० १ ) उखास्रत् । पर्णध्वत् ब्राह्मणी । ※ अञ्चतेश्चोपसंख्यानम् ※ ( वा० २ ) प्राची । प्रतीची । उदीची ॥**

**न्यासः**

**नैष दोषः**; व्यपदेशिवद्भावात् तदन्ताद् भविष्यति । ननु च 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति व्यपदेशिवद्भावेन नात्र भवितव्यम् ? नैतदस्ति; न ह्युगिदिति प्रातिपदिकग्रहणम्. किं तर्हि ? प्रातिपदिकाप्रातिपदिकग्रहणम्; वर्णप्रत्यययोरप्युगितोर्ग्रहणात् । **पचन्ती यजन्तीति** । शत्रन्ताद् ङीप् । ※ **धातोरुगितः प्रतिषेध** इति । प्रतिपाद्यत इति शेषः ।

**अञ्चतेश्चोपसंख्यानमिति** । अञ्चतेर्ङीप्प्रत्ययस्य प्रतिपादनं कर्तव्यमित्यर्थः । तत्रेदमुभयत्र प्रतिपादनम्—'पादोऽन्यतरस्याम्' इति सूत्रे 'अन्यतरस्याम्' इति योगविभागः करिष्यते, स च 'उगितश्च' 'वनो र च' 'पादोऽन्यतरस्याम्' इत्येतेषां त्रयाणामपि योगानां शेषः । व्यवस्थितविभाषा च सा । तेन प्रातिपदिकादुगिच्छब्दरूपान्ताद् धातूगिच्छब्दान्तादञ्चतेरेव नित्यं ङीब् भवति, ततोऽन्येभ्यस्तु न भवत्येवेति ।

अन्ये त्वन्यथा प्रतिपादनं कुर्वन्ति—उखास्रत्, पर्णध्वदिति । क्रियाकारकसम्बन्धमात्रं विवक्षितम्, न स्त्रीत्वमिति ङीब् न भवति । स्त्रीशब्दसामानाधिकरण्यात्तु स्त्रीत्वप्रतीतिरापद्यते । न च 'स्त्रियाम्' इत्यत्र स्त्रीसामानाधिकरण्यपक्षः स्थितः । प्राचीत्यादिषु तु स्त्रीत्वं विवक्षितम्, तेनेह भवतीकार इति । **उखास्रत्, पर्णध्वदिति** । उखेन स्रंसते, पर्णानि ध्वंसत इति 'अन्येभ्योऽपि दृश्यन्ते' इति क्विप्, 'अन्येषामपि दृश्यते' इत्युखस्य दीर्घत्वम् । प्राचीति प्रपूर्वादञ्चतेः क्विन्, 'अचः' इत्यकारलोपः, 'चौ' इत्युपसर्गस्य दीर्घत्वम् ॥ ६ ॥

**पदमञ्जरी**

यत्र सूत्रोपात्तं प्रातिपदिकस्यासाधारणं रूपं तत्रैव भवतीत्यत्रापि व्यपदेशिवद्भावेन भवति । 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इत्ययं तु निषेधः प्रातिपदिकस्यैवासाधारणरूपग्रहणे अतिगोमतीत्यत्रापि भवति । प्रत्ययग्रहणपरिभाषा तु प्रत्ययस्यैवासाधारणरूपग्रहणे भवति ।

**धातोस्तूगितः प्रतिषेध इति** । वक्तव्य इति शेषः । स तर्हि वक्तव्यः ? न वक्तव्यः, 'उगिदचाम्' इत्यत्रोगित्त्वादेव सिद्धेऽञ्चतिग्रहणं नियमार्थम्—इह शास्त्रे उगितो यत्कार्यं विधीयते तद्धातोर्यदि भवति अञ्चतेरेवेति कार्यमात्रं नियम्यते, न नुमागम एव । अधातुग्रहणं चाधातुपूर्वस्यापि नुमर्थमिति तत्रैव वक्ष्यते ।

अपर आह—'उगितश्च' इति योऽयं चशब्दः सोऽञ्चतेर्लुप्तनकारस्याकरणम्, विभक्तेश्च 'सुपां सुलुक्' इति लुक्, भाविनं चाकारलोपमाश्रित्य चेति निर्देशः कृतः, ततश्चाञ्चतिग्रहणं नियमार्थम्—"अकारनकारलोपयोश्चातन्त्रत्वात् 'नाञ्चेः पूजायाम्' इति लोपनिषेधविषयेऽपि ङीब् भवति, प्राञ्ची प्रत्यञ्ची ब्राह्मणी" इति । **उखास्रत्, पर्णध्वदिति** । 'क्विप् च' इत्यत्रानयोर्व्युत्पत्तिः कृता ॥ ६ ॥

**भावबोधिनी**

'उगित् धातु का प्रतिषेध कहना चाहिये ।' उखास्रत् [ छींके से गिरनेवाली । उखायाः स्रंसते — इस विग्रह में क्विप् प्रत्यय और उसका सर्वापहारी लोप करने पर उखास्रस् बनता है । यहाँ स्रंसु इस धातु के उकार की इत्संज्ञा होती है । अतः ङीप् का प्रतिषेध हो जाता है । 'वसुस्रंसुध्वंस्वनडुहां दः' । ८।२।७२ से स् का द् और चर्त्व करने पर त् होता है । ] पर्णध्वत् ब्राह्मणी । पर्ण = पत्ते से गिरनेवाली ब्राह्मणी । यहाँ भी ध्वंसु धातु के उकार की इत्संज्ञा होने के कारण ङीप् नहीं होता है । शेष प्रक्रिया पूर्ववत् है ।

'परन्तु अञ्चु धातु से ङीप् कहना चाहिये' । प्राची [ पूर्व दिशा । प्र + अञ्चु + क्विप् = प्राच् + ङीप् ] प्रतीची [ पश्चिम दिशा । प्रति + अञ्चु + क्विप् = प्रतीच् + ङीप् ] । उदीची [ उत्तर दिशा । उद् + अञ्चु + क्विप् = उदीच् + ङीप् । ] ॥ ६ ॥

## १२५७. वनो र च ॥ ७ ॥ ( ४५६ )

**वन्नन्तात् प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति, रेफश्चान्तादेशः। धीवरी। पीवरी। शर्वरी। परलोकदृश्वरी।**

**'ऋन्नेभ्यः' इत्येव ङीपि सिद्धे तत्सन्नियोगेन रेफविधानार्थं वचनम्। ❀ वनो न हशः ❀। प्राप्तौ ङीब्रावुभावपि प्रतिषिद्ध्येते। सहयुध्वा ब्राह्मणी॥**

### न्यासः

**वनो र च ॥** 'वनः' इति क्वनिब्वनिपोः प्रत्यययोर्ग्रहणम्। अथ 'वन षण सम्भक्तौ' 'वनु याचने' इत्याभ्याम् 'अन्येभ्योऽपि दृश्यन्ते' इति विचि कृते यद्रूपं वन्निति निष्पद्यते तत् कस्मान्न गृह्यते, यदि ताभ्यां विज् दृश्येत, स तु न दृश्यते; अनभिधानात्। **शर्वरीति**। 'शॄ हिंसायाम्', 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप्, गुणः, रपरत्वम्। **परलोकदृश्वरीति**। दृशेस्तेनैव सूत्रेण[1] क्वनिप्।

**वनो न हश इति**। क्वचिदिति शेषः। हशः परो यो वनिब् हशन्ताद् धातोर्विहितस्तदन्तात् प्रातिपदिकात् क्वचिद् ङीब्रेफश्चान्तादेशो न भवति। **सहयुध्वेति**। 'युध संप्रहारे', 'दृशेः क्वनिप्', 'राजनि युधिकृञः', 'सहे च' इति क्वनिप्, 'नोपधायाः' 'सर्वनामस्थाने' इति दीर्घः, 'नलोपः प्रातिपदिकान्तस्य'। क्वचित् तु प्रतिषेधो न भवत्येव—शर्वरीति, अत्र रेफाद्धशः परो वनिप्; अवावरीति, अत्रापि दृशन्ताद् धातोर्वनिब् विहितः, तथापि प्रतिषेधो न भवति। 'ओणृ अपनयने', अन्येभ्योऽपि दृश्यन्ते' इति वनिप्, 'विड्वनोरनुनासिकस्यात्' इत्यात्वम्, अवादेशः। न च वनो न हश इत्येव वक्तव्यं कर्तव्यम्; यस्मात् 'पादोऽन्यतरस्याम्' इत्यन्यतरस्यांग्रहणमस्यापियोगस्य शेषः। सा च व्यवस्थितविभाषा विज्ञायते। तेन यत्र ङीब्रेफौ नेष्येते तत्र न भविष्यतः॥ ७॥

### पदमञ्जरी

**वनो र च ॥** 'वनः' इति क्वनिब्वनिब्ङ्वनिपां प्रत्ययानां सामान्येन ग्रहणम्, न 'वन षण संभक्तौ', 'वनु याचने' इति धात्वोर्विजन्तयोः, कुतः? 'प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्' इति। अत एव शुनो निष्क्रान्ता युवानमतिक्रान्ता निःशुनी अतियूनीत्यत्रापि न भवति, अनर्थकत्वाद्वा। **शर्वरीति**। 'शॄ हिंसायाम्', 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप्। **परलोकदृश्वरीति**। 'दृशेः क्वनिप्'।

**वनो न हश इति**। विहितविशेषणं हश्ग्रहणम्, हशन्ताद्धातोर्यो वन्विहितस्तदन्तात्प्रातिपदिकान् ङीब्रौ न भवत इत्यर्थः, तेन शर्वरीत्यत्र प्रतिषेधाभावः। तथा 'ओणृ अपनयने' वनिपि 'विड्वनोरनुनासिकस्यात्' इत्यात्वे अवादेशे अवावन्नित्यत्र संप्रति हशः परत्वाभावेऽपि हशन्ताद् विहितत्वात् प्रतिषेधो भवत्येव--अवावा ब्राह्मणोति। एष एव स्थितः सिद्धान्तः।

बहुलं छन्दसि ङीब्रौ वक्तव्यौ--यज्वरीरिषः। प्रईरिशवोस्तुट् च--प्रेत्वरी॥ ७॥

### भावबोधिनी

वन्प्रत्ययान्त प्रातिपदिक से स्त्रीलिङ्ग में ङीप् प्रत्यय होता है और अन्त का रेफ आदेश होता है। उदा०--धीवरी। [ धारण, पोषण या ध्यान करनेवाली। धा + क्वनिप् = धा + वन्, "घुमास्थागापाजहातिसां हलि" ६।४।६६ आ का ईत्व--धीवन् + ङीप्, न् का रेफ आदेश ] पीवरी। [ पान या रक्षण करनेवाली। पा+क्वनिप् = पा + वन्—ईत्व, पीवन् + ङीप् = ई, रेफान्त आदेश ] शर्वरी। [ रात्रि, हरिद्रा। शॄ+वनिप् = शॄ+वन्, गुण, रपर शर्वन् + ङीप् = शर्वरी। ] परलोकदृश्वरी। [ परलोक देखनेवाली। परलोकदृश्वन् + ङीप् = ई, रेफान्त आदेश ]।

[ उक्त उदाहरण नकारान्त प्रतिपादिकों के हैं अतः ] 'ऋन्नेभ्यो ङीप्' ४।१।५ इसीसे ङीप् के सिद्ध रहने पर उस ङीप् के सन्नियोग से रेफ का विधान करने के लिये प्रस्तुत सूत्र है। [ अभिप्राय यह है कि वन् = क्वनिप्, ङ्वनिप् और

---

१. 'दृशेः क्वनिप्' इति ( ३-२-९४ ) सूत्रेणेत्यर्थः।

**१२५८. पादोऽन्यतरस्याम् ॥ ८ ॥ ( ४५७ )**

**'पादः' इति कृतसमासान्तः पादशब्दो निर्दिश्यते । पादन्तात् प्रातिपदिकादन्यतरस्यां स्त्रियां ङीप् प्रत्ययो भवति । द्विपात्, द्विपदी । त्रिपात्, त्रिपदी । चतुष्पाद्, चतुष्पदी ॥**

**१२५९. टाबृचि ॥ ९ ॥ ( ४५८ )**

**'पादः' इत्येव । 'ऋचि' इत्यभिधेयनिर्देशः । ऋचि वाच्यायां पादन्तात् प्रातिपदिकात् स्त्रियां टाप् प्रत्ययो भवति । ङीपोऽपवादः । द्विपदा ऋक् । त्रिपदा ऋक् । चतुष्पदा ऋक् ।**

**ऋचीति किम् ? द्विपदी देवदत्ता ॥**

**न्यासः**

**पादोऽन्यतरस्याम्** ॥ पाद इति कृतसमासान्तः पादशब्दो निर्दिश्यत इति । अथ 'पद गतौ' इत्यस्माण्ण्यन्ताद् 'अन्येभ्योऽपि दृश्यते' इति क्विपि कृते यत् पादिति रूपं निष्पद्यते तस्य ग्रहणं कस्मान्न विज्ञायते ? विज्ञायते यदि पादयतेः क्विब् दृश्येत, स तु न दृश्यते; अनभिधानात् । **द्विपाद्, द्विपदीति** । द्वौ पादावस्य इति बहुव्रीहिः । 'पादस्य लोपः' इत्यनुवर्तमाने 'संख्यासुपूर्वस्य' इत्यकारलोपः, 'पादः पत्' इति पद्भावः ॥ ८ ॥

**टाबृचि** ॥ **ऋचीत्यभिधेयनिर्देश इति** । विषयनिर्देशाशङ्कां निराकरोति । यदि हि विषयनिर्देशः स्यात्, तत ऋचि विषय ऋग्ग्रन्थे यः पाच्छब्दस्तदन्तात् प्रातिपदिकाट्टाब् भविष्यतीत्येषोऽर्थः स्यात्, तथा च ऋग्वेद एव स्यात्, नान्यत्र । अभिधेयनिर्देशे तु सर्वत्र भवतीति भावः ॥ ९ ॥

**पदमञ्जरी**

**पादोऽन्यतरस्याम्** ॥ **पाद इति कृतसमासान्तः पादशब्दो निर्दिश्यत इति** । उत्तरसूत्रे ऋच्यभिधेयायां तस्यैव सम्भवात्, तेन पादयते क्विबन्तस्य ग्रहणं न भवति । **द्विपदीति** । द्वौ पादावस्य इति 'बहुव्रीहौ संख्यासुपूर्वस्य' इत्यकारलोपे 'पादः पत्' इति पद्भावः ॥ ८ ॥

**टाबृचि** ॥ **ऋचीत्यभिधेयनिर्देश इति** । व्याप्तेः । विषयनिर्देशे हि ऋग्वेदविषय एव प्रयोगे स्यात्, नान्यत्र ॥ ९ ॥

**भावबोधिनी**

वनिप् प्रत्ययान्त प्रातिपदिक से दोनों कार्य—ङीप् और रेफान्त आदेश —करने के लिये ही यह सूत्र था । 'ऋन्नेभ्यो ङीप्' नकारान्त सामान्य से केवल ङीप का विधान करता है । ]

'[ हश् प्रत्याहार का कोई वर्ण जिस धातु के अन्त में है ऐसी ] हशन्त धातु से विहित जो वन् प्रत्यय, तदन्त प्रातिपदिक से ङीप् और रेफ अन्तादेश दोनों नहीं होते हैं ।' प्राप्त होने वाले ङीप् और रेफ आदेश—इन दोनों का प्रतिषेध होता है । उदा०—सहयुध्वा ब्राह्मणी । [ साथ युद्ध करानेवाली । सह योधितवती—इस विग्रह में "सहे च" ३।२।९६ से क्वनिप् = वन् प्रत्यय होने पर सहयुध्वन् यहाँ हशन्त धातु से वन् प्रत्यय होने के कारण ङीप् और रेफ आदेश दोनों का प्रतिषेध हो जाता है । सु विभक्ति परे रहते उपधादीर्घ, सुलोप और नलोप होकर रूप बनता है ॥ ७ ॥

'पादः' यह कृत समासान्त अर्थात् बहुव्रीहि में अन्त्यलोप किये गये पाद शब्द का निर्देश है । पाद शब्द जिसके अन्त में ऐसे प्रातिपदिक से स्त्रीलिङ्ग में विकल्प से प्रत्यय होता है । उदा० – द्विपात्, द्विपदी [ दो पादों वाली । द्वौ पादौ अस्याः—इस बहुव्रीहि में "संख्यासुपूर्वस्य" ५।४।१४० से अ का लोप, और वैकल्पिक ङीप् करने पर भसंज्ञा में "पादः पत्" ६।४।१३० से पाद का पद आदेश—द्विपद् + ई = द्विपदी । ङीप् के अभाव में भसंज्ञा न होने से पाद् का पद् आदेश नहीं होता है । ] त्रिपात्, त्रिपदी । [ त्रयः पादाः अस्याः । तीन पादों वाली ] प्रक्रिया पूर्ववत् ही है । ] चतुष्पाद्, चतुष्पदी [ चत्वारः पादः अस्याः सा—चार पादों वाली । प्रक्रिया पूर्ववत् ही है ] ॥ ८ ॥

'पादः' इसकी अनुवृत्ति होती है । 'ऋचा में' यह अर्थ का निर्देश है । ऋचा अर्थ वाच्य रहने पर पाद शब्दान्त प्रातिपदिक से स्त्रीलिङ्ग में टाप् प्रत्यय होता है । यह ङीप् का अपवाद है । उदा०—द्विपदा ऋक् । [ द्वौ पादौ अस्याः ऋचः—इस विग्रह में बहुव्रीहि में "सख्यासुपूर्वस्य" ५।४।१४० से अ का लोप करने पर टाप् = आ प्रत्यय होता है ।

## १२६०. न षट्स्वस्रादिभ्यः ॥ १० ॥ ( ३०८ )

**षट्संज्ञकेभ्यः ( १.१.२४ ) स्वस्रादिभ्यश्च प्रातिपदिकेभ्यः स्त्रीप्रत्ययो न भवति। यो यतः प्राप्नोति स सर्वः प्रतिषिद्ध्यते। पञ्च ब्राह्मण्यः। सप्त। नव। दश।**

**न्यासः**

**न षट्स्वस्रादिभ्यः ॥ यो यतः प्राप्नोति स सर्वः प्रतिषिध्यत इति।** ङीपोऽनन्तरत्वात् तस्यैवायं प्रतिषेध इत्याशङ्काया निरासार्थमिदमुक्तम्। ननु चात्र 'टाबृचि' इति टाबेवानन्तरः, तत् कुतो ङीपोऽनन्तरत्वम्? अस्वरितत्वात्। अस्य टापो ङीप एवानन्तर्यं युक्तम्। ननु च षट्संज्ञाः संख्याशब्दाः, संख्याश्च भेदमात्रं द्रव्यस्य प्रत्याययन्ति, न स्त्रीत्वम्, या तु तस्य स्त्रीत्वप्रतीतिः, सा शब्दान्तरेण सामानाधिकरण्याद् भवति, न च स्त्रीसमानाधिकरणपक्षः 'स्त्रियाम्' इति सूत्रे स्थितः, तथा च तेभ्यः स्त्रीप्रत्ययस्य प्राप्तिरेव नास्तीत्यपार्थकः प्रतिषेधः? नैतदस्ति; संख्या हि गुणः, 'संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ' इति वैशेषिकाणां (१.१.६) गुणसूत्रे पाठात्। गुणवचनानां चाश्रयतो लिङ्गवचनानि भवन्ति, यथा—शुक्ला शाटी, शुक्लः कम्बलः, शुक्लं वस्त्रम्; शुक्लः, शुक्लौ, शुक्ला इति। तथा सति प्रतिषेधे यथा शुक्लादिशब्देभ्यः स्त्रीप्रत्ययो भवति तथा षट्संज्ञकेभ्योऽपीति स्याद्, यथा—पञ्च ब्राह्मण्य इति। 'षड्भ्यो लुक्' इति जसो लुक्। **स्वसेति** 'अनङ् सौ', पूर्ववत् 'नोपधायाः' इति दीर्घः। तिसृचतसृशब्दावपि स्वस्रादिषु पठ्यते, तयोः किमर्थः पाठः, यावता विभक्तौ परतः 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति तिसृचतसृभ्यां भवितव्यम्, तत्र यदि तावृकारान्तलक्षणं ङीपं प्रति

**पदमञ्जरी**

**न षट्स्वस्रादिभ्यः ॥** 'टाबृचि' इति पादन्ताद्विहितस्य टापोऽत्राप्रसङ्गात्तदनन्तरस्य ङीपोऽयं प्रतिषेध इत्याशङ्कामपनयति—**यो यत इति।** तत्र सर्वेभ्य एव ङीप्प्राप्नोति, टाप्तु नलोपे सत्यकारान्ततायामुपजातायां षड्भ्य एव। **यो यः प्राप्त** इति तु युक्तः पाठः,[1] अन्यथा स ततो न भवतीति वाच्यं स्यात्, व्याप्तिश्च न गम्येत। **पञ्च ब्राह्मण्य इति।** ननु चात्र ब्राह्मणीशब्दसामानाधिकरण्यात् स्त्रीत्वावगतिः, संख्याशब्दस्तु स्वमहिम्ना भेदगणनमाह। तथा हि—पञ्चेत्युक्ते नानात्वमात्रं द्रव्यस्य गम्यते, न लिङ्गविशेषः; तथा च लिङ्गानुशासनेषु 'ष्णान्ता संख्या' इत्यलिङ्गत्वमुक्तम्। यद्येवम्, एका, द्वे, बह्व्य इत्यत्रापि प्रत्ययो न स्यात्? संख्याशब्दत्वेन भेदगणनामात्रस्य शब्दार्थत्वात्। अथ तत्र स्त्रीत्वमपि शब्दार्थः? पञ्चादिष्वपि स्यात्। वक्तव्यो वा विशेषः—सति तस्मिन् प्रतिषेधे नान्तरेणानुप्रयोगं पञ्चेत्यादौ स्त्रीत्वाद्यभिव्यक्तिरिति लिङ्गानुशासनेष्वलिङ्गत्वमुक्तम्; असति तु प्रतिषेधे पञ्चादिभ्यः स्त्रीप्रत्ययो न भवति, एकादिभ्यस्तु भवतीति न

**भावबोधिनी**

भसंज्ञा के कारण पाद का पद् आदेश करने पर—द्विपदा ऋक् = दो पादों वाली ऋचा ] त्रि दा ऋक्। चतुष्पदा ऋक्। [ तीन पादों वाली ऋचा। चार पादोंवाली ऋचा। प्रक्रिया पूर्ववत् ही है। ] ऋचा अर्थ वाच्य रहने पर—इसके ग्रहण का क्या लाभ है? द्विपदी देवदत्ता। [ दो पैरों वाली देवदत्ता। यहाँ ऋचा अर्थ न होने के कारण टाप् न होकर पूर्ववर्त्ती सूत्र से ङीप् और पाद का पद् आदेश होता है ] ॥ ९ ॥

[ षकारन्त और नकारान्त संख्यावाची ] षट्संज्ञक शब्दों से और स्वसृ आदि प्रातिपदिकों से स्त्री प्रत्यय [ ङीप् या टाप् आदि ] नहीं होता है। जिससे जो [ ङीप् या टाप् ] प्राप्त होता है उस सभी का प्रतिषेध हो जाता है। उदा०—पञ्च ब्राह्मण्यः [ यहाँ पञ्चन् यह "ष्णान्ता षट्" १।१।२४ से षट्संज्ञक है। नकारान्त होने से "ऋन्नेभ्यो ङीप्" ४।१।५ से ङीप् प्राप्त होता है। प्रस्तुत सूत्र से निषेध हो जाता है। इसी प्रकार आगे के सभी संख्यावाचकों से समझना चाहिये। ] सप्त। नव। दश।

---

१. पदमञ्जरीसम्मतोऽयं पाठः चिन्त्यः।

**स्वस्रादिभ्यः - स्वसा । दुहिता । ननान्दा । याता । माता । तिस्र । चतस्रः ।**

**षट्संज्ञानामन्ते लुप्ते टाबुत्पत्तिः कस्मान्न स्यात् ?**

**न्यासः**

निमित्तभावं प्रतिपद्येयातां विभक्तेरानन्तर्यं ताभ्यां विहन्येत, एतच्च 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इत्युक्तम्, तस्मात् सन्निपातलक्षणपरिभाषयैव ङीब् न भविष्यतीति किं प्रतिषेधेन ? एवं तर्ह्येतज्ज्ञापयति— अनित्येषा परिभाषेति । तेन या, सेति सिद्धं भवति । अत्रापि हि विभक्तौ त्यदाद्यत्वमित्यकारष्टापो निमित्तं न स्यात्, टापि हि सति विभक्तेरानन्तर्यं विहन्यते । परिभाषायास्त्वनित्यत्वेनैव टाब् भवति ।

**षट्संज्ञानामित्यादि** । पञ्च ब्राह्मण्य इत्यादौ 'अनन्तरस्य' विधिर्भवति प्रतिषेधो वा' इति ङीपोऽनन्तरस्य प्रतिषेधे कृते 'नलोपः प्रातिपदिकान्तस्य' इति नकारे लुप्ते सत्यकारान्ततायामुपजातायां टाबुत्पत्तिः कस्मान्न-स्यात् ? स्यादेव, निमित्तस्य सन्निधानात् । नलोपस्यासिद्धत्वान्न स्यादिति चेत् ? नैतदस्ति; 'नलोपः सुप्स्वर-संज्ञातुग्विधिषु कृति' इति परिगणितेष्वेव विधिषु नलोपस्यासिद्धत्वमुच्यते । न च टाब्विधिस्तत्र परिगण्यते, तत् कुतस्तत्र नलोपस्यासिद्धत्वम् ? टाब्विधिरपि तत्र परिगण्यत एवेति दर्शयन्नाह—**प्रत्याहारादित्यादि** । चाबिति चाप्सम्बन्धिनं पकारमुपलक्षयति, तदेतदुक्तं भवति—सुबिति । तत्र न सप्तमीबहुवचनसम्बन्धिना सुपः पकारेण प्रत्याहारो गृह्यते, किं तर्हि ? 'यङश्चाप्' इति चाप्सम्बन्धिना । तस्माट् टापो विधिरपि सुब्विधिरेव; टापोऽपि

**पदमञ्जरी**

शास्त्रैकशरणः प्रतिपत्तुमर्हति । ननु विभक्तौ परतः 'त्रिचतुरोः स्त्रियाम्' तिसृचतसृभावः, तत्र संनिपात-परिभाषयैव ङीबभावः सिद्धः, तत्किं तिसृचतसृशब्दयोः स्वस्रादिपाठेन ? ज्ञापनार्थं तु । एतज्ज्ञापयति—अनित्या संनिपातपरिभाषेति, तेन त्यदाद्यत्वे कृते टाब् भवति—या, सा, इमे, द्वे इति ।

ङीपोऽनन्तरस्यायं प्रतिषेधो युक्त इत्याश्रित्य चोदयति—**षट्संज्ञानामिति । कस्मान्न स्यादिति** । अत इति हि प्राप्नोति, असिद्धो नलोपः, तस्यासिद्धत्वान्नैतददन्तम् । परिगणितेषु कार्येषु नलोपोऽसिद्धो भवति, 'नलोपः सुप्स्वर' इत्यस्य नियमार्थत्वात् । नेदं तत्र परिगण्यते ? इदमपि तत्र परिगण्यते, कथम् ? सुबिति न सप्तमीबहुवचनेन प्रत्याहारः, किं तर्हि ? यङश्चाबिति चापः पकारेण ततश्च टापोऽपि प्रत्याहारेऽन्त-र्भावात्तद्विधिरपि सुब्विधिरेवेति । तदेतदाह—**प्रत्याहाराच्चापेति** । न स्यादित्यनुषङ्गः, कस्मान्न स्यादिति प्रश्नः । चापा प्रत्याहारान्न स्यादिति परिहारः । इदं चाचार्यदेशीयस्य वचनम् ।

**भावबोधिनी**

स्वसा [ बहिन ] । दुहिता [ कन्या ] । ननान्दा [ ननद ] । याता [ भाइयों की पत्नियाँ परस्पर याता—देवरानी जेठानी आदि ] । माता । [ माँ ] । तिस्रः [ तीन स्त्रियाँ ] । चतस्रः [ चार स्त्रियाँ ] ।

**विमर्श**—निम्न सात को स्वसा आदि कहा जाता है—

स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा । याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥

इनमें पाँच स्वतः ऋकारान्त हैं । त्रि और चतुर् को 'त्रिचतुरोः स्त्रियां तिसृ-चतसृ' ७।२।९९ से तिसृ और चतसृ आदेश हो जाने से ऋकारान्त हो जाते हैं । अतः इनसे 'ऋन्नेभ्यो ङीप्' ४।१।५ से ङीप् प्राप्त है, उसका निषेध इस सूत्र से होता है । पदमञ्जरीकार ने 'यो यः प्राप्तः' यह पाठ अधिक तर्कसंगत माना है । परन्तु 'यो यतः प्राप्नोति' यह मूल पाठ भी ठीक ही है क्योंकि जिससे जो ङीप् या टाप् प्राप्त होता है उस-उस का निषेध हो जाता है ।

[ अनु० ] [ ङीप् का प्रतिषेध हो जाने पर ] षट्संज्ञक पञ्चन् आदि के अन्तिम = न् का लोप हो जाने पर [ अकारान्त मान कर 'अजाद्यतष्टाप्' ४।१।४ से ] टाप् प्रत्यय की उत्पत्ति = विधान क्यों नहीं होता है ? [ नलोप असिद्ध हो जायगा—ऐसा नहीं कहा जा सकता क्योंकि "न लोपः सुप्-स्वर-संज्ञातुग्-विधिषु" ८।२।२ इस सूत्र में सुप् यह प्रत्यय नहीं है अपितु सु से लेकर "आङि चापः" ७।३।१०५ के पकार तक सुप् प्रत्याहार माना गया है । अतः टाप्

**प्रत्याहाराच्चापा सिद्धं, दोषस्त्वित्त्वे, तस्मान्नोभौ** ॥ ( म० भा० ४.१.१० )

## १२६१. मनः ॥ ११ ॥ ( ४५९ )

न्यासः

प्रत्याहारान्तर्भावात्। ततश्च टाब्विधावपि नलोपस्यासिद्धत्वेन भवितव्यमिति सिद्धं सर्वमिष्टम्। **सिध्यत्येव, दोषस्त्वित्त्वे इति**। बहूनि चर्माण्यस्यां नगर्यामिति बहुव्रीहिः। 'शेषाद्विभाषा' इति कप्, टाप्, नलोपः। अत्रेदानीम् 'प्रत्ययस्थात् कात्' इत्यनेनेत्त्वमिष्यते बहुचर्मिकेति यथा स्यात्, तच्च न प्राप्नोति, न ह्यत्र कात् पूर्वोऽकारः; नलोपस्यासिद्धत्वात्। तत्र हि राजभ्यामित्यत्र 'सुपि च' इति दीर्घत्वं मा भूदिति नलोपस्यासिद्धत्वार्थं सर्वविभक्त्यन्तः समास आश्रितः—सुपो विधिः सुब्विधिः, सुपि वा विधिः सुब्विधिरिति; यदि च टाबपि सुप् स्यात्, ततस्तत्रापि परत्रावस्थित इत्त्वमुच्यत इति तदपि सुब्विधिः स्यात्—सुपि विधिरिति कृत्वा। ततस्तस्मिन्नपि कर्तव्ये नलोपस्यासिद्धत्वं स्यात्, तदयुक्तश्चापा प्रत्याहारः। **तस्मान्नोभाविति**। यस्मादेवं चापा सह प्रत्याहारे दोषस्तस्मादुभावपि टाब्ङीपौ न भवत इति प्रतिषिद्धौ। कथमिह हि स्त्रियामित्यर्थोनऽपेक्ष्यते ? अस्मिन्नर्थे यदुक्तं तन्न भवतीति स्त्र्यर्थे चोभौ ङीष्टापावुक्तावित्युभावपि भवतः॥ १०॥

मनः॥ **दामा, पामेति**। ददातेः पिबतेश्च 'आतो मनिन्क्वनिब्वनिपश्च' इति मनिन्, पूर्ववत् 'नोपधायाः' दीर्घः। अथ सीमा, सीमानौ, सीमानः, अतिमहिमा, अतिमहिमानौ, अतिमहिमान इत्यत्र कथं प्रतिषेधः, यावता

पदमञ्जरी

आचार्यसिद्धान्तं दर्शयितुमेतद् दूषयति--**सिद्धं दोषस्त्वित्त्व इति**। सत्यं सिद्धमिदं चापा प्रत्याहारे, इत्त्वे तु दोषो भवति--बहूनि चर्माण्यस्याः बहुचर्मिकेति, कथम्? तत्र सुब्विधिरिति सर्वविभक्त्यन्तावयवः समास आश्रितः—सुपो विधिः, सुपि विधिरिति; ततश्च यथा राजभ्यामित्यत्र 'सुपि च' इति दीर्घत्वं न भवति, तथा टापि सुपि विधीयमानमित्त्वमपि सुब्विधिरिति तत्र कर्तव्ये नलोपस्यासिद्धत्वात् कात् पूर्वोऽकारो न भवतीतीत्वं न स्यादित्यर्थः। सिद्धान्तमाह--**तस्मान्नोभाविति**। 'स्त्रियाम्' इत्यर्थमात्रमपेक्ष्य तत्र यदुक्तं तन्न भवति, इत्येवं ङीष्टापावुभावपि प्रतिषेध्यावित्यर्थः। ननु च सकृत्प्रतिषेधस्य प्रवृत्तिः, स च स्वप्रवृत्तिसमये यस्य प्रसङ्गस्तमेव प्रतिषेधति, ततश्च पूर्वं ङीपि प्रतिषिद्धे नलोपे च कृते पश्चात्प्राप्नुवतष्टापः कथं प्रतिषेधः? आत्माश्रयो हि स्यात्--स्वप्रवृत्तिमपेक्ष्य स्वप्रवृत्तिरिति। तस्मात्तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणेन द्विरस्य प्रवृत्तिः, तत्र द्वितीयया प्रवृत्त्या टापः प्रतिषेधः॥ १०॥

मनः॥ **अनिनस्मन्ग्रहणानीति**। अन्, इन्, अस्, मन्—इत्येतेषां ग्रहणे अर्थवत्परिभाषा न व्याप्रियते

भावबोधिनी

विधि भी सुप्विधि हो जाती है.। इसमें नलोप असिद्ध हो जाने से अदन्तत्व नहीं मिलने से टाप् नहीं प्राप्त होता है—यही कहते हैं— ] चाप्पर्यन्त सुप् प्रत्याहार मानने से इष्ट सिद्ध हो जाता है। [ सुप् को चाप् तक प्रत्याहार मानने पर बहुचर्मिका –बहूनि चर्माणि यस्याः सा—इस बहुव्रीहि में बहुचर्मक बनाने के बाद टाप् कर लेने पर "प्रत्ययस्थात् कात् पूर्वस्यात" ७।३।४४ से इत्व करने के प्रसंग में सुपिविधिः--सुप्विधि होने से नलोप असिद्ध हो जायगा। फलतः क से पूर्व अकार नहीं मिल सकेगा, इत्व नहीं हो सकेगा--यही लिखते हैं--] परन्तु इत्व करने में दोष होगा। इस कारण [ स्त्रियाम् = स्त्री अर्थ में प्राप्त होने वाले ] दोनों = ङीप् और टाप् नहीं होते हैं।" ॥ १०॥

मन्नन्त प्रातिपदिक से ङीप् प्रत्यय नहीं होता है। [ नकारान्त मानकर ] "ऋन्नेभ्यो ङीप्" ४।१।५ से ङीप् प्राप्त होता है, 'मनः' इस प्रस्तुत सूत्र से निषेध हो जाता है। उदा०—दामा [ डोरी ]। नकारान्त मान कर प्राप्त ङीप् का निषेध हो जाने पर विभक्ति-सम्बन्धी कार्य करने पर दामा रूप होता है।] दामानौ। दामानः। [ द्वि० व० और

मन्नन्तात् प्रातिपदिकात् ङीप् प्रत्ययो न भवति। 'ऋन्नेभ्यो ङीप्' ( ४.१.५ ) इति ङीप् प्राप्तः 'मनः' इति सूत्रेण प्रतिषिद्ध्यते। दामा, दामानौ, दामानः। पामा, पामानौ, पामानः। 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ( व्या० परि० १२९ ) सीमा, सीमानौ, सीमानः। अतिमहिमा, अतिमहिमानौ, अतिमहिमानः॥

**१२६२. अनो बहुव्रीहेः॥ १२॥ ( ४६० )**

अन्नन्ताद् बहुव्रीहेः स्त्रियां ङीप् प्रत्ययो न भवति। अनुपधालोपी बहुव्रीहिरिहोदाहरणम्। उपधालोपिनो हि विकल्पं वक्ष्यति। सुपर्वा, सुपर्वाणौ, सुपर्वाणः। सुचर्मा, सुचर्माणौ, सुचर्माणः[1]।

**न्यासः**

मन इत्यर्थवतो मन एतद्ग्रहणम्; न च यथा दामा पामेत्यत्र मनः प्रत्ययार्थेनार्थवत्त्वं तथा सीमेत्येवमादौ न केनचिदर्थेनार्थवत्त्वम्, तथा हि सीमाशब्दस्तावदव्युत्पन्नं प्रातिपदिकम्, तस्यैव चार्थवत्त्वम्, न तदवयवभूतस्य मनः; अतिमहिमेत्यत्रापि नैव मनोऽर्थवत्त्वम्, तथा हि—'महतो भावः' इत्यर्थविवक्षायां 'पृथ्वादिभ्य इमनिच्' इति महच्छब्दादिमनिज् विहितः, तत्र चेमनिच एवार्थवत्त्वम्, न तदेकदेशस्य मन इत्यत आह—**अनिनस्मन्ग्रहणानीत्यादि**। एतद्वाक्यं पठता वाक्यकारेण अन्, इन्, अस्, मन्—इत्येतेषां ग्रहणेऽर्थवद्ग्रहणपरिभाषा न व्याप्रियते। तेनैषामनर्थकानामपि ग्रहणं भवति, एभिश्चानर्थकैः सार्थकैश्च तदन्तविधिर्भवतीत्युक्तं भवति, ततश्च सीमाऽतिमहिमेत्यादावपि प्रतिषेधः सिद्धो भवति॥ ११॥

**अनो बहुव्रीहेः॥ अनुपधालोपी बहुव्रीहिरिहोदाहरणमिति**। कथं पुनरेतल्लभ्यते, यावता नात्र विशेष उपात्त इत्याह—**उपधालोपिनो हीत्यादि**। यस्माद् 'अन उपधालोपिनोऽन्यतरस्याम्' इत्युपधालोपिनो विकल्पं वक्ष्यति; तस्मात् पारिशेष्यादनुपधालोपी बहुव्रीहिरस्यावकाश इति। तस्य चोदाहरणम्—**सुपर्वेत्यादि**। शोभनमस्याः पर्व शोभनं चर्मास्या इति बहुव्रीहिः। अयञ्च 'न संयोगाद्वमन्तात्' इत्यल्लोपी न भवति।

**पदमञ्जरी**

तेनैषामनर्थकानामपि ग्रहणं भवति। एभिश्चार्थवद्भिरनर्थकैश्च तदन्तविधिर्भवतीत्यर्थः। सीमन्शब्दोऽव्युत्पन्नं प्रातिपदिकम्। अतिक्रान्ता महिमानमतिमहिमा; अत्रापीमनिच एवार्थवत्त्वम्, न तु मनः॥ ११॥

**अनो बहुव्रीहेः॥ अनुपधालोपी बहुव्रीहिरिहोदाहरणमिति**। कुत एतत्? इत्याह—**उपधालोपिनो हीत्यादि, विभाषां वक्ष्यतीति**। 'अन उपधालोपिनोऽन्यतरस्याम्' इत्यनेन। **सुपर्वेत्यादि**। शोभनं पर्वास्याः, शोभनं चर्मास्या इति बहुव्रीहिः। अयं च 'न संयोगाद्वमन्तात्' इत्यल्लोपस्य प्रतिषेधादनुपधालोपी।

**भावबोधिनी**

ब० व० के रूप है। ] पामा [ पामन् से भी प्राप्त ङीप् का निषेध हो जाता है। प्रक्रिया पूर्ववत् है। ] पामानौ। पामानः [ द्वि० व० और ब० व० के रूप हैं। 'खुजली' अर्थ है ]

अन्, इन्, अस् और मन् का जिनमें ग्रहण है वे अर्थवान् और अनर्थक दोनों से तदन्तविधि कराते हैं।' सीमा [ सीमन् शब्द अव्युत्पन्न प्रातिपदिक है, मन् प्रत्ययान्त नहीं है। अतः इसका मन् अनर्थक है। तो भी उक्त नियम से इसे मन्नन्त मानकर ङीप् का निषेध हो जाता है। विभक्तिसम्बन्धी कार्य करने पर एकवचन में सीमा रूप होता है। ] सीमानौ। सीमानः। [ द्विवचन और बहुवचन के रूप हैं। ] अतिमहिमा [ यहाँ महतो भावः—इस अर्थ में महत् शब्द से इमनिच् प्रत्यय करने पर महिमन् बनता है। यहाँ इमनिच् प्रत्यय अर्थवान् है, केवल 'मन्' नहीं, तो भी, तदन्तविधि होने से ङीप् का निषेध हो जाता है ] अतिमहिमानौ। अतिमहिमानः। [ द्वि० व० और ब० व० के रूप हैं। ]॥ ११॥

अन्नन्त बहुव्रीहि से स्त्रीलिङ्ग में ङीप् प्रत्यय नहीं होता है। जिसकी उपधा का लोप नहीं हुआ है, ऐसा बहुव्रीहि इस सूत्र का उदाहरण बनता है, क्योंकि उपधालोप वाले बहुव्रीहि का तो विकल्प आगे कहा जायगा। उदा०—सुपर्वा

१. 'सुशर्मा, सुशर्माणौ, सुशर्माणः' इति वा पाठः। किन्तु नाऽयं न्यासपदमञ्जरीसम्मतः।

बहुव्रीहेरिति किम् ? अतिक्रान्ता राजानमतिराजी ॥

## १२६३. डाबुभाभ्यामन्यतरस्याम् ॥ १३ ॥ ( ४६१ )

न्यासः

**अतिराजीति** । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति 'कुगतिप्रादयः' इति तत्पुरुषोऽयम् ॥ १२ ॥

**डाबुभाभ्यामन्यतरस्याम्** ॥ इहान्यतरस्यांग्रहणस्य डापा मुक्ते पक्षे प्रतिषेधोऽपि यथा स्यादित्येतद्वा प्रयोजनं स्यात् ? डाप्प्रतिषेधाभ्यां मुक्ते पक्षे ङीबपि यथा स्यादित्येतद्वा ? तत्राद्यं तावदयुक्तम्; डाबपि ह्युच्यते, प्रतिषेधोऽपि, तावुभावपि वचनसामर्थ्याद् भविष्यतः । द्वितीयमप्ययुक्तम्; अन्यतरस्यांग्रहणेन ह्यनुपधालोपिनो वा बहुव्रीहेः पक्षे ङीब् विधीयते ? उपधालोपिनो वा ? तत्र प्रथमस्तावत् पक्षो नोपपद्यते, यदि ह्यत्रानुपधालोपिनः पक्षे ङीब् विधीयेत प्रतिषेधवचनमनर्थकं स्यात्; द्वितीयोऽपि नोपपद्यते,

पदमञ्जरी

**बहुव्रीहेरिति किमिति** । समासादिति वाच्यमिति भावः ।

**अतिराज्ञीति** । 'राजाहःसखिभ्यः' इति टज् न भवति; समासान्तविधेरनित्यत्वात् ॥ १२ ॥

**डाबुभाभ्यामन्यतरस्याम्** ॥ **अन्तरस्यांग्रहणं किमिति** । डापा मुक्ते प्रतिषेधो यथा स्यादित्येवमर्थं तावदेतन्न कर्तव्यम्, कथम् ? डाब्रप्युच्यते, प्रतिषेधोऽपि तावुभौ वचनाद्भविष्यतः । यदि हि नकारान्तस्य श्रवणं न स्यात्, तदा डापैवापवादेन ङीपो बाधात् प्रतिषेधोऽनर्थकः स्यात् । अथ डाप्प्रतिषेधाभ्यां मुक्ते ङीबपि यथा स्यादित्येवमर्थमन्यतरस्यांग्रहणम् ? तदपि न; बहुराज्ञीत्यादौ 'अन उपधालोपिनोऽन्यतरस्याम्' इत्यनेनैव ङीपः सिद्धत्वात् । यत्र तर्हि तेन न सिध्यति—अतिशर्मेत्यादौ, तदर्थमेतत् स्यात् ? यद्येवम्, अनेनैवोपधालोपि-

भावबोधिनी

[ शोभनं पर्वं अस्या—इस विग्रह में बहुव्रीहि समास करने पर सुपर्वन् यह वन्नन्त प्रातिपदिक है, नान्त मानकर प्राप्त होने वाले ङीप् का निषेध हो जाता है । सुपर्वन्+सु, उपधादीर्घ आदि विभक्ति-सम्बन्धी कार्य होने पर एकवचन में सुपर्वा रूप सिद्ध होता है । जिसके अंगुलियों के जोड़ अच्छे हैं ऐसी स्त्री । ] सुपर्वाणो । सुपर्वाणः । [ द्वि० व० और ब० व० ] । सुचर्मा [ शोभनं चर्म अस्याः सा इस बहुव्रीहि में ङीप् निषेध होने पर एकवचन में यह रूप बना है । सुन्दर चमड़े वाली अर्थात् गोरी स्त्री ] सुचर्माणो । सुचर्माणः [ द्वि० व० और ब० व० ] ।

बहुव्रीहि से—इसका क्या फल है ? राजानम् अतिक्रान्ता अतिराजो । [ राजा का अतिक्रमण करने वाली । यहाँ तत्पुरुष-समास है । अतः ङीप् का निषेध नहीं होता है ।

विमर्श—बहुव्रीहि-ग्रहण के प्रत्युदाहरण के रूप में राजानम् अतिक्रान्ता—इससे 'अतिराज्ञी' यह रूप पदमञ्जरीकार मानते हैं । इनके अनुसार 'समासान्त विधि अनित्य होती है अतः "राजाहःसखिभ्यष्टच्" ५।४।६१ से टच् नहीं होता है । ङीप् होने पर भसंज्ञा मानकर उपधालोप और श्चुत्व आदि करने पर राज्ञी बनता है, परन्तु न्यासकार 'अतिराजी' यह रूप मानते हैं । इनके अनुसार टच् प्रत्यय करने पर टिलोप होने पर अतिराज+ङीप् में अलोप होता है ॥ १२ ॥

मन्नन्त प्रातिपदिक से और अन्नन्त बहुव्रीहि—इन दोनों से डाप् प्रत्यय विकल्प से होता है । उदा०—पामा, पामे [ पामन्+डाप्=आ, डित् होने से टि=अन् का लोप पाम्+आ=पामा । द्वि० व० में पामा+औ=शीङ्=ई, गुण—पामे ] पामाः [ पामन्+डाप्=आ, शेष पूर्ववत्, पामा+जस्=अस्, स् का रुत्व विसर्ग ] सीमा । सीमे [ सीमन्+डाप्=आ, टि=अन् लोप, सीमा+औ, शेष कार्य पूर्ववत् ] सीमाः । [ सीमन्=डाप्=आ,—टि लोप, सीमा+जस्, शेष पूर्ववत् । ] वैकल्पिक होने से डाप् नहीं भी होता है—पामानः [ पामन् से डाप् नहीं होने पर पामन् ] जस्=अस्, स् का रुत्वविसर्ग ] सीमानः । [ सीमन् डाप्निषेध, जस् का रूप, प्रक्रिया पूर्ववत् ] ।

**डाप् प्रत्ययो भवति उभाभ्याम्-मन्नन्तात् प्रातिपदिकादन्नन्ताच्च बहुव्रीहेरन्यतरस्याम्। पामा, पामे, पामाः। सीमा, सीमे, सीमाः। न च भवति - पामानः। सीमानः।**

**बहुव्रीहौ - बहुराजा, बहुराजे, बहुराजाः। बहुतक्षा, बहुतक्षे, बहुतक्षाः। न च भवति - बहुराजानः।**

**न्यासः**

'अन उपधालोपिनोऽन्यतरस्याम्' प्रति प्रतिपदं विकल्पेन ङीपो विधास्यमानत्वात्। न च तदन्यतरस्यांग्रहणं न करिष्याम इतीहान्यतरस्यांग्रहणं कर्तुं युक्तम्? तद्ध्यवश्यमेव कर्तव्यम्, उपधालोपिनो हि ङीपा मुक्ते डाप्प्रतिषेधौ यथा स्याताम्—बहुराज्ञ्यौ, बहुराजानौ, बहुराजे इति। इतरथा हि डाप्प्रतिषेधौ सुपर्वादिष्वनुपधालोपिषु सावकाशौ परत्वाद् ङीपा बाध्येयाताम्। तस्माद् वक्ष्यमाणमप्यन्यतरस्यांग्रहणं कर्तव्यमेवेति तत् सर्वं मनसि कृत्वाऽऽह—**अन्यतरस्यांग्रहणं किमर्थमिति**। निरर्थकमिति भावः। **बहुव्रीहावित्यादि**। 'वनो र च' इत्यनेन यत् कार्यं विधीयते तस्यापि बहुव्रीहौ विकल्पो यथा स्यादित्येवमर्थमन्यतरस्यांग्रहणम्। यद् यद् प्राप्तं तत् तद् विकल्पेन प्रत्युपस्थापयितव्यम्। ङीब्रेफावप्राप्तौ, 'अनो बहुव्रीहेः' इति प्रतिषेधात्। तस्मात् तद्विधानार्थमन्यतरस्यांग्रहणं कर्तव्यम्। कथमन्यतरस्यामिति? योगविभागोऽत्र क्रियते, तत्र बहुव्रीहिग्रहण-

**पदमञ्जरी**

नोऽपि सिद्धत्वाद् 'अन उपधालोपिनः' इत्येतदनर्थकं स्यात्। एवं तर्हि तदन्यतरस्यांग्रहणं न करिष्यामीतीदमन्यतरस्यांग्रहणं क्रियते, कथम्? अनेनैवान्यतरस्यांग्रहणेनोपधालोपिनोऽनुपधालोपिनश्च ङीपि प्रापिते सति 'अन उपधालोपिनः' इत्येतावदपि क्रियमाणं नियमार्थं भविष्यति—अनो बहुव्रीहेर्यन् ङीब्विधानं तदुपधालोपिन एवेति, ततश्च तदन्यतरस्यांग्रहणं न कर्त्तव्यं भवति? तदवश्यं कर्तव्यम्, असति हि तस्मिन्ननेनान्यतरस्यांग्रहणेन बहुव्रीहिमात्राद् डाप्प्रतिषेधङीप्सु त्रिष्वपि प्राप्तेषूपधालोपिनो डाप्प्रतिषेधौ बाधित्वा नित्यं ङीबेव यथा स्यादित्येवमर्थं तत्स्यात्। अतस्तदवश्यं कर्तव्यम्, इदं तु न कर्तव्यमिति प्रश्नः।

परिहरति - **बहुव्रीहाविति**। अयमभिप्रायः—डाप्प्रतिषेधाभ्यां मुक्ते ङीबपि तथा स्यादित्येवमर्थमिदं तावदन्यतरस्यांग्रहणम्। न च 'अन उपधालोपिनः' इत्यस्य वैयर्थ्यम्; नियमार्थत्वात्-अनो बहुव्रीहेर्यदन्यतरस्यां ङीब्विधानं तदुपधालोपिन एवेति। तेन सुपर्वा, सुशर्मेत्यादावनेनान्यतरस्यांग्रहणेन प्रापितो ङीब् न भवति, बहुराज्ञीत्यादावेव तु भवति। नन्वेवमिदमन्यतरस्यांग्रहणं मा भूत्, 'अन उपधालोपिनः' इत्येतदेव विध्यर्थमस्तु, को वा विशेषः? अनेनान्यतरस्यांग्रहणेन बहुव्रीहिमात्रान् ङीपि प्रापिते तन्नियमार्थं स्याद्, असति वास्मिन् डाप्प्रतिषेधयोरेव प्राप्तयोरुपधालोपिनोऽप्राप्तो ङीप् पक्षे विधीयते इति? अयमस्ति विशेषः—अस्मिन्नन्यतरस्यां-

**भावबोधिनी**

[ अन्नन्त ] बहुव्रीहि में—बहुराजा। [ बहवो राजानो यस्यां सा—इस बहुव्रीहि में वैकल्पिक डाप् करने पर बहुराजन् + डाप् = आ, टिलोप ] बहुराजे। [ डाप् करने पर बहुराजा + औ = शीङ् = ई, गुण ] बहुराजाः। [ बहुराजन् + डाप् = आ, टिलोप, जस् का रूप ]। बहुतक्षा [ बहवः तक्षाणो यस्यां सा—बहुव्रीहि में बहुतक्षन् + डाप् = आ, टि लोप ] बहुतक्षे, बहुतक्षाः [ बहुतक्षन् + डाप् = आ, टि लोप—बहुतक्षा + औ, शेष पूर्ववत्। बहुतक्षा + जस्, शेष पूर्ववत्। ] यह डाप् नहीं भी होता है—बहुराजानः [ बहुराजन् में डाप् का निषेध हो जाने पर जस् का रूप ]। बहुतक्षाणः [ डाप् का निषेध, बहुतक्षन् + जस् = अस् उपधा दीर्घ, न् का ण्, स् का रुत्व विसर्ग। बहुत राजाओं वाली नगरी। बहुत बढइयों = मिस्त्रियों वाली नगरी—ये अर्थ हैं। ] अन्यतरस्याम्—इसका ग्रहण किस लिये है? बहुव्रीहि में "वनो र च" ४।१।७ इसका भी विकल्प जिस प्रकार सम्भव हो सके—बहुधीवा, बहुधीवरी [ बहवः धीवानः यस्यां सा—इस बहुव्रीहि में बहुधीवन् इससे ङीप् और रेफान्त आदेश करने पर—बहुधीवरी। पक्ष में डाप् होने पर टिलोप करने

**बहुतक्षाणः । अन्यतरस्यां ग्रहणं किमर्थम् ? बहुव्रीहौ 'वनो र च' ( ४.१.७ ) इत्यस्यापि विकल्पो यथा स्यात्- बहुधीवा, बहुधीवरी । बहुपीवा, बहुपीवरी ॥**

**न्यासः**

मनुवर्तते, 'वनो र च' इत्येतच्च मण्डूकप्लुतिन्यायेन । तेन वन्नन्ताद् बहुव्रीहेरन्यतरस्यां ङीब् रेफश्चान्तादेशो लभ्यत इति बहुपीवा, बहुधीवा, बहुपीवरी, बहुधीवरीत्यादि सिद्धं भवति । अन्ये त्वाहुः—उभाभ्यांग्रहण-सहितादन्यतरस्यांग्रहणाद् वन्नन्ताद् बहुव्रीहेर्ङीब्रेफौ लभ्येते । 'उभाभ्याम्' इति नेयं पञ्चमी, किं तर्हि ? तृतीया, वन्नन्ते बहुव्रीहौ स्त्रीत्वमुभाभ्यां ङीब्रेफाभ्यां करणाभ्यां प्रयोक्त्रा प्रत्याययितव्यमिति । ननु च मन्नन्तात् प्रातिपदिकादन्नन्ताच्च बहुव्रीहेर्डाबुभाभ्यामित्येतदुभाभ्यांग्रहणस्य प्रयोजनम् ? एवं मन्यते—स्वरितत्वादेव 'उभाभ्याम्' इति वचनमन्तरेणाप्युभाभ्यामेव प्रत्ययो लभ्यत एवेति ॥ १३ ॥

**पदमञ्जरी**

ग्रहणे सति डाप्प्रतिषेधाभ्यां मुक्ते स्वेन स्वेन शास्त्रेण ङीब् भवन् वन्नन्तेषु 'वनो र च' इत्यनेनैव भवतीति बहुधीवरीत्यादौ रेफोऽपि भवति । एवमनेन वन्नन्तादुपधालोपिनोऽनुपधालोपिनश्च बहुव्रीहेर्बहुधीवन्सु-पर्वन्नित्यादेर्ङीब्रेफयोः प्रापितयोरन्यत्र बहुराजन्सुशर्मन्नित्यादौ केवले ङीपि प्रापिते सति 'अन उपधालोपिनोऽन्य-तरस्याम्' इत्येतन्नियमार्थं भवति, तेन च नियमेन सुशर्मेत्यादौ ङीब् व्यावर्त्यते । सुपर्वेत्यादौ ङीपि व्यावर्त्तिते तत्सन्नियोगशिष्टत्वाद्रेफोऽपि न भवति । बहुराज्ञीत्यादौ तु यथाप्राप्तो ङीबवस्थितः, बहुधीवरीत्यादौ च 'वनो र च' इत्यनेन प्राप्तौ ङीब्रेफाववस्थिताविति सर्वमिष्टं सिध्यति । असति त्वस्मिन्, तस्मिंश्च विध्यर्थेऽपूर्व एव ङीप् तेन विधीयत इति वन्नन्ते बहुव्रीहौ 'ऋन्नेभ्यो ङीप्' इत्येतत्सन्नियुक्तं 'वनो र च' इत्येतन्न प्रवर्तेतेति केवले ङीपि सति बहुधीव्नीति स्यात् । अतः 'अन उपधालोपिनः' इत्येतन्नियमार्थं यथा स्यात्स्वतन्त्रो विधिर्मा भूदित्येवमर्थमिहान्यतरस्यांग्रहणं क्रियत इति । तदिदम् 'अन उपधालोपिनः' इत्यत्र **वृत्तिकारः स्पष्टयिष्यति** । यद्यनेनान्यतरस्यांग्रहणेन पक्षे ङीबपि प्राप्यते दामेत्यादौ मन्नन्तादपि प्राप्नोति ? नैष दोषः; योगविभागः क्रियते—डाबुभाभ्यां भवति, ततः 'अन्यतरस्याम्'; 'अनो बहुव्रीहेः' इत्येव वर्तते, 'मनः' इति निवृत्तम् ॥ १३ ॥

**भावबोधिनी**

पर — बहुधीवा ये दो रूप होते हैं ] बहुपीवा, बहुपीवरी [ बहवः पीवानः यस्यां सा—यहां भी ङीप् और रेफान्त आदेश करने पर बहुपीवरी और पक्ष में डाप्, टिलोप करने पर बहुपीवा—ये दो रूप होते हैं ।

**विमर्श** — प्रस्तुत सूत्र में 'अन्यतरस्याम्' का ग्रहण व्यर्थ है । इसके न रहने पर डाप् नित्य होने लगेगा—यह भी नहीं कहा; क्योंकि यदि डाप् नित्य होता तो मन्नन्त प्रातिपदिक से और अन्नन्त बहुव्रीहि से ङीप् का बाध सिद्ध ही था । पुनः "अनः" ४।१।११ और 'अनो बहुव्रीहेः' ४।१।१२ इनसे ङीप् का निषेध करना व्यर्थ हो जाता । इससे यह सिद्ध होता है कि ङीप् का निषेध करने पर डाप् के विधानसामर्थ्य से पक्ष में डाप् भी सिद्ध रहता — इस प्रकार 'अन्यतरस्याम्' इसका ग्रहण व्यर्थ है ? उक्त शंका का **समाधान** यह है कि 'अन्यतरस्याम्' यह योगविभाग किया जाता है । इसमें 'मनः' की अनुवृत्ति नहीं है 'अनो बहुव्रीहेः' इसकी अनुवृत्ति होती है—अन्नन्त बहुव्रीहि से डाप् प्रत्यय विकल्प से होता है, पक्ष में ङीप् होता है । "अन उपधालोपिनोऽन्यतरस्याम्" ४।१।२८ यह नियमार्थ होता है — 'अन्यतरस्याम्' इस विभक्त सूत्र से अन् का जो ङीप् प्राप्त होता है, वह उपधालोपी का ही होता है । इस कारण जहां उपधा लोप नहीं है—सुपर्वा, चारुपर्वा आदि में डाप् और निषेध होता है । इस प्रकार बहुधीवरी यहां पर "ऋन्नेभ्यो ङीप्" ४।१।५ से प्राप्त ङीप् का अनुवाद करके "वनो र च" ४।१।७ से रेफविधान करने से बहुधीवरी इसमें रादेश भी सिद्ध होता है । इससे यह लाभ होता है—"बहुव्रीहौ वा" इस वार्त्तिक को बनाने की आवश्यकता नहीं है ॥ १३ ॥

## १२६४. अनुपसर्जनात् ॥ १४ ॥ ( ४६९ )

**अधिकारोऽयम् । उत्तरसूत्रेषूपसर्जनप्रतिषेधं करोति । यदित ऊर्ध्वमनुक्रमिष्यामः, अनुपसर्जनात्-इत्येवं तद्वेदितव्यम् । वक्ष्यति – 'टिड्ढाणञ्' ( ४.१.१५ ) इति ङीप् । कुरुचरी । मद्रचरी । अनुपसर्जनादिति**

**न्यासः**

**अनुपसर्जनात् ॥** इहानुपसर्जनादिति विधिर्वानेनोत्तरत्र क्रियते—उपसर्जनादन्यस्मादनुपसर्जनाद् ङीबादयो भवन्तीति ? प्रतिषेधो वा—उपसर्जनान्न भवतीति ? तत्र यद्याद्यः पक्ष आश्रीयेत 'कुक्कुटीपादः' इति न सिध्येत्; पूर्वपदस्योपसर्जनत्वात् । उपसर्जनत्वं त्वस्य 'षष्ठी' इति समासशास्त्रे प्रथमानिर्देशात् । कुक्कुटीत्येतदपि न सिध्येत्; प्रधानं ह्यनुपसर्जनम्, न चात्र जातिः प्रधानम्, अप्रधानापेक्षया हि प्रधानं भवति, न चात्र किञ्चिदप्रधानमस्ति यदपेक्षया जातेः प्राधान्यं स्यात् । तस्माद् विधिपक्षोऽयं दुष्ट इति मत्वा प्रतिषेधपक्षमाश्रित्याह--**उत्तरसूत्रेषूपसर्जनप्रतिषेधं करोतीति । कुरुचरीति ।** कुरुषु चरतीति 'चरेष्टः' इति टः । 'उपपदमतिङ्' इति तत्पुरुषसमास इत्यस्योत्तरपदप्रधानत्वादप्रथमानिर्दिष्टत्वाच्च समासशास्त्रे चरशब्द

**पदमञ्जरी**

**अनुपसर्जनात् ॥** प्रसज्यप्रतिषेधोऽयमित्याह--**उत्तरसूत्रेषूपसर्जनप्रतिषेधं करोतीति ।** पर्युदासे को दोषः ? कुक्कुटीपाद इत्यत्र न स्यात् पूर्वपदस्योपसर्जनत्वात्, न; अन्तरङ्गत्वात् प्रागेव ङीषि कृते तदन्तस्य समासः । न चेदानीमुपसर्जनत्वे ङीषः पर्युदासः, पूर्वमेवाभिनिर्वृत्तत्वात् । किञ्च प्रसज्यप्रतिषेधेऽप्येष दोषः समानः । कुक्कुटीत्यत्रैव तर्हि न प्राप्नोति, किं कारणम् ? अन्वर्थमुपसर्जनम्, अप्रधानमुपसर्जनमिति ? अस्त्वेवम्; अनुपसर्जनं तूपसर्जनादन्यत्सर्वम्, न तु प्रधानमेव, तेनापेक्षणीयस्याभावेऽप्यप्रधानादन्यत्वाद्भविष्यति । यदा तर्ह्यधर्मानृतादिवद्विरोधिवचनोऽनुपसर्जनशब्दस्तदा न प्राप्नोति, तस्मात्प्रसज्यप्रतिषेधः । **अनुपसर्जनादित्येवं तदिति ।** उपसर्जनान्न भवतीत्येवमित्यर्थः । **वक्ष्यति--टिड्ढाणञिति ङीबिति ।** कथं प्रथमान्तस्य वक्ष्यतीत्यनेन सम्बन्धः ? अत्राहुः--वक्ष्यति टिड्ढाणञित्येतावान् ग्रन्थः । टिड्ढाणञिति वक्ष्यतीत्यर्थः । कः पुनरत्र प्रत्यय इत्यत्राह--**ङीबिति ।** एवं **जातेरिति ङीष्** इत्यत्रापि ग्रन्थच्छेदः, तत्र च पूर्वस्मिन् 'वक्ष्यति' इत्यनुषङ्गः । **कुरुचरीति ।** 'चरेष्टः' । **बहुकुरुचरेति ।** बहुव्रीहिः सर्वोपसर्जनः ।

**कथं पुनरित्यादिः ।** प्रत्युदाहरणे यदुपसर्जनं न तत् स्त्रियां वर्त्तते, यदा च स्त्रियां वर्तते तदा भवत्येव प्रत्ययः--बह्व्यः कुरुचर्योऽस्यां बहुकुरुचरीका, बहुकुक्कुटीका मधुरेति, यः स्त्रियां वर्तते बहुव्रीहिस्ततोऽटित्त्वाद-जातित्वाच्चाप्रसङ्गः । तथा हि--टित्प्रातिपदिकं गृह्यते, तच्च किञ्चित्साक्षाट्टिद्भवति, यथा—नदट्, चोरडिति; किञ्चित्त्ववयवटित्त्वद्वारेण । यत्र ह्यवयवटित्त्वमकिञ्चित्करं तत्र समुदायार्थं तद्विज्ञायते । स चावयवः क्वचिद्धातुः--स्तनन्धयीति, क्वचित्कृल्ल्युडादिः, क्वचित्तद्धितष्ट्युट्युलादिः । तत्र यं समुदायं योऽवयवो न व्यभिचरति तदर्थं तस्य टित्त्वमिति कुरुचरशब्द एव टित्, तत्कुतो बहुकुरुचरशब्दात् प्रसङ्ग इति प्रश्नः ।

**भावबोधिनी**

यह अधिकार है । उत्तरवर्त्ती सूत्रों में उपसर्जन का प्रतिषेध करता है । इस सूत्र के आगे जिनको कहा जायगा उन्हें—अनुपसर्जन से— ऐसा समझना चाहिये । [ अर्थात् जिनसे विधान है वे उपसर्जन = विशेषण नहीं होने चाहिये । ] आगे कहा जायगा —"टिड्ढाणञ्" ४।१।१५ [ टित् ढ आदि जिनके अन्त में है, ऐसे प्रातिपदिकों से ङीप् होता है । ] उदा०—कुरुचरी [ कुरुदेश में घूमने वाली । कुरुषु चरति—इस विग्रह में "चरेष्टः" ३।२।१६ से ट = अ प्रत्यय और उपपद—समास करने पर कुरुचर यह प्रातिपदिक रूप होता है । यहाँ ट प्रत्यय टित् होने से टिदन्त प्रातिपदिक से स्त्रीलिङ्ग में ङीप् होने पर कुरुचरी बनता है ] । मद्रचरी [ मद्रेषु चरति इस विग्रह में यह रूप होता है । प्रक्रिया पूर्ववत् है । मद्रदेश में घूमने वाली यह अर्थ है । ] अनुपसर्जन से होता है— इसका क्या लाभ है ? बहुकुरुचरा, बहुमद्रचरा मधुरा । [ बहवः कुरुचराः यस्यां सा, बहवः मद्रचराः यस्यां सा—इस बहुव्रीहि में टिदन्त प्रातिपदिक कुरुचर और

**किम् ? बहुकुरुचरा, बहुमद्रचरा मधुरा। 'जातेः' ( ४.१.६३ ) इति ङीष्। कुक्कुटी। शूकरी। अनुपसर्जनादिति किम् ? बहुकुक्कुटा, बहुशूकरा, मधुरा। कथं पुनरुपसर्जनात् प्रत्ययप्रसङ्गः ? तदन्तविधिना। ज्ञापितं चैतद्—**

**न्यासः**

इहोपसर्जनं न भवतीति। **बहुकुरुचरेति**। बह्वः कुरुचरा अस्यामिति। अस्यान्यपदार्थप्रधानत्वात् प्रथमानिर्दिष्टत्वाच्च शास्त्रे समासपदानामत्रावयव उपसर्जनम्। **जातेर्ङीषिति**। 'जातेरस्त्रीविषयादयोपधात्' इत्यनेन। **बहुकुक्कुटेति**। बहुव्रीहिः। अत्रापि पूर्ववज्जातिशब्द उपसर्जनम्।

ननु च बहुकुरुचरेत्यत्र समुदायः स्त्रियां वर्तते, नावयवः, न च समुदायष्टित्, किं तर्हि ? अवयवः, तत्र टित उच्यमान ईकारः केन पुनः समुदायादटितः स्यात् ? बहुकुक्कुटेत्यत्रापि समुदायः स्त्रियां वर्तते, नावयवः। न च समुदायो जातिवचनः, किं तर्हि ? अवयवः। तत्र जातिवाचिन उच्यमानः प्रत्ययः केनाजातिवाचिनः समुदायात् स्याद्, यत्प्रतिषेधार्थमिदमुच्यत इति मन्यमान आह—**कथमित्यादि**। **तदन्तविधिनेति**। परिहारः। तत्रैतत् स्यात्—'ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते' ( म भा० ) इति, अत आह—**ज्ञापितञ्चेत्यादि**। 'शूद्रा चामहत्पूर्वा जातिः' इत्यत्र महत्पूर्वेत्यनेनास्मिन् प्रकरणे तदन्तविधिरिति ज्ञापितमेतत्।

**पदमञ्जरी**

परिहरति—**तदन्तविधिनेति**। ननु ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते, ग्रहणं चोपादानमात्रम्, न तु स्वरूपेणोच्चारणमेव, तत्कथं तदन्तविधिः ? स्यादेतत्—यत्र गृह्यमाणं रूपं प्रातिपदिकस्यैवासाधारणं तत्र तदन्तविधिप्रतिषेधः, इह चोरडित्यादि प्रातिपदिकमपि टित्, ल्युडादिप्रत्ययोऽपि, धेडिति धातुरपि, ततश्च यथा 'उगितश्च' इत्यत्र वर्णोऽप्युगित्प्रत्ययोऽपि प्रातिपदिकमपीति तदन्तविधिर्भवति, तथेहापि प्रसङ्ग इति ? स्यादयं प्रसङ्गो यदि टिता प्रातिपदिकं विशेष्येत, टिति च प्रातिपदिकेन विशेष्यमाणे नानेन विशेष्येण तदन्तविधिः, प्रातिपदिकेन चासम्भवादिति नैव बहुकुरुचरशब्दात् प्रसङ्ग इत्यत आह—**ज्ञापितं चैतदिति**। 'शूद्रा चामहत्पूर्वा' इत्यत्र ज्ञापितमेतत्। अवश्यञ्चैतज् ज्ञापितमुत्तरत्रापि परिपालनीयमित्याह—**तथा चेति**। अनाश्रीयमाणे ज्ञापकेऽणन्ताद्विधीयमानो ङीप् प्रत्ययग्रहणपरिभाषया कारशब्दादेव स्याद्, न त्वणन्तात् कुम्भकारशब्दात्। ज्ञापकात्तु ततोऽपि भवतीत्यर्थः।

ननु च कृद्ग्रहणपरिभाषया कुम्भकारशब्दस्याणन्तत्वम् ? नेत्याह—**न चाणिति**। **कृद्ग्रहणमिति**। किं कारणमित्यत्राह—**तद्धितोऽप्यणस्तीति**। यत्र तु गृह्यमाणं रूपं कृत एवासाधारणं तत्रैषा परिभाषा। इह त्वौपगवीति तद्धितस्यापि ग्रहणमिति नायमस्या विषय इत्यर्थः। अथ कारशब्दादुत्पत्तौ सत्यां को दोषः ? कौम्भकारेयो न सिध्यति, प्रत्ययग्रहणपरिभाषया कारीशब्दात्स्त्रीभ्यो ढकि तस्यैव वृद्धिस्वरौ स्याताम्। ष्यङः सम्प्रसारणवद्भविष्यति, तद्यथा—ष्यङन्तस्योच्यमानं सम्प्रसारणं परमकारीषगन्धीपुत्र इत्यत्रापि भवति, स्त्रीप्रत्यये तदादिनियमाभावात्; तथा कारशब्दादप्युत्पत्तौ कुम्भकारीशब्दस्यापि स्त्रीप्रत्ययान्तत्वाद्भविष्यति,

**भावबोधिनी**

मद्रचर—बहुव्रीहि में विशेषण = उपसर्जन हो जाते हैं, अनुपसर्जन नहीं रहते। अतः ङीप् न होकर टाप् होता है। मधुरा = महाभाष्य में 'मथुरा' यह पाठ है। ] 'जातेरस्त्रीविषयादयोपधात्' ४।१।६३ से ङीष् [ कहा जायगा ]—कुक्कुटी, शूकरी। 'अनुपसर्जन से'—इसका क्या लाभ है ? बहुकुक्कुटा, बहुशूकरा मधुरा। [ बहवः कुक्कुटाः यस्यां सा, बहवः शूकराः यस्यां सा—इस बहुव्रीहि में जातिवाची कुक्कुट और शूकर उपसर्जन = विशेषण बन जाते हैं। अतः ङीप् न होकर टाप् होता है। ]

उपसर्जन से प्रत्यय का प्रसङ्ग ही कैसे होता है ? तदन्तविधि से [ उपसर्जन से ङीप् आदि प्राप्त होते हैं ]। और यह ज्ञापित हो चुका है कि इस स्त्रीप्रत्यय प्रकरण में तदन्तविधि होती है। इस प्रकार प्रधान के साथ तदन्तविधि होती

**अस्त्यत्र प्रकरणे तदन्तविधिरिति। तथा च प्रधानेन तदन्तविधिर्भवति — कुम्भकारी। नगरकारी।**

**न्यासः**

**तथा चेति। एवं सतीत्यर्थः। यस्मात् पूर्वं तदन्तविधिरिह प्रकरणेऽस्तीति ज्ञापितमेतत्; अनेन च सूत्रेणोपसर्जनेन तदन्तविधिः प्रतिषिध्यते, नानुपसर्जनेन, एवञ्च सति प्रधानेन तदन्तविधिर्भवत्येव। तेन कुम्भकारी, नगरकारीति सिद्धं भवति। तत्र हि कारशब्दोऽणन्तः प्रधानम्। तदन्तात् समासाद् 'टिड्ढाणञ्' इतीकारः स्यादेव। ननु चाणित्यत्राणिति, कृद्ग्रहणम् ततश्च 'कृद्ग्रहणे गतिकारकपूर्वपदस्यापि ग्रहणं भवति' इत्यनया परिभाषयैव कुम्भकारशब्दात् कारान्तादीकारः सिध्यति, ततो नेदं तदन्तविधिज्ञापनस्य प्रयोजन-**

**पदमञ्जरी**

एवमपि कारीशब्दादपि कदाचित् स्यात्।

अथ ब्रूयाः—कारीशब्देन कुम्भशब्दः समसिष्यते, 'स्त्रीभ्यो ढक्' इत्यत्र च 'ङ्याप्प्रातिपदिकात्' इति त्रितयाधिकारसामर्थ्यात्स्त्रीप्रत्ययान्तात्प्रातिपदिकादिति प्रत्ययो विधास्यते, स्त्रीप्रत्ययान्तस्य च प्रातिपदिकत्वं समासमन्तरेणानुपपन्नमिति कुम्भकारीशब्दादेव ढगुत्पत्स्यते. ङ्याब्ग्रहणानुवृत्त्या च सौपर्णेय इत्यत्रापि भविष्यतीति? एवमपि ङ्याबनुवृत्तेः सौपर्णेय इतिवत् कारीशब्दादपि स्यात्। 'गतिकारकोपदानाम्' इति-वचनाच्च ङ्यन्तेन समासो दुर्लभः, ततः कुम्भकारशब्दादेव ङीब्यथा स्यादित्युत्तरत्रापि तदन्तविधिरभ्युपगन्तव्यः। न च कुम्भकारशब्दादप्युत्पत्तौ तदादिनियमाभावात् कारीशब्दादपि ढक्प्रत्ययप्रसङ्गः, किं कारणम्? 'स्त्रीप्रत्यये चानुपसर्जने न' इत्यनेन, प्रत्ययग्रहणे यस्मात् स तदादेरधिकस्य ग्रहणमभ्यनुज्ञायते, न न्यूनस्यापि। ननु च सत्यप्युत्तरत्र तदन्तविधौ कुम्भकारीत्यत्र समुदायादपि भवतु, केवलात्कारशब्दादपि प्रसङ्गः, यथा—औपगवीत्यादौ, ततश्च कौम्भकारेयः पक्षे दुष्यत्येव? एवं तर्हि कारशब्दादप्युत्पत्तौ कुम्भेनैकार्थीभृतस्य तावतो निष्कृष्यापत्येनायोगात्तदादिनियमाभावाच्च समुदायामेव ढग्भविष्यति।

यद्वा—कुम्भेनैकार्थीभूतस्य कारस्य स्त्रीत्वेनायोगात्स्त्रीप्रत्यय एव न भविष्यति, असति पुनरुत्तरत्र तदन्तविधौ स्त्रीप्रत्ययस्यात्राप्रसङ्गः, किं कारणम्? यदणन्तं न तस्य निष्कृष्य स्त्रीत्वेन योगः, यस्य च स्त्रीत्वेन योगो न तदणन्तम्, अत उत्तरत्राप्यवश्यं प्रधानेन तदन्तविधिरभ्युपगन्तव्यः। तत्र यथा प्रधानेन भवति तथोपसर्जनेनापि स्यादिति प्रतिषेधोऽयमारभ्यते। तथा च पूर्वत्रोपसर्जनेनापि तदन्तविधिर्भवति, 'न षट्स्वस्रादिभ्यः'—प्रियपञ्चा द्रौपदीति, अतिक्रान्ता भवन्तमतिभवतीति। स्यादेतत्—पूर्वत्रोपात्तं तदन्तं वा 'स्त्रियाम्' इत्यनेन विशेष्यते, 'टिड्ढाणञ्' इत्यादिषूपात्तमेव टिदादिकम्, तेन ज्ञापितेऽपि तदन्तविधौ बहुकुरुचरेत्यादौ टिदादेरस्त्रीत्वान्न भविष्यति, कुम्भकारीत्यत्र त्वणन्तस्य स्त्रियां वृत्तेस्तदन्तादपि भविष्यति, नार्थ एतेनेति? तन्न; त्वदुक्तस्य विषयविभागस्य दुर्ज्ञानत्वात्, अतो विषयविभागज्ञापनार्थमिदमारभ्यते।

नन्वारब्धेऽप्यस्मिन्नैष विषयविभागः शक्य आस्थातुम्, पञ्चाजीत्यत्राजानामस्त्रीत्वेन तदन्तस्य स्त्रियां वृत्तेः 'अजाद्यतष्टाप्' इति टाप्प्रसङ्गात्। अतो विशेषणविशेष्यभावं प्रति कामचारात् 'अजाद्यतष्टाप्' इत्यत्र 'टिड्ढाणञ्' इत्यादौ चोपात्तं स्त्रीत्वेन विशेष्यते, 'वनो र च' इत्यादावुपात्तं तदन्तस्य चेति नार्थ एतेन? एवं

**भावबोधिनी**

**है—कुम्भकारी। नगरकारी। [ घड़ा बनाने वाला कुम्हार। नगर बनाने वाला अभियन्ता ] और अण् यह कृत् प्रत्यय ही नहीं लिया जाता है क्योंकि तद्धित अण् भी है।**

**विमर्श—अनुपसर्जनात्—इस अधिकार-सूत्र का फल यह है कि जिनसे भी ङीप् आदि विहित हैं, वे उपसर्जन = विशेषण नहीं रहने चाहिये। इनकी विशेषणता बहुव्रीहि आदि में हो जाती है। यहाँ प्रश्न हो सकता है कि उपसर्जन से प्रत्ययप्राप्ति ही कैसे है? उत्तर यह है कि "शूद्रा चामहत्पूर्वा" यह वचन यहाँ तदन्तविधि ज्ञापित करता है, क्योंकि केवल**

**न च 'अण्' इति कृद्ग्रहणम्, तद्धितोऽप्यणस्ति ॥**

## १२६९. टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्ख्युनाम् ॥ १५ ॥ ( ४७० )

**न्यासः**

मित्यत आह—**न चेत्यादि** । कथं न ? इत्याह--**तद्धितोऽप्यणस्तीति** । तस्याप्यत्र ग्रहणम्, अन्यथा ह्यौपगवीति न सिध्येत् । तस्मान्नेदं कृद्ग्रहणम्, किं तर्हि ? कृदकृद्ग्रहणम् । तत्र यदि तदन्तविधिर्न ज्ञाप्यते, तदाणिति प्रत्ययग्रहणम्, 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य च ग्रहणं भवति' इतीहैव स्याद्--**औपगवीति**, इह तु न स्यात्--कुम्भकारीति, अत्र हि धातोरण् विहितः, तदन्तश्च स्त्रियां न वर्तते; तावन्मात्रस्य कार-शब्दस्य प्रयोगाभावात् । या वा स्त्रियां वर्तते सोपपदम्, न तस्मात् प्रत्ययो विहितः । तदन्तविधौ तु ज्ञापिते कारशब्दान्तादपीकारः सिध्यति ॥ १४ ॥

**टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्ख्युनाम् ॥ सर्वत्रेति** । स्त्रीप्रकरणे । ननु च 'पत्युनोऽयज्ञसंयोगे' 'इतो मनुष्यजातेः' इत्यादौ नानुवर्त्तते, तस्यात इत्यस्यासम्भवाद् विशेषणं नोपपद्यत इत्याह—

**पदमञ्जरी**

तर्हि तदन्तविधिज्ञापनार्थमिदमारभ्यते । अमहत्पूर्वेत्येतत्तु शक्यमकर्तुम्, न हि महाशूद्रेत्यत्र समुदाये जातिवचने शूद्रशब्दः स्त्रियां वर्त्तते ।

अपर आह --लौकिकस्याप्रधानस्योपसर्जनस्येह ग्रहणम्, तेन न आपिशिलिना प्रोक्तम्, 'इञश्च' इत्यण्, ततोऽध्येत्र्याम् 'तदधीते' इत्यण्, तस्य 'प्रोक्ताल्लुक्' इति लुक् आपिशिला ब्राह्मणी, अत्र 'इञश्च' इति विहितस्य प्रोक्तप्रत्ययस्याणोऽप्रधानत्वात्तदन्तान्ङीब् न भवति । नन्विदानीमध्येतृप्रत्यये लुप्ते प्रकृतिरेव तदर्थमाहेति प्रधानस्त्रियामध्येत्र्यामणन्तस्य वृत्तेः स्यादेव ङीप् प्रत्ययः ? स्यादेतदेवम्, यद्यणन्तादनुपसर्जनादित्युच्येत । वयं त्वणमेवानुपर्सजनत्वेन विशेषयिष्यामः—अण्योऽनुपर्जन इति, अर्थद्वारकं चाणः प्राधान्यम्, अप्राधान्यं च । तदेतदुक्तं भवति—यस्मिन्नर्थेऽणुत्पन्नः स यदा प्राधान्येनोच्यते तदा तदन्तान्ङीब् भवति; यदा तु गुणभावेन, तदा नेति । इह चाध्येत्र्यां सङ्क्रान्तत्वात् प्रथमस्याणोऽर्थो गुणभूत इति तदाश्रयस्तावन्ङीब् न भवति । यस्त्वध्ये-त्र्यामुत्पन्नस्तदाश्रयोऽपि न भवति; तस्य लुप्तत्वात् । प्रत्ययलक्षणेनापि न भवति, अणाकारस्य विशेषणात् । 'टिड्ढाणञ्' इत्यत्र ह्यत इति वर्तते । तत्राणन्तादकारान्तादिति विज्ञायमाने स्यात् प्रत्ययलक्षणम्, अणा त्वकारे विशेष्यमाणे वर्णनिमित्तो ङीप्प्रत्ययः कथं प्रत्ययलक्षणेन स्यात् ? ननु स्त्रियामित्यनुवृत्तेनाणं विशेषयिष्यामः—योऽण् स्त्रियां विहित इति ? एवमपि काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी, तामधीते काशकृत्स्ना ब्राह्मणीति द्वितीयेऽणि 'प्रोक्ताल्लुक्' इति लुप्तेऽपि प्रथमोऽप्यण्स्त्रियामेवोत्पन्नः, तदन्ताद् ब्राह्मण्यां वर्तमा-नान्ङीप्प्रसङ्गः । तस्मात्प्रधानाद्यथा स्यादप्रधानान्मा भूदित्येतत्प्रयोजनं सूत्रस्येति ॥ १४ ॥

**टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्ख्युनाम् ॥ इह कस्मादिति** । लडादेशस्य स्थानिवद्भावेन टित्त्वमस्तीति प्रश्नः । **पवमाना, यजमानेति** । ननु शानन्नादिषु लट इत्यस्य निवृत्तत्वाद् अनादेशपक्षः स्थापितः,

**भावबोधिनी**

शूद्र से ङीष् प्राप्त है, महाशूद्र से नहीं । अतः निषेधविधान व्यर्थ होकर यह ज्ञापित करता है कि इस प्रकरण में तदन्तविधि होती है और 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इस परिभाषा की प्रवृत्ति नहीं होती है । इसके फलस्वरूप कुरुचर और बहुकुरुचर दोनों से टिदन्त और टिदन्तान्त मानकर ङीप् प्राप्त होता है, उसके निषेध के लिए यह अनुपसर्जन अधिकार है । सिद्धान्तकौमुदीकार ने इस अधिकार सूत्र को ही यहाँ तदन्तविधि मानने में ज्ञापक कहा है—"अयमेव स्त्रीप्रत्ययेषु तदन्तविधि" ज्ञापयति ( ४।१।१४ पर सि० कौ० ) ॥ १४ ॥

'अतः' [ अकारान्त प्रातिपदिक से ] इसकी सभी में अनुवृत्ति होती है । सम्भव रहने पर यह विशेषण बनता है । टित् [ टिदन्त ] आदि प्रातिपदिकों से स्त्रीलिङ्ग में ङीप् होता है । यह टाप् का अपवाद है । [ अनुपसर्जन जो टित्

'अतः' इति सर्वत्रानुवर्तते। तत् सति संभवे विशेषणं भवति। टिदादिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीप् प्रत्ययो भवति। टापोऽपवादः। टितस्तावत् - कुरुचरी। मद्रचरी (३.२.१६)। इह कस्मान्न भवति- पचमाना, यजमाना? द्व्यनुबन्धकत्वाल्लटः---

ल्युडादिषु कथम्? टित्करणसामर्थ्यात्। इतरत्र तु टेरेत्वं फलम्। पठिता विद्येति? आगमटित्त्वमनिमित्तम्; 'टयुटयुलौ तुट् च' (४.३.२३) इति लिङ्गात्।

**न्यासः**

**तत् सतीत्यादि**। यत्र सम्भवति तत्र विशेषणम् भवति, यत्र तु न सम्भवति तत्रोत्तरार्थमेवानुवर्तते। **इह कस्मान्न भवति--पचमानेति**। स्थानिवद्भावेन शानचष्टित्त्वमस्ति, अतस्तदन्तादपि ङीपा भवितव्यमित्यभिप्रायः। **द्व्यनुबन्धकत्वाल्लट इति**। तेन 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' इत्येतया परिभाषया लटोऽत्र ग्रहणं नास्तीति दर्शयति, तस्य ह्यकारो द्वितीयोऽनुबन्धोऽस्ति।

**ल्युडादिषु कथमिति**। ईकारो भवतीति शेषः। आदिशब्देन 'गापोष्टक्' इत्येवमादयो गृह्यन्ते। ल्युडादीनामपि द्व्यनुबन्धकत्वाट् टिद्ग्रहणेन भवितव्यम्, अतस्तदन्तेभ्यो ङीब्न स्यात्, ततश्च करणी, सामगीत्यादि न न सिध्येत्। **टित्करणसामर्थ्यादिति**। यदि तेषामपि टिद्ग्रहणेन ग्रहणं न स्यात् टित्करणमनर्थकं स्यात्। प्रयोजनान्तरासम्भवात्। तस्मात् सत्यपि द्व्यनुबन्धकत्वे टित्करणसामर्थ्याल्ल्युडादयो गृह्यन्त इत्यदोषः। लटोऽपि तर्हि टित्करणसामर्थ्यादेव ग्रहणेन भवितव्यमित्यत आह **इतरत्रेत्यादि**। लटि हि टित्करणस्य 'टित आत्मनेपदानां टेरे' इति टेरेत्वं फलम्। अतो यद्यपि तस्येदं ग्रहणं न भवति, तथापि नैव टित्करणस्य वैयर्थ्यं प्रसज्येत। तस्मात् टित्करणस्य चरितार्थत्वादयुक्तं तस्येदं ग्रहणम्।

**पठिता विद्येति**। अत्रापि कथमिति सम्बध्यते। इडागमस्य हि प्रत्ययभक्तत्वात् प्रत्ययस्य टित्त्वमस्ति, ततश्च ङीपा भवितव्यम्, तत् कथं पठितेत्येतद् रूपं भवतीति? **आगमटित्त्वमनिमित्तमिति**। प्रकृतत्वात् ङीप

**पदमञ्जरी**

पचमानेत्यादिषु शानजुदाहर्तव्यः। **द्व्यनुबन्धकत्वाल्लट इति**। लडादिष्वकारादयोऽप्यनुबन्धा इति भावः। एतेन लिड्लृटौ व्याख्यातौ—अनूचाना, यक्ष्यमाणेति।

**ल्युडादिषु कथमिति**। द्व्यनुबन्धकत्वात्तेषामपि ग्रहणेन न भाव्यमिति प्रश्नः। **टित्करणसामर्थ्यादिति**। न च लडादिष्वपि टित्करणसामर्थ्यमित्याह - **इतरत्रेति**। **पठिता विद्येति**। कथमित्यनुषङ्गः। इटष्टित्त्वमुभयार्थं स्यादिति प्रश्नः। **आगमटित्त्वमनिमित्तमिति**। आगमानां टित्त्वं ङीपो निमित्तं न भवतीत्यर्थः। कुत इत्यत

**भावबोधिनी**

आदि, तदन्त जो अकारान्त प्रातिपदिक उससे स्त्रीलिङ्ग में ङीप् होता है—यह परिष्कृत अर्थ है। ]

टित् से उदा०—कुरुचरी। मद्रचरी [ कुरुदेश में घूमने वाली, मद्रदेश में घूमने वाली। सिद्धि 'अनुपसर्जनात्'' ४।१।१४ की व्याख्या में लिखी जा चुकी है। ] पचमाना, यजमाना [ यहाँ लट् के स्थान पर शानच् होने से उसमें भी टित्त्व का अतिदेश हो जाने से ]—इनमें ङीप् क्यों नहीं होता है? लट् में दो अनुबन्ध [ अ और ट् ] हैं। [ यहाँ केवल ट्=टित् का ही ग्रहण है, अतः इनमें ङीप् नहीं होता है। यदि एक ट् अनुबन्ध से ही टित् होता है तो ल् और ट् इन दो अनुबन्धों वाले ] ल्युट् आदि में ङीप् कैसे होता है? टित् करने के कारण ही इनका ग्रहण होता है। [ क्योंकि इन ल्युट् आदि में टित् अनुबन्ध का और कोई दूसरा फल ही नहीं है, अतः दो अनुबन्धों में भी ङीप् होता है, परन्तु अन्यत्र [ लट् आदि में ] तो टि का ए करना [ टित् का ] फल है; अर्थात् लट् से लोट् तक सभी लकारों में ट् अनुबन्ध होने से ये सभी टित् हैं इनमें ''टित आत्मनेपदानां टेरे'' ३।४।७९ से प्रत्यय की टि का एत्व करना फल है। ] पठिता विद्या [ पठ्+इट्+त+टाप्—] यहाँ आगम इट् का टित्त्व ङीप् का निमित्त नहीं होता है, क्योंकि ''सायं चिरम्'' ४।३।२३ इस सूत्र से तुट् आगम और ट्यु और ट्युल् प्रत्यय [ उक्त विषय में ] लिङ्ग है।

ढ—सौपर्णेयी । वैनतेयी ( ४.१.१२० ) । निरनुबन्धको ढशब्दः स्त्रियां नास्तीति निरनुबन्धकपरिभाषा न प्रवर्तते ( म० भा० ) ।

**न्यासः**

इति विज्ञायते । कथं ज्ञायतेऽयमनिमित्तमित्याह—**ट्युट्युलावित्यादि** । तुड वेत्यागमटित्त्वेनैव सिद्धे ङीपि 'सायंचिरंप्राह्णे' इत्यादिसूत्रे 'ट्युटयुलौ' इति पुनः प्रत्यययोष्टित्करणं ज्ञापकम्—आगमटित्त्वमनिमित्तं ङीप इति ।

**सौपर्णेयी, वैनतेयीति** । सुपर्णीशब्दाज्जातिलक्षणङीषन्ताद् विनताशब्दाच्च टाबन्तात् 'स्त्रीभ्यो ढक्' इति ढक् । आयत्रादिसूत्रेणैयादेशः । ननु च 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति ढको ग्रहणेन न भवितव्यमित्यत आह—**निरनुबन्धको ढशब्द इत्यादि** । ननु चायं निरनुबन्धकोऽस्ति 'शिलाया ढः' इति ? नैतदस्ति; स्वभावत एव ह्ययं नपुंसके वर्त्तते । अयं तर्ह्यस्ति स्वाभाव्यात्—'सभाया ढश्छन्दसि' इति ? अयमपि नैव स्त्रियां वर्त्तते, छन्दसि सभेयीशब्दस्य प्रयोगादर्शनात् । तस्मान् निरनुबन्धको ढशब्दः स्त्रियां नास्तीति नेह निरनुबन्धकपरिभाषोपतिष्ठते; अन्यथा हि ढग्रहणमनर्थकं स्यात् ।

**पदमञ्जरी**

आह—**ट्युट्युलौ तुट् चेति लिङ्गादिति** । यद्यागमटित्त्वं ङीपो निमित्तं स्यात्ततः सायन्तनीत्यादौ तुट आगमस्य टित्त्वान्ङीप् सिद्ध इति ट्युटयुलोष्टित्करणमनर्थकं स्यादिति भावः । ननु च 'पुराणप्रोक्तेषु' इति निर्देशेन यदा तुड् न भवति, तदा ङीबर्थं तयोष्टित्त्वं स्यात् ? तन्न; पुराणशब्दाद् बह्वादिषु पाठान्ङीषा भवितव्यम्, अन्तोदात्तो हि पुराणीशब्दः—पुनःपुनर्जायमाना पुराणीति यथा । एवमपि न ज्ञापकम्, 'बह्वादिभ्यश्च' इत्यत्र वेति वर्तते, ततश्च ङीषा मुक्ते ङीब् यथा स्यादिति ट्युटयुलोष्टित्त्वं स्यादिति चिन्त्यमेतत् ।

**सौपर्णेयीति** । सुपर्णशब्दात् पाककर्णादिङीषन्तात् स्त्रीभ्यो ढक् । ननु च सानुबन्धकत्वादस्य ग्रहणेन भवितव्यमत आह—**निरनुबन्धक इति** । यद्यपि 'शिलाया ढः' इति निरनुबन्धको ढशब्दोऽस्ति, स इह स्वभावान्नपुंसकलिङ्ग इति स्त्रियां नास्तीत्युक्तम् । योऽपि 'सभाया यः', 'ढश्छन्दसि' इति ढः, सोऽपि स्त्रियां न वर्तते, कथम् ? तत्र 'तत्र साधुः' इति वर्तते, कथं च स्त्री नाम सभायां साध्वी स्याद्यज्ञसभायां हि विदुषामधिकारः ? ननु मा नाम भूद्यज्ञसभायां साध्वी, शालायां स्त्रीसभे च साध्वी भविष्यति, तत्र यज्ञसभायां साध्वी ब्राह्मणपरिषदित्यत्रापि प्रसङ्गः ? एवं तर्ह्येवंविधे विषये छन्दसि सभेयीशब्दस्य प्रयोगाभावोऽत्र हेतुः ।

**भावबोधिनी**

**विमर्श**—भाव यह है कि यदि तुट् आगम के टित् होने से टित्त्व सम्भव रहता तो ट्यु और ट्युल् को पुनः टित् नहीं किया जाता, अतः प्रत्ययों का टित् करना ही आगम के टित्त्व की अनिमित्तता का सूचक है । वास्तव में "**आद्यन्तौ टकितौ**" १।१।४६ सूत्रानुसार आदि अवयव और अन्तावयव बनाने के लिए ही आगमों में टित् या कित् किया जाता है । अतः उसे ङीप् का निमित्त नहीं माना जा सकता ।

ढ—का उदाहरण—सौपर्णेयी [ सुपर्णी शब्द से अपत्यादि अर्थ में 'स्त्रीभ्यो ढक्' ४।१।१२० से ढक् प्रत्यय और 'आयनेयीनीयियः' ७।१।२ से ढ् = एय्, भ सञ्ज्ञा के कारण ई का लोप, सौपर्णेय—यह ढकारान्त प्रातिपदिक है । ङीप् = ई और अलोप होता है । सुन्दर पर्णों वाली अथवा सुपर्ण = गरुड वाली स्त्री—सुपर्णी उसकी सन्तान ] **वैनतेयी** । [ विनताया अपत्यं स्त्री—इस अर्थ में ढक् = आयन् के बाद इससे ङीप् होता है । ] अनुबन्धरहित ढ शब्द स्त्रीलिङ्ग में कहीं नहीं मिलता है, अतः 'निरनुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणम्' यह परिभाषा प्रवृत्त नहीं होती है । [ इसलिए ढ से ढक् का ग्रहण कर लिया जाता है । सुपर्णा शब्द से भी सौपर्णेयी रूप बनता है । ]

**अण्—कुम्भकारी। नगरकारी ( ३.२.१ )। औपगवी ( ४.३.१२० )। णेऽपि क्वचिदण्कृतं कार्यं भवति – चौरी, तापसीष्टा ( ४.२.५७ ) दाण्डा, मौ इत्यत्र न भवति।**

**अञ्—औत्सी। औदपानी ( ४.१.८६ )। 'शार्ङ्गरवाद्यञो ङीन्' ( ४.१.७३ ) इति पुनरञो ग्रहणं जातिलक्षणं ङीषं बाधितुम्।**

न्यासः

**णेऽपीति**। अणि यत् कार्यं कृतं तण्णेऽपि क्वचिदिति वचनात् क्वचिन्न भवतीत्युक्तं भवति। क्व पुनर्णेऽप्यण्कृतं कार्यं भवतीति ? ताच्छीलिके। तथा हि 'कार्मस्ताच्छील्ये' इत्यत्र ज्ञापितमेतत्--णेऽप्यण्कृतं कार्यं भवतीति, कथम् ? कार्मशब्दो हि ताच्छील्ये टिलोपार्थं निपात्यते। यदि च णेऽप्यण्कृतं कार्यं न स्यात् निपातनमर्थकं स्यात्। कर्मशब्दात् कर्म शीलमस्येति 'छत्रादिभ्यो णः' इति णे कृते 'नस्तद्धिते' इत्येवं टिलोपस्य सिद्धत्वात्। 'अन्' इति प्रकृतिभावान्न सिध्यतीति चेत् ? नैतदस्ति; अणि हि प्रकृतिभाव उच्यते, तत्र 'इनण्यनपत्ये' इत्यतोऽणीत्यनुवर्त्तते। तदेवम् 'ताच्छीलिके णेऽप्यणि कृतं कार्यं भवति' इत्यस्यार्थस्य ज्ञापितत्वात् तत्रैवाण्कृतं कार्यं भवति, नान्यत्र। **चौरी, तापसीति**। चुरा शीलमस्यास्तपः शीलमस्या इति 'छत्रादिभ्यो णः' इति णेऽप्यण्कृतं भवतीति ङीप् **दाण्डा मौष्टा इति**। दण्डः प्रहरणमस्याम्, मुष्टिः प्रहरणमस्यां क्रीडायामिति 'तदस्यां प्रहरणम्' इति क्रीडायां णः। अथाणित्यकारादारभ्य लणो णकारात् प्रत्याहारग्रहणं कस्मान्न भवति ? टिदादीनां पुनर्ग्रहणात्। प्रत्याहारग्रहणे हि तेषां ग्रहणमनर्थकं स्यात्, अणन्तादेव सिद्धत्वात्।

**औत्सी, औदपानीति**। उत्सस्योदपानस्येयमिति 'उत्सादिभ्योऽञ्' इत्यञ्। अथ 'शार्ङ्गरवाद्यञो ङीन्' इत्यत्र पुनरञ्ग्रहणं किमर्थं क्रियते, यावतानेनैव सिद्धम्, तदेव हि रूपं स एव हि स्वरः, तथा हि— ङीनि सति

पदमञ्जरी

**णेऽपि क्वचिदण्कृतं कार्यं भवतीति**। शीलम् 'छत्रादिभ्यो णः' इति यो णस्तत्राण्कृतं कार्यं भवतीति। कथम् ? ज्ञापकात्, यदयम् 'कार्मस्ताच्छील्ये' इति टिलोपार्थं निपातनं करोति। यदि हि ताच्छीलिके णेऽण्कृतं कार्यं न स्यान्निपातनमनर्थकं न स्यात्, कर्मशब्दाच्छत्रादिलक्षणे णे कृते 'नस्तद्धिते' इत्येव टिलोपस्य सिद्धत्वात्। न च 'अन्' इति प्रकृतिभावः, अणि हि स प्रकृतिभावः। **चौरी, तापसीति**। चुरातपःशब्दौ छत्रादिषु पठितव्यौ। **क्वचिदित्यस्य** व्यावर्त्यं दर्शयति— **दाण्डा, मौष्टेति**। दण्डमुष्टिशब्दाभ्यां 'तदस्यां प्रहरणम्' इति णः।

**औत्सी, औदपानीति**। उत्सोदपानशब्दाभ्यां भवार्थे 'उत्सादिभ्योऽञ्'। अथ शार्ङ्गरवादिसूत्रे पुनरञ्ग्रहणं किमर्थम्, यावताऽनेनैव सिद्धम्, न रूपभेदो न स्वरभेदः ? तत्राह—**शार्ङ्गरवाद्यञ इत्यादि**। बिदस्यापत्यं बैदो,

भावबोधिनी

**अण्** - कुम्भकारी। नगरकारी। [ कुम्भं करोति—इस विग्रह में कुम्भम् उपपद कृ धातु से "कर्मण्यण्" ३।२।१ से अण् = अ प्रत्यय, धातु की वृद्धि, रपर—कार। उपपदसमास करने पर कुम्भकार बनता है। यहाँ अण् प्रत्यय होने से ङीप् = ई और भ संज्ञा के कारण अलोप होता है। इसी प्रकार नगरं करोति—इस विग्रह में नगरकारी होता है। कुम्हारिन और स्त्री अभियन्त्री अर्थ है। ] औपगवी। [ उपगु की स्त्री अपत्य। उपगु + अण्, आदिवृद्धि, उ का गुण अवादेश, औपगव + ङीप्, अलोप ] ण प्रत्यय में भी कहीं कहीं अण् को मानकर होने वाला कार्य होता है। उदा०— चौरी। तापसी। [ चुरा शीलम् अस्याः, तपः शीलम् अस्याः—इस विग्रह में "छत्रादिभ्यो णः" ४।४।६२ से ण प्रत्यय, आदिवृद्धि करने पर चौर और तापस बनते हैं। ङीप् होने पर भसंज्ञा और अलोप करने पर रूप सिद्ध होते हैं। ] परन्तु दाण्डा, मौष्टा— इनमें नहीं होता है। [ दण्डः प्रहरणम् अस्याम्, मुष्टिः प्रहरणम् अस्यां क्रीडायाम्—इस विग्रह में "तदस्यां प्रहरणम्" ४।२।५७ इससे ण प्रत्यय, आदिवृद्धि आदि कार्य करने पर इनमें ङीप् नहीं होता है, टाप् होता है। ]

अञ्—औत्सी [ उत्स शब्द से अपत्यादि अर्थ में 'उत्सादिभ्योऽञ्' ४।१।२७ से अञ् प्रत्यय और आदिवृद्धि

द्वयसच् – ऊरुद्वयसी । जानुद्वयसी ( ५.२.३७ ) दघ्नच् – ऊरुदघ्नी । जानुदघ्नी ( ५.२.३७ ) । मात्रच्—ऊरुमात्री । जानुमात्री ( ५.२.३७ ) तयप्—पञ्चतयी । दशतयी । ( ५.२.४२ ) ठक्—आक्षिकी । शालाकिकी ( ४.४.२ ) ठञ्—लावणिकी ( ४.४.५२ ) । ठक्ठञोर्भेदेन ग्रहणं ठनादिनिवृत्त्यर्थम् ।

**न्यासः**

'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तं भवति, औत्सीत्यत्राप्युत्सशब्दादञन्तान् ञित्स्वरेणाद्युदात्ताद् ङीपि कृते तदेवाद्युदात्तत्वं भवति? इत्याह—**शार्ङ्गरवाद्यञ इत्यादि** । बिदस्यापत्यं गोत्रं स्त्रीति 'अनृष्यानन्तर्य्ये बिदादिभ्योऽञ्' इत्यञि कृते तस्य 'गोत्रञ्च चरणैः सह' इति जातित्वात् 'जातेरस्त्रीविषयादयोपधात्' इति ङीष् प्राप्नोति । तद्बाधनार्थं पुनः 'शार्ङ्गरवाद्यञो ङीन्' इत्यत्राञो ग्रहणं क्रियते । यद्येवम्, इहाञ्ग्रहणं न कर्त्तव्यम्, तेनैवौत्सीत्यादेरपि सिद्धत्वात्? नैतदस्ति; जातिग्रहणं तत्र 'इतो मनुष्यजातेः' इत्यतोऽनुवर्तते 'पुंयोगादाख्यायाम्' इति ङीषो बाधा मा भूदित्येवमर्थम् । बिदस्यापत्यमिति 'अनृष्यानन्तर्य्ये' इत्यादिनाञ् बैदः, तस्य भार्या बैदीति, तस्य पुंयोगे ङीषेवेष्यते, तस्मात् तत्र जातिग्रहणमनुवर्तनीयम् । तस्मिंश्चानुवर्तमान औत्सीत्यत्रोत्सस्येयमित्यर्थविवक्षायामञिकृतेऽजातित्वादीकारस्तत्र न प्राप्नोति, तस्मादिहाप्यञ्ग्रहणं कर्तव्यमेव ।

द्वयसजादीनामनुबन्धोच्चारणं प्रत्ययपरिग्रहार्थम् । प्रातिपदिकान्यपि द्वयसजादीनि सन्ति, तत्रासत्यनुबन्धोच्चारणे तेषामपि ग्रहणं विज्ञायेत । तयशब्दोऽपि 'अय वय तय नय गतौ' इति तयो धातोरजन्तं प्रातिपदिकं सम्भवति, अतस्तन्निवृत्त्यर्थं पकारोच्चारणम् ।

**ऊरुद्वयसीत्यादि** । उरुप्रमाणमस्याः, जानुप्रमाणमस्या इति 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति द्वयसजादयः प्रत्ययाः । **पञ्चतयीति** । पञ्चावयवा अस्या इति 'संख्याया अवयवे तयप्' । **आक्षिकी, शालाकिकीति** । अक्षैर्दीव्यति शलाकाभिर्दीव्यतीति 'तेन दीव्यति खनति' इत्यादिना ठक्, ठस्येकादेशः । **लावणिकीति** । लवणं पण्यमस्या इति 'लवणाट्ठञ्' । अथ किमर्थं ठक्ठञोर्भेदेनोपादानम्? न विशेषकरानुबन्धानुत्सृज्य 'ठ' इति सामान्येनैव ग्रहणं क्रियेतेत्यत आह—**भेदेनेत्यादि** । 'ठ' इति सामान्येन ग्रहणे सति ठनादीनामपि ग्रहणं स्यात्, अतस्तन्निवृत्त्यै भेदेन ग्रहणम् । आदिशब्दो ञिठादीनां परिग्रहाय; तेन दण्डोऽस्यास्तीति 'अत इनिठनौ' इति ठनि कृते दण्डिकीति न भवति, काशिषु भवेति 'काश्यादिभ्यष्ठञ्ञिठौ' इति ञिठे प्रत्यये कृते काशिकीति न भवति ।

**पदमञ्जरी**

'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' गोत्रं च चरणैः सह' इति जातिः, तत्रौत्सीत्यादौ चरितार्थमिमं ङीपं बाधित्वा जातिलक्षणो ङीष् प्राप्नोति । यदि तर्हि तस्य निबन्धनमस्ति तदेवाञ्ग्रहणमस्तु, किमत्राञ्ग्रहणेन? न वा जात्यधिकारात्, 'जातेः' इति हि तत्र वर्तते, अनधिकारे हि पुंयोगादाख्यायां ङीष्प्रसङ्गः—बैदस्य स्त्री बैदी ।

**ऊरुद्वयसीत्यादौ** 'प्रमाणे द्वयसच्दघ्नञ्मात्रचः' । **पञ्चतयीति** । 'संख्याया अवयवे तयप्' । द्वयसजादिषु अनुबन्धोच्चारणं प्रातिपदिकानां ग्रहणं मा भूत्—किमस्य द्वयसम्, किमस्य मात्रमिति । तयशब्दोऽपि तयतेः

**भावबोधिनी**

करने पर औत्स+ङीप् । ] औदपानी । उदपाने भवः आदि अर्थ में अञ् प्रत्यय । शेष प्रक्रिया पूर्ववत् । ] 'शार्ङ्गरवाद्यञः' ४।१।७३ इसमें पुनः अञ् का ग्रहण जाति को मानकर प्राप्त होने वाले ङीष् का बाध करने के लिए है ।

( १ ) द्वयसच्—ऊरुद्वयसी । जानुद्वयसी । ( २ ) दघ्नच्—ऊरुदघ्नी । जानुदघ्नी । ( ३ ) मात्रच्—ऊरुमात्री । जानुमात्री । [ ऊरुप्रमाणमस्याः, जानुप्रमाणमस्याः इस विग्रह में 'प्रमाणे-द्वयसच्-दघ्नञ् मात्रचः' ५।२।३७ से ( १ ) द्वयसच्, ( २ ) दघ्नच् और ( ३ ) मात्रच् ये तीन प्रत्यय होते हैं । इन तीनों का यहाँ ग्रहण है । ये प्रमाण अर्थ में होते हैं । जिस नदी का जलप्रमाण ऊरु और जानु-पर्यन्त होता है, उसे ऊरुद्वयसी, जानुद्वयसी, ऊरुदघ्नी, जानुदघ्नी, ऊरुमात्री, जानुमात्री कहा जाता है । इन तीनों प्रत्ययों में प्रस्तुत सूत्र ङीप् करता है । ]

**कञ्—यादृशी । तादृशी ( ३.२.६० ) । क्वरप्—इत्वरी । नश्वरी ( ३.२.१६३ ) । ख्युन्—आढ्यङ्करणी । सुभगङ्करणी ( ३.२.५६ ) । ❀ नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् ❀ ( म० भा० ४.१.१५ वा० ६ )**

**न्यासः**

कञोऽनुबन्धकरणम् 'आतोऽनुपसर्गे कः' इत्येवमादीनां निवृत्त्यर्थम् । **यादृशी तादृशीति** । 'त्यदादिषु दृशेरनालोचने कञ्च' इति कञ्, 'आ सर्वनाम्नः' इति यत्तदोरात्वम् । क्वरपोऽनुबन्धोच्चारणम् 'स्थेशभास' इत्यादिना विहितस्य वरचो निवृत्त्यर्थम् । यद्येवम्, एक एवानुबन्ध उच्चारणीयः, एकेनापि वरचो निवृत्तिः सिध्यत्येव ? सत्यमेतत् तथापि मन्दबुद्धीनां सुखप्रतिपत्तयेऽनुबन्धद्वयोच्चारणम् ।

**इत्वरी, नश्वरीति** । 'इण्नशिजसर्त्तिभ्यः क्वरप्' ह्रस्वस्य तुक् ।

ख्युनोऽनुबन्धोच्चारणं लाघवार्थम्; अन्यथा हि षष्ठीबहुवचने कृते नुटि नामि दीर्घत्वे च गुरुच्चारणं स्यात् । **आढ्यङ्करणीति** । अनाढ्य आढ्यः क्रियतेऽनयेति 'आढ्यसुभग' इत्यादिना ख्युन्, 'अरुर्द्विषदजन्तस्य मुम्' ।

**नञ्स्नञीकक् इत्यादि** । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम्--उत्तरसूत्रे चकारोऽनुक्त-

**पदमञ्जरी**

पचाद्यजन्तः सम्भवति । **ठनादिनिवृत्त्यर्थमिति** । दण्डोऽस्या अस्ति 'अत इनिठनौ' दण्डिका, 'काश्यादिभ्यष्ठञ्ञिठौ' काशिकेत्यादौ मा भूदित्येवमर्थम् । **तादृशीति** । 'त्यदादिषु दृशोऽनालोचने कञ्च', 'आ सर्वनाम्नः' । कञो ञकारोच्चारणम् 'आतोऽनुपसर्गे कः' गोदेत्यादौ मा भूत् । **इत्वरीति** । 'इण्नशिजसर्त्तिभ्यः क्वरप्' । **आढ्यङ्करणीति** । 'आढ्यसुभग' इत्यादिना ख्युन् ।

**नञ्स्नञीकक्तरुणतलुनानामिति** । **भाष्ये** तु 'कञ्क्वरपः' इत्येतावत् सूत्रम्, ख्युनः पाठोऽनार्ष इति

**भावबोधिनी**

तयप्—पञ्चतयी । दशतयी । [ पञ्च अवयवा अस्य अवयविनः—इस विग्रह में अवयवबोधक पञ्चन् और दशन् शब्दों से 'संख्याया अवयवे तयप्' ५।२।४२ से तयप् प्रत्यय होता है । "स्वादिष्वसर्वनामस्थाने" १।४।१७ से पदसंज्ञा करके नलोप होता है--पञ्चतय, दशतय । प्रस्तुत सूत्र से ङीप् = ई, भसंज्ञा अलोप । पाँच अवयवों वाली, दश अवयवों वाली । ठक्—आक्षिकी । शालाकिकी । [ अक्षैः दीव्यति, शलाकाभिः दीव्यति—इस विग्रह में 'तेन दीव्यति खनति, जयति जितम्' ४।४।२ से ठक् प्रत्यय आदिवृद्धि "ठस्येकः" ७।३।५० से ठ का इक आदेश भसंज्ञा के कारण अलोप आक्षिक, शालाकिक । ङीप् = ई, अलोप करने पर उक्त रूप होते हैं । ] ठञ्—लावणिकी । [ लवणं पण्यम् अस्याः इस विग्रह में 'लवणाट् ठञ्" ४।४।५२ से ठञ् प्रत्यय आदिवृद्धि, ठ का इक आदेश—लवण + इक, भसंज्ञा अलोप, ङीप् = ई लावणिक + ई, अलोप ] ठक् और ठञ् का भेद के साथ ग्रहण करना ठन् आदि की नितृत्ति के लिए है । [ यदि केवल ठ का ग्रहण रहता तो ठन् भी गृहीत हो जाता । उसका वारण करने के लिए इन दोनों को अलग-अलग ग्रहण किया है । ] कञ्—यादृशी । तादृशी [ इस प्रकार की । उस प्रकार की । यामिव पश्यन्ति जनाः, ताम् इव पश्यन्ति जनाः इस विग्रह में 'त्यदादिषु दृशोऽनालोचने कञ् च" ३।२।६० इससे कञ् = अ प्रत्यय "आ सर्वनाम्नः" ६।३।९१ से द् का आत्व, दीर्घ—यादृश, तादृश । ङीप् = ई, भत्वात् अलोप । ] क्वरप्—इत्वरी । नश्वरी । [ जाने वाली । नष्ट होने वाली । "इण्-नश्-जिसर्तिभ्यः क्वरप्" ३।२।१६३ से √इण् और √नश् से क्वरप् = वर प्रत्यय करने पर इ + वर, नश् + वर । 'ह्रस्वस्य पिति कृति तुक्' ६।१।११ से तुक्—इत्वर, नश्वर । ङीप् = ई, अलोप करने पर रूप बनते हैं । ] ख्युन्—आढ्यङ्करणी । सुभगङ्करणी [ अनाढ्यः, आढ्यः क्रियतेऽनया, असुभगः, सुभगः क्रियतेऽनया— इस विग्रह में 'आढ्यसुभग" ३।२।५६ से ख्युन् = यु प्रत्यय, यु का अन आदेश, उपपद समास, खिदन्त उत्तरपद मानकर 'अरुर्द्विषजन्तस्य मुम्' ६।३।६७ से मुम् = म् आगम, अनुस्वार परसवर्ण आढ्यङ्करण, सुभगङ्करण । ङीप् = ई, अलोप करने पर उक्त रूप सिद्ध होते हैं । ]

**[ नञ्— ] स्त्रैणी । [ स्नञ्— ] पौंस्नी । [ ईकक्—] शाक्तीकी, याष्टीकी । तरुणी, तलुनी ॥**

**१२६६. यञश्च ॥ १६ ॥ ( ४७१ )**

**'ङीप्' इत्येव । यञन्ताच्च प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति । गार्गी । वात्सी ।**

**न्यासः**

समुच्चयार्थः, तेन नञादिभ्योऽपि भविष्यतीति । **स्त्रैणी, पौंस्नीति** । स्त्रिया इयम्, पुंस इयमिति 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति नञ्स्नञौ । **शाक्तीकी, याष्टीकीति** । शक्तिः प्रहरणमस्या इति, यष्टिः प्रहरणमस्या इति 'शक्तियष्ट्योरीकक्' । **तरुणी तलुनीति** । अत्र वयो न विवक्षितम् । तरुणी सुरा, तलुनी सुरेति—अत्र सुरादौ विषये तरुणतलुनशब्दाभ्यां ङीब् वेदितव्यः, न हि सुरादीनां वयोऽस्ति, तस्य प्राणिधर्मत्वात् । अभिनवत्वमात्रं सुरादीनां तरुणतलुनशब्दाभ्यां गम्यते । यदा तु वयो विवक्ष्यते, तदा गौरादिपाठान् ङीषा भवितव्यम् । तत्र स्वरे विशेषः—तरुणतलुनशब्दौ हि 'कृवृदारिभ्य उनन्' 'त्रो रश्च लो वा' इत्युनन्प्रत्ययान्तौ व्युत्पादितौ, अतो नित्स्वरेणाद्युदात्तौ । तत्र ङीपि सत्याद्युदात्तत्वं भवति, ङीषि तु सति प्रत्ययस्वरेणान्तोदात्तत्वम् ॥ १५ ॥

**यञश्च ॥ गार्गी । वात्सीति** । गर्गवत्सशब्दाभ्यां स्त्रियामपत्ये 'गर्गादिभ्यो यञ्' इति यञ्, ङीप् 'यस्येति च' इत्यकारस्य लोपः, 'हलस्तद्धितस्य' इति यकारस्य च ।

**पदमञ्जरी**

तस्याप्युपसंख्यानमेव कृतम् । **स्त्रैणी, पौंस्नीति** । 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' । **शाक्तीकी, याष्टीकीति** । प्रहरणाधिकारे 'शक्तियष्ट्योरीकक्' । **तरुणी, तलुनीति** । एतयोरवयोऽर्थं ग्रहणम्—तरुणी सुरेति, वयसि तु 'वयसि प्रथमे' इत्येव सिद्धम् ? न सिध्यति; गौरादिपाठान्ङीष् प्राप्नोति । तस्माद्वयस्यवयसि च ङीब्ङीषो-विकल्पः । क्वचिद् **गौरादिपाठात्सिद्धमिति** पठ्यते, तद्रूपमात्रसिद्ध्यभिप्रायं द्रष्टव्यम्, स्वरार्थं तूपसंख्यानं कर्तव्यमेव ॥ १५ ॥

**यञश्च ॥ आपत्यग्रहणमिति** । अपत्ये भव आपत्यः, यञ्, आपत्यादिति सूत्रं कर्तव्यमित्यर्थः । **द्वैत्येति** ।

**भावबोधिनी**

ॐ'नञ्, स्नञ्, ईकक् प्रत्ययान्त और तरुण, तलुन—शब्दों से ङीप् होता है ।' उदा०—स्त्रैणी । पौंस्नी [ अपत्यादि अर्थों में 'स्त्री और पुंस् शब्दों से "स्त्री-पुंसाभ्यां नञ्स्नञौ भवनात्" ४।१।८७ से क्रमशः नञ् और स्नञ् प्रत्यय होते हैं । आदिवृद्धि करने पर स्त्रैण और पौंस्न शब्दों से ङीप् = ई होता है । ] शाक्तीकी । याष्टीकी । [ शक्तिः प्रहरणम् अस्याः, यष्टिः प्रहरणम् अस्याः—इस विग्रह में 'शक्तियष्ट्योरीकक्' ४।४।५९ से ईकक् प्रत्यय होता है । कित् होने से "किति च" ७।२।११८ से आदिवृद्धि भसंज्ञा होने से इ का लोप—शाक्तीक, याष्टीक । ङीप् = इ, अलोप करने पर उक्त रूप होते हैं । ] तरुणी, तलुनी । [ युवती स्त्री । दोनों में तरुण + ङीप्, तलुन + ङीप्, भत्वात् अलोप ] ।

विमर्श—कुछ अन्य सूत्रों के समान यहाँ भी काशिकाकार ने वार्तिक मिला कर सूत्र रूप लिखा है । भाष्यादि में—"टिड्ढाणञ्.......क्वरपः" यही सूत्ररूप उपलब्ध होता है । परन्तु काशिकाकार ने "टिड्ढाणञ्.......ख्युनाम्" यह सूत्र-रूप रखा है । और इसी के अनुसार ख्युन् को सूत्रांश मानकर उदाहरण दिया है । परन्तु यह प्रामादिक है । भाष्य में 'ख्युन उपसंख्यानम्' इसके आगे "अत्यल्पमिदमुच्यते 'ख्युन्' इति—नञ् स्नञ्—ईकक्—ख्युन्—तरुण—तलुनानामुपसंख्यानम्" ऐसा वार्तिक प्राप्त होता है । सिद्धान्तकौमुदीकार ने भी यही वार्तिक रूप से उद्धृत किया है । कैयट ने स्पष्ट लिखा है—"सूत्रे ख्युनः पाठोऽनार्षः ।" ( कै० प्रदीप ४।१।१५ ) अतः ख्युन् को वार्तिकांश मानना ही प्रामाणिक है ॥ १५ ॥

ङीप्—इसकी अनुवृत्ति होती है । यञन्त प्रातिपदिक से स्त्रीलिङ्ग में ङीप् प्रत्यय होता है । उदा०—गार्गी । वात्सी । [ गर्गस्य गोत्रापत्यं स्त्री—इस विग्रह में गर्गशब्द से "गर्गादिभ्यो यञ्" ४।१।१०५ से यञ् आदिवृद्धि, अलोप करने पर गार्ग्य शब्द बनता है । इस यञन्त से प्रस्तुत सूत्र ङीप् करता है—गार्ग्य + ङीप् = ई, भसंज्ञा के फलस्वरूप अलोप कर देने पर "हलस्तद्धितस्य" ६।४।१५० से य् लोप होता है । इसी प्रकार वत्सस्य गोत्रापत्यं स्त्री—इस अर्थ में वात्सी बनता है । ]

❀ आपत्यग्रहणं कर्तव्यम्[1] ❀ ( वा० १ )। इह मा भूत् - 'द्वीपादनुसमुद्रं यञ्,' द्वैप्या। योगविभाग उत्तरार्थः ॥

**१२६७. प्राचां ष्फ तद्धितः ॥ १७ ॥ (४७३)**

**'यञः' इत्येव। प्राचामाचार्याणां मतेन यञन्ताद् स्त्रियां ष्फः प्रत्ययो भवति, स च तद्धितसंज्ञः। षकारो**

**न्यासः**

**अपत्यग्रहणं कर्तव्यमिति**। अपत्यं गृह्यते येन तदपत्यग्रहणम्। व्याख्यानमेतदुक्तं भवति—तथा व्याख्यानं कर्तव्यं यथा यञो विशेषणमपत्यं गृह्येत। तत्रेदं व्याख्यानम्—उत्तरसूत्रे विकल्पार्थं प्राचामिति वचनमनेनापि योगेन सम्बध्यते, व्यवस्थितविभाषा च सा विज्ञायते, तेनापत्येऽर्थे यो यञ् विहितस्तदन्तान्नित्यं भवति, यस्तु द्वीपशब्दाज्जातादावर्थे विहितस्तदन्तान् न भवतीति। अथ योगविभागः किमर्थः, न पूर्वसूत्र एव अञ्ग्रहणं क्रियेतेत्यत आह—**योगविभाग उत्तरार्थ इति**। उत्तरसूत्रे यञन्तादेव ष्फो यथा स्यात्, टिदादिभ्यो मा भूदिति ॥ १६ ॥

**प्राचां ष्फ तद्धितः ॥ षकारो ङीषर्थ इति**। 'षिद्गौरादिभ्यश्च' इति ङीष् यथा स्यात्। ननु च क्रियमाणेऽपि षकारे नैव ङीषा भवितव्यम्, ष्फप्रत्ययेनैव स्त्रीत्वस्याभिव्यक्तत्वादित्यत आह—**प्रत्ययद्वयेनेत्यादि**। न हि केवलः ष्फः स्त्रीत्वमभिव्यङ्क्तुं समर्थ इति ङीषमपेक्षते। तेन सहिताभ्यामेव ताभ्यां स्त्रीत्वं व्यज्यत इति ङीषा भवितव्यम्। **तद्धितग्रहणमित्यादि**। 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकसंज्ञा यथा स्यादित्येवमर्थं तद्धितग्रहणम्। प्रातिपदिकसंज्ञा तु ङीष् यथा स्यादित्येवमर्थम्। ननु च विनापि तया षित्करणसामर्थ्यादेव

**पदमञ्जरी**

भवादावर्थे यञ्। **योगविभाग उत्तरार्थ इति**। उत्तरत्र यञ एवानुवृत्तिर्यथा स्यात्, टिदादीनां मा भूदिति ॥१६॥

**प्राचां ष्फ तद्धितः ॥ षकारो ङीषर्थ इति**। ननु च ष्फप्रत्ययेनैव स्त्रीत्वस्य द्योतितत्वान्ङीषा न भाव्यम्? तत्राह—**प्रत्ययद्वयेनेति**। **तद्धितग्रहणं प्रातिपदिकसंज्ञार्थमिति**। प्रातिपदिकसंज्ञा तु ङीषर्था। ननु च सिद्धोऽत्र

**भावबोधिनी**

'आपत्य ग्रहण करना चाहिये।' [ अपत्ये भवः—आपत्यः, अपत्य अर्थ में होने वाले यञ् का ही ग्रहण करना चाहिये। ] यहाँ न हो—''द्वीपादनुसमुद्रं यञ्'' ४।३।१० द्वैप्या। [ द्वीपे भवा—इस अर्थ में यञ् प्रत्यय है। अपत्य अर्थ में नहीं है। अतः ङीप् न होकर टाप् होता है ''टिड्ढाणञ्'' ४।१।१५ में ही यञ् का ग्रहण क्यों नहीं किया गया ? ] योग-विभाग = अलग सूत्र बनाना उत्तर सूत्र [ में अनुवृत्ति ] के लिये है।

**विमर्श**—'यञश्च' ४।१।१६ यह यञन्त सामान्य से स्त्री अर्थ में ङीप् नहीं करता है, अपितु केवल अपत्य अर्थ में होने वाले यञ्-प्रत्ययान्त से ही ङीप् करता है। महाभाष्य में यह वार्तिक है—'आपत्यग्रहणं द्वीपाद्यञः प्रतिषेधार्थम्' ( म० भा० ४।१।१६ वा० १ )। न्यासकार ने 'अपत्यग्रहणम्' यह पाठ माना है 'अपत्यं गृह्यते येन तदपत्यग्रहणम्'। परन्तु यह भाष्यविरुद्ध है। पदमञ्जरीकार ने भाष्यानुसारी ही पाठ माना है ॥ १६ ॥

'यञः' इसकी अनुवृत्ति होती है। पूर्व के आचार्यों के मत से यञन्त प्रातिपादिक से स्त्रीलिङ्ग में ष्फ प्रत्यय होता है और वह तद्धितसंज्ञक होता है। षकार अनुबन्ध [ षिद्गौरादिभ्यश्च' ४।१।४१ से ] ङीष् करने के लिये है। यहाँ दोनों प्रत्ययों से स्त्रीत्व की अभिव्यक्ति होती है। तद्धितग्रहण प्रातिपादिक संज्ञा के लिये है। उदा०—गार्ग्यायणी। वात्स्यायनी [ गर्गस्य अपत्यं स्त्री-इस अर्थ में ''गर्गादिभ्यो यञ्'' ४।१।१०५ से यञ् करने के बाद गार्ग्य बनाकर प्रस्तुत सूत्र से ष्फ

---

१. 'आपत्यग्रहणं द्वीपाद्यञः प्रतिषेधार्थम्'—इत्यादेर्वार्त्तिकत्वेन मुद्रितपुस्तके पाठो न दृश्यते।

**ङीषर्थः । प्रत्ययद्वयेनेह स्त्रीत्वं व्यज्यते । तद्धितग्रहणं प्रातिपदिकसंज्ञार्थम् । गार्ग्यायणी । वात्स्यायनी । अन्येषाम्--गार्गी । वात्सी ।**

**'सर्वत्र'-ग्रहणमुत्तरसूत्रादिहापकृष्यते, बाधकबाधनार्थम् । आवट्यात् ( ४.१.७५ ) चापं वक्ष्यति, तमपि बाधित्वा प्राचां ष्फ एव यथा स्यात् – आवट्यायनी ॥**

**न्यासः**

ङीष् भविष्यति, अन्यथा हि षित्करणमनर्थकं स्यात्, प्रयोजनान्तराभावात्; न च 'त्रपूष् लज्जायाम्' इत्यतोऽपि धातोः स्यादित्यतिप्रसङ्ग आशङ्कनीयः, धातोः षित्करणस्य 'षिद्भिदादिभ्योऽङ्' इत्यङ्विधौ चरितार्थत्वात्, अत इति चाधिकारात्? सत्यमेतत्, प्रतिपत्तिगौरवं तु स्यात्। तस्मात् सुखप्रतिपत्तये तद्धितग्रहणम् ।

**सर्वत्रग्रहणमित्यादि** । उत्तरसूत्रे सर्वत्रग्रहणमनर्थकम् । तद्धि सर्वेषामाचार्याणां मतेन यथा स्यादित्येवमर्थं क्रियते, एतच्चाप्रयोजनम्; अस्वरितत्वादेव हि प्राग्ग्रहणस्य सर्वेषां मतेन भवितव्यमिति । तस्मादुत्तरसूत्रे सर्वत्रग्रहणमनर्थकम्, अतस्तदिहापकृष्यते । किमर्थमित्याह—**बाधकबाधनार्थमिति** । **आवट्याच्चापं वक्ष्यतीत्यादिना** । बाधकबाधनार्थमित्यस्यैवार्थं विस्पष्टीकरोति । आवट्याच्चापोऽवकाशः—उदीचां मतेन आवट्येति, अवटशब्दाद् गर्गादियञन्ताच्चाप्, 'प्राचां ष्फ तद्धितः' इत्यस्यावकाशः--गार्ग्यायणीति; आवट्यात् प्राचामुभयप्रसङ्गे परत्वाच्चाप् स्यात् । सर्वत्रग्रहणात् ष्फ एव भविष्यति—आवट्यायनीति ॥ १७ ॥

**पदमञ्जरी**

ङीष्, पित्करणसामर्थ्यात्, धातोस्तु त्रपादेः षित्त्वमङ्विधौ चरितार्थमिति त्रपा, क्षमेत्यादौ ङीषभावः? तदेतत्सान्न्यासिकं तिष्ठतु तावत् ।

**सर्वत्रग्रहणमित्यादि** । सर्वत्रग्रहणं तावद् उत्तरसूत्रे न कर्तव्यम्, आरम्भसामर्थ्यादेव 'प्राचाम्' इत्यस्य निवृत्तौ सर्वत्र सिद्धत्वात्, अतस्तदिहापकृष्यते, तदयमर्थो भवति - सर्वत्र बाधकविषयेऽपि प्राचां मतेन यञन्तात् ष्फो भवतीति । एवं सप्तम्यर्थोऽपि समञ्जसो भवति । **आवट्याच्चापं वक्ष्यतीति** । असति पुनरपकर्षे आवट्याच्चाबुदीचां मते सावकाशः परत्वात् ष्फं बाधेत, सर्वत्रग्रहणात् ष्फ एव भवति । एवं च 'षाच्च यञः' इति चाब्विषयेऽपि प्राचां ष्फ एव भवति—शार्कराक्ष्यायणी, पौतिमाष्यायणी, गोकक्ष्यायणीति ॥ १७ ॥

**भावबोधिनी**

प्रत्यय होता है । 'षः प्रत्ययस्य' १।३।६ से ष की इत्संज्ञा, लोप, 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' ७।१।२ से फ् का आयन् आदेश करने के बाद तद्धितान्त प्रातिपदिक के षित् होने से 'षिद्गौरादिभ्यश्च' ४।१।४१ से ङीष् = ई प्रत्यय, न का ण– गार्ग्यायणी । इसी प्रकार वत्स + यञ् = वात्स्य + ष्फ = आयन = वात्स्यायन + ङीष्, वत्स ऋषि की स्त्री अपत्य । ] अन्य आचार्यों के मत में तो—गार्गी । वात्सी । [ पूर्ववर्ती सूत्र से ङीप् ही होता है । ]

अग्रिम सूत्र से बाधक का बाध करने के लिए 'सर्वत्र' का अपकर्षण होता है, अर्थात् पूर्व आचार्यों के मत से सभी में ष्फ प्रत्यय ही होता है । आवट्य से चाप् प्रत्यय [ 'आवट्याच्च' ४।१।७५ ] कहा जायगा, उसका भी बाध करके पूर्व के आचार्यों के मत में ष्फ ही हो—आवट्यायनी । [ अवटस्य स्त्री अपत्यम् – इस विग्रह में "गर्गादिभ्यो यञ्" ४।१।१०५ से यञ् प्रत्यय, आदिवृद्धि आदि कार्य करने के बाद आवट्य शब्द बनता है । यहाँ "आवट्याच्च" ४।१।७५ से चाप् प्राप्त होता है । परन्तु सर्वत्रग्रहण होने से पूर्व के आचार्यों के मत में ष्फ ही होने से आवट्यायनी यही रूप होता है । उत्तर के आचार्यों के मत में चाप् प्रत्यय होने से आवट्या यह रूप होता है । इसी उद्देश्य से 'सर्वत्र लोहितादिकतन्तेभ्यः" ४।१।१८ से 'सर्वत्र' का अपकर्षण किया गया है ॥ १७ ॥

**१२६८. सर्वत्र लोहितादिकतन्तेभ्यः ॥ १८ ॥ ( ४७६ )**

**'यञः' इत्येव । पूर्वेण विकल्पे प्राप्ते नित्यार्थं वचनम् । सर्वत्र लोहितादिभ्यः कतपर्यन्तेभ्यो (४.१.१०५) यञन्तेभ्यः स्त्रियां ष्फः प्रत्ययो भवति । कतशब्दः स्वतन्त्रं यत्प्रातिपदिकं तदवधित्वेन परिगृह्यते - कपिशब्दात् परः कपि कतेति, न प्रातिपदिकावयवः कुरुकतेति । लौहित्यायनी । शांसित्यायनी । बाभ्रव्यायणी ॥**

**कण्वात्तु शकलः पूर्वः कतादुत्तर इष्यते ।**
**पूर्वोत्तरौ तदन्तादी ष्फाणौ तत्र प्रयोजनम् ॥ ( म० भा० ४.१.१८ )**

**न्यासः**

**सर्वत्र लोहितादिकतन्तेभ्यः ॥ स्वतन्त्रमिति** । यो ह्यन्यस्यावयवभूतो न भवति केवलः कतशब्दस्तत् स्वतन्त्रं प्रातिपदिकम् । यस्तु कुरुकतशब्दस्यावयवः कतशब्दस्तस्य स्वातन्त्र्यं नास्ति, समुदायप्रतिबद्धत्वात् । कः पुनरसौ कतशब्दः स्वतन्त्रं प्रातिपदिकमित्यत आह—**कपिशब्दादित्यादि । लौहित्यायनी । शांसित्यायनीति ।** लोहितशंसितशब्दाभ्यां गर्गादित्वाद् यञ् । **बाभ्रव्यायणीति** । अत्रापि बभ्रुशब्दात् 'मधुबभ्र्वोर्ब्राह्मणकौशिकयोः' इति यञ्, 'आर्गुणः', 'वान्तो यि प्रत्यये' इति वान्तादेशः, यञन्तेभ्यः ष्फः ।

**कण्वात्त्वित्यादि** । कण्वशब्दात् पूर्वः शकलशब्द इष्यते, कतशब्दात् तूत्तरः । किमेवं सति भवतीत्याह—**पूर्वोत्तरावित्यादि** । एवं सति पूर्वोत्तरौ गणौ तदन्तादी भवतः । तच्छब्देन शकलशब्दः प्रत्यवमृश्यते शकलशब्दोऽन्त आदिश्च यथाक्रमं ययोः पूर्वोत्तरयोर्गणयोस्तौ तदन्तादी पूर्वोत्तरगणौ । लोहितादिः शकलशब्दान्तो भवति पूर्वो गणः । उत्तरो गणः कण्वादिः शकलशब्दादिर्भवति । किं पुनः पूर्वोत्तरयोर्गणयोस्तदन्तादित्वे—

**पदमञ्जरी**

**सर्वत्र लोहितादिकतन्तेभ्यः ॥** लोहितादीति पृथक्पदं लुप्तविभक्तिकम्, पूर्वत्र च प्राचां मते ष्फो विहितः, इह तु सर्वत्र मते । कोऽर्थः ? सर्वेषां मत इत्यर्थः, तदाह—**सर्वेषामाचार्याणां मत इति** । मतेनेति तृतीयान्तपाठे सूत्रे षष्ठ्यन्तात् त्रल् । **स्वतन्त्रमिति** । योऽन्यस्यावयवो न भवति, तत्स्वतन्त्रं प्रातिपदिकम्, कः पुनरसावित्यत्राह - **कपिशब्दात्पर इति** । लौहित्यायनीत्यादिर्गर्गाद्यन्तर्गणः । बभ्रुशब्दोऽपि तत्रैव पठ्यते, यञ्तु 'मधुबभ्र्वोर्ब्राह्मणकौशिकयोः' इत्यनेनैव भवति ।

**कण्वात्त्वित्यादि** । कण्वशब्दात् पूर्वः कतशब्दात्तूत्तरः शकलशब्द इष्यते, कतशकलकण्वेत्येवमेषां संनिवेशः कार्य इत्यर्थः । किमेवं सति भवति ? इत्याह—**पूर्वोत्तराविति** । शकलशब्दोऽन्त आदिश्च यथाक्रमं ययोः

**भावबोधिनी**

'यञः' इसकी अनुवृत्ति होती है । पूर्ववर्त्ती सूत्र [ में प्राचाम् का ग्रहण होने ] से विकल्प प्राप्त रहने पर नित्य करने के लिये यह सूत्र है । लोहित से लेकर कत-शब्द-पर्यन्त यञ् प्रत्ययान्त शब्दों से सर्वत्र = सभी के मत में अर्थात् नित्य ष्फ प्रत्यय होता है । [ गर्गादि गण में पठित ] कपि शब्द के बाद वाला कत यह स्वतन्त्र जो प्रातिपदिक है उसी को यहाँ के रूप में लिया जाता है; न कि कुरुकत इस प्रातिपदिक का अवयव कत शब्द । उदा०—लौहित्यायनी [ लोहित नामक किसी व्यक्ति की स्त्री अपत्य अर्थ में 'गर्गादिभ्यो यञ्' ४।१।१०५ से लोहित शब्द से यञ् प्रत्यय, आदिवृद्धि करने के बाद प्रस्तुत सूत्र से ष्फ = फ् = आयन् होता है । ङीष् = ई, अलोप करने पर उक्त रूप सिद्ध होता है । ] शांसित्यायनी । [ शंसित नामक व्यक्ति की स्त्री अपत्य । शंसित + यञ् + ष्फ = आयन + ङीष् ] बाभ्रव्यायणी [ बभ्रु नामक व्यक्ति की स्त्री अपत्य । बभ्रु + यञ् + ष्फ = आयन + ङीष् ] ।

[ गर्गादिगण के अन्तर्गत लोहितादि में ] कण्व शब्द से पूर्व और कत के बाद शकल शब्द [ का पाठ - कत—शकल—कण्व—ऐसा ] इष्ट है । पूर्वगण और उत्तरगण को तदन्तादि अर्थात् जो कण्वादि हैं वे शकलादि हैं और जो कतपर्यन्त हैं वे शकलपर्यन्त हैं । इस प्रकार के पाठ में ष्फ और अण् प्रत्यय करना प्रयोजन है । अर्थात् शाकल्यायनी

**प्रातिपदिकेष्वन्यथा पाठः स एवं व्यवस्थापयितव्य इति मन्यते। 'कतन्तेभ्यः' इति बहुव्रीहितत्पुरुषयोरेकशेषः, तथा 'कण्वादिभ्यो गोत्रे' (४.२.१११) इति। तत्र तत्पुरुषवृत्त्या संगृहीतो मध्यपाती शकलशब्दो यञन्तः**

**न्यासः**

प्रयोजनमित्याह - **ष्फणौ तत्र प्रयोजनमिति।** पूर्वस्य गणस्य शकलान्तत्वे ष्फः प्रयोजनम्। उत्तरस्य शकलादित्वेऽण् प्रयोजनम्।

**प्रातिपदिकेष्वन्यथा पाठ इति।** कपिकत, कुरुकत, अनडुह्, कण्व, शकल—इत्यनयानुपूर्व्या प्रातिपदिकेषु पाठः। **स एवं व्यवस्थापयितव्य इति।** 'कण्वात्तु शकलः पूर्वः' इत्यादिना यानुपूर्वी दर्शिता तया व्यवस्थापयितव्यः। अत एतदुक्तं भवति—कुरुकत, अनडुह्—इत्येतावन्यस्मिन् स्थाने पठितव्यौ, शकलशब्दस्तु कतकण्वशब्दयोर्मध्ये पठितव्यः। **मन्यत इति।** श्लोकवार्त्तिककारः। कथं पुनरेवं पाठे सति शकलशब्दात् ष्फाणो सिध्यत इत्यत आह—**कतन्तेभ्य इत्यादि।** कतस्यान्तः कतन्त इति तत्पुरुषः, 'कतन्तेभ्यः' इति निपातनात् पररूपत्वम्। कतशब्दोऽन्ते येषां लोहितादीनां ते कतन्ता इति बहुव्रीहिः। कतन्तश्च शकलशब्दः, कतन्ताश्च लोहितादय इति कतन्तश्च कतन्ताश्चेति सरूपाणामेकशेषः। **तथेत्यादिना** यथा कतन्तेभ्य इत्यत्र बहुव्रीहितत्पुरुषयोरेकशेषः, तथा कण्वादिभ्य इत्यत्रापीति दर्शयति। कण्वस्यादिः कण्वादिः शकलशब्दः, कण्वशब्द आदिर्येषां गोकक्षादीनां ते कण्वादयः, कण्वादिश्च कण्वादयश्च कण्वादयः, पूर्ववदेकशेषः। **तत्पुरुषवृत्त्या संगृहीत इति।** कतन्तेभ्यः' इत्यत्र 'कण्वादिभ्यः' इत्यत्र तत्पुरुषवृत्त्येति तत्पुरुषसमासेन। **मध्यपातीति।** कतकण्वशब्दयोर्गणयोर्वा। **प्रत्ययद्वयमिति।** ष्फप्रत्ययम्, अण्प्रत्ययञ्च। **प्रतिपद्यत इति।**

**पदमञ्जरी**

पूर्वोत्तरयोर्गणयोस्तौ तथोक्तौ। पूर्वो गणो लोहितादिः शकलशब्दान्तो भवति, उत्तरश्च गणः शकलशब्दादिर्भवतीत्यर्थः। सत्यमेवं भवति, प्रयोजनं तु किम्? इत्यत आह—**ष्फाणाविति।**

श्लोकं व्याचष्टे—**प्रातिपदिकेष्वन्यथा पाठ इति।** कपिकत, कुरुकत, अनडुह्, कण्व, शकलेत्येवं गर्गादिषु गणसन्निवेशः। **स एवं व्यवस्थापयितव्य इति।** एवमिति श्लोकोक्त्याऽऽनुपूर्व्येत्यर्थः। अनडुह्कुरुकतशब्दावस्मात्स्थानादपकृष्यान्यत्र पाठ्यौ, शकलशब्दस्तु कतकण्वयोर्मध्ये पठितव्य इति यावत्। नन्वेवं गणद्वयादपि प्रच्युतः शकलशब्दः ष्फाणौ द्वावपि न प्रतिपद्येत, तत्राह—**कतन्तेभ्य इति। बहुव्रीहितत्पुरुषयोरेकशेष इति।** कतस्यान्तः समीपभूतः कतन्त इति तत्पुरुषेण शकलशब्द उच्यते, शकन्ध्वादित्वान्निपातनाद्वा पररूपम्। **तथा** कतोऽन्तो येषां तानि कतन्तानीति बहुव्रीहिः, तत्र बहुव्रीहितत्पुरुषयोः सह विवक्षायां बहुव्रीहिः शिष्यते; 'स्वरभिन्नानां यस्योत्तरस्वरविधिः स शिष्यते' इति वचनात्। **तथेत्यादि।** 'कण्वादिभ्यः' इत्यपि बहुव्रीहितत्पुरुषयोरेकेशेष इत्यर्थः। कण्वस्यादिः समीपभूतः कण्वादिः शकलशब्दः, कण्व आदिर्येषां तानि कण्वादीनि, ततः

**भावबोधिनी**

यहाँ प्रस्तुत सूत्र से ष्फ होता है और शाकल्यस्य छात्राः इस अर्थ में "कण्वादिभ्यो गोत्रे" ४।२।१११ से **अण् होकर** शाकलाः छात्रा ये रूप सिद्ध होते हैं।

[ गर्गादिगण ४।१।१०५ में ] प्रातिपदिकों में अन्य प्रकार का [ कपि, कत, कुरुकत, अनडुह, कण्व, शकल—इस आनुपूर्वी क्रम से ] पाठ है, इसे इस प्रकार [ —कत, शकल, कण्व— ] व्यवस्थापित करना चाहिये, ऐसा [ आचार्य ] मानते हैं। [ सूत्रस्थ ] कतन्तेभ्यः—इस पद में बहुव्रीहि और तत्पुरुष का एकशेष है, [ भाव यह है—कतः अन्तो यस्य सः कतन्तः यह बहुव्रीहि और कतस्य अन्तः = समीपः—यह तत्पुरुष है। कत + अन्त "शकन्ध्वादिषु पररूपं वाच्यम्" [ वा० ] से पररूप होने से कतन्त बनता है। कतन्तश्च कतन्तश्च —इनका एकशेष रह जाता है। यहाँ तत्पुरुष के कारण शकल के भी 'लोहितादि—कतन्त' हो जाने से ष्फ हो जाता है और शाकल्यायनी बनता है। ]

**प्रत्ययद्वयमपि प्रतिपद्यते । शाकल्यायनी । शाकल्यस्येमे छात्राः शाकलाः ( म० भा० ) ॥**

**१२६९. कौरव्यमाण्डूकाभ्यां च ॥ १९ ॥ ( ४७७ )**

**कौरव्य, माण्डूक - इत्येताभ्यां स्त्रियां ष्फः प्रत्ययो भवति । कुर्वादिभ्यो ण्ये ( ४.१.१५१ ) कृते 'ढक्च मण्डूकात्' ( ४.१.११९ ) इत्यणि च । यथाक्रमं टाब्ङीपोरपवादः । कौरव्यायणी । माण्डूकायनी ।**

**कथं कौरवी सेना ? 'तस्येदम्' ( ४.३.१२० ) विवक्षायामणि कृते भविष्यति ।**

**न्यासः**

प्राप्नोति । तत्पुरुषवृत्त्या हि तस्य संग्रहे सत्यस्य सूत्रस्यायमर्थो जायते-- कतन्ताच्छकलशब्दात् तथा यञन्तात् कतन्तेभ्यश्च लोहितादिभ्यो यञन्तेभ्यः स्त्रियां ष्फप्रत्ययो भवतीति । तेन ष्फप्रत्ययं प्रतिपद्यते शकलशब्दः । **शाकल्यायनीति** । 'कण्वादिभ्यो गोत्रे' इत्यत्रापि तत्पुरुषवृत्त्या शकलशब्दस्य संग्रहे सत्ययमर्थो भवति । कण्वादेः शकलशब्दान्ताद् गोत्रप्रत्ययान्तात् कण्वादिभ्यो गोकक्षान्तेभ्यो गोत्रप्रत्ययान्तेभ्यः शैषिकेष्वर्थेष्वण्प्रत्ययो भवतीति । तेनाऽण्प्रत्ययमपि शकलशब्दः प्रतिपद्यते--शाकल्यस्येमे छात्राः शाकला इति ॥ १८ ॥

**कौरव्यमाण्डूकाभ्याञ्च ॥ कथं कौरवीति** । कौरव्यशब्दादेवात्र ङीब् विहित इति मन्यमानस्य प्रश्नः । कुरुशब्दादेवात्राणन्ताद् ङीब् विहित इति दर्शयन्नाह--**तस्येदमित्यादि** ।

**पदमञ्जरी**

पूर्ववदेकशेषः । तत्रबहुव्रीहितत्पुरुषयोर्मध्ये तत्पुरुषसमासेन । **मध्यवर्तीति** । गणद्वयस्य । **प्रत्ययद्वयमपीति** । ष्फाणावित्यर्थः । **शाकला इति** । 'आपत्यस्य च' इति यलोपः ।

अपर आह—पूर्वोत्तरौ तदन्तादी ग्राह्याविति शेषः, पूर्वो गणस्तदन्तो ग्राह्यः--सर्वत्र लोहितादि-शकलान्तेभ्य इति, उत्तरो गणस्तदादिर्ग्राह्यः—शकलादिभ्यो गोत्र इति । एवं ष्फाणौ प्रयोजनमिति ॥ १८ ॥

**कौरव्यमाण्डूकाभ्यां च ॥ कौरव्यमाण्डूकयोरित्यादि** । अस्मिन्सूत्रे आसुरेरपि ग्रहणं कर्तव्यम् । आसुरि-कौरव्यमाण्डूकेभ्यश्चेति वक्तव्यमित्यर्थः ।

**भावबोधिनी**

इसी प्रकार 'कण्वादिभ्यो गोत्रे' ४।२।१११ यहाँ भी [ बहुव्रीहि और तत्पुरुष का एकशेष है—कण्वः आदिः येषां ते तथा कण्वस्य आदिः—इन अर्थों में 'कण्वादि' शब्द है । अतः तत्पुरुष पक्ष में शकल शब्द कण्व का आदि बन जाता है अतः अण् होने पर—शाकलाः यह रूप होता है । ] एकशेष मान लेने पर तत्पुरुष वृत्ति से [ कतस्य अन्तः, कण्वस्य आदिः ] संगृहीत मध्यवर्ती शकल शब्द यञन्त होता हुआ [ ष्फ और अण् ] दोनों प्रत्ययों को प्राप्त करता है । उदा०—शाकल्यायनी । शाकल्यस्य इमे छात्राः—शाकलाः ॥ १८ ॥

कौरव्य और माण्डूक्य - इन शब्दों से स्त्रीलिङ्ग में ष्फ प्रत्यय होता है । "कुर्वादिभ्यो ण्यः" ४।१।१५१ इससे [ कुरु शब्द से ] ण्य प्रत्यय करने पर [ कुरु + ण्य = य, आदिवृद्धि, "ओर्गुणः" ६।४।२४६ से उ का गुण और अव् आदेश—कौरव्य यह बनता है ] और [ मण्डूक शब्द से ] "ढक्च मण्डूकात्" ४।१।११६ इस सूत्र से अण् प्रत्यय करने पर [ मण्डूक + अण्, आदिवृद्धि, भसंज्ञा, अकारलोप होकर माण्डूक बनता है ] । इनमें क्रमशः [ कौरव्य से ] टाप् और [ माण्डूक से ] ङीष् का अपवाद यह [ ष्फ ] है । उदा०—कौरव्यायणी । माण्डूकायनी । [ कुरु राजा की स्त्री अपत्य इस अर्थ में—कौरव्य + ष्फ = फ = आयन्, ङीष् = ई । मण्डूक ऋषि की स्त्री अपत्य इस अर्थ में माण्डूक + ष्फ = फ् = आयन्, ङीष् = ई । ]

कौरवी सेना - यह प्रयोग कैसे होता है ? 'तस्येदम्' ४।३।१२० [ कुरु राजा की यह है--इस प्रकार सम्बन्धी अर्थ की ] विवक्षा में अण् करने पर हो जायगा । [ कुरु + अण् = अ, आदिवृद्धि, "ओर्गुणः" ६।४।२४६ उकार का गुण, अवादेश, कौरव, "टिड्ढाणञ्" ४।१।१५ से ङीप् = ई ] "कौरव्य और माण्डूक में आसुरि शब्द का भी ग्रहण कर लेना चाहिये, अर्थात् आसुरि से भी ष्फ कहना चाहिये । उदा०—आसुरायणी । [ असुर की स्त्री अपत्य इस अर्थ में--

* **कौरव्यमाण्डूकयोरासुरेरुपसंख्यानम्** * ( म० भा० ४.१.१९ वा० १ ) आसुरायणी। **शैषिकेष्वर्थेषु 'इञश्च'** ( ४.२.११२ ) **इत्यणि प्राप्ते छप्रत्यय इष्यते** । आसुरीयः कल्पः ( म० भा० )॥

**१२७०. वयसि प्रथमे ॥ २० ॥ ( ४७८ )**

**कालकृतशरीरावस्था यौवनादिः = वयः। प्रथमे वयसि यत्प्रातिपदिकं श्रुत्या वर्तते ततः स्त्रियां ङीप् प्रत्ययो भवति। कुमारी। किशोरी। वर्करी।**

**न्यासः**

**कौरव्यमाण्डूकयोरित्यादि**। कौरव्यमाण्डूकयोरनेन सूत्रेण यत् कार्यं विधीयते तस्यासुरेरप्युपसंख्यानम् = प्रतिपादनं कर्तव्यम्। आसुरेरपि ष्फः प्रतिपादयितव्य इति यावत्। तत्रेदं प्रतिपादनम्—चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेनासुरिशब्दादपि ष्फो भविष्यतीति। **आसुरायणीति**। असुरस्यापत्यमिति 'अत इञ्' तदन्तात् ष्फः। **इञश्चेत्यणि प्राप्त इति**। तत्र 'प्रस्थोत्तरपदपलद्यादिकोपधादण्' इत्यतोऽण्ग्रहणानुवृत्तेः। **छप्रत्यय इष्यत इति**। कथं स लभ्यते? 'न द्व्यचः प्राच्यभरतेषु' इत्यत्र नेति योगविभागः कर्त्तव्यः, तेनासुरिशब्दादणि प्रतिषिद्धे 'वृद्धाच्छः' इति छ एव भविष्यति। आसुरिणा प्रोक्त आसुरीयः कल्प इति॥ १९॥

**वयसि प्रथमे॥ यौवनादिरिति**। आदिशब्दो वृद्धत्वाद्युपसंग्रहार्थं इति। **श्रुत्या वर्तत इति**। यत् प्रातिपदिकं श्रवणमात्रेणैव प्रकरणाद्यनपेक्षं प्रथमं वयः प्रत्याययति तदत्र श्रुत्या वर्तते। **कुमारीति**। ननु च नायं कुमारीशब्दः प्रथमे वयसि वर्तते, क्व तर्हि? पुंयोगाभावे, तथा हि वृद्धायामपि हि प्रयुज्यते—वृद्धा कुमारीति? नैतदस्ति; कुमारीशब्दो हि प्रथम एव वयसि रूढः। यस्तु वृद्धायामपि तस्य प्रयोगस्तत्र कुमारीसाधर्म्यात्, न तु पुंयोगाभावात्। भवति हि ताद्धर्म्यात् ताच्छब्द्यम्, यथा—गौर्वाहीक इति।

**पदमञ्जरी**

**आसुरायणीति**। ष्फस्य तद्धितत्वाद् 'यस्येति च' इति इञो लोपः। तदिदं तद्धितग्रहणमेव लिङ्गं भवति—आसुरेरपि ष्फ इति। यञादिष्वकारान्तेषु सवर्णदीर्घत्वेनापि रूपं सिद्धम्। **शैषिकेषु चार्थेष्विति**। आसुरीप्रसङ्गादिदमत्रोक्तम्; अन्यथा द्विरासुरिग्रहणं कर्तव्यं स्यात्। **आसुरीय इति**। असुरस्यापत्यमासुरिः, तेन प्रोक्ता आसुरीयः कल्प इति॥ १९॥

**वयसि प्रथमे॥ श्रुत्येति**। श्रवणमात्रेण प्रकरणाद्यनपेक्षयेत्यर्थः। **कुमारीति**। प्रथमवयोवचन एवायम्, न पुंयोगाभावहेतुकः; पुंस्यपि प्रयोगात्। यस्तु वृद्धायां प्रयोगः—वृद्धकुमारीति, स पुंयोगाभावात् साधर्म्याद् वेदितव्यः।

**भावबोधिनी**

असुर शब्द से "अत इञ्" ४।१।९५ से इञ् प्रत्यय आदिवृद्धि, भसंज्ञा, अलोप—आसुरि + ष्फ = फ = आयन्, इलोप, ङीष् = ई, न का ण।] शैषिक [ अपत्यादि से लेकर चातुरर्थिक से भिन्न ] अर्थों में "इञश्च" ४.२।११२ इससे अण् प्राप्त रहने पर छ प्रत्यय इष्ट है। उदा०—आसुरीयः कल्पः [ आसुरि + छ = ईय. भसंज्ञा, इलोप ]।

**विमर्श**—कौरव्यमाण्डूकाभ्यां च ४।१।१९ इस सूत्र पर भाष्य में 'कौरव्यमाण्डूकयोरासुरेरुपसंख्यानम्' यह प्रथम वार्त्तिक है। इसके बाद छश्च' यह द्वितीय वार्त्तिक हैं। इसे पृथक् वार्त्तिक बनाने के कारण सूत्रस्थ —स्त्री अपत्यादि से भिन्न अर्थ में—छ प्रत्यय होता है। इसलिये असुर का अपत्य आसुरि, उसके द्वारा प्रोक्त कल्प — आसुरीयः कल्पः है। काशिकाकार ने द्वितीय वार्त्तिक उद्धृत न करके सामान्य वचन द्वारा छः प्रत्यय का विधान किया है॥ १९॥

समय के द्वारा बनने वाली शरीर की अवस्था यौवन आदि को वयः [ कहा जाता ] है। प्रथम वय में श्रुति द्वारा जो प्रातिपदिक विद्यमान रहता है [ अर्थात् जिसके सुनते ही प्रथम वय की प्रतीति हो जाती है ], उससे स्त्री लिङ्ग में ङीप् प्रत्यय होता है। उदा० कुमारी। किशोरी। वर्करी। [ इनमें कुमार, किशोर और वर्कर ये तीनों प्रथम अवस्था = लड़कपन के वाचक हैं; इनसे ङीप् प्रत्यय और भसंज्ञा, अ का लोप होता है। ]

**प्रथम इति किम् ? स्थविरा । वृद्धा । अत इत्येव – शिशुः ॥**

**✽ वयस्यचरम इति वक्तव्यम् ✽** ( म० भा० ४.१.२० ) । **वधूटी । चिरण्टी । द्वितीयवयोवचनावेतौ । प्राप्तयौवना स्त्र्यभिधीयते ।**

**न्यासः**

**वयस्यचरम इति ।** अचरमे = अनन्त्ये वयसि ङीप् भवतीत्येतदर्थंरूपमस्य सूत्रस्य व्याख्यानमित्यर्थः । तत्रेदं व्याख्यानम्—प्रथमवयोग्रहणमिहाचरमस्य वयस उपलक्षणम्, तेनान्यत्राप्यचरमे वयसि ङीप् भवतीति । किं पुनः कारणं प्रथम एव वयसि गृह्यमाणे न सिध्यति, येनैवं सूत्रार्थो व्याख्येयः ? इत्याह—**द्वितीयवयोवचनावेतावित्यादि ।**

इह केचिच्चत्वारि वयांसीच्छन्ति—कौमार-यौवन-मध्यत्व-वृद्धत्वानि । तथा चाहुः—

'प्रथमे वयसि नाधीतं द्वितीये नार्जितं धनम् ।
तृतीये न तपस्तप्तं[1] चतुर्थे किं करिष्यति' ॥ इति ॥

**पदमञ्जरी**

**वयस्यचरम इति ।** चरम् = अन्त्यम्, अचरमे = अनन्त्ये । इह केचिच्चत्वारि वयांसीच्छन्ति—**कौमारम्**, यौवनम्, मध्यत्वम्, वृद्धत्वमिति । यथाहुः—

'प्रथमे वयसि नाधीतं द्वितीये नार्जितं धनम् ।
तृतीये न तपस्तप्तं[2] चतुर्थे किं करिष्यति' ॥ इति ।

अन्ये तु त्रीणि—

'पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थविरीभावे न स्त्री स्वातन्त्र्यमर्हति ॥ इति । ( मनु० ९.३ )

अन्ये तु बालत्व-मध्यत्व-वृद्धत्वानि त्रीणि—

'आषोडशाद्भवेद् बालो यावत् क्षीरान्नवर्तकः ।
मध्यमः सप्ततिर्यावत्परतो वृद्ध उच्यते' ॥ इति ।

एषु सर्वेषु दर्शनेषु यौवनं द्वितीयं वयो भवति, यौवनवचनौ च वधूटचिरण्टशब्दौ, अतो न प्राप्नोति, तदाह—**द्विवतीयवयोवचनावेतावििति** । यदा तु द्वे एव वयसी उपचयापचयलक्षणे, तदैतन्न वक्तव्यम्; यौवनस्यापि प्रथमवयोरूपत्वात् ।

**भावबोधिनी**

प्रथम वय में हो—इसका क्या प्रयोजन है ? स्थविरा वृद्धा । [ स्थविर और वृद्ध शब्द वार्धक्य = चरम अवस्था के वाचक हैं । अतः ङीप् न होकर टाप् होता है । ] अकारान्त से ही [ ङीप् होता है ]—शिशुः [ यहाँ नहीं होता है ] ।

अचरम = चरम से भिन्न वय में—ऐसा कहना चाहिये । [ अर्थात् प्रथम न कहकर अन्तिम से भिन्न ऐसा मानना चाहिये । इससे बाल्यावस्था और यौवनावस्था दोनों का ग्रहण हो जाता है । ] उदा—बधूटी । चिरण्टी । ये दोनों शब्द दूसरी अवस्था [ यौवन ] के वाचक हैं । इनसे यौवनावस्था को प्राप्त कर लेने वाली स्त्री को कहा जाता है ।

---

१. 'तृतीये नार्जितं पुण्यम्' इत्यपि पाठः ।
२. 'तृतीये नार्जितं पुण्यम्' इत्यपि पाठः ।

कथं कन्या ? 'कन्यायाः कनीन च' ( ४.१.११६ ) इति ज्ञापकात् । [ कथम् ] उत्तानशया, लोहितपादिका – इति ? नैता वयःश्रुतयः ॥

**न्यासः**

अन्ये त्रीणीच्छन्ति—कौमार-यौवन-स्थाविराणि । तथा चाहुः—

'पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ।
पुत्रस्तु स्थाविरे भावे[1] न स्त्री स्वातन्त्र्यमर्हति' ॥ इति ॥ ( मनु० ९.३ )

केचिद् बाल्य-मध्यत्व-वृद्धत्वानीति त्रीणीच्छन्ति । तथा चाहुः—

'आ षोडशाद् भवेद् बालो यावत् क्षीरान्नवर्तकः ।
मध्यमः सप्ततिर्यावत् परतो वृद्ध उच्यते' ॥ इति ॥

एतेषु सर्वेषु यौवनं द्वितीयं वयो भवति । ननु प्रथमवयोवचनौ तु बधूटीचिरण्टीशब्दावित्यतो न प्राप्नोति, तस्मादचरमस्य वयस इहोपलक्षणं प्रथमं वय इति व्याख्येयमिति केचित् ।

यस्तु मन्यते "केचित्तु द्वे एव वयसी इच्छन्तीति, यावत्यो वृद्धिमत्योऽवस्थास्ताः सर्वा राशीकृत्य प्रथमं वयो व्यवस्थाप्यते, यास्त्वपचयवत्योऽवस्थास्ताः सर्वा राशीकृत्य द्वितीयं वयः । तथा चोक्तम्—'वर्द्धते यावदन्नेन तावद् वर्द्धितव्यं पश्चादपायेन योक्ष्यते' इति, एतदेव दर्शनमाश्रित्यैतत् सूत्रं प्रणीतम्" इति । तेन बधूटी, चिरण्टीत्यत्रापि ङीब् भवतीति तेन द्वितीयवयोवचनावेतौ । प्राप्तयौवना स्त्र्यभिधीयत इत्यस्य ग्रन्थस्याविरोधाय यतितव्यम् । न ह्यस्मिन्दर्शने यौवनं द्वितीये वयस्यन्तर्भवति; यौवनावस्थाया वृद्धिमतीत्वात् ।

अथ कथमुत्तानशया लोहितपादिकेति, यावता बाल्यमत्र गम्यते, बालैव ह्युत्तानशया लोहितपादिका भवति, तस्माद् भवितव्यमेव ङीपेत्यत आह—**नैता वयःश्रुतय इति** । नैते वयोवचनाः शब्दा इत्यर्थः । इह तावदुत्तानशयेति प्रातिपदिकश्रवणमात्रेण क्रियाकारकसम्बन्धमात्रं प्रतीयते—उत्ताना शेत इत्युत्तानशया । 'हरतेरनुद्यमनेऽच्' इत्यतोऽज्ग्रहणेऽनुवर्तमाने 'अधिकरणे शेतेः' इत्यत्रोत्तानादिषु कर्तृष्वित्युपसंख्यानादच्, 'स्त्रियाः पुंवत्' इति पुंवद्भावः । सर्वैवोत्ताना शेते, उच्यते चेदमुत्तानशयेति, तत्र नियमो गम्यते अन्यथा

**पदमञ्जरी**

**श्रुत्या वर्तते इति** यदुक्तं तस्य व्यावर्त्यं दर्शयति—**उत्तानशया लोहितपादिकेति नैता वयःश्रुतय इति** । **श्रुत्या**=श्रवणमात्रेण नैते वयः प्रतिपादयन्तीत्यर्थः । यह तावदुत्तानशयेति क्रियाकारकसम्बन्धमात्रं प्रतीयते,

**भावबोधिनी**

कन्या शब्द कैसे होता है ? [ अर्थात् प्रथम वयोवाचक होने से ङीप् होना चाहिये ? ] "कन्यायाः कनीन च" ४।१।११६ इस सूत्र को ज्ञापक मान लेने से होता है । उत्तानशया, लोहितपादिका – ये कैसे होते हैं ? ये वयःश्रुति वाले नहीं है, अर्थात् इनको सुनते ही वयः का ज्ञान नहीं होता है ।

विमर्श—किसी आचार्य ने चार अवस्थायें मानी हैं – (१) कौमार, (२) यौवन, (३) मध्यत्व, (४) वृद्धत्व । कुछ आचार्य तीन ही मानते हैं—(१) कौमार, (२) यौवन, (३) स्थाविर । ( क ) 'वयस्यचरमे' इस वार्तिक के अनुसार अन्तिम अवस्था को छोड़कर प्रथम और द्वितीय अवस्था के वाचक शब्दों से ङीप् होता है । ( ख ) जहाँ सुनते ही अवस्था की प्रतीति हो जाती है वहीं यह प्रत्यय होता है । उत्तान सोने वाली, लाल पैर वाली—इन शब्दों को सुनकर अर्थ का ज्ञान करने के बाद किशोरावस्था की प्रतीति होती है, तत्काल नहीं होती है, अतः इनसे ङीप् नहीं होता है ॥ २० ॥

द्विगुसंज्ञक प्रातिपदिक से स्त्रीलिङ्ग में ङीप् प्रत्यय होता है । उदा०—पञ्चपूली । दशपूली । [ पञ्चानां पूलानां समाहारः, दशानां पूलानां समाहारः—इस विग्रह में "तद्धितार्थोत्तरपदसमाहारे च" २।१।५१ से द्विगु समास होता है

---

१. 'रक्षन्ति स्थविरे पुत्रा' इति स्मृतिपाठः ।

१२७१. द्विगोः ॥ २१ ॥ ( ४७९ )

**द्विगुसंज्ञकात् प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति। पञ्चपूली। दशपूली। कथं त्रिफला? अजादिषु दृश्यते॥**

१२७२. अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ॥ २२ ॥ ( ४८० )

**न्यासः**

शयितुमसामर्थ्यादुत्तानैव या शेते सोत्तानशयेति गम्यते। अवगतेऽप्यस्मिन्नियमे सन्देह एव--किमसौ बाला? वृद्धा वा? इति। वृद्धापि हि कदाचिदन्यथा शयितुमशक्ता स्यात्, उत्तानैव च शेते। तस्माद् यदोत्तानैव शेत इति नियमप्रतीतिर्भवति, वृद्धत्वाभावश्च कुतश्चित् प्रकरणादेरवसितो भवति, तदा बाल्यं गम्यते। **लोहितपादिकेति**। अत्रापि लोहितौ पादावस्या इत्यन्यपदार्थमात्रं तावत् तच्छब्दात् प्रतीयते। यदा तु प्रकरणादिना स्वभावत एवास्या रक्तौ पादौ नालक्तकरसादिनेति प्रतीतिर्भवति तदा बालेति गम्यते। इतिशब्दः प्रकारार्थः। एवंप्रकारा नैता वयःश्रुतय इत्यर्थः। कथं बाला, वत्सेति? अजादित्वाट्टाब् भविष्यति। ननु वचनसामर्थ्यादनेन ङीबपि प्राप्नोति? नैतदस्ति; तस्यान्यत्र कुमारी, किशोरीत्यादौ चरितार्थत्वात्॥ २०॥

**द्विगोः॥ पञ्चपूलीति**। पञ्चानां पूलानां समाहार इति। 'तद्धितार्थोत्तरपदसमाहारे च' इति समाहारद्विगुः। 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इति स्त्रीलिङ्गता।

**त्रिफलेति**। त्रयाणां फलानां समाहार इति। पूर्ववद् द्विगुः॥ २१॥

**अपरिमाणस्तिबाचितकम्बल्येभ्यो न तद्धितलुकि॥ तद्धितलुकि सतीति**। एतेन 'तद्धितलुकि' इत्येषा विषयसप्तमीति दर्शयति। परसप्तमीत्येषा नोपपद्यते; लुकोऽभावरूपत्वात्, अभावे च पौर्वापर्याभावात्। **सर्वतो**

**पदमञ्जरी**

तदेव च प्रवृत्तिनिमित्तम्। उत्तानादिषु कर्तृष्विति शेरतेरच् प्रत्ययः, सर्वैव च कदाचिदुत्ताना शेते, उच्यते चेदम्—उत्तानशयेति, तत्र नियमो गम्यते—अन्यथा स्वप्तुमसामर्थ्यादुत्तानैव शेत इति! एवमपि सन्देहः—बाला, वृद्धेति? तस्मादुत्तानैव शेत इति नियमे वृद्धत्वाभावे च प्रकरणादिनाऽवसिते बाल्यं गम्यते, लोहितपादिकेत्यत्रापि अन्यपदार्थमात्रं श्रुत्या प्रतीयते। प्रकरणादिना स्वभावत एवास्य रक्तौ पादौ नालक्तकादिनेति प्रतीतौ सत्यां बालेति गम्यते। इतिशब्दः प्रकारे, एवंप्रकारा न वयःश्रुतय इत्यर्थः। अत एव बहुवचनम्, तेन द्विवर्षेत्यादावपि न भवति। अत्रापि प्रकरणादिना वयो गम्यते, परिकाणमात्रं तु शब्दार्थः शालादावपि प्रयोगात्। द्वे वर्षे भूता इति ठञः 'वर्षाल्लुक्च', 'चित्तवति नित्यम्' इति लुक्॥ २०॥ २१॥

**अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि॥ तद्धितलुकि सतीति**। परसप्तमी त्वेषा नोपपद्यते, अभावरूपेण लुका पौर्वापर्यासम्भवात्। **सर्वतो मानं परिमाणमिति**। 'परिमाणं तु सर्वतः' इत्यस्य ग्रहणम्, न परिच्छेदकमात्रस्येत्यर्थः।

**भावबोधिनी**

और ''अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इस नियम से स्त्रीलिङ्ग होने पर प्रस्तुत सूत्र से ङीप् होता है। पूल= घास आदि तृणों का समुदाय। घासादि के पाँच गट्ठर, दश गट्ठर।]

त्रिफला—यह कैसे होता है? [क्योंकि त्रयाणां फलानां समाहारः—यह द्विगु है।] अजादि-गण में पाठ होने से 'अजाद्यतष्टाप्' ४।१।४ से टाप् होता है। [आँवला, हर्रा और बहेरा को मिलाने पर त्रिफला कहा जाता है]॥ २१॥

पूर्व सूत्र से प्राप्त होने वाले ङीप् का निषेध होता है। अपरिमाणवाचक जिसके अन्त में है उससे और बिस्ता, आचित तथा कम्बल्य जिसके अन्त में है ऐसे द्विगु से तद्धितलुक् रहने पर स्त्री अर्थ में ङीप् प्रत्यय नहीं होता है। परिमाण के लिये बिस्ता आदि का ग्रहण है। सर्वतः मान = सभी ओर से मापना = तौलना परिमाण होता है।

**पूर्वेण ङीप् प्राप्तः प्रतिषिद्ध्यते । अपरिमाणान्ताद् द्विगोर्बिस्ताचितकम्बल्यान्ताच्च तद्धितलुकि सति ङीप् प्रत्ययो न भवति । बिस्तादीनां परिमाणार्थं ग्रहणम् । सर्वतो मानम् = परिमाणम् । अपरिमाणान्तात्तावत्- पञ्चभिरश्वैः क्रीता पञ्चाश्वा । दशाश्वा ( ५.१.२८,३७ ) । कालः संख्या च न परिमाणम् । द्विवर्षा । त्रिवर्षा ( ५ २ ३७ ) । द्वाभ्यां शताभ्यां क्रीता द्विशता । त्रिशता ( ५.१.२२,२८ ) ।**

**न्यासः**

**मानं परिमाणमिति ।** परिशब्दः सर्वतो भावे । सर्वत आरोहतः परिणाहतश्च मीयते = परिच्छिद्यते येन तत्परिमाणम् = प्रस्थादिः ।

**पञ्चाश्वेति ।** तद्धितार्थे द्विगुः, 'तेन क्रीतम्' इत्यार्हीयष्ठक्, 'अध्यर्धपूर्वाद् द्विगोर्लुक्' । **कालः संख्या च न परिमाणमिति ।** न हि ताभ्यामारोहतः परिणाहतश्च मीयते । ज्ञापकाच्च न तयोः परिमाणत्वमवसीयते । यदयम् 'परिमाणान्तस्यासंज्ञाशाणयोः' इति सिद्धायामुत्तरपदवृद्धौ 'संख्यायाः संवत्सरसंख्यस्य च' इति संख्या- संवत्सरग्रहणं करोति, तज् ज्ञापयति—**कालः संख्या च न परिमाणं** भवतीति । विस्तादि च परिमाणविशेष एव ग्रहीतव्यः । **अतो वृत्तिग्रन्थः**—परिमाणार्थं ग्रहणमिति । काण्डस्य वा परिमाणत्वे तूत्तरसूत्रेण नियमार्थता न विरुध्यते । यद्येवम्, 'कालाः परिमाणिना' इत्यत्र सामर्थ्यात् परिमाणवचनाः कालशब्दाः समस्यन्त इति यदुक्तं तद्विरुध्यते ? नास्ति विरोधः; उपचारेण तथान्यत्र परिमाणिवाचिना सुबन्तेनाभिधानात् । इह हि मुख्यं कालस्य परिमाणत्वं निषिध्यते । तत्र ह्यौपचारिकं कालस्य परिमाणत्वमाश्रित्य परिमाणवचनाः कालशब्दा इत्युक्तम्—कालाः परिमाणिनेति ब्रुवता ! परिमाणवचनत्वं कालशब्दानामुपयुक्तं भवति, न हि तेन विना परिमाणापेक्षयोत्तरपदस्य परिमाणिव्यपदेश उपपद्यते । न च कालस्य मुख्यं परिमाणत्वमस्ति । अतः सामर्थ्या-

**पदमञ्जरी**

**पञ्चभिरश्वैः क्रीतेति ।** तद्धितार्थे द्विगुः; आर्हीयष्ठक् ।

**कालसङ्ख्या च न परिमाणमिति ।** न हि ताभ्यां सर्वत आरोहतः परिणाहतश्च मीयते । एवं च कालः सङ्ख्या चेति प्रदर्शनार्थत्वात् प्रमाणमपि परिमाणं न भवति, तथा चोत्तरसूत्रे 'काण्डशब्दस्यापरिमाणवाचित्वात्' इति वक्ष्यति, 'प्रमाणविशेषः काण्डम्' इति च । तेन द्वौ शमौ प्रमाणमस्या इति मात्रचः 'प्रमाणे लो द्विगोर्नित्यम्' इति लुकि द्विशमा, त्रिशमेति भवति । यद्येवम्, उन्मानमपि परिमाणं न स्यात् ? कश्चिदाह—इष्टमेवैतत्, उन्मानमपि नैवात्र परिमाणग्रहणेन गृह्यते—द्वाभ्यां निष्काभ्यां क्रीता, प्राग्वतीयस्य ठञः 'द्वित्रिपूर्वान्निष्कात्'

**भावबोधिनी**

अपरिमाणान्त से [ ङीप्-निषेध का ] उदा०—पाँच अश्वों द्वारा खरीदी गयी—पञ्चाश्वा । दश अश्वों द्वारा खरीदी गयी—दशाश्वा । [ इनमें तद्धितार्थ विवक्षित रहने पर "तद्धितार्थोत्तरपद०" २।१।५१ से द्विगु समास करके "तेन क्रीतम्" ५।१।३७ से टक् प्रत्यय होता है "अध्यर्धपूर्वाद् द्विगोर्लुगसंज्ञायाम्" ५।१।२८ से इस प्रत्यय का लुक् हो जाने पर "द्विगोः" १।४।२१ से प्राप्त ङीप् का निषेध प्रस्तुत सूत्र से हो जाता है । अकारान्त मानकर टाप् होता है । यही प्रक्रिया दशाश्वा में भी समझनी चाहिये । ]

काल और संख्या परिमाण [ सर्वतः मान ] नहीं होते हैं । [ अतः ये भी अपरिमाणवाची हैं । इनसे भी निषेध होता है—] द्विवर्षा । त्रिवर्षा । [ द्वे वर्षे भूता—इस अर्थ में 'तमधीष्टो भृतो भूतो भावी' ५।१।८० से ठक् होता है, "वर्षाल्लुक् च" ५।१।८८ से उसका पाक्षिक लुक् होता है । अथवा द्वे वर्षे प्रमाणमस्या इस अर्थ में विहित ठक् का "प्रमाणे लो द्विगोर्नित्यम्" से लोप हो जाता है । द्विगु होने से ङीप् प्राप्त है । इससे निषेध हो जाने पर टाप् हो जाता है । इसी प्रकार त्रिवर्षा भी समझनी चाहिये । ] द्वाभ्यां शताभ्यां क्रीता, त्रिभिः शतैः कृता—द्विशता, त्रिशता । [ उक्त अर्थ में 'संख्याया अतिशदन्तायाः कन्' ५।१।२२ से कन् प्रत्यय होता है और "अध्यर्धपूर्व०" ५।१।२८ से उसका लुक् हो जाने पर प्राप्त ङीप् का निषेध प्रस्तुत सूत्र से होता है । टाप् होने पर ये रूप बनते हैं । ] बिस्तादि से [ निषेध के ] उदा०—द्विबिस्ता

बिस्तादिभ्यः – द्विबिस्ता । त्रिबिस्ता ( ५.१.५२,२८ ) । द्व्याचिता । त्र्याचिता ( ५.१.५४,२८ ) । द्विकम्बल्या । त्रिकम्बल्या ( ५.१.३७,२८ ) ।

अपरिमाणेति किम् ? द्व्याढकी । त्र्याढकी । तद्धितलुकीति किम् ? समाहारे–पञ्चाश्वी । दशाश्वी ॥

**न्यासः**

दौपचारिकं परिमाणत्वमाश्रितमिति गम्यते । उपचारस्य हेतुः परिच्छेदस्य हेतुत्वमात्रम्, परिमाणस्य साधर्म्यम् । कालो हि मासादिर्जातादिसम्बन्धिनीमादित्यगतिं गमयतीति भवति परिच्छेदस्य हेतुः । अतः परिमाणसाधर्म्यादुपपद्यते, तत्र च परिमाणोपचारः । **द्विवर्षा, त्रिवर्षेति** । द्वे वर्षे भूतेति 'तमधीष्टो भृतो भूतो भावी' इत्यनेन विहितस्य ठकः 'वर्षाल्लुक्' इति लुक् पाक्षिकः । चित्तवत्वे तु प्रत्ययार्थस्य विवक्षिते 'चित्तवति नित्यम्' इति नित्यमेव लुक् । द्वे वर्षे प्रमाणमस्या इति 'प्रमाणे लो द्विगोर्नित्यम्' इति नित्यमेव लुक् । **द्विशता, त्रिशतेति** । द्वाभ्यां शताभ्यां क्रीतेति 'पणपादमाषशताद् यत्' इति यति प्राप्ते शाणाद्वा' इत्यत्रोपसंख्यानम् -- शताच्चेति वक्तव्यमिति । तेन शतशब्दात् पक्षे 'संख्याया अतिशदन्तायाः कन्' इति कन्, तस्य पूर्ववल्लुक् ।

**द्विबिस्तेति** । द्वौ बिस्तौ पचति । 'सम्भवत्यवहरति पचति' इत्यनेनार्हीयष्ठक्, तस्य पूर्ववल्लुक् । द्वावाचितौ पचति **द्व्याचिता** । 'आढकाचितपात्रात्खोऽन्यतरस्याम्' इति वर्तमाने 'द्विगोः ष्ठंश्च' इति ष्ठन्, तस्य पूर्ववल्लुक् । द्वाभ्यां कम्बल्याभ्यां क्रीता **द्विकम्बल्या** । 'तेन क्रीतम्' इति ठक्, तद्वदेव लुक् ।

**द्व्याढकीति** । द्वावाढकौ पचति । 'आढकाचितपात्रात्खोऽन्यतरस्याम्' इति वर्तमाने 'द्विगोः ष्ठंश्च' इति पक्षे ष्ठन्, तस्य लुक् । **पञ्चाश्वीति** । पूर्ववत् समाहारे द्विगुः ।

इहेमौ द्वौ प्रतिषेधावुच्येते, तत्रैकः शक्यमकर्तुम् । कथम् ? एवं सूत्रन्यासः करिष्यते--परिमाणान्ता-

**पदमञ्जरी**

इति लुक्. द्विनिष्का त्रिनिष्केति भवतीति । अपर आह--बिस्तकम्बल्यग्रहणं ज्ञापकम्—उन्मानमप्यत्र परिमाणग्रहणेन गृह्यत इति; तयोरुन्मानविशेषत्वात्, सुवर्णबिस्तौ हेम्नोऽक्षे, 'कम्बलाच्च संज्ञायाम्' कम्बल्यमूर्णापलशतमिति । **न्यासकारस्तु** द्वौ बिस्तौ परिमाणमस्येति विगृह्णन् बिस्तं परिमाणं मन्यते । **द्विवर्षेति** । कृतव्युत्पादनमेतत् । **द्विशता, त्रिशतेति** । द्वाभ्यां शताभ्यां क्रीतेति 'पणपादमाषताद्यत्' इति नित्ये यति प्राप्ते 'शाणाद्वा' इत्यत्र 'शताच्चेति वक्तव्यम्' इति वचनात् पक्षे 'सङ्ख्याया अतिशदन्तायाः कन्' इति कन्, तस्य 'अध्यर्धपूर्वात्' इति लुक् ।

**द्विबिस्तेति** । परिमाणत्वे ठञो लुक्, उन्मानत्वे ठकः । **द्व्याचितेति** । आचितो दशभाराः स्युः । द्वावाचितौ पचति, 'आढकाचितपात्रात् खोन्यतरस्याम्', 'द्विगोष्ठंश्च' इति पक्षे ठन्खौ, ताभ्यां मुक्ते प्राग्वतीयष्ठञ् तस्य पूर्ववल्लुक् । **द्विकम्बल्येति** । क्रीतार्थे ठञो लुक् । **द्व्याढकी** द्व्याचितेत्यनेन तुल्यम् ।

**पञ्चाश्वीति** । समाहारे द्विगुः । इमौ द्वौ प्रतिषेधावुच्येते, तत्रैकः शक्योऽवक्तुम्, कथम् ? एवं वक्ष्यामि-

**भावबोधिनी**

त्रिबिस्ता । [ द्वौ बिस्तौ पचति, त्रीन् बिस्तान् पचति - इस अर्थ मे "सम्भवत्यवहरति पचति" ५।१।५२ इस सूत्र से ठक् प्रत्यय और "अध्यर्ध०" ५।१।२८ से उसका लुक् करने पर प्राप्त ङीप् का निषेध होने से टाप् होता है । बिस्ता एक परिमाण विशेष है । ] द्व्याचिता, त्र्याचिता । [ द्वौ आचितौ पचति । त्रीन् आचितान् पचति—इन अर्थों में 'आढकाचित' ५।१।५३ से सम्बद्ध "द्विगोः ष्ठंश्च" ५।१।५४ से ष्ठन् प्रत्यय और पूर्व के समान उसका लुक् होने पर प्राप्त ङीप् का निषेध करके टाप् होता है । आचित भी एक विशेष परिमाण है । ] द्विकम्बल्या, त्रिकम्बल्या । [ द्वाभ्यां कम्बल्याभ्यां क्रीता, त्रिभिः कम्बल्यैः क्रीता – इन अर्थों में ठक् और उसका लुक् कर देने से प्राप्त होने वाले ङीप् का निषेध करने पर टाप् होता है । ]

अपरिमाणान्त [ द्विगु ] से—इसके ग्रहण का क्या प्रयोजन है ? द्व्याढकी, त्र्याढकी । [ द्वौ आढकौ पचति—त्रीन्

## १२७३. काण्डान्तात् क्षेत्रे ॥ २३ ॥ ( ४८१ )

**काण्डशब्दान्ताद् द्विगोस्तद्धितलुकि सति क्षेत्रे वाच्ये ङीप् प्रत्ययो न भवति। द्वे काण्डे प्रमाणमस्याः क्षेत्रभक्तेः, 'प्रमाणे द्वयज् दघ्नञ्मात्रचः' ( ५.२.३७ ) इति विहितस्य तद्धितस्य 'प्रमाणे लो द्विगोर्नित्यम्' ( ५.२.३७ ) इति लुकि कृते – द्विकाण्डा क्षेत्रभक्तिः, त्रिकाण्डा क्षेत्रभक्तिः।**

**काण्डशब्दस्यापरिमाणवाचित्वात् पूर्वेणैव प्रतिषेधे सिद्धे क्षेत्रे नियमार्थं वचनम्। इह मा भूत् – द्विकाण्डी रज्जुः, त्रिकाण्डी रज्जुरिति। प्रमाणविशेषः = काण्डम् ॥**

न्यासः

तद्धितलुकीति। पूर्वेणैव सिद्धे नियमार्थमेतत्--परिमाणान्तादेव तद्धितलुकि ङीब् भवति, नान्यस्मात्। तेन द्व्याढकीत्यादावेव भवति, न पञ्चाश्वेत्यादौ; ततो बिस्ताचितकम्बल्येभ्यो न तद्धितलुकीत्यनुवर्तते, बिस्तादिभ्यः परिमाणेभ्योऽपि तद्धितलुकि ङीब् न भवतीति ? नैवं शक्यम्, विपरीतोऽपि नियमः सम्भाव्येत--परिमाणान्तात् तद्धितलुक्येव भवति, नान्यत्रेति। ततश्च द्वयोः-कुडवयोः समाहारो द्विकुडवीत्यत्र न स्यात्। तस्माद् यथान्यासमेवास्तु ॥ २२ ॥

**काण्डान्तात् क्षेत्रे ॥ नियमार्थमिति।** क्षेत्र एव यथा स्यात्, अन्यत्र मा भूदिति। अथान्तग्रहणं किमर्थम्, यावता सामर्थ्यादेव तदन्तविधिर्लभ्यत एव, यथा—पूर्वस्मिन् सूत्रे, न हि केवलस्य काण्डशब्दस्य केनचिद् द्विगुसंज्ञा विहिता ? सत्यमेतत्, किन्त्वसत्यग्रहणे काण्डमेव क्षेत्रेण विशिष्येत—काण्डशब्द एव केवलो यः क्षेत्रे वर्तते इति, ततश्चेह प्रतिषेधः स्यात्--द्वाभ्यां काण्डसंज्ञकाभ्यां क्षेत्राभ्यां क्रीता द्विकाण्डी वडवेति। इह तु न स्यात्—द्वे काण्डे प्रमाणमस्याः क्षेत्रभक्तेः द्विकाण्डा क्षेत्रभक्तिरिति। अन्तग्रहणे तु सति काण्डशब्दस्य विशेषणं क्षेत्रं न भवति; तस्य द्विगौ गुणभूतत्वात् ॥ २३ ॥

पदमञ्जरी

परिमाणान्तात्तद्धितलुकीति, तन्नियमार्थं भविष्यति—परिमाणान्तादेव तद्धितलुकि ङीब् भवतीति, तेन द्व्याढकीत्यादौ च भविष्यति, पञ्चाश्वेत्यादौ च न भविष्यति, ततो बिस्ताचितकम्बल्येभ्यो नेति ? नैवं शक्यम्; विपरीतोऽपि नियमः सम्भाव्येत—परिमाणान्तात्तद्धितलुक्येवेति। तत्र को दोषः ? परिमाणात्समाहारे न स्यात्—द्विकुडवी, पञ्चाढकी। पञ्चाश्वेत्यादौ तु व्यावर्तकाभावात् स्यादेव ङीप्। तस्माद्यथान्यासमेवास्तु ॥ २२ ॥

**काण्डान्तात् क्षेत्रे ॥** मानदण्डः = काण्डम्। 'द्विगोः' इत्यधिकारादेव पूर्वसूत्रवत्तदन्तविधौ सिद्धे किमर्थमन्तग्रहणम् ? अक्रियमाणेऽन्तग्रहणे क्षेत्र इत्येतत् काण्डस्यैव विशेषणं विज्ञायेत क्षेत्रे यः काण्डशब्दः, तदन्ताद् द्विगोरिति श्रुतत्वात् न तदन्तस्य, यथोत्तरसूत्रे प्रमाणे यः पुरुषशब्दस्तदन्तादिति, ततश्चेह प्रसज्येत—द्वाभ्यां काण्डाभ्यां काण्डप्रमिताभ्यां क्षेत्राभ्यां क्रीता द्विकाण्डी वडवेति; इह तु न स्यात्—द्वे काण्डे प्रमाणमस्याः द्विकाण्डा क्षेत्रभक्तिरिति। अन्तग्रहणे तु सति तदन्तस्यैव विशेषणं क्षेत्रम्, न काण्डस्य; बहुव्रीहौ गुणभूतत्वात् ॥ २३ ॥

भावबोधिनी

आढकान् पचति—इस अर्थ में "आढकाचित०" ५।१।५३ "द्विगोः ष्ठंश्च" ५।१।५४ इससे पक्ष में ष्ठन् होता है और उसका लुक् हो जाता है। परन्तु आढक परिमाणवाची है। अतः इससे ङीप् का निषेध न होकर "द्विगोः" ४।१।२१ से ङीप् ही होता है। ] तद्धित प्रत्यय का लुक् रहने पर—इसका क्या फल है ? पञ्चाश्वी। दशाश्वी। [ पञ्चानाम् अश्वानां समाहारः, दशानाम् अश्वानां समाहारः—इस विग्रह में द्विगु समास होता है। परन्तु अन्य अर्थ न होने से तद्धित प्रत्यय और उसका लुक् नहीं होने से ङीप्निषेध न होकर ङीप् ही होता है। ] ॥ २२ ॥

तद्धित लुक् रहने पर, क्षेत्र = खेत अर्थ वाच्य रहने पर काण्डशब्दान्त द्विगु से स्त्रीलिङ्ग में ङीप् प्रत्यय नहीं होता है। उदा०—दो काण्ड है प्रमाण = माप इस क्षेत्रभक्ति = खेत के भाग का – इस अर्थ में "प्रमाणे द्वयसच् दघ्नच्

## १२७४. पुरुषात् प्रमाणेऽन्यतरस्याम् ।। २४ ।। ( ४८२ )

**'द्विगोः' 'तद्धितलुकि' इत्येव । प्रमाणे यः पुरुषशब्दस्तदन्ताद् द्विगोस्तद्धितलुकि सति अन्यतरस्यां न ङीप् प्रत्ययो भवति । द्वौ पुरुषौ प्रमाणमस्याः परिखायाः द्विपुरुषा, द्विपुरुषी । त्रिपुरुषा, त्रिपुरुषी ।**

**अपरिमाणान्तत्वान्नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं वचनम् ।**

**प्रमाण इति किम् ? द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा । त्रिपुरुषा । तद्धितलुकीत्येव, समाहारे – द्विपुरुषी, त्रिपुरुषी ।**

### न्यासः

**पुरुषात् प्रमाणेऽन्यतरस्याम् ।। प्रमाणे यः पुरुषशब्दो वर्तत इति ।** जातिवचनोऽपि पुरुषशब्दः, यदा प्रमाणशब्देनाभिसम्बध्यते तदा पुरुषगते प्रमाणे वर्तते । भवति पदान्तरसम्बन्धेन शब्दस्यार्थान्तरे वृत्ति, यथा--सिंहो माणवक इति । सिंहशब्दो जातिवचनोऽपि माणवकसान्निध्यात् शौर्यलक्षणं गुणमाचष्टे। **द्विपुरुषीति** । 'प्रमाणे द्वयसच्' इति विहितस्य द्वयसचः 'प्रमाणे लो द्विगोर्नित्यम्' इति लुक् ।

**अपरिमाणान्तत्वात् प्रतिषेधे प्राप्त इति ।** 'अपरिमाणबिस्त' इत्यादिना ।

**द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषेति ।** पूर्ववदार्हीयस्य ठको लुक् । **तद्धितलुकीत्येव । पञ्चपुरुषीति ।** प्रमाणार्थवृत्तानामेव समाहारान् नास्ति द्वयङ्गविकलता ।। २४ ।।

### पदमञ्जरी

**पुरुषात् प्रमाणेऽन्यतरस्याम् ।। प्रमाणे यः पुरुषशब्द इति ।** पञ्चारत्निः पुरुष इति शुल्बविदः, तत्र द्वौ पुरुषौ प्रमाणमस्या इति वाक्ये प्रमाणशब्देन सम्बन्धाज्जातिवचनोऽपि पुरुषशब्दः प्रमाणे वर्तते । वृत्तौ तु तत्स्वभावादेव प्रमाणे वृत्तिर्द्रष्टव्या ।। २४ ।।

### भावबोधिनी

मात्रचः'' ५।२।३७ से द्वयसच् आदि तद्धित प्रत्यय होते हैं, उनका लुक् ''प्रमाणे लो द्विगोर्नित्यम्'' से हो जाने पर [ प्राप्त ङीप् का निषेध प्रस्तुत सूत्र करता है ]—द्विकाण्डा क्षेत्रभक्तिः, त्रिकाण्डा क्षेत्रभक्तिः । [ १६ हाथ के बराबर की भूमि को काण्ड कहा जाता है । यह पाणिनिकालीन नाप का नाम है । ]

काण्ड शब्द परिमाणवाची नहीं है । अतः पूर्ववर्ती सूत्र से ही ङीप् का निषेध सिद्ध रहने पर क्षेत्र=खेत अर्थ में नियम करने के लिये प्रस्तुत सूत्र बनाया गया है । जिससे यहाँ [ निषेध ] न हो जाय—द्विकाण्डी रज्जुः, त्रिकाण्डी रज्जुः [ द्वे काण्डे प्रमाणमस्याः, त्रीणि काण्डानि प्रमाणमस्याः इस अर्थ में विहित तद्धित प्रत्यय और उसका लुक् करने के बाद ङीप् का निषेध नहीं होता है क्योंकि यहाँ क्षेत्र का प्रमाण नही; अपितु रस्सी की लम्बाई बताई जा रही है । अतः ''द्विगोः'' ४।१।२० से ङीप् होता है । ] प्रमाणविशेष = काण्ड है ।। २३ ।।

'द्विगोः' और 'तद्धितलुकि' इनकी अनुवृत्ति होती है । प्रमाण अर्थ में विद्यमान जो पुरुष शब्द, तदन्त द्विगु से, तद्धितलुक् रहने पर विकल्प से ङीप् प्रत्यय नहीं होता है । उदा०—द्वौ पुरुषौ प्रमाणमस्याः परिखायाः [ जिस परिखा = चहारदीवार की ऊँचाई दो पुरुषों की ऊँचाई के बराबर है—वह ] – द्विपुरुषा, द्विपुरुषी । त्रिपुरुषा, त्रिपुरुषी । [ त्रयः पुरुषाः प्रमाणमस्याः—इस अर्थ में 'तदस्य परिमाणम्' ५।१।५७ से ठक् होता है और उसका लुक् हो जाने पर प्रस्तुत सूत्र विकल्प से ङीप् का निषेध करता है । अतः एक टाप् वाला और पक्ष में दूसरा ङीप् वाला—ये दो रूप होते हैं । ]

अपरिमाणान्त होने के कारण ''अपरिमाण०'' ४।१।२२ से नित्य प्रतिषेध प्राप्त रहने पर विकल्प करने के लिये यह सूत्र है ।

प्रमाण = माप अर्थ रहने पर – इसके ग्रहण का क्या लाभ है ? दो पुरुषों द्वारा खरीदी गयी—द्वि-पुरुषा; तीन पुरुषों द्वारा खरीदी गयी—त्रि-पुरुषा । [ इनमें प्रमाण अर्थ न होने से नित्य ही ङीप् निषेध होने से केवल टाप् वाला

१२७५. बहुव्रीहेरूधसो ङीष् ॥ २५ ॥ ( ४८४ )

ऊधस्शब्दान्ताद् बहुव्रीहेः स्त्रियां ङीष् प्रत्ययो भवति। 'ऊधसोऽनङ्' ( ५.४.१३१ ) इति समासान्ते कृते 'अनो बहुव्रीहेः' ( ४.१.१२ ) इति डाप्प्रतिषेधयोः प्राप्तयोरिदमुच्यते। घटोध्नी। कुण्डोध्नी।

बहुव्रीहेरिति किम् ? प्राप्ता ऊधः प्राप्तोधाः। अन उपधालोपिनोऽन्यतरस्याम् ( ४.१.२८ ) इत्यस्यापि ङीपोऽयमुत्तरत्रानुवृत्तेर्बाधक इष्यते। समासान्तश्च स्त्रियामेव, इह न भवति – 'महोधाः पर्जन्यः' इति ॥

न्यासः

बहुव्रीहेरूधसो ङीष् ॥ ऊधसोऽनङिति समासान्ते कृत इति। अकृत एव समासे बहुव्रीह्यर्थं उत्तरपदे पूर्वं समासान्तेन भवितव्यमिति प्राक् ततः समासान्त एव भवति, ततो बहुव्रीहिः, ततः स्त्रीप्रत्ययः— इत्येषैवानुपूर्वी। अनो बहुव्रीहेरित्यादि। इतिशब्द आद्यर्थे। 'अनो बहुव्रीहेः' इत्यादिना शास्त्रान्तरेणेत्यर्थः। तत्र 'अनो बहुव्रीहेः' इत्यनेन सूत्रेण प्रतिषेधे प्राप्ते 'डाबुभाभ्यामन्यतरस्याम्' इत्यनेन डाप्। कुण्डोध्नीति। कुण्डमिवोधोऽस्या इति बहुव्रीहिः, 'अल्लोपोऽनः' इत्यकारलोपः।

प्राप्तोधा इति। 'प्राप्तापन्ने च द्वितीयया' इति तत्पुरुषः, 'अत्वसन्तस्य चाधातोः' इति दीर्घः।

अन उपधालोपिन इत्यादि। 'अन उपधालोपिनोऽन्यतरस्याम्' इत्येतेनापि विधीयमानस्य ङीपोऽयं ङीष् बाधक इष्यते। कथं पुनरिहोच्यमानस्तस्य बाधको भवति ? उत्तरत्रानुवृत्तेः। असत्यामुत्तरत्रानुवृत्तौ

पदमञ्जरी

बहुव्रीहेरूधसो ङीष् ॥ 'ऊधसोऽनङ्' इति। समासान्ते कृत इति समासार्थादुत्तरपदाद्भवन्समासान्तः पूर्वं भवति, ततः स्त्रीप्रत्ययः। अनो बहुव्रीहेरिति। उपलक्षणमेतत्। 'अनो बहुव्रीहेः', 'डाबुभाभ्यामन्यतरस्याम्' इति चेत्यर्थः। कुण्डोध्नीति। कुण्डमिव ऊधोऽस्या इति विग्रहः, ङीषि 'अल्लोपोऽनः' इत्यकारलोपः।

प्राप्तोधा इति। 'प्राप्तापन्ने च द्वितीयया' इति तत्पुरुषः, 'अत्वसन्तस्य' इति दीर्घः।

अन उपधालोपिन इत्यादि। असत्यां पुनरनुवृत्तौ मध्येऽपवादन्यायेन डाप्प्रतिषेधयोरेवायं ङीष् बाधकः स्यात्, न 'अन उपधालोपिनः' इत्यस्य ङीपः।

ननु च 'डाबुभाभ्याम्' इत्यत्रानेनान्यतरस्यांग्रहणेन ङीबपि प्राप्यते, 'अन उपधालोपिनः' इत्ययं तु नियम इत्यवादीति कुतोऽयमनिष्टप्रसङ्गः? सत्यम्; 'अन उपधालोपिनः' इत्यस्य तु विधित्वाभ्युपगमेनैतदुक्तम्। इह

भावबोधिनी

रूप होता है। ] तद्धित प्रत्यय का लुक्=लोप रहने पर ही [ यह निषेध होता है ], समाहार में तो—द्विपुरुषी, त्रिपुरुषी। [ द्वयोः पुरुषयोः समाहारः, त्रयाणां पुरुषाणां समाहारः— ये अर्थ हैं ]।

ऊधस् शब्द जिसके अन्त में है उस बहुव्रीहि से स्त्रीलिङ्ग में ङीष् प्रत्यय होता है। "ऊधसोऽनङ्" ५।४।१३१ इस सूत्र से [ अन् यह ] समासान्त [ प्रत्यय ] करने पर 'अनो बहुव्रीहेः' ४।१।१२ इससे निषेध और [ डाबुभ्यामन्य-तरस्याम् ४।१।१३ से ] डाप् की प्राप्ति रहने पर यह ङीष् प्रत्यय कहा जा रहा है। [ भाव यह है कि बहुव्रीहि करने पर 'ऊधसोऽनङ्' ५।४।१३१ से जब अनङ्=अन् यह अन्तादेश होता है तब 'अनो बहुव्रीहेः' ४।१।१२ से ङीप् का निषेध और 'डाबुभ्यामन्यतरस्याम्' ४।१।१३ से डाप् की प्राप्ति होती है। उस प्रसङ्ग में यह ङीष् किया जा रहा है। ] उदा० —घटोध्नी। कुम्भोध्नी। घट इव ऊधः यस्याः, कुम्भमिव ऊधः यस्याः—इस विग्रह में बहुव्रीहि समास करने पर 'ऊधसोऽनङ्' ५।४।१३१ से अनङ् अन्तादेश करने पर—घटोधन्, कुम्भोधन् ये रूप होते हैं। प्रस्तुत सूत्र से ङीष् करने पर 'अल्लोपोऽनः ६।४।१३४ सूत्र से उपधा अकार का लोप करने पर घटोध्नी, कुम्भोध्नी रूप बनते हैं। घड़ा के समान थनवाली गाय आदि अर्थ है। ]

१२७६. संख्याव्ययादेर्ङीप् ॥ २६ ॥ ( ४८९ )

पूर्वेण ङीष्प्राप्ते ङीब्विधीयते। **संख्यादेरव्ययादेश्च बहुव्रीहेरूधःशब्दान्ताद् ङीप् प्रत्ययो भवति। संख्यादेस्तावत् – द्व्यूध्नी। त्र्यूध्नी। अव्ययादेः – अभ्यूध्नी। निरूध्नी।**

**न्यासः**

'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते' इत्येवमयं ङीष्डाप्प्रतिषेधावेव बाधते, नोपधालोपिनो ङीपम्। ततश्चोपधालोपिनः परत्वात् स एव पक्षे भवेत्। तस्माद् 'अन उपधालोपिनः' इत्यत्रास्यानुवृत्तिः कर्तव्या। तेनोपधालोपिनोऽप्यूधसन्तान् ङीषेव भवति। **समासान्तश्च स्त्रियामेवेति।** समासान्तविधेरनित्यत्वात्। अनित्यत्वं तु पुनरूधःशब्देन सकारान्तेनासमासान्तेन विशेषणाद् विज्ञायते। यदि हि नित्यः स्याद् 'बहुव्रीहेरूध्नः' इति निर्देशः स्यात् ॥ २५ ॥

**संख्याव्ययादेर्ङीप्** ॥ द्व्यूध्नीत्यादि। द्वे ऊधसी अस्याः। त्रीण्यूधांस्यस्याः। अभिगतमूधोऽस्याः। निर्गतमूधोऽस्या इति विग्रहः।

**पदमञ्जरी**

बहुव्रीहेरूधसो ङीष् नश्चेति वक्तव्यम्, ऊधःशब्दान्ताद् बहुव्रीहेः स्त्रियां ङीष् भवति तत्सन्नियोगेन चान्त्यस्य नकारः, समासान्तप्रकरणे तु ऊधसोऽनङिति न वक्तव्यम्, 'धनुषोऽनङ्' इत्येव पठितव्यम्, कः पुनरेवं सति गुणो भवति ? 'अन उपधालोपिनः' इत्यत्रास्यानुवृत्तिर्नाश्रयितव्या भवति; अपि च महोधाः पर्जन्यः, कुण्डोधो धैनुकमिति सिद्धं भवति, अन्यथा 'ऊधसोऽनङ्' इत्यत्र स्त्रियामिति वक्तव्यं स्यादत आह—**समासान्तश्च स्त्रियामेवेति।** इष्यत इत्यनुषङ्गः, तत्रैव स्त्रियामिति वक्तव्यमित्यर्थः, इतरथा हि कब्विधिप्रसङ्गः। कपोऽवकाशोऽन्यो बहुव्रीहिः--अयवकः अव्रीहिकः, ङीषस्तु--विभाषा कप्, यदा न कप् सोऽवकाशः; कप्प्रसङ्गे उभयं प्राप्नोति परत्वात् कप् स्यात् ॥ २५ ॥

**संख्याव्ययादेर्ङीप्** ॥ **पूर्वेण ङीषि प्राप्ते ङीब् विधीयत इति।** यत्र पूर्वपदप्रकृतिस्वरस्तत्र बहुव्रीहौ। अन्तोदात्ते तु बहुव्रीहौ ङीब्ङीषोर्नास्ति विशेषः, सूध्नी, 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वम्, तत्राल्लोपे ङीबप्युदात्तनिवृत्तिस्वरेणोदात्तो भवति। **द्वयूध्नीत्यादि।** द्वे ऊधसी यस्याः, अभिगतमूधोऽस्याः, निर्गतमूधोऽस्या इति विग्रहः।

**भावबोधिनी**

बहुव्रीहि से—इसका क्या लाभ है ? प्राप्ता ऊधः—प्राप्तोधाः [ थन को प्राप्त कर लेने वाली। यहाँ 'प्राप्तापन्ने च द्वितीयया' २।२।४ से द्वितीया तत्पुरुष है। असन्त होने से 'अत्वसन्तस्य चाधातोः' ६।४।१४ से उपधादीर्घ हो गया है। ] आगे अनुवृत्ति होने के कारण यह ङीष् 'अन उपधालोपिनोऽन्यतरस्याम्' ४।१।२८ इसका भी अपवाद है। [ इसलिये उपधालोपी ऊधसन्त से भी ङीष् ही होता है, डाप्, निषेध और ङीप्—ये तीनों नहीं होते हैं। ] और समासान्त [ अनङ् अन्तादेश ] स्त्रीलिङ्ग में ही होता है, यहाँ नहीं होता है—महोधाः पर्जन्यः। [ यहाँ बहुव्रीहि रहने पर भी पर्जन्य का विशेषण होने के कारण पुलिङ्ग होने से अनङ् और ङीष् नहीं होते हैं। ] ॥ २५ ॥

पूर्वसूत्र से ङीष् प्राप्त रहने पर ङीप् का विधान किया जाता है। संख्यादि और अव्ययादि [ संख्या जिसके आदि में और अव्यय जिसके आदि में है—ऐसे ] ऊधस्-शब्दान्त बहुव्रीहि से ङीप् प्रत्यय होता है। उदा०—संख्या जिसके आदि में है, उसका—द्व्यूध्नी। त्र्यूध्नी। [ द्वे ऊधसी यस्याः सा, त्रीणि ऊधांसि यस्याः सा—इस बहुव्रीहि में द्वि और त्रि संख्यावाची है, अतः अनङ् करने के बाद ङीप् उपधालोप करने पर द्व्यूध्नी, त्र्यूध्नी रूप बनते हैं। दो थनों वाली, तीन थनों वाली गाय आदि। ] अव्यय जिसके आदि में है उसका उदा०—अभ्यूध्नी। निरूध्नी। [ अभिगतम् ऊधः यस्याः, निर्गतम् ऊधः यस्याः—इस विग्रह में बहुव्रीहि करने के बाद ङीप् और उपधालोप करने पर उक्त

**आदिग्रहणं किम् ? द्विविधोध्नी, त्रिविधोध्नीत्यत्रापि यथा स्यात् ॥**

## १२७७. दामहायनान्ताच्च ॥ २७ ॥ ( ४८६ )

'ऊधसः' इति निवृत्तम् । संख्याग्रहणमनुवर्तते, नाव्ययग्रहणम् । **संख्यादेर्बहुव्रीहेर्दामशब्दान्ताद्धायन-शब्दान्ताच्च स्त्रियां ङीप् प्रत्ययो भवति ।** दामान्तात् डाप्प्रतिषेधविकल्पेषु ( ४.१.१२,१३,२८ ) प्राप्तेषु नित्यार्थं वचनम् । द्विदाम्नी । त्रिदाम्नी । हायनान्तात् टापि प्राप्ते – द्विहायनी । त्रिहायणी । चतुर्हायणी ।

न्यासः

**आदिग्रहणं किमिति ।** एवं मन्यते—संख्याव्ययाभ्यामित्येव वक्तव्यम्, बहुव्रीहेरूधसः' इति हि वर्तते, तत्रैवमभिसम्बन्धः करिष्यते—संख्याव्ययाभ्यामुत्तरो य ऊधःशब्दस्तदन्ताद् बहुव्रीहेर्ङीब्भवतीति, तथा च निष्फलमादिग्रहणम्, विनापि तेन सिद्धत्वादिति । **द्विविधोध्नीत्यादि ।** यद्यादिग्रहणं न क्रियेत तदा 'संख्या-व्ययाभ्याम्' इति पञ्चमीनिर्देशात् संख्याया अनन्तरो य ऊधःशब्दस्तदन्तादेव स्यात् । यत्र तु व्यवधानं तत्र तु न स्यात्, आदिग्रहणात्तु तत्रापि भवति । द्विविधमूधो यस्या इति विग्रहः । अत्रादिग्रहणे सति विधशब्देन व्यवधानेऽपि भवति ॥ २६ ॥

**दामहायनान्ताच्च ॥ ऊधस इति निवृत्तम्,** प्रकृत्यन्तरोपादानात् । **संख्याग्रहणमनुवर्तते, नाव्यय-ग्रहणमिति ।** संख्याग्रहणस्यैव स्वरितत्वात् । **डाप्प्रतिषेधविकल्पेषु प्राप्तेष्विति ।** 'डाबुभाभ्यामन्यतरस्याम्' इत्यादिना डापि प्राप्ते 'अनो बहुव्रीहेः' इति प्रतिषेधे 'अन उपधालोपिनोऽन्यतरस्याम्' इति विकल्पे च । द्वे दामनी अस्या इति **द्विदाम्नी ।** द्वौ हायनावस्या इति **द्विहायनी ।**

पदमञ्जरी

**आदिग्रहणं किमिति ।** संख्याव्ययाभ्यामुत्तरो य ऊधःशब्दस्तदन्ताद् बहुव्रीहेरिति विज्ञायमाने द्व्यूध्नीत्यादि सिद्धमिति प्रश्नः । **द्विविधोध्नीति ।** असत्यादिग्रहणे 'संख्याव्ययाभ्याम्' इति पञ्चमीनिर्देशात्ताभ्यामनन्तरो य ऊधःशब्दस्तदन्तादेव स्यात्, पदान्तरव्यवाये तु न स्यादिति भावः ॥ २६ ॥

**दामहायनान्ताच्च ।।** 'स्वरितेनाधिकारः' इत्यत्र द्वौ पक्षौ—शब्दाधिकारः, अर्थाधिकारश्चेति । तत्राद्ये पक्षे यस्यैव शब्दस्य स्वरितत्वं प्रतिज्ञातं स एवानुवर्तते, द्वितीये तु द्वन्द्वार्थस्यैकत्वात् तस्यैवानुवृत्तिः स्याद्वा न वा, तदिहाद्यं पक्षमाश्रित्याह—**संख्याग्रहणमनुवर्तते नाव्ययग्रहणमिति ।**

भावबोधिनी

रूप सिद्ध होते हैं । अभिगत = स्पष्ट लक्षित होने वाले थनों वाली, निकले हुये थनों वाली । ] [ संख्या और अव्यय ] आदि में हो—इसका ग्रहण किसलिये है ? द्विविधोध्नी, त्रिविधोध्नी—इनसे भी ङीप् हो जाय, इसलिये है ।

विमर्श - भाव यह है कि 'संख्याऽव्ययाभ्यां ङीप्' ऐसा सूत्र आकार रहने पर पञ्चमीनिर्देश हो जाने से संख्या और अव्यय से अव्यवहितोत्तर ऊधस् शब्दान्त से ही ङीप् होता प्रस्तुत लक्ष्यों में नहीं हो पाता क्योंकि मध्य में 'विध' शब्द का व्यवधान है । द्विविधम् ऊधो यस्याः सा, त्रिविधम् ऊधो यस्याः सा – इस विग्रह में बहुव्रीहि होने पर अनङ् ङीप्, उपधालोप करने पर उक्त रूप सिद्ध होते हैं । ] ॥ २६ ॥

'ऊधस' इसकी निवृत्ति है । केवल संख्याग्रहण की अनुवृत्ति होती है, अव्ययग्रहण की नहीं । संख्यादि [ संख्यावाचक जिसके आदि में है, ऐसा ] और दामशब्दान्त एवं हायन-शब्दान्त बहुव्रीहि से स्त्रीलिङ्ग में ङीप् होता है । दामन् शब्दान्त से [ 'डाबुभ्यामन्यतरस्याम्' ४।१।१३ से ] डाप्, [ 'अनो बहुव्रीहेः' ४।१।१२ से ] निषेध और [ अनुपधालोपिनोऽन्यतरस्याम्' ४।१।२८ से ] विकल्प—इन तीनों के प्राप्त रहते नित्य ङीप् करने के लिए यह सूत्र है । उदा० – द्विदाम्नी, त्रिदाम्नी । [ दो रस्सियों वाली, तीन रस्सियों वाली । द्वे दामनी = बन्धनरज्जू यस्याः सा, त्रीणि दामानि यस्या सा—इस बहुव्रीहि में उपर्युक्त रीति से डाप्, प्रतिषेध और विकल्प प्राप्त रहने पर प्रस्तुत सूत्र से ङीप् होता है । द्विदामन् + ङीप् = ई, त्रिदामन् + ङीप् = ई, उपधा अकार का लोप करने पर उक्त रूप सिद्ध होते हैं । ]

❀ हायनो वयसि स्मृतः ❀ ( म० भा० ४.१.२७ वा० २ )। तेनेह न भवति – द्विहायना शाला, त्रिहायना, चतुर्हायना। णत्वमपि 'त्रिचतुर्भ्यां हायनस्य' इति वयस्येव स्मर्यते॥

## १२७८. अन उपधालोपिनोऽन्यतरस्याम् ॥ २८ ॥ ( ४६२ )

**न्यासः**

**हायनो वयसि स्मृत इति**। प्रकृतिरिति शेषः। कस्य प्रकृतिः ? ङीपः प्रकृतत्वात् तस्यैव। बहुव्रीह्यधिकारादत्र हायनान्तो बहुव्रीहिरिति गम्यते। एतदुक्तं भवति—हायनान्तो बहुव्रीहिर्वयसि गम्यमाने ङीपः प्रकृतिराचार्यैः स्मृत इति। तेन यदि वयो गम्यते, ततो ङीब् भवति, नान्यथा। एतच्चोत्तरसूत्रेऽन्यतरस्यांग्रहणस्योभयोर्योगयोः शेषभूतत्वाद् व्यवस्थितविभाषाविज्ञानाच्च लभ्यते। अथ त्रिचतुर्भ्यां हायनस्याप्युपसंख्यानाद् यथा हि त्रिहायणी चतुर्हायणीत्यत्र णत्वं भवति; तथा त्रिहायना शाला, चतुर्हायना शालेत्यत्रापि कस्मान्न भवति ? इत्याह—**णत्वमपीत्यादि**। तदपि हि णत्वमौपसंख्यानिकमाचार्यैर्वयस्येव स्मर्यते। न च शालाया वयः सम्भवति, तस्य प्राणिधर्मत्वादिति नेह णत्वं प्रवर्तते।

अन्तग्रहणं विस्पष्टार्थम्। बहुव्रीह्यधिकारादेव हि सामर्थ्यात् तदन्तविधिर्लभ्यते; न हि केवलयोर्दामहायनशब्दयोर्बहुव्रीहिसंज्ञा केनचिद्विहिता॥ २७॥

**अन उपधालोपिनोऽन्यतरस्याम्॥ उपधालोपीति**। उपधालोपो यस्य ङीपि परतः सम्भवति स उपधालोपी।

**पदमञ्जरी**

**हायनो वयसि स्मृत इति**। प्रकृतिरिति शेषः। हायनान्तो बहुव्रीहिर्वयसि गम्यमाने ङीपः प्रकृतिराचार्यैः स्मृत इत्यर्थः। **त्रिहायना शालेति**। प्राणिधर्मो वयः शालाया न सम्भवति। अथ मूलोदाहरणवत् 'त्रिचतुर्भ्यां हायनस्य' इत्यौपसंख्यानिकं णत्वं कस्मान्न भवतीत्यत आह—**णत्वं चेत्यादि**। बहुव्रीह्याधिकारादेव तदन्तविधिसिद्धेरन्तग्रहणं विस्पष्टार्थम्॥ २७॥

**अन उपधालोपिनोऽन्यतरस्याम्**॥ इति परत उपधालोपो यस्य सम्भवति स उपधालोपी।

**भावबोधिनी**

हायन–शब्दान्त से आप् [ टाप् ] प्राप्त रहने पर [ ङीप् किया गया है ]—द्विहायनी। त्रिहायनी। चातुर्हायणी। [ दो वर्षों की, तीन वर्षों की, चार वर्षों की बालिका ] द्वे हायने यस्याः, त्रीणि हायनानि यस्याः, चत्वारि हायनानि यस्याः सा इस बहुव्रीहि में टाप् प्राप्त रहते यह ङीप् होता है। ] 'वयः = अवस्था अर्थ में ही यहाँ हायन विवक्षित है।' इसलिए इनमें ङीप् नहीं होता है—द्विहायना, त्रिहायना, चतुर्हायना शाला [ यहाँ शाला = भवन का काल प्रकट किया जाता है— दो वर्षवाला भवन आदि। अतः ङीप् न होकर टाप् ही होता है। ] 'त्रि और चतुर् से परे हायन का णत्व भी वयः = अवस्था अर्थ में ही होता है। [ अतः इनमें णत्व भी नहीं होता। ]॥ २७॥

'बहुव्रीहेः' इसकी अनुवृत्ति होती है। अन्नन्त उपधालोपी जो बहुव्रीहि उससे ङीप् प्रत्यय विकल्प से होता है। ङीप् न होने पर [ 'डाबुभ्यामन्यतरस्याम्' ४।१।१३ से ] डाप् प्रत्यय और [ 'अनो बहुव्रीहेः' ४।१।१२ से ] ङीप्निषेध होते हैं।

डाप्, प्रतिषेध, [ डाप् के विकल्प में ] ङीप्—इन तीनों के सिद्ध रहते हुए प्रस्तुत सूत्र किसलिए बनाया जा रहा है ? अनुपधालोपी = जिसकी उपधा का लोप नहीं हुआ है, ऐसे बहुव्रीहि से ङीप् का प्रतिषेध करने के लिए यह सूत्र है [ जैसे—] बहुराजा, बहुराज्ञी [ बहवः राजानः यस्यां सा—इस बहुव्रीहि में उपधालोप न होने पर इससे विकल्प से ङीप् का प्रतिषेध होता है, अतः 'सर्वनामस्थाने च' ६।४।८ से उपधादीर्घ होने पर— बहुराजा—यह रूप होता है। जब निषेध नहीं होता है तो बहुराजन् + ङीप् = ई में उपधालोप, श्चुत्व और ज् + ञ् = ज्ञ करने पर—बहुराज्ञी यह दूसरा रूप बनता है। डाप् करने पर भी बहुराजा - यही रूप बनता है। ] द्विवचन में बहुराजे [ बहुराजा इस टाप् प्रत्ययान्त से औ का शी = ई करके गुण होता है ]। बहुतक्षा। बहुतक्ष्णी [ ए० व० के रूप है ] बहुतक्षे [ द्वि० व० है ]। बहवः

**'बहुव्रीहेः' इत्येव। अन्नन्तो यो बहुव्रीहिरुपधालोपी तस्मादन्यतरस्यां ङीप् प्रत्ययो भवति। ङीपा मुक्ते डाप्प्रतिषेधौ भवतः। किमर्थं तर्हीदमुच्यते, ननु सिद्धा एव डाप्प्रतिषेधङीपः ? अनुपधालोपिनो ङीप्प्रतिषेधार्थं वचनम्। बहुराजा, बहुराज्ञी, बहुराजे। बहुतक्षा, बहुतक्ष्णी, बहुतक्षे।**

**अन इति किम् ? बहुमत्स्या। उपधालोपिनः किम् ? सुपर्वा, सुपर्वे, सुपर्वाः। सुपर्वाणौ, सुपर्वाणः। डाप्प्रतिषेधावेवात्र भवतः॥**

**न्यासः**

**नन्वित्यादि**। 'अनो बहुव्रीहेः' इति प्रतिषेधः सिद्धः, 'डाबुभाभ्यामन्यतरस्याम्' इति डाप्, अन्यतरस्यां-ग्रहणाच्च पक्षे ङीप्। यदि तर्हि 'डाबुभाभ्यामन्यतरस्याम्' इत्यनेन ङीबपि विधीयते, तदा दामा पामेत्यत्रापि स्यात्? अन्यतरस्यांग्रहणस्य व्यवस्थितविभाषात्वान्न भविष्यति। **अनुपधालोपिन इत्यादि**। यदीदं नोच्येत, अनुपधालोपिनोऽपि ङीप् स्यात्। तस्मादुपधालोपिन एव ङीब् यथा स्यात्, अनुपधालोपिनो मा भूदित्येवमर्थ-मिदमुच्यते। **बहुराजेति**। ङीप्प्रतिषेधः। सर्वनामस्थाने च' इति नोपधाया दीर्घः। **बहुराज्ञीति**। ङीप्, 'अल्लोपोऽनः'। **बहुराजे इति**। डाप्, 'औङ आपः' इति शीभावः, 'आद्गुणः'। द्विवचननिर्देशो डापोऽभिव्यक्तये। एकवचने हि डाप्प्रतिषेधयोर्न कश्चिद् विशेषः; उभयत्रापि तुल्यरूपत्वात्। क्वचिद् **बहुराजा इति** बहुवचनेन निर्देशः, तस्यापि तदेव प्रयोजनम्।

**बहुमत्स्या इति**। सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' इति लोपविधानादुपधालोपीत्येष बहुव्रीहिः। **सुपर्वेति**। अयमुपधालोपी न भवति। 'न संयोगाद् वमन्तात्' इत्युपधालोपप्रतिषेधात्॥ २८॥

**पदमञ्जरी**

**ननु सिद्धा एवेत्यादि**। एतच्च 'डाबुभाभ्याम्' इत्यत्रैव व्याख्यातम्।

**अनुपधालोपिनो ङीप्प्रतिषेधार्थं वचनमिति**। अनो बहुव्रीहेर्यदन्यतरस्यां ङीब्विधानं तदुपधालोपिन एवेत्येवं नियमार्थमित्यर्थः। अस्य च नियमस्यानुपधालोपिनो ङीब्निवृत्तिः फलमिति फलतः प्रतिषेधवाचो युक्तिः। **बहुराजे इति**। 'औङ आपः' इति शीभावः। द्विवचननिर्देशो डापोऽभिव्यक्तये; एकवचने डाप्प्रतिषेधयोः रूपस्य तुल्यत्वात्।

**बहुमत्स्येति**। 'सूर्यतिष्यागस्त्य' इत्यादिना उपधालोपविधानादुपधालोप्येष बहुव्रीहिः। **सुपर्वेति**। 'न संयोगाद्वमन्तात्' इति निषेधान्नायमुपधालोपी॥ २८॥

**भावबोधिनी**

तक्षाणः यस्यां सा—यह बहुव्रीहि है।

विमर्श—यहाँ रूपों की स्थिति कुछ अस्पष्ट रूप से प्रदर्शित की गई है। यह सूत्र विकल्प से ङीप् करता है और 'डाबुभ्यामन्यतरस्याम्' ४।१।१३ यह डाप् भी विकल्प से होता है। दो विकल्प रहने पर तीन रूप होते हैं। काशिकाकार ने दो ही रूप प्रदर्शित किये हैं। एक रूप ङीप् होने पर (१) बहुराज्ञी, बहुराज्ञ्यौ बहुराज्ञ्यः आदि। दूसरा डाप् होने पर (२) बहुराजा, बहुराजे, बहुराजा आदि। तीसरा जब ङीप् और डाप् दोनों नहीं होते हैं। (३) बहुराजा, बहुराजानौ, बहुराजानः। इस विषय में सिद्धान्तकौमुदीकार ने स्पष्ट लिखा है—"पक्षे डाप्–ङीप् निषेधौ। [ डाप् ङीप् निषेधश्च—यह विग्रह है, निषेध केवल ङीप् से सम्बद्ध है। ]—बहुराज्ञी, बहुराजा [ बहुराजा ]। बहुराज्ञ्यौ, बहुराजे, बहुराजानौ।" काशिकाकार ने भी उक्त रूप से तीन रूप लिखे होते तो अधिक अच्छा रहता।

अनः - इसके ग्रहण का क्या फल है? बहुमत्स्या [ यहाँ 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' ६।४।१४९ से लोपविधान होने से यह उपधालोपी बहुव्रीहि है। किन्तु अन्नन्त नहीं है अतः यह ङीप् नहीं होता है। ] उपधालोपी से—इसका क्या प्रयोजन है? सुपर्वा। सुपर्वे। सुपर्वा। सुपर्वाणौ। सुपर्वाणः। [ यहाँ 'न संयोगाद् वमन्तात्' ६।४।१३७ से उपधालोप-निषेध हो जाता है। ] डाप् और [ ङीप् का ] प्रतिषेध होते हैं। [ डाबुभ्यामन्यतरस्याम् ४।१।१३ से जब डाप् होता है तो टिलोप करने पर सुपर्वा, सुपर्वे ये रूप होते हैं। पक्ष में सुपर्वा, सुपर्वाणौ ये रूप होते। ]॥ २८॥

**१२७९. नित्यं संज्ञाछन्दसोः ॥ २९ ॥ ( ४८७ )**

**अन्नन्ताद् बहुव्रीहेरुपधालोपिनः संज्ञायां विषये छन्दसि च नित्यं ङीप् प्रत्ययो भवति । विकल्पस्यापवादः । सुराज्ञी, अतिराज्ञी नाम ग्रामः । छन्दसि — गौः पञ्चदाम्नी । एकदाम्नी । द्विदाम्नी । एकमूर्ध्नी ( अथर्व० ८.९.१५ ) समा॒नमू॑र्ध्नी ( तै०सं० ४.३.११.४ ) ।**

**१२८०. केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ॥ ३० ॥ ( ४८८ )**

**'संज्ञाछन्दसोः' ( ४.१.२९ ) इत्येव । केवलादिभ्यः प्रातिपदिकेभ्यः संज्ञायां छन्दसि [ च ] विषये स्त्रियां ङीप् प्रत्ययो भवति । केवली ( पै० १६.२०.१ ) । केवलेति भाषायाम् । मामकी ( पै० १.६.८ ) । मामिकेति भाषायाम् । 'मित्रावरुणयोर्भाग॒धेयी॑:स्थ' ( तै० सं० १.३ १२.१ ) भागधेयेति भाषायाम् । पापी त्वियम् ( मै० ४.२.१४ ) । पापेति भाषायाम् । उताऽप॒रीभ्यो॑ म॒घवा॑ विजि॑ग्ये (ऋ० १.३२.१३) । अपरेति भाषायाम् ।**

**न्यासः**

**नित्यं संज्ञाछन्दसोः ॥** नित्यग्रहणं विस्पष्टार्थम् । पूर्वेणैव हि विकल्पेन ङीप् सिद्धः, तदारम्भसामर्थ्यादेव ङीप् नित्यं भविष्यति, अन्यथा हीदं वचनमनर्थकं स्यात् ॥ २९ ॥

**केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ॥** अथ मामकग्रहणं किमर्थम्, यावतास्मदः 'तस्येदम्' इत्यणि कृते 'तवकममकावेकवचने' इति ममकादेशेन मामक इति भवति, ततश्च 'टिड्ढाणञ्'

**पदमञ्जरी**

**नित्यं संज्ञाछन्दसोः ॥** ननु छन्दसि दृष्टमेवानुविधीयते नापूर्वमुत्प्रेक्ष्यते; तत्र च ङीबेव चेद् दृश्यते तस्य च लक्षणमस्ति, क इदानीं तदभावं प्रयोक्तुं प्रभवति, संज्ञाशब्दा अप्यनादिप्रयुक्ता नियतानुपूर्वीकास्तत्रापि ङीबेव चायं दृश्यते न तदभावः शक्यते कर्त्तुम्, किमर्थमिदं सूत्रम् ? संज्ञाछन्दसोरिति पदमुत्तरार्थं वक्तव्यम् । नित्यग्रहण-मुत्तरत्र विकल्पनिवृत्त्यर्थम् ॥ २९ ॥

**केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ॥ केवलेति भाषायामिति ।** असंज्ञाविषये इति भावः । **मामकीति ।** ममेयमिति 'युष्मदस्मदोरन्यतरस्यां खञ्च' इत्यण्, 'तवकममकावेकवचने' इति ममका-देशः, तत्राणन्तत्वात् 'टिड्ढाणञ्' इत्येव सिद्धे नियमार्थं मामकग्रहणम्—संज्ञाछन्दसोरेव ङीब्नान्यत्रेति । **मामिकेति ।** टापि 'मामकनरकयोरुपसंख्यानम्' इतीत्वम् । **भागधेयीति ।** भागशब्दात् पुंलिङ्गात्स्वार्थे धेयप्रत्ययः, स्वार्थिकाश्च क्वचिदतिवर्तन्ते प्रकृतितो लिङ्गमिति स्त्रीलिङ्गता । **पापेति ।** अभेदोपचारात्तद्वति वर्तमानः

**भावबोधिनी**

अन्नन्त, उपधालोपी बहुव्रीहि से संज्ञाविषय में और वेदविषय में नित्य ही ङीप् प्रत्यय होता है । यह विकल्प का अपवाद है । उदा०—सुराज्ञी, अतिराज्ञी नाम ग्रामः । [ यहाँ ग्राम की अपेक्षा नगरी यह विशेष्य रखना उचित है क्योंकि विशेष्य के अनुसार ही विशेषण के लिङ्ग आदि होते हैं । ] शोभनाः राजानः यस्यां सा—इस बहुव्रीहि में ङीप् प्रत्यय, उपधालोप, श्चुत्व और ज्+ञ्=ज्ञ् करने पर रूप सिद्ध होता है । इस समय यह किस नगरी की संज्ञा है, इसकी खोज करनी चाहिये । ] वेद में—गौः पञ्चदाम्नी । एकदाम्नी । द्विदाम्नी । [ पाँच रस्सियों वाली गाय । पञ्च दामानि यस्याः सा—इस विग्रह में बहुव्रीहि और ङीप् करके उपधालोप करने पर रूप सिद्ध होता है । अन्य शब्दों में भी यही प्रक्रिया है । ] एकमूर्ध्नी समानमूर्ध्नी [ एकः मूर्धा यस्याः सा, समानं मूर्धा यस्याः सा—इस विग्रह में बहुव्रीहि समास, ङीप् प्रत्यय, उपधालोप करने पर उक्त रूप सिद्ध होते हैं । ] ॥ २९ ॥

'संज्ञाछन्दसोः' इसकी अनुवृत्ति होती है । संज्ञा में और वेदविषय में केवल इत्यादि [नौ] प्रातिपदिकों से स्त्रीलिङ्ग में ङीप् प्रत्यय होता है । उदा०—केवली [ केवल+ङीप् ] । लौकिक संस्कृत में [ टाप् होने से ]—केवला । मामकी [ मामक+ङीप् ] लौकिक संस्कृत में मामिका [ टाप् और इत्व होता है । मम इयम्—इस अर्थ में अण्

**'समानी'' ( ऋ० १०.१९१.३ ) प्रवाणी। समानेति भाषायाम्। आर्यकृती ( मै० १.८.३ )। आर्यकृतेति भाषायाम्। सुमङ्गली ( ऋ० १०.८५.३३ )। सुमङ्गलेति भाषायाम्। भेषजी। ( तै० सं० ४.५.१०.१ )। भेषजेति भाषायाम्॥**

## १२८१. रात्रेश्चाजसौ ॥ ३१ ॥ ( ३४४९ )

**जस्विषयादन्यत्र संज्ञायां छन्दसि च रात्रिशब्दाद् ङीप् प्रत्ययो भवति। या रात्री सृष्टा। रात्री'भिः ( ऋ० १०.१०.९ )।**

**अजसादिष्विति किम्? यास्ता रात्रयः॥ * अजसादिष्विति वक्तव्यम् ❀ ( म० भा० ४.१.३१ )। रात्रिं सहोषित्वा ( म० भा० )।**

**न्यासः**

इत्येव ङीप्सिद्धेः? सत्यमेतत्; नियमार्थं तु मामकशब्दस्य ग्रहणम्—संज्ञाच्छन्दसोर्यथा स्यात्, अन्यत्र मा भूदिति॥ ३०॥

**रात्रेश्चाजसौ॥ अजसाविति**। विषयसप्तमीयम्, न परसप्तमी, कुतः? स्त्रीप्रत्ययस्यान्तरङ्गत्वाज्जसः परत्वाविरोधाद्विषयसप्तमीत्वे न दोष इत्याह—**जस्विषयादित्यादि**।

**अजसादिष्विति वक्तव्यमिति**। जसादिविषयादन्यत्र रात्रिशब्दाद् ङीप् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—इह लाघवार्थम् 'अजसि' इति वक्तव्येऽजसावित्युक्तम्, मात्राधिक्यादर्थाधिक्यसूचनार्थम्, तेनाजसादिषु ङीब् भवतीति। आदिशब्देनामादीनां ग्रहणम्।

**पदमञ्जरी**

पापशब्दोऽभिधेयवल्लिङ्गः। **अवरीत्यत्र** द्वितीयो वर्णो दन्त्योष्ठ्यः, न पवर्ग्यः। **आर्येण कृतेति**। प्राक् सुबुत्पत्तेः समासेऽकारान्तत्वम्। **भेषजीति**। भिषज इयमित्यणि आदिवृद्धेरभावोऽस्मादेव निपातनादेकारः। एवं च भेषजग्रहणमपि नियमार्थम्॥ ३०॥

**रात्रेश्चाजसौ॥ कथमित्यादि**। दीर्घान्ताज्जसि 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घप्रतिषेधाद्यणादेशे 'रात्र्यः' इति प्रयोग उपपद्यते, ह्रस्वान्तस्य तु 'जसि च' इति गुणे 'रात्रयः' इति रूपं स्यात्। दीर्घान्तश्च रात्रिशब्दः संज्ञाछन्दसोरपि जसि न सम्भवति, अजसाविति प्रतिषेधात्, किं पुनर्भाषायामिति प्रश्नः। **ङीषयमित्यादि**। बह्वादिषु रात्रिशब्दो न पठ्यत इति चेत्, तत्राह-**तत्र हीति**। कृत इकारः कृदिकारः,

**भावबोधिनी**

प्रत्यय और ममक आदेश, आदिवृद्धि करने पर मामक बनता है। ] मित्रावरुणयोः भागधेयी [ भाग शब्द से स्वार्थ में धेय प्रत्यय होता है--भागधेय+ङीप् ] लौकिक संस्कृत में--भागधेया [ टाप् होता है ]। पापी त्वियम् [ पाप+ङीप् ]। लौकिक संस्कृत में- पापा। उताऽपरीभ्यो मघवा विजिग्ये। [ अपर+ङीप् ] लौकिक संस्कृत में--अपरा। [ पदमञ्जरीकार अवरी और अवरा ये पाठ मानते हैं ] समानी प्रवाणी। [ समान+ङीप् ] लौकिक संस्कृत में--समाना [ टाप् ]। आर्यकृती। लौकिक संस्कृतमें--आर्यकृता। [ वेद में ] सुमङ्गली। लौकिक संस्कृत में--सुमङ्गला। [ वेद में ] भेषजी। लौकिक में--भेषजा॥ ३०॥

संज्ञा में और वेदविषय में, जस् के विषय से भिन्न स्थल पर रात्रि शब्द से ङीप् होता है। उदा० - या रात्री सृष्टा। रात्रीभिः। [ रात्रि+ङीप्=ई ] जस् का विषय न रहने पर—इसका क्या फल है? यास्ता रात्रयः। [ यहाँ जस्=प्रथमा-बहुवचन होने के कारण ङीप् नहीं होता है। अतः रात्रि+जस्=अस् गुण, अयादेश, स् का रुत्व विसर्ग होता है। ] * जस् आदि का विषय न रहने पर ऐसा कहना चाहिये। ❀ उदा०--रात्रिं सहोषित्वा [ रात्रि से अम् का विषय होने के कारण ङीप् नहीं होता है। "अमि पूर्वः" ६।१।१०७ से पूर्वरूप होता है। ]

'अन्धकार—समूह से व्याप्त रातें [ रात्र्यः ]' यह प्रयोग कैसे होता है? [ अर्थात् जस्विषय होने के कारण ङीप्

**कथं "तिमिरपटलैरवगुण्ठिताश्च रात्र्यः ?" ङीषयं बह्वादिलक्षणः, तत्र हि पठ्यते – 'कृदिकारादक्तिनः' ( ग० सू० ५० ), 'सर्वतोऽक्तिन्नर्थादित्येके' ( ग० सू० ५१ ) इति ॥**

**१२८२. अन्तर्वत्पतिवतोर्नुक् ॥ ३२ ॥ ( ४८९ )**

**प्रकृतिर्निपात्यते, नुगागमस्तु विधीयते । अन्तर्वत्पतिवतोर्नुग्भवति ङीप् च प्रत्ययः, स तु नकारान्तत्वादेव**

**न्यासः**

**कथमित्यादि । रात्र्य इति ।** रात्रिशब्दस्य जसन्तस्य प्रयोगः । एवं हि 'दीर्घाज्जसि च' इति सवर्णदीर्घत्वे प्रतिषिद्धे यणादेश उपपद्यते, नान्यथा । यदि तु रात्रिशब्दस्यायं प्रयोगः स्यात् ततः 'जसि च' इति गुणे कृतेऽयादेशे च रात्रय इति रूपं स्यात् । ईकारान्तश्च रात्रिशब्दो न सम्भवति; अजसाविति ङीप्प्रतिषेधात् । ततश्च रात्र्य इति प्रयोगो नोपपद्यत इत्यभिप्रायः । **ङीषयमित्यादि ।** ननु च न रात्रिशब्दो बह्वादिषु पठ्यते, तत्कथं बह्वादिलक्षणस्ततो ङीष् भविष्यति ? इत्यत आह—**तत्र हीत्यादि । कृदिकारादक्तिन इति ।** कृत इकारः कृदिकारः, तदन्तान् ङीष् भवति । 'वृद्दभ्यां विन्' वर्वी, दर्वी । यस्तु क्तिन्सम्बन्धी तदन्तान्न भवति—'स्त्रियां क्तिन्' कृतिः, हृतिः । **सर्वतोऽक्तिन्नर्थादित्येक इति ।** एक आचार्या सर्वतोऽक्तिन्नर्थात् कृदिकारादकृदिकाराच्च ङीष् भवतीत्याहुः, राजिः, राजी । राजिशब्दोऽव्युत्पत्तिपक्षे कृदिकारान्तो न भवति । अक्तिन्नर्थादिति न विद्यते क्तिन्नर्थो यस्य सोऽक्तिन्नर्थः, तस्मात् सर्वतो ङीष् भवति । यस्तु क्तिन्नर्थस्तदन्तान्न भवति – कृतिः, हृतिः । 'आक्रोशे नञ्यनिः'—अकरणिः, अहरणिः । रात्रिशब्दश्चायं व्युत्पत्तिपक्षे कृदिकारान्तो भवति, 'रा आदाने', 'रा शदिभ्यां त्रिप्' रात्रिः, तस्मात् पक्षे ङीष्—रात्री । अव्युत्पत्तिपक्षे तु कृदिकारान्तो न भवति, ततः 'सर्वतोऽक्तिन्नर्थात्' इति ङीष् ॥ ३१ ॥

**अन्तर्वत्पतिवतोर्नुक् ॥ स तु नकारान्तत्वादेव सिद्ध इति ।** 'ऋन्नेभ्यो ङीप्' इत्यनेन । **निपातनसामर्थ्यादित्यादि ।** यथैव हि निपातनसामर्थ्यादन्यत् किञ्चिदलाक्षणिकं कार्यं भवति, तथार्थविशेषेऽपि वृत्तिः । कस्मिन्पुनरर्थ-

**पदमञ्जरी**

तदन्तान् ङीष् भवति 'दृजागृभ्यां विः', दर्विः, दर्वी; यस्तु क्तिन्सम्बन्धी तदन्तान्न भवति—कृतिः, हृतिः । **सर्वत इति ।** कृदिकारादकृदिकाराच्चेत्यर्थः । यस्तु क्तिन्नर्थस्तस्मान्न भवति—'आक्रोशे नञ्यनिः', अकरणिः, अहरणिः । रात्रिशब्दोऽयम् 'राशदिभ्यां त्रिप्' इति व्युत्पत्तिपक्षे कृदिकारान्तः, अव्युपत्तिपक्षे 'सर्वतोऽक्तिन्नर्थात्' इति ङीष् । सूत्रं तु ङीबर्थम्—रात्री व्यख्यत्, रात्रीभिरस्मा अहभिर्दशस्येत्; अत्राद्युदात्तत्वं भवति ॥ ३१ ॥

**अन्तर्वत्पतिवतोर्नुक् ॥ निपातनसामर्थ्याच्चेति ।** कार्यान्तरवदर्थविशेषवृत्तिरपि लभ्यत इति भावः । कस्मिन्विशेष इत्यत्राह—**अन्तर्वत्पतिवदिति । गर्भभर्तृसंयोगे इति । अन्तर्वदिति ।** गर्भसंयोगे, गर्भिण्यामित्यर्थः । **पतिवदिति ।** भर्तृसंयोगे, भर्तृमत्यामित्यर्थः, जीवपत्यामिति यावत् । **इह न भवति अन्तरस्यां शालायां विद्यते**

**भावबोधिनी**

न होने से गुण और अयादेश करके 'रात्रयः' ऐसा होना चाहिये था ? ] "बह्वादिभ्यश्च" ४।१।४५ से यह ङीष् हुआ है । उस बह्वादिगण में ये नियम पठित हैं—"कृत् प्रत्यय के इकारान्त शब्द से ङीष् होता है, क्तिन् को छोड़कर ।' 'दूसरे आचार्य कृत् और अकृत् सभी के इकारान्त से ङीष् मानते हैं ।" [ अतः रात्रि से ङीष् होने पर रात्र्यः यह जस् का भी रूप होता है । ] ॥ ३१ ॥

[ अन्तर्वत् तथा पतिवत्—इन ] प्रकृतियों का निपातन किया जाता है; नुक् = न् आगम का विधान किया जाता है । अन्तर्वत् और पतिवत् शब्दों से नुक् होता है और ङीप् प्रत्यय भी होता है, किन्तु यह प्रत्यय तो नकारान्त होने से ही [ "ऋन्नेभ्यो ङीप्" ४।१।५ ] से सिद्ध है । और निपातनसामर्थ्य के कारण ही इन दोनों शब्दों की विशेष अर्थ में वृत्ति [ शक्ति ] हो जाती है । अन्तर्वत्—यह गर्भ के साथ संयोग में और पतिवत्—यह भर्ता के साथ संयोग में

**सिद्धः। निपातनसामर्थ्याच्च विशेषे वृत्तिर्भवति। अन्तर्वत्, पतिवदिति गर्भ-भर्तृसंयोगे। इह तु न भवति—अन्तरस्यां शालायां विद्यते। पतिमती पृथिवी ( म० भा० )**

**अन्तर्वदिति मतुब्निपात्यते, वत्वं सिद्धम्। पतिवदिति वत्वं निपात्यते, मतुप्सिद्धः। अन्तर्वत्नी = गर्भिणी। पतिवत्नी = जीवपतिः।**

**अन्तर्वत्पतिवतोस्तु मतुब्वत्वे निपातनात्।**

**न्यासः**

विशेषे वृत्तिर्भवति? इत्यत आह-**अन्तर्वत्पतिवदित्यादिना**। यथाक्रममन्तर्वदित्यस्य गर्भसंयोगे वृत्तिः, पतिवदित्यस्य भर्तृसंयोगे। गर्भेण संयोगो गर्भसंयोगः, स कस्या भवति? यस्याः कुक्षौ गर्भो व्यज्यते। भर्त्रा संयोगो भर्तृसंयोगः, स च कस्या भवति? यस्याः पतिर्जीवति। भर्त्ता चेह योऽग्निसाक्षिपूर्वकेण पाणिग्रहणेन सम्बन्धी स एवाभिमतः, न तु यः पृथिवीस्वामी। **इह तु न भवतीति अन्तरस्यां शालायां विद्यते**। शालायां कुक्षिगतेन गर्भेण सम्बन्धाभावात्। **पतिमतीति**। पतिरस्या अस्तीति मतुप् 'उगितश्च' इति ङीप्। अत्र पतिशब्द ईश्वरे स्वामिनि वर्तते। तेन संयोगे च न पतिवदिति निपात्यते। येन तु संयोगे निपात्यते स चाख्यात एव।

**मतुब् निपात्यत इति**। अन्तःशब्दस्याधिकरणप्रधानत्वात् प्रथमासमर्थता नास्ति। प्रथमासमर्थाच्चास्तिसमानाधिकरणेन मतुब् विधीयते, न चास्तिनान्तःशब्दस्य सामानाधिकरण्यम्, तस्मान्मतुब् न प्राप्नोतीति निपात्यते। **वत्वं तु सिद्धमिति**। 'मादुपधायाश्च' इत्यादिनैवाकारोपधत्वात्। **निपात्यत इति**। केनचिदप्राप्तत्वात्। **मतुप् सिद्ध इति**। पतिरस्यास्तीति प्रथमासमर्थस्य पतिशब्दस्यास्तिना सामानाधिकरण्यात्। **गर्भिणीत्यनेन** गर्भसंयोगं दर्शयति। **जीवपतिरित्यनेनापि** भर्तृसंयोगम्।

**अन्तर्वत्पतिवतोरित्यादि**। अन्तर्वत्पतिवदित्येतयोः शब्दयोर्निपातनात् मतुब्वत्वे भवतः। यथाक्रमं गर्भिण्यां जीवपत्याञ्च स्त्रियामभिधेयायाम्। गर्भोऽस्या अस्तीति गर्भिणी। जीवतीति जीवः पचाद्यच्। जीवः

**पदमञ्जरी**

**इति**। अस्मिन्विषये एवंविधं वाक्यमेव भवति, न तु मतुबादीत्यर्थः। क्वचिद् **अन्तर्वती शालेति** पठ्यते, तदयुक्तम्; अत्र मतुबभावस्योक्तत्वात्। **पतिमती पृथिवीति**। स्वामिपर्यायोऽत्र पतिशब्दः।

**मतुब्निपात्यत इति**। अधिकरणप्रधानस्यान्तःशब्दस्यास्तिनाऽसामानाधिकरण्यान्न प्राप्नोतीति कृत्वा।

**वत्वं तु सिद्धमिति**। 'मादुपधायाश्च' इत्यनेनादुपधत्वात्।

**अन्तर्वत्पतिवतोरित्यादि**। एतयोः शब्दयोर्निपातनान्मतुब्वत्वे भवतः, नुक्तु विधीयते यथाक्रमं गर्भिण्यां जीवपत्यां चाभिधेयायाम्—जीवः पतिरस्याः जीवपतिः, 'विभाषा सपूर्वस्य' इति ङीम्नकारयोरभावपक्षे रूपम्।

**भावबोधिनी**

होता है। इसलिये इनमें नहीं होता है—अन्तर शाला में है। पतिमती पृथिवी। [प्रथम प्रयोग में गर्भ के साथ और द्वितीय में भर्ता के साथ संयोग न होने से निपातन नहीं होते हैं।] [अन्तः अस्ति अस्याः यहाँ अन्तः शब्द अधिकरणपरक होने के कारण अस्ति के साथ सामानाधिकरण्य नहीं है, जैसा कि धनम् अस्ति अस्याः आदि में रहता है। अतः "तदस्यास्त्यस्मिन्निति मतुप्" ५।२।९४ से मतुप् प्रत्यय प्राप्त नहीं होता, वह निपातन से किया जाता है—यही लिखते हैं—]

अन्तर्वत्—इसमें मतुप् का निपातन किया जाता है और [ म् का ] वत्व तो [ 'मादुपधायाश्च' ८।२।९ से ] सिद्ध ही है। [ पतिः अस्ति अस्याः इस विग्रह में ] पतिवत्—इसमें वत्व का निपातन किया जाता है, मतुप् तो सिद्ध है। उदा०—अन्तर्वत्नी = गर्भिणी। पतिवत्नी = जीवपतिः। [ अन्तः अस्ति अस्याः—इस विग्रह में उपर्युक्त रीति से अन्तर्वत् का निपातन करके प्रस्तुत सूत्र से नुक् = न् और ङीप् करने पर अन्तर्वत्नी रूप होता है। गर्भवती स्त्री को कहा जाता है। पतिः अस्ति अस्याः—इस विग्रह में पतिवत् का निपातन करने के बाद प्रस्तुत सूत्र से नुक् = न् और ङीप् होने पर रूप

गर्भिण्यां जीवपत्यां च वा च च्छन्दसि तु नुग्विधिः ॥ ( म० भा० )

सान्तर्वत्नी देवानुपैत् ( म० भा० )। सान्तर्वती देवानुपैत् ( म० भा० )। पतिवत्नी तरुणवत्सा ( म० भा० )। पतिवती तरुणवत्सा ( म० भा० )॥

## १२८३. पत्युर्नो यज्ञसंयोगे ॥ ३३ ॥ ( ४९० )

**पतिशब्दस्य नकारादेशः स्त्रियां विधीयते ङीप् प्रत्ययस्तु नकारान्तत्वादेव सिद्धः यज्ञसंयोगे। यज्ञेन**

**न्यासः**

पतिर्यस्याः सा जीवपतिः। ननु च 'पतिः समास एव' इति घिसंज्ञोऽयं पतिशब्दः, तत्र 'अच्च घेः' इत्यात्वौत्वयोः कृतयोः जीवपताविति भवितव्यम्, तदयुक्तो जीवपत्यामिति निर्देशः ? नैतदस्ति; 'शेषो घ्यसखि' इति सिद्धायामेव घिसंज्ञायाम् 'पतिः समास एव' इत्यनेन शेषस्यैव पतिशब्दस्य घिसंज्ञा नियमार्थं विधीयते, न चायं शेषः; 'ङिति ह्रस्वश्च' इति नदीसंज्ञासम्भवात्। नदीसंज्ञायां च सत्याम् 'इदुद्भ्याम्' इति 'ङेराम् नद्याम्नीभ्यः' इत्याम्, यणादेशे जीवपत्यामिति भवति। **वाच्छन्दसि तु नुग्विधिरिति**। छन्दसि विकल्पे तु नुग्विधिर्भवति। स च वक्ष्यमाणस्य विभाषाग्रहणस्य सिंहावलोकितन्यायेनानुवृत्तेर्व्यवस्थितविभाषाविज्ञानाच्च लभ्यते। नुक्पक्षे 'ऋन्नेभ्यो ङीप्' इति ङीप्। **अन्तर्वत्नीति**। अनुक्पक्षे 'उगितश्च' इति ङीप्—अन्तर्वतीति भवति ॥ ३२ ॥

**पत्युर्नो यज्ञसंयोगे ॥ यज्ञसंयोग इति**। यज्ञसम्बन्धे। कस्य पुनर्यज्ञेन संयोगः ? पतिशब्दवाच्यस्यार्थस्य। अथ पतिशब्दस्यैव कस्मान्न भवति ? असम्भवात्। तयोर्हि वाच्यवाचकभावलक्षणः सम्बन्धः स्यात्, न केवलः पतिशब्दो यज्ञस्य वाचकः। कथं पुनर्यज्ञेन संयोग इत्याह—**तत्साधनत्वादिति**। तस्य यज्ञस्य साधनं तत्साधनम्, तद्भावो यज्ञसाधनत्वम्। तस्माद् यज्ञेन संयोगो भवति। यजमानस्य या भार्या तस्या यागं प्रति साधनभावोऽ-

**पदमञ्जरी**

तत्र 'ङिति ह्रस्वश्च' इति नदीसंज्ञापक्षे 'इदुद्भ्याम्' इति ङेरामादेशः, जीवपत्यामिति भवति। **वा तु छन्दसि नुग्विधिः**। छन्दसि विषये तु विकल्पेन नुग्विधिर्भवति—अन्तर्वती, अन्तर्वत्नी। पुंस्यपि दृश्यते—सोऽन्तर्वानभवत् ॥ ३२ ॥

**पत्युर्नो यज्ञसंयोगे** ॥ यद्यत्र यज्ञशब्देन पतिशब्दस्य सम्बन्धात् यज्ञसंयोग इत्यर्थः स्यात् ? यज्ञस्य पतिरियं ब्राह्मणीत्यत्रैव स्यात्, अस्ति ह्यत्रार्थद्वारकः सम्बन्धः, स्वरूपेण चानन्तर्यलक्षणः। अथ यज्ञवाचिना संयोगो यज्ञसंयोगः ? तथापि पत्नीसंयाज[1] इत्यादावेव स्यात्, न त्वियमस्य पत्नीत्यादौ। तस्माद्यज्ञशब्दस्य योऽर्थस्तेन पतिशब्दार्थस्य सम्बन्धो यज्ञसंयोग इत्याह—**यज्ञेन संयोग इति**। अन्यथा 'यज्ञशब्देन' इत्यवक्ष्यत्। एवं च

**भावबोधिनी**

सिद्ध होता है। जीवति इति जीवः, जीवः पतिः यस्याः सा अर्थात् जिसका पति जीवित हो, उसे पतिवत्नी कहा जाता है। भाष्य का श्लोक उद्धृत है—]

अन्तर्वत् का मतुप् और पतिवत् का वत्व निपातन किया जाता है। [ ये दोनों शब्द क्रमशः ] गर्भिणी और जीवित-पतिवाली स्त्री के अर्थ में प्रयुक्त होते हैं, किन्तु वैदिक प्रयोग में नुक् विकल्प से होता है। उदा०—सा अन्तर्वत्नी देवानुपैत्। सा अन्तर्वती देवानुपैत्। पतिवत्नी तरुणवत्सा। पतिवती तरुणवत्सा। [ अर्थ—गर्भिणी वह देवताओं की शरण में गयी। जवान बेटेवाली पतियुक्त स्त्री ] ॥ ३२ ॥

यज्ञ-संयोग रहने पर स्त्रीलिङ्ग में पति शब्द का नकार आदेश किया जा रहा है, ङीप् प्रत्यय तो नकारान्त होने से ही [ 'ऋन्नेभ्यो ङीप्' ४।१।५ से ] सिद्ध है। यज्ञ के साथ संयोग = यज्ञसंयोग। [ यज्ञ शब्द का जो अर्थ, उसके साथ स्त्रीत्वविशिष्टपति शब्दार्थ का सम्बन्ध प्रतीत होने पर यह आदेश और ङीप् होता है। ] उस यज्ञ का साधन होने से अथवा उसका फल गृहीत करने वाली होने से यजमान की पत्नी की सिद्धि समझनी चाहिये। [ बिना पत्नी के याग सम्भव

---

१. 'पत्नीसंयाज'—शब्दो यागविशेषस्य संज्ञा।

**संयोगः = यज्ञसंयोगः । तत्साधनत्वात् फलग्रहीतृत्वाद् वा यजमानस्य पत्नी । पत्नि वाचं यच्छ । यज्ञसंयोग इति किम् ? ग्रामस्य पतिरियं ब्राह्मणी । कथं वृषलस्य पत्नी ? उपमानाद्भविष्यति ॥**

**न्यासः**

स्तीति; विना तया तदनिष्पत्तेः । न हि भार्याविरहितस्त्रैवर्णिकः केवलो यज्ञेऽधिक्रियते । तस्मात् स तया करणभूतया यज्ञं निष्पादयतीत्यस्ति तस्या यज्ञेन सह क्रियाकारकलक्षणः सम्बन्धः । **तत्फलग्रहीतृत्वाद्वेति ।** यज्ञसंयोगे द्वितीयो हेतुः । अनेन तु स्वस्वामिभावलक्षणः सम्बन्धः प्रतिपाद्यते । यज्ञस्य यत्प्रधानं फलं स्वर्गाख्यं तद् यजमानस्य पत्नी परिगृह्णाति । अतो यद्यपि यज्ञं प्रति तस्याः साधनत्वं न विवक्ष्यते, तथापि तत्फलस्य ग्रहणाद्, यथा यजमानस्य यज्ञेन सह स्वस्वामिभावसम्बन्धः, तथा तत्पत्न्या अपि । अथ फलग्रहीतृत्वादिति कथमत्र षष्ठीसमासः ? कथञ्च न स्यात् ? 'कर्तरि च' इति तृचा सह षष्ठीसमासप्रतिषेधात् ? नैवायं तृजन्तेन षष्ठीसमासः, किं तर्हि ? द्वितीयेति योगविभागात् तृन्नन्तेन द्वितीयासमासः । अथ वा—याजकादिषु ग्रहीतृशब्दो द्रष्टव्यः, तेन षष्ठीसमासो भविष्यति । अथापि तत्र न पठ्यते ? एवमपि 'याजकादिभिश्च' इति चकारस्यानुक्तसमुच्चयार्थत्वाद् भविष्यति । 'ऋन्नेभ्यो ङीप्' इति ग्रहीतृशब्दादिह ङीप् न भवति; स्त्रीत्वस्याविवक्षितत्वात् । क्वचित् **फलगृहीतत्वादिति पाठः** । तत्र फलगृहीतशब्दयोर्बहुव्रीहिः । फलशब्दस्य जातिवाचित्वान् निष्ठायाः पूर्वनिपाते प्राप्ते 'जातिकालसुखादिभ्यः परवचनम्' इति गृहीतशब्दस्य परनिपातः ।

**कथमित्यादि ।** एवं मन्यते—'शूद्रस्यैव तावद् यज्ञेऽनधिकृतत्वाद् यज्ञेन संयोगो नास्ति, किं पुनस्तद्भार्यायाः ? अतः 'वृषलस्य पत्नी' इत्येष प्रयोगो नोपपद्यते' इति । **उपमानाद् भविष्यतीति** । पत्नीवद्धि पत्नी । यथैव हि यजमानस्य पत्न्यग्निसाक्षिपूर्वकेण पाणिग्रहणेन तत्पत्युः सम्बन्धिनी तत्कार्येषु चाधिकृता तथा वृषलस्य भार्यापि । तस्मात् पत्नीसाधर्म्यात् सापि पत्नीत्युच्यते ॥ ३३ ॥

**पदमञ्जरी**

पतिशब्दार्थस्येत्यप्युक्तं भवति, न हि पतिशब्दस्य यज्ञेनार्थेन वाच्यवाचकभावः सम्बन्धान्तरं वा सम्भवति । **तत्साधनत्वादिति** । देवतोद्देशेन स्वद्रव्यत्यागः=यागः । मध्यकं च दम्पत्योर्धनम्, 'कुटुम्बिनौ धनस्येशाते जायापत्योर्न विभागो विद्यते' इति हि स्मर्यते, ततश्च त्यागे भार्याया अप्यनुमतिरपेक्ष्यत इति तत्रास्या अनुमत्या साधनत्वम् । पत्न्यवेक्षितमाज्यं भवतीत्यादौ च साक्षादेव कर्तृत्वं मदभिलषितसाधनतया मदर्थं कर्मेत्येवंरूपोऽधिकारलक्षणसम्बन्धोऽस्तीत्याह-**फलग्रहीतृत्वादिति** । कर्तृत्वमात्रंविवक्षितम्, न स्त्रीत्वमिति ङीब्न कृतः । 'कर्तरि च' इति समासप्रतिषेधः कर्मणि षष्ठ्या एव, न शेषषष्ठ्या इति तस्यानेनोपपन्नः समासः । **फलगृहीतत्वादिति** पाठे गृहीतं फलं ययेति बहुव्रीहौ फलशब्दस्य जातिवचनत्वाद् निष्ठायाः पूर्वनिपाते 'जातिकालसुखादिभ्यः परवचनम्' इति गृहीतशब्दस्य परनिपातः ।

**कथमित्यादि** । शूद्रस्यैव यज्ञेऽनधिकृतत्वाद् यज्ञेनासंयोगात् कथं तद्भार्याया यज्ञसंयोग इति प्रश्नः । **उपमानादिति** । अग्निसाक्षिकं यत्पाणिग्रहणं तद् वृषलादीनामप्यस्ति, तदाश्रयमुपमानम् ॥ ३३ ॥

**भावबोधिनी**

नहीं है । अतः वह स्त्री भी याग का साधन मानी जाती है । साथ ही यज्ञफल का भोग भी उसे प्राप्त होता है । इस प्रकार यज्ञ के साथ उसका सम्बन्ध है । उदा०—पत्नि ! वाचं यच्छ [ पति + ङीप् = ई, 'अलोऽन्त्यस्य' १।१।५२ से अन्तिम वर्ण का नकार आदेश करने पर पत् न् + ई = पत्नी । सम्बोधन एकवचन में ह्रस्व होने पर पत्नि ! यह रूप बनता है । ]

यज्ञ के साथ सम्बन्ध रहने पर—इसके ग्रहण का क्या लाभ है ? इयं ब्राह्मणी ग्रामस्य पतिः । [ यहाँ यज्ञ के साथ सम्बन्ध नहीं है । अतः नकार आदेश और ङीप् ये दोनों नहीं होते हैं । ] 'वृषल=शूद्रकी पत्नी—यह प्रयोग कैसे होता है ? [ क्योंकि शूद्र को यज्ञ करने का अधिकार नहीं है । अतः यहाँ यज्ञ का सम्बन्ध किस प्रकार बनेगा ? ] [उत्तर] उपमान से हो जायगा । [ जैसे द्विज आदि की पत्नी अग्निसाक्षी मानकर बनती हैं; उसी प्रकार शूद्रादि की भी स्त्री बनती है । अतः उनके समान मानकर इसमें भी ङीप् प्रत्यय और नकारान्तादेश सम्भव है ] ॥ ३३ ॥

## १२८४. विभाषा सपूर्वस्य ॥ ३४ ॥ ( ४९१ )

'पत्युर्न' इति वर्त्तते । पतिशब्दान्तस्य प्रातिपदिकस्य सपूर्वस्यानुपसर्जनस्य स्त्रियां विभाषा नकारादेशो

**न्यासः**

**विभाषा सपूर्वस्य ॥ पतिशब्दान्तस्येत्यादि ।** एतेन पतिशब्दस्य ग्रहणम्, सपूर्वग्रहणम्, अनुपसर्जनग्रहणं च—त्रयमप्येतत् प्रातिपदिकस्य विशेषणमिति दर्शयति । सहशब्दोऽयमस्त्येव तुल्ययोगे, यथा—सशिष्यो गुरुरागत इति. गुरोः शिष्यस्य चागमनेन तुल्ययोगः प्रतीयते; अस्ति च सत्तावचनः, यथा—'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इति, विद्यमानैरेवेत्यर्थः । तदिह सत्तावचनो गृह्यते, सपूर्वस्य विद्यमानपूर्वस्येत्यर्थः । यदि हि तुल्ययोगे वर्त्तमानो गृह्यते, ततोऽयमर्थः स्यात्—सहपूर्वेण पतिशब्दान्तस्य नकारो भवतीति । ततश्च पतिशब्दात् पूर्वस्यापि वृद्धादिशब्दस्य नकारः स्यात् । एवं हि तुल्ययोगो भवति यदि नकार उभयोरपि भवति । पूर्वशब्दोऽयमस्त्येव व्यवस्थाशब्दः, यथा—पूर्वं मथुरायाः पाटलिपुत्रमिति; अस्त्यवयववचनः, यथा—पूर्वं कायस्येति । तदिहावयववचनो गृह्यते । सह विद्यमानः पूर्वोऽवयवो यस्य तत् सपूर्वमित्युच्यते । यदि व्यवस्थाशब्दो गृह्येत, तत्रायमर्थः स्याद्—विद्यमानः पूर्वो यस्मात् तस्य पतिशब्दान्तस्य नकारो भवतीति । ततश्च दृढपत्नीत्यत्र न स्यात्, न हि पतिशब्दान्तादिह कश्चित् पूर्वोऽस्तीति । अथ पतिशब्दस्यैव सपूर्वत्वमनुपसर्जनत्वञ्च विशेषणं कस्मान्न विज्ञायते ? अशक्यत्वात् । स ह्यवयववचनं वा पूर्वशब्दं गृहीत्वा विशिष्येत, व्यवस्थाशब्दं वा । तत्र पूर्वस्तावदयुक्तः कल्पः; अव्यभिचारात्, असम्भवाच्च । कथम् ? यदि पकारं पूर्वमभिप्रेत्य विद्यमानः पूर्वोऽवयवो यस्येति विशिष्येत ततोऽव्यभिचारादयुक्तं विशेषणम् । न हि पकारेण यस्य पूर्वत्वं तत्पतिशब्दो व्यभिचरति । अथ शब्दान्तरम् ? तदसम्भवादयुक्तं विशेषणम् । न हि शब्दान्तरं पतिशब्दस्यावयव उपपद्यते । व्यवस्थाशब्दपक्षे तु विद्यमानः पूर्वो यस्मात् तदिति विशिष्यते । युज्यते च विशेष्यविशेषणभावः । किन्तु वाक्येऽपि नकारः प्राप्नोति - ग्रामस्य पतिरियं ब्राह्मणीति, अस्ति ह्यत्र पतिशब्दात् पूर्वो ग्रामशब्दः । अनुपसर्जनग्रहणेनापि

**पदमञ्जरी**

**विभाषा सपूर्वस्य ॥** सहशब्दोऽयमस्ति तुल्ययोगे, यथा—सशिष्यो गुरुरागत इति; अस्ति च विद्यमानवचनः, यथा—'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इति. इत्थम्भूतलक्षणे तृतीया, विद्यमानेष्वेव पुत्रेष्वित्यर्थः । पूर्वशब्दोऽप्यस्ति व्यवस्थावचनः—पूर्वं मधुरायाः पाटलिपुत्रमिति; अस्ति चावयवशब्दः—पूर्वं कायस्येति । तत्र तुल्ययोगे सहशब्दः, पूर्वशब्दश्च व्यवस्थायामिति पक्षे ग्रामस्य पतिरियमिति वाक्ये प्राप्नोति, पूर्वस्य चापि प्राप्नोति, विद्यमानवचनसहशब्दः पूर्वशब्दश्च व्यवस्थावचन इति पक्षे पूर्वस्य मा भूत्, वाक्ये तु स्यादेव । अवयववचनः पूर्वशब्दः तुल्ययोगे सहशब्द इति पक्षे वाक्येऽपि स्यात्, तत्रापि पतिशब्दस्य पूर्वोऽवयवः पकारस्तस्यापि स्यात्, तस्माद्विद्यमानवचनः सहशब्दः पूर्वशब्दश्चावयववचन इति पक्ष आश्रीयते । 'तेन सह' इत्यत्र 'तुल्ययोगे' इति विशेषणस्य प्रायिकत्वात् समासः । एवं च स्थिते 'सपूर्वस्य' इति पतिशब्दविशेषणं नोपपद्यते, कथम् ? पकारेण सपूर्वत्वमव्यभिचारादविशेषणम् । शब्दान्तरं तु पतिशब्दस्यावयवो न सम्भवति,

**भावबोधिनी**

'पत्युर्न' इसकी अनुवृत्ति होती है । सपूर्व [ जिसके पूर्व में कोई शब्द है ऐसे ] पतिशब्दान्त, अनुपसर्जन प्रातिपदिक से स्त्रीलिङ्ग में विकल्प से नकार आदेश होता है । और ङीप् तो प्राप्त ही है । उदा०--वृद्धपतिः, वृद्धपत्नी । [ वृद्धः पतिः यस्याः सा--इस विग्रह में बहुव्रीहि समास करके वृद्धपति शब्द बनने पर विकल्प से नकारान्त आदेश और ङीप् होने पर—वृद्धपत्नी, पक्ष में वृद्धपतिः ये दो रूप होते हैं । ] स्थूलपत्नी, स्थूलपतिः । [ स्थूलः पतिः यस्याः सा--इस विग्रह में बहुव्रीहि करके विकल्प से नकारान्तादेश और ङीप् होने पर स्थूलपत्नी और पक्ष में स्थूलपतिः ये दो रूप होते हैं । ] यह अप्राप्त-विभाषा है, क्योंकि यज्ञसंयोग न होने के कारण प्राप्ति नहीं है । [ यहाँ ऐसा उदाहरण देना चाहिये था जिसमें

**भवति। ङीप् तु लभ्यत एव। वृद्धपतिः, वृद्धपत्नी। स्थूलपतिः, स्थूलपत्नी ( म० भा० )। अप्राप्तविभाषेयम्, अयज्ञसंयोगत्वात्। सपूर्वस्येति किम् ? पतिरियं ब्राह्मणी ग्रामस्य ॥**

**१२८८. नित्यं सपत्न्यादिषु ॥ ३५ ॥ ( ४९२ )**

**सपत्न्यादिषु नित्यं पत्युर्नकारादेशो भवति। ङीप् तु लभ्यत एव। पूर्वेण विकल्पे प्राप्ते वचनम्।**

**न्यासः**

पतिशब्दे विशिष्यमाने बहुव्रीहौ विकल्पो न प्राप्नोति—दृढः पतिरस्या दृढपतिः, दृढपत्नीति। न ह्यत्रानुपसर्जनं पतिशब्दः, सर्वोपसर्जनत्वाद् बहुव्रीहेरिति बहुव्रीह्यवयवानामप्युपसर्जनत्वात्। तस्मात् प्रातिपदिकस्यैव विशेषणं युक्तम्।

**पतिरियं ब्राह्मणी ग्रामस्येति**। ननु च व्यपदेशिवद्भावादिदमपि सपूर्वमिति शक्यते व्यपदेष्टुम्। न च 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति व्यपदेशिवद्भावाभावः; प्रातिपदिकत्वात्। यद्येवम्, पतिशब्दान्ततापि नास्तीति, अतो द्व्यङ्गविकलता ? नैतदस्ति; सपूर्वग्रहणे हि क्रियमाणे पतिशब्दान्तस्येत्येषोऽर्थो लभ्यते। अक्रियमाणे तु तस्मिन् शब्दस्यैव शुद्धस्य नकारो विज्ञायते ॥ ३४ ॥

**नित्यं सपत्न्यादिषु** ॥ **सपत्न्यादिष्विति**। के पुनः सपत्न्यादयः ? ये पठ्यन्ते। तेषु प्रातिपदिकेषु येषां समानादीनि पूर्वपदानि ते सपत्न्यादयः। कुत एतत् ? समानादीनां गणे पाठात्, सपत्न्यादीनां चापाठात्। लाघवार्थं समानार्थं समानादिष्विति प्रवक्तव्ये कृते नकारादेशस्य सप्रत्ययस्य च सपत्न्यादिष्विति समुदायस्योच्चारणम्—नियोगत एष समुदाय ईकारान्त एव यथा स्यादित्येवमर्थम्। तेन सपत्नी भार्या यस्य स

**पदमञ्जरी**

ततश्च सामर्थ्यात् प्रातिपदिकं पतिशब्देन विशेष्यते, न तु तेन। **पतिशब्द इति**। पतिशब्देन तदन्तस्य ग्रहणम्, अनुपसर्जनग्रहणेनापि तदन्तं प्रातिपदिकमेव विशेष्यते, न विशेषणभूतः पतिशब्दः, अन्यथा बहुव्रीहौ न स्यात्—जीवः पतिरस्याः जीवपतिर्जीवपत्नीति। षष्ठीसमास एव तु स्याद्—आशापतिः, आशापत्नीति। तदेतत् सर्वमालोच्याह-**पतिशब्दान्तस्य सपूर्वस्यानुपसर्जनस्येति**। **ग्रामस्य पतिरियमिति**। असति सपूर्वग्रहणे तदन्तविधेरभावादत्रैव स्यात्। अथाप्यमहत्पूर्वेति ज्ञापकात्तदन्तेऽपि भवेत् केवलस्यापि स्यादेव। तस्मात् 'सपूर्वस्य' इति वक्तव्यम् ॥ ३४ ॥

**नित्यं सपत्न्यादिषु** ॥ यानि समानादिपूर्वपदानि पत्यन्तानि प्रातिपदिकानि ते सपत्न्यादयः। कुत एतत् ? समानादीनामेव गणे पाठात्, सपत्न्यादीनां चापाठात्। यद्येवम्, समानादिष्विति वक्तव्यम्, पूर्वग्रहणानुवृत्तेः;

**भावबोधिनी**

किसी भी प्रकार यज्ञ का सम्बन्ध न प्रतीत होता। इसी लिये सिद्धान्तकौमुदीकार ने 'दृढपत्नी दृढपतिः, वृषलपत्नी, वृषलपतिः ये उदाहरण दिये हैं। साथ ही सामान्य प्रयोग में भी आदेश माना है—गृहस्य पतिः, गृहपत्नी। ]

सपूर्व—इसका क्या फल है ? इयं ब्राह्मणी ग्रामस्य पतिः। [ यहाँ अकेला पतिशब्द है। अतः यह सूत्र प्रवृत्त नहीं होता है। ] ॥ ३४ ॥

सपत्नी आदि शब्दों में पति शब्द को नित्य नकारान्तादेश होता है। ङीप् तो प्राप्त ही है। पूर्वसूत्र से विकल्प प्राप्त रहते यह सूत्र बनाया गया है। नित्य का ग्रहण तो केवल स्पष्टता के लिये है। [ क्योंकि पूर्वसूत्र जब विकल्प करता है तो इससे नित्य करना स्वतः सिद्ध है। ] उदा०—समानः पतिः यस्याः सा—इस विग्रह में बहुव्रीहि करने पर इसी से समान का स आदेश और नकारान्तादेश तथा ङीप् करने पर सपत्नी शब्दरूप सिद्ध होता है। ] एकपत्नी [ एकः पतिः यस्याः सा—इस विग्रह में भी समास के बाद नकारान्तादेश और ङीप् करने पर रूप सिद्ध होता है। एक ही पति जिसका है वह स्त्री। समान पतिवाली स्त्री = सौतन। ]

**नित्यग्रहणं विस्पष्टार्थम्। समानः पतिरस्याः सपत्नी। एकपत्नी। समानादिष्विति वक्तव्ये समानस्य सभावार्थं वचनम्।**

**समान। एक। वीर। पिण्ड। भ्रातृ। पुत्र। ※ दासाच्छन्दसि ※**

## १२८६. पूतक्रतोरै च ॥ ३६ ॥ ( ४९३ )

**न्यासः**

सपत्नीभार्य इति 'स्त्रियां पुंवत्' इति पुंवद्भावो न भवति। **सपत्न्यादिषु नित्यमित्यादि**। समानादिषु पूर्वेष्ववयवेषु सत्सु नित्यं पतिशब्दस्य नकारादेशो भवतीत्यर्थः। यदि पूर्वेण विकल्पे प्राप्त इदं वचनम्, एवं तर्हि नित्यग्रहणमनर्थकम्, आरम्भसामर्थ्यादेव हि नित्यं विधिर्भविष्यतीत्यत आह—**नित्यग्रहणं विस्पष्टार्थमिति।**

**दासाच्छन्दसीति**॥ दासशब्दात् परो यः पतिशब्दस्तदन्तस्य प्रातिपदिकस्य च्छन्दसि विषये नित्यं नकारादेशो भवति। दासः पतिर्यस्याः सा दासपत्नी।[1] भाषायां तु पूर्वेण विकल्पः—दासपतिः, दासपत्नीति ॥ **३५** ॥

**पूतक्रतोरै च ॥ ऐकारश्चान्तादेशो भवतीति।** कुतः पुनरेतदवसितम्-आदेशोऽयमिति, न पुनः प्रत्ययः? उत्तरसूत्रेऽप्यादेशत्वात्। उत्तरसूत्रे ह्ययमेवैकारोऽनुवर्तते, तत्र चास्यादेशत्वम्। अत इहाप्यादेशत्वमवसीयते।

**पदमञ्जरी**

समानादिषु पूर्वेष्ववयवेषु सत्स्वित्यर्थः? सत्यम्; समानस्य सभावार्थं तु 'सपत्न्यादिषु' इत्युक्तम्। क्वचित्तूदाहरणानन्तरं समानादिष्विति वक्तव्यं सभावार्थमेवमुक्तमिति वृत्तावेव पठ्यते।

अपर आह—समुदायोच्चारणसामर्थ्यात् सपत्नीभार्य इत्यत्र पुंवद्भावो न भवतीति नात्राप्तोक्तिरस्ति। किञ्च—सभावार्थं समुदायोच्चारणमिदमिति सामर्थ्यमपि चिन्त्यम्। तथा हे सपत्नि, निःसपत्निः, सपत्न्यृच्छति, सपत्न्या, सपत्न्यै, इत्यादावपि ह्रस्वयणादेशौ न स्याताम्। तस्मात्सभावार्थमेव सपत्न्यादिष्वित्युक्तम् **नित्यग्रहणं विस्पष्टार्थमिति**। आरम्भसामर्थ्यादेव नित्यं भविष्यतीति भावः। **दासाच्छन्दसीति**। **'दासपत्नीरहिगोपाः'** ( ऋ० १.३२.११ ) ॥ ३५ ॥

**पूतक्रतोरै च**॥ यद्ययमैकारः प्रत्ययः स्यादुत्तरसूत्रे उदात्तवचनमनर्थकं स्यात्; प्रत्ययत्वादेव सिद्धेः। तस्मादादेशोऽयं विज्ञायत इत्याह—**ऐकारश्चान्तादेश इति। त्रय एते योगा इति।** 'पुंयोगादाख्याम्' इत्यत्रानु-

**भावबोधिनी**

समानादिषु—यह कहना चाहिये था। परन्तु सपत्न्यादिषु—यह कहना समान का स आदेश करने के लिये हैं। [ अर्थात् समानादिषु यह न कहकर सपत्न्यादिषु कहने का फल यह है कि समान का स आदेश भी हो जाय, क्योंकि समान का स आदेश करने वाला कोई सूत्र नहीं है। ]

[ इस गण में ] समान। एक। वीर। पिण्ड। भ्रातृ। पुत्र। [ ये शब्द हैं। ]

'वेद में दास शब्द से परे पति को नकारान्तादेश और ङीप् होता है।' [ काशिका में उदाहरण नहीं दिय गया है। उदा०—दासपत्नी। दासः पतिः यस्याः सा—इस विग्रह में समास और नकारान्तादेश तथा ङीप् करने पर दासपत्नी रूप सिद्ध होता है ] ॥ ३५ ॥

स्त्रीलिङ्ग में पूतक्रतु शब्द का ऐकारान्त आदेश होता है और ङीप् प्रत्यय होता है। उदा०—पूतक्रतोः स्त्री—पूतक्रतायी। [ पूतः क्रतुः येन सः—जिसके द्वारा यज्ञ पवित्र हुआ है; उसकी स्त्री—इस अर्थ में पूतक्रतु शब्द से ङीप् =

---

१. दासपत्नीः = दासः विश्वोपक्षयणहेतुः वृत्रः पतिः स्वामी यासाम् अपां ताः दासपत्नीः। अत एव, अहिगोपाः = अहिर्वृत्रो गोपा रक्षको यासां ताः।....'दसु उपक्षये'। दासयतीति दासो वृत्रः। पचाद्यच् 'चितः' इत्यन्तोदात्तत्वम्। दासः पतिर्यासाम्। 'विभाषा सपूर्वस्य ( ४. १. ३४ ) इति ङीप्, तत्संनियोगेन इकारस्य नकारः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्' इति संहिताभाष्ये सायणः।

**पूतक्रतुशब्दस्य स्त्रियामैकारश्चान्तादेशो भवति ङीप् प्रत्ययः। पूतक्रतोः स्त्री पूतक्रतायी ( म० भा० )। त्रय एते योगाः ( ४,१.३६–३८ ) पुंयोगप्रकरणे ( ४.१.४८ ) द्रष्टव्याः। यया हि पूताः क्रतवः पूतक्रतुः सा भवति ( म० भा० )॥**

**१२८७. वृषाकप्यग्निकुसितकुसीदानामुदात्तः ॥ ३७ ॥ ( ४९४ )**

**वृषाकप्यादीनामुदात्त ऐकारादेशो भवति स्त्रियाम्, ङीप् च प्रत्ययः। वृषाकपिशब्दो मध्योदात्त उदात्तत्वं प्रयोजयति। अग्न्यादिषु पुनरन्तोदात्तेषु स्थानिवद्भावादेव सिद्धम्। वृषाकपेः स्त्री वृ॒षा॒क॒पायी (ऋ० १०.८६.१३)। अ॒ग्नायी' (ऋ० १.२२.१२)। कु॒सि॒तायी' कु॒सी॒दायी'। पुंयोग इत्येव – वृ॒षाक॑पिः स्त्री ॥**

**न्यासः**

उत्तरसूत्रे कुतोऽस्यादेशत्वं निश्चितमिति चेत् ? उदात्तवचनात्। यदि हि प्रत्ययः, तस्याद्युदात्तत्वादुदात्तवचनमनर्थकं स्यात्; प्रत्ययस्वरेणैवोदात्तस्य सिद्धत्वात्।

**त्रय एते योगा इति**। अयं चैकः, वक्ष्यमाणौ चानन्तरौ द्वौ—एते त्रयो योगाः पुंयोगप्रकरणे 'पुंयोगादाख्यायाम्' इत्येवमादौ द्रष्टव्याः; तस्मिन्नेषां स्वरितत्वेनानुवृत्तेः। पूतः क्रतुर्येन पुरुषेण स पूतक्रतुः, तस्य स्त्री पूतक्रतायी ॥ ३६ ॥

**वृषाकप्यग्निकुसितकुसीदानामुदात्तः ॥ वृषाकपिशब्दो मध्योदात्त इति**। 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति वचनात्। अस्यायमर्थः—लघावन्ते परतो द्वयोश्च लघ्वोः परतो बह्वच्शब्दस्य यो गुरुः स उदात्तो भवतीति। 'बह्वष्' इति बह्वजित्यर्थः। पाणिनेर्यश्चकारेण प्रत्याहारः सोऽन्येषामाचार्याणां मतेन षकारेण। वृषाकपिशब्दे कपिशब्दसम्बन्धिनोर्लघ्वोः परतः पूर्वं आकारो गुरुतर उदात्तो भवति, शेषमनुदात्तम्। तत्र यद्युदात्तग्रहणं न क्रियेतानुदात्तस्य स्थाने य आदेशः स्थानिवद्भावेन सोऽनुदात्त एव स्यात्। तस्माद् वृषाकपिशब्द उदात्तत्वं प्रयोजयति। **अग्न्यादिषु पुनरन्तोदात्तेष्विति**। 'फिषः' इत्यादिनाग्न्यादीनामन्तोदात्तत्वम्। आदिशब्देन कुसितकुसीदयोर्ग्रहणम्। 'फिष्' इति प्रातिपदिकस्यैव पुनरन्याचार्यकृता संज्ञा ॥ ३७ ॥

**पदमञ्जरी**

वर्तयितव्या इत्यर्थः। इह करणसामर्थ्याच्च ङीप्सहिता एवानुवर्तन्ते, तेन यदा पुंयोगात्स्त्रियां पूतक्रत्वादयो वर्तन्ते तदा ङीषं बाधित्वा ऐकारादिसहितो ङीब् भवति ॥ ३६ ॥

**वृषाकप्यग्निकुसितकुसीदानामुदात्तः ॥ वृषाकपिशब्दो मध्योदात्त इति**। 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति वचनात्। अस्यार्थः—अन्ते एकस्मिन्लघौ द्वयोश्च लघ्वोः परतो बह्वषः शब्दस्य गुरुरुदात्तो भवतीति। 'बह्वषः' इति बह्वच इत्यर्थः। योऽस्माकं चकारेण प्रत्याहारः सोऽन्येषां षकारेण। **अग्न्यादिषु पुनरिति**। 'फिषः' इत्यनेनाग्न्यादीनामन्तोदात्तत्वम्। फिषिति प्रातिपदिकस्यान्याचार्यसंज्ञा। ये तु कुसीदेति मध्ये गुरुमधीयते तेषाम् 'लघावन्ते' इति मध्योदात्तप्रसङ्गः ॥ ३७ ॥

**भावबोधिनी**

ई प्रत्यय होता है और अन्तिम = उकार का ऐकार आदेश होता है पूतक्रतै + ई, ऐ का आय् आदेश—पूतक्रतायी ] ये तीनों योग [ प्रस्तुत एक सूत्र और आगे वाले दो सूत्र ] पुयोग में ही समझना चाहिये। [ अर्थात् पुंयोग में ही ये तीनों सूत्र प्रत्यय करते हैं। ] जिससे क्रतु = यज्ञ पवित्र कराये गये हैं वह स्त्री 'पूतक्रतुः' होती है। [ अर्थात् पूतक्रतु की स्त्री—इसी अर्थ में यह सूत्र लगता है। अतः जो स्वतः स्त्री है, उसमें यह सूत्र नहीं लागू होता है ] ॥ ३६ ॥

स्त्रीलिङ्ग में वृषाकपि आदि [ चार ] शब्दों से उदात्त ऐकार आदेश और ङीप् प्रत्यय होता है। वृषाकपि शब्द मध्योदात्त है, उदात्तत्व को प्रयोजित करता है। [ वृषाकपि शब्द 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इस फिट् सूत्र द्वारा षकार का अकार उदात्त है। अतः 'अनुदात्तं पदमेकवर्जम्' से अन्य सभी अनुदात्त हो जाते हैं। इस प्रकार कपि का इकार अनुदात्त है। उसके स्थान पर होने वाला ऐकार भी अनुदात्त ही होता, उसे यह सूत्र उदात्त करता है। ] अग्नि

**१२८८. मनोरौ वा ॥ ३८॥ ( ४९७ )**

**'ऐ' 'उदात्तः' इति वर्त्तते। मनुशब्दात् स्त्रियां ङीप् प्रत्ययो भवति, औकारश्चान्तादेशः, ऐकारश्चोदात्तः। वाग्रहणेन द्वावपि विकल्प्येते। तेन त्रैरूप्यं भवति – मनोः स्त्री मनायी ( काठ० सं० ३०.१ ), मनावी ( मै० सं० १.८ ), मनुः ( मै० १.८ ), मनुशब्द आद्युदात्तः ॥**

**१२८९. वर्णादनुदात्तात्तोपधात्तो नः ॥ ३९ ॥ ( ४९६ )**

न्यासः

**मनोरौ वा ॥ वाग्रहणेन द्वावपि विकल्प्येते इति।** प्रत्येकं वाग्रहणेनाभिसम्बन्धात्। यदा चैकारौकारौ न भवतस्तदा ङीबपि न भवति; तस्य सन्नियोगशिष्टत्वात्। **मनुशब्द आद्युदात्त इति।** एतेनोदात्तग्रहणमनुवर्तयितव्यम्; अन्यथा शेषस्यानुदात्तत्वे स्थानिवद्भावेनादेशस्याप्यनुदात्तत्वं स्यादिति भावः। 'मन ज्ञाने', 'भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः' इत्यनुवर्तमाने 'धान्ये नित्' इति च 'शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' इत्युप्रत्ययः, नित्वाद् 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वं भवति मनुशब्दस्य ॥ ३८ ॥

**वर्णादनुदात्तात्तोपधात्तो नः ॥** 'वर्णानां तणतिनितान्तानाम्' इत्यस्यायमर्थः—वर्णवाचिनां शब्दानां

पदमञ्जरी

**मनोरौ वा ॥ ऐकारश्चोदात्त इति।** औकारस्त्वनुदात्त एव। **वाग्रहणेन द्वावपि विकल्प्येते इति।** यदा च द्वावपि न भवतस्तदा ङीबपि न भवति; सन्नियोगशिष्टत्वात्। **मनुशब्द आद्युदात्त इति।** 'मन ज्ञाने', 'भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः' इति वर्त्तमाने 'धान्ये नित्' इति च, 'शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' इति उप्रत्ययः, नित्त्वादाद्युदात्तत्वम्, भरुः, मरुः, शयुः, तरुः, चरुः, त्सरुः, तनुः, धनुः, मयुः, मद्गुः, न्यङ्क्वादिपाठात् कुत्वम्—प्रथमस्योदाहरणानि। शरुः, स्वरुः, स्नेहुः, त्रपु, असुः, वसुः, हनुः, क्लेदुः, बन्धुः, मनुः—इति द्वितीयस्य ॥ ३८ ॥

**वर्णादनुदात्तात्तोपधात्तो नः ॥ वर्णानां तणतिनितान्तानामिति।** तशब्दान्तानामेतादीनां णशब्दान्तानां

भावबोधिनी

आदि शब्द तो [ "फिषोऽन्त उदात्तः" फिट् सूत्र से अन्तोदात्त ही हैं, उनमें स्थानिवद्भाव से ही उदात्तत्व सिद्ध है। उदा०—वृषाकपेः स्त्री—[ इस अर्थ में—] वृषाकपायी। [ वृषाकपि से ङीप् प्रत्यय और इकार का ऐकार आदेश करने पर वृषाकपै + ई, ऐ का आय् आदेश—वृषाकपायी] अग्नायी [अग्नि + ई, ऐ आदेश, अग्नै + ई, ऐ का आय् आदेश अग्नायी। अग्नि की स्त्री ] कुसितायी। कुसिदायी। [ कुसितस्य स्त्री, कुसिदस्य स्त्री—इस अर्थ में ङीप् और ऐकारान्तादेश तथा ऐ का आय् आदेश होता है। ] पुंयोग में ही यह होता है! [ अतः यहाँ नहीं होता है ] वृषाकपिः स्त्री ॥ ३७ ॥

'ऐ' 'उदात्तः' इनकी अनुवृत्ति होती है। स्त्रीलिङ्ग में मनुशब्द से ङीप् प्रत्यय होता है तथा औकार अन्तादेश होता है विकल्प से; पक्ष में ऐकार उदात्त [ अन्तादेश ] भी होता है। इस सूत्र में 'वा' ग्रहण के फलस्वरूप दोनों आदेशों का विकल्प होता है। इसलिये तीन रूप होते हैं—मनोः स्त्री (१) मनावी, (२) मनायी, (३) मनुः। मनु शब्द आद्युदात्त है। [ मनु की स्त्री—इस अर्थ में प्रस्तुत सूत्र से विकल्प से ङीप् प्रत्यय और औकार अन्तादेश करने पर मनौ + ई, आव् आदेश (१) मनावी, उदात्त ऐकार आदेश होने पर मनै + ई, आय् आदेश (२) मनायी। इन दोनों के न होने पर सन्नियोगशिष्ट ङीप् भी नहीं होता है, अतः (३) मनुः ] ॥ ३८ ॥

'वा' [ विकल्प ] इसकी अनुवृत्ति होती है। अनुदात्तान्त [ अनुदात्त जिसके अन्त में है ], तोपध [ तकार जिसकी उपधा = अन्त्यवर्ण से पूर्व है ] वर्णवाची [ रंगवाची ] प्रातिपदिक से विकल्प से ङीप् प्रत्यय होता है और तकार का नकार आदेश होता है। उदा०—एनी, एता श्येनी, श्येता। [ एत और श्येत ] शब्द आदि-उदात्त होने के कारण अनुदात्तान्त हैं, इनकी उपधा में त भी है, चितकबरा रंग के वाचक हैं। अतः प्रस्तुत सूत्र से ङीप् और 'त' का 'न' होने पर

'वा' इति वर्तते। वर्णवाचिनः प्रातिपदिकादनुदात्तान्तात्तकारोपधाद्वा ङीप् प्रत्ययो भवति, तकारस्य नकारादेशो भवति। एता, एनी' ( ऋ० १.१४४.६ )। श्येता, श्येनी'। हरिता, हरिणी। सर्व एते आद्युदात्ताः; 'वर्णानां तणतिनितान्तानाम्' ( फि० सू० २.१० ) इति वचनात्।

वर्णादिति किम्? प्रकृता। प्ररुता। गतिस्वरेणाद्युदात्तः ( ६.२.४९ )। अनुदात्तादिति किम्? श्वेता। घृतादित्वादन्तोदात्तः ( फि० सू० १.२१ )। तोपधादिति किम्? अन्यतो ङीषं वक्ष्यति। अत इत्येव - शितिर्ब्राह्मणी।

❀ पिशङ्गादुपसंख्यानम् ❀ ( म० भा० ४.१.३९ वा० ३ )। पिशङ्गी। ❀ असितपलितयोः प्रतिषेधः ❀

**न्यासः**

तशब्दान्तानां णकारान्तानां तिशब्दान्तानां निशब्दान्तानां तकारान्तानां चादिरुदात्तो भवतीति, आदिग्रहण-मुदात्तग्रहणं च प्रकृतं तत्रानुवर्तते।

**प्रकृतेति**। प्रकर्षेण कृतेति, 'कुगतिप्रादयः' इति समासः। प्रशब्दोऽयं निपातः, 'निपाता आद्युदात्ताः' 'उपसर्गाश्चाभिवर्जम्' इत्युदात्तः। समासेऽपि कृते 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरेणाद्युदात्त एव भवतीति। शेषमनुदात्तम्। **घृतादित्वादन्तोदात्त इति**। 'घृतादीनाञ्च' इत्यन्तोदात्तत्वविधानात्। एतच्च फिट्सूत्रे पठ्यते। **शितिरिति**। 'वर्णानाम्' इत्यादिना शितिशब्द आद्युदात्तः।

**पिशङ्गादित्यादि**। पिशङ्गशब्दः 'लघावन्ते' इत्यादिना मध्योदात्तः, ततः 'अन्यतो ङीष्' इति ङीषि प्राप्ते ङीप उपसंख्यानं कर्तव्यम्। तत्रेदं प्रतिपादनम्—'पूतक्रतोरै च' इत्यतश्चकारोऽनुक्तसमुच्चयार्थोऽनुवर्तते।

**पदमञ्जरी**

शोणादीनां तिशब्दान्तानां शितिप्रभृतीनां निशब्दान्तानां पृश्निप्रभृतीनां तकारान्तानां च पृषत्प्रभृतीनां वर्णवाचिनामादिरुदात्तो भवतीत्यर्थः। **गतिस्वरेणेति**। 'गतिरनन्तरः' इत्यनेन। **घृतादित्वादिति**। 'घृतादीनि' इति फिषि पठ्यते। **पिशङ्गादिति**। 'लघावन्ते' इति मध्योदात्तत्वादुत्तरसूत्रेण ङीषि प्राप्ते ङीब्विधीयते।

**असितपलितयोरिति**। 'वर्णानां तणतिनितान्तानाम्' ( फि० सू० २१० ) इत्याद्युदात्तावेतौ।

**भावबोधिनी**

एनी, श्येनी होते हैं। पक्ष में टाप् होने पर नकारादेश नहीं होने से एता, श्येता रूप होते हैं। ] हरिणी, हरिता। [ हरित + ङीप्, त का न, न का णत्व, पक्ष में टाप् = आ। ] "वर्णानां तणतिनितान्तानाम्" इस सूत्र से ये तीनों शब्द आद्युदात्त हैं। [ अतः "अनुदात्तं पदमेकवर्जम्" ६।१।१५८ से अन्य सभी अनुदात्त हो जाने के कारण अनुदात्तान्त है। ]

वर्णवाची से—इसका क्या लाभ है? प्रकृता। प्ररुता [ गतिरनन्तरः ६।२।४९ इससे ] गतिस्वर मानकर आद्युदात्त हैं। [ अतः शेषनिघात से अनुदात्तान्त हैं और तोपध हैं। परन्तु वर्णवाची नहीं होने से यह सूत्र नहीं लगता है। ] अनुदात्तान्त—इसके ग्रहण का क्या फल है? श्वेता। 'घृतादीनाञ्च' से अन्तोदात्त है। [ अतः यहअ नुदात्तान्त न होने से सूत्र नहीं लागू होता। ] तोपध—इसके ग्रहण का क्या लाभ है? इससे [ तकारोपध को छोड़कर अन्य से ] ङीष् कहा जायगा। [ अग्रिम सूत्र है "अन्यतो ङीष्" ४।१।४० उससे लक्ष्यभेद करने के लिये इस सूत्र में तोपध रखा गया है। ] अकारान्त से ही होता है [ अतः यहाँ नहीं होता ]—शितिः ब्राह्मणी [ शिति यह इकारान्त है। ]

पिशङ्ग से भी कहना चाहिये।' पिशङ्गी [ पिशङ्ग + ङीष्, भसंज्ञा, अलोप ]।

'असित और पलित में प्रतिषेध कहना चाहिये।' असिता। पलिता। [ ङीप् न होने पर टाप् होता है। ]

'असित और पलित में वेदविषय में क्न यह अन्तादेश होता है—ऐसा कुछ आचार्य करते हैं।' असिक्नी। पलिक्नी [ असित + ङीष् = ई, त का क्न, इसीप्रकार असित + ङीष्, त का क्न। 'असिक्नी' नदी का नाम है पलिक्नी वृद्धा स्त्री ] यह क्न और ङीष् भाषा = लौकिक संस्कृत में भी इष्ट है—'गतो गणः तूर्णम् असिक्नकानाम्। 'असिक्निका'' उस सेविका को कहते हैं जो युवती हो।

विमर्श—काशिकाकार ने क्न आदेश को भाषा = लौकिक संस्कृत में भी माना है। परन्तु भाष्य में ऐसा कोई

( वा० १ ) । असिता । पलिता । ※ तयोश्छन्दसि क्नमित्येके ※ (वा० २) । असिक्नी (शौ० अथर्व० १.२३.१) । पलिक्नी[1] ( ऋ० ५.२.४ ) । भाषायामपीष्यते—'गतो गणस्तूर्णमसिक्निकानाम्' ॥

## १२९०. अन्यतो ङीष् ॥ ४० ॥ ( ४९७ )

'वा' इति निवृत्तम्, 'वर्णादनुदात्तात्' इति वर्तते, तोपधापेक्षमन्यत्वम् । वर्णवाचिनः प्रातिपदिकादनुदात्तान्तात् स्त्रियां ङीष् प्रत्ययो भवति । स्वरे विशेषः । सारङ्गी । कल्माषी । शबली । वर्णादित्येव—खट्वा । अनुदात्तादित्येव – कृष्णा । कपिला ॥

**न्यासः**

तेन पिशङ्गादपि ङीब् भवतीति । **वक्तव्यमिति** । व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—'मनोरौ वा' इत्यतो वेत्यनुवर्तते, सा च व्यवस्थितविभाषा । तेनासितपलितशब्दाभ्यां ङीष् न भविष्यत्येवेति । 'वर्णानां तणतिनितान्तानाम्' इत्याद्युदात्तौ असित-पलितशब्दौ ।

**तयोश्छन्दसीत्यादि** । असित-पलितशब्दयोस्तकारस्य क्नमेक आचार्या इच्छन्ति । स तु 'व्यत्ययो बहुलम्' इत्येव सिद्धः । **भाषायामपीष्यत इति** । एतेनच्छन्दोग्रहणं प्रत्याचष्टे । **असिक्निकानामिति**[2] । अज्ञातार्थे 'प्रागिवात् कः' इति कः, 'केऽणः' इति ह्रस्वः ॥ ३९ ॥

**अन्यतो ङीष्** ॥ **सारङ्गी, कल्माषीति** । 'लघावन्ते' इत्यादिना मध्योदात्तौ सारङ्गकल्माषशब्दौ । **शबलीति** । 'शप आक्रोशे', 'कलस्तृपश्च' इति 'शपेर्बश्च' इति कलप्रत्ययः, पकारस्य बकारः, प्रत्ययाद्युदात्तत्वेन मध्योदात्तः शबलशब्दः । **खट्वेति** । 'खट काङ्क्षायाम्', 'अशू-प्रुषिर्लटिकणिखटिविशिभ्यः क्वन्' इति क्वन्, नित्स्वरेणाद्युदात्तः खट्वाशब्दः । **कृष्णेति** । 'कृष विलेखने', 'इण्सिञ्जिदीङुष्यविभ्यो नक्' 'कृषेर्वर्णे' इति नक्, प्रत्ययस्वरेणान्तोदात्तः कृष्णशब्दः । **कपिलेति** । 'कमु कान्तौ', 'सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच्', 'कमेः पश्च' इति मकारस्य पकारः, चित्स्वरेणान्तोदात्तः कपिलाशब्दः ॥ ४० ॥

**पदमञ्जरी**

**छन्दसीत्यादि** । 'तो नः' इति नकारे प्राप्ते क्नशब्दं ङीष्सहितमिच्छन्ति । **भाषायामपीष्यते इति** । **भाष्ये** तु नैतत्प्रदर्शितम् । अवदातशब्दो न वर्णवाची, किं तर्हि ? विशुद्धवाची । एवं ह्याह—

त्रीणि यस्यावदातानि विद्या योनिश्च कर्म च ।
एतत्त्रयं विजानीहि ब्राह्मणाग्र्यस्य लक्षणम् ॥ ( म० भा० ४-१-४८ )

तेनावदातेत्यत्र ङीब्न भवति ॥ ३९ ॥

**अन्यतो ङीष्** ॥ सारङ्गकल्माषशब्दौ 'लघावन्ते' इति मध्योदात्तौ, 'शप आक्रोशे', कल तृपः', 'शपेर्बश्च' इति कलप्रत्ययः, पकारस्य बकारः प्रत्ययस्वरेण मध्योदात्तः शबलशब्दः । खट्वाशब्दो नित्स्वरेणाद्युदात्तः, 'खट् काङ्क्षे', 'अशुप्रुषिलटिकणिखटिविशिभ्यः क्वन्' । कृष्णशब्दोऽन्तोदात्तः, कृषेर्वर्णे' इति नक् प्रत्ययः, इलचि प्रकृते 'कपेश्च' इति उणादिषु सूत्रम् । कपिः सौत्रो धातुः कपिलशब्दोऽन्तोदात्तः ॥ ४० ॥

**भावबोधिनी**

उल्लेख नहीं है । इस विषय में कैयट का वक्तव्य ध्यान देने योग्य है—

"छन्दसिक्नमेके ।" मभा० ४।१।३९ वा० २ । "अत्र केचित्—छन्दोग्रहणं प्रयोगदर्शनार्थमिच्छन्ति । तेन भाषायामपि क्नादेशो भवति—'गतो गणस्तूर्णमसिक्निकानाम्' इति । भाष्यकारेणत्वेतन्नोपन्यस्तमित्ययुक्तमित्याहुः । ( कै० प्र० ४।१।३९ ) इसीलिये सिद्धान्तकौमुदीकार ने इस विषय में कुछ नहीं लिखा है ॥ ३९ ॥

'वा' इसकी निवृत्ति हो जाती है । 'वर्णाद् अनुदात्तात्' इसकी अनुवृत्ति रहती है, तकारोपध को अपेक्षा भिन्न

---

१. 'पलिक्न्यः पलिता जीर्णाः ज्वाला एवेदानीं युवतयः भवन्ति' इति तत्र सायणः ।

२. सिता केशादौ शुभ्रा जरती तद्भिन्ना अवृद्धा = असित, तकारस्य क्नादेशः ङीप् च । संज्ञायां कन्, ह्रस्वः-इति असिक्निका । 'A girl attending in the women's apartment'—इति मो० वि० कोशः ।

## १२९१. षिद्गौरादिभ्यश्च ॥ ४१ ॥ ( ४९८ )

**'ङीष्' अनुवर्तते । षिद्भ्यः प्रातिपदिकेभ्यो गौरादिभ्यश्च स्त्रियां ङीष् प्रत्ययो भवति । 'शिल्पिनि ष्वुन्' ( ३.१.१४५ ) – नर्तकी । खनकी । रजकी ।**

**गौरादिभ्यः—गौरी । मत्सी । गौर । मत्स्य । मनुष्य । शृङ्ग । हय । गवय । मुकय । ऋष्य । पुट । द्रुण । द्रोण । हरिण । कण । पटर । उकण । आमलक । कुवल । बदर । बिम्ब । तर्कार । शर्कार । पुष्कर । शिखण्ड । सुषम । सलन्द । गडुज । आनन्द । सृपाट । सृगेठ । आढक । शष्कुल । सूर्म । सुब । सूर्य । पूष । मूष ।**

**न्यासः**

**षिद्गौरादिभ्यश्च ॥ षिद्भ्यः प्रातिपदिकेभ्य इति ।** षकार इद् येषां तानि । कथं पुनः प्रातिपदिकानि षिन्ति भवन्ति, यावता ष्वुनादेः प्रत्ययस्य षकार इत्संज्ञकः, न तु तेषाम् ? नैष दोषः; अवयवगतं हि षित्त्वं समुदायस्य विशेषणं भविष्यति, यथा--अक्षिगतं काणत्वम् पुरुषस्य-काणः पुरुष इति । यद्येवम्, धातुगतमपि षित्त्वं समुदायस्य विशेषणं प्राप्नोति, 'त्रपूष् लज्जायाम्', अङ्, अपत्रपेति ? नैतदस्ति; यो ह्यनुबन्धोऽवयवे निष्प्रयोजनः स समुदायार्थो विज्ञायते । धातोस्तु विद्यत एव षित्करणस्य प्रयोजनम्--'षिद्भिदादिभ्योऽङ्' इत्यङ् यथा स्यात् । ष्वुनादीनां तु षित्करणस्य नान्यत् प्रयोजनमस्ति, अतः समुदायार्थमेव तद्विज्ञायते । **रजकीति ।** अत्र 'रञ्जेश्च' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वादनुनासिकलोपः ।

गौरादिषु **गौरशब्दस्य** सत्यपि वर्णवाचित्वे प्रातिपदिकस्वरेणान्तोदात्तत्वात् पूर्वेण न प्राप्नोतीतीह पाठः । **मत्स्यादीनां** यकारोपधानाम् 'अयोपधात्' इति जातिलक्षणस्य ङीषः प्रतिषेधे प्राप्ते । शृङ्गशब्दस्य प्राक् श्वन्शब्दात् **पुटादीनाञ्चानन्दवर्ज्जितानां** स्त्रीविषयत्वात् शृङ्गशब्दस्य प्राप्ते पुटादीनां चास्त्रीविषयादिति

**पदमञ्जरी**

**षिद्गौरादिभ्यश्च ॥ षिद्भ्यः प्रातिपदिकेभ्य इति ।** ष्वुनादेः प्रत्ययस्य षित्त्वमवयवेऽचरितार्थं समुदायस्य विशेषकं भवतीति प्रातिपदिकानां षित्त्वम्, धातोस्तु त्रपादेः षित्त्वमङ्विधौ चरितार्थमिति न तेन प्रातिपदिकं षिद्भवति । **रजकीति ।** 'शिल्पिनि ष्वुन्' इत्यत्र व्युत्पादितम् ।

गौरादिषु गौरशब्दस्य वर्णवाचिनोऽप्यन्तोदात्तत्वात् पाठः । मत्स्यादीनां योपधानाम् 'अयोपधात्' इति जातिलक्षणस्य ङीषः प्रतिषेधात् पाठः । अन्येषां जातिशब्दानां स्त्रीविषयार्थः पाठः । **श्वन्नक्षन्निति** एतयोर्डापि प्राप्ते । **अनडुही, अनड्वाहीति ।** अनकारान्तत्वादप्राप्ते ङीषि सप्रत्यययोः पाठः, ङीषि परतो विकल्पेनान्यथा

**भावबोधिनी**

होना चाहिये [ अर्थात् तकारोपध को छोड़कर अन्य शब्दों से ङीष होता है । ] अनुदात्तान्त वर्णवाची प्रातिपदिक से स्त्रीलिङ्ग में ङीष् प्रत्यय होता है । [ ङीप् और ङीष् में ] स्वर में भेद होता है । [ ङीप् पित् होने से "अनुदात्तौ सुप्पितौ" ३।१।४ से अनुदात्त होता है । ] उदा०--सारङ्गी । कल्माषी । शबली । [ ये तीनों चित्रवर्ण = चितकबरे के वाचक हैं । अतः ङीष् होता है । ] वर्णवाचक से ही होता है--खट्वा [ इससे नहीं होता है ] । अनुदात्तान्त से ही होता है--कृष्णा । कपिला । [ ये दोनों शब्द अन्तोदात्त हैं । अतः इससे ङीष् नहीं होता है । टाप् होता है । ] ॥ ४० ॥

ङीष्--इसकी अनुवृत्ति होती है । षित् = षकार की इत्संज्ञावाले प्रातिपदिकों से और गौर आदि शब्दों से स्त्रीलिङ्ग में ङीष् प्रत्यय होता है । उदा०--'शिल्पिनि ष्वुन्' ३।१।१४५ [ शिल्पी = शिल्पकार अर्थ में धातु से ष्वुन् = वु = अक प्रत्यय होता है ]--नर्त्तकी । खनकी । रजकी [ नृत् + ष्वुन् = वु = अक, ऋ का गुण रपर करने के बाद षित् हो जाने से स्त्रीलिङ्ग में इस सूत्र से ङीष् प्रत्यय होता है--नर्तकी । [ खन् + ष्वुन् । रञ्ज् + ष्वुन्, = वु = अक, 'रञ्जेश्च' ६।४।२६ से न् का लोप, ङीष् ]

गौर आदि से ङीष् [ के उदाहरण ]--गौरी । [ गौर + ङीष् = ई ], मत्सी [ मत्स्य + ङीष् = ई, अलोप सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः" ६।४।१४९ से उपधा-यकार का लोप--मत्स् + ई ] ।

**घातक । सकलूक । सल्लक । मालक । मालत । साल्वक । वेतस । अतस । पृस । मह । मठ । छेद । श्वन् । तक्षन् । अनडुही । अनड्वाही । 'एषणः करणे' (ग० सू० ४२) । देह । काकादन । गवादन । तेजन । रजन । लवण । पान । मेध । गौतम । आयस्थूण । भौरि । भौलिकि । भौलिङ्गि । औद्गाहमानि । आलिपि[1] । आपिच्छिक । आरट । टोट । नट । नाट । मूलाट[2] । शातन । पातन । पावन । (सवन ?) आस्तरण । अधिकरण । एत । अधिकार ।**

**न्यासः**

प्रतिषेधे प्राप्ते । **आनन्दशब्दस्या**जातिवाचित्वान् ङीष्यप्राप्ते । श्वंस्तक्षन्नित्येतयोः 'ऋन्नेभ्यो ङीप्' इति ङीपि प्राप्ते । अनुडुह्यनड्वाहीत्यनयोरनकारान्तत्वाद् ङीष्यप्राप्ते । इकारान्तयोः सप्रत्यययोर्गणे पाठः पुंवद्भाव-प्रतिषेधार्थः--अनडुहीभार्यः, अनड्वाहीभार्य इति । एतदेव वचनं ज्ञापकम्--अनडुहः स्त्रियां विकल्पेनाम् भवतीति । तेन यदुक्तम्---'अनडुहः स्त्रियाञ्चेति वक्तव्यम्' इति, तन्न वक्तव्यमिति भवति । **एषणं करण इति ।** एषणशब्दः करणे कारके ङीषमुत्पादयतीति । इष्यतेऽनयेत्येषणी । करण इति किम् ? इष्यतेऽस्यामित्यधिकरणे टित्वान् ङीबेव भवति —एषणी । स्वरे विशेषः । देहस्य टापि प्राप्ते । देहनादीनां ल्युडन्तत्वाट् टिल्लक्षणे ङीपि । मेध इत्यस्याजातित्वान् ङीष्यप्राप्ते । **गौतमस्य** शार्ङ्गरवादित्वान् ङीनि प्राप्ते । पक्षे च वचनात् सोऽपि भवत्येव । **आयस्थूणादीनामालिपिशब्दपर्यन्तानाम्** 'अणिञोरनार्षयोः' इति ष्यङि प्राप्ते । आयस्थूणशब्दः शिवाद्यणन्तः । **भौरिक्यादयः**[3] 'अत इञ्' इतीञन्ताः । **आपिच्छिकस्य** ङीषि प्राप्ते । आपिच्छिकानां राजानः, तेषामपत्यं स्त्री । 'जनपदशब्दात् क्षत्त्रियादञ्' इत्यञ्, तस्य 'अतश्च' इति लुकि कृते प्रत्ययलक्षणेन ङीब् प्राप्नोति । **आरटादीनां** प्राक् शातनशब्दात् स्त्रीविषयत्वान् ङीष्यप्राप्ते । **शातनादीनां** ल्युडन्तत्वान् ङीपि प्राप्ते । **अधिकरणाद् ङीपि ।** अग्रे हायनमस्या इत्याग्रहायणी । स्वार्थिकोऽण्, णत्वं निपातनात्[4] । अणन्तत्वान्

**पदमञ्जरी**

स्यात् । **एषणः करण इति ।** करणसाधन एषणशब्दो ङीषमुत्पादयति—इष्यतेऽनयेत्येषणी । अधिकरणे ल्युडिति टित्वान् ङीबेव भवति । अन्येषामपि ल्युडन्तानां ङीपि प्राप्ते पाठः । मेधशब्दस्याजातिवाचित्वाद्; **गौतमस्य** शार्ङ्गरवादित्वान् ङीनि प्राप्ते वचनात् पक्षे सोऽपि भवति । **आयस्थूणशब्दः** शिवाद्यणन्तः । **भौरिक्यादय**[4] इञन्ताः, तेषाम् 'अणिञोः' इति ष्यङ्प्राप्तौ । **आपिच्छिका** नाम राजानः, 'जनपदशब्दात् क्षत्रियादञ्' 'तस्य आतश्च' इति लुकि कृते प्रत्ययलक्षणेन ङीप्प्राप्नोति । अग्रे हायनमस्य आग्रहायणः, प्रज्ञादित्वात् स्वार्थिकोऽण्, अस्मादेव निपातनाण्णत्वम्—**आग्रहायणः,** ङीपि प्राप्ते पाठः । केचिद**ाग्रहायणीति** इकारान्तं पठन्ति, तस्य प्रयोजनम्—आग्रहायणीभार्य इत्यादौ पुंवद्भावो मा भूदित्याहुः । एतेन **प्रत्यवरोहणीति** व्याख्यातम् ।

**भावबोधिनी**

[ गौरादिगण में पठित शब्दों में कुछ में ङीप् प्राप्त रहता है, कुछ में अप्राप्त है वहाँ ङीष् का विधान इस सूत्र से होता है ] गौर शब्द अन्तोदात्त होने से पूर्वसूत्र से ङीष् नहीं प्राप्त रहता है अतः पाठ है । मत्स्य, मनुष्य, हय, गवय, मुकय, ऋष्य—इन यकारोपध शब्दों से "जातेरस्त्रीविषयादयोपधात्" ४।१।६३ से ङीष् का प्रतिषेध होने के कारण इनका पाठ है । अन्य जातिवाचक शब्दों से स्त्रीविषय के उपपादनार्थ पाठ है, पुट आदि का स्त्रीविषय न होने से प्रतिषेध रहने पर पाठ है । श्वन् तक्षन् में ङीप् और डाप् प्राप्त रहते यहाँ पाठ है । अनडुही और अनड्वाही इनमें अकारान्त न होने से ङीप् प्राप्त न रहने पर पाठ है । एषण—यह करण अर्थ में ङीष् के लिये पाठ है । [ अधिकरण में ल्युट् होने पर टित् होने से ङीप् होता है । ] देह से टाप् प्राप्त रहते पाठ है । काकादन से लेकर पान तक ल्युट् प्रत्ययान्त शब्दों में टित् होने से ङीप् प्राप्त रहते ङीष् करने के लिये पाठ है । स्वर में भेद करना फल है । मेध शब्द के जातिवाचक न होने से ङीष् प्राप्त न रहने के कारण पाठ है । गौतम का शार्ङ्गरवादि गण में पाठ होने से ङीन् प्राप्त रहते पाठ है । [फलतः दोनों

---

१. 'आलिङ्गि' इति वा पाठः । २. 'मलाट'–इति वा पाठः ।
३. न वृत्तिसम्मतोऽयं पाठः । ४. 'पूर्वपदात्संज्ञायामगः' इत्यनैनैवात्र णत्वमित्यन्ये ।

**आग्रहायणी । प्रत्यवरोहिणी । सेवन । ❀ सुमङ्गलात् संज्ञायाम् ❀ ( ग० सू० ४३ ) । सुन्दर । मण्डल । पट । पिण्ड । विटक । कुर्द । गूर्द । पाण्ट । लोकाण्ट । कन्दर । कन्दल । तरुण । तलुन । बृहत् । महत् । सौधर्म । 'रोहिणी, नक्षत्रे' ( ग० सू० ४४ ) । 'रेवती, नक्षत्रे' ( ग० सू० ४५ ) । विकल । निष्फल । पुष्कल । ❀ कटाच्छ्रोणिवचने[1] ❀ ( ग० सू० ४६ ) । ❀ पिप्पल्यादयश्च ❀ ( ग० सू० ४७ ) ।**

### न्यासः

ङीपि प्राप्ते । ईकारान्तस्य पाठः पुंवद्भावप्रतिषेधार्थः—आग्रहायणीभार्य इति । **प्रत्यवरोहणसेवनयोर्ल्युडन्त**योष्टित्वान् ङीपि । केचित्तु पुंवद्भावप्रतिषेधार्थं प्रत्यवरोहिणीति पठन्ति—प्रत्यवरोहिणीभार्य इति । **सुमङ्गलात् संज्ञायाम्** । 'नित्यं संज्ञाच्छन्दसोः' इति वर्तमाने 'केवलमामक' इत्यादिना ङीपि प्राप्ते । पक्षे वचनात् सोऽपि भवति । संज्ञायामिति किम् ? सुमङ्गला । **सुन्दरादीनां** प्राक् तरुणशब्दात् स्त्रीविषयत्वात् ङीष्यप्राप्ते । तरुणतलुनशब्दयोर्वयोलक्षणे ङीपि प्राप्ते । 'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्' इत्यत्र तु वयोग्रहणम् । **बृहन्महच्छब्दयोरु**गित्त्वान् ङीपि प्राप्ते । पक्षे सोऽपि भवत्येव । सुधर्मणोऽपत्यमृष्यण्—**सौधर्मः** । 'अणिञोरनार्षयोः' इति ष्यङि प्राप्ते । **रोहिणी नक्षत्र इति** । नक्षत्र इति किमर्थम् ? रोहिता । **रेवती नक्षत्र इति** किम् ? येषां रेवतशब्दोऽत्राकारान्त इति दर्शनं तेषां प्रत्युदाहरणं टाब्—रेवतेति । येषां त्विदं वचनम्—रा विद्यतेऽस्या इति रैशब्दान् मतुप्, निपातनाद् वत्वमिति, तेषां प्रत्युदाहरणम् 'उगितश्च' इति ङीब्—रेवतीति । स्वरे विशेषः । **विकलादीनां** टापि प्राप्ते । **कटशब्दाच्छ्रोण्यभिधाने** ङीष् । कटी श्रोणिरित्यर्थः । श्रोणिरिति किम् ? कटा । **पिप्पल्यादयश्चेति** । एतावद् गणे पठ्यते । तांस्तु पिप्पल्यादीन् दर्शयितुं पिप्पली-हरीतकीत्यादिकं **वृत्तिकारवचनम्** ।

### पदमञ्जरी

**सुमङ्गलात् संज्ञायामिति** । 'केवलमामक' इति ङीपि प्राप्ते पक्षे सोऽपि भवति । स्वरे विशेषः, सुमङ्गलशब्दो बहुव्रीहिः, तत्र 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वान्ङीप्यपि सत्युदात्तनिवृत्तिस्वरेण भाव्यमिति नास्ति विशेषः । तथा च छन्दसि-'सु॒म॒ङ्ग॒लीरि॒यं व॒धूः' (ऋ० १०।८५।३३) इत्यन्तोदात्तत्वं दृश्यते । तस्माज्जातिवचनोऽव्युत्पन्नः स्त्रीविषयः सुमङ्गलशब्दः 'लघावन्ते' इति मध्योदात्तो द्रष्टव्यः । **तरुणतलुनयोः** 'नञ्स्नञीकक्तरुण' इति ङीपि प्राप्ते पक्षे सोऽपि भवति । **बृहन्महच्छब्दयोरनर्थकः** पाठ इति प्रागेवोक्तम् । ऋष्यणन्त **सौधर्मशब्दः** । **रोहिणी नक्षत्रे इति** । नक्षत्रादन्यत्र रोहिता । **रेवती नक्षत्र इति** । रयिरिति धननाम । रयिर्विद्यतेऽस्या इति मतुपि 'रयेर्मतौ बहुलम्' इति सम्प्रसारणम्, निपातनाद्वत्वम् । नक्षत्रादन्यत्र ङीब् भवति । **विकलादीनां** टापि

### भावबोधिनी

प्रत्ययों के रूप होते हैं । स्वर में अन्तर है । ] आयस्थूण शब्द अणन्त है और भौरि से लेकर आलिपि तक इञन्त शब्द है । अतः इनमें "अणिञोरनार्षयोर्गुरूपोत्तमयोः" ४।१।७८ से ष्यङ् प्राप्त रहते ङीष् के लिये पाठ है । आपिच्छिक इस नाम के राजा थे, उनकी अपत्य स्त्री—इस अर्थ में "जनपदशब्दात् क्षत्रियादञ्" ४।१।१६८ और इसका लुक् करने पर प्रत्ययलक्षण से ङीप् प्राप्त रहते पाठ है । आरट आदि शब्दों से ङीष् नहीं प्राप्त रहते पाठ है । शातन आदि ल्युडन्त से ङीप् प्राप्त रहते पाठ है । एत और अधिकार से टाप् प्राप्त रहते पाठ है । अग्रे हायनमस्याः—यहाँ स्वार्थिक अण् प्रत्यय करने पर अणन्त होने से ङीप् प्राप्त रहते पाठ है । प्रत्यवरोहिणी और सेवन में ल्युडन्त होने से ङीप् प्राप्त रहते पाठ है । संज्ञा अर्थ में सुमङ्गल से ङीष् होता है । [ 'केवलमामकभागधेयसुमङ्गलभेषजाच्च' ४।१।३० से ङीप् भी होता है । ] सुन्दर आदि शब्दों के स्त्रीविषय होने से ङीष् प्राप्त न रहते पाठ है । तरुण और तलुन से 'वयसि प्रथमे' ४।१।२० से ङीप् प्राप्त रहते ङीष् के लिये पाठ है । [ 'नञ्स्नञीकक्तरुणतलुनानामुपसंख्यानम्' वार्त्तिक में वयः = अवस्था का

---

१. अत्र 'पिङ्गल, मद, दहन, कन्द, काकण' इत्येते शब्दा अपि क्वचिद् दृश्यन्ते ।

पिप्पली । हरीतकी । कोशातकी । शमी । करीरी । पृथिवी । क्रोष्ट्री । मातामह । पितामह ।

मातामहपितामहयोः 'मातरि षिच्च' ( ४.२.३६ ) इति षित्वादेव सिद्धे ज्ञापनार्थं वचनम् - 'अनित्यः षिल्लक्षणो ङीष्' इति, तेन दंष्ट्रेत्युपपन्नं भवति ॥

न्यासः

**पृथिवीति** । ईकारान्तनिपातनं पुंवद्भावनिवृत्त्यर्थम्--पृथिवीभार्य इति । क्रोष्टुशब्दस्य 'स्त्रियां च' इति तृज्वद्भावः ।

**मातरि षिच्चेति** । 'पितृव्यमातुलमातामहपितामहाः' इत्यत्र पितृमातृभ्यां पितरि वाच्ये डामहज्निपातयिष्यते । मातरि वाच्यायां डामहजेव । तस्यापि षित्त्वम् । **दंष्ट्रेति** । 'दंश दशने', 'दाम्नीशस' इत्यादिना ष्ट्रन् । षिल्लक्षणस्यानित्यत्वान् ङीषष्टाब् भवति ॥ ४१ ॥

पदमञ्जरी

प्राप्ते । **कटाच्छ्रोणिवचने** । कटी श्रोणिः, अन्यत्र कटा । **पिप्पल्यादयश्चेति** । गणसूत्रम् । **पिप्पली, हरीतकीत्यादिकं** तु तस्योदाहरणप्रदर्शनम् । **पृथिवीति** । 'प्रथेः षिवन्सम्प्रसारणं च' इति षित्वादेव सिद्धे प्रत्ययान्तस्य पाठः पुंवद्भावनिवृत्त्यर्थः—पृथिवीभार्य इति । स्त्रीविषयस्यास्य पुंवद्भावप्राप्तिश्चिन्त्या । क्रोष्टुशब्दस्य 'स्त्रियां च' इति तृज्वद्भावः । क्रोष्ट्रीत्यत्र निरूपणीयमस्ति 'स्त्रियां च' इत्यत्र निरूपयिष्यामः ।

**षित्वादेव सिद्ध इति** । 'मातरि षिच्च' इति **वार्त्तिककारवचनात्** षित्वम्, निपातनसामर्थ्याद्वा । उक्तं हि--

धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च ।
अनुबन्धविकाराणां रूढ्यर्थं च निपातनम् ॥ इति ।

**दंष्ट्रेति** । येषामजादिषु दंष्ट्रेति पाठो नास्ति तेषामिदं प्रयोजनम् ॥ ४१ ॥

भावबोधिनी

ग्रहण नहीं है । ] [ कैयट ने स्पष्ट लिखा है—'तरुण-तलुन-शब्दयोरवयोऽर्थं ग्रहणम्—तरुणी सुरा । प्राणिधर्मो हि वयः । गौरादिषु तरुणतलुनशब्दयोः पाठात् ङीषपि भवति । स्वरे विशेषः । अथवा वयोवाचिभ्यामपि गौरादिपाठात् परत्वात् ङीषेव स्यादिति वयोवचनावपि तरुण-तलुन-शब्दावुपसख्यानं प्रयोजयतः; तत्र सामर्थ्यात् ङीप्ङीषोर्विकल्पः ।" ( ४।१।१५ पर कैयट प्रदीप ) । बृहत् और महत् शब्दों के उगित् होने से ङीप् प्राप्त रहते पाठ है । सुधर्मा ऋषि का अपत्य—इस अर्थ में "ऋष्यन्धक०" ४।१।११४ से अण् करने पर "आणिञोरनार्षयोः" ४।१।७८ से ष्यङ् प्राप्त रहते ङीष् के लिये पाठ है । नक्षत्र अर्थ में ङीष् के लिये रोहिणी और रेवती का पाठ है । [ अन्य अर्थों में टाप् होने से—रोहिता, रेवता—बनते हैं । ] मतुप्-प्रत्ययान्त रेवत् से ङीप् होकर रेवती बनता है । स्वर में अन्तर है । ] विकल, निष्फल, पुष्कल --इनसे टाप् प्राप्त रहते पाठ है । श्रोणी अर्थ में कट से ङीप् के लिये पाठ है—कटी । अन्य अर्थ में टाप्—कटा । 'पिप्पली आदि हैं, इनसे ङीष् होता है ।' यह गणसूत्र है । आगे के शब्द उदाहरण रूप में प्रस्तुत हैं—पिप्पली । हरीतकी । कोशातकी । शमी । करीरी । पृथिवी । क्रोष्ट्री । मातामह । पितामह---इनसे भी ङीष् करने के लिये पाठ है । "मातरि षिच्च" इस वार्त्तिक से मातामह में मातृ से होने वाला डामहच् प्रत्यय षित् भी होता है अतः "षिद्गौरादिभ्यश्च" ४।१।४१ से ही ङीष् सिद्ध रहने पर यहाँ गण में मातामह का पाठ यह ज्ञापन करने के लिये है—"षित् को मानकर होने वाला ङीष् अनित्य है [ कहीं होता है और कहीं नहीं होता है ] इससे दंष्ट्रा यह [ टाप्-प्रत्ययान्त ] उपपन्न होता है । [ दंश् धातु से "दाम्नी-शस्-यु-युज०" ३।२।१८२ सूत्र से करण अर्थ में ष्ट्रन् प्रत्यय होता है । यह षित् है । अतः ङीष् होना चाहिये था । उक्त ज्ञापन के कारण ही ङीष् न होकर टाप् होने से 'दंष्ट्रा' रूप बनता है ॥४१॥

**१२९२. जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद् वृत्त्यमत्रावपनाकृत्रिमा-श्राणास्थौल्यवर्णानाच्छादनाऽयोविकारमैथुनेच्छाकेशवेशेषु ॥ ४२ ॥ ( ५०० )**

जानपदादिभ्य एकादशभ्यः प्रातिपदिकेभ्य एकादशसु वृत्त्यादिष्वर्थेषु यथासंख्यं ङीष् प्रत्ययो भवति। **जानपदी भवति, वृत्तिश्चेत्** । जानपदी अन्या। स्वरे विशेषः—उत्सादिपाठादञि कृते ङीपाद्युदात्तत्वं भवति। **कुण्डी भवति, अमत्रं चेत्** । कुण्डाऽन्या । **गोणी भवति, आवपनं चेत्** । गोणान्या । **स्थली भवति, अकृत्रिमा चेत्** । स्थलान्या । **भाजी भवति, श्राणा चेत्, पक्वेत्यर्थः** । भाजाऽन्या । **नागी भवति, स्थौल्यं चेत्** । नागाऽन्या ।

**न्यासः**

**जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णास्थौ-ल्यवर्णानाच्छादनाऽयोविकारमैथुनेच्छाकेशवेशेषु** ॥ वर्तते यया सा वृत्तिरिति जीवनोपायो वृत्तिशब्देनेहोच्यते। जनपदे भवा वृत्तिर्जानपदी। 'उत्सादिभ्योऽञ्' इत्यञ् । **जानपद्यन्यति** । 'टिड्ढाणञ्' इति ङीपेव भवति। **स्वरे विशेष इति** । ङीषि सति प्रत्ययस्वरेणान्तोदात्तत्वं भवति। ङीपि तु सत्याद्युदात्तत्वम् । जानपदस्य ञित्स्वरेणाद्युदात्तत्वात्। **अमत्रमिति** । भाजनम् = पात्रम् **कुण्डाऽन्येति** । क्रियाशब्दोऽयमित्याहुः । 'कुडि दाहे', 'गुरोश्च हलः' इत्यकारप्रत्ययः, 'अजाद्यतष्टाप्' । यस्तु द्रव्यवचनः कुण्डशब्दः स नित्यं नपुंसक एव वर्तत इति प्रत्युदाहर्तुं न युक्त इति । **आवपनमिति** । भाजनविशेष उच्यते, यत्र धान्यादि प्रक्षिप्य नीयते । **गोणाऽन्येति** । सा पुनर्यस्या इदं यादृच्छिकं नाम । **अकृत्रिमेति** । पुरुषव्यापारादिभिर्न निर्वृत्तेत्यर्थः । **स्थलाऽन्येति** । या पौरुषेयी । **भाजीति** । 'भज विश्राणने', चुरादिणिच् । 'ण्यासश्रन्थो युच्' इति युच् प्राप्नोति । अस्मादेव निपातनादङ्, अङन्तान् ङीष् । **श्राणति** । 'श्रा पाके' इत्यस्मात् क्तः । 'संयोगादेर्धातोर्यण्वतः' इति नत्वम्,

**पदमञ्जरी**

**जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णा-नाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु** ॥ वर्ततेऽनया सा वृत्तिः = जीविका । **स्वरे विशेष इति** । तमेव दर्शयति—**उत्सादिपाठादञि कृत इति** । अमत्रम् = भाजनम् । **कुण्डान्येति** । क्रियाशब्दोऽयम् । 'कुडि दाहे,' 'गुरोश्च हलः' इत्यकारप्रत्ययः । अवटपर्यायस्तु कुण्डशब्दो नपुंसके नियतः । यस्तु 'पत्यौ जीवति कुण्डः स्यात्' इति मनुष्यजातिवचनस्ततो जातिलक्षणो ङीष् भवत्येव—कुण्डीयं न गोलीति । अमत्रवाचिनस्तु जातिशब्दादपि स्त्रीविषयत्वान्ङीष् विधीयते । **आवपनं चेदिति** । यत्र धान्यादि प्रक्षिप्य नीयते सा गोणी, यस्याः पुनर्यादृच्छिकं नाम सा गोणा । **स्थलान्येति** । कृत्रिमा पुरुषव्यापारेण निष्पादिता, यथा—स्थलयोदकं परिगृह्णन्तीति ।

**भावबोधिनी**

जानपद—आदि ग्यारह प्रातिपदिकों से क्रमशः वृत्ति—आदि ग्यारह अर्थों में ङीष् प्रत्यय होता है। [ जानपद से लेकर कबर तक के शब्दों का समाहार द्वन्द्व होने के कारण एकवचन है, और वृत्ति से लेकर केशवेश तक के शब्दों में इतरेतरयोग द्वन्द्व होने के कारण बहुवचन है। ] (१) जानपदी यह होता है यदि वृत्ति अर्थ रहे। [ जनपद में होने वाली—जानपदी, वृत्ति = जीवन का सहारा, आजीविका ] वृत्ति से भिन्न—जानपदी [ जनपदे भवा—इस अर्थ में अञ् प्रत्ययान्त से "टिड्ढाणञ्" ४.१.१५ से ङीप् होता है। दोनों में रूप समान रहने पर भी ] स्वर में भेद है—'उत्सादिभ्योऽञ्' ४।१।२७ से अञ् करने पर ङीप् होने से आद्युदात्त होता है। [ ङीष् करने पर "आद्युदात्तश्च" ३।१।३ अन्तोदात्त होता है। ] (२) कुण्डी—यह होता है यदि अमत्र=पात्रविशेष अर्थ रहे। अन्य अर्थ में कुण्डा। [ कुडि दाहे—से अप्रत्ययान्त कुण्ड से टाप् करके कुण्डा बनता है। ] (३) गोणी होता है यदि आववन [ पात्रविशेष, गेहूँ आदि रखने का साधन बोरी आदि [अर्थ रहे; अन्य अर्थ में—गोणा। किसी स्त्री का कल्पित नाम। ] (४) स्थली—यह होता है यदि अकृत्रिम = न बनायी गयी प्राकृतिक भूमि आदि अर्थ रहे। भिन्न अर्थ में—स्थला [ कृत्रिम भूमि आदि ]।

**नागशब्दो गुणशब्दो गुणवचनः स्थौल्ये ङीषमुत्पादयति, अन्यत्र गुण एव टापम्। जातिवचनात्तु जातिलक्षणो ङीषेव भवति – नागी। काली भवति, वर्णश्चेत्। कालाऽन्या। नीली भवति अनाच्छादनं चेत्। नीलाऽन्या। न च सर्वस्मिन्ननाच्छादन इष्यते, किं तर्हि? ❀ नीलादोषधौ, प्राणिनि च ❀ ( म० भा० ४.१.४२ वा० १,२ )। नीली ओषधिः, नीली गौः, नीली वडवा ( म० भा० )। ❀ संज्ञायां वा ❀ ( वा० ३ )। नीली, नीला। कुशी भवति, अयोविकारश्चेत्। कुशान्या। कामुकी भवति, मैथुनेच्छा चेत्। कामुकाऽन्या। मैथुनेच्छावती भण्यते, नेच्छामात्रम्। कबरी भवति, केशवेशश्चेत्। कबराऽन्या॥**

न्यासः

'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वम्। **नागशब्द इत्यादि।** नागशब्दो द्विविधः—जातिवचनः, गुणवचनश्च। तत्र स्थौल्यग्रहणादि न जातिवचनो ङीषमुत्पादयति, न हि जातिवचनस्य स्थौल्यमभिधेयं सम्भवतिः नापि गुणान्तरस्थौल्यमेव। तस्माद् यदासौ स्थौल्यं गुणमभिधाय द्रव्ये वर्तते तदा ङीषमुत्पादयति, नान्यदा। अन्यत्रेत्यादि। स्थौल्यादन्यत्र गुण एव दैर्घ्यादौ वर्तमानो नागशब्दो यदा द्रव्यं विशिनष्टि तदा टापमुत्पादयति। जातिवचनात्त्वित्यादि। हस्तित्वादिजातिवचनात् 'जातेरस्त्रीविषयात्' इत्यादिना ङीष् भवति। **वर्णश्चेदिति।** द्रव्ये वर्तमानो यदि वर्णस्तस्य प्रवृत्तिनिमित्तं भवतीत्यर्थः। **कालाऽन्येति।** यस्या यादृच्छिकसंज्ञा। **नीलाऽन्येति।** **आच्छादनं,** शाटिकादि। अनाच्छादाने, न सर्वत्र। किं तर्हि? **नीलादौषधौ प्राणिनि चेति।** शब्दशक्तिस्वाभाव्यात्, तत्रैव नीलशब्दस्य वृत्तेः। अथ वा—'मनोरौ वा' इत्यतो वाग्रहणमिहानुवर्तते, सा च व्यवस्थितविभाषा, तेनानयोरेवार्थयोस्ततो भविष्यति, नान्यत्रेति। संज्ञायामेवेति। अनाच्छादन एवायं विकल्पः। एषोऽपि तत एव वाग्रहणानुवृत्तेर्लभ्यते। **अयोविकार इति।** विशिष्ट एव 'फालः' इति यस्य नामधेयम्। **कुशाऽन्येति।** तदाकृतिरेव काष्ठादिमयी। **कामुकाऽन्येति।** सा पुनर्यस्या मैथुनादन्यद् वस्तु कामयितुं शीलम्। **मैथुनेच्छावती भण्यत इति।** मत्वर्थीयाकारान्तस्य मैथुनेच्छाशब्दस्योपादानात्। **केशवेश इति।** एतदाख्ये विशिष्ट एव। **कबराऽन्येति।** कबरो वर्णोऽस्या अस्तीति मतुप्, तस्य लोपादभेदोपचाराद्वा द्रव्ये यो वर्तते स वेदितव्यः॥ ४२॥

पदमञ्जरी

**भाजीति।** 'भज विश्राणने' चुरादिः, 'ण्यासश्रन्थो युच्' इति युचि प्राप्तेऽस्मादेव निपातनात् स्त्रियामप्येरच्। **श्राणेति।** 'श्रा पाके', क्तः, 'संयोगादेः' इति नत्वम्। **स्थौल्यं चेदिति।** द्रव्ये वर्तमानस्य नागशब्दस्य स्थौल्य चेत्प्रवृत्तिनिमित्तमित्यर्थः। **नागशब्दो गुणवचन इति।** गजवाची नागशब्दस्तत्सहचरितं स्थौल्यमुपादाय स्त्र्यन्तरे प्रयुक्त उदाहरणम्। सर्पे दृष्टस्तद्गतं दैर्घ्यमुपादाय स्त्र्यन्तरे प्रयुक्तः प्रत्युदाहरणमित्यर्थः। **वर्णश्चेदिति।** प्रवृत्तिनिमित्तमित्यर्थः। **कालान्येति।** यस्या यादृच्छिकीयं संज्ञा। **नीलान्येति।** नील्या रक्ता शाटी, 'नील्या अन्वक्तव्यः' इत्यन्। **अयोविकारश्चेदिति।** 'फाल' इति यस्याभिधानम्। **कुशान्येति।** **छन्दोगाः** स्तोत्रिया गणनार्थानौदुम्बरान् शङ्कून् 'कुशा' इति व्यवहरन्ति। **कामुकान्येति।** यस्या मैथुनादन्यत्कामयितुं शीलम्। **मैथुनेच्छावती भण्यत इति।** कामुकशब्दस्य 'लषपतपद' इति कर्तरि व्युत्पादितत्वात्, इच्छामात्रे वृत्त्यभावात्। सूत्रे तु प्रवृत्तिनिमित्तमात्रं निष्कृष्योक्तम्। मैथुने इच्छा यस्याः सा मैथुनेच्छेति व्यधिकरणपदो बहुव्रीहि-राश्रयणीय इति भावः। **केशवेश इति।** केशसन्निवेशविशेष इत्यर्थः॥ ४२॥

भावबोधिनी

(५) भाजी--यह होता है यदि श्राणा = पकी हुई यह अर्थ रहे; इससे भिन्न अर्थ में--भाजा = न पकायी हुई भोज्य सामग्री। (६) नागी--यह रूप होता है यदि स्थूलता अर्थ रहे; अन्य अर्थ हो तो नागा। नाग शब्द गुणवाची है, यह स्थूलता = मोटापा अर्थ मे ङीष् उत्पन्न कराता है, अन्य कोई गुण प्रतीत होने पर टाप् ही होता है--नागा। किन्तु जातिवाचक नाग शब्द से तो जातिलक्षण "जातेरस्त्रीयविषयात्" ४।१।६३ से ङीष् ही होता है--नागी [ = हथिनी ]।

## १२९३. शोणात् प्राचाम् ॥ ४३ ॥ ( ५०१ )

**शोणशब्दात् प्राचामाचार्याणां मतेन स्त्रियां ङीष् प्रत्ययो भवति । शोणी, शोणा वडवा ॥**

## १२९४. वोतो गुणवचनात् ॥ ४४ ॥ ( ५०२ )

**न्यासः**

**शोणात् प्राचाम् ॥** शोणशब्दोऽयं वर्णवचनः । 'वर्णानां तणतिनितान्तानाम्' इति वचनादाद्युदात्तः । तत्र 'अन्यतो ङीष्' इति सिद्धे वचनं नियमार्थम्—प्राचामेव यथा स्याद्, अन्येषां मा भूदिति ॥ ४३ ॥

**वोतो गुणवचनात् ॥ गुणमुक्तवान् गुणवचन इति ।** भूते काले ल्युटो विधानात् । स पुनर्यः प्राग् गुणमभिधाय पश्चाद् मतुब्लोपादभेदोपचाराद्वा तद्वद् द्रव्यमभिधत्ते स वेदितव्यः । **पट्वी, मृद्वीति ।** अत्र पटुत्वं मृदुत्वञ्च यथाक्रमं गुणमभिधाय पटु-मृदुशब्दौ तद्वति द्रव्ये वर्त्तेते इति गुणवचनौ भवतः ।

**पदमञ्जरी**

**शोणात् प्राचाम् ॥** शोणशब्दोऽयं वर्णवाची 'वर्णानां तणतिनितन्तानाम्' इत्याद्युदात्तः, तत्र 'अन्यतो ङीष्' इत्येव सिद्धे नियमार्थं वचनम्—प्राचामेव नान्येषामिति ॥ ४३ ॥

**वोतो गुणवचनात् ॥ गुणानुक्तवान्गुणवचन इति ।** 'कृत्यल्युटो बहुलम' इति भूते कर्तरि ल्युटं दर्शयति । स पुनर्यः प्राग्गुणमभिधाय पश्चान्मतुब्लोपादभेदोपचाराद्वा तद्वति वर्तते स वेदितव्यः । **शुचिरिति ।** उत इत्यस्मिन्नसत्त्वेऽपि पट्वीत्यादिसिध्यर्थमेवात इत्यस्यासम्बन्धो व्याख्येयः, ततश्चेहापि प्रसङ्ग इति भावः ।

**भावबोधिनी**

(७) काली--यह होता है यदि वर्ण = रंग अर्थ रहे तो; अन्य अर्थ में--काला [ क्रूर, किसी स्त्री का नाम ] । (८) नीली--यह होता है यदि अनाच्छादन = आवरण साड़ी आदि अर्थ न हो; अन्य अर्थ में--नीला । यह सभी अनाच्छादन अर्थ में इष्ट नहीं है, तो क्या ? 'नील से औषधि और प्राणी अर्थ में ङीष् इष्ट है ।' नीली औषधि, नीली गाय, नीली वडवा = घोड़ी । 'संज्ञा = नाम अर्थ में विकल्प से ङीष् होता है' नीली [ पक्ष में टाप् करने पर ] नीला । (९) कुशी--यह होता है यदि लोहे की बनी हुयी कुदाली आदि अर्थ रहे; अन्य अर्थ में--कुशा यह होता है । [ कुशान्येति--बला, रज्जूः, मधुकर्कटी ( कोंकर ) सामगानां स्तोत्रगानार्थः औदुम्बरशंकुविशेष इति शब्दस्तोमनिधिः । छन्दोगसूत्रे प्रस्तोता तु कुशाः कारयेद् यज्ञीयस्य वृक्षस्य खदिरस्य दीर्घसत्रेषु एके प्रादेशमात्रीः कुशपृष्ठास्त्वक्तः समाममज्जते' इति प्रसिद्धा--इति बालमनोरमाकारः । "छन्दोगा" स्तोत्रीयगणानार्थान् शंकून् कुशा इति व्यवहरन्ति--इति तत्त्वबोधिनोकारः । ] (१०) कामुकी--यह होता है यदि मैथुन की इच्छावाली--यह अर्थ रहे; अन्य अर्थ में--कामुका । यहाँ मैथुनेच्छा वाली अर्थ कहा जाता है केवल इच्छा अर्थ नहीं । (११) कबरी--यह होता है यदि केशवेश = चित्र विचित्र केश-विन्यास-वाली अर्थ प्रतीत रहता है, अन्य अर्थ में--कबरा [ चितकबरी ] ॥ ४२ ॥

प्राचीन आचार्यों के मत से शोण शब्द से स्त्रीलिङ्ग में ङीष् होता है । [ अर्थात् पाणिनि के मत से टाप् ही होता है । अथवा पूर्व के आचार्य ङीष् और अन्य आचार्य टाप् मानते हैं । ] उदा०—शोणी, शोणा वडवा [ लाल घोड़ी ] ॥ ४३ ॥

गुण को कहने वाला = गुणवचन । गुणवाचक, उकारान्त प्रातिपदिक से स्त्रीलिङ्ग में विकल्प से ङीष् होता है । उदा०—पट्वी, पटुः । मृद्वी, मृदुः । [ पटु + ङीष् = ई, उकार का यण् ] चतुर स्त्री । मृदु + ङीष् = ई, यण्, कोमल स्त्री । पक्ष में पटुः मृदुः । ] उकारान्त से—इसका क्या प्रयोजन है ? शुचिः इय ब्राह्मणी । [ यह पवित्र ब्राह्मणी । यहाँ शुचि गुणवाची है । किन्तु उकारान्त न होने से ङीष् नहीं होता है । ] गुणवाचक से—इसका क्या लाभ ? आखुः [ = चूहा । यह गुणवाचक नहीं है । अतः इससे ङीष् नहीं होता है ] ।

**गुणमुक्तवान्=गुणवचनः। गुणवचनात्प्रातिपदिकाद् उकारान्तात् स्त्रियां वा ङीष् प्रत्ययो भवति। पटुः, पट्वी। मृदुः, मृद्वी। उत इति किम्? शुचिरियं ब्राह्मणी। गुणवचनादिति किम्? आखुः। ❀ वसुशब्दाद् गुणवचनाद् ङीबाद्युदात्तार्थम् ❀ (म० भा० ४.१.४४ वा० १)। वस्वी। ❀ खरुसंयोगोपधात् प्रतिषेधो**

**न्यासः**

**शुचिरिति**। शुचिशब्दः शुचित्वे गुणे वर्त्तित्वा द्रव्ये वर्तत इति गुणवचनः, न तूकारान्तः। **आखुरिति**। जातिवचनोऽयम्, न गुणवचनः।

**गुणवचनान्ङीबाद्युदात्तार्थमिति**। गुणवचनाद् ङीब् विधेयः, न ङीष्। स्वरे विशेषः। किमर्थम्? आद्युदात्तार्थम्। अन्तोदात्तेषु 'उदात्तयणो हल्पूर्वात्' इत्युदात्तत्वमीकारस्य विधीयत इति नास्ति विशेषो ङीब्ङीषोः। आद्युदात्तेषु तु ङीबनुदात्त एवावतिष्ठते, तस्मात् तदर्थं ङीब्विधेयः। ननु च ङीष् प्रकृतः, तत् कथं ङीप् शक्यते विधातुम्? नैष दोषः; ङीबेव ह्यत्र मण्डूकप्लुतिन्यायेनानुवर्तते, न ङीष्; अस्वरितत्वात्। **वस्वीति**। 'वस निवासे', 'भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः' इति वर्तमाने 'धान्ये नित्' इति च 'शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' इत्युप्रत्यय, निच्च, नित्त्वादाद्युदात्तत्वं भवति। गुणवचनश्चायं वसुशब्दः, वसुत्वे गुणे वर्त्तित्वा तद्वति द्रव्ये वर्तत इति कृत्वा। पटुशब्दोऽप्याद्युदात्तत्वान् ङीपं प्रयोजयति। 'अट पट गतौ', हेतुमण्णिच्, 'फलिपाटिनमिमनिजनां गुक् पटिनाकिधतश्च' इत्युप्रत्ययः, पाटेश्च पटिरादेशः, 'धान्ये नित्' इत्यनुवृत्तेर्नित्त्वादाद्युदात्तत्वम्। मृदुशब्दश्च प्रत्ययस्वरेणान्तोदात्त इति, तत्र ङीपो ङीषो वा विशेषो नास्ति। 'म्रद मर्दने', 'कुर्भ्रश्च' इत्यतः कुरित्यनुवर्तमाने 'प्रथिम्रदिभ्रस्जां सम्प्रसारणं च' इति कुप्रत्ययः, सम्प्रसारणं च भवति।

**खरुसंयोगोपधप्रतिषेध इति**। खरुशब्दात् संयोगोपधाच्च प्रतिषेधः। स तु वेत्यस्य व्यवस्थितविभाषा-

**पदमञ्जरी**

**गुणवचनान्ङीबिति**। 'मनोरौ वा' इत्यस्यानन्तरमिदं पठितव्यमित्यर्थः। उत्तरसूत्रम् 'बह्वादिभ्यो वा' इति पठितव्यम्।

**आद्युदात्तार्थमिति**। आद्युदात्तेषु गुणवचनस्य ङीब्विधानस्य प्रयोजनमित्यर्थः। अन्तोदात्तेषु 'उदात्तयणो हल्पूर्वात्' इति ङीबप्युदात्त इति नास्ति विशेषः। आद्युदात्तेषु तु ङीबनुदात्त एवावतिष्ठते। **वस्वीति**। 'शृस्वृस्निहि' इत्यादिना वसेरुप्रत्ययः, नित्त्वादाद्युदात्तो वसुशब्दः, गुणवचनश्चायं नैर्मल्यवचनः। प्रशस्तवचन इत्यन्ये। तथा च—अतिशयेन वसुर्वसिष्ठो भवति। पटुशब्दोऽप्याद्युदात्तः, 'धान्ये नित्' इत्यधिकारे 'फलिपाटिनमिमनिजयां गुक् पटिनाकिधतश्च' इति उप्रत्ययः, फलेर्गुगागमः, पाटेश्च पटिरादेशः, फल्गुः, पटुः, नाकुः, मधुः, जतु—इत्युदाहरणानि। मृदुशब्दस्त्वन्तोदात्तः, 'म्रद क्षोदे' 'कुर्भ्रश्च' इत्यधिकारे 'प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च' इति कुप्रत्ययः, पृथुः, मृदुः। 'भ्रस्जेः सलोपः सम्प्रसारणञ्च',

**भावबोधिनी**

* गुणवाची वसु शब्द से ङीप् कहना चाहिये, आद्युदात्त करने के लिये ❀ उदा०—वस्वी [ वसु+ङीप्=ई, यण्। ङीप् अनुदात्त है। फलतः आद्युदात्त हो जाता है। वसु शब्द निर्मलता गुण का वाचक है। कुछ लोग प्राशस्त्यगुण का वाचक मानते हैं। इसीलिये अतिशय अर्थ में इष्ठन् करने पर वसिष्ठः—बनता है। ] भाष्य में 'वसुशब्दाद' इतना अंश नहीं है।]

* 'खरु शब्द और संयोगोपध [जिसकी उपधा में संयोग है]—शब्द से प्रतिषेध कहना चाहिये।' * उदा०—खरुः इयं ब्राह्मणी। [ पाणिग्रहण की उत्कण्ठावाली यह ब्राह्मणी है। अतः गुणवाची होने से ङीप् प्राप्त है, निषेध हो जाता है। ] पाण्डुः इयं ब्राह्मणी। [ पाण्डुवर्णवाली यह ब्राह्मणी है। संयोगोपध होने से प्राप्त ङीष् का निषेध होता है। ] [ भाष्य में गुणलक्षण का श्लोक उद्धृत है— ] सत्त्व=द्रव्य में निविष्ट होता है। उससे अलग है। भिन्नजातीय [ घट-पट आदि ] में दिखाई देता है। आधेय=उत्पाद्य है, अक्रियाज=अनुत्पाद्य है, ऐसा असत्त्वप्रकृति=द्रव्यप्रकृति से भिन्न, गुण होता है।

**वक्तव्यः** ॐ ( **वा० २** ) **खरुरियं ब्राह्मणी । पाण्डुरियं ब्राह्मणी ( म० भा० ) ।**

**सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते ।**

**न्यासः**

विज्ञानादेव लभ्यत इति वक्तव्यमिति । 'उतः' इति तपरकरणं दीर्घनिवृत्त्यर्थम्, तेन पटूरित्यत्र न भवति । पटुमिच्छतीति 'सुप आत्मनः क्यच्', 'अकृत्सार्वधातुकयोः' इति दीर्घः । पटू य इति स्थिते क्विप्, 'अतो लोपः' इत्यकारलोपः, 'लोपो व्योर्वलि' इति यकारस्य लोपः ।

इह 'उतः' इति विशेषणोपादानादेव शास्त्रीयगुणस्यापरिग्रहः सिद्धः, न ह्यदेङ्गं मध्ये कश्चिदुकारान्तोऽस्ति । लोके तु क्वचिदुपसर्जनं गुण इत्यभिधीयते, यथा--गुणभूता वयमिति, अप्रधानभूता इति गम्यते । यस्य गुणस्य हि भावात् तद्वति द्रव्यशब्दे निवेशस्तदभिधाने त्वतलावित्यत्र विशेषणमात्रं गुणशब्देनोच्यते, तथा हि, जातावपि भावप्रत्ययो भवति--**गोत्वमिति** । इह तु यादृशो गुण इष्यते तादृशं परिभाषितुमाह--**सत्त्वे निविशतेऽपैतीत्यादि** । व्यवच्छेदफलकत्वात् सर्ववाक्यानां सत्त्व एवेत्यवधारणं द्रष्टव्यम् । सत्त्वम्=द्रव्यम्, तत्रैव निविशते, तदेवाश्रयतीत्यर्थः । अपैति=ततः सत्त्वादपगच्छति, यथा आम्रफले श्यामता पूर्वमुपैति, रक्ततायामुपजातायां ततोऽपैति । **पृथग्जातिषु दृश्यते** । पृथग्=नाना जातयो येषां ते पृथग्जातयः, अतस्तेषु पृथग्जातिषु दृश्यते । न हि गोत्वमश्वादिषु व्यक्तिषु दृश्यते । गोव्यक्तौ दृष्टः शङ्खादावपि शुक्लादिर्गुणो दृश्यते । एतेन सर्वेण जातिर्गुणो न भवतीत्युक्तं भवति । न हि जातिर्द्रव्यमेवाश्रयति । यथा हि सत्ता द्रव्यगुणकर्मसु

**पदमञ्जरी**

न्यङ्क्वादित्वात्कुत्वम्, भृगुः । **खरुरिति** । 'खरुः कन्या पतिंवरा' इति निघण्टुः, तत्र पाणिग्रहणोत्कण्ठाभिधायित्वाद् गुणवचनत्वम् । तपरकरणं किम् ? पटुमिच्छति पटूयति, पटूयतेः क्विप्, पटूः स्त्री--अत्र मा भूत् । यद्यप्ययं सम्प्रति क्रियावचनः, तथापि पूर्वं गुणमुक्तवानिति कृत्वा स्यात्प्रसङ्गः ।

इह 'उतः' इति विशेषणाद्वचनग्रहणाच्च शास्त्रीयोऽदेङ्गुणो न गृह्यते । लोके तूपसर्जनं गुण उच्यते, शास्त्रेऽपि यस्य गुणस्य हि भावादिति विशेषणमात्रं गुणो गृह्यते, शुक्लादौ च प्रसिद्धतरो गुणशब्दः, वैशेषिकादयस्तु रूपरसादयश्चतुर्विंशतिर्गुणा इति प्रतिपन्नाः; तदिह जिघृक्षितं गुणं लक्षयति--**सत्त्वे निविशत इत्यादि** । सीदन्त्यस्मिञ्जातिगुणक्रिया इति **सत्त्वम्**=द्रव्यम् । तत्र यो निविशते=समवैति स गुणः । 'यो निविशते स गुणः' इत्युच्यमाने गुणक्रियाजात्योर्गुणत्वप्रसङ्गात् सत्त्व इत्युक्तम् । एवमपि सत्ता जातिर्गुणः स्यात्, सा हि द्रव्यगुणकर्मसु त्रिष्वपि समवैति ? तदर्थं द्रव्य एवेत्यवधारणं द्रष्टव्यम् । एवमपि द्रव्यत्वजातिर्गुणः स्यात् सत्त्वे निवेशात्तत्रैव च निवेशात् ? इत्यत आह-**अपैतीति** । ततः सत्त्वादपैति=अपगच्छति, क्वचिद्वा कदाचिद्वा न भवतीत्यर्थः । यथा-आम्रफले श्यामता पूर्वमुपैति, रक्ततायां तत्र जातायामपैति च ।

**भावबोधिनी**

विमर्श--प्रस्तुत सूत्र पर भाष्यकार ने गुण की परिभाषा देने के लिये उक्त श्लोक उद्धृत किया है ।

सीदन्ति जाति-गुण-क्रियाः अस्मिन् - इस व्युत्पत्ति के आधार पर √सत् से अधिकरण अर्थ में क्विप् प्रत्यय और उसका लोप करके स्वार्थिक त्व प्रत्यय करने पर - सत्त्व--यह बनता है । अथवा सद् से औणादिक व प्रत्यय करके सत्व शब्द बनता है । इस प्रकार गुण द्रव्य में रहने वाला है, अतः उस = सत्त्व = द्रव्य में समवाय से रहने के कारण द्रव्य से गुण का भेद हो जाता है । द्रव्य में द्रव्यत्व भी रहता है, इससे भेद करने के लिये अपैति = पृथक् भवति - यह कहा है । द्रव्यत्व द्रव्य से कभी भी अलग नहीं होता है । किन्तु गुण अलग भी होता है । जैसे आम आदि में श्यामता रहती है । कालप्रभाव से यह दूर होकर रक्तता और पीतता आ जाती है । गुण की यह दूसरी विशेषता है । इससे जाति के साथ गुण का भेद सिद्ध होता है । शुक्लत्वादि गुण गो आदि में रहता है और शंख आदि में भी । किन्तु गोत्व जाति तो केवल

**आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥ ( म० भा० ४.१.४४ )**

**न्यासः**

त्रिष्वपि वर्तते, द्रव्यत्वं द्रव्य एव, कर्मत्वं कर्मण्येव, गुणत्वं गुण एव, नापि द्रव्यवर्त्तिनी जातिः सत्त्वादपैति; जन्मनः प्रभृत्याविनाशात् तस्याधारद्रव्यापरित्यागात् न जातिः पृथग्जातिषु दृश्यते। न हि गोत्वमश्वादि-व्यक्तिषु दृश्यते, नाप्यश्वत्वं गवादिष्विति नास्ति जातेर्गुणत्वप्रसङ्गः। कर्मणस्तु स्यात्; तदपि हि सत्त्व एव निविशते यदा सक्रियं द्रव्यं भवति, अपैति च ततो यदा तु निष्क्रियं भवति। **पृथग्जातिषु दृश्यत इति**। घटपटादिषु दृश्यते। अतः कर्मणो गुणत्वमपाकर्तुमाह—**आधेयश्चेत्यादि**। आधेयः=निर्वर्त्यः, उत्पाद्य इत्यर्थः, यथा--पाक्यद्रव्येषु रक्तता गुणः, स ह्यग्निसंयोगेन निष्पाद्यते। **अक्रियाजश्चेति**। क्रिया=व्यापारः, ततो जातः क्रियाजः, न क्रियाजोऽक्रियाजः=नित्यः, यथा—आकाशादिषु महत्त्वादिर्गुणः। तदेवं गुणस्योत्पाद्यत्वा-नुत्पाद्यत्वप्रकारद्वयदर्शनेन कर्मणो गुणत्वनिवृत्तिः कृता भवति। तद्ध्युत्पाद्यमेव, नानुत्पाद्यम्। एवमपि द्रव्यस्य गुणत्वं प्राप्नोति, तस्यापि ह्येते धर्मा विद्यन्ते। तथा हि—तदपि यदि निविशते द्रव्य एवारम्भकेऽवयवभूते निविशते, अपैति च ततः, यथा--शरीरमवयवीति। तद्धि हस्तपादादिष्वयवेषु समवैति, तद्विनाशे च विनाशात् ततोऽपैति। पृथग्जातिषु दृश्यते, हस्त्यादिषु दृश्यते। द्रव्यस्यापि पूर्वोक्तं प्रकारद्वयमस्त्येव। अवयविद्रव्यस्योत्पा-

**पदमञ्जरी**

द्रव्यत्वजातिस्तु सर्वदा द्रव्ये निविशते नापैति, यदि हि कदाचित्क्वचिद्वा न स्याद् द्रव्यमेवैतन्न स्यात्। एवमपि गोत्वादिजातिर्गुणः स्यात्, सा हि सत्त्वे निविशते, अपैति च, ततोऽश्वादिष्वभावात्। इत्यत आह—**पृथग् जातिष्विति**। पृथगिति पृथक्पदम्, पृथग्भूतासु जातिष्वित्यर्थः। जात्याधारेषु द्रव्येषु दृश्यमानो जातिषु दृश्यत इत्युपचर्यते, समासे तु सति 'जात्यन्ताच्छः' इति नित्याधिकारपरिगणितश्छः प्रसज्येत। तदेवमुक्तलक्षणोपेतो यः पृथग्जातीयेषु दृश्यते स गुणः न चैवंरूपा गोत्वादिजातिः। यद्यपि खण्डमुण्डादिरूपेण खण्डमुण्डादयः पृथग्जातीयाः, तथापि गोत्वेन तासामेकजातीयत्वमेव। ये त्वपैतीत्यस्य सत्येवाधारे तत्परित्यागमर्थमाहुः, तेषां 'पृथग्जातिषु' इत्यनर्थकम्; गोत्वादिजातेरप्यपैतीत्यनेनैव व्यावृत्तिसिद्धेः। तस्मात्पूर्वोक्त एवार्थः।

एवमपि हि क्रिया गुणः स्यात्, सा हि द्रव्ये निविशते यदा सक्रियं तत्रैव च निविशते, अपैति च ततो यदा निष्क्रियं द्रव्यं पृथग्जातीयेषु गवाश्वादिषु दृश्यते ? अत आह—**आधेयश्चेति**। आधेयः=निष्पाद्यः, यथा—पाकनिक्षिप्तेषु घटादिषु रक्तता गुणः। अक्रियाजः=अनुत्पाद्यः, यथा—तेजः परमाणुषु स एव रक्तता गुणः। तदेवमाश्रयभेदेनोत्पाद्यानुत्पाद्यस्वभावो गुण इति नित्योत्पाद्यस्य कर्मणो गुणत्वाभावः।

एवमपि द्रव्यं गुणः प्राप्नोति, तदपि शरीरादिकं पादादिषु द्रव्येष्वेव पृथग्जातीयेषु निविशते संयोगविनाशे च ततोऽपैति, आधेयं चाक्रियाजम्, अवयविद्रव्यस्योत्पाद्यत्वादाकाशादेश्चानुत्पाद्यत्वादित्यत आह—**सोऽसत्त्वप्रकृतिर्गुण इति**। य उक्तलक्षणोपेतः सत्त्वप्रकृतिर्न भवति=द्रव्यस्वभावको न भवति, स गुण इत्यर्थः। अत्रोत्तरार्द्धेनैव सर्वजातीनां व्यावृत्तिसिद्धेः पूर्वार्द्धं व्यर्थम्, जातीनां नित्यत्वेनोत्पाद्यत्वाभावात् ? नैतदेवम्;

**भावबोधिनी**

गो में ही रहती है। इस प्रकार भिन्न-भिन्न जातीय पदार्थों में दृष्टिगोचर होने के कारण भी गुण का जाति से भेद है। क्रिया के साथ गुण का भेद सिद्ध करने के लिए—आधेय=उत्पाद्य है, जैसे घट आदि में अग्निसंयोग से रक्तगुण उत्पन्न होता है, और अक्रियाज=अनुत्पाद्य, जैसे—आकाश का महत्त्व आदि गुण। अर्थात् गुण उत्पाद्य एवम् अनुत्पाद्य दोनों प्रकार का होता है। परन्तु क्रिया सदैव उत्पाद्य ही होती है। इस प्रकार क्रिया से भी गुण का भेद सिद्ध हो जाता है।

उपर्युक्त लक्षण करने पर भी द्रव्यत्व का गुणत्व प्राप्त होता है क्योंकि अवयवी द्रव्य=शरीरादि, अपने अवयव द्रव्य=हाथ पैर आदि पृथक् जातीय में निविष्ट होता है, असमवायिकारणभूत संयोग का विनाश होने पर वह शरीर भी

**१२९७. बह्वादिभ्यश्च ॥ ४५ ॥ ( ५०३ )**

**'बहु' – इत्येवमादिभ्यः प्रातिपदिकेभ्यः स्त्रियां वा ङीष् प्रत्ययो भवति । बहुः, बह्वी ।**

बहु । पद्धति । अङ्कति । अञ्चति । अंहति । बंहति । शकटि । ❀ शक्तिः शस्त्रे ( ग० सू० ४८ ) । शारि । वारि । गति । अहि । कपि । मुनि । यष्टि । ❀ इतः प्राण्यङ्गात् ❀ ( ग० सू० ४९ ) । ❀ कृदिकारादक्तिनः ❀

**न्यासः**

द्यत्वादाकाशादेस्तद्वदनुत्पाद्यत्वात् ? इत्यत आह—**सोऽसत्त्वप्रकृतिर्गुण इति** । प्रकृतिः = स्वभावः । सत्त्वं द्रव्यं प्रकृतिर्यस्य स सत्त्वप्रकृतिः, न सत्त्वप्रकृतिरसत्वप्रकृतिः । यथोक्तैर्धर्मैर्युक्तो यो द्रव्यस्वभावो न भवति स गुणः । द्रव्यम् = द्रव्यस्वभावम्, अतो गुणो न भवति ॥ ४४ ॥

**बह्वादिभ्यश्च** ॥ बह्वादिषु **शक्तिः शस्त्रे इति** पठ्यते, तस्यायमर्थः--शस्त्रेऽभिधेये शक्तिशब्दाद्वा ङीष् भवति—शक्तिः, शक्ती । शस्त्र इति किम् ? शक्तिः, सामर्थ्यम् । अन्ये तु शक्तिशस्त्री इति शब्दद्वयं पठन्ति--शक्तिः, शक्ती; शस्त्रिः, शस्त्री । **इतः प्राण्यङ्गादिति** । इकारान्तात् प्राण्यङ्गवाचिनो वा ङीष् भवति—धमनिः, धमनी । इत इति किम् ? समर्था ग्रीवा । प्राण्यङ्गादिति किम् ? श्रेणिः । **कृदिकारादक्तिनः** । **सर्वतोऽक्तिन्नर्था-**

**पदमञ्जरी**

असति पूर्वार्द्धे न जातिर्व्यावर्तते, यथा-तैजसानां परमाणूनां यद्रूपम्, यच्चेष्टकादिपाक्यद्रव्यगतम्-तदुभयं मिलितमुत्पाद्यानुत्पाद्यस्वभावमित्युभयोरपि गुणत्वं भवति, न पुनः प्रत्येकम्; उभयस्वभावत्वात् । तथा पाक्य-द्रव्यरूपं जातिश्च-इत्युभयं मिलितमुत्पाद्यानुत्पाद्यस्वभावमिति जातिरपि गुणः स्यादेव, न हि सजातीयत्वे सतीति विशेषणमुपात्तम्, अतः पूर्वार्द्धेन जातिव्यावृत्तिः ।

नन्वेवमपि 'पृथग्जातिषु दृश्यते' इत्यनेनैव सर्वजातिव्यावृत्तिसिद्धेः पूर्वकं विशेषणद्वयं व्यर्थमेव, तस्मात् 'सत्त्वे निविशते' इति स्वभावकथनम् । ततः 'अपैति' 'पृथग्जातिषु दृश्यते' इति च विकल्पेन जातीर्व्यावर्तयतः, अपैतीत्यस्य च तत्रैव कियन्तञ्चित्कालं स्थित्वा तमाधारं त्यजतीत्ययमर्थः ।

तदेवम् 'सत्त्वे निविशते अपैति आधेयश्चाक्रियाजश्च' इत्येकं लक्षणम् । 'सत्त्वे निविशते पृथग्जातिषु' इत्यादिकं चापरमिति लक्षणद्वयमनुसर्त्तव्यम् ॥ ४४ ॥

**बह्वादिभ्यश्च** ॥ **शक्तिः शस्त्र इति** । शक्तिशब्दः शस्त्रेऽभिधेये ङीषमुत्पादयति--शक्तिः, शक्ती । शस्त्र इति किम् ? शक्तिः = सामर्थ्यम् । अन्ये शक्ति शस्त्री इति शब्दद्वयं पठन्ति--शस्त्रिः, शस्त्री । **इतः प्राण्यङ्गा-दित्यादीनि** त्रीणि वाक्यानि यथोत्तरमधिकविषयाणि । तत्रोत्तरं वाक्यद्वयम् 'रात्रेश्चाजसौ' इत्यत्रैव

**भावबोधिनी**

विनष्ट हो जाता है, वह आधेय भी है और अक्रियाज भी है; क्योंकि अवयवि द्रव्य उत्पाद्य है और [ तद्गत ] आकाशादि अनुत्पाद्य है । अतः शरीर आदि द्रव्य में गुणत्व का लक्षण अतिव्याप्त होने लगता है । इसको दूर करने के लिए लिखते हैं—सोऽसत्त्वप्रकृतिर्गुणः । प्रकृतिः = स्वभावः, सत्त्वम् = द्रव्यं प्रकृतिर्यस्य सः सत्त्वप्रकृतिः, न सत्त्वप्रकृतिः असत्त्वप्रकृतिः अद्रव्यस्वभावः = द्रव्यभिन्न इत्यर्थः । यह लक्षण का अन्तिम अंश है । द्रव्य द्रव्यस्वभाव होता है । अतः वह गुण नहीं हो सकता । भाष्यकार ने एक दूसरा लक्षण भी उद्धृत किया है—

उपेत्यन्यज्जहात्यन्यद् दृष्टो द्रव्यान्तरेष्वपि ।
वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः ॥

[ म० भा० ४।१।४४। ]

इसकी व्याख्या वहीं देखना चाहिए ॥ ४४ ॥

बहु—आदि प्रातिपदिकों से स्त्रीलिङ्ग में ङीष् प्रत्यय विकल्प से होता है । उदा०—बह्वी, बहुः । [ बहु आदि सभी शब्दों से वैकल्पिक ङीष् होने से दो-दो रूप होते हैं, जैसे—पद्धती-पद्धतिः यष्टी, यष्टिः । * प्राणी के अंगवाचक इकारान्त

**( ग० सू० ५० )। ❀ सर्वतोऽक्तिन्नर्थादित्येके ❀ ( ग० सू० ५१ ) चण्ड । अराल । कमल । कृपाण । विकट । विशाल । विशङ्कट । भरुज । ध्वज । ❀ चन्द्रभागान्नद्याम् ❀ ( ग० सू० ५२ )। कल्याण । उदार । पुराण । अहन् । बहुशब्दो गुणवचन एव, तस्येह पाठ उत्तरार्थः ॥**

**न्यासः**

**दित्येके ।** अस्यार्थः । 'रात्रेश्चाजसौ' इत्यत्रैव व्याख्यातः । यदि सर्वतोऽक्तिन्नर्थात् ङीष् भवति, शकटयादीनां गणे किमर्थं इकारान्तानां पाठः ? तस्यैव प्रपञ्चार्थः । पद्धतिशब्दस्याक्तिन्नर्थादिति प्रतिषेधे प्राप्ते पाठः । पादस्य हतिः = पद्धतिः, 'हिमकाषिहतिषु च' इति पद्भावः । **चन्द्रभागान्नद्यामिति ।** चन्द्रभागशब्दान्नद्यामभिधेयायां वा ङीष् भवति-- चन्द्रभागी नदी । नद्यामिति किम् ? चन्द्रभागा नाम देवता । **अहन्निति** अयं शब्दः केवलः स्त्रियां न वर्तते । तस्मात् समासे तदन्त उदाहार्यः । दीर्घाण्यहानि यस्यां शरदि सा दीर्घाह्नी, ङीप्प्रतिषेधावप्यस्माद् भवतः । 'अनो बहुव्रीहेः' 'डाबुभाभ्यामन्यतरस्याम्' इत्यपि डाब् भवति, 'अन उपधालोपिनोऽन्यतरस्याम्' इति वा ङीप् च । तेन चातूरूप्यं भवति[1] । यदि बहुशब्दो गुणवचनः, तत् किमर्थमस्येह ग्रहणम्, यावता पूर्वेणैव सिद्धो ङीष् ? इत्यत आह—**तस्येत्यादि** ॥ ४५ ॥

**पदमञ्जरी**

व्याख्यातम् । इकारान्तात्प्राण्यङ्गवाचिनो वा ङीष् भवति--धमनिः, धमनी । 'सर्वतोऽक्तिन्नर्थात्' इत्येव ङीषि सिद्धे शकटयादीनामिकारान्तानां पाठः प्रपञ्चार्थः । पद्धतिशब्दः क्तिन्नन्तः, पादस्य हतिः पद्धतिः, 'हिमकाषिहतिषु च' इति पद्भावः । **अहन्निति** पठ्यते, न स केवलः स्त्रियां वर्तते, तस्मात्तदन्तो बहुव्रीहिरुदाहार्यः--दीर्घमहरस्याः दीर्घाह्नी शरत्, पाठसामर्थ्यात् 'अनुपसर्जनात्' इति न प्रवर्तते । अस्य ङीषो विकल्पितत्वाड् डाप्प्रतिषेधावपि भवतः, 'अन उपधालोपिनः' इति ङीप् च ।

**बहुशब्दो गुणवचन इति ।** अन्तोदात्तश्च 'लङ्घिबंह्योर्नलोपश्च' इत्युप्रत्ययान्तः । किमर्थं तर्हि तस्येह पाठः ? इत्यत आह--**तस्येति** ॥ ४५ ॥

**भावबोधिनी**

से विकल्प से ङीष होता है ।' [ जैसे–धमनी, धमनिः ❀ 'कृत् का जो इकार, तदन्त से किन्तु क्तिन्नन्त से भिन्न प्रातिपदिक से ङीष् होता है । ❀ क्तिन् अर्थवाले प्रत्ययान्त से भिन्न कृत् अथवा अकृत् के इकारान्त से स्त्रीलिङ्ग में विकल्प से ङीष् होता है । [ ये तीनों गणसूत्र हैं । इनमें उत्तरोत्तर अधिक विषय का समावेश होता जाता है । ] [ चण्ड आदि में टाप् प्राप्त रहते ङीष् का विधान है । ] ❀ 'चन्द्रभाग शब्द से नदी अर्थ में ङीष् कहना चाहिये ।'' [ चन्द्रभागी—यह किसी नदी का नाम है । चन्द्रभागा—यह देवता का नाम है । ] कल्याण । उदार । पुराण । अहन् । [ इनमें ङीप् प्राप्त है, ङीष् के लिए पाठ है । अहन् अकेला स्त्रीलिङ्ग में नहीं होता, बहुव्रीहि में ही रहता है—जैसे दीर्घाह्नी आदि । ]

बहु-शब्द गुणवाचक ही है [ अतः पूर्व सूत्र से सिद्धि सम्भव रहने पर भी ] उसका यहाँ पाठ उत्तर सूत्र में अनुवृत्ति के लिये है ॥ ४५ ॥

---

१. वस्तुतस्तु चातुःशब्द्यम्; त्रैरूप्यात् । चातूरूप्यं तु केवलं ङावेव—दीर्घाह्नी दीर्घाह्नो दीर्घाहा दीर्घाहाः शरदिति । अत्राद्यौ शब्दौ ङीब्ङीषन्तौ । तृतीयो डाबन्तः । चतुर्थस्तु तेषां प्रतिषेधेन पाक्षिको नकारान्तः । ङीब्ङीषन्तयोः स्वरे भेदः--ङीबन्तस्य बहुव्रीहिस्वरेण पूर्वपदप्रकृतिस्वरत्वम्, ङीषन्तस्य त्वन्तोदात्तत्वमित्येतौ द्वौ भिन्नौ । दीर्घाह्नीत्यत्र णत्वाभावश्च--वृत्तिकारमते युवादित्वात्; भट्टोजिमते तु क्षुभ्नादित्वात् ।

## १२९६. नित्यं छन्दसि ।। ४६ ।। ( ३४४६ )

**बह्वादिभ्यश्छन्दसि विषये नित्यं स्त्रियां ङीष् प्रत्ययो भवति । बह्वीषु हित्वा प्रपिबन् । बह्वी नाम औषधी भवति । नित्यग्रहणमुत्तरार्थम् ।।**

## १२९७. भुवश्च ।। ४७ ।। ( ३४४७ )

**छन्दसि विषये स्त्रियां भुवो नित्यं ङीष् प्रत्ययो भवति । विभ्वी ( ऋ० ५.३८.१ ) च । प्रभ्वी ( ऋ० १.१८८.५ ) च । सम्भ्वी च । इह कस्मान्न भवति – स्वयंभूः ? 'उतः' ( ४.१.४४ ) इति तपरकरणमनुवर्तते, ह्रस्वादेवेयं पञ्चमी । 'भुवः' इति सौत्रो निर्देशः ।।**

### न्यासः

**नित्यं छन्दसि ।।** अथ नित्यग्रहणं किमर्थम्, यावता पूर्वेणैव सिद्धे विकल्पे सत्यारम्भसामर्थ्यादेव नित्यं भविष्यति ? इत्यत आह—**नित्यग्रहणमुत्तरार्थमिति** ।। ४६ ।।

**भुवश्च ।। प्रभ्वीत्यादि ।** 'भुवः संज्ञान्तरयोः' इत्यतः 'भुवः' इत्यनुवर्तमाने 'विप्रशंभ्यो ड्वसंज्ञायाम्' इति डुप्रत्ययः, तदन्ताद् ङीष् । **स्वयम्भूरिति** । भवतेः क्विबन्तस्य रूपम् । ननु च 'भुवः' इति भूशब्दाद्दीर्घादियं पञ्चमी, ततश्च दीर्घादेव प्रत्ययेन भवितव्यम्, न ह्रस्वादित्यत आह—**ह्रस्वादेवेयं पञ्चमीति** । तर्हि 'भुवः' इति निर्देशो नोपपद्यते, 'घेर्ङिति' इति गुणे कृते 'भोः' इति निर्देशेन भवितव्यम् ? इत्यत आह—**सौत्रो निर्देश इति** । छन्दसि वर्णव्यत्यय उक्तः । तेन तस्य गुणेऽकृत उवङादेशः कृत इति दर्शयति ।। ४७ ।।

### पदमञ्जरी

**नित्यं छन्दसि ।। नित्यग्रहणमुत्तरार्थमिति** । इह त्वारम्भसामर्थ्यादेव नित्यो विधिः सिद्धः, योगारम्भश्चिन्त्यप्रयोजनः ।। ४६ ।।

**भुवश्च ।। विभ्वी, प्रभ्वीति** । 'विप्रसंभ्यो ड्वसंज्ञायाम्' इति डुप्रत्ययान्ताद् ङीष् । **स्वयंभूरिति** । भवतेः क्विप् ।

**ह्रस्वादेवेयमिति** । यद्येवं 'घेर्ङिति' इति गुणे कृते 'भोः' इति निर्देशः प्राप्नोति तत्राह—**सौत्रोऽयं निर्देश इति** । गुणस्यैव कृतस्य छान्दस उवङादेश इत्यर्थः ।। ४७ ।।

### भावबोधिनी

वेदविषय में स्त्रीलिङ्ग में बहु आदि शब्दों से नित्य ङीष् प्रत्यय होता है । उदा०—बह्वीषु हित्वा प्रपिबन् । [ बहु + ङीष् = ई, यण्, सप्तमी बहुवचन का रूप है । ] बह्वी नाम औषधी भवति ।

नित्य—का ग्रहण अगले सूत्र में अनुवृत्ति के लिये है ।। ४६ ।।

वेदविषय में स्त्रीलिङ्ग में भू शब्द से नित्य ङीष् प्रत्यय होता है । उदा०—विभ्वी च । प्रभ्वी च । सम्भ्वी च ।

[ 'वि-प्र-सम्भ्यो ड्वसंज्ञायाम्' ३।२।१८० सूत्र से वि, प्र और सम्—उपसर्ग पूर्वक √भू से संज्ञा अर्थ में डु प्रत्यय होता है, डित् होने से ऊ का लोप होता है । विभु + ङीष् = ई, प्रभु + ङीष् + ई, सम्भु + ङीष्, उकार का यण् वकार होने पर उक्त रूप सिद्ध होते हैं । ]

'स्वयम्भूः'—इसमें ङीष् क्यों नहीं होता है ? "वोतो गुणवचनात्" ४।१।४४ के 'उतः' इस तपरकरण [ एकमात्रिक ] की यहाँ अनुवृत्ति होती है । ह्रस्व उकारान्त से ही यहाँ सूत्र में पञ्चमी है । [ यदि ह्रस्व उकारान्त 'भु' का अनुकरण है तो घिसंज्ञा होने से 'घेर्ङिति' ७।३।१११ से गुण होकर 'भोः' यह सूत्र होना चाहिये ? ] 'भुवः' यह सौत्रनिर्देश है । [ छन्दोवत् सूत्राणि भवन्ति—इस नियम से वेदतुल्य मानकर सूत्र में व्यत्यय होने से गुण न करके उवङ् आदेश कर दिया गया है । ] ।। ४७ ।।

## १२९८. पुंयोगादाख्यायाम् ॥ ४८ ॥ ( ५०४ )

**पुंसा योगः = पुंयोगः । पुंयोगाद्धेतोर्यत् प्रातिपदिकं स्त्रियां वर्तते पुंस आख्याभूतं तस्माद् ङीष् प्रत्ययो भवति । गणकस्य स्त्री गणकी । महामात्री । प्रष्ठी । प्रचरी । पुंसि शब्दप्रवृत्तिनिमित्तस्य सम्भवात् पुंशब्दा एते, तद्योगात् स्त्रियां वर्तन्ते ।**

न्यासः

**पुंयोगादाख्यायाम् ॥ पुंयोगादिति ।** 'विभाषा गुणेऽस्त्रियाम्' इति हेतौ पञ्चमी । योगः = सम्बन्धः । **आख्यायामिति ।** पञ्चम्यर्थ एषा 'व्यत्ययो बहुलम्' इति सप्तमी । आख्यायतेऽनया प्रातिपदिकार्थं इति श्रुत्याख्या । **पुंस आख्याभूतमिति ।** पुंसो वाचकभूतमित्यर्थः । तद्धि पुंयोगाद्धेतोः सम्प्रति स्त्रियां वर्तते, न पुंसि । अतीत एव काले पुंसो वाचकमासीत्, अतो भूतग्रहणम् । एतदुक्तं भवति—यत् प्रातिपदिकं प्राक् पुंसो वाचकमभूत्, पश्चात्तु पुंयोगाद्धेतोः स्त्रियां वर्तते तस्मान् ङीष्भवतीति । कथं पुनर्योगे गुणभावमापन्नस्य पुंस आख्याग्रहणं विशेषणं युज्यते, स्त्रियामित्यनुवृत्तेः स्त्रिया एव ? नैतदस्ति; यो हि पुंयोगात् स्त्रियां वर्तते सोऽवश्यं स्त्रियमाचष्ट इति विशेषणमिदमनर्थकमेव स्यात् । पुंयोगस्य तर्हीदं विशेषणम् ? न; असम्भवात् । न सम्भवत्येव हि तत् प्रातिपदिकं यत् पुंयोगाद्धेतोः पूर्वं स्त्रियां वर्तते, पुंयोगस्य चाख्याभूतं भवति । गणकादयो हि ये शब्दाः पुंयोगात् स्त्रियां वर्तन्ते ते सर्वे पुंस एव वाचकाः प्रागभूवन्, न पुंयोगस्य । ये तु पुंयोगादयः शब्दाः पुंयोगस्य वाचकाः, ते पुंयोगात् स्त्रियां न वर्तन्त एव । न चेह कश्चित् तथाविधोऽन्यः प्रकृतः, नापि श्रूयते, यस्याख्याग्रहणेन सम्बन्धः स्यात् । तस्माद् गुणभूतस्यापि पुंस एवानेन सम्बन्धो विज्ञायते । **गणकीत्यादि ।** गणयतीति गणकः, ण्वुल् । प्रतिष्ठत इति प्रष्ठः, 'आतश्चोपसर्गे' इति कः । 'प्रष्ठोऽग्रगामिनि' इति निपातनान् मूर्धन्यः । सर्वे एते पुंसो वाचकाः । पुंयोगात्तु यदोत्तरकालं स्त्रियां वर्तन्ते तदैतेभ्यो ङीष् । **पुंसि शब्दप्रवृत्तिनिमित्तस्य**

पदमञ्जरी

**पुंयोगादाख्यायाम् ॥ पुंसा योगः पुंयोग इति ।** योगः = सम्बन्धः । **पुंयोगाद्धेतोरिति ।** हेतौ पञ्चमी दर्शयति । आख्याग्रहणं गुणभूतेनापि पुंसैव सम्बध्यते; अन्येन सम्बन्धासम्भवात् । गणकादयो हि शब्दाः पुंयोगात्स्त्रियां वर्तमाना न पुंयोगस्याख्या भवन्ति, स्त्रियां च पुंयोगमन्तरेण न प्रवर्तन्ते इति स्त्रिया अपि नाख्यास्तदाह—**पुंस आख्याभूतमिति ।** भूतग्रहणेनैतद्दर्शयति – यत्प्रातिपदिकं प्राक् पुंसो वाचकमभूत्, सम्प्रति तु पुंयोगाद्धेतोः स्त्रियां वर्तत इति । **गणकीत्यादि ।** गणयतीति गणकः, ण्वुल् । प्रतिष्ठते प्रष्ठः, 'प्रष्ठोऽग्रगामिनि' इति षत्वम् । कथं पुनरेते पुंशब्दाः ? इत्यत आह—**पुंसि शब्दप्रवृत्तिनिमित्तस्य सम्भवादिति । गणयति प्रतिष्ठत** इति व्युत्पत्त्या पुंसि रूढा एते, न स्त्री गणयति प्रतिष्ठते वा । महामात्रशब्दस्यापि प्रवृत्तिनिमित्तं हस्तिपकानामाज्ञापनम् । हस्तिपकाधिपतिर्हि महामात्रः । या तु स्वयं गणयति प्रतिष्ठते वा, न तस्यां पुंयोगाच्छब्दप्रवृत्तिः, अपि तर्हि स्वयमेव क्रियासम्बन्धादिति टापेव तत्र भाव्यम् । कथं तर्हि स्त्रियां

भावबोधिनी

पुरुष के साथ सम्बन्ध = पुंयोग । पुरुष के साथ सम्बन्ध रहने के कारण जो प्रातिपदिक स्त्री अर्थ में विद्यमान है, स्त्री अर्थ को कहता है, पुरुष का आख्याभूत = कहने वाले उस प्रातिपदिक से ङीष् प्रत्यय होता है । उदा०—गणकस्य स्त्री – गणकी । [ गणक = गणना करने वाले ज्योतिषी आदि पुरुष का सम्बन्ध रहने के कारण उसकी स्त्री भी उस अर्थ को कहने लगती है । अतः पुरुषवाचक गणक शब्द से ङीष् हो जाता है । ] महामात्री । [ प्रधान महावत की पत्नी । यहाँ महामात्र = हस्तिपकों का अधिपति पुरुष ही होता है । उसके सम्बन्ध से स्त्री को भी कहा जाता है । अतः पुरुषवाचक महामात्र से ङीष् होता है । ] प्रष्ठी [ प्रतिष्ठते इति—विग्रह में 'आतश्चोपसर्गे कः' ३।१।१३६ से क = अ प्रत्यय आलोप, 'प्रष्ठोऽग्रगामिनि' ८।३।९२ से मूर्धन्यादेश । आगे चलने वाला नायक पुरुष ही होता है । उसके सम्बन्ध से स्त्री को कहा जाता है । अतः ङीष् होता है । ] प्रचरी । [ प्रकृष्ट रूप से चलने वाले पुरुष की स्त्री ] । पुरुष अर्थ में शब्द-

**न्यासः**

**सम्भवादिति** । गणनादिक्रियास्वभावं यद् गणकादिशब्दानां प्रवृत्तिनिमित्तं तस्य पुंसि सम्भवः न स्त्रियाम्, नापि नपुंसके । तस्मात् पुंसि शब्दा एते । पुंसो वाचका एते शब्दा इत्यर्थः । कथं तर्हि स्त्रियां वर्तन्ते ? इत्याह—**तद्योगादित्यादि** । तद्योगः = तस्यायमिति सम्बन्धः, स्वस्वामिभावलक्षणः । तस्मादेते पुंशब्दा अपि स्वभावतः स्त्रियां वर्तन्ते । यथैव ह्यसौ तद्योगात् स्त्रियां स्नानोद्वर्तनपरिषेकादीन् लभते तथा ताच्छब्द्यमपि ।

**पदमञ्जरी**

प्रवृत्तिरित्य आह—**तद्योगादिति** । कोऽर्थः ?

तस्येदमिति सम्बन्धादिति चेत्तद्धितो भवेत् ।
ङीषेव बाधकः स्याच्चेन्नित्यं बाधः प्रसज्यते ॥

गणकस्येयमिति भेदसम्बन्धे विवक्षिते 'तस्येदम्' इति तद्धितः प्राप्नोति । अथ नाप्राप्ते तद्धिते ङीषारभ्यमाणस्तस्य बाधक इत्युच्यते, कदाचिदपि तद्धितो न स्यात्, उभयमपि त्विष्यते—प्राष्ठी, प्रष्ठीति ? स्यान्मतमेतत्—'एतदेव ङीष्विधानं ज्ञापकम्—भेदविवक्षायामपि तद्धितमन्तरेण प्रष्ठादयः स्त्रियां वर्त्तते' इति । तेन 'न केवला प्रकृतिः प्रयोक्तव्या' इति नियमोऽत्र बाध्यते, सति हि तद्धिते प्राष्ठीत्यणि ङीबेव सिद्धः, तस्य चोदात्तनिवृत्तिस्वरेणोदात्तत्वमिति किं ङीष्विधानेनेति ? तन्न; येऽनीकारान्तास्तद्धिताः—भानोरियं भानवीयेति, तदर्थमेतत्स्यात् । एवं तर्ह्याख्याग्रहणं ज्ञापकम्-नात्र तद्धितोत्पत्तिरिति, न हि तद्धितान्तः प्रकृत्यर्थे पुंसि वर्तते ? एवमपि ज्ञापकेन तद्धितस्य नित्यं बाधात्प्राष्ठीति न स्यात् । तस्माद् दुष्ट एवायं पक्षः ।

एवं तर्हि यथा—मञ्चाः क्रोशन्ति, गौर्वाहीकः, गङ्गायां घोषः, यष्टीः प्रवेशय-इत्यादौ तात्स्थ्यात्ताद्धर्म्यात्-तत्सामीप्यात्तत्साहचर्याच्चातस्मिन्नपि तत्त्वाध्यारोपेण तच्छब्दप्रवृत्तिस्तद्वदत्रापि प्रष्ठादिसाहचर्यात्तच्छब्द-प्रवृत्तिर्भविष्यति ? तत्राभेदेन भेदसम्बन्धस्य निवृत्तत्वान्न तद्धितप्रसङ्गः । विवक्षिते च भेदे तद्धितोत्पत्त्या प्राष्ठीत्यादि भविष्यति ? तत्राहुः—यस्त्वया धर्मश्चरितव्यः सोऽनया सहेति भार्यायाः शास्त्रसिद्धं साहचर्यमिति तस्यामेवैतन्ङीष्विधानमिति । **भट्टिकाव्ये** तु दुहितृष्वपि इष्टः प्रयोगः—'कौसल्ययाऽसावि सुखेन रामः प्राक्केकयीतो भरतस्ततोऽभूत्' ( १.१४ ) इति, केकयस्य दुहिता केकयी, जनपदशब्दादपत्यप्रत्यये तु कैकयीति प्राप्नोति, न च तस्य 'आतश्च' इति लुक् न प्राच्यभर्गादीति प्रतिषेधात्तत् । तस्मात्सोऽयमित्यभिसम्बन्ध इत्ययमेव पक्षो ग्राह्यः ।

यद्वा—यथा स्वामिदासौ पचत इति स्वामिनः संविधातृत्वात्पक्तृत्वम्, दासस्य तु साक्षात्; तथा पुरुषः साक्षात्प्रतिष्ठते स्त्र्यपि संविधातृत्वात् पुरुषगतायाः प्रस्थानक्रियायास्तस्यामारोपात् प्रतिष्ठत इति, तस्यामेव

**भावबोधिनी**

प्रवृत्तिनिमित्त सम्भव होने के कारण ये पुंशब्द है, अर्थात् गणक आदि शब्दों का प्रवृत्तिनिमित्त जो—गणनादि क्रिया-स्वभाव है, वह पुरुष में ही सम्भव है, स्त्री में नहीं । अतः ये सभी शब्द पुम्वाचक है । इनकी स्त्री होने के कारण स्त्रियों के लिए भी उक्त शब्दों का प्रयोग होता है । [ उसी में यह सूत्र ङीष् करता है । ]

पुंयोग = पुरुष के साथ सम्बन्ध के कारण—इसके ग्रहण का क्या लाभ है ? देवदत्ता । यज्ञदत्ता । [ इनमें देवदत्त और यज्ञदत्त नामक पुरुषों के सम्बन्ध से उन अर्थों के वाचक नहीं है । स्वतः इनके नाम हैं । अतः पुंयोग न होने से ङीष् नहीं होता है । ] आख्याग्रहण [ आख्यायते = बोध्यतेऽनया—इस व्युत्पत्ति के अनुसार आख्या शब्द बोधकपरक है और विभक्तिव्यत्यय से पञ्चमी में सप्तमी हुयी हैं । इसलिये आख्यायाम् का अर्थ है—बोधकात् । पुंसः आख्याभूतम् = पुंसः वाचकभूतम्, तस्मात् प्रातिपदिकात् ]—इसका क्या प्रयोजन है ? परिसृष्टा । प्रजाता । [ दोनों का अर्थ है—प्रसूता । किसी स्त्री का यह नाम है । पुरुष के साथ सम्बन्ध होने के कारण उक्त दोनों शब्द स्त्री अर्थ में विद्यमान हैं [ क्योंकि पुरुष के साथ स्त्री का सम्बन्ध होने पर ही प्रसव होता है । स्वतः नहीं होता । अतः पुरुषसम्बन्ध से ये स्त्री अर्थ के

**पुंयोगादिति किम् ? देवदत्ता । यज्ञदत्ता । आख्याग्रहणं किम् ? परिसृष्टा । प्रजाता । पुंयोगादेते शब्दाः स्त्रियां वर्तन्ते, न तु पुमांसमाचक्षते । ❀ गोपालिकादीनां प्रतिषेधः ❀ (म० भा० ४.१.४८ वा० १) । गोपालकस्य स्त्री गोपालिका ।**

**❀ सूर्याद् देवतायां चाब्वक्तव्यः ❀ ( म० भा० ४.१.४७ ) । सूर्यस्य स्त्री देवता सूर्या । देवतायामिति किम् ? सूरी ।।**

न्यासः

**देवदत्तेति** । अत्र देवदत्तशब्दसंज्ञकेन पुरुषेण योगाद् देवदत्तशब्दः स्त्रियां न वर्तते । किं तर्हि ? स्वत एव, तस्या हीयं संज्ञा कृता । **परिसृष्टा, प्रजातेति** । प्रसूतेत्यर्थः । निर्लुठितगर्भेति यावत् । परिसृष्टप्रजातशब्दौ स्त्रियां वर्तमानौ प्रसवनिमित्तमुपादाय प्रवर्तेते । परिसर्गः, प्रजनः, प्रसव इत्येकार्था एते शब्दाः । तस्य च प्रसवस्य पुंयोगो निमित्तम्; तेन विना तदभावात् । तस्मात् पुंयोगाद्धेतोः स्त्रियां वर्तेते इति । न तु पुंशब्दाख्य इति ईकारो न भवतीति । **एते शब्दा इति** । बहुवचनं येऽन्येऽप्येवंजातीयाः शब्दास्तानपेक्ष्य वेदितव्यम्; अन्यथा हि परिसृष्टप्रजातशब्दयोर्द्वित्वादेतौ शब्दाविति वक्तव्यं स्यात् ।

* **गोपालिकादीनां प्रतिषेधो वक्तव्य इति** । सिद्धये इति वाक्यशेषः । गोपालिकादीनां शब्दानां सिद्धये ङीष्प्रतिषेधः । स तु 'वोतो गुणवचनात्' इत्यतो वेत्यनुवृत्तेस्तस्य व्यवस्थितविभाषात्वमाश्रित्य प्रतिपाद्यः ।

**सूर्याद् देवतायां चाब्वक्तव्य इति** । ननु च ङीष एव प्रतिषेधो वक्तव्यः, ङीषि प्रतिषिद्धे टाब् भविष्यति, टापि च सूर्येति सिध्यत्येव ? नैतदेवम्; यद्यपि हि रूपं सिध्यति, स्वरस्तु न सिध्यति, यस्मात् सूर्यशब्दोऽय-माद्युदात्तः । तथा हि 'राजसूयसूर्य' इत्यत्र क्यबन्तो निपातितः, ततः क्यपः पित्वादनुदात्तत्वम् । धातोस्तु सुवतेः सर्तेर्वा धातुस्वरेणान्तोदात्तत्वम् । तत्र टापि सत्यनुदात्तत्वं स्यात्, चापि तु सत्यन्तोदात्तता भवति । पित्करणं तु 'ङ्याप्प्रातिपदिकात्' इत्यत्र सामान्यग्रहणार्थम् । **सूरीति** । सूर्यस्य स्त्री मानुषी सूरी, ङीषेव भवति, 'सूर्यतिष्यागस्त्यमत्स्यानाम्' इति यलोपः ।। ४८ ।।

पदमञ्जरी

प्रष्ठशब्दो व्युत्पाद्यते, न तु पुरुषे व्युत्पादितः सन् तेन सहाभेदोपचारात्तस्यां वर्त्तते । न चैतावता पुंयोगादेव हेतोः स्त्रियां वर्तत इत्यस्य हानिः, साक्षात्स्वयमकर्तृत्वात् । अत्र पक्षे प्रस्थ इति स्थिते सुबन्तस्य समासः, सुप् च संख्यानिमित्तम्, प्रातिपदिकं च पूर्वं लिङ्गमभिधत्ते, पश्चात्सङ्ख्यामिति तन्निमित्तसुबपेक्षात्समासा-त्प्रागेवोत्तरपदात्स्थशब्दाट्टाप्प्रसङ्गः, न च स्थशब्दादप्यनेनैव ङीष् लभ्यते, प्रष्ठशब्दो हि पुंस आख्या, न तु स्थशब्दमात्रम् ? नैष दोषः; 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति कृदन्तावस्थाया-मेव समासः, सा पुंस आख्येति ङीष् भविष्यति । परिभाषाप्रयोजनानि 'उपपदमतिङ्' इत्यत्र प्रतिपादितानि ।

**देवदत्तेति** । स्त्रिया एव कस्याश्चिदेषा संज्ञा—**परिसृष्टा, प्रजातेति** । प्रसूतेत्यर्थः । **पुंयोगादेते शब्दाः स्त्रियां वर्तन्त इति** । परिसर्गः, प्रसवः, प्रजन इत्यर्थान्तरम् । स च न पुंयोगमन्तरेण सम्भवति, तस्मात् पुंयोगाद्धेतोः स्त्रियां वर्तते । **परिसृष्टा प्रजातेति** । द्वौ प्रकृतौ । **एते शब्दा इति** बहुवचनं तु एवंजातीयकाः शब्दाः प्रसूतादयस्तदपेक्षं द्रष्टव्यम् । **गोपालिकादीनामिति** । सिद्धये इति शेषः ।

**सूर्याद्देवतायां चाब्वक्तव्य इति** । ङीष एव प्रतिषेधे वक्तव्ये चाब्विधानमन्तोदात्तार्थम् । सूर्यशब्दोऽय-माद्युदात्तः, तत्र टापि सति आद्युदात्तत्वमेवावतिष्ठेत । **सूरीति** । सूर्यस्य स्त्री मानुषी कुन्त्यादिः, 'सूर्यतिष्य' इति यलोपः ।। ४८ ।।

भावबोधिनी

वाचक होते हैं ] किन्तु पुमाख्या = पुरुष अर्थ को कहने वाले नहीं हैं । [ क्योंकि पुरुष का प्रसव नहीं होता है । अतः इनसे ङीष् नहीं होता है । मूल में उदाहरण के दो शब्द हैं और एते......वर्तन्ते—यह बहुवचन है । इनका सम्बन्ध उपपन्न करने

**१२९९. इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ॥ ४९ ॥ ( ८०८)**

**इन्द्रादिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीष् प्रत्ययो भवति, आनुक्चागमः। येषामत्र पुंयोग एवेष्यते तेषामानुगागममात्रं विधीयते, प्रत्ययस्तु पूर्वेणैव सिद्धः। अन्येषां तूभयं विधीयते। इन्द्राणी। वरुणानी। भवानी। शर्वाणी। रुद्राणी। मृडानी।**

**न्यासः**

**इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ॥ येषामिति।** इन्द्रादीनाम्। **अन्येषां त्विति।** हिमादीनाम्। अथ किमर्थमानुक् क्रियते, अनुगेव नोच्येत, तेन सवर्णदीर्घत्वेन सिध्यति ? न सिध्यति; 'अतो गुणे' इति पररूपत्वं हि प्राप्नोति। अकारोच्चारणसामर्थ्यान्न भविष्यति, पररूपे हि नुगेव वक्तव्यः स्यात्। एवं तर्ह्यकारोच्चारणसामर्थ्याद् भविष्यति। स्वरसन्धिरेव न भवतीत्येवमपि विज्ञायते। तस्मान् मैवं विज्ञायीत्यानुगेव वक्तव्यः। अथ वा—इन्द्रमाचष्ट इति 'तत्करोति तदाचष्टे' इति णिचि 'णाविष्ठवत् प्रातिपदिकस्य' इति टिलोपः, इन्द्रयतेः क्विप्, णिलोपः, इन्द्रः[1] स्त्रीन्द्राणीत्यत्र दीर्घस्याकारस्य श्रवणं यथा स्यादित्येवमर्थं-मानुको विधानम्। अनुकि हि सति दीर्घो न श्रूयेत। ननु च नैवात्र ङीषा भवितव्यम्, अत इत्यधिकारात् ? दीर्घोच्चारणसामर्थ्याद् भविष्यति।

**पदमञ्जरी**

**इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ॥ येषामिति।** इन्द्रादीनां मृडान्तानां मातुलाचार्ययोश्च। **अन्येषामिति।** हिमादीनाम्।

**भावबोधिनी**

के लिये—और भी इस प्रकार के जो शब्द होते हैं—उन्हें मान लेना चाहिये। ] * 'गोपालिका आदि का प्रतिषध कहना चाहिये।' * गोपालक की स्त्री—गोपालिका। [ यहाँ ङीष् का निषेध करने पर टाप् होता है। ]

* 'सूर्य शब्द से देवता अर्थ में चाप् प्रत्यय होता है।' सूर्यस्य स्त्री देवता—सूर्या [ सूर्य + चाप् = आ ] देवता अर्थ में—इसका फल है ? सूरी [ सूर्यस्य स्त्री मानुषी—इस विग्रह में ङीष् होने पर सूर्य + ङीष् = ई, अलोप 'सूर्य-तिष्यागस्त्य' ६।४।१४९ से य् लोप होने पर—सूरी बनता है। यह कुन्ती का नाम है। सूर्य से कर्ण का जन्म होने से कुन्ती मानुषी स्त्री है। ] ॥ ४८ ॥

इन्द्र आदि [ बारह ] प्रातिपदिक शब्दों से स्त्रीलिङ्ग में ङीष् प्रत्यय होता है और इन शब्दों को आनुक् आगम भी होता है। इनमें पुंयोग ही इष्ट है। उनको केवल आनुक् आगम किया जाता है, ङीष् प्रत्यय तो पूर्ववर्त्ती सूत्र से ही सिद्ध है। अन्य के लिये आनुक् और ङीष् दोनों का विधान है। [ इन्द्र आदि छह और मातुल तथा आचार्य—इन आठ से पूर्वसूत्र से सिद्ध ङीष् का अनुवाद करके केवल आनुक् का विधान है। हिम, यव, यवन, अरण्य—इनसे आनुक् और ङीष् दोनों का विधान है। ] उदा०—इन्द्राणी [ इन्द्रस्य स्त्री विग्रह में इन्द्र + आनुक् = आन् + ङीष् = ई, न् का णत्व। ] वरुणानी [ वरुण + आनुक् + ङीष्। वरुण की स्त्री ] भवानी [ भव = शंकर की स्त्री ]। शर्वाणी [ शर्व = शंकर की स्त्री ]। रुद्राणी [ रुद्र = शंकर की स्त्री ]। मृडानी [ मृड = शंकर की स्त्री ]।

* हिम और अरण्य—इनसे महत्त्व = अधिक्य = घनापन अर्थ में ङीष् और आनुक् होते।' * उदा०—महद् हिमम्—हिमानी [ बहुत अधिक बर्फ ]। महत् अरण्यम्—अरण्यानी [ घना विशाल जंगल ]। * 'दोष अर्थ में यव से होते हैं। * दुष्टः यवः—यवानी [खराब जौं]। * यवन से लिपि अर्थ में होते हैं।' * यवनानां लिपिः—यवनानी [यवनों की लिपि, अरबी, फारसी, आदि ]। * उपाध्याय और मातुल से विकल्प से होते हैं। * उध्यायानी, उपाध्यायी। ङीष् और

---

१. इन्द्रः स्त्रीत्यत्रेन्द्र इति षष्ठ्यन्तं पदम्, इन्द्रिति रेफान्तात् प्रातिपदिकात् प्रथमैकवचनेऽपीन्द्रिति रेफान्तमेव पदम्; 'संयोगान्तस्य लोपे यणः प्रतिषेधः' इति रेफलोपाभावात्।

**❀ हिमारण्ययोर्महत्त्वे ❀ ( म० भा० ४.१.४९ वा० १ ) महद्धिमं हिमानी । महदरण्यमरण्यानी । ❀ यवाद्दोषे ❀ ( वा० २ ) । दुष्टो यवो यवानी । ❀ यवनाल्लिप्याम् ❀ ( वा० ३ ) । यवनानी लिपिः । ❀ उपाध्यायमातुलाभ्यां वा ❀ ( वा० ४ ) । उपाध्यायी, उपाध्यायानी । मातुली । मातुलानी । ❀ आचार्या-दणत्वं च ❀ ( वा० ६ ) । आचार्यानी । आचार्या ।**

**❀ अर्यक्षत्त्रियाभ्यां वा ❀ ( वा० ७ ) । अर्याणी, अर्या । क्षत्त्रियाणी, क्षत्त्रिया । विना पुंयोगेन स्वार्थ एवायं विधिः । पुंयोगे तु ङीषैव भवितव्यम्—अर्यी, क्षत्त्रियी ।**

न्यासः

**हिमारण्ययोर्महत्त्व इति** । महत्त्वेन युक्ता हिमादयः स्त्रीलिङ्गेनाभिसम्बध्यन्ते यदा, तदा स्त्रीत्वविवक्षायामनयोः प्रत्ययागमयोर्विधानमित्येतदनेनाख्यायते, न तु स्त्रीप्रत्ययस्यायमपवाद उच्यते । स्त्रीत्व एव हि प्रत्ययो भवति । **यवाद् दोष इति** । यवाद् दोषे गम्यमाने स्त्रियां ङीष् भवति—दुष्टो यवो यवानी । **यवनाल्लिप्यामिति** । **यवनानां लिपिरिति** । 'तस्येदम्' इत्यणप्रसङ्गे ङीष् विधीयते, स तु तदर्थस्य ङीषैव द्योतितत्वान्न भवति । **आचार्यादणत्वञ्चेति** । नेदमपूर्वं वक्तव्यम्, क्षुभ्नादिष्वस्य पाठात् ।

**स्वार्थ एवायं विधिरिति** । एवकारेण पुंयोगो व्यवच्छिद्यते । यदि हि पुंयोगे विधिरयं स्यात् शूद्राऽपि क्षत्त्रियस्य भार्या क्षत्त्रियाणीति स्यात् । तस्मात् स्वार्थे एवायं विधिः--क्षत्त्रियैव क्षत्त्रियाणीति । **पुंयोगे तु ङीषैव भवितव्यमिति** । पूर्वसूत्रेण ।

पदमञ्जरी

**हिमारण्ययोर्महत्त्व इति** । महत्त्वयोगेनानयोः स्त्रीत्वम्, अन्यत्र नपुंसकत्वम् । **दुष्टो यव** इति पाठः । **यवानीति** । जात्यन्तरमेवाभिधीयते, अयमेव च दोषो यदुत यवत्वजातेरभावे तदाकारानुकृतिः । **यवनाल्लिप्यामिति** । केचिज्जनपदिनो यवनास्तेषां लिपिः, 'तस्येदम्' इत्यणो बाधको ङीष् । लिपिशब्दः स्त्रीलिङ्गः । **उपाध्यायमातुलाभ्यां वेति** । उपाध्यायमातुलाभ्यां यो ङीष् तत्सन्नियोगेनानयोर्वाऽऽनुगागमो भवतीति वक्तव्यमित्यर्थः । तत्रोपाध्यायस्याप्राप्तो मातुलस्य तु नित्यं प्राप्त आनुग्विकल्प्यते । **आचार्यादणत्वं चेति** । क्षुभ्नादिषु पठितव्यमित्युक्तं भवति ।

**अर्यक्षत्त्रियाभ्यां वेति** । ङीषानुकौ द्वावप्यप्राप्तौ विकल्प्येते । **स्वार्थ एवायं विधिरिति** । यदि तु पुंयोगेऽयं विधिः स्याच्छूद्रापि क्षत्त्रियस्य भार्या क्षत्त्रियाणी स्यात्, ब्राह्मणभार्या च क्षत्त्रियाणी न स्यात् । तस्मात्स्वार्थ एव स्त्रीत्वविशिष्टोऽयं विधिः ।

भावबोधिनी

आनुक् न होने पर पूर्व सूत्र से केवल ङीष् होता है । ] मातुलानी, मातुली । [ मामा की स्त्री = मामी । आनुक् और ङीष् के अभाव—पक्ष में पूर्व सूत्र से ङीष् ] । * आचार्य से णत्वाभाव भी होता है । आचार्यानी, आचार्या [ पुंयोग में—आचार्यस्य स्त्री—अर्थ में ये दोनों होते हैं । किन्तु जो स्वयं व्याख्यात्री है उसमें केवल आचार्या—एक ही रूप होता है । ] * 'अर्य और क्षत्त्रिय से विकल्प से होते हैं ।' अर्याणी, अर्या, [ यहाँ स्वामिनी अथवा वैश्या अर्थ है ] क्षत्त्रियाणी, क्षत्त्रिया इनमें पुंयोग = पुरुषसम्बन्ध के विना अर्थात् [ अर्य की स्त्री, क्षत्त्रिय की स्त्री इनके विना ] स्वार्थ में ही ये प्रत्यय—आगम होते हैं । यदि पुंयोग है [ अर्यस्य स्त्री, क्षत्त्रियस्य स्त्री ] तो [ पूर्व सूत्र से ] ङीष् ही होता है—अर्यी, क्षत्त्रियी [ अर्य = वैश्य की स्त्री, क्षत्त्रिय की स्त्री ] । * वेद में मुद्गल शब्द से ये दोनों होते हैं और लित् माने जाते हैं ।' रथीरभूत मुद्गलानी गविष्टौ [ऋ १०।१०२।२] मुद्गल + आनुक् = आन् + ङीष् = ई—मुद्गलानी । [यहाँ आन् लित् है अतः मध्यवर्ती

❀ मुद्गलाच्छन्दसि लिच्च ❀ ( वा० ५ )। रथीरभून्मुद्गलानी गविष्टौ ( ऋ० १०.१०२.२ )।

## १३००. क्रीतात् करणपूर्वात् ॥ ५० ॥ ( ५०६ )

**करणं पूर्वमस्मिन्निति करणपूर्वं प्रातिपदिकम्। क्रीतशब्दान्तात् प्रातिपदिकात् करणपूर्वात्स्त्रियां ङीष्**

### न्यासः

**लिच्चेति**। कस्य तल्लित्त्वम् ? आनुकः। तथा हि—मुद्गलानीशब्दस्य द्वितीय उदात्त आम्नाये पठ्यते। ङीषस्तु लित्वे तृतीय उदात्तः स्यात्[1] ॥ ४९ ॥

**क्रीतात् करणपूर्वात्**॥ करणं पूर्वं यस्मिन्नित्यादिना करणपूर्वग्रहणं क्रीतग्रहणञ्च उभयमप्येतत्प्रातिपदिकस्य विशेषणमिति दर्शयति। पूर्वशब्दोऽयमवयववचनः। करणमवयवो यस्मिन्नित्यर्थः। अथ क्रीतशब्दस्यैव करणपूर्वग्रहणं विशेषणं कस्मान्न विज्ञायते? अशक्यत्वात्। क्रीतशब्दो ह्यवयववाचिनं वा पूर्वशब्दं गृहीत्वा विशेष्येत—करणं पूर्वमस्मिन्निति? व्यवस्थाशब्दं वा--**करणं पूर्वमस्मादिति**? तत्र प्रथमः पक्षो न

### पदमञ्जरी

**मुद्गलादिति**। ङीषो लित्वादानुगाकारस्य लित्स्वरः। अथ किमर्थमानुग्विधीयते, न अनुगेवोच्येत, अकारोच्चारणसामर्थ्यादतो गुणे पररूपं बाधित्वा सवर्णदीर्घत्वं भविष्यति, अन्यथा नुगेवोच्येत, यथैव तर्हि पररूपं न भवति तथैव सवर्णदीर्घत्वमपि न स्यात्? नैष दोषः; यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते, तस्मादानुगेव वक्तव्यः।

अपर आह—'इन्द्रमाचष्टे इन्द्रयति, इन्द्रयतेः क्विप्, णिलोपः, इन्द्रः स्त्री इन्द्राणी, अत्र दीर्घस्य श्रवणम्, दीर्घोच्चारणसामर्थ्यादत इत्यधिकारो बाध्यते' इति, एवमपि क्विबन्तः पुंस आख्या न भवति ॥४९॥

**क्रीतात् करणपूर्वात्**॥ पूर्वशब्दोऽवयववचन इत्याह—**करणं पूर्वमस्मिन्नित्यादि**। व्यवस्थावाचिनि तु पूर्वशब्दे करणं पूर्वमस्मादिति वाच्यं स्यात्। एवं च क्रीतस्य करणवाचिशब्दान्तरमवयवो नोपपद्यत इति तद्व्यतिरिक्तमेव प्रातिपदिकं करणपूर्वत्वेन विशेष्यते, क्रीतशब्देनापि विशेषितस्यैव विशेषणात्तदन्तविधिरित्याह—**क्रीतशब्दान्तात्प्रातिपदिकादिति**। यदि तु व्यवस्थावाचिनं पूर्वशब्दमाश्रित्य क्रीतशब्दो विशेष्यते—करणं

### भावबोधिनी

आकार उदात्त होता है। ङीष् यदि लित् किया जाता तो ई उदात्त होने लगता। अतः लित् का सम्बन्ध आनुक् के साथ ही है। ऐसा सम्प्रदाय है ॥ ४९ ॥

करण [ =वाची शब्द ] है पूर्व में जिसके वह करणपूर्व प्रातिपदिक हैं। क्रीत शब्द जिसके अन्त में, करणवाची जिसके पूर्व में है—ऐसे प्रातिपदिक से स्त्रीलिङ्ग में ङीष् प्रत्यय होता है। उदा०—वस्त्रेण क्रीयते [ क्रीता ]—सा—वस्त्रक्रीती। वसनेन क्रीयते [ क्रीता ] वसनक्रीती। [ इनमें वस्त्रेण क्रीता यह विग्रह नहीं है। अपितु "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इस नियम में—वस्त्र टा कृत इस अवस्था में कृदन्त के साथ ही समास होता है उसके बाद विभक्तिलोप करने पर—वस्त्रक्रीत—यह करणपूर्व और क्रीत-शब्दान्त अकारान्त प्रातिपदिक मिलता है, तभी टाप् का बाध करके ङीष् होता है। वस्त्रेण क्रीता इस विग्रह में समास करने पर अकारान्त सम्भव न होने से ङीप् की प्राप्ति नहीं हो सकती। ] करणवाची पूर्व में हो—इसका क्या प्रयोजन है ? सुक्रीता दुष्क्रीता। [ यहाँ सु और दुस् ये गतिसंज्ञक पूर्व में हैं, अतः ङीष् न होकर टाप् होता है। अच्छी तरह खरीदी गयी। दुःख से खरीदी गयी। ]

---

१. "यत्तु न्यासकृतोक्तं मुद्गलानीशब्दे द्वितीय उदात्त इति तद्वेदवाह्यत्वप्रयुक्तमेव; 'लिति' इति प्रत्ययात् पूर्वस्य विधीयमानं सन्निहितमानुकं विहाय द्वितीये प्रवर्तत इत्यत्र बीजाभावात्, सकलवैदिकपाठविरोधाच्च" इति। तत्त्वं तु सम्प्रदायानुरोधिवैदिकपाठपर्यालोचनेनैव निश्चेयम्—इति प्रौढमनोरमायां भट्टोजिदीक्षितः।

प्रत्ययो भवति । वस्त्रेण क्रीयते सा वस्त्रक्रीती । वसनक्रीती । करणपूर्वादिति किम् ? सुक्रीता । दुष्क्रीता ।

**इह कस्मान्न भवति—**

**'सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी' इति ?**

**टाबन्तेन समासः, 'अत' इति चानुवर्तते । 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' ( म० भा० ४.१.४८ वा० ५ ) इति, बहुलं तदुच्यते – 'कर्तृकरणे कृता बहुलम्' ( २.१.३२ ) इति ॥**

**न्यासः**

सम्भवति; न ह्यत्र क्रीतशब्दस्य करणवाचिशब्दान्तरमवयव उपपद्यते, द्वितीयस्तु सम्भवति, किन्तु वाक्येऽपि स्यात्—अश्वेन क्रीतेति, अस्ति ह्यत्र क्रीतशब्दात् करणं पूर्वम् । प्रातिपदिके तु विशेष्यमाणे न भवत्येष दोषः । न ह्यश्वेन क्रीतेत्येतत् करणावयवं क्रीतशब्दान्तं प्रातिपदिकम् । किं तर्हि ? वाक्यम् । तस्मात् प्रकृतं प्रातिपदिकं सामान्यमेवावयववाचिना पूर्वशब्देन विशेष्यते । क्रीतशब्देनापि तदेव करणपूर्वं प्रातिपदिकम् । तेन तस्मिन् विशेष्यमाणे सामर्थ्यात् तदन्तविधिः प्रसज्येतेत्याह—**क्रीतशब्दात् प्रातिपदिकादिति । वस्त्रक्रीती, वसनक्रीतीति ।** अत्र 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति वस्त्रवसनयोः क्रीतशब्देन 'कर्तृकरणे कृता बहुलम्' इति प्रागेव सुबुत्पत्तेः समासः ।

**सुक्रीता, दुष्क्रीतेति** । गत्युपपदत्वात् प्रागेव सुबुत्पत्तेः 'कुगतिप्रादयः' इति समासः । दुष्क्रीतेत्यत्र 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वम् ।

**टाबन्तेन समास इति** । सुबन्तयोरेवेति वेदितव्यम् । टापि विहिते । कृदन्ततया विहतत्वात् । अत्र किं टाप् क्रियताम् ? उत विभक्तिरिति ? अन्तरङ्गत्वाट्टाप् । पश्चाद् बहिरङ्गा विभक्तिरिति विभक्त्यन्तयोः समासः । अन्तरङ्गत्वं बहिरङ्गत्वं तु टाब्विभक्त्योः 'ङ्याप्प्रातिपदिकात्' इत्यत्र प्रतिपादितम् । कृते तर्हि टापि ङीष् कस्मान्न भवतीत्याह—**अत इति चेत्यादि** । कथं पुनः टाबन्तेन समासः सिध्यति, यावता गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः इति प्रागेव कृदन्ततायां समासेन भवितव्यमित्यत आह—**गतिकारकोपपदानामित्यादि** । **कर्तृकरण इत्यादि** । 'कर्तृकरणे कृता बहुलम्' इत्यनेन हि गतिकारकोपपदानां कृद्भिः समासो विधीयते । स च बहुलग्रहणात् क्वचित् कृदन्तावस्थायां प्रागेव सुबुत्पत्तेः, क्वचिदन्यथा । तेन 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः, इति बहुलं तदाचार्यैरुच्यते । ततश्च टाबन्तेनापि क्वचित्समासो लभ्यत इत्यभिप्रायः ।। ५० ॥

**पदमञ्जरी**

पूर्वस्मादिति, ततो वाक्येऽपि स्याद्—अश्वेन क्रीतेति । तस्मादवयववाची पूर्वशब्दः, प्रातिपदिकं च विशेष्यमिति सम्यगुक्तम् । **वस्त्रक्रीतीति** । 'गतिकारकोपपदानाम्' इति वचनात् प्रागेव सुबुत्पत्तेः क्रीतशब्देन सह समासः ।

**टाबन्तेन समास इति** । एकादेशस्य पूर्वं प्रत्यन्तवत्त्वात्कृदन्तताया अविघातादविरुद्धष्टाबन्तेन समासः । अथ टाबन्तेनापि समासे कस्मादेवात्र न भवति ? तत्राह—**अत इतीति** । ननूदाहरणवत्प्रागेव टाबुत्पत्तेरत्रापि समासः प्राप्नोति, वक्तव्यो वा विशेषः ? अत आह—**गतिकारकोपपदानामित्यादि** । न तत्र बहुलग्रहणमस्तीति चेत्तत्राह—**कर्तृकरणे कृता बहुलमिति** । 'कर्तृकरणे कृता बहुलम्' इत्यनेन तावदत्र समासः, स च बहुलग्रहणात् प्राक् सुबुत्पत्तेः क्वचिद्भवति, क्वचिदुत्पन्ने सुपीति मन्यते । एतावतैव च **बहुलं तदुच्यते इति** सामान्येनोक्तम्, न पुनः 'कर्तृकरणे कृता बहुलम्' इत्ययमेव समासः प्राक् सुबुत्पत्तेरिष्यते । यथा तु भाष्यं तथा नैतदिष्यते ॥५०॥

**भावबोधिनी**

'उसकी वह धनक्रीता [ धन से खरीदी गयी ] स्त्री प्राणों से भी बढ़कर है ।' यहाँ [ धनक्रीता में ङीष् ] क्यों नहीं होता है ? [ क्रीत से टाप् करके ] क्रीता इस टाप्प्रत्ययान्त के साथ धनेन का समास है । [ धनक्रीता—यह आकारान्त

## १३०१. क्तादल्पाख्यायाम् ॥ ५१ ॥ ( ५०७ )

'करणपूर्वात्' इत्येव। करणपूर्वात् प्रातिपदिकात् क्तान्तादल्पाख्यायां ङीष् प्रत्ययो भवति। 'अल्पाख्यायाम्' इति समुदायोपाधिः। अभ्रविलिप्ती द्यौः। सूपविलिप्ती पात्री। अल्पसूपेत्यर्थः।

अल्पाख्यायामिति किम्? चन्दनानुलिप्ता ब्राह्मणी॥

## १३०२. बहुव्रीहेश्चान्तोदात्तात् ॥ ५२ ॥ ( ५०८ )

**न्यासः**

**क्तादल्पाख्यायाम्** ॥ **अभ्रविलिप्तीति**। 'लिप उपदेहे', अस्मात् क्तः। अल्पैरभ्रैर्विलिप्तेत्यस्यामर्थविवक्षायां पूर्ववत्प्राक्सुबुत्पत्तेः समासः। अल्पशब्दस्तु गतार्थत्वान्न प्रयुज्यते। **चन्दनानुलिप्तेति**। बहुचन्दनानुलिप्तेत्यर्थः॥५१॥

**बहुव्रीहेश्चान्तोदात्तात्** ॥ **शङ्खभिन्नीति**। 'रदाभ्याम्' इति नत्वम्। निष्ठान्तस्य 'निष्ठा' इति पूर्वनिपाते प्राप्ते 'जातिकालसुखादिभ्यः परवचनम्' इति स न भवति। शङ्खादिशब्दा हि जातिवचनाः। अत एव हि

**पदमञ्जरी**

**क्तादल्पाख्यायाम्** ॥ **अल्पाख्यायामिति समुदायोपाधिरिति**। ननु चाल्पैरभ्रैर्विलिप्तेति पूर्वपदार्थस्यैवाल्पता गम्यते, न विलिप्तार्थस्य? एवं मन्यते--अभ्राणामल्पत्वे सति तद्विलेपनस्याल्पत्वमवश्यम्भावीति। **अभ्रविलिप्तीति**। वृत्तौ गतार्थत्वादल्पशब्दस्याप्रयोगः।

**चन्दनानुलिप्तेति**। बहुलेन चन्दनेनानुलिप्तेत्यर्थः। कृद्ग्रहणपरिभाषया समुदायस्य क्तान्तत्वम्॥ ५१॥

**बहुव्रीहेश्चान्तोदात्तात्** ॥ **बहुव्रीहिर्योऽन्तोदात्त इति**। अत्र 'क्तात्' इत्यनुवृत्तिसामर्थ्यात् प्रत्ययग्रहणपरिभाषा, कृद्ग्रहणपरिभाषा च न प्रवर्तते इति बहुव्रीहेः क्तान्तत्वम्! **शङ्खभिन्नीति**। 'निष्ठा' इति पूर्वनिपातो

**भावबोधिनी**

हो जाता है और प्रस्तुत सूत्रों में "अजाद्यतष्टाप्" ४।१।४ से ] 'अतः' [ अकारान्त से ]—इसकी अनुवृत्ति होती है। [ अतः धनक्रीता में ङीष् की प्राप्ति नहीं है। परन्तु यहाँ पहले समास ही क्यों नहीं होता है? ] "गति, कारक और उपपदशब्दों का कृदन्त शब्दों के साथ समास सुप् प्रत्ययों की उत्पत्ति से पहले ही हो जाता है।' यह नियम बहुलरूप से होता है क्योंकि "कर्तृ-करणे कृता बहुलम्" २।१।३२ [ में बहुल का ग्रहण है। ] ॥ ५०॥

'करणपूर्वात्' इसकी अनुवृत्ति होती है। करणवाची पूर्व में है, क्तप्रत्ययान्त जिसके अन्त में है, ऐसे शब्द से, अल्पत्व द्योत्य रहने पर, ङीष् होता है। 'अल्पाख्यायाम्' [ अल्पवाचकता में ]—यह समुदाय की उपाधि है अर्थात् पूरे शब्द से अल्पत्व की प्रतीति होनी चाहिये। उदा०—अभ्रविलिप्ती द्यौः। [ अल्पैः अभ्रैः विलिप्ता—इस विवक्षा में सुबुत्पत्ति से पहले समास होता है अतः अभ्रविलिप्त से ङीष् होता है। अभ्र = मेघों की अल्पता से विलेपन की अल्पता स्वतः सिद्ध है। अतः समुदाय का अल्पत्व स्पष्ट है। ] सूपविलिप्ती पात्री [ अल्पेन सूपेन विलिप्ता—इस विवक्षा में पूर्ववत् पहले समास करके ङीष् होता है। सूप = दाल की अल्पता से विलेपन = उसके लगने की अल्पता होने से समुदाय की अल्पता है। ] अल्प सूप = दालवाली—यह अर्थ है। अल्पत्व का कथन हो—इसका क्या लाभ है? चन्दनानुलिप्ता ब्राह्मणी। [ खूब चन्दन लगाये हुये ब्राह्मणी। बहुलेन चन्दनेन लिप्ता—यह विवक्षा होने से ङीष् न होकर टाप् होता है। ] ॥ ५१॥

'क्तात्' इसकी अनुवृत्ति होती है। जो बहुव्रीहि अन्तोदात्त [ क्तान्त और अदन्त ] है उससे स्त्रीलिङ्ग में ङीष् प्रत्यय होता है। स्वाङ्गवाची पूर्वपद जिसमें है, वह इसका उदाहरण होता है, अस्वाङ्गवाची पूर्वपदवाले बहुव्रीहि से विकल्प कहा जायगा। उदा०—शङ्खभिन्नी। [ शंखः भिन्नः यस्याः सा--इस विग्रह में बहुव्रीहि करके जातिवाची शंख को अन्तोदात्त मानकर ङीष् होता है। ] ऊरुभिन्नी [ ऊरू भिन्नौ=असंयुक्तौ यस्याः सा--यहाँ भी पूर्ववत् समास और अन्तोदात्त मानकर ङीष् होता है। ] * गलकोत्कृत्ती [ गलकम् उत्कृत्तम् अस्याः--विग्रह, समास और ङीष्। ] केशलूनी [ केशाः लूनाः यस्याः—इसमें भी पूर्ववत् समझना चाहिये। न्यासकार ने 'केशान् लुनाति—यह सन्दिग्ध व्याख्या

**'क्तात्'** इत्येव। बहुव्रीहिर्योऽन्तोदात्तस्तस्मात्स्त्रियां ङीष् प्रत्ययो भवति। स्वाङ्गपूर्वपदो बहुव्रीहिरिहोदाहरणम्, अस्वाङ्गपूर्वपदाद् ( ४.१.५३ ) विकल्पं वक्ष्यति। **शङ्खभिन्नी। ऊरुभिन्नी। गलकोत्कृत्ती। केशलूनी।**

**बहुव्रीहेरिति किम्? पादपतिता।**

**❀ अन्तोदात्ताज्जातप्रतिषेधः ❀ ( म० भा० ४.१.५२ वा० १ ) दन्तजाता। स्तनजाता।**

**न्यासः**

जातिकालसुखादिभ्योऽनाच्छादनात् 'क्तोऽकृतमितप्रतिपन्नाः' इत्यन्तोदात्तत्वं भवति। **गलकोत्कृत्तीति**। 'कृती छेदने' इत्यस्मात् क्तः। **केशलूनीति**। केशान् लुनातीति। 'ल्वादिभ्यः' इति नत्वं चोदयति।

**पादपतितेति**। 'कर्तृकरणे कृता बहुलम्' इति तत्पुरुषसमासेऽन्तोदात्तत्वम्।

**अन्तोदात्ताज्जातप्रतिषेध इति**। अन्तोदात्ताद् बहुव्रीहेर्ङीषो विधाने जातशब्दान्तात् प्रतिषेधः, स चान्तग्रहणादेव लभ्यत इति न वक्तव्यम्। इहान्तग्रहणं न कर्तव्यमेव, विनापि तेन यथा 'वर्णादनुदात्तात्' इत्यत्रानुदात्तान्तादिति विज्ञायते, तथेहाप्यन्तोदात्तान्तादिति विज्ञास्यते? तदेवमर्थं क्रियते--अन्तोदात्त एव यो नित्यं बहुव्रीहिस्ततो यथा स्यात्, विकल्पेन योऽन्तोदात्तस्ततो मा भूदिति। इह च दन्तजाता, स्तनजातेत्यत्र 'वा जाते' इति विकल्पेनान्तोदात्तत्वम्, अतोऽयं विधिर्न भविष्यति। अथ वा--उत्तरसूत्रे वाग्रहणमुभयोरपि योगयोः शेषः, व्यवस्थितविभाषा च, तेन जातशब्दान्तान्न भविष्यति। अस्मिंस्तु व्याख्यानेऽन्तग्रहणं विस्पष्टार्थमेवेति वेदितव्यम्।

**पदमञ्जरी**

न भवति; 'जातिकालसुखादिभ्यः परवचनम्' इति वचनात्। शङ्खादयो हि जातिवचनाः, अत एव 'जातिकालसुखादिभ्यः' इत्यन्तोदात्तत्वं भवति। **गलोत्कृत्तीति**। 'कृती छेदने', उत्पूर्वात् क्तः। गलमुत्कृत्तमस्या इति विग्रहः।

**पादपतितेति**। 'कर्तृकरणे कृता बहुलम्' इति समासः, थाथादिस्वरेणान्तोदात्तत्वम्।

**अन्तोदात्ताज्जातप्रतिषेध इति**। अन्तोदात्ताद् बहुव्रीहेर्ङीष्विधाने जातशब्दान्तात् प्रतिषेधो वक्तव्यः, स त्वन्तग्रहणादेव सिद्धः। कथम्? इहान्तग्रहणं न कर्तव्यम्, वर्णादनुदात्तादितिवद् उदात्तान्तादिति विज्ञास्यते, तत् क्रियते नित्ययोगे यथा बहुव्रीहिर्विज्ञायेत। दन्तजातादौ तु 'वा जाते' इति विकल्पेनान्तोदात्तत्वम्।

**भावबोधिनी**

लिखी है। क्योंकि प्रस्तुत सूत्र बहुव्रीहि समास में ही ङीष् करता है। ] बहुव्रीहि से—इसका क्या प्रयोजन है? पादपतिता। [ यहाँ 'कर्तृकरणे कृता बहुलम्' से तत्पुरुष है। पादपातिता यह प्रत्युदाहरण अधिक अच्छा रहता पैरों से गिरी हुयी की अपेक्षा पैरों में गिरायी गयी यह अर्थ अधिक व्यावहारिक है। ]

* अन्तोदात्त बहुव्रीहि से ङीष् करने में जातशब्दान्त का प्रतिषेध करना चाहिये। * उदा०—दन्तजाता [ जाताः दन्ताः यस्याः सा—इस विग्रह में प्राप्त ङीष् का निषेध होने के कारण ही निष्ठा प्रत्ययान्त जात शब्द का पूर्वनिपात न होकर परनिपात होता है—दन्तजातः, टाप् होकर रूप बनता है। ] स्तनजाता। जातौ स्तनौ यस्याः सा—यहाँ भी सब प्रक्रिया पूर्ववत् है। ] * 'पाणिगृहीती आदि की सिद्धि के लिये अर्थविशेष में ङीष् कहना चाहिये।' * उदा०—पाणिगृहीती भार्या [ अग्निसाक्षिपूर्वक विधिसहित जिसके हाथ ग्रहण किये जाते हैं, इस अर्थ में ङीष् होता है। ] किन्तु जिसके हाथ यों हीं किसी प्रकार पकड़ लिये गये हैं वह—पाणिगृहीता होती है। [ उसमें ङीष् न करके टाप् होता है। ] * बहु, नञ्, सु, काल और सुख आदि शब्द जिसके पूर्व में नहीं हैं उस बहुव्रीहि से ङीष् कहना चाहिये। * उदा०—बहुकृता [ बहूनि कृतानि अनया – विग्रह में बहुव्रीहि समास करने पर प्राप्त ङीष् का निषेध हो जाता है। ] नञ्—अकृता [ न विद्यते

❀ **पाणिगृहीत्यादीनामर्थविशेषे** ❀ (वा० २)। **पाणिगृहीती भार्या । यस्यास्तु कथञ्चित्पाणिर्गृह्यते पाणिगृहीता सा भवति ।** ❀ **अबहुनञ्सुकालसुखादिपूर्वादिति वक्तव्यम्** ❀ ( वा० ५ )। **बहुकृता । नञ्-अकृता । सु-सुकृता । काल – मासजाता, संवत्सरजाता । सुखादि – सुखजाता, दुःखजाता । 'जातिकालसुखादिभ्योऽनाच्छादनात् कृतोऽकृतमितप्रतिपन्नाः'** ( ६.२.१७० ) **इत्येवमादिना बहुव्रीहेरन्तोदात्तत्वम् ॥**

**न्यासः**

**पाणिगृहीत्यादीनामर्थविशेष इति** । 'सिद्धये' इति शेषः । पाणिगृहीतीत्यादीनां सिद्ध्यर्थं विशेष एव ङीब् भवति, न सर्वत्र । एतदपि व्यवस्थितविभाषया लभ्यते । विशेषस्तु पाणिग्रहणस्य वेदितव्यः । अग्निसाक्षिपूर्वकं भार्यार्थं यस्याः पाणिग्रहणं क्रियते सा पाणिगृहीतीति भवति । **यथाकथञ्चिदिति** । यथोक्तात् प्रकारादन्येन केनापि प्रकारेणेत्यर्थः ।

**अबहुनञित्यादि** । बह्वादिपूर्वान् ङीष् न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानं तु तस्यैव वाग्रहणस्य व्यवस्थितविभाषात्वमाश्रित्य कर्तव्यम् । **जातिकालसुखादीत्यादि । बहुकृतेत्यत्र** 'बहोर्नञ्वदुत्तरपदभूम्नि' इत्यन्तोदात्तत्वम् । **अकृता, सुकृतेत्यत्र** 'नञ्सुभ्याम्' इति । **मासजातेत्यादिषु** 'जातिकालसुखादिभ्योऽनाच्छादनात् क्तः' इति ॥ ५२ ॥

**पदमञ्जरी**

**पाणिगृहीत्यादीनां विशेष इति** । सिद्धये इति शेषः । अग्निसाक्षिकं यस्याः पाणिर्गृह्यते सा पाणिगृहीतीति भवति । **कथञ्चिदिति** । यथोक्तात् प्रकारादन्येन प्रकारेणेत्यर्थः ।

**अबहुनञित्यादि** । बह्वादिपूर्वपदाद् बहुव्रीहेर्ङीष् न भवतीति वक्तव्यमित्यर्थः । **बहुकृतेति** । बहूनि कृतान्यनयेति विग्रहः, 'बहोर्नञ्वदुत्तरपदभूम्नि' इत्यन्तोदात्तत्वम् । **अकृता, सुकृतेति** । न विद्यते कृतमनया, शोभनं कृतमनयेति विग्रहः, 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वम् । **मासजातेति** । मासो जातोऽतीतोऽस्याः । सुखं जातं प्राप्तमनया, दुःखं जातमनयेति विग्रहः । सुखादयः 'सुखादिभ्यः कर्तृवेदनायाम्' इत्यत्र पठिता गृह्यन्ते । अथ वा—बहुव्रीहेश्च जातिपूर्वादिति वक्तव्यम्, बहुव्रीहावन्तोदात्तनिमित्तेष्वन्येषु प्रतिषिद्धेषु जातिरेवान्तोदात्तनिमित्तं क्तान्तस्यावशिष्यते इति जातिग्रहणमेवात्र कर्तव्यमित्यर्थः ॥ ५२ ॥

**भावबोधिनी**

कृतम् अनया ]। सु—सुकृता [ शोभनं कृतम् अनया ]। काल—मासजाता, संवत्सरजाता [ मासः जातः = अतीतः अस्याः, संवत्सरः जातः=अतीतः अस्याः—विग्रह में समास के बाद प्राप्त ङीष् का निषेध । एक महीने की, एक वर्ष की बालिका । ] सुखादि—सुखजाता [ सुखं जातम् = उत्पन्नं प्राप्तं वा अनया ], दुःखजाता [ दुःखं जातम् = उत्पन्नं प्राप्तं वा अनया ]। "जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः" ६।२।१७० [ जातिवाचक आदि से परे क्तान्त शब्द बहुव्रीहि में अन्तोदात्त होता है—] इस सूत्र से बहुव्रीहि का अन्तोदात्त होता है । [ अतः ङीष् प्राप्त होता है, उसका निषेध करने के लिये प्रस्तुत वार्तिक है । ]॥

विमर्श—प्रस्तुत सूत्र पर भाष्य में छः वार्तिक हैं—(१) अन्तोदात्ते जातप्रतिषेधः, (२) पाणिगृहीत्यादीनां विशेषे । (३) बहुलं तणि, (४) प्र[वृ]बद्धविलून्याद्यर्थम् । (५) अन्तोदात्तादबहुनञ्सुकालसुखपूर्वात् । (६) जातिपूर्वाद् वा ।

इनमें अन्तिम वार्तिक ही सिद्धान्त है क्योंकि अन्यों में अन्तोदात्त का प्रतिषेध हो जाता है । अतः एव कैयट ने स्पष्ट लिखा है—"अथवेति । बहुव्रीहावन्तोदात्तनिमित्तेषु अन्येषु निषिद्धेषु जातिरेवान्तोदात्तनिमित्तं क्तान्तस्यावशिष्यते इति जातिग्रहणमेवात्र कर्तव्यमित्यर्थः । [ कैयटप्रदीप ४।१।५२ ] ॥ ५२ ॥

## १३०३. अस्वाङ्गपूर्वपदाद् वा ॥ ५३ ॥ ( ५०९ )

'अन्तोदात्तात् क्तान्तात्' इत्यनुवर्त्तते। अस्वाङ्गपूर्वपदादन्तोदात्तात् क्तान्ताद्बहुव्रीहेः स्त्रियां वा ङीष् प्रत्ययो भवति। पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। शार्ङ्गजग्धी, शार्ङ्गजग्धा। पलाण्डुभक्षिती, पलाण्डुभक्षिता। सुरापीती, सुरापीता।

अस्वाङ्गपूर्वपदादिति किम् ? शङ्खभिन्नी। ऊरुभिन्नी। अन्तोदात्तादित्येव—वस्त्रच्छन्ना, वसनच्छन्ना।

❀ बहुलं संज्ञाछन्दसोरिति वक्तव्यम् ❀ ( म० भा० ४.१.५३ वा० ३,४ )। प्रवृद्धविलूनी, प्रवृद्धविलूना।

### न्यासः

**अस्वाङ्गपूर्वपदाद्वा ॥ अस्वाङ्गपूर्वपदादिति**। न स्वाङ्गम्—अस्वाङ्गम्, तत् पूर्वं पदं यस्य बहुव्रीहेः स तथोक्तः। **सारङ्गजग्धीति**। 'अद भक्षणे', 'अदो जग्धिः' इत्यादिना जग्ध्यादेशः, 'झषस्तथोर्धोऽधः' इति तकारस्य धत्वम्, 'झरो झरि' इति धलोपः। **पलाण्डुभक्षितीति**। 'भक्ष अदने', चुरादिणिच्। **सुरापीतीति**। घुमास्थादिसूत्रेणेत्वम्। सर्वत्र 'जातिकालसुखादिभ्यः' इत्यादिनोत्तरपदान्तोदात्तत्वम्।

**वस्त्रच्छन्ना, वसनच्छन्नेति**। 'छद अपवारणे' इत्यस्य चुरादिण्यन्तस्य क्तप्रत्यये 'वा दान्तशान्तपूर्ण' इत्यादिना च्छन्नशब्दो निपातितः। 'अनाच्छादनात्' इत्युत्तरपदान्तोदात्तत्वप्रतिषेधे 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति प्रकृतिस्वरे कृते 'अनुदात्तं पदमेकवर्जम्' इति शेषस्यानुदात्तत्वादिहान्तोदात्तत्वं नास्ति। पूर्वपदे एवात्राद्युदात्ते एकं नित्स्वरेण, अपरं लित्स्वरेण। वस आच्छादने', ष्ट्रन्प्रत्ययः—वस्त्रम्। अस्मादेव धातोर्वसनम्—ल्युट्। **बहुलमित्यादिना** संज्ञायां छन्दसि बहुलं ङीष् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः।

### पदमञ्जरी

**अस्वाङ्गपूर्वपदाद्वा ॥ शार्ङ्गजग्धीत्यादि**। शार्ङ्गं जग्धमनया, पलाण्डुर्भक्षितोऽनयेति विग्रहः। शार्ङ्गादिरभक्ष्यजातिः। सर्वत्र 'जातिकालसुखादिभ्यः' इत्यन्तोदात्तत्वम्।

**वस्त्रच्छन्नेति**। 'छद अपवारणे' चुरादिः, 'वा दान्तशान्त' इत्यादिना छन्नशब्दो निपातितः, अत्र 'अनाच्छादनात्' इति प्रतिषेधात् पूर्वपदप्रकृतिस्वरत्वमेव भवति।

### भावबोधिनी

'अन्तोदात्तात् क्तान्तात्' [ अन्तोदात्त, क्तप्रत्ययान्त से ]—इसकी अनुवृत्ति होती है। स्वाङ्गवाची पूर्वपद जिसमें नहीं है, अन्त उदात्त है, ऐसे क्तप्रत्ययान्त बहुव्रीहि से स्त्रीलिङ्ग में ङीष् प्रत्यय विकल्प से होता है। पूर्ववर्त्ती सूत्र से नित्य प्राप्त रहने पर यह विकल्प कहा गया है। उदा०—शार्ङ्गजग्धी, शार्ङ्गजग्धा [ शार्ङ्गं जग्धम् अनया—इस विग्रह में बहुव्रीहि होता है। शार्ङ्ग किसी अभक्ष्य पशु या पक्षी का वाचक होने से जातिवाची है। अतः "जातिकाल" ६।२।१७० आदि सूत्र से अन्तोदात्त है, स्वाङ्गवाची नहीं है। अतः विकल्प से ङीष् होता है। ] पलाण्डुभक्षिती, पलाण्डुभक्षिता। प्याज खानेवाली पलाण्डुः भक्षितः अनया—इस विग्रह में यह बनता है। प्रक्रिया पूर्ववत् है। ] सुरापीती, सुरापीता [ सुरा पीताऽनया—यह विग्रह है। प्रक्रिया पूर्ववत् है। सुरा=शराब पीने वाली—यह अर्थ है। ] स्वाङ्गवाची पूर्वपद न हो—इसके ग्रहण का क्या प्रयोजन है ? शङ्खभिन्नी, ऊरुभिन्नी। [ यहाँ शङ्ख और ऊरु शब्द स्वाङ्गवाची हैं। अतः इससे नहीं; अपितु पूर्वसूत्र से नित्य ङीष् होता है। ] अन्तोदात्त से ही—वस्त्रच्छन्ना, वसनच्छन्ना [ छन्नं वस्त्रं यया, छन्नं वसनं यया—इस विग्रह में बहुव्रीहि होता है। यहाँ आच्छादन अर्थ है। अतः "जातिकाल" ६।२।१७० से उत्तरपद अन्तोदात्त नहीं होता है। "बहुव्रीहौ प्रकृत्या पूर्वपदम्" ६।२।१ से पूर्वपद का प्रकृतिस्वर होने पर शेषनिघात से अन्त अनुदात्त हो जाता है। अतः इसकी और पूर्ववर्त्ती दोनों की प्रवृत्ति नहीं होने से टाप् ही होता है। ]

* संज्ञा और वेद में बहुलरूप से होता है। * उदा०—प्रवृद्धविलूनी, प्रवृद्धविलूना। यहाँ कर्मधारय है—प्रवृद्धा चासौ विलूना च, अतः यह बहुव्रीहि नहीं है। [ सूत्र से प्राप्ति न होने के कारण यह वार्त्तिक है। ]

प्रवृद्धा चासौ विलूना चेति, नायं बहुव्रीहिः ॥

१३०४. स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥ ५४ ॥ ( ५१० )

'बहुव्रीहेः क्तान्तादन्तोदात्तात्' इति सर्वं निवृत्तम् । वाग्रहणमनुवर्तते । स्वाङ्गं यदुपसर्जनमसंयोगोपधं तदन्तात्प्रातिपदिकात्स्त्रियां वा ङीष् प्रत्ययो भवति । चन्द्रमुखी, चन्द्रमुखा । अतिक्रान्ता केशान् अतिकेशी, अतिकेशा माला ( म० भा० ) ।

न्यासः

तत्र[1] वाग्रहणस्य व्यवस्थितविभाषात्वादेव बहुलं संज्ञाच्छन्दसोर्भविष्यति । नन्वत्र सूत्रेणैवानेनास्य बहुव्रीहित्वाद् भविष्यति ङीष्, किमर्थं तर्हीदम्? इत्याह--प्रवृद्धा चेत्यादि । विग्रहविशेषेण तत्पुरुषं दर्शयति[2] ॥ ५३ ॥

स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥ चन्द्रमुखीति । चन्द्र इव मुखमस्या इति बहुव्रीहिः । अत्र च 'प्रथमानिर्दिष्टम्' इत्यादिना मुखशब्दस्योपसर्जनसंज्ञा । अतिकेशीति । 'कुगतिप्रादयः' इति समासः, 'एकविभक्ति च' इति केशशब्दस्योपसर्जनत्वम् ।

पदमञ्जरी

प्रवृद्धा चेत्यादिना विग्रहविशेषेण तत्पुरुषं[3] दर्शयति ॥ ५३ ॥

स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥ अतिकेशीति । अतिक्रान्ता केशानिति तत्पुरुषः, 'एकविभक्ति च' इति केशशब्दस्योपसर्जनत्वम् । अशिखेति । असत्युपसर्जनग्रहणेऽत्रैव प्राप्नोति, न मूलोदाहरणेषु; 'अनुपसर्जनात्'

भावबोधिनी

विमर्श—प्रस्तुत सूत्र पर भाष्यकार ने कोई विचार नहीं व्यक्त किया है । काशिकाकार ने पूर्ववर्ती सूत्र के वार्तिक को यहाँ उद्धृत किया है । साथ ही उसके स्वरूप में भी परिवर्तन कर दिया है । पूर्व सूत्र के 'विमर्श' में वार्तिक का वास्तविक रूप ऊद्धृत किया जा चुका है ॥ ५३ ॥

'बहुव्रीहेः क्तान्तादन्तोदात्तात्' इन सबकी निवृत्ति हो जाती है, अनुवृत्ति नहीं होती है । 'वा' ग्रहण की अनुवृत्ति होती है । स्वाङ्गवाचक, उपसर्जन जो असंयोगोपध [ जिसकी उपधा में संयुक्तवर्ण नहीं है ], वह जिसके अन्त में है, ऐसे प्रातिपदिक से स्त्रीलिङ्ग में विकल्प से ङीष् प्रत्यय होता है । उदा०--चन्द्रमुखी, चन्द्रमुखा [ चन्द्र इव मुखं यस्या--इस विग्रह में बहुव्रीहि समास होता है । अङ्गवाची मुख स्त्री का उपसर्जन है । अतः विकल्प से ङीष् होता है । पक्ष में टाप् होता है । चन्द्रमा के समान मुखवाली ] अतिकेशी, अतिकेशा माला । केशों का अतिक्रमण करनेवाली = केशों से भी लम्बी माला ।

स्वाङ्गवाची से- इसके ग्रहण का क्या फल है? बहुयवा । [ बहवः यवाः यस्यां सा--यहाँ यव शब्द अगवाचक नहीं है । अतः ङीष् न होकर टाप् होता है । ] उपसर्जन से--इसका क्या फल है? अशिखा । [ न शिखा--इस तत्पुरुष में उत्तरपदार्थ प्रधान रहता है, उपसर्जन नहीं । ] सयोग जिसकी उपधा में हो उससे--इसके ग्रहण का क्या लाभ है?

---

२-१. "तत्रेदं व्याख्यानम्—पूर्वसूत्रादनुवृत्तस्य चकारस्यानुक्तसमुच्चयार्थत्वाद् यत्र संज्ञाच्छन्दसोरिष्यते तत्र भविष्यतीति । प्रवृद्धविलूनेत्यत्र समासस्येत्यन्तोदात्तत्वम् । किं पुनः कारणं न सिध्यति, येन संज्ञाछन्दसोर्बहुलं ङीष् भवतीत्येतदर्थरूपं व्याख्येयम्? इत्याह—प्रवृद्धा चेत्यादि । विग्रहविशेषेण तत्पुरुषं दर्शयति"—इति वंगसंस्करणे पाठः ।

३. 'विग्रहविशेषेण तत्पुरुषं दर्शयति'—इति चिन्त्यम् । 'प्रबद्धं विलूनं यस्यामिति बहुव्रीहिः अपरे तु कर्मधारयं कुर्वन्ति'—इति प्रदीपः । वस्तुतस्तु प्रबद्धविलून्यादिप्रयोगसिध्यर्थं संज्ञाछन्दसोर्बहुलमिति वक्तव्यमित्यर्थः । अत्र हि बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेनान्तोदात्तत्वाभावादप्राप्तिः, यद्यत्र कर्मधारयः स्वीक्रियेत तदा बहुव्रीह्यभावेऽपि बाहुलकात् प्राप्तिः ।

**स्वाङ्गादिति किम् ? बहुयवा । उपसर्जनादिति किम् ? अशिखा । असंयोगोपधादिति किम् ? सुगुल्फा । सुपार्श्वा । ❀ अङ्गगात्रकण्ठेभ्य इति वक्तव्यम् ❀ मृद्वङ्गी, मृद्वङ्गा । सुगात्री, सुगात्रा । स्निग्धकण्ठी, स्निग्धकण्ठा ।**

**अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् ।**

**न्यासः**

**अङ्गेति** । अङ्गादिभ्य उपसर्जनेभ्यो ङीष् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः किमर्थम् ? संयोगोपधत्वाद् ङीष् न प्राप्नोति, तदर्थमेतदर्थरूपं व्याख्येयम् । तदिदं व्याख्यानम्—उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः, तेनाङ्गादिभ्यः संयोगोपधेभ्यो ङीष् भवतीति ।

**अद्रवमिति** । मुखनासिकाभ्यां योऽभिनिष्क्रामति वायुः स प्राणः, प्राणोऽस्यास्तीति प्राणी, तत्र यत् तिष्ठति तत्प्राणिस्थम्; मुखादि स्वाङ्गमित्युच्यते । यद्येवम्, कफोऽपि स्वाङ्गं स्यात्, ततश्च बहुकफेत्यत्र ङीष् प्रसज्येत ? इत्यत आह—**अद्रवमिति** । विशेषणोपादानान्न भवत्ययं प्रसङ्गः, कफस्य द्रवात्मकत्वात् । एवमपि ज्ञानं स्वाङ्गं भवेत्, प्राणिस्थत्वादद्रवत्वाच्च, ततश्च बहुज्ञानेत्यत्रापि ङीष् स्यात् ? इत्यत आह—**मूर्त्तिमदिति** । असर्वगतानि यानि द्रव्याणि तेषां परिमाणं ह्रस्वादिमद् यत् तन्मूर्त्तिः, सा यस्यास्ति तन्मूर्त्तिमत् । न च तद् ज्ञानेऽस्तीति; निर्गुणत्वात् । गुणानां च ज्ञानस्यात्मगुणत्वाद् नास्य स्वाङ्गत्वप्रसङ्गः । येषामपि काठिन्यादि-स्पर्शविशेषो मूर्त्तिः, तन्मतेनापि नैव ज्ञानं मूर्त्तिमद्भवति, न हि ज्ञानस्य स्पर्शोऽस्ति । एवमपि शोफस्य श्वयथु-संज्ञकस्य स्वाङ्गत्वं प्राप्नोत्येव; यथोक्तविशेषणविशिष्टत्वात् । ततश्च बहुशोफेत्यत्र ङीष् प्रसज्येतेत्यत आह—**अविकारजमिति** । विकारः = धातुवैषम्यम्, भूतप्रक्षोभ इत्यर्थः, ततो जातं विकारजम् । न विकारजम् =

**पदमञ्जरी**

इत्यधिकारात् । अथ बहुव्रीह्यधिकारादत्र न भविष्यतीत्युच्येत ? अतिकेशीत्यत्रापि तर्हि न स्यात् । 'अङ्गगात्र' इत्यादिभाष्येऽनुक्तमप्येतत्प्रयोगबहुल्याद् **वृत्तिकारेणोक्तम्** ।

यद्यत्र स्वमङ्ग स्वाङ्गं गृह्येत – श्लक्ष्णमुखा शाला, अत्रापि प्राप्नोति, मुखस्य शालाङ्गत्वात्; दीर्घ-केशी रथ्येत्यत्र च न स्यात्, केशानां रथ्याङ्गत्वाभावात् ? तदव्याप्त्यतिव्याप्तिपरिहारार्थं स्वाङ्गं परिभाष्यते—**अद्रवमिति** । तत्र प्राणिस्थं स्वाङ्गमित्यनेन श्लक्षणमुखा शालेत्यत्र न भवति । एवमपि बहुकफा--अत्र प्राप्नोति ? तदर्थमाह--**अद्रवमिति** । द्रवतीति द्रवम्, ततोऽन्यदद्रवम् । एवमपि बहुज्ञाना--अत्रापि प्राप्नोति ? अत आह--**मूर्तिमदिति** । असर्वगतद्रव्यपरिमाणा मूर्तिः, असर्वगतानि यानि द्रव्याणि तेषां यत्परिमाणं ह्रस्वत्वादि सा मूर्तिः; स्पर्शवद् द्रव्यपरिमाणं मूर्तिरित्यन्ये, सा यस्यास्ति तन्मूर्तिमत् । एवमपि बहुशोफा

**भावबोधिनी**

सुगुल्फा । सुपार्श्वा । [ शोभनः गुल्फः यस्याः सा, शोभनः पार्श्वः यस्याः सा---सुन्दर एँड़ीवाली । यहाँ संयोग उपधा में है । अतः ङीष् न होकर टाप् होता है । ] * अङ्ग, गात्र और कण्ठ---से वैकल्पिक ङीष् कहना चाहिये । * उदा०---मृद्वङ्गी, मृद्वङ्गा [ मृदूनि अङ्गानि यस्याः सा । ङीष् और पक्ष में टाप् करने पर यण् होता है । ] सुगात्री, सुगात्रा । [ शोभनं गात्रं यस्याः सा । ] स्निग्धकण्ठी, स्निग्धकण्ठा [ स्निग्धः कण्ठः यस्याः सा । ]

**विमर्श** – प्रस्तुत सूत्र के भाष्य में यह वार्त्तिक नहीं है। पदमञ्जरीकार के अनुसार यह वचन काशिकाकार का ही है ।

**अनु०**—[ स्वाङ्ग का स्वरूप स्पष्ट करने के लिये भाष्य में उद्धृत वचन यहाँ भी उद्धृत किया जा रहा है, ] इसमें स्वाङ्ग की तीन परिभाषायें हैं--(१) अद्रव, मूर्तिमान्, प्राणिस्थ, अविकारज--[ स्वाङ्ग होता है ], (२) उस प्राणी में दृष्ट है किन्तु उसमें स्थित नहीं है । (३) प्राणी जिस प्रकार सम्बद्ध है, अप्राणी भी उसी प्रकार सम्बद्ध है ।

**विमर्श**—[ अद्रव—कहने से सुस्वेदा—में ङीष् नहीं होता है क्योंकि स्वेद=पसीना द्रवरूप होने से स्वाङ्ग नहीं

**अतत्स्थं तत्र दृष्टं च तस्य चेत्तत्तथायुतम् ॥ ( म० भा० ४.१.५४ )**

**न्यासः**

**अविकारजम्** । तदेवं विशेषणोपादानसामर्थ्यात् शोफस्यापि स्वाङ्गत्वं न प्राप्नोति । यदि प्राणिस्थं स्वाङ्गं भवति, एवं तर्हि रथ्यादिपतितानां केशानां स्वाङ्गत्वं न स्यात्, ततश्च दीर्घकेशी रथ्येति न सिध्यतीत्यत आह—**अतत्स्थमित्यादि** । तस्मिन् प्राणिनि तिष्ठतीति तत्स्थम्, न तत्स्थम् अतत्स्थम् = अप्राणिस्थम् । एवमपि केशादि स्वाङ्गं भवति यदि तत्प्राणिनि पूर्वं दृष्टं भवति । प्रतिमावयवानां तर्हि मुखादीनां स्वाङ्गता न स्यात्, अप्राणिस्थत्वात्, ततश्च दीर्घमुखी प्रतिमेति ङीष् न स्यात् ? इत्यत आह—**तस्य चेत्तत्तथा युतमिति** । तस्य प्राणिनस्तत् स्वाङ्गं यथा युतं येन प्रकारेण संस्थानविशेषेण सम्बद्धं तथा तेन प्रकारेणाप्राणिनोऽपि यदि सम्बद्धं भवत्येवमपि तस्य स्वाङ्गत्वं भवति । अथवा—तस्य चेदं प्राणिनस्तत् स्वाङ्गं तथा यदि युतं सम्भवति यथा प्राणिनः, एवमपि स्वाङ्गं भवति ।

अन्येषां पाठः—**तेन चेत्तत्तथा युतमिति** । तेन प्राणिना येन प्रकारेण संस्थानविशेषादिना सम्बद्धं तथा यद्यप्राणिनापि सम्बद्धं भवति, एवमपि स्वाङ्गं भवति । अथ वा—तेनाप्राणिना तन्मुखादि यदि तथा युतम् = सम्बद्धं भवति, यथा प्राणिना, एवमपि स्वाङ्गं भवति । अथवा तेन चेद् मुखादीनां स्वाङ्गेन तदप्राणिस्थं द्रव्यं तथा यदि युतं भवति यथा प्राणिद्रव्यम्, एवमपि स्वाङ्गं भवतीति । सर्वथायमर्थः—यादृशं प्राणिनो मुखादि स्वाङ्गं तादृशमेव यद्यप्राणिनोऽपि भवति स्वाङ्गमेवमेव भवतीति ॥ ५४ ॥

**पदमञ्जरी**

अत्र प्राप्नोति ? इत्यत आह—**अविकारजमिति** । विकारः=वातादिवैषम्यम्, ततो यज्जायते तन्न भवतीत्यविकारजम् । शोफस्तु श्वयथुसंज्ञको विकारजः । यदि प्राणिस्थं स्वाङ्गम्, रथ्यादिपरिगतानां केशानां स्वाङ्गत्वं न स्यात्, सम्प्रत्यप्राणिस्थत्वात्, ततश्च दीर्घकेशी रथ्येति न सिद्ध्यत्यत आह—**अतत्स्थमिति** । सम्प्रत्यप्राणिस्थमपि कदाचित्प्राणिनि दृष्टं चेत्तदपि स्वाङ्गं भवत्येवेत्यर्थः । एवमपि प्रतिमावयवानां मुखादीनां स्वाङ्गत्वं न प्राप्नोति, अप्राणिस्थत्वात्, ततश्च दीर्घमुखी प्रतिमेत्यत्र न सिद्ध्यति ? तत्राह—**तेन चेदिति** । अतत्स्थमित्यनुषङ्गः । अप्राणिस्थमपि मुखादि स्वाङ्गं तेन चेन्मुखादिना तदप्राणिद्रव्यं तथा युतं भवति यथा प्राणिद्रव्यमित्यर्थः । अन्येषां पाठः—**तस्य चेत्तत्तथा युतमिति** । तत्रार्थः—अप्राणिस्थमपि मुखादि स्वाङ्गं तस्य चेदप्राणिनः तन्मुखादि तथा युतं भवति, तादृशं संस्थानं भवति यादृशं संस्थानं प्राणिन इत्यर्थः ॥ ५४ ॥

**भावबोधिनी**

है । मूर्तिमान्—कहने से सुज्ञाना—आदि में ङीष् नहीं होता क्योंकि ज्ञान मूर्तिमान् न होने से स्वाङ्ग नहीं होता है । प्राणिस्थ—कहने से सुमुखा शाला—आदि में ङीष् नहीं होता क्योंकि शाला = भवन प्राणी नही है । अतः उसका मुख प्राणिस्थ न होने से स्वाङ्ग नहीं है । अविकारज—वायु कफ आदि प्राकृतिक विकारों से उत्पन्न होने वाला न हो—इसके कहने से—सुशोफा—आदि में नहीं होता क्योंकि शोफ=सूजन तो वायु आदि के विकार से उत्पन्न होता है ।

वहाँ = प्राणी में देखा गया है । किन्तु प्रयोगकाल में प्राणी में स्थित नहीं है तो भी स्वाङ्ग होता है । इस लिये—सुकेशी, सुकेशा रथ्या [ अच्छे बालों वाली गली ]—यहाँ होता है क्योंकि केश प्राणी में देखे गये हैं, इस समय उसमें नहीं स्थित हैं तो भी स्वाङ्ग हैं । प्राणी में स्थित न होने पर भी जिस प्रकार प्राणी से सम्बद्ध रहता है उसी प्रकार अप्राणी से सम्बद्ध हो तो स्वाङ्ग होता है । इस लिये सुस्तनी, सुस्तना, सुमुखी, सुमुखा प्रतिमा आदि में होता है क्योंकि प्राणी के समान ही अप्राणी प्रतिमा में मुखादि सम्बद्ध रहने से स्वाङ्ग है ॥ ५४ ॥

**१३०८. नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ॥ ५५ ॥ ( ५११ )**

**'स्वाङ्गाच्चोपसर्जनात्' इत्येव । बह्वज्लक्षणे संयोगोपधलक्षणे च प्रतिषेधे प्राप्ते वचनम् । सहनञ्विद्यमानलक्षणस्तु प्रतिषेधो भवत्येव । नासिकाद्यन्तात् प्रातिपदिकात् स्त्रियां वा ङीष् प्रत्ययो भवति । तुङ्गनासिकी, तुङ्गनासिका । तिलोदरी, तिलोदरा । बिम्बोष्ठी, बिम्बोष्ठा । दीर्घजङ्घी, दीर्घजङ्घा । समदन्ती, समदन्ता । चारुकर्णी, चारुकर्णा । तीक्ष्णशृङ्गी, तीक्ष्णशृङ्गा ।**

**❀ पुच्छाच्चेति वक्तव्यम् ( म० भा० ४.१.५५ ) । कल्याणपुच्छी, कल्याणपुच्छा ।] * कबरमणि-**

**न्यासः**

**नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाश्च ॥ बह्वज्लक्षण इत्यादि ।** नासिकोदरयोः । 'न क्रोडादिबह्वचः' इति बह्वज्लक्षणे प्रतिषेधे प्राप्ते वचनम् । शेषाणाम् 'असंयोगोपधात्' इति संयोगोपधलक्षणे । **सहनञ्विद्यमानपूर्वलक्षणस्तु प्रतिषेधो भवत्येवेति ।** नासिकोदरयोस्तावदयं योगः 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इत्यनन्तरमेव बह्वज्लक्षणं प्रतिषेधं बाधते, न सहादिलक्षणम् । ओष्ठादिष्वपि 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते' इति पूर्वमेव संयोगोपधलक्षणम्, तेनासौ भवत्येव—सहनासिका, अनासिका, विद्यमाननासिकेति । **बिम्बोष्ठीति ।** बिम्बमिवोष्ठौ यस्याः सा बिम्बोष्ठी - 'ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम्' इत्यौपसंख्यानिकं पररूपत्वम् । ये तु बिम्बौष्ठीत्यौकारं पठन्ति ते 'वृद्धिरेचि' इति वृद्धिं कुर्वन्ति ।

**पुच्छाच्चेति वक्तव्यमिति ।** पुच्छान्ताच्च प्रतिपदिकात् ङीष् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । **किमर्थम् ?** संयोगोपधादपि पुच्छान्ताद् यथा स्यात् । व्याख्यान तु चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य कर्तव्यम् । **कल्याणपुच्छीति ।** कल्याणं पुच्छमस्याः ।

**कबरेत्यादि ।** कबरादिभ्यो यः पुच्छशब्दस्तदन्तात् ङीष् भवतीति । एषोऽपि तत एव चकाराद्वाग्रहणस्य

**पदमञ्जरी**

**नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ॥ सहनञ्विद्यमानलक्षणस्तु प्रतिषेधो भवत्येवेति ।** कथम् ? नासिकोदरयोस्तावदयं योगः पुरस्तादपवादन्यायेनानन्तरं बह्वज्लक्षणमेव प्रतिषेधं बाधते, ओष्ठादिष्वपि मध्येऽपवादन्यायेन पूर्वं संयोगोपधलक्षणमेव प्रतिषेधं बाधते, न सहादिलक्षणम्; अतोऽसौ भवत्येव—सनासिका, अनासिका, विद्यमाननासिकेति । **बिम्बोष्ठीति ।** 'ओत्वोष्ठायोर्वा समासे पररूपं वक्तव्यम्' इति पररूपम् ।

**कबरपुच्छीति ।** कबरम्=नानावर्णं पुच्छमस्याः सा मयूरी । मणिः पुच्छमस्याः मणिपुच्छी, विषं

**भावबोधिनी**

'स्वाङ्गाच्चोपसर्जनात्' इसकी अनुवृत्ति होती है । बह्वच् मानकर और संयोगोपध मानकर होने वाले प्रतिषेध के प्राप्त रहते यह सूत्र ङीष् करता है । परन्तु सह, नञ् और विद्यमान को मानकर होने वाला प्रतिषेध तो होता ही है । [ क्योंकि 'पुरस्ताद् अपवादाः अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इस न्याय से अव्यवहितोत्तरवर्त्ती का ही बाध कर सकता है, उसके आगे वाले दूसरे सूत्र का बाध नहीं कर सकता । ] नासिका आदि सात शब्द जिसके अन्त में है ऐसे प्रातिपदिक से स्त्रीलिङ्ग में ङीष् प्रत्यय विकल्प से होता है । उदा०—तुङ्गनासिकी तुङ्गनासिका । [ ऊँची नाकवाली । विकल्प से ङीष् होता है । पक्ष में टाप् होता है । ] तिलोदरी तिलोदरा । [ तिल हैं उदर में जिसके ऐसी । ] बिम्बोष्ठी, बिम्बोष्ठा [ बिम्ब फल के समान रंगवाले ओठोंवाली । समास के बाद 'ओत्वोष्ठयोः समासे वा' वार्त्तिक से विकल्प से पररूप होता है, पक्ष में वृद्धि भी होती है । अतः बिम्बोष्ठी और बिम्बौष्ठी दोनों रूप शुद्ध हैं ।] दीर्घजङ्घी, दीर्घजङ्घा [ दीर्घ जांघो वाली ] । समदन्ती, समदन्ता [ सम=बराबर के दाँतों वाली ] । चारुकर्णी, चारुकर्णा [ सुन्दर कानों वाली ] । तीक्ष्णशृङ्गी तीक्ष्णशृङ्गा [ तीखे सींगों वाली गाय आदि ] । * 'पुच्छ से भी कहना चाहिये ।' कल्याणपुच्छी,

**विषशरेभ्यो नित्यम्** ❀ ( वा० २ )। **कबरपुच्छी । मणिपुच्छी । विषपुच्छी । शरपुच्छी ।** * **उपमानात् पक्षात् पुच्छाच्च** ❀ ( वा० ३ )। **उलूकपक्षी शाला । उलूकपुच्छी सेना ॥**

**१३०६. न क्रोडादिबह्वचः ॥ ५६ ॥ ( ५१२ )**

**'स्वाङ्गात्' इति ङीष् प्राप्तः प्रतिषिध्यते । क्रोडाद्यन्ताद् बह्वजन्ताच्च प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो न भवति । कल्याणक्रोडा । कल्याणखुरा । कल्याणोखा[1] । कल्याणबाला । कल्याणशफा । कल्याणगुदा । कल्याणघोणा । कल्याणनखा । कल्याणमुखा । क्रोडादिराकृतिगणः । सुभगा । सुगला । बह्वचः खल्वपि — पृथुजघना । महाललाटा ॥**

**न्यासः**

वा व्यवस्थितविभाषात्वाल्लभ्यते । कबरं पुच्छे यस्याः सा कबरपुच्छी । एवं **मणिपुच्छी, विषपुच्छी, शरपुच्छीति** । 'सप्तमीविशेषणे बहुव्रीहौ' इति पुच्छस्य पूर्वनिपातो न भवति; 'सप्तम्याः पूर्वनिपाते गड्वादिभ्यः परवचनम्' इति वचनात् ।

**उपमानात् पक्षात् पुच्छाच्चेति** । नित्यमिति सम्बध्यते । एतदपि पूर्वोक्तात् कारणद्वयाल्लभ्यते । * 'पुच्छाच्चेति वक्तव्यम्' * इत्यनेनैव सिद्धे पुनरिह पुच्छग्रहणं प्रपञ्चार्थम्, नित्यार्थं वा । उलूकस्येव पक्षौ यस्याः **सा उलूकपक्षी** । उलूकस्येव पुच्छं यस्याः **सा उलूकपुच्छी** ॥ ५५ ॥

**न क्रोडादिबह्वचः ॥ कल्याणक्रोडेति** । क्रोडाशब्दः स्त्रीलिङ्गः । 'क्रोडाघाटाजिह्वाशिरोधरासङ्कुलास्पृहामाया' इति लिङ्गकारिकायां पाठात् । कल्याणी क्रोडाऽस्या इति विग्रहः । 'स्त्रियाः पुंवद्' इति पुंवद्भावः । उत्तरपदस्य 'गोस्त्रियोः' इत्यादिना ह्रस्वः । ततः 'स्वाङ्गाच्चोपसर्जनात्' इत्यादिना प्राप्तस्य ङीषोऽनेन प्रतिषेधः, ततष्टाप् । **महाललाटेति** । 'आन्महत्' इत्यादिनात्वम् ॥ ५६ ॥

**पदमञ्जरी**

पुच्छमस्याः विषपुच्छी वृश्चिकी । उलूक इव पक्षोऽस्याः, उलूक इव पुच्छमस्या इति विग्रहः ॥ ५५ ॥

**न क्रोडादिबह्वचः ॥ कल्याणक्रोडेति** । अश्वानामुरः क्रोडा, स्त्रीलिङ्गोऽयम् । तत्र बहुव्रीहौ पूर्वपदस्य पुंवद्भावः, उत्तरपदस्योपसर्जनह्रस्वत्वम् । **कल्याणनखेति** । अग्रन्थोऽयम्; 'नखमुखात् संज्ञायाम्' इति प्रतिषेधात्, असंज्ञायां ङीष इष्टत्वात्, तस्मात् **कल्याणोखेति** पाठः । उखेति हि पठ्यते—'क्रोडा बालखुरोखाः शफो गुदं भगगलौ च' इति ॥ ५६ ॥

**भावबोधिनी**

कल्यापुच्छा [ कल्याणम् = कल्याण करने वाली पूँछ है जिसकी ] । * कबर, मणि, विष और शर शब्दों के बाद पुच्छ शब्दान्त से नित्य कहना चाहिये ।' कबरपुच्छी [ चितकबरी पूँछ वाली ] । मणिपुच्छी [ मणि है पूँछ में जिसके ] । विषपुच्छी [ विष है पूँछ में जिसके ] । शरपुच्छी [ शर है पूँछ में जिसके ] । * उपमानवाची पक्ष और पुच्छ से नित्य होता है । उलूकपक्षी, उलूकपुच्छी [ उल्लू के समान पँखवाली, उल्लू के समान पूँछवाली ] ॥ ५५ ॥

'स्वाङ्गात्' ४।१।५४ से ङीष् प्राप्त है उसका प्रतिषेध किया जा रहा है । क्रोडा आदि जिसके अन्त में उससे और बहुत अचों वाले प्रातिपदिक से स्त्रीलिङ्ग में ङीष् प्रत्यय नहीं होता है । उदा०—कल्याणक्रोडा [ कल्याणी क्रोडा यस्याः सा । घोड़े का उरस्थल क्रोडा है । यहाँ 'स्वाङ्गाच्चोपसर्जनात् ४।१।५४ से प्राप्त ङीष् का निषेध हो जाने से टाप् होता है । ] कल्याणखुरा [ कल्याणकारी खुरों वाली ] । कल्याणोखा [ कल्याणी उखा यस्या सा, कल्याणकारी उखा अर्थात् पात्रविशेष वाली ] कल्याणबाला [ कल्याणकारिणी बालों वाली या बालिकावाली ] । कल्याणशफा [ कल्याणकारी शफों = खुरोंवाली] । कल्याणगुदा [कल्याणकारी गुद = शौचेन्द्रिय वाली] । कल्याणघोणा [कल्याणकारी नाकवाली] । कल्याणनखा [ कल्याणकारी नाखुनों वाली ] । कल्याणमुखा [ कल्याणकारी मुखवाली ] । [ इन सभी में स्वाङ्गवाची शब्द होने के

## १३०७. सहनञ्विद्यमानपूर्वाच्च ॥ ५७ ॥ ( ५१३ )

**'स्वाङ्गाच्चोपसर्जनात्' ( ४.१.५४ ) इति 'नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च' ( ४.१.५५ ) इति च प्राप्तो ङीष् प्रतिषिध्यते। सह, नञ्, विद्यमान - इत्येवंपूर्वात् प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो न भवति। सकेशा, अकेशा, विद्यमानकेशा। सनासिका, अनासिका, विद्यमाननासिका॥**

### न्यासः

**सहनञ्विद्यमानपूर्वाच्च ॥ सकेशेति**। सह केशैर्वर्तत इति। 'तेन सहेति तुल्ययोगे' इति समासः, 'वोपसर्जनस्य' इति सहस्य सभावः। **अकेशेति**। अविद्यमानाः केशा अस्येति, 'नञोऽस्त्यर्थानां बहुव्रीहिरुत्तरपदलोपश्च' इति विद्यमानशब्दलोपः। अथ पूर्वग्रहणं किम्, सहनञ्विद्यमानादित्येवोच्येत, एतया हि पञ्चम्या स्वाङ्गे विशेष्यमाणे सहादिपूर्वता लभ्यत एव ? नैतदेवम्; पञ्चमी हि परत्वेन स्वाङ्गं विशेषयेत्--सहादिभ्यः परं यत् स्वाङ्गमिति। ततश्च सहादिभ्यः परेण स्वाङ्गेनान्यस्यापि समासे प्रतिषेधो विज्ञायते--कल्याणविद्यमानमुखेति। विद्यमानञ्च तन्मुखञ्च विद्यमानमुखम्, कल्याणं विद्यमानमुखमस्या इति विग्रहः। अथ वा--विद्यमानं मुखं यस्य स विद्यमानमुखः, कल्याणो विद्यमानमुखो यस्या इति विग्रहः। पूर्वग्रहणे सति पूर्वशब्दस्यावयववाचित्वात् सहादिपूर्वत्वेन प्रातिपदिकं विशेष्यत इति सहाद्यवयवं यत् स्वाङ्गत्वं प्रातिपदिकं तस्मादिति विज्ञायमाने नात्र प्रतिषेधो भवति, न ह्येतत् सहाद्यवयवमेव। किं तर्हि ? कल्याणशब्दावयवमिति न भवत्यनिष्टप्रसङ्गः ॥ ५७ ॥

### पदमञ्जरी

**सहनञ्विद्यमानपूर्वाच्च ॥** पूर्वग्रहणमकृत्वा 'सहनञ्विद्यमानेभ्यः' इत्युच्यमाने सहादिभ्यः परं यत्स्वाङ्गं तदन्तान्ङीष् न भवतीत्यर्थो भवति, ततश्चेह प्रतिषेधः प्रसज्येत—विद्यमानं मुखमस्य विद्यमानमुखः, कल्याणो विद्यमानमुखोऽस्याः कल्याणविद्यमानमुखीति, भवति ह्येतद् यथोक्तविशेषणम्; इह च न स्याद्—विद्यमानकल्याणमुखेति, न ह्यत्र यथोक्तं विशेषणमस्ति, तस्मात्पूर्वग्रहणम् ॥ ५७ ॥

### भावबोधिनी

कारण प्राप्त होने वाले ङीष् का प्रतिषेध करके टाप् होता है। ] क्रोडादिगण आकृतिगण है। [ अतः अन्य शब्दों का भी समावेश कर लिया जाता है। ] सुभगा [ सुन्दर गुप्तांगवाली ]। सुगला [ सुन्दर गला = गर्दन वाली ]। बहुत अचों वाले से भी होता है—पृथुजघना [ विशाल जघनवाली। ] महाललाटा [ विशाल मस्तक वाली। जघन और ललाट स्वाङ्गवाची हैं परन्तु बह्वच् होने से ङीष् का प्रतिषेध करके टाप् होता है। ] ॥ ५६ ॥

"स्वाङ्गाच्चोपसर्जनात्" ४।१।५४ से और "नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च" ४।१।५५ से प्राप्त होने वाले ङीष् का प्रतिषेध होता है। सह, नञ् और विद्यमान—ये शब्द जिसके पूर्व में हैं ऐसे प्रातिपदिक से स्त्रीलिङ्ग में ङीष् नहीं होता है। उदा०—सकेशा [ सह केशैर्वर्तते—इस विग्रह में 'तेन सहेति तुल्ययोगे' २।२।२८ से समास करने पर "वोपसर्जनस्य" ४।१।४४ से सह का स आदेश। ] अकेशा [ अविद्यमानाः केशाः यस्या सा—इस विग्रह में "नञोऽस्त्यर्थानां बहुव्रीहिरुत्तरपदलोपश्च" से समास और उत्तरपद = विद्यमान का लोप ] विद्यमानकेशा [ विद्यमानाः केशाः यस्याः सा। इन तीनों में स्वाङ्गवाची होने से ङीष् प्राप्त है, उसका निषेध करके दोनों से टाप् होता है। ] सनासिका [ सह नासिकया वर्तते ]। अनासिका [ अविद्यमाना नासिका यस्याः सा ] विद्यमाननासिका [ विद्यमाना नासिका यस्याः सा। यहाँ भी पूर्ववत् प्रक्रिया समझनी चाहिये। "नासिकोदरोष्ठ" ४।१।५५ से ङीष् प्राप्त है, उसका निषेध करने पर टाप् होता है। ] ॥ ५७ ॥

**१३०८. नखमुखात् संज्ञायाम् ॥ ५८ ॥ ( ५१४ )**

**नखमुखान्तात् प्रातिपदिकात् संज्ञायां स्त्रियां विषये ङीष् प्रत्ययो न भवति । शूर्पणखा । वज्रणखा । गौरमुखा । कालमुखा । संज्ञायामिति किम् ? ताम्रनखी कन्या । चन्द्रमुखी ॥**

**१३०९. दीर्घजिह्वी च च्छन्दसि ॥ ५९ ॥ ( ३४४८ )**

**'दीर्घजिह्वी, इति छन्दसि ( ऐ० ब्रा० ८.४, पृ० ३०३ ) विषये निपात्यते । संयोगोपधत्वादप्राप्तो ङीष् विधीयते । 'दीर्घजि॒ह्वी' वै' दे॒वानां॑ ह॒व्यमं॑वाले॒ट्' ( मै० स० ३.१०.६ ) । चकारः संज्ञानुकर्षणार्थः । 'दीर्घजिह्वी' इति निपातनं नित्यार्थम् ॥**

**न्यासः**

**नखमुखात् संज्ञायाम् ॥ शूर्पणखेति** । 'पूर्वपदात् संज्ञायामगः' इति णत्वम् । अथ कथं शूर्पनखी राक्षसीति ? असंज्ञात्वात् । संज्ञायामित्युच्यते, न चेयं संज्ञा । तथा हि 'पूर्वपदात्' इत्यादिना णत्वं न भवति । यौगिकस्त्वेष तस्या व्यपदेशः, शूर्पाकारनखयोगात्--शूर्पमिव नखो यस्याः शूर्पनखीति ॥ ५८ ॥

**दीर्घजिह्वी च च्छन्दसि** ॥ अथ किमर्थमीकारान्तनिपातनं क्रियते, न 'दीर्घजिह्वाच्छन्दसि' इत्येवोच्येत, एवमुच्यमाने प्रतिषेधप्रकरणात् प्रतिषेधो विज्ञायेतेति चेत् ? न; संयोगोपधत्वेन प्राप्त्यभावात्, प्राप्तिपूर्वकत्वाच्च प्रतिषेधानाम् । तस्मात् सामर्थ्याद् विधिरेव विज्ञास्यत इत्याह—**निपातनं नित्यार्थमिति** । कल्पितत्वात् प्रकृतस्य ङीष इहापि विकल्पित एवासौ विज्ञायेत, निपातनात्तु नित्यो भवति ॥ ५९ ॥

**पदमञ्जरी**

**नखमुखात् संज्ञायाम् ॥ शूर्पणखेति** ।' पूर्वपदात्संज्ञायामगः' इति णत्वम् । एवं च शूर्पणखा वा राक्षसी शूर्पनखी वा । यदि योगमात्रं न संज्ञा--शूर्पनखी, संज्ञायाम् --शूर्पणखा; न पुनः शूर्पणखीति णत्वङीषोः समावेशः साधुः ॥ ५८ ॥

**दीर्घजिह्वी चच्छन्दसि** ॥ **निपातनं नित्यार्थमिति** । 'दीर्घजिह्वात्' इत्युच्यमाने प्रकृतस्य ङीषो विकल्पितत्वादिहापि विकल्पो विज्ञायते ॥ ५९ ॥

**भावबोधिनी**

नख और मुख जिसके अन्त में है, ऐसे प्रातिपदिक से संज्ञाविषय में ङीष् प्रत्यय नहीं होता है । उदा०—शूर्पणखा [ शूर्पं इव नखः यस्याः सा, सूप के समान नाखूनों वाली राक्षसी, रावण की बहन । समास के बाद प्राप्त ङीष् का निषेध । "पूर्वपदात् संज्ञायामगः" ८।४।३ से णत्व ] वज्रणखा [ वज्र के समान नाखुनों वाली राक्षसी विशेष ] । गौरमुखा [ गौरं मुखं यस्याः सा । गोरे मुखवाली । किसी स्त्री का नाम है । ] कालमुखा [ कालं मुखं यस्याः सा, काल= अनिष्टकारी मुखवाली ] । संज्ञा = नाम प्रतीत होने पर--इसके ग्रहण का क्या फल है ? ताम्रमुखी कन्या । [ ताम्रं मुखं यस्याः सा—तांबे के समान लाल मुखवाली ] । चन्द्रमुखी [ चन्द्र इव मुखं यस्याः सा ] ।

विमर्श—प्रस्तुत सूत्र के सभी उदाहरण संज्ञा शब्दों के लिये हैं । यौगिक शब्दों में वैकल्पिक ङीष् होने से दो रूप होते हैं ॥ ५८ ॥

वेद में 'दीर्घजिह्वी' यह निपातित होता है । संयोगोपध होने से अप्राप्त ङीष् का विधान किया जा रहा है । उदा०—दीर्घजिह्वी वै देवानां हव्यम् अवालेट् । [ दीर्घा जिह्वा यस्याः सा—इस विग्रह में समास के बाद--दीर्घजिह्वा—शब्द से ङीष् = ई, भसंज्ञा, आलोप । लम्बी जीभ वाली । 'दीर्घजिह्वी नामक राक्षसी ने देवों के हव्यों को खा लिया ।' ] चकार का उल्लेख 'संज्ञा' के अनुकर्षण = अनुवृत्ति के लिये है । ] [ अर्थात् किसी की संज्ञा = नाम रहने पर ही—यह रूप होता है । 'दीर्घजिह्वात् छन्दसि' यह न कहकर ] दीर्घजिह्वी—यह निपातन नित्य के लिये है, अर्थात् केवल यही रूप होता है । ] ॥ ५६ ॥

## १३१०. दिक्पूर्वपदान्ङीप् ॥ ६० ॥ ( ५१९ )

**'स्वाङ्गाच्चोपसर्जनात्' ( ४.१.५४ ) इत्येवमादिविधिप्रतिषेधविषयः सर्वोऽप्यपेक्ष्यते । यत्र ङीष् विहितस्तत्र तदपवादः । दिक्पूर्वपदात् प्रातिपदिकाद् ङीप् प्रत्ययो भवति । स्वरे विशेषः । प्राङ्मुखी, प्राङ्मुखा । प्राङ्नासिकी, प्राङ्नासिका । इह न भवति – प्राग्गुल्फा, प्राक्क्रोडा, प्राग्जघनेति ॥**

**न्यासः**

**दिक्पूर्वपदान् ङीप् ॥ विधिप्रतिषेधेत्यादि ।** विधिविषयः – स्वाङ्गमुपसर्जनमसंयोगोपधत्वम्, नासिकादि च प्रातिपदिकम् । प्रतिषेधविषयः—संयोगोपधश्च प्रातिपदिकम्, 'न क्रोडादिबह्वचः' । **सहनञ्विद्यमानपूर्वाच्चेति ।** एतेनैतत् सूचयति—'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इत्यादि विधिशास्त्रमिहानुवर्तते, 'न क्रोडादिबह्वचः' इत्यादि प्रतिषेधशास्त्रम्, तेन यत्र विषये ङीष् विहितस्तत्रैव ङीब् विधेयः । यत्र तु विषये ङीष् प्रतिषिद्धस्तत्र ङीबपि प्रतिषिध्यत इति । **यत्र ङीष् विहित इत्यादिना** विधिविषयापेक्षायाः फलं दर्शयति । कः पुनर्ङीपो ङीषो वा विशेषः, यावतोभयत्र तदेव रूपम् ? इत्याह **स्वरे विशेष इति ।** ङीपो हि पित्त्वादनुदात्तत्वं भवतीति, ङीषस्तु प्रत्ययस्वरेणाद्युदात्तत्वम् । **प्राङ्मुखीति ।** ऋत्विगादिसूत्रेणाञ्चतेः क्विन्, 'अनिदिताम्' इत्यनुनासिकलोपः, 'उगितश्च' इति ङीप्—प्राची । प्राच्यां दिशि मुखमिति 'दिक्शब्देभ्यः सप्तमीपञ्चमी' इत्यादिनास्तातिः, 'अञ्चेर्लुक्' इति तस्य लुक्, 'लुक् तद्धितलुकि' इति स्त्रीप्रत्ययस्यापि लुक्, 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वम्, 'अव्ययादाप्सुपः' इति सुपो लुक्—प्राग् मुखं यस्याः सा प्राङ्मुखी, 'यरोऽनुनासिकेऽनुनासिको वा' इति ङकारः । **प्राङ्मुखेति । टाप् ।** ननु च ङीपा मुक्ते 'स्वाङ्गाच्चोपसर्जनात्' इति ङीषा भवितव्यम् ? नैतदस्ति; आचार्यप्रवृत्तिर्ज्ञापयति—यत्रोत्सर्गापवादयोर्विभाषा तत्रापवादेन मुक्त उत्सर्गो न प्रवर्तत इति, यदयम् 'पोलाया वा' इति वाग्रहणं करोति । यद्यत्राणा विकल्पितेन मुक्ते 'स्त्रीभ्यो ढक्' ढकारेण भवितव्यं किं वाग्रहणेन ? तस्मादस्माद्वाग्रहणादिदं ज्ञाप्यते - यत्रोत्सर्गोऽपि विभाषा तत्रापवादेन मुक्त उत्सर्गो न प्रवर्तत इति । कथं पुनरुत्सर्गो विभाषा ? महाविभाषया । 'प्राग्दीव्यतोऽण्' इत्यणुत्सर्गः, 'स्त्रीभ्यो ढक्' इति ढगपवादः; तेन मुक्ते यद्यपि स्यादण्, किं वाग्रहणेन ? नेत्येवं ब्रूयात्, तत्रौत्सर्गिकाणो निवृत्त्यर्थम् ।

**इह न भवतीत्यादिना** प्रतिषेधापेक्षायाः फलं दर्शयति । **प्राक्क्रोडा, प्राग्जघनेति ।** अत्र हि 'न

**पदमञ्जरी**

**दिक्पूर्वपदान्ङीप् ॥** दिक्पूर्वपदान्ङीषोऽनुदात्तत्वम्, 'स्वाङ्गाच्च' इत्यादिना विहितस्य ङीष एवास्मिन्विषयेऽनुदात्तत्वं वक्तव्यम्, ङीब्विधाने ह्यन्यत्रापि ङीष्विषयान्ङीप्प्रसङ्गः । अपूर्वे हि ङीपि विधीयमाने प्राग्गुल्फा, प्राग्जघनेति ङीष्विषयादन्यत्रापि ङीप्प्राप्नोति; ङीषः प्रतिषेधाभावात् ? इत्यस्मिन्पूर्वपक्षे इदमाह—**विधिप्रतिषेधविषयः सर्वोऽप्यपेक्ष्यते इति ।** तत्र विधिविषयापेक्षायाः फलं दर्शयति -- **यत्र ङीष्विहित इति । स्वरे विशेष इति ।** ङीपः पित्त्वादनुदात्तत्वं भवति, ङीषस्तु प्रत्ययाद्युदात्तत्वप्रसङ्गः । **प्राङ्मुखेति ।** ङीपा मुक्ते 'स्वाङ्गाच्चोपसर्जनात्' इति ङीषपि न भवति, कथम् ? उक्तमेतत्—'यत्रोत्सर्गापवादौ द्वावपि विकल्पितौ तत्रापवादेन मुक्ते उत्सर्गो न प्रवर्तते' इति ।

प्रतिषेधापेक्षायाः फलं दर्शयति—**इह न भवतीति ।** एवं च कृत्वा वाक्यभेदः कर्त्तव्यः दिक्पूर्व-

**भावबोधिनी**

"स्वाङ्गाच्चोपसर्जनात्" ४।१।५४ आदि विधिविषय और [ न क्रोडा० ४।१।५६ आदि ] प्रतिषेधविषय जो भी कहे जा चुके हैं, उन सभी को अपेक्षा की जाती है । जिसमें ङीष् का विधान किया गया है, उसमें अपवाद ङीष् का विधान किया जा रहा है । दिग्वाची पूर्व पद है जिसका ऐसे प्रातिपदिक से ङीप् प्रत्यय होता है । दोनों में स्वर में भेद है । [ ङीप् पित् होने से अनुदात्त है और ङीष् आद्युदात्त है । ] उदा० प्राङ्मुखी, प्राङ्मुखा । प्राक् मुखं यस्याः सा

१३११. वाहः ॥ ६१ ॥ ( ७१६ )

**ङीषेव स्वर्यते, न ङीप्। वहेरयं ण्विप्रत्ययान्तस्य निर्देशः। सामर्थ्यात्तदन्तविधेर्विज्ञानम्। वाहन्तात् प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो भवति। 'दित्यौही' ( तै० सं० ४.७.१०.१ )। प्रष्ठौही ॥**

१३१२. सख्यशिश्वीति भाषायाम् ॥ ६२ ॥ ( ७१७ )

**सखी, अशिश्वी – इत्येतौ शब्दौ ङीषन्तौ भाषायां निपात्येते। सखीयं मे ब्राह्मणी। नास्याः शिशुर-**

**न्यासः**

क्रोडादिबह्वचः' इत्यस्याप्यनुवृत्तेर्ङीष् न भवति। **प्राग्गुल्फेति**। अत्राप्यसंयोगोपधादित्यस्य। अथ पदग्रहणं किमर्थम्, न दिक्पूर्वादित्येवोच्येत ? अशक्यमेवं वक्तुम्; एवमुच्यमाने दिक्शब्द एव स्वरूपेण पूर्वपदं विज्ञायेत। पदग्रहणे तु सति सर्वे दिगभिधायिनः शब्दाः पूर्वपदत्वेन विज्ञायन्ते ॥ ६० ॥

**वाहः ॥ सामर्थ्यात् तदन्तविधेर्विज्ञानमिति**। कर्मण्युपपदे ण्वेर्विधानात्। केवलस्य वाहः सम्भवो नास्तीति सामर्थ्यात् तदन्तविधिर्विज्ञायते। **दित्यौहीति**। दित्यं वहतीति 'भजो ण्विः', 'छन्दसि सहः', 'वहश्च' इति ण्विः, ण्वेः सर्वापहारी लोपः, प्रत्ययलक्षणेन 'अत उपधायाः' इति वृद्धिः, ङीष्, 'वाह ऊठ्' इति संप्रसारणसंज्ञको वकारस्योठ् भवति; तत्र 'वसोः संप्रसारणम्' इत्ययतः संप्रसारणानुवृत्तेः। ठकारः 'एत्येधत्यूठ्सु' इति विशेषणार्थः। 'संप्रसारणाच्च' इति पररूपत्वम्, 'एत्येधत्यूठ्सु' इति पूर्वपदाकारेण सहैकादेशो वृद्धिः ॥ ६१ ॥

**सख्यशिश्वीति भाषायाम् ॥ सखीति**। सखिशब्दान् ङीप्। नास्याः शिशुरस्तीति वाक्यविशेषेण बहुव्रीहिं

**पदमञ्जरी**

पदादसंयोगोपधस्वाङ्गान्तान्नासिकाद्यन्तान्ङीष् भवति; क्रोडादिबह्वजन्तात्तु नेति अपरः कल्पः, अत्र ङीषनुवर्तते, तस्य दिक्पूर्वपदादिति पञ्चम्या षष्ठी प्रकल्प्यते, दिक्पूर्वपदादुत्तरस्य ङीषो ङीबादेशो भवतीत्यर्थः। तेन यत्र ङीष् तत्रैव ङीबिति सिद्धम्। एवं चोत्तरत्र ङीषेव स्वर्यत इत्युपपन्नं भवति ॥ ६० ॥

**वाहः ॥ सामर्थ्यादिति**। कर्मण्युपपदे वहेर्ण्विधानात् केवलस्य वाहः सम्भवो नास्तीत्येतत्सामर्थ्यम्। **दित्यौहीति**। छन्दसि सहः', 'वहश्च' इति ण्विः, उपधावृद्धिः, ङीषि 'वाह ऊठ्', तत्र सम्प्रसारणमित्यनुवृत्तेः 'सम्प्रसारणाच्च' इति पूर्वरूपत्वम्, 'एत्येधत्यूठ्सु' इति वृद्धिः ॥ ६१ ॥

**सख्यशिश्वीति भाषायाम् ॥** भाषायामित्युच्यते, तत्रैतन्न सिध्यति—सखी सप्तपदी भव, आ धेनवो

**भावबोधिनी**

[ पूर्वं दिशा में मुख है जिसका। यहाँ स्वाङ्गवाची होने से प्राप्त ङीष् का प्रतिषेध करके ङीप् हो जाता है। ङीप् न होने पर टाप् ही होता है। ] प्राङ्नासिकी, प्राङ्नासिका। [ प्राङ्नासिका यस्याः सा। यहाँ 'नासिकोदर०' ४।१।५५ से प्राप्त ङीष् का अपवाद वैकल्पिक ङीप् होता है। पक्ष में टाप् होता है। प्राक् + मुख, प्राक् + नासिका में 'यरोऽनुनासिकेऽनुनासिको वा ८।४।४५ से अनुनासिक ङकार होता है। ] इनमें नहीं होता है—प्राग्गुल्फा। प्राक्क्रोडा। प्राग्जघना। [ इनमें निषेध है। अतः ङीप् भी नहीं होता है ]॥ ६० ॥

ङीष् ही स्वरित = अनुवृत्त होता है, ङीप् नहीं। ण्वि-प्रत्ययान्त √वह धातु का यह निर्देश है। [ कर्म उपपद रहते वह धातु से ण्वि होता है—इस ] विधानसामर्थ्य से तदन्तविधि समझनी चाहिये। वाहशब्दान्त प्रातिपदिक से स्त्रीलिङ्ग में ङीष् प्रत्यय विकल्प से होता है। उदा०—दित्यौही। प्रष्ठौही। [ दित्यं वहति, प्रष्ठं वहति—इनमें "वहश्च" ३।२।६४ से ण्वि प्रत्यय और उसका सर्वापहारी लोप होने पर प्रत्ययलक्षण से णित् मानकर उपधावृद्धि के बाद प्रस्तुत सूत्र से ङीष् = ई करने पर दित्य + वाह् + ई, प्रष्ठ + वाह् + ई—में 'वाह ऊठ्' ६।४।१३२ से व् का ऊठ् और "एत्येधत्यूठ्सु" ६।१।२९ से वृद्धि करने पर रूप बनते हैं ॥ ६१ ॥

सखी और अशिश्वी—ये दोनों ङीष् प्रत्ययान्त शब्द भाषा = लौकिक संस्कृत में निपातित होते हैं। उदा०—सखी

**स्तीति अशिश्वी । भाषायामिति किम् ? 'सखा सप्तपदी भव' ( आश्व० गृ० १.७.१९ ) । अशिशुमिव मामयं शिशुरभिमन्यते ॥**

## १३१३. जातेरस्त्रीविषयादयोपधात् ॥ ६३ ॥ ( ५१८ )

**जातिवाचि यत्प्रातिपदिकं न च स्त्रियामेव नियतमस्त्रीविषयमयकारोपधं च तस्मात् स्त्रियां ङीष् प्रत्ययो भवति ।**

**आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।**

**न्यासः**

दर्शयन्नशिशुशब्दो यो बहुव्रीहिस्तस्याशिश्वीति निपात्यते । न तु तत्पुरुषो यस्तस्येति दर्शयति । तत्पुरुषे हि न शिशुरशिशुरित्येवं भवति । **सखेति** । 'अनङ् सौ' इत्यनङादेशः, नोपधायाः 'सर्वनामस्थाने च' इति दीर्घः । 'सख्यशिशुभ्याम्' इत्येवं वक्तव्ये यन्निपातनं क्रियते, तस्यैतत् प्रयोजनम्—तुल्यश्रुतेः शब्दान्तरस्यापि यथा स्यात्, सह खेन या वर्तते सा सखीति ॥ ६२ ॥

**जातेरस्त्रीविषयादयोपधात् ॥** जातेः प्रातिपदिकादिति सामानाधिकरण्यानुपपत्तेर्जातिवाचि यत् प्रातिपदिकं तदिहाभिधानेऽभिधेयोपचारं कृत्वा जातिशब्देनोक्तम्, अत एव वृत्तावाह— **जातिवाचि यत् प्रातिपदिकमिति** । **अस्त्रीविषयादिति** । अनन्यत्रभावेऽपि विषयशब्दो वर्तते, अत एव वृत्तावाह—**न चेत् स्त्रियामेव नियतमिति** । न स्त्रियामेव यस्य भावः, किन्तु स्त्रियां चान्यत्र च तदस्त्रीविषयम् ।

जातिरित्युच्यते, केयं जातिर्नामेति प्रश्नस्योत्तरमाह—**आकृतिग्रहणेत्यादि** । आक्रियते व्यज्यतेऽनयेत्याकृतिः = संस्थानमुच्यते । तथा हि—दुराकृतिः दुःसंस्थानमुच्यते, स्वाकृतिश्च सुसंस्थानम् । गृह्यतेऽनेनेति

**पदमञ्जरी**

धुनयन्तामशिश्वीरिति ? नैष दोष; इतिकरणोऽत्र क्रियते, स भिन्नक्रमो भाषायामित्यस्यानन्तरं द्रष्टव्यः, स च प्रकारे वर्तते, तेन छन्दस्यपि क्वचिद्भविष्यति । भाषाग्रहणं तु नित्यार्थम् ॥ ६२ ॥

**जातेरस्त्रीविषयादयोपधात् ॥** अस्त्रीविषयादित्यनन्यभावे विषयशब्द इत्याह--**न च स्त्रियामिति** । स्त्रियामेव यस्य नियमेन वृत्तिस्तत्स्त्रीविषयम्, ततोऽन्यदस्त्रीविषयमित्यर्थः ।

इह लौकिकजातिग्रहणे ब्राह्मणत्वादीनां गोत्रस्य च नाडायनादेर्जातित्वे वादिनां विप्रतिपत्तेः चरणशब्दानां च कठादीनामध्ययनक्रियासम्बन्धनिबन्धनत्वेन पाचकादिवत्क्रियाशब्दत्वेनाव्याप्तिरित्यभिमतां जातिं लक्षयति—**आकृतिग्रहणा जातिरिति** । गृह्यतेऽनेनेति ग्रहणमिति करणसामान्ये पदं संस्क्रियते, पश्चादाकृति-

**भावबोधिनी**

इयं मे ब्राह्मणी । [ सखि + ङीष् ] । नास्ति शिशुः अस्याः—अशिश्वी [ अशिशु + ङीष् = ई, यण् । पुत्रादिहीन स्त्री । "अशिश्वी शिशुना बिना" अमरकोष । भाषा में—इसका क्या प्रयोजन है ? सखा सप्तपदा भव । [ इस वैदिक प्रयोग में ङीष् नहीं होता है । अनङ्, उपधादीर्घ आदि कार्य करने पर उक्त रूप सिद्ध होता है । ] अशिशुम् इव माम् अयं शिशुः अभिमन्यते । [ यहाँ भी ङीष् नहीं होता है ] ॥ ६२ ॥

जातिवाचक जो प्रातिपदिक है किन्तु स्त्री अर्थ में नियत नहीं है = अस्त्रीविषय है, और जिसकी उपधा में यकार नहीं है, ऐसे प्रातिपदिक से स्त्रीलिङ्ग में ङीष् होता है । [ जाति का स्वरूप स्पष्ट करने के लिये भाष्य में प्रस्तुत श्लोक उद्धृत किया गया है— ]

(१) आकृति = अवयव-सन्निवेश, ग्रहण = ज्ञानसाधन । आकृति है ज्ञानसाधन जिसकी अर्थात् अवयवसन्निवेश से व्यक्त होनेवाली; [ परन्तु ब्राह्मण एवं क्षत्रिय आदि की शरीराकृति समान होती है । अतः वहाँ उपदेश से ही व्यङ्ग्य होती है अतः दूसरा लक्षण लिख रहे हैं ] (२) सभी लिङ्गों का आश्रय लेनेवाली नहीं है, एक व्यक्ति में कह देने से अन्य में कथन

**न्यासः**

ग्रहणम्, करणे ल्युट्। आकृतिर्ग्रहणं यस्याः साऽऽकृतिर्ग्रहणा, संस्थानव्यङ्ग्येति यावत्। ननु चाकृतिशब्दसामानाधिकरण्याद् ग्रहणशब्दस्य स्त्रियां वृत्तिरिति 'टिड्ढाणञ्' इति ङीपा भवितव्यम्, तदन्तेन समासे कृते 'नद्यृतश्च' इति कप्, ततश्चाकृतिग्रहणीकेति प्राप्नोति ? नैष दोषः; ग्रहणशब्दो हि पूर्वं करणसामान्ये व्युत्पादितः, पश्चाद् विशेषेणाभिसम्बध्यते। तत्र पदान्तरसन्निधानेन यस्तस्य लिङ्गविशेषसम्बन्धः, स च बहिरङ्ग इति सामान्यलिङ्गेनैवान्तरङ्गेण वाक्यं कृत्वा समास क्रियते, यथा—'मुखनासिकावचनोऽनुनासिकः' इत्यत्र। तदनेन लक्षणेन सामान्यरूपा गोत्वादिलक्षणा जातिरित्युक्तं भवति। गोत्वादयो हि विषाणादिमत्संस्थानव्यङ्ग्यत्वादाकृतिग्रहणाः। एतेन लक्षणेन ब्राह्मणत्वादयो जातिविशेषा न संग्रहीताः। न हि ते संस्थानव्यङ्ग्याः; तदाश्रयस्य संस्थानस्याभिन्नत्वात्। यादृशं हि संस्थानं ब्राह्मणस्य, क्षत्रियादेः संस्थानमपि तादृशमेवेत्यतो द्वितीयं लक्षणमाह—**लिङ्गानाञ्चेत्यादि**। यापि सर्वाणि लिङ्गानि न भजति साप्यसंस्थानव्यङ्ग्यापि जातिः, यथा—ब्राह्मणत्वादिः। सा हि स्त्रीलिङ्गं पुंल्लिङ्गञ्च भजति—ब्राह्मणः, ब्राह्मणीति, न तु नपुंसकलिङ्गमित्यसर्वलिङ्गभाग् भवति। ब्राह्मणत्वादिष्वप्युपदेशाभिव्यङ्ग्यताश्रयणीया, अन्यथा देवदत्तः, देवदत्तेति लिङ्गद्वयं भजति, अत्रापि जातित्वं स्यात्। न चायं जातिशब्द इष्यते, किं तर्हि ? संज्ञाशब्दः। विध्यर्थञ्चेदम्। अतः सर्वलिङ्गभाजोऽपि पूर्वेण लक्षणेन जातित्वमस्ति, यथा—तटः, तटी, तटमिति। सर्वलिङ्गं भजत इति सर्वलिङ्गभाक्, कर्मण्युपपदे 'भजो ण्विः' इति ण्विः। ननु च लिङ्गापेक्षा सर्वशब्द उपपदे भजो ण्विप्रत्ययो न प्राप्नोति, उपपदाश्रयत्वात्, उपपदसमासश्च असमर्थत्वात् ? नैष दोषः; यथैव हि देवदत्तस्य गुरुकुलमित्यत्रासामर्थ्येऽपि समासो भवति, गमकत्वात्; तथैवमुभयमपि भविष्यतीति।

**पदमञ्जरी**

शब्दसमवधाने स्त्रीत्वं प्रतीयमानं बहिरङ्गत्वात् प्रत्ययस्य निमित्तं न भवति। ग्रहणमाकृतिर्यस्या इति ग्रहणरूपोद्देशेनाकृतिरूपता विधीयते, न त्वाकृतिरूपोद्देशेन ग्रहणरूपतेत्यर्थः। आकृतिः = संस्थानम्, सा ग्रहणं यस्याः साऽऽकृतिग्रहणा, अवयवसन्निवेशविशेषव्यङ्ग्येत्यर्थः। अनेन गोत्वादिजातिर्लक्षिता। ब्राह्मणत्वादिजातिस्तु न संगृहीता भवति, ब्राह्मणक्षत्रियादीनां संस्थानस्य सदृशत्वादिति तत्संग्रहायाऽऽह—**लिङ्गानां चेति**। सर्वाणि लिङ्गानि न भजतीत्ययमर्थो विवक्षितः। तत्र सर्वशब्दस्य लिङ्गापेक्षत्वेऽपि गमकत्वाद्भजो ण्विप्रत्ययः, समासश्च। 'लिङ्गानाम्' इति कर्मणि षष्ठी। अप्राप्तप्रापणार्थं चेदं वचनम्, न त्वाकृतिग्रहणेत्यस्य सङ्कोचकम्; तेन तटादेः सर्वलिङ्गत्वेऽपि आकृतिग्रहणत्वाज्जातित्वं भवत्येव। इह कस्मान्न भवति—देवदत्तः, देवदत्तेति ? उपदेशापेक्षमिदं लक्षणम्। कोऽर्थः ? असर्वलिङ्गेषु येषु जाति-

**भावबोधिनी**

के बिना भी समझ ली जाती है; [ इन दोनों लक्षणों से भी कठी, औपगवी आदि का जातित्व नहीं हो पाता है क्योंकि अनुगतसंस्थानव्यङ्ग्यत्व का अभाव है और सर्वलिङ्गत्व है। अतः तीसरा लक्षण देते हैं — ] (३) चरण के साथ गोत्र अर्थात् गोत्र और चरण भी जाति हैं।

**विमर्श**—सामान्यव्यवहार में जन्म से जाति का निर्णय होता है। न्यायादि शास्त्रों में 'नित्य होते हुये, एक होते हुये अनेक में समवेत' को जाति कहा गया है। परन्तु यहाँ भाष्यकार ने जाति के तीन लक्षण स्वीकार किये हैं—

(१) आकृतिग्रहणा जातिः—आक्रियते = व्यज्यतेऽनया इति आकृतिः—अवयवसंन्निवेश = हाथ-पैर आदि का समुदाय। गृह्यते = ज्ञायतेऽनेन इति ग्रहणम् = ज्ञान का साधन। आकृतिः ग्रहणम् = ज्ञानसाधन यस्याः सा। इस प्रकार अवयवसंनिवेश से व्यक्त होनेवाली जाति है। जैसे—अनुगतअवयवों वाली गाय आदि में गोत्व आदि जाति रहती है। परन्तु यह लक्षण मान लेने पर ब्राह्मणत्व आदि जाति नहीं बन सकती क्योंकि ब्राह्मण और क्षत्रिय आदि का अवयव-

सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह॥ ( म० भा० ४.१.६३ )

**न्यासः**

सा च जातिः--**सकृदाख्यातनिर्ग्राह्येति**। सकृद् = एकवारम्, आख्याता = उपदिष्टा निर्ग्राह्या = निश्चयेन ग्राह्या। एतेन जातिधर्मानेकत्वनित्यत्वप्रत्येकपरिसमाप्तित्वलक्षणान् दर्शयति। सकृदेकवारं यस्मात् कृष्णे धवले वा गोपिण्ड आख्याता तद्विलक्षणेऽपि गोपिण्डे निर्ग्राह्या, तस्मादेव नित्या प्रत्येकं परिसमाप्ता च। यदि ह्येका न स्यात्, सकृदाख्याता गौरिति पिण्डान्तरे न गृह्येत। यदि च नित्या न भवेत्, पिण्डविनाशे तस्या अपि विनाशात् पिण्डान्तरेण न गृह्येत। यदि च प्रत्येकं सर्वात्मना परिसमाप्ता न स्यात्, तस्मिन्नपि तावत् पिण्डे सर्वात्मना न गृह्येत यत्राख्याता, किं पुनः पिण्डान्तरे! अंशेन हि परिसमाप्तौ सत्यामंश एव परिगृह्यते, न जातिः। न जात्यंशो जातिर्भवति, अनेकत्वप्रसङ्गात्।

तृतीयं जातिलक्षणमाह—**गोत्रञ्चेत्यादि**। 'अपत्यं पौत्रप्रभृति गोत्रम्' इति गोत्रं पारिभाषिकम्। इह तु लौकिकमपि गोत्रमपत्यमात्रं गृह्यते। चरणमध्ययनभेदेनानेकधा। गोत्रञ्च चरणैः सह जातिर्भवति। गोत्रं नाडायनादि। यद्यपि नाडायनतादि सामान्यं गोत्रवदेव कल्प्यते, तथापि तत् संस्थानव्यङ्ग्यं न भवति। सर्वलिङ्गभाक्त्वाच्च—नाडायनः पुमान्, नाडायनी स्त्री, नाडायनं नपुंसकमिति। अतो गोत्रस्य जातित्वप्रतिपादनसिद्धये गोत्रञ्चेत्युक्तम्। चरणशब्दस्त्वध्ययनक्रियासम्बन्धेन प्रवृत्तत्वात् क्रियाशब्द एव जातिशब्द इत्यतस्तदर्थस्य जातित्वप्रतिपादनाय चरणैः सहेत्युक्तम्।

**पदमञ्जरी**

वाचित्वमाचार्या उपदिशन्ति तेष्वेव भवतीत्यर्थः। आकृतिग्रहणाया जातेरेकत्वनित्यत्वप्रत्येकपरिसमाप्तत्वलक्षणान् धर्मानाह—**सकृदिति**। एकस्मिन्पिण्डे सकृदुपदिष्टा 'अयं गौः' इति पिण्डान्तरे निर्ग्राह्या, निश्चेतुं शक्येत्यर्थः। यदि चैका न स्यात्, नैव गृह्येत। तथा नित्यत्वाभावेऽपि पिण्डेन सह विनाशात्पिण्डान्तरे न गृह्येत। यदि च प्रत्येकं सर्वात्मना परिसमाप्ता न स्यात्, तस्मिन्नपि तावत्पिण्डे सर्वात्मना न गृह्येत यत्राख्याता, किं पुनः पिण्डान्तरे! कथं पुनरेकमेव वस्तु बहुत्र युगपत्कार्त्स्न्येन वर्तते, न हि देवदत्तस्तदानीमेव स्रुघ्ने भवति मधुरायां च? दृश्यते चेत्को दोषः, न हि दृष्टेऽनुपपन्नं नाम! **गोत्रमिति**। अपत्यमित्यर्थः। चरणशब्देन शाखाध्यायिनो गृह्यन्ते, गोत्रस्यानाकृतिग्रहणत्वात् सर्वलिङ्गत्वाच्च पृथगुपादानम्, 'नाडायनं नपुंसकम्' इति दर्शनात्। चरणशब्दस्त्वध्ययनक्रियासम्बन्धेन प्रवृत्तत्वात् क्रियाशब्द एव, न जातिशब्दः।

**भावबोधिनी**

सन्निवेश एक ही प्रकार का देखा जाता है। इनमें उपदेश से ही ब्राह्मणत्व, क्षत्रियत्व आदि का ज्ञान होता है। अतः आगे दूसरा लक्षण लिखा जा रहा है—

(२) लिङ्गानां च न सर्वभाक्। सकृदाख्यातनिर्ग्राह्या अर्थात् जो सभी लिङ्गों में नहीं देखी जाती है, जैसे—ब्राह्मणत्व आदि। यह पुंल्लिङ्ग और स्त्रीलिङ्ग में है किन्तु नपुंसकलिङ्ग में नहीं। और एक में कह दी जाने पर दूसरों में इसका ज्ञान स्वतः हो जाता है। अतः एक गो आदि में बता दी जाने के बाद अन्य में बिना बताये ही समझ ली जाती है। परन्तु इन दोनों लक्षणों से भी कठी औपगवी आदि का संग्रह नहीं हो पाता है क्योंकि इनमें न तो अनुगतसंस्थानव्यङ्ग्यत्व है और न सर्वलिङ्गत्वाभाव है। अतः तीसरा लक्षण लिखा गया है—

(३) गोत्रं च चरणैः सह। चरण के साथ गोत्र अर्थात् गोत्र और चरण ये दोनों भी जातिकार्य प्राप्त करते हैं। गोत्र = अपत्यप्रत्ययान्त, चरण = वेदशाखाध्यायी का वाचक। इन दोनों को मान लेने से—उपगु का स्त्री अपत्य—इस अर्थ में अपत्यप्रत्ययान्त औपगव शब्द से ङीष् होकर औपगवी बनता है। वैशम्पायन के अन्तेवासी से प्रोक्त अर्थ में णिनि

**कुक्कुटी । सूकरी । मयूरी । ब्राह्मणी । वृषली । नाडायनी । चारायणी । कठी । बह्वृची ।**

न्यासः

**कुक्कुटी, शूकरी, मयूरीति** । आकृतिग्रहणाया जातेरुदाहरणम् । **ब्राह्मणी, वृषलीति** । असर्वलिङ्गभाजः । **नाडायनी, चारायणीति** । गोत्रलक्षणायाः । नडचरशब्दयोः 'नडादिभ्यः फक्' इति फगपत्येऽर्थे । **कठी, बह्वृचीति** । चरणलक्षणायाः ।

पदमञ्जरी

**कुक्कुटी, सूकरीति** । आकृतिग्रहणाया जातेरुदाहरणम् । **ब्राह्मणी, वृषलीत्य** सर्वलिङ्गायाः । तत्र ब्राह्मणीति रूपोदाहरणम् । शार्ङ्गरवादिष्वस्य पाठाद् वृषलीत्येतदेव ङीष उदाहरणम् । **नाडायनी चारायणीति** । गोत्रलक्षणायाः 'नडादिभ्यः फक्' । अपत्यमात्रस्य ग्रहणादनन्तरापत्येऽपि भवति—अवन्ती, कुन्तीति, 'इतो मनुष्यजातेः' इति ङीष्भवति । इह तु कुलस्यापत्यं कुलीना ब्राह्मणोति ङीष् न भवति; अजादिषु दर्शनादित्याहुः । **कठीति** । कठेन प्रोक्तम्, वैशम्पायनान्तेवासित्वाण्णिनिः, तस्य 'कठचरकात्' इति लुक्, ततः 'तदधीते' इत्यण्, तस्य 'प्रोक्ताल्लुक्' इति लुक् । **बह्वृचीति** । बह्व्य ऋचोऽस्या इति बहुव्रीहिः, 'बह्वृचश्चरणाख्यायाम्' इत्यकारः समासान्तः । कथं पुनः स्त्री नामाधीते ? मा नामाधिगीष्ट, तद्वंश्यत्वात्तु ताच्छब्द्यं भविष्यति, यथा—अनधीयमाने माणवके ।

अत्रापरं जातिलक्षणमुक्तं भाष्ये—

प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः ।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः ॥ ( म० भा० ४-१-६३ ) इति ।

**सत्त्वस्य प्रादुर्भावविनाशाभ्यां** याऽऽविर्भावतिरोभावौ प्राप्नोति, यावद्द्रव्यभाविनीत्यर्थः । **गुणैश्च युगपद्** द्रव्येण सम्बध्यते यथा निर्गुणं द्रव्यं न भवति, तथा जातिरहितमपीत्यर्थः । **बह्वर्थामिति** । अर्थशब्दो विषयवाची, बहुविषयां बहुव्यक्तिव्यापिनीमित्यर्थः । **असर्वलिङ्गामिति** । पूर्ववल्लक्षणान्तरम् । तत्र यथा पूर्वलक्षणं तथा कुमारीभार्या इति भवितव्यम्, कथम् ? कौमारमयावद्द्रव्यभाव्यपि आकृतिग्रहणत्वाद्भवति जातिः, ततश्च 'जातेश्च' इति पुंवद्भावप्रतिषेधः वृद्धा, स्थविरेत्यादौ च जातिलक्षणो ङीष्प्राप्नोति, यथा पुनरुत्तरं तथा कौमारादिकं जातिर्न भवति; अयावद्द्रव्यभावित्वात् तत्र पूर्वकं लक्षणं भाष्यकारस्याभिमतम्, नोत्तरम्; अपर आहेत्यभिधानात् । तथा च ङ्याप्सूत्रे युवतितरेत्यत्र 'तसिलादिषु' इति प्राप्तस्य पुंवद्भावस्य 'जातेश्च' इति निषेध आश्रितः । अत एव **वृत्तिकारेणाप्येतदेव** लक्षणमुपन्यस्तमिति केचिदाहुः । एवमपि

भावबोधिनी

प्रत्यय होता है—कठेन प्रोक्तम् अधीते । इस णिनि का "कठचरकाल्लुक्" ४।३।१०७ से लुक् हो जाता है । कठप्रोक्त शाखा का अध्ययन करनेवाली शिष्या अर्थ में यहाँ कठ को जातिवाची मानकर ङीष् होता है ।

[ अनु० ] उपर्युक्त जातिलक्षण के आधार पर उदाहरण देते हैं । (१) आकृतिग्रहण जाति के उदा०—] कुक्कुटी । सूकरी । मयूरी । [ इनमें ङीष् होता है । ] (२) असर्वलिङ्गा के उदा०—] ब्राह्मणी । वृषली । [ ये केवल पुंल्लिङ्ग और स्त्रीलिङ्ग में ही होते हैं । ] (३) गोत्र और चरण—के उदा०—] नाडायनी चारायणी [ गोत्रप्रत्ययान्त नाडायन और चारायण से ङीष् है ] । कठी । बह्वृची [ चरण = वेदाध्यायीवाचक से ङीष् होता है । इस विषय में विमर्श में लिखा जा चुका है । जातिवाची से—इसका क्या फल है ? मुण्डा [ सिर मुड़ाये हुयी स्त्री । यह गुणवाची है । अतः ङीष् न होकर टाप् होता है । ] अस्त्रीविषय [ नियतस्त्री विषय न हो—]—इसका क्या फल है ? मक्षिका [ मक्खी । यह सदैव स्त्रीलिङ्ग ही रहता है । अतः स्त्रीविषय होने से ङीष् न होकर टाप् होता है । ] यकारोपध न हो—इसका क्या फल है ? क्षत्रिया [ क्षत्रियगोत्रोत्पन्न स्त्री । इसकी उपधा में यकार होने से ङीष् न होकर टाप् होता है । ]

जातेरिति किम्? **मुण्डा**। अस्त्रीविषयादिति किम्? **मक्षिका**। अयकारोपधादिति किम्? **क्षत्त्रिया**। ॐ **योपधप्रतिषेधे हयगवयमुकयमत्स्यमनुष्याणामप्रतिषेधः** ॐ ( म० भा० ४.१.६३ वा० १ )। **हयी। गवयी। मुकयी। मत्सी। मनुषी**॥

**न्यासः**

**मुण्डेति**। मुण्डगुणयोगात्। मुण्डो भवत्येष इत्यस्त्रीविषयः - मुण्डो देवदत्त इति; पुरुषेऽपि मुण्डशब्दस्य वृत्तेः। न तु जातिशब्दः, किं तर्हि? गुणशब्दः। **मक्षिकेति**। सर्वदा स्त्रियामेव नियतत्वात् स्त्रीविषयो मक्षिकाशब्दः। **क्षत्त्रियेति**। गोत्रमिह जातिः। 'क्षत्त्राद् घः' इति गोत्रापत्ये घविधानादसर्वलिङ्गभाक्त्वाच्च जातित्वम्। 'क्षत्त्रिय' इति च पुंस्यपि वृत्तेरस्त्रीविषयः क्षत्त्रियशब्दः।

योपधस्तु—**योपधप्रतिषेधे हयगवयमुकयमत्स्यमनुष्याणामप्रतिषेध इति**। कथं पुनरेष लभ्यते? उत्तरसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात्। तेन हि हयगवयादिभ्यो ङीष्विधानादयं प्रतिषेधो न प्रवर्तते। **मत्सीति**। 'सूर्यतिष्यागस्त्यमत्स्यानाम्' इति यलोपः। **मनुषीति**। 'मनोर्जातावञ्यतौ षुक् च' इति यत्प्रत्ययः, षुगागमश्च। जातित्वं च पुनरेषां हयगवयादीनामाकृतिग्रहणाद् वेदितव्यम्॥ ६३॥

**पदमञ्जरी**

युवजानिरित्यत्र पुंवद्भावो न प्राप्नोति, तस्माद् द्वितीयमेव लक्षणं साधीयो मन्यामहे। अत एव वृद्धा, स्थविरेति जातिलक्षणो ङीष्न भवति। युवतितरेत्यत्र तु **भाष्यकार**प्रयोगात् पुंवद्भावाभावः।

**मुण्डेति**। गुणशब्दोऽयम्। **मक्षिकेति**। स्त्रियामेवायं नियतः! इह कस्मान्न भवति—माला, बलाकेति? मालाशब्दो मलनं माल इति घञन्तः पुल्लिङ्गः, क्षेत्रविशेषे नपुंसकः, स्रजि स्त्रीलिङ्गः। बलाकाशब्दो हि बलं कायतीति यौगिकः सर्वलिङ्गः, बकजातिवचनः स्त्रीलिङ्गः। नात्र यथाकथञ्चिदस्त्रीलिङ्गविषयत्वं विवक्षितम्, किं तर्हि? यस्मिन्प्रवृत्तिनिमित्ते स्त्रीलिङ्गस्तस्मिन्नेव निमित्ते यल्लिङ्गान्तरेऽपि वर्त्तते तदस्त्रीविषयम्। यथा पुनरयं शब्दार्थस्तथा 'स्त्रियाः पुवद्' इत्यत्र वक्ष्यामः। तेन निमित्तभेदेन नानालिङ्गेषु नायं विधिर्भवति। यद्येवम्, द्रोणो, कुटी, पात्रीत्यत्र न प्राप्नोति? द्रोणशब्दः प्रमाणविशेषे पुलिङ्गः, गवादिन्यां तु स्त्रीलिङ्गः, कुटशब्दो घटे पुलिङ्गः, गेहे तु स्त्रीलिङ्गः, पात्रशब्दो भाजनसामान्येऽर्धर्चादित्वादुभयलिङ्गः, भाजनविशेषे स्त्रीलिङ्गः, गौरादिपाठात्सिद्धम्।

**हयगवयेत्यादि**। गौरादिष्विदानीन्तनैर्हयादयः प्रक्षिप्ता इति **वार्तिककारवचना**द्विज्ञायते॥ ६३॥

**भावबोधिनी**

* यकारोपध के प्रतिषेध में हय, गवय, मुकय, मत्स्य, और मनुष्य का प्रतिषेध नहीं कहना चाहिये अर्थात् इनसे यकारोपध रहने पर भी ङीष् होता है।' * उदा० हयी। [ घोड़ी ]। गवयी [ जंगली गाय ] मुकय। [ एक जानवर विशेष ]। मत्सी [ मछली। मत्स्य + ङीष् = ई, अलोप और य्लोप ]। मनुषी। [ मनुष्य + ङीष् = ई, अलोप, 'हलस्तद्धितस्य' ६।४।१५० से य्लोप ]।

**विमर्श**—"षिद्गौरादिभ्यश्च" ४।१।४१ के गौरादिगण में—मत्स्य, मनुष्य, हय, गवय और मुकय—इन पाँच शब्दों का पाठ है। अतः उसी से ङीष् सिद्ध है। यहाँ वार्तिक में भी इन्हीं पाँच का उल्लेख करके ङीष् किया गया है। इससे दो बाते ज्ञात होती हैं—( १ ) गणपाठ में ये शब्द प्रक्षिप्त हैं अथवा ( २ ) यह वार्तिक एकदेशी आचार्य का है॥ ६३॥

## १३१४. पाककर्णपर्णपुष्पफलमूलबालोत्तरपदाच्च ॥ ६४ ॥ ( ५१९ )

पाकाद्युत्तरपदाज्जातिवाचिनः प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो भवति। स्त्रीविषयत्वादेतेषां पूर्वेणाप्राप्तः प्रत्ययो विधीयते। ओदनपाकी। शङ्कुकर्णी। शालपर्णी। शङ्खपुष्पी। दासीफली। दर्भमूली। गोबाली।

पुष्पफलमूलोत्तरपदात्तु यतो नेष्यते तदजादिषु पठ्यते – 'सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात्' ( ग० सू० ५३ ), 'संभस्त्राजिनशणपिण्डेभ्यः फलात्' ( ग० सू० ५४ ), 'मूलान्नञः' ( ग० सू० ५५ ) इति ॥

## १३१५. इतो मनुष्यजातेः ॥ ६५ ॥ ( ५२० )

इकारान्तात् प्रातिपदिकान्मनुष्यजातिवाचिनः स्त्रियां ङीष् प्रत्ययो भवति। अवन्ती। कुन्ती। दाक्षी। प्लाक्षी। इत इति किम्? विट्। दरत्।

### न्यासः

**पाककर्णपर्णपुष्पफलमूलबालोत्तरपदाच्च ॥ ओदनपाकीति।** ओदनस्य पाक इति षष्ठीसमासः। व्युत्पत्तिमात्रार्थं त्वसौ क्रियते, न त्वत्रावयवार्थो विद्यते। समुदाय एव ह्ययं कस्याञ्चिज्जातौ वर्तते। एवं **शङ्कुकर्णीत्या**दिष्वपि वेदितव्यम् ॥ ६४ ॥

**इतो मनुष्यजातेः ॥ अवन्ती, कुन्तीति।** अवन्ति-कुन्तिशब्दाभ्यामपत्येऽर्थे 'वृद्धेत्कोशलाजादञ्ञ्यङ्' स्त्रियामवन्तिकुन्तिकुरुभ्यश्च' इति तस्य लुक्, ततो ङीष्। **दाक्षी, प्लाक्षीति।** 'अत इञ्'। सर्वत्र गोत्रं हि जातिः।

**विट् दरदिति।** विशोऽपत्येऽर्थे 'जनपदशब्दात् क्षत्रियादञ्'। दरदो द्व्यञ्मगधादि सूत्रेणाण्, 'अतश्च'

### पदमञ्जरी

**पाककर्णपर्णपुष्पफलमूलबालोत्तरपदाच्च ॥ स्त्रीविषयत्वादेतेषामिति।** पूर्वत्र समानायामाकृतौ यदस्त्रीविषयमित्याश्रयणान्निमित्तभेदेन नानालिङ्गानामेषां न सिध्यतीति भावः। ओदनपाकादयः संज्ञाशब्दा यथाकथञ्चिद्व्युत्पाद्याः ॥ ६४ ॥

**इतो मनुष्यजातेः ॥ अवन्ती, कुन्तीति।** अवन्ति-कुन्तिशब्दाभ्यामपत्येऽर्थे 'वृद्धेत्कोसलाजादञ्ञ्यङ्' तस्य 'स्त्रियामवन्तिकुन्तिकुरुभ्यश्चे' इति लुक्। **दाक्षी, प्लाक्षीति।** 'अत इञ्'।

**विट् दरदिति।** विट्शब्दाज्जनपदशब्दात्क्षत्रियादञ्, दरच्छब्दाद् 'द्व्यञ्मगध' इत्यादिनाण्, तयोः

### भावबोधिनी

पाक आदि जिसके उत्तर पद हैं ऐसे जातिवाची प्रातिपदिक से स्त्रीलिङ्ग में ङीष् प्रत्यय होता है। स्त्रीविषय [ नियत स्त्रीलिङ्ग ] होने के कारण पूर्वसूत्र से प्राप्त न होने वाले ङीष् प्रत्यय का विधान होता है। उदा०—ओदनपाकी। [ ओदनस्य पाक इव पाको यस्याः सा ] शङ्कुकर्णी [ शङ्कुः इव कर्णोऽस्याः सा ] शालपर्णी [ शालस्येव पर्णानि यस्याः सा ] शङ्खपुष्पी। शङ्ख इव पुष्पमस्याः सा ]। दासीफली [ दासी इव फलं यस्याः सा ] दर्भमूली [ दर्भ इव मूलमस्याः सा ] गोबाली [ गोबालसदृशो बालोऽस्याः सा। ये सात शब्द औषधिविशेष में रूढ़ हैं। केवल व्युत्पत्ति के लिये इनका विग्रह समझना चाहिये। समुदायशक्ति से ही बोधकता है। इसीलिये स्त्रीविषय हैं। ]

पुष्प, फल और मूल—उत्तरपदवालों में जिससे इष्ट नहीं होता है उसका अजादिगण में पाठ किया जाता है—( १ ) सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात्' ( २ ) 'सम्भस्त्राजिनशणपिण्डेभ्यः फलात्' ( ३ ) 'मूलान्नञः' [ इन तीनों की व्याख्या और उदाहरण "अजाद्यतष्टाप्" ४।१।४ सूत्र पर प्रस्तुत किये जा चुके हैं। अतः वहीं पर ( पृ० २८० ) देखना चाहिये ॥ ६४ ॥

मनुष्य-जातिवाची, इकारान्त प्रातिपदिक से स्त्रीलिङ्ग में ङीष् प्रत्यय होता है। उदा०—अवन्ती [ अवन्ति शब्द से अपत्यार्थक प्रत्यय करके उसका लोप होने के बाद ङीष् होता है। ] कुन्ती [ कुन्ति से भी पूर्ववत् प्रक्रिया होती है। ]

**मनुष्यग्रहणं किम् ? तित्तिरिः । 'जातेः' इति वर्तमाने पुनर्जातिग्रहणं योपधादपि यथा स्यात् – औदमेयी। ( म० भा० )। ❀ इञ उपसंख्यानमजात्यर्थम् ❀ ( म० भा० ४.१.६५ वा० १ )। सौतङ्गमी। मौनचित्ती। सुतङ्गमादिभ्यश्चातुरर्थिक इञ् न जातिः ॥**

## १३१६. ऊङुतः ॥ ६६ ॥ ( ५२१ )

**न्यासः**

इति तयोः स्त्रियां लुक् । इहापि गोत्रं जातिः । **तित्तिरिरिति** । अत्राकृतिग्रहणा जातिः । **उदमेयीति** । 'अत इञ' 'गोत्रमिह जातिः' ।

**इञ उपसंख्यानमिति** । इञन्तान् ङीष उपसंख्यानं कर्तव्यमित्यर्थः । किमर्थम् ? अजात्यर्थम् । अजातिवाचिनोऽपीञन्ताद् यथा स्यात् । तत्रेदं प्रतिपादनम्--'इतः' इति योगविभागोऽत्र क्रियते, तेनेञन्तादजातिवाचिनोऽपि भविष्यतीति । ततः 'मनुष्यजातेः' इत्ययं द्वितीयो योगः पूर्वयोगस्यानित्यत्वज्ञापनार्थः । तेन मनुष्यजातौ नित्यम्, अन्यत्र तु यथादर्शनम् । क्वचिदेव न सर्वत्र । **सौतङ्गमीत्याद्युदाहरणम्** । स्यादेतत्--'अत इञ्' इति गोत्रापत्य एवात्रेञ् विहितः, गोत्रञ्च जातिरेव, तत् किमुच्यते—इञ उपसंख्यानमजात्यर्थमिति ? अत आह—**सुतङ्गमादिभ्य इत्यादि** । सुतङ्गमेन निर्वृत्ता नगरीति 'वुञ्छण्' इत्यादिना सुतङ्गमादित्वादिञ् । 'इतः' इति तपरकरणं दीर्घनिवृत्त्यर्थम् । तेन अवन्तीशब्दादयं न भवति । अवन्तिमिच्छति, 'सुप आत्मनः क्यच्', 'अकृत्सार्वधातुकयोः' इति दीर्घः, अवन्ती य इति स्थिते क्विप्, 'अतो लोपः' इत्यकारलोपः । पूर्वं लोपग्रहणादपृक्तलोपात् प्राग् 'लोपो व्योर्वलि' इति यलोपः, पश्चाद् 'वेरपृक्तस्य' इति वकारस्य । ततः अवन्ती इति स्थिते यदि तपरग्रहणं न क्रियेत, ततोऽस्मादपि स्यात्, ततः 'हल्ङ्याब्भ्यः' इति सुलोपः प्रसज्येत, ततोऽवन्तीरिति न सिध्येत् ॥ ६५ ॥

**ऊङुतः ॥ कुरूरिति** । कुरोरपत्यं स्त्री—कुरुनादिभ्यो ण्यः', 'स्त्रियामवन्ति' इत्यादिना तस्य लुक् ।

**पदमञ्जरी**

'अतश्च' इति लुक् । उदाहरणसिद्धयर्थमेव 'अतः' इत्यस्यानुवृत्तिर्न शक्याऽऽश्रयितुमित्यत्रापि प्रसङ्गः ।

**औदमेयीति** । उदकं मेयमस्य उदमेयः, 'उदकस्योदः संज्ञायाम्' इत्युदभावः, तस्यापत्यम्' 'अत इञ्' ।

**सौतङ्गमी, मौनिचित्तीति** । सुतङ्गम-मुनिचित्तशब्दाभ्यां 'तेन निर्वृत्तम्' इत्यत्रार्थे इञ्प्रत्ययः ॥ ६५ ॥

**ऊङुतः ॥ कुरुरिति** । 'कुरुनादिभ्यो ण्यः' तस्य 'स्त्रियामवन्ति' इत्यादिना लुक् । **ब्रह्मबन्धूर्जीवबन्धूरिति** ।

**भावबोधिनी**

दाक्षी । प्लाक्षी । [ दक्ष और प्लक्ष से अपत्यार्थक इञ् प्रत्यय होने पर इकारान्त हो जाने पर ङीष् हो जाता है । ] इकारान्त से—इसका क्या फल है ? विट् । दरद् । [ विट् का अपत्य, दरद् का अपत्य—इस अर्थ में क्रमशः अञ् और अण् प्रत्यय करके ''अतश्च'' ४।१।१७७ से लोप हो जाता है । यहाँ गोत्र = जाति है । इकारान्त न होने से ङीष् नहीं होता है । ] मनुष्यग्रहण का क्या फल है ? तित्तिरिः । [ तीतर एक पक्षीविशेष । मनुष्यजातिवाची न होने से ङीष् नहीं होता है । ] [ ''जातेः'' ४।१।६३ से ] 'जातेः' इसकी अनुवृत्ति सम्भव रहने पर भी पुनः यहाँ जाति का ग्रहण इसलिये है कि यकारोपध से भी प्रत्यय हो सके; जैसे—औदमेयी [ उदमेय की स्त्री अपत्य—इस अर्थ में ''अत इञ्'' ४।१।९५ से इञ् प्रत्यय, आदिवृद्धि करके औदमेयि + ङीष् = ई । ] * ''जातिवाचक से भिन्न से भी करने के लिये इञन्त से उपसंख्यान करना चाहिये ।'' * सौतङ्गमी । मौनचित्ती । सुतङ्गम आदि से चातुरर्थिक इञ् है जातिवाची नहीं है ।

**विमर्श**—सुतङ्गमेन निर्वृत्ता, मुनिचित्तेन निर्वृत्ता नगरी—इस अर्थ में ''वुञ्छण्कठज०'' ४।२।८० आदि सूत्र से इञ् प्रत्यय होने पर आदिवृद्धि करने पर सौतङ्गमि, मौनचित्ति शब्दों में जातिवाचकता न होने से सूत्र से ङीष् नहीं हो सकता । अतः वार्त्तिक से ङीष् किया गया है ॥ ६५ ॥

''मनुष्यजातेः'' [ मनुष्यजातिवाचक से ]—इसकी अनुवृत्ति होती है । मनुष्यजातिवाची उकारान्त प्रातिपदिक से

**'मनुष्यजातेः' इति वर्त्तते। उकारान्तान्मनुष्यजातिवाचिनः प्रातिपदिकात् स्त्रियामूङ् प्रत्ययो भवति। कुरूः। ब्रह्मबन्धूः। वीरबन्धूः।**

**ङकारः 'नोङ्धात्वोः' (६.१.१७५) इति विशेषणार्थः। दीर्घोच्चारणं कपो बाधार्थम्। 'अयोपधात्'**

**न्यासः**

गोत्रमिह जातिः। **ब्रह्मबन्धूरिति।** ब्रह्म बन्धुरस्याः, वीरो बन्धुरस्या इति बहुव्रीहिः। ब्रह्मबन्धू-वीरबन्धूशब्दो कस्याञ्चिदेव जातौ वर्तते। जातित्वं पुनरसर्वलिङ्गभाक्त्वात्। तौ हि स्त्रीलिङ्गपुंल्लिङ्गावेव, न नपुंसकलिङ्गौ। 'उतः' इति तपरकरणं मुखसुखार्थम्, न तु दीर्घनिवृत्त्यर्थम्; ऊकारान्तस्य मनुष्यजातिवाचिनोऽभावात्।

**ङकार इत्यादि।** ऊङो यदि ङकारो न क्रियेत तदा 'नोङ्धात्वोः' इत्यस्मिन्नपि न कर्तव्यः स्यात्; ङकारानुबन्धवतोऽन्यस्य कस्यचिदूकारस्याभावात्। ततश्च 'नोधात्वोः' इत्युच्यमाने यवाग्वा, यवाग्वै इत्यत्रापि 'उदात्तयणो हल्पूर्वात्' इति तृतीयादिविभक्तेरुदात्तत्वस्य प्राप्तस्य प्रतिषेधः स्यात्। ननु चार्थवत ऊकारस्य ग्रहणाद् 'अर्थवद्ग्रहणे नानर्थकस्य' इत्यनर्थकस्य न भविष्यति, यवागूशब्दो हि 'सुयुवचिभ्यो न्युजागूजक्नुचः' इत्यागूच्प्रत्ययान्तो व्युत्पादितः, तत्रागूच्शब्द एव प्रत्ययार्थेनार्थवान्, ऊकारस्त्वनर्थक एव? नैतदस्ति; यस्मान्न वर्णग्रहणेष्वियं परिभाषा व्यवस्थिता, वर्णग्रहणञ्चेदम्, अतो नोपतिष्ठते। अथोपतिष्ठेत? एवमपि 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' इत्यूप्रत्ययस्य ग्रहणं स्यात्। ततश्च खर्ज्वा, खर्ज्वै—इत्यत्र प्रतिषेधः प्रसज्येत। तस्माद् विशेषणार्थो ङकारः कर्तव्यः। अथ दीर्घोच्चारणं किमर्थम्, ननु उङेवोच्येत, 'अकः सवर्णे

**पदमञ्जरी**

वृत्तस्वाध्यायहीनायां ब्राह्मणजातावेतौ बहुव्रीही वर्तेते।

**ङकार इत्यादि।** 'नोधात्वोः' इत्युच्यमाने, यवाग्वा, यवाग्वै--अत्रापि 'उदात्तयणो हल्पूर्वात्' इति प्राप्तस्य विभक्त्युदात्तस्य निषेधः स्यात्, वर्णग्रहणे ह्यर्थवद्ग्रहणपरिभाषा नोपतिष्ठते। अथ दीर्घोच्चारणं किमर्थम्, न 'उङुतः' इत्येवोच्येत, सवर्णदीर्घत्वेन सिद्धम्? न सिध्यति; सत्यपि सवर्णदीर्घत्वे, 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वं प्राप्नोति। न प्राप्नोति, किं कारणम्? 'उभयत आश्रयणे नान्तादिवत्', तथा हि एकादेशस्यान्तवत्त्वेन प्रातिपदिकसंज्ञा सम्पाद्या, 'अप्रत्ययः' इति निषेधात्। आदिवत्त्वेन च स्त्रीप्रत्ययत्वं सम्पाद्यम्। इह तर्हि ब्रह्मबन्धूच्छत्त्रम्—षत्वतुकोरसिद्धत्वाद् ह्रस्वलक्षणो नित्यस्तुक् प्रसज्येत, दीर्घोच्चारणात्त्वेकादेशस्यासिद्धत्वेऽपि दीर्घ एवायमिति 'दीर्घात् पदान्ताद्वा' इति विकल्पः सिध्यति? एतदपि नास्ति प्रयोजनम्; पदान्तपदाद्योरेकादेशोऽसिद्धः, न चैष पदान्तपदाद्योरेकादेशः। तस्मादनर्थकं दीर्घोच्चारणम्? इत्याशङ्क्याह—**दीर्घोच्चारणं कपो बाधनार्थमिति।** 'शेषाद्विभाषा' इति कपोऽवकाशः—अयवकः, अव्रीहिकः, ऊङोऽवकाशः—कुरूरिति;

**भावबोधिनी**

स्त्रीलिङ्ग में ऊङ् प्रत्यय होता है। उदा०—कुरूः [ कुरू राजा की स्त्री अपत्य - इस अर्थ में "कुरुनादिभ्यो ण्यः" ४।१।१७२ से ण्य प्रत्यय और 'स्त्रियामवन्तिकुन्तिकुरुभ्यश्च" ४।१।१७६ से उसका लुक् करके गोत्र = जाति मानकर प्रस्तुत सूत्र से ऊङ् = ऊ प्रत्यय, सवर्णदीर्घ करने पर रूप सिद्ध होता है। ] ब्रह्मबन्धूः। वीरबन्धूः। [ ब्रह्म बन्धुः अस्याः सा, वीरः बन्धुः अस्याः सा। आचरणहीन ब्राह्मणजाति के वाचक ये शब्द हैं। ] "नोङ्धातोः" ६।१।१७५ इसको विशेषित करने के लिये ङकार अनुबन्ध है। [ केवल ऊ करने पर "नोङ्धात्वोः" ६।१।१७५ से यवाग्वा यवाग्वै आदि में 'उदात्तयणो हल्पूर्वात्' ६।१।१७४ से प्राप्त तृतीयादि के उदात्तत्व का प्रतिषेध होने लगता। ङकारविशिष्ट ऊङ् करने से ऊङन्त का ही प्रतिषेध होगा, यवागू आदि का नहीं। ] ऊकार का दीर्घ उच्चारण [ समासान्त में प्राप्त होने वाले ] कप् का बाध करने के लिये है। 'अयोपधात्' [ यकारोपध से भिन्न ] इसको यहाँ भी अपेक्षा है। अध्वर्युः ब्राह्मणी [ शाखा का अध्ययन करनेवाली मानकर जाति है। यकारोपध होने के कारण ऊङ् नहीं होता है। ]

**इत्येतदत्रापेक्ष्यते । अध्वर्युर्ब्राह्मणी ।**

**※ अप्राणिजातेश्चारज्ज्वादीनामिति वक्तव्यम् ※ ( म० भा० ४.१.६६ वा० १ )। अलाबूः । कर्कन्धूः । अप्राणिग्रहणं किम् ? कृकवाकुः । अरज्ज्वादीनामिति किम् ? रज्जुः । हनुः ॥**

**न्यासः**

दीर्घः' इति दीर्घत्वेन हि दीर्घस्य ग्रहणं भवति ? इत्यत आह – **दीर्घोच्चारणमित्यादि** । यदि दीर्घो नोच्चार्येत तदा 'शेषाद् विभाषा' इति परत्वात् पक्षे कप् स्यात्, अतस्तद्बाधनार्थं दीर्घोच्चारणम् । कथं पुनर्दीर्घोच्चारणेन कपो निवृत्तिः ? ब्रह्मा बन्धुरस्येति समासादनन्तरमूङ् क्रियताम् ? उत कबिति ? तत्र परत्वात् कप् स्यात्; दीर्घोच्चारणेनोकारप्रश्लेषात् । पुनर्विधानं तुल्यकालप्राप्तिकं स्वार्थिकतया समानजातीयं कब्विधिमेव निवर्तयति, न स्वादिविधिम् । स्वादयस्तूङन्ताद् भवन्त्येव; त्यूङोरपि ग्रहणात्; ज्ञापकाद्वा, 'श्वशुरः श्वश्र्वा' इति निर्देशात् । तेन ब्रह्मबन्धूरिति नित्यमूकारान्त एव भवति, न तु कदाचित् कबन्तः । **अध्वर्युरिति** । अध्वरमिच्छतीति क्यच्, 'क्याच्छन्दसि' इत्युप्रत्ययः, 'कव्यध्वरपृतनस्यर्चि लोपः' इत्यकारलोपः ।

**अप्राणिजातेश्चेत्यादि** । अप्राणिजातिवाचिनश्च प्रातिपदिकाद् ऊङ् प्रत्ययो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—'पङ्गोश्च' इत्यत्र चकारोऽनुक्तसमुच्चयार्थः, तेनाप्राणिजातेश्च रज्ज्वादिवर्जिताद् भविष्यति । **अलाबूः, कर्कन्धूरिति** । कः पुनरस्योङि सत्यसति वा विशेषः, यावतोभयत्र तदेव रूपं स एव स्वरः; तथा हि–अलाबूशब्द उणादिषूकारप्रत्ययान्त एव व्युत्पाद्यते, 'कृषिचमितनिधनिसर्जि-खर्जिभ्य ऊः' इति 'वर्तमाने णित्' इति च 'नञि लम्बेर्नलोपश्च' इति नञ्पूर्वात् 'लबि अवस्रंसने' इत्यस्माद् ऊप्रत्ययः, 'इदितो नुम्' इत्यनेन कृतनुमागमरूपस्य नकारस्य नलोपश्च विहितः; कर्कन्धूशब्दोऽपि 'नृतिश्रृध्योः कूः' इति वर्तमाने 'अन्दूदृन्भूजम्बूकफेलूकर्कन्धूदिधिषूः' इत्यूकारान्त एव व्युत्पादितः, तत्

**पदमञ्जरी**

ब्रह्मबन्ध्वादेर्बहुव्रीहेरुभयप्रसङ्गे परत्वात् कप् प्राप्नोति, दीर्घोच्चारणान्न भवति, कथम् ? उकारद्वयं दीर्घेण निर्दिष्टम्, तत्र द्वितीय उकारः कपो बाधनार्थः । **अध्वर्युरिति** । अध्वरं यातीति 'मृगय्वादयश्च' इत्युणादिषु दर्शनात् कुप्रत्ययोऽध्वरशब्दस्यान्तलोपश्च । चरणलक्षणेयं जातिः, अध्वर्युशाखाध्यायिनि वंशे भवेत्यर्थः ।

**अप्राणिजातेश्चेति** । अत्र 'उतः' इति नापेक्ष्यते, तेनालाबू-कर्कन्धूशब्दाभ्यां दीर्घान्ताभ्यामपि भवति । 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' इति वर्तमाने 'णित्कशिपद्यर्तेः' इत्यतो णिदिति च, 'नञि लम्बेर्नलोपश्च', 'लबि अवस्रंसने', तस्मान्नञ्पूर्वादूप्रत्ययो भवति नलोपश्च, णित्त्वाद् वृद्धिः, अन्दूदृम्भूकर्कन्धूः' इति निपातनादूकारान्तः कर्कन्धूशब्दः । एवमलाबू-कर्कन्धूशब्दौ दीर्घान्तौ । ऊङ्विधानमलाब्वा, कर्कन्ध्वा इत्यादौ 'नोङ्धात्वोः' इति विभक्त्युदात्तत्वप्रतिषेधार्थम् । **कृकवाकुरिति** । 'कृके वचः कश्च' कृकशब्द उपपदे वचेर्धातोरुण् प्रत्ययो भवति, कश्चान्तादेशः । **रज्जुरिति** । 'सृजेरसुम् च', आदिलोपः प्रकृतः , सृजेरुप्रत्ययः, आदेश्च लोपोऽसुगा-

**भावबोधिनी**

प्राणिभिन्न जाति के वाचक उकारान्त प्रातिपदिक से ऊङ् कहना चाहिये । रज्जु आदि का उपसंख्यान नहीं करना चाहिये ।" उदा० – अलाबूः । कर्कन्धूः [ अलाबू और कर्कन्धू ये दीर्घ ऊकारान्त हैं । अतः इनमें ऊङ् होने या न होने पर कोई अन्तर नहीं होता है । परन्तु तृतीया आदि में अलाब्वा, कर्कन्ध्वा इनमें "नोङ्धातो" ६।१।१७५ से विभक्ति के उदात्तत्व का प्रतिषेध करना ही इनमें ऊङ् करने का फल है । अतः यहाँ तृतीयादि विभक्ति के ही उदाहरण देने चाहिये थे । सिद्धान्तकौमुदी में तृतीया के ही उदाहरण दिये गये हैं । ] अप्राणी = प्राणी से भिन्न – इसका ग्रहण किस लिये है ? कृकवाकुः [ यह प्राणीविशेष की जाति का वाचक है । अतः ऊङ् नहीं होता है । ] रज्जु आदि को छोड़कर—इसका क्या फल है ? रज्जुः । हनुः [ रस्सी । ठोंड़ी । इनमें ऊङ् नहीं होता है ॥ ६६ ॥

१३१७. बाह्वन्तात् संज्ञायाम् ।। ६७ ।। ( ५२२ )

**बाहुशब्दान्तात् प्रातिपदिकात् संज्ञायां विषये स्त्रियामूङ् प्रत्ययो भवति । भद्रबाहूः । जालबाहूः । संज्ञायामिति किम् ? वृत्तौ बाहू यस्याः सा वृत्तबाहूः ।।**

१३१८. पङ्गोश्च ।। ६८ ।। ( ५२३ )

**पङ्गुशब्दात् स्त्रियामूङ् प्रत्ययो भवति । पङ्गूः ।**

*** श्वशुरस्योकाराकारयोर्लोपश्च वक्तव्यः[1] * ( ? ) । श्वश्रूः ।।**

१३१९. ऊरूत्तरपदादौपम्ये ।। ६९ ।। ( ५२४ )

**ऊरूत्तरपदात् प्रातिपदिकादौपम्ये गम्यमाने स्त्रियामूङ् प्रत्ययो भवति । कदलीस्तम्भोरूः । नागनासोरूः ।**

**न्यासः**

किमर्थमूङ् विधीयते ? अलाब्वा, अलाब्वै—इत्यत्र 'नोङ्धात्वोः' इति विभक्त्याद्युदात्तत्वप्रतिषेधो यथा स्यात् । असति हि तस्मिन् यथा खलप्वौ, खलप्वः—इत्यत्र स न भवति तथेहापि न स्यात् ।। ६६ ।।

**बाह्वन्तात् संज्ञायाम् ।।** ६७ ।।

**पङ्गोश्च ।। श्वशुरस्योकाराकारयोर्लोपश्चेति ।** अयं तु 'श्वशुरः श्वश्र्वा' इति निपातनादेव सिद्ध इति न वक्तव्यः ।। ६८ ।।

**ऊरूत्तरपदादौपम्ये ।। वृत्तोरुरिति ।** वृत्तौ = परिमण्डला ऊरू यस्याः सा वृत्तोरुः लाघवार्थमूर्वन्तादिति वक्तव्य ऊरूत्तरपदादित्युक्तम्—यत्र केवल ऊरुशब्द उत्तरपदं तत्र यथा स्यादित्येवमर्थम्; अन्यथा हि

**पदमञ्जरी**

गमश्च, ऋतो यणादेशः, सकारस्य जश्त्वचर्त्वे, सृज्यतेऽसौ रज्जुरिति । **हनुरिति ।** 'युस्निहि' इत्यादिना हन्तेरुप्रत्ययः ।। ६६ ।। ६७ ।।

**पङ्गोश्च ।। श्वशुरस्येति ।** पुंयोगलक्षणस्य ङीषोऽपवाद ऊङ् विधीयते, 'शावशेराप्तौ' शुशब्देऽश्नोतेरुरन् प्रत्ययो भवति । किमिदं शु इति ? आशुशब्दस्यायमादिलोपो निपातितः । आश्वाप्तव्यः श्वशुरः, तस्य स्त्री श्वश्रूः, 'श्वशुरः श्वश्र्वा' इत्यदिनिपातनाद्विभक्त्यादि प्रातिपदिककार्यं भवति ।। ६८ ।।

**ऊरूत्तरपदादौपम्ये ।।** उपमीयतेऽनयेत्युपमा, तद्भाव औपम्यम् । कथं 'विचकरे च करेणुकरोरुभिः'

**भावबोधिनी**

संज्ञाविषय में = किसी का नाम होने पर बाहुशब्दान्त प्रातिपदिक से स्त्रीलिङ्ग में ऊङ् प्रत्यय होता है । उदा०—भद्रबाहूः । जालबाहूः [ भद्रौ बाहू यस्याः साः, जालम् इव बाहू यस्याः सा—ये यौगिक अर्थ व्युत्पत्ति के लिये हैं । ये संज्ञा शब्द = रूढ़ हैं । ऊङ् = ऊ और सवर्णदीर्घ होता है । ] संज्ञा होने पर—इसका क्या फल है ? वृत्तबाहूः [ वृत्तौ = वर्त्तुलौ बाहू यस्याः सा । यह गोलबाहुओं वाली स्त्री के लिये यौगिक है । संज्ञा नहीं है । ] ।। ६७ ।।

पङ्गु शब्द से स्त्रीलिङ्ग में ऊङ् प्रत्यय होता है । उदा०—पङ्गूः । [ पङ्गु + ऊङ् = ऊ, सवर्णदीर्घ ] । * श्वशुर शब्द के उकार और अकार का लोप होता है और ऊङ् प्रत्यय होता है ।" श्वश्रूः [ श्वशुर + ऊङ्, ऊकार और अकार का लोप होने पर श्वश्र् + ऊ = श्वश्रूः बनता है । श्वश्रू = सास ।

औपम्य = सादृश्य प्रतीत रहने पर ऊरु शब्द जिसके उत्तर पद में हो, ऐसे प्रातिदिक से स्त्रीलिङ्ग में ऊङ् प्रत्यय होता है । उदा०—कदलीस्तम्भोरूः ( कदलीस्तम्भ इव ऊरू यस्याः सा ] नागनासोरूः । [ नागनासा इव ऊरू यस्याः सा ] करभोरूः । [ करभौ इव ऊरू यस्याः सा । ]

---

१. मूलमन्वेषणीयम् । भाष्ये तु न दृश्यते ।

करभोरूः । औपम्य इति किम् ? वृत्तोरुः स्त्री ॥

**१३२०. संहितशफलक्षणवामादेश्च ॥ ७० ॥ ( ५२५ )**

**संहित, शफ, लक्षण, वाम—इत्येवमादेः प्रातिपदिकादूरूत्तरपदात् स्त्रियामूङ् प्रत्ययो भवति । अनौपम्यार्थ आरम्भः । संहितोरूः । शफोरूः । लक्षणोरूः । वामोरूः । ॐ सहितसहाभ्यां चेति वक्तव्यम् ॐ ( म० भा० ४.१.७० ) । सहितोरूः । सहोरूः ॥**

**न्यासः**

यद्यूर्वन्तादित्युच्येत, तदा स्वामिन ऊरू स्वाम्यूरू, हस्तिन इव स्वाम्यूरू यस्याः सा हस्तिस्वाम्यूरुरित्यत्रापि स्यात्, भवति ह्येतदूर्वन्तं प्रातिपदिकम् । उत्तरपदग्रहणे तु न दोषः, न ह्येतदूरूत्तरपदं प्रातिपदिकम्, किं तर्हि ? स्वाम्यूरूत्तरपदम् ॥ ६९ ॥

**संहितशफलक्षणवामादेश्च ॥ संहितोरूरिति ।** संहितशब्दः[1] संश्लिष्टवचनः, संश्लिष्टोरुरित्यर्थः[1] । ॐ **सहितसहाभ्याञ्चेति वक्तव्यम्** ॐ । सहित, सह—इत्येताभ्यां परो य ऊरुशब्दस्तदन्ताच्च प्रातिपदिकादूङ् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन सहितसहाभ्यामपि भविष्यति । सूत्र आदिग्रहणमूरूत्तरपदमित्यस्यानुवृत्तेर्लिङ्गम्; अन्यथा संहितादिप्रातिपदिकेभ्य एव प्रत्ययो भवतीत्येषोऽर्थो विज्ञायेत । सत्यां हि स्वरितत्वादेवानुवृत्तावेभ्यो यत्परमूरूत्तरपदं सत्यप्यस्मिन् मध्यपदे तत्रैव प्रत्ययः प्रसज्येत; संहितस्वाम्यूरुशब्दात्, न संहितोरुशब्दात् । गुणभावादूरुशब्दस्य न स्यादेवेह विशेषणम् ॥ ७० ॥

**पदमञ्जरी**

इति ? निरङ्कुशाः कवयः; 'करेण वरोरुभिः' इति पाठः—करेण विचकरे वरोरुभिरिति ॥ ६९ ॥

**संहितशफक्षलणवामादेश्च ॥** संहितशब्दः सहितपर्यायः, लक्षणशब्दोऽर्शआद्यच्प्रत्ययान्तः, वामशब्दः शोभनपर्यायः । * **सहितसहाभ्यां चेति** * । 'समो वा हिततयोः' इति मलोपे सति यः सहितशब्दस्तस्य संहितग्रहणेनैव सिद्धम् एकदेशविकृतस्यानन्यत्वात् । यस्तु सह हितेन वर्तते इति व्युत्पन्नः सहितशब्दस्तस्येदं ग्रहणमित्याहुः । **सहोरूरिति** । सहेते इति सहौ, तादृशावूरू यस्या इत्यर्थः । विद्यमानस्य वा सहशब्दस्य ऊर्वतिशयप्रतिपादनाय प्रयोगः ॥ ७० ॥

**भावबोधिनी**

औपम्य = सादृश्य में—इसका क्या लाभ है ? वृत्तोरुः स्त्री । [ वृत्तौ = परिमण्डलौ ऊरू यस्याः सा, यहाँ औपम्य = सादृश्य की प्रतीति न होने से ऊङ् नहीं होता है । ] ॥ ६६ ॥

ऊरू जिसके उत्तर पद में है, ऐसे संहित, शफ, लक्षण और वाम—इन प्रातिपदिकों से स्त्रीलिङ्ग में ऊङ् प्रत्यय होता है । अनौपम्य = सादृश्यभिन्न के लिये यह सूत्र है । उदा०—संहितोरूः [ संहितौ = संश्लिष्टौ ऊरू यस्याः सा ] शफोरूः [ शफौ ऊरू यस्याः सा ] लक्षणोरूः [ लक्षण शब्द लक्षणवान् अर्थवाचक है । [लक्षणौ ऊरू यस्याः सा । ] वामोरूः [ वामौ = शोभनौ ऊरू यस्याः सा ] सहित और सह शब्द से उत्तरवर्त्ती ऊरू शब्द वाले प्रातिपादिक से भी ऊङ् कहना चाहिये । सहितोरूः [ सहितौ ऊरू यस्याः सा । हितेन सह—सहितौ, तादृशौ ऊरू यस्याः सा । सहेते इति सहौ = सहनशीलौ ऊरू यस्याः सा ] सहोरूः । [ हितकारी ऊरूओं वाली । सहनशील ऊरूओं वाली ] ॥ ७० ॥

---

१-१. 'संहितशब्दः संसृष्टवचनः, संसृष्टोरुरित्यर्थः' इति वङ्गपुस्तके पाठः ।

१३२१. कद्रुकमण्डल्वोश्छन्दसि ॥ ७१ ॥ ( ३४४९ )

कद्रुशब्दात् कमण्डलुशब्दाच्च छन्दसि विषये स्त्रियामूङ् प्रत्ययो भवति। 'कद्रूश्च वै सुपर्णी च' (तै० सं० ६.१.६)। मा स्म कमण्डलूं शूद्राय दद्यात्। छन्दसीति किम्? कद्रुः। कमण्डलुः। ॐ गुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम् ॐ (म० भा० ४.१.७१)। गुग्गुलूः (अथर्व ४.३७.३)। मधूः (अथर्व० ७.५६.२)। जतूः (मै० ३.१४.६)। पतयालूः (अथर्व० ७.११५.२)॥

१३२२. संज्ञायाम् ॥ ७२ ॥ ( ५२६ )

कद्रुकमण्डलुशब्दाभ्यां संज्ञायां विषये स्त्रियामूङ् प्रत्ययो भवति। अच्छन्दोऽर्थं वचनम्। कद्रूः। कमण्डलूः। संज्ञायामिति किम्? कद्रुः। कमण्डलुः॥

१३२३. शार्ङ्गरवाद्यञो ङीन् ॥ ७३ ॥ ( ५२७ )

शार्ङ्गरवादिभ्योऽञन्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीन् प्रत्ययो भवति। शार्ङ्गरवी। कापटवी। अञन्तेभ्यः—बैदी। और्वी। जातिग्रहणं चेहानुवर्त्तते। तेन जातिलक्षणो ङीष् अनेन बाध्यते, न पुंयोगलक्षणः—बैदस्य स्त्री बैदी। शार्ङ्गरव, कापटव, गौगुलव, ब्राह्मण, गौतम—एतेऽणन्ताः। कामण्डलेय, ब्राह्मकृतेय,

न्यासः

कद्रुकमण्डल्वोश्छन्दसि॥ कद्रुशब्दो वर्णविशेषवचनः, ततः 'वोतो गुणवचनात्' इति ङीषः प्राप्तस्य 'खरुसंयोगोपधयोः' इति प्रतिषेधे कृते प्रातिपदिकेनानभिधाने प्राप्ते वचनम्। कमण्डलुशब्दस्याप्यप्राणिवाचित्वाद् 'अप्राणिजातेश्चारज्ज्वादीनाम्' इत्यूङि प्राप्ते छन्दसि नियमार्थम्। अथ वा—अयं रज्ज्वादिः, ततः प्रतिषेधे सति प्राप्त्यर्थं वचनम् ॥ ७१ ॥

संज्ञायाम् ॥ ७२ ॥ शार्ङ्गरवाद्यञो ङीन्॥ बैदी, और्वीति। विदौर्वशब्दाभ्याम् 'अनृष्यानन्तर्ये' इत्यादिनाऽञ्, तदन्ताद् गोत्रत्वाज्जातित्वे जातिलक्षणे ङीषि प्राप्ते ङीन् विधीयते। स्वरे विशेषः।

पदमञ्जरी

कद्रुकमण्डल्वोश्छन्दसि॥ गुग्गुल्वादीनां छन्दसि व्यत्ययेन स्त्रीत्वम्। पतयालुशब्दः 'स्पृहिगृहि' इत्यादिनाऽऽलुजन्तः ॥ ७१ ॥ ७२ ॥

शार्ङ्गरवाद्यञो ङीन्॥ एतेऽणन्ता इति। शृङ्गरु, कपटु, गुग्गुलु, ब्रह्मन्—इत्येतेभ्यः प्राग्दीव्यतोऽण्,

भावबोधिनी

वेदविषय में कद्रु और कमण्डलु शब्दों से स्त्रीलिङ्ग में ऊङ् प्रत्यय होता है। उदा०—कद्रूश्च वै सुपर्णी च [ सर्पों की माता, गरुड़ की माता। कद्रु + ऊङ्। ] मा स्म कमण्डलूं शूद्राय दद्यात्। [ कमण्डलु + ऊङ् ] वेद में—इसका ग्रहण किस लिये है? कद्रुः। कमण्डलुः। [ लौकिक संस्कृत में नहीं होता है। ] * 'गुग्गुलु, मधु, जतु और पतयालु—इनसे ऊङ् कहना चाहिये।' गुग्गुलूः [ गुग्गुलु + ऊङ् ]। मधूः [ मधु + ऊङ् ]। जतूः [ जतु + ऊङ् ]। पतयालूः [ पतयालु + ऊङ्। गिरने वाली ] ॥ ७१ ॥

संज्ञा = नाम अर्थ में कद्रु और कमण्डलु से स्त्रीलिङ्ग में ऊङ् प्रत्यय होता है। वेद से भिन्न स्थल के लिये यह सूत्र है। उदा०—कद्रूः। [ कद्रु + ऊङ्, दीर्घ, कद्रू = सर्पों की माता। ] कमण्डलूः [ कमण्डलु + ऊङ्, पशुविशेष का नाम ]। संज्ञा = नाम अर्थ होने पर—इसका क्या लाभ है? कद्रुः। कमण्डलुः। [ यहाँ नहीं होता है। ] ॥ ७२ ॥

शार्ङ्गरव आदि से और अञन्त प्रातिपदिक शब्दों से स्त्रीलिङ्ग में ङीन् प्रत्यय होता है। उदा०—शार्ङ्गरवी। कापटवी। [ शृङ्गरु की स्त्री अपत्य शार्ङ्गरव। शार्ङ्गरव + ङीन् = ई। ]। अञन्त—बैदी [ विदस्य स्त्री अपत्यम् अर्थ में 'अनृष्यानन्तर्ये विदादिभ्योऽञ्' ४।१।१०४ से अञ् प्रत्यय आदिवृद्धि करने पर बैद + ङीन् = ई ] और्वी [ और्व + ङीन् ]।

**आनिचेय, आनिधेय, आशोकेय — एते ढगन्ताः । वात्स्यायन, मौञ्जायन—एतौ फगन्तौ जातिः । कैकसेयः – ढगन्तः । काव्य-शैव्यौ ञ्यङन्तौ । एहि, पर्येहि – कृदिकारान्तौ । आश्मरथ्यः – यञन्तः । औदपानः –**

**न्यासः**

**अणन्ता एत इति ॥** गौतमशब्दादपत्येऽर्थे 'ऋष्यन्धकवृष्णि' इत्यादिनाऽण्, शेषेभ्यस्तु 'तस्यापत्यम्' इति । गौतमशब्दाद् गौरादिपाठाद् ङीषपि भवति । **ढगन्ता एत इति ।** शुभ्रादित्वात् । **कामण्डलेय इति ।** 'ढेलोपोऽकद्र्वा' इत्युकारलोपः । एषां 'टिड्ढाणञ्' इति ङीपि प्राप्ते वचनम् । **वात्स्यायन इति ।** वत्सशब्दाद् गर्गादियञन्ताद् 'यञिञोश्च' इति फक् । **मौञ्जायन इति ।** मुञ्जशब्दात् 'नडादिभ्यः फक्' इति फक् । **जातिरिति ।** गोत्रलक्षणा । लौकिकमपि हि तत्र गोत्रं गृह्यते । युवापि च लोके गोत्रमुच्यते, तथा हि वक्तारो वदन्ति—गार्ग्यायणो गोत्रेणेति । **ढगन्ता इति ।** केकसशब्दस्य[1] शुभ्रादित्वात् अढगन्तात् ञ्यङन्तादपि ताविति । कपि-शिविशब्दाभ्यामपत्येऽर्थे 'वृद्धेत्कोशलाजादाञ्ञ्यङ्' इति ञ्यङ् । 'यङश्चाप्' इति चापि प्राप्ते वचनम् । एहि, पर्येहीति । 'ईह चेष्टायाम्' इत्यस्मादाङ्पूर्वात् पर्याङ्पूर्वाच्च 'सर्वधातुभ्यः' इतीन्प्रत्ययः । बह्वादिषु 'कृदिकारादक्तिनः' इति पाठाद् ङीषि प्राप्ते वचनम् । **यञन्त इति ।** गर्गादित्वात् । 'यञश्च', 'प्राचां ष्फ तद्धितः' इति ङीपि ष्फे च प्राप्ते वचनम् । **उदपान इति ।** उदपानादागत इति 'शुण्डिकादिभ्योऽण्' इत्यण् । उत्सादिष्वयं

**पदमञ्जरी**

गोतमशब्दादृष्यण्, गौरादिष्वप्ययं पठितः । **एते ढगन्ता इति ।** बाहुल्यादेवमुक्तम् । कमण्डलुशब्दाच्चतुष्पाद्भ्यो ढञ्, इतरेभ्यस्तु शुभ्रादिलक्षणो ढक् । **एतौ फगन्ताविति ।** वात्स्यशब्दाद् गर्गादियञन्ताद्यूनि 'यञिञोश्च' इति फक् । ननु न स्त्रियां युवसंज्ञा, 'गोत्राद्यून्यस्त्रियाम्' इति वचनात्, गोत्रे च 'एको गोत्रे' इति नियमः ? एवं तर्हि वात्स्यायनशब्दस्यास्मिन् गणे पाठसामर्थ्यात्स्त्रियां युवसंज्ञा भविष्यति, गोत्र एव वा प्रत्ययद्वयम् । मुञ्जशब्दो नडादिः । **जातिरिति ।** गोत्रलक्षणा । **ढगन्त इति ।** कीकसाशब्दः शुभ्रादिः । **ञ्यङन्ताविति ।** 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' इति कवि-शिविभ्यां ञ्यङ्, 'यङश्चाप्' अत्र प्राप्नोति । **एहि, पर्येहीति ।** 'ईह चेष्टायाम्' आङ्पूर्वात्पर्याङ्पूर्वाच्च 'सर्वधातुभ्य इन्' इतीन् प्रत्ययः, अश्मरथशब्दो गर्गादिः, उदपानशब्दः शुण्डिकादिः, उत्सादिश्च, तत्राह—**शुण्डिकाद्यणन्तः प्रयोजयतीति ।** अन्ते तु ङीपो ङीनो वा नास्ति विशेषः । **जातिरिति ।** अराल-चण्डालयोरसर्वलिङ्गत्वाज्जातित्वम् । वतण्डशब्दस्य गोत्रत्वात् । वतण्डस्यापत्यं स्त्री

**भावबोधिनी**

यहाँ जातिग्रहण की अनुवृत्ति होती है । [ इसलिये यह ङीन् प्रत्यय जातिलक्षणङीष् का बाध करता है, पुंयोगलक्षण ङीष् का नहीं ]—वैदस्य स्त्री—वैदी । [ ङीष् और ङीन् में स्वर का अन्तर होता है । ङीष् प्रत्यय आद्युदात्त होता है ङीन् नित् होने से "ञ्नित्यादिर्नित्यम्" ६।१।१९७ से निष्पन्न आद्युदात्त होता है । ]

[ शार्ङ्गरवादि गण में—] शार्ङ्गरव, कापटव, गौगुलव, ब्राह्मण और गौतम – ये सभी अण् प्रत्ययान्त हैं । यहाँ शृङ्गरु + अण् = अ, आदिवृद्धि, उकार का गुण अव् आदेश शार्ङ्गरव बना है । इसी प्रकार अन्य में भी अण् होता है । **कामण्डलेय, ब्राह्मकृतेय, आनिचेय, आनिधेय, आशोकेय** – ये सभी ढक् प्रत्ययान्त हैं । [ कमण्डलु + ढक् = ढ = एय, आदिवृद्धि 'ढे लोपोऽकद्र्वा' ६।४।१४७ से उकार का लोप होता है । इसी प्रकार अन्य शब्दों में भी समझना चाहिये । ] **वात्स्यायन, मौञ्जायन** ये दोनों फक् प्रत्ययान्त गोत्रलक्षण जातिवाची हैं । [ यञन्त वात्स्य से फक् = फ = आयन । मुञ्ज + फक् = फ = आयन, आदिवृद्धि । ] **कैकसेयः** ढक् प्रत्ययान्त है । [ कीकसा + ढक् = ढ = एय, आदिवृद्धि, आलोप ] **काव्य और शैव्य** ञ्यङ् प्रत्ययान्त [ कवि + ञ्यङ्, आदिवृद्धि, भसंज्ञा के कारण "यस्येति च" ६।४।१४८ से इ का लोप । शिवि + ञ्यङ् शेष प्रक्रिया पूर्ववत् ] **एहि, पर्येहि**—ये दोनों कृत् इकार प्रत्ययान्त हैं [ आङ् + ईह् धातु से

---

१. कीकसाशब्दस्य इति वा पाठः ।

**उदपानशब्दः शुण्डिकाद्यणन्तः प्रयोजयति । अराल, चण्डाल, वतण्ड – जातिः ।**

**'भोगवद्गौरिमतोः संज्ञायां घादिषु नित्यं ह्रस्वार्थम्' ( ग० सू० ५६ ) ।**

**न्यासः**

इत्याद्युदात्तेन भवितव्यमित्येतन्मनसि कृत्वाऽऽह–**शुण्डिकाद्यणन्तः प्रयोजयतीति । जातिरिति ।** अराल—चण्डालयोरसर्वलिङ्गत्वादिति जातित्वम् । वतण्डस्य गौरादिलक्षणे[1] ङीषि[1] प्राप्ते वचनम् । प्रत्ययलक्षणेन 'यञश्च', 'प्राचां ष्फ तद्धितः' इति ङीप्ष्फयोर्बाधनम् । वतण्डस्यापत्यं स्त्री 'वतण्डाच्च' इति यञ्, तस्य 'लुक् स्त्रियाम्' इति लुक् ।

**भोगवद्गौरिमतोः संज्ञायामिति ।** संज्ञायां गम्यमानायाम् भोगवद्गौरिमच्छब्दाभ्यां ङीन् भवति । मत्वन्तत्वाद् 'उगितश्च' इति ङीपि प्राप्ते वचनम् । ननु च भोगशब्दो घञन्तः गौरिशब्दः 'अत इञ्' इतीञन्तः, तेन द्वावप्येतौ ञित्स्वरेणाद्युदात्तौ, ताभ्यां मतुप्, पित्त्वादनुदात्तः । तथा च भोगवद्गौरिमद्भ्यां ङीपि ङीनि वा विहिते न कश्चिद् विशेषः तत्किमर्थं ताभ्यां ङीन् विधीयते ? इत्यत आह—**घादिषु नित्यं ह्रस्वार्थमिति ।** 'घरूपकल्प' इत्यादिषु नित्यं ह्रस्वो यथा स्यादिति ताभ्यां ङीनो विधानम्—भोगवतितरा, गौरिमतितरेति । पठ्यत इति तत्राञि कृते । नास्ति विशेषः—ङीपो वा ङीनो वा, उभयत्रापि हि 'ञ्नित्यादिर्नित्यम्'

**पदमञ्जरी**

'वतण्डाच्च' इति यञ्, 'लुक् स्त्रियाम्' इति तस्य लुक् । **भोगवद्गोरिमतोरिति ।** मत्वन्तत्वात् 'उगितश्च' इति ङीपि प्राप्ते वचनम् । ननु भोगशब्दो घञन्तः, गौरिशब्दः 'अत इञ्' इतीञन्तः, तौ ञित्स्वरेणाद्युदात्तौ, ताभ्यां मतुप्, पित्त्वादनुदात्तः, ततश्च न ङीब्ङीनोरत्रास्ति विशेषः ? तत्राह—**घादिषु नित्यमिति ।** उगिल्लक्षणे ङीपि सति 'नद्याः शेषस्यान्यतरस्याम्', 'उगितश्च' इति विकल्पेन ह्रस्वत्वं स्यात्, ङीनि तु सति 'घरूपकल्प' इति नित्यं सम्भवति । कथं भवति, यावता उगितः परा या नदी तस्या विकल्पो विहितः, ङीनपि चोगितः परा नदी, भोगवद्गौरिमतोरुगित्त्वात् ? नैष दोषः; 'उगितश्च' इति इत्यर्थेऽयं चशब्दः, उगित इत्येवमुगित्संशब्दनेन या नदी विहिता न चानेन विहितो ङीनेवं विहिता नदो भवति । यथा तु 'युवोरनाकौ' इत्यत्र भाष्यम्, तथोगितः परा या नदीत्येतदेव स्थितम् । संज्ञाया अन्यत्र ङीबेव भवति ह्रस्वश्च विकल्पितः ।

**भावबोधिनी**

'सर्वधातुभ्य इन्' उणादि सूत्र से यहाँ इन् प्रत्यय, उपसर्ग और धातु का गुण । परि + आ + ईह + इन् यण्, गुण करने पर रूप सिद्ध होता है । ] आश्मरथ्यः—यञन्त है । [ अश्मरथ + यञ्, आदिवृद्धि, भसंज्ञा, अलोप । ] औदपानः—[ उदपानात् आगतः—इस अर्थ में ] उदपान शब्द 'शुण्डिकादिभ्योऽण्' ४।३।७६ से अणन्त का प्रयोग है । [ आशय यह है कि उदपान शब्द शुण्डिकादिगण में होने से अण् प्रत्यय होता है और उत्सादि गण में होने से अञ् प्रत्यय होता है । अतः ङीप् और ङीन् किसी के भी होने पर कोई भेद नहीं होता है क्योंकि "ञ्नित्यादिर्नित्यम्" ६।१।१९७ से आद्युदात्त ही होता है । अतः यह स्पष्ट कर रहे हैं कि शुण्डिकादिगण में पठित का ही ग्रहण है । अतः उदपानात् आगता स्त्री – इस अर्थ में ही यह ङीन् होकर औदपानी बनता है । ] अराल, चण्डाल और वतण्ड—ये जातिवाची हैं ।

**विमर्श**—ऊपर जिन प्रत्ययों का प्रदर्शन किया गया है उन्हें मानकर अन्य प्रत्यय प्राप्त होते हैं उनका अपवाद यह ङीन् है । जैसे, अण् और टित् प्रत्ययान्त शब्दों से 'टिड्ढाणञ्' ४।१।१५ से ङीप् प्राप्त है, उसे बाधकर ङीन् होता है । वात्स्यायन मौञ्जायन गोत्रलक्षण जातिवाची हैं । अतः "जातेरस्त्रीविषयात्" ४।१।६३ से प्राप्त होने वाले ङीष् का अपवाद ङीन् होता है । ञ्यङ् प्रत्ययान्त—काव्य और शैव्य से "यङश्चाप्" ४।१।७४ से प्राप्त चाप् का बाधकर ङीन् होता है । इ प्रत्ययान्त—एहि और पर्येहि—में "बह्वादिभ्यश्च" ४।१।४५ से प्राप्त ङीष् का बाधकर ङीन् होता है । यञन्त आश्मरथ्य –

१–१. 'गोत्रत्वाज्जातिलक्षणे ङीपि' इति वा पाठः ।

'नृनरयोर्वृद्धिश्च' ( ग० सू० ५७ )। अत्र यथायोगं ङीबादिषु प्राप्तेषु ङीन् विधीयते ॥

**न्यासः**

यदि पुनरुगिल्लक्षणो ङीप् क्रियेत ततः 'नद्याः शेषस्यान्यतरस्याम्' इत्यनुवर्तमाने 'उगितश्च' इति विकल्पेन ह्रस्वत्वं स्यात्। अथानेनापि ङीनि सति कस्मादेव 'उगितश्च' इत्यन्यतरस्यां ह्रस्वत्वं न भवति, यावता भोगवद्गौरिमद्भ्यामुगिद्भ्यामेवायं ङीन् विधीयते? नैष दोषः; 'उगितश्च' इति सूत्रमेवं व्याख्यायते— उगित्संशब्दनेन या नदी विहिता तस्या विकल्पेन ह्रस्वत्वं भवतीति। न चानेन सूत्रेण या विहिता सा नद्युगित्संशब्दनेन विहिता भवति; उगित्त्वानाश्रयणात्। संज्ञायामिति किम्? भोगवती, गौरिमतीति, 'उगितश्च' इति ङीप्। अत्र च घादिषु विकल्पेनैव ह्रस्वो भवति—भोगवतितरा, भोगवतीतरा; गौरिमतितरा, गौरीमतीतरेति।

**नृनरयोर्वृद्धिश्चेति**। नृशब्दस्य 'ऋन्नेभ्यो ङीप्' इति ङीपि प्राप्ते वचनम्। नरशब्दस्य 'अजाद्यतः' इति टापि प्राप्ते जातित्वान् ङीषि वा। जातित्वं त्वाकृतिग्रहणाद्। वृद्धिश्च तयोर्भवति, सा च नृशब्दस्यालोऽन्त्यपरिभाषया ऋकारस्य स्थाने भवति। नरशब्दस्य 'यस्येति' लोपे कृते सत्यकारस्य। ननु च 'अनन्त्यविकारेऽन्त्यसदेशस्य' इति रेफस्यैव भवितव्यम्? नैष दोषः; वृद्धेर्याऽन्तरतमा प्रकृतिस्तत्र षष्ठी, यत्र षष्ठी तत्रादेश इत्यकारः स्थानी ज्ञायते।

पुत्रशब्दमत्र केचित् पठन्ति, न स केवलः स्त्रियां वर्तत इत्ययं समासान्तो गृह्यते। समासान्ते च वर्तमानो दुहितृशब्देन समानार्थो भवन् स्त्रीलिङ्गो भवति—प्रद्योतपुत्री, शैलपुत्रीति। यथायोगमिति। यथासम्भवम् ॥ ७३ ॥

**पदमञ्जरी**

**नृनरयोर्वृद्धिश्चेति**। नृशब्दादृन्नेभ्यो ङीपि, नरशब्दाज्जातिलक्षणे ङीषि प्राप्ते वचनम्। वृद्धिश्चेति, वक्ष्यामीति च अन्यतरस्य ग्रहणेऽपि नारीतीष्टं सिद्धम्, अन्यतरस्यानिष्टनिवृत्त्यर्थं तु द्वयोरुपादानम्। तत्र नरशब्देऽन्त्यस्य वृद्धौ सत्यां यस्येतिलोपादानार्थक्यमिति यस्येति लोपस्तावद्भवति, तत्र कृते रेफस्य वृद्धिः प्राप्नोति, का? अविशेषात्पर्यायेण सर्वैव? नैष दोषः; 'स्थानेऽन्तरतमः' इत्यत्रान्तरतमे स्थाने षष्ठीत्यपि पक्षो व्याख्यातः, ततो नृनरयोरिति यैषा षष्ठी सा वृद्धेरन्तरतमे नृनरावयवे स्थानिन्यनुसंह्रियते। यत्र च षष्ठी तत्रादेश इत्यकारस्यैव भविष्यति। अत्र पुत्रशब्दं केचित्पठन्ति, न स केवलः स्त्रियां वर्तत इति तदन्तस्य समासस्य ग्रहणम्। तत्रापि बहुपुत्रा, अतिपुत्रेत्यादावनुपसर्जनाधिकारान्न भवति। क्व तर्हि भवति? पुत्रप्रधाने। ननु पुत्रप्रधाने समासे सैव पुंल्लिङ्गता? सत्यम्; 'सूतोग्रराजभोजमेरुभ्यो दुहितुः पुत्रड् वा' **इति वार्तिककारेण** यत्र पुत्रडादेशो विहितस्तान्युदाहरणानि। सूतपुत्री, राजपुत्रीति—अत्र स्वभावात्पुत्र-शब्दो दुहितृशब्देन समानार्थः, न पुत्रडादेश इति पठतामभिप्रायः।

अन्ये तु 'प्रद्योतपुत्री शैलपुत्रीति वार्त्तिकविषयादन्यदेव ङीन उदाहरणम्, पुत्रडादेशस्तु ङीपि स्वरार्थः' इति मन्यन्ते, नात्राप्तभाषितमस्ति ॥ ७३ ॥

**भावबोधिनी**

से 'यञश्च' ४।१।१६ से ङीप् और ''प्राचां ष्फ तद्धितः'' ४।१।१७ से ष्फ और ङीष् को बाधकर ङीन् होता है। उदपान के पाठ का प्रयोजन मूल में ही है ] अराल, चण्डाल—असर्वलिङ्ग होने से और वतण्ड गोत्र होने से जातिवाची हैं। अतः प्राप्त ङीष् का अपवाद ङीन् होता है।

अनु०—*भोगवत् और गौरिमत्—इन शब्दों का पाठ घ आदि परे रहते [ ''घरूपकल्पप्०'' ६।३।४३ से ] नित्य ह्रस्व करने के लिये है। * [ भोगवत् और गौरिमत् शब्द मतुप् प्रत्ययान्त है। अतः इनसे यदि उगित् मानकर ''उगितश्च'' ४।१।६ से ङीप् किया जायगा तो घ, रूप आदि परे रहते ''उगितश्च'' ६।३।४५ से विकल्प से ह्रस्व होने

**१३२४. यङश्चाप् ॥ ७४ ॥ ( ५२८ )**

**यङन्तात् प्रातिपदिकात् स्त्रियां चाप् प्रत्ययो भवति । ञ्यङः ष्यङश्च सामान्यग्रहणमेतत् । आम्बष्ठ्या । सौवीर्या । कौसल्या । ष्यङ्—कारीषगन्ध्या । वाराह्या । बालाक्या ।**

**※ षाच्च यञः ※ ( म० भा० ४.१.७४ वा० १ ) । षात् परो यो यञ् तदन्ताच्चाप् वक्तव्यः ।**

**न्यासः**

**यङश्चाप् ॥** पकारोऽत्र 'ङ्याप्प्रातिपदिकात्' इत्यत्र सामान्यग्रहणार्थः, चकारस्तदविघातार्थः, एवमुभयोरन्यत्र चरितार्थयोः 'अनुदात्तौ सुप्पितौ' इत्येतद् बाधित्वा परत्वात् 'चितः' इत्यन्तोदात्तत्वं चापो भवति । **ञ्यङः ष्यङश्च सामान्यग्रहणमेतदिति ।** विशेषकराननुबन्धानुत्सृज्य यत्सामान्यं यङ्मात्रं तस्येदं ग्रहणम् । कथं पुनः सामान्यग्रहणं युज्यते; यावता ञ्यङ एव तत्र ग्रहणं युक्तम्, तथा हि —सोऽपत्ये विधीयमानः स्त्रीत्वं वक्तुमसमर्थ इति स्त्रीप्रत्ययमपेक्षते, न तु ष्यङ्, तस्य स्त्रियामेव विधानात् ? नैतदस्ति; यदि हि सामान्यग्रहणं न स्यात् ष्यङो ङित्करणमनर्थकं स्यात् । तस्य ह्यत्र सूत्रे सामान्यग्रहणमेव प्रयोजनम्, नान्यत् किञ्चित् । तस्मात् ङित्करणसामर्थ्यात् ष्यङोऽपि ग्रहणं भवति । **आम्बष्ठ्येत्यादि ।** आम्बष्ठ-सौवीर कोसलशब्देभ्योऽपत्येऽर्थे 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' इति ञ्यङ्, तदन्ताच्चाप् । **कारीषगन्ध्येति ।** एतत् स्वादिसूत्रे व्युत्पादितम् । **वाराह्येति ।** वराहशब्दाद् 'अत इञ्' । **बालाक्येति ।** बलाकाशब्दाद् बाह्वादिलक्षण इञ् । उभयत्र 'अणिञोरनार्षयोः' इत्यादिना ष्यङादेशः, तदन्ताच्चाप् ।

**पदमञ्जरी**

**यङश्चाप् ॥** पकारः ङ्याप्प्रातिपदिकात्' इत्यत्र सामान्यग्रहणार्थः, स्वरस्तु परत्वाच्चित्स्वर एव भवति । **ञ्यङः ष्यङश्च सामान्यग्रहणमिति ।** यद्यपि ष्यङ् स्त्रियामेव विधीयते, तथापि ङित्करणसामर्थ्यात्त-स्याप्यत्र ग्रहणमिति भावः । **आम्बष्ठ्येत्यादि ।** अम्बष्ठादिभ्योऽपत्ये 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' । **कारीष-गन्ध्येति ।** स्वादिसूत्रे व्युत्पादितम् ।[1] वराहशब्दात् 'अत इञ्' । शर्कराक्ष-पूतिमाषगोकक्षशब्दा गर्गादयः ।

ननु च गौकाक्ष्यशब्दः' क्रौड्यादिषु पठ्यते, ततः ष्यङि 'यङः' इत्येव चाप् सिद्धः ? मा पाठि, तत्र 'षाच्च यञः' इत्यनेनैव शर्कराक्ष्यादिवद् गौकाक्ष्येति सिद्धम् । यद्येवम्, गौकाक्षीपुत्रः—ष्यङः सम्प्रसारणं

**भावबोधिनी**

लगेगा । और जब इससे ङीन् होता है तो वैकल्पिक ह्रस्व न होकर "घरूप०" ६।३।४३ से नित्य ही ह्रस्व होता है—भोगवतितरा, भोगवतितमा । यह व्यवस्था संज्ञा शब्दों में है । अन्यत्र ङीप् ही होता है और वैकल्पिक ह्रस्व होता है । ]

* 'नृ और नर शब्दों से ङीन् होता है साथ ही वृद्धि भी होती है ।' * उदा०—नृ + ङीन्=ई, वृद्धि, रपर; नर + ङीन् = ई, वृद्धि ।

उपर्युक्त शब्दों में लक्ष्यानुसार ङीप् आदि की प्राप्ति रहने पर यह ङीन् किया जा रहा है ॥ ७३ ॥

यङ् प्रत्ययान्त प्रातिपदिक से स्त्रीलिङ्ग में चाप् प्रत्यय होता है । ञ्यङ् और ष्यङ् इन दोनों का यहाँ सामान्यरूप से ग्रहण है । उदा०—आम्बष्ठ्या । सौवीर्या । कौसल्या [ अम्बष्ठ, सौवीर, कोशल —इनकी स्त्री अपत्य अर्थ में "वृद्धेत् कोशलाजादाञ्ञ्यङ्" ४।१।१७१ से ञ्यङ् प्रत्यय आदिवृद्धि, भसंज्ञा अलोप करने के बाद यह चाप् = आ प्रत्यय होता है । ] ष्यङ् प्रत्ययान्त के उदा० —कारीषगन्ध्या [ करीषस्य गन्ध इव गन्धो यस्य–इस विग्रह में समास करके "उपमा-नाच्च" ५।४।१३७ से इत्व करने पर करीषगन्धि बना । करीषगन्धेः अपत्यम् इस विग्रह में अण् करने पर इकारलोप, आदिवृद्धि —कारीषगन्ध् + अण्, अण् का "अणिञोरनार्षयोः" ४।१।७८ सूत्र से ष्यङ् = य, कारीषगन्ध्य । यङन्त मानकर चाप् = आ होता है । ] वाराह्या । बालाक्या [ ये भी ष्यङ् प्रत्ययान्त हैं । अतः चाप् होता है । ]

---

१. तत्र नास्ति ।

शार्कराक्ष्या । पौतिमाष्या । गौकक्ष्या । उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः, तेन वा भविष्यति ॥

१३२५. आवट्याच्च ॥ ७५ ॥ ( ५२९ )

अवटशब्दो गर्गादिः, तस्माद्यञि कृते ङीपि प्राप्ते वचनमेतत् । आवट्याच्च स्त्रियां चाप् प्रत्ययो भवति । आवट्या । प्राचां ष्फ एव, सर्वत्र ग्रहणात् । आवट्यायनी ।

१३२६. तद्धिताः ॥ ७६ ॥ ( ५३० )

अधिकारोऽयम् । आपञ्चमाध्यायपरिसमाप्तेर्यानित ऊर्ध्वमनुक्रमिष्यामस्तद्धितसंज्ञास्ते वेदितव्याः । वक्ष्यति – 'यूनस्तिः', ( ४.१.७७ ) युवतिः । बहुवचनमनुक्ततद्धितपरिग्रहार्थम् – 'पृथिव्या ञाञौ' ( ४.१.८५ ), 'अग्रादिपश्चाड्डिमच्' ( ४.३.२३ ) इत्येवमादि लब्धं भवति । तद्धितप्रदेशाः – 'कृत्तद्धितसमासाश्च' ( १.२.४६ ) इत्येवमादयः ॥

**न्यासः**

शार्कराक्ष्येत्यादि । शर्कराक्ष-पूतिमाष-गोकक्षशब्देभ्यो गर्गादियञन्तेभ्यश्चाप् ॥ ७४ ॥

**आवट्याच्च ॥ ङीपि प्राप्त इति ।** 'यञश्च' इत्यनेन ॥ ७५ ॥

**तद्धिताः ॥ युवतिरिति ।** तद्धितसंज्ञायां सत्याम् 'कृत्तद्धित' इत्यादिना प्रातिपदिकसंज्ञा भवति । अथ 'तद्धिताः' इति न सम्भवति बहुवचननिर्देशः, यथैव हि 'प्रत्ययः' इत्येकवचननिर्देशेऽपि वक्ष्यमाणानां बहूनामपि सन्नादीनां सर्वेषां सा संज्ञा भविष्यति, तथात्राप्येकवचनेनैव निर्देशः कर्तव्य ? इत्यत आह—**बहुवचनमित्यादि ।** एकवचन एव कर्तव्ये यद् बहुवचनं क्रियते तस्यैतत्प्रयोजनम्—अनुक्ता ये तद्धिता लक्षणवाक्यैरनभिहितास्तेषा-

**पदमञ्जरी**

न प्राप्नोति ? नात्र सम्प्रसारणमिष्यते, गौकाक्ष्यापुत्र इत्येव भवति । एवं हि **सौनागाः** पठन्ति—'ष्यङः सम्प्रसारणे गौकक्ष्यायाः प्रतिषेधः' ॥ ७४-७५ ॥

**तद्धिताः ॥ युवतिरिति ।** तद्धितसंज्ञायां सत्यां 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकसंज्ञा भवति । **बहुवचनमित्यादि ।** 'प्रत्ययः' इत्यादिवदेकवचन एव कर्तव्ये बहुवचनेन संज्ञिनां बहुत्वसूचनादनुक्तोऽपि तद्धितः परिगृह्यत इति मन्यते । स्त्रीप्रत्ययानामादितस्तद्धिताधिकारे क्रियमाणे 'प्राचां ष्फ तद्धितः' इत्यत्र तद्धित-ग्रहणं न कर्तव्यम्, 'यस्येति च' इत्यत्र चकारग्रहणम्, 'ङ्याप्प्रातिपदिकात्' इत्यत्र तु तदन्तात्तद्धितविधानार्थं

**भावबोधिनी**

* 'षकार से परे जो यञ् प्रत्यय, तदन्त शब्द से चाप् विकल्प से होता है ।' उदा०—शार्कराक्ष्या [ शर्कराक्षि शब्द से अपत्य अर्थ में यञ्—प्रत्यय, आदिवृद्धि, भसंज्ञा, इलोप, शार्कराक्ष् + य, इससे चाप् = आप् होता है । ] पौतिमाष्या [ पूतमाष से अपत्य अर्थ में यञ्, आदिवृद्धि भसंज्ञा, अकारलोप, पौतिमाष् + य + चाप् = आप् ] । गौकक्ष्या [ गोकक्ष + यञ्, आदिवृद्धि, अन्त्य अकारलोप गोकक्ष् + य + चाप् = आ ] । अथवा अगले सूत्र में चकार का ग्रहण अनुक्त के समुच्चय के लिये हैं अतः उसी से चाप् हो जायगा । [ इस वचन की आवश्यकता नहीं है । ] । ७४ ॥

अवट शब्द गर्गादिगण में पठित है । इससे यञ् करने पर [ "यञश्च" ४।१।१६ सूत्र से ] ङीप् प्राप्त रहने पर यह सूत्र है । आवट्य शब्द से स्त्रीलिङ्ग में चाप् प्रत्यय होता है । उदा०—आवट्या । [ अवट शब्द से अपत्य अर्थ में यञ् प्रत्यय, आदिवृद्धि, अलोप करने पर आवट्य बना । इससे चाप् = आ करने पर आवट्या बनता है । ] प्राचीन अथवा पूर्व के आचार्यों के मत में [ प्राचां ष्फ तद्धितः ४।१।१७ से ] ष्फ ही होता है क्योंकि सूत्र में सर्वत्र का ग्रहण है । आवट्यायनी । [ अवट + यञ्, आवट्य + ष्फ = फ = आयन, ङीष् = ई । ] ॥ ७५ ॥

यह अधिकार है । पंचम अध्याय की समाप्ति तक यहाँ से जितने प्रत्यय कहे जायँगे उन्हें तद्धितसंज्ञक समझना चाहिये । आगे कहा जायगा—"यूनस्तिः" ४।१।७७ [ युवन् शब्द से स्त्रीलिङ्ग में ति प्रत्यय होता है वह तद्धित होता है ]—युवतिः । सूत्र में बहुवचन का प्रयोग—अनुक्त तद्धितों का ग्रहण कराने के लिये है—"पृथिव्या ञाञौ"

**१३२७. यूनस्तिः ॥ ७७ ॥ ( ८३१ )**

**युवन्शब्दात् प्रातिपदिकात् स्त्रियां तिः प्रत्ययो भवति, स च तद्धितसंज्ञो भवति। ङीपोऽपवादः युवतिः ॥**

**१३२८. अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ॥ ७८ ॥ ( ११९८ )**

**गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोः प्रातिपदिकयोर्गुरूपोत्तमयोः स्त्रियां ष्यङादेशो भवति।**

**न्यासः**

मपि परिग्रहो यथा स्यात्। ततः 'पृथिव्या ञाञौ' इत्यादि न कर्तव्यं भवति। बहुवचनेनैवानुक्ततद्धितपरिग्रहार्थेन तेषां सिद्धत्वे महत्याः संज्ञायाः करण एतत् प्रयोजनम्, अन्वर्थसंज्ञा यथा विज्ञायेत—तेभ्यो हितास्तद्धिताः। तदित्यनेन लौकिका वैदिकाश्च शब्दाः प्रत्यवमृश्यन्ते; तेषां व्युत्पाद्यत्वेन प्रकृतत्वात् तेन तत्रैव भवन्त्यणादयो यत्र च भवन्तस्तेषामुपकारिणो भवन्ति, नान्यत्रेति। तेनाभिधानलक्षणत्वं तद्धितानामुपपन्नं भवति। अथ तद्धिताधिकारः स्त्रीप्रत्ययानामादित एव कस्मान्न क्रियते ? किमेवं सति भवति ? ङ्याबन्तमपि तद्धितान्तत्वात् प्रातिपदिकमिति 'ङ्याप्प्रातिपदिकात्' इत्यत्र ङ्याब्ग्रहणं न कर्तव्यं भवति, 'प्राचां ष्फ तद्धितः' इत्यत्र च तद्धितग्रहणम्, 'यस्येति च' इतीकारग्रहणञ्च; तद्धित इत्येवं सिद्धत्वात् ? अशक्यमेवं कर्तुम्; एवं हि क्रियमाणे तत्र ङ्याब्ग्रहणस्य यत् पूर्वं प्रयोजनमुक्तं तन्न स्यात्; ङीब्ङीष्ङीनाञ्च ङकारस्येत्संज्ञा 'अतद्धिते' इति प्रतिषेधात्। इह च पट्वीति 'ओर्गुणः' इति गुणः स्यात्। तस्माद् यथान्यासमेवास्तु ॥ ७६ ॥

**यूनस्तिः ॥ ङीपोऽपवाद इति।** नकारान्तत्वाद् 'ऋन्नेभ्यो ङीप्' इति प्राप्तस्य। अथेदन्तात् 'इतो मनुष्यजातेः' इति ङीष् कस्मान्न भवति ? अमनुष्यजातित्वात्। न हि युवतिशब्दो मनुष्यजातिवचनः, किं तर्हि ? वयोवचनः। तथा हि यौवनावस्थायामेव स वर्तते, न बाल्यवृद्धत्वावस्थायाम्। न चैवंविधा जातिशब्दाः, ते हि सर्वावस्थासु व्यक्तिषु जातिनिबन्धना वर्तन्ते, गोशब्दादिवत् ॥ ७७ ॥

**अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ॥** इह 'अणिञोः' इति प्रत्ययमात्रं वा गृह्यते ? तदन्तो वा समुदायः ? तत्र यद्याद्यः पक्ष आश्रीयेत, 'गुरूपोत्तमयोः' इति विशेषणं नोपपद्येत। न ह्यणिञोर्गुरूपोत्तमत्वं

**पदमञ्जरी**

ङ्याब्ग्रहणं कर्तव्यमेव ? सत्यम्; ङीबादीनां ङकारस्येत्संज्ञा न स्यात्, 'अतद्धिते' इति प्रतिषेधात्। सत्यामपि वा पट्वीत्यादौ 'ओर्गुणः' स्यात्। तस्माद्यथान्यासमेवास्तु ॥ ७६ ॥

**यूनस्तिः ॥ युवतिरिति।** त्वन्तात् 'इतो मनुष्यजातेः' इति ङीष् न भवति; तिप्रत्ययेनैव स्त्रीत्वस्योक्तत्वात्, यौवनस्य वाऽजातित्वात् ॥ ७७ ॥

**अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ॥** इह सम्भवे व्यभिचारे च सति विशेषणविशेष्यभावो भवति, तेन 'गोत्रे' 'अनार्षयोः' इति चाणिञ्मात्रस्य विशेषणम्, 'गुरूपोत्तमयोः' इत्येतत्तदन्तस्य, तदाह—

**भावबोधिनी**

( वार्तिक ) "अग्रादिपश्चाड्डिमच्" ( वार्तिक ) आदि से होनेवाले प्रत्यय भी तद्धित हो जाते हैं। 'कृत्तद्धितसमासाश्च' १।२।४६ आदि लक्ष्य तद्धितसंज्ञा के हैं ॥ ७६ ॥

युवन् प्रातिपदिक शब्द से स्त्रीलिङ्ग में 'ति' प्रत्यय होता है और वह तद्धितसंज्ञक होता है। यह [ 'ऋन्नेभ्यो ङीप्' ४।१।५ से प्राप्त होने वाले ] ङीप् का अपवाद है। उदा०—युवतिः। [ युवती। युवन् + ति, [ "स्वादिष्वसर्वनामस्थाने" १।४।१७ सूत्र से पदसंज्ञा होने के कारण 'न्' का लोप हो जाता है। ] ॥ ७७ ॥

गोत्र अर्थ में जिन अण् और अञ् का विधान किया गया है, ऋषि-अपत्य से भिन्न अर्थवाले; ऐसे अण् और अञ् जिनके अन्त में है, उपोत्तम = अन्त का समीपवर्ती = प्रथम वर्ण जिनका गुरु है, उन प्रातिपदिकों से स्त्रीलिङ्ग

'निर्दिश्यमानस्यादेशा भवन्ति' ( व्याडि परि० १०६ ) इत्यणिञोरेव विज्ञायते, न तु समुदायस्य । ङकारः

न्यासः

सम्भवति, कस्य तर्हि ? तदन्तस्य समुदायस्य । तस्माद् द्वितीयः पक्ष आश्रयितुं युक्त इति मत्वाऽऽह—**गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोः प्रातिपदिकयोरिति** । यदि तर्हि समुदायस्याणन्तस्येञन्तस्य चेदं ग्रहणम्, 'अनार्षयोः' इति विशेषणं न प्रकल्प्येत; समुदायस्य ऋषावेव विधानात् । अणिञोस्तु प्रकल्प्यत एतद्विशेषणम्; तयोर्ऋषावन्यत्र च विधानात् । 'गोत्रे' इत्यपि विशेषणमणिञोरेव युक्तम्, न समुदायस्य; तथा हि 'अपत्यं पौत्रप्रभृति गोत्रम्' इति पारिभाषिकं गोत्रमिह गृह्यते, तत्र चाणिञावेव विहितौ, न समुदायः ? नैष दोषः; समुदायस्यैते विशेषणे न सम्भवत इति सामर्थ्यादेकदेशयोरणिञोर्विज्ञायेते । अत एव वृत्तावाह—**गोत्रे यावणिञौ विहितावनार्षाविति** । इहायं ष्यङादेशो वा स्यात् ? प्रत्ययो वा ? ननु च षष्ठीनिर्देशादादेशेनैवानेन भवितव्यमिति असन्दिग्धमेतत्, तदयुक्ता द्वितीयपक्षाशङ्का ? नैतदस्ति; प्रत्ययविधावपि षष्ठीनिर्देशो दृश्यते, यथा—'गापोष्टक्', 'व्रीहिशाल्योर्ढक्' इति, तस्मात् प्रत्ययपक्षशङ्कापि युक्तैव । तत्र यदि प्रत्ययः स्यात्, औदमेघेय इति न सिध्येत् । उदमेघस्यापत्यं स्त्री—'अत इञ्', तदन्तादनेन ष्यङ्, इकारस्य यस्येति लोपः, 'यङश्चाप्', औदमेघ्या, तस्या अपत्यमिति 'स्त्रीभ्यो ढक्', एयादेशः । तस्मिन् 'आपत्यस्य च तद्धितेऽनाति' इति यलोप इष्यते, स न प्राप्नोति; अनापत्ययकारत्वात् । ननु च 'हलस्तद्धितस्य' इति चेत् ? न; ईतीत्यत्रानुवर्त्तते ।

पदमञ्जरी

**गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोरिति** । यद्यप्यपत्याधिकारादन्यत्र लौकिकस्य गोत्रस्य ग्रहणम्, तथाप्यत्र पारिभाषिकस्य ग्रहणम्; लौकिकग्रहणस्य 'अनार्षयोः' इति पर्युदासाश्रयणेनैव सिद्धत्वात् । इहायं ष्यङ् प्रत्ययो वा स्यात् ? आदेशो वा ? प्रत्ययविधावपि हि 'गोपाष्टक्' इत्यादौ षष्ठीदर्शनात्, उत्तरत्र 'क्रौड्यादिभ्यश्च' इति पञ्चमीनिर्देशाच्च प्रत्ययपक्षोऽपि सम्भवत्येव । तत्राद्यपक्षे उदमेघस्यापत्यं स्त्री, 'अत इञ्', औदमेघि इति स्थिते तदन्तात् ष्यङि विहिते औदमेघ्यायाश्छात्रा औदमेघाश्छात्राः, औदमेघ्यानां सङ्घः, 'इञश्च' 'सङ्घाङ्कलक्षण' इति च इञन्ताद्विधीयमानोऽण् न स्यात् । अथापि लिङ्गविशिष्टपरिभाषया इञन्ताद्विधीयमानोऽण् ष्यङन्तादपि स्यात्, एवमपि 'आपत्यस्य च तद्धितेऽनाति' इति यलोपो न स्यात्, ष्यङोऽनापत्यत्वात् ? नैष दोषः, 'भस्याढे तद्धिते' इति पुंवद्भावात् प्रागेवाण उत्पत्तेः ष्यङ् निवर्तते, तस्मिन्निवृत्ते 'इञः' इत्यण् भविष्यति, यकारस्य च श्रवणं न भविष्यति । इह तर्ह्यौदमेघ्याया अपत्यम् 'स्त्रीभ्यो ढक्', औदमेघेय इति यलोपो न स्यात्, पुंवद्भावश्च नास्ति, 'अढे' इति प्रतिषेधात्? इतीममाद्ये पक्षे दोषं दृष्ट्वा द्वितीयं पक्षमाश्रित्याह—**ष्यङादेशो भवतीति** ।

भावबोधिनी

में ष्यङ् आदेश होता है । "निर्दिश्यमान के स्थान पर ही आदेश होते हैं" . इस न्याय से अण् अथवा इञ् के स्थान पर ही यह आदेश होता है, समुदाय के स्थान पर नहीं । [ भाव यह है कि ष्यङ् आदेश अनेकाल् होने से 'अनेकाल् शित् सर्वस्य, १।१।५५ से सम्पूर्ण के स्थान पर और ङित् होने से 'ङिच्च' १।१।५३ से अन्त्य के स्थान पर प्राप्त होता है ? यहाँ 'अणिञोः' की स्थानषष्ठी होने से उन्हीं का निर्देश है अतः उन्हीं प्रत्ययों के स्थान पर ष्यङ् होता है । ] [ "यङश्चाप्" ४।१।७४ यहाँ ष्यङ् और च्यङ् का ] सामान्यरूप से ग्रहण कराने के लिये ङकार अनुबन्ध है । षकार यह दूसरा अनुबन्ध उसके अविघात के लिये है—"यङश्चाप्" ४।१।७४ । [ 'एक अनुबन्ध वाले का ग्रहण होने पर दो अनुबन्धों वाले का ग्रहण नहीं होता है' इस नियम से 'यङश्चाप्' में केवल इसी का ग्रहण होता क्योंकि इसी में एक ङकार अनुबन्ध था । दो अनुबन्ध वाले च्यङ् का ग्रहण नहीं होता । परन्तु जब ष्यङ् में भी षकार और ङकार दो अनुबन्ध हो गये तो यह और च्यङ एक ही श्रेणी के हो गये । अतः दोनों का ग्रहण हो जाता है । ]

**सामान्यग्रहणार्थः। षकारस्तदविघातार्थः – 'यङश्चाप्' ( ४.१ ७४ ) इति।**

**उत्तमशब्दः स्वभावात् त्रिप्रभृतीनामन्त्यमक्षरमाह। उत्तमस्य समीपमुपोत्तमम्, गुरुः उपोत्तमं यस्य**

**न्यासः**

आदेशपक्षे त्वणिञोरपत्यत्वात् तदादेशस्यापि ष्यङः स्थानिवद्भावेनापत्यत्वमिति सिध्यति यलोपः। तस्मादादेशपक्ष एव साधुरित्यभिप्रायेणाह—**ष्यङादेशो भवतीति**। ननु चादेशपक्षेऽप्यौडुलोम्येति न सिध्यति, लोमशब्दो बाह्वादिषु पठ्यते। तस्य केवलस्यापत्येन संयोगो नास्तीति तदन्तः समुदायो गृह्यते, तत उडुलोम्नोऽपत्यं स्त्री—बाह्वादित्वादिञि कृते तस्य च ष्यङादेशः। तत्र 'नस्तद्धिते' इति टिलोप इष्यते, स च न प्राप्नोति; 'ये चाभावकर्मणोः' इति प्रकृतिभावात्। प्रत्ययपक्षे त्विञो व्यवहितत्वात् ष्यङः प्रकृतिभावो नास्तीति भवति टिलोपः। ननु 'यस्येति च' इति लोपे कृते नास्ति व्यवधानम्। 'अचः परस्मिन् पूर्वविधौ' इति लोपस्य स्थानिवद्भावादस्त्येव। आदेशपक्षेऽप्यदोषः; आनुपूर्व्या सिद्धत्वात्। न ह्यत्राकृते लोपे गुरूपोत्तमत्वं सम्भवति। तत्र प्रागेव ष्यङ इञि तस्यैव टिलोपः, ततो गुरूपोत्तमता। ततः ष्यङित्यानुपूर्व्या सिद्धत्वम्। अयं तर्ह्यादेशपक्षे दोषः—अनेकाल्त्वात् सर्वादेशः प्राप्नोति, 'ङिच्च' इत्यन्तस्य प्राप्नोतीति चेत्? नैतदस्ति; अपवादप्रतिषेधाद्धि सर्वादेशः प्राप्नोतीति। 'ङिच्च' इत्यन्तादेशः क्रियताम्, आहोस्विदनेकाल्त्वात् सर्वादेशः, तत्र परत्वात् सर्वादेशः प्राप्नोति, यथा—'तुह्योस्तातङाशिष्यन्यतरस्याम्'? इत्यत आह—**निर्दिश्यमानस्येत्यादि**। यथा पाच्छब्दस्य पदित्ययमादेशो विज्ञायते न पाच्छब्दान्तस्य समुदायस्य, तथायमपि निर्दिश्यमानयोरणिञोरेव विज्ञायते। तत् क्व तर्हि सर्वादेशेन भवितव्यम्? यत्र समुदायात् षष्ठ्युच्चारिता, यथा—तुह्योरिति। **ङकारः सामान्यग्रहणार्थ इति**। असति हि तत्र 'यङश्चाप्' इत्यत्र 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' इत्यस्यैव ग्रहणं स्यात्, न ष्यङः। **षकारस्तदविघातार्थ इति**। तत्र ह्यसत्येकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येत्यस्यैव ग्रहणं स्यात्, न ञ्यङः।

उत्तमशब्दोऽयमस्त्येव व्युत्पन्नं तमबन्तं प्रातिपदिकम्, अस्त्यव्युत्पन्नम्। तत्र यदि व्युत्पन्नस्येदं ग्रहणं स्याद् वाराह्येति न सिध्येत्; यस्माद् व्युत्पत्तिमानुत्तमशब्दश्चतुष्प्रभृतिष्ववतिष्ठते। तथा ह्युच्छब्दादुद्गताभिधायिनस्तमप् प्रत्ययोऽतिशायने विधीयते। अनुद्गतञ्चापेक्ष्योद्गतो भवति। त्रिषु च द्वावुद्गतौ, एकोऽनुद्गतः,

**पदमञ्जरी**

नन्वस्मिन् पक्षे उडुलोम्नोऽपत्यं स्त्री बाह्वादिषु लोमन्शब्दस्य पाठात् केवलस्यापत्येन योगाभावात् सामर्थ्यात्तदन्तस्य ग्रहणादिञि तस्य ष्यङादेशे सति 'ये चाभावकर्मणोः' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपो न स्यात्, ततश्चौडुलोम्न्येति स्यात्, औडुलोम्येति चेष्यते, प्रत्ययपक्षे इञा व्यवधानान्नास्ति प्रकृतिभावः, यस्येति लोपेऽपि कृते स्थानिवद्भावाद्व्यवधानमेव? नैष दोषः; नात्राकृते टिलोपे ष्यङ् प्राप्नोति, किं कारणम्? अगुरूपोत्तमत्वात्, तस्मादिञ्येव टिलोपः, ततो गुरूपोत्तमत्वम्, ततः ष्यङित्यानुपूर्व्यात्सिद्धम्। अयं तर्हि दोषः—प्रत्ययग्रहणपरिभाषयाऽणिञन्तयोर्ग्रहणम्, तयोर्विधीयमानः ष्यङनेकाल्त्वात् सर्वादेशः प्राप्नोति? 'ङिच्च' इत्यन्त्यस्य भविष्यति, तातङ्न्यायेन सर्वादेशः प्राप्नोति। यत्र हि ङकारस्य प्रयोजनान्तरमपि सम्भाव्यते तत्र 'ङिच्च' इत्येतदनन्यार्थङित्त्वेष्वनङादिषु सावकाशं बाधित्वा 'अनेकाल्शित्सर्वस्य' इत्येतद्भवति यथा तातङि। इह च सर्वादेशत्वेऽपि 'यङश्चाप्' इति विशेषणं प्रयोजनं सम्भवति, तस्मात् सर्वादेशः प्राप्नोति, तत्राह—**निर्दिश्यमानस्येत्यादि**।

यद्ययमुत्तमशब्दो व्युत्पन्नः स्यात्, तदोच्छब्दात्तमपि कृते 'किमेत्तिङव्ययघाद्' इत्याम्प्राप्नोति? न वा द्रव्यप्रकर्षत्वात्। उच्छब्दो हि ससाधनक्रियावचन उद्गते वर्तते, तस्य क्रियाद्वारकः प्रकर्षः—अतिशयेनोद्गत

**भावबोधिनी**

उत्तम शब्द स्वभावतः तीन आदि के अन्तिम अक्षर का वाचक होता है। उत्तम = अन्त्य का समीपवर्ती उपोत्तम होता है। गुरु है उपोत्तम जिसका वह गुरूपोत्तम प्रातिपदिक है। [ इसलिये जिस प्रातिपदिक में कम से कम तीन अक्षर

**तद् गुरूपोत्तमं प्रातिपदिकम्। करीषस्येव गन्धोऽस्य करीषगन्धिः, कुमुदगन्धिः, 'तस्यापत्यम्' ( ४.१.९२ ) इत्यण्, तस्य ष्यङादेशः – कारीषगन्ध्या, कौमुदगन्ध्या। वराहस्यापत्यम्, 'अत इञ्' ( ४.१.९५ ), वाराहिः, तस्य ष्यङादेशः–वाराह्या, बालाक्या।**

**अणिञोरिति किम्? ऋतभागस्यापत्यम्, बिदादित्वादञ्, आर्तभागी। गुरूपोत्तमादिकं सर्वमस्तीति न त्वणिञौ। 'टिड्ढाणञ्' ( ४.१ १५ ) इति ङीबेव भवति।**

**न्यासः**

न च द्वयोरयं चोद्गत इत्ययमनयोरतिशयेनोद्गत इत्यर्थविवक्षायां तमबुत्पद्यते; तरपा विशेषविहितेन बाधितत्वात्। चतुर्षु तु त्रय उद्गताः, एकोऽनुद्गतः, तत्र त्रीनुद्गतानपेक्ष्यायञ्चोद्गतः। अयं चैषामतिशयेनोद्-गत इत्यर्थविवक्षायां तमबुत्पद्यते, तस्माच्चतुर्ष्वेव प्राप्नोति; तत्र चोत्तमशब्दस्य स्वरूपसिद्धेः, ततश्च वाराह्येति न सिध्येत। न ह्यत्र चत्वारः सन्तीत्येतदालोच्याव्युत्पन्नोऽयमिहोत्तमशब्दो गृह्यत इति दर्शयन्नाह—**उत्तम-शब्दः स्वभावादित्यादि**। अव्युत्पन्न एव ह्युत्तमशब्दः स्वभावात् त्रिप्रभृतीनामन्त्यमाह, न व्युत्पन्नः। स हि चतुष्प्रभृतीनामन्त्यमाह, तस्मात् 'उत्तमशब्दः स्वभावात्' इत्यादिना ग्रन्थेनाव्युत्पन्नस्योत्तमशब्दस्येह ग्रहणमिति दर्शितं भवति। तदेवमव्युत्पन्नस्य ग्रहणे वाराहीत्येतदपि सिद्धं भवति।

**टिड्ढाणञिति ङीबेव भवतीति**। प्रमादपाठोऽयम् ( ? )। यथैव हि बैदीति जातित्वादञन्तात् 'शार्ङ्गर-वाद्यञो ङीन्' इति ङीन् भवति, तथेहापि ङीनैव भवितव्यम्। जातित्वं तु गोत्रत्वाद्। तस्माद् 'शार्ङ्गरवाद्यञो ङीन् इति ङीनेव भवति' इत्ययमेवात्र पाठो द्रष्टव्यः।

**पदमञ्जरी**

इति, ततश्च द्रव्यनिष्ठत्वात् प्रकर्षस्य 'अद्रव्यप्रकर्षे' इति प्रतिषेधो भविष्यति। एवमपि तमपः पित्त्वादाद्युदात्तत्व-प्रसङ्गः? न वोञ्छादिषु पाठात्, उञ्छादिषु हि उत्तमशश्वत्तमौ सर्वत्रेति पठ्यते। एवमपि स तावत्पाठः कर्तव्यः, क्रियामात्रस्य च प्रकर्षे उत्तमामित्याम्प्रसङ्गश्च, अतोऽनभिधानादुच्छब्दात्तमपोऽनुत्पत्तिरेषितव्या। किञ्च व्युत्पन्न उत्तमशब्दश्चतुष्प्रभृतिषु वर्तते, कथम्? ऊर्ध्वमुच्चारित उद्गतः, स च प्रथमोच्चारितमपेक्षते, ततश्च त्रिषु द्वावुद्गतौ, तयोश्च द्वितीयोऽतिशयेनोद्गतः, द्वयोश्च सम्प्रधारणायां तरपा भाव्यम्, ततश्च यत्रोद्गता एव त्रयस्तत्रैव स्यात्—कारीषगन्ध्येत्यादौ; वाराह्येत्यादौ तु न स्यात्। तदेवं व्युत्पत्तिपक्षे दोषं पश्यन्नव्युत्पत्तिपक्षमाश्रित्याह—**उत्तमशब्द इति। स्वभावादिति**। न व्युत्पत्तिवशादित्यर्थः। त्रिप्रभृतीनामिति वचनाद्दाक्षी प्लाक्षीत्यादौ न भवति।

**टिड्ढाणञिति ङीबेव भवतीति**। प्राप्तिमात्राभिप्रायेणेदमुक्तम्। अत्र हि जातित्वात् 'शार्ङ्गरवाद्यञः' इति ङीना भाव्यम्। **वासिष्ठीति**। 'ऋष्यन्धक' इत्यादिनाण्।

**भावबोधिनी**

होंगे वहीं यह सूत्र प्रवृत्त होगा ] उदा०—कारीषगन्ध्या, करीष के समान गन्ध है जिसका—इस विग्रह में समास करने पर 'उपमानाच्च' ५।४।१३७ सूत्र से इत्व अन्तादेश करने पर करीषगन्धि बनता है, इसका अपत्य—इस अर्थ में अण् [ करने पर करीषगन्धि + अण्, आदिवृद्धि, ''यस्येति च'' ६।४।१४८ से इकारलोप और प्रस्तुत सूत्र से ] अण् का ष्यङ् = य आदेश करने पर [—कारीषगन्ध्य बन जाने पर ''यङश्चाप्'' ४।१।७४ से चाप् = आ प्रत्यय होने पर ] कारीषगन्ध्या [ बनता है। इसी प्रकार कुमुदस्य इव गन्धः यस्य सः कुमुदगन्धिः, तस्य अपत्यम्—अण्, इकारलोप, आदिवृद्धि, अण् का ष्यङ् करके चाप् करने पर ] कौमुदगन्ध्या [— यह रूप होता है ]। वराहस्य अपत्यम्—इस विग्रह में 'अत इञ्' ४।१।९५ से इञ् प्रत्यय [ आदिवृद्धि, अलोप करने पर ] वाराह + इ, इञ् का ष्यङ् = य आदेश [ और चाप् = आ प्रत्यय करने पर ]– वाराह्या। बालाक्या। [ इसकी प्रक्रिया भी वाराह्या के समान है। ]

अण् और इञ् का [ ष्यङ् होता है ]—इसका ग्रहण किस लिये है? ऋतभागस्य अपत्यम्—इस विग्रह में ''आनृष्यानन्तर्ये विदादिभ्योऽञ्'' ४।१।१०४ से अञ् होने के कारण [आदिवृद्धि और ङीप् होने से]—आर्तभागी बनता है।

**अनार्षयोरिति किम् ? वासिष्ठी । वैश्वामित्री । गुरूपोत्तमयोरिति किम् ? औपगवी । कापटवी । गोत्र इति किम् ? 'तत्र जातः' ( ४.३.२५ ), आहिच्छत्री, कान्यकुब्जी ॥**

न्यासः

**वासिष्ठी, वैश्वामित्रीति** । 'ऋष्यन्धक' इत्यादिनाऽण् । **औपगवी, कापटवीति** । उपगु-कपटुशब्दाभ्यामौत्सर्गिकोऽण्, 'ओर्गुणः' ।

**आहिच्छत्री** । **कान्यकुब्जीति** । 'तत्र जातः' इत्यण् ॥ ७८ ॥

पदमञ्जरी

**आहिच्छत्रीति** । जातादावर्थेऽण् । एवमत्रादेशपक्षः स्थापितः ।

यद्येवम्, हस्तिशिरसोऽपत्यम्, बाह्वादित्वादिञ्, 'अचि शीर्षः' इति शीर्षादेशः, इञः ष्यङादेशः, ततः स्थानिवद्भावेन शीर्षशब्दस्य शिरोग्रहणेन ग्रहणाद् 'ये च तद्धिते' इति शीर्षन्नादेशः प्राप्नोति ? अस्तु; 'नस्तद्धिते' इति टिलोपो भविष्यति । ये चाभावकर्मणोः' इति प्रकृतिभावः प्राप्नोति, ततश्च हास्तिशीर्षण्येति स्यात्, प्रत्ययपक्षे त्विञाऽव्यवहितत्वान्नास्ति शीर्षन्नादेशः, यस्येति लोपेऽपि कृते स्थानिवद्भावाद्व्यवधानमेव, तेन हस्तिशीर्षेति सिद्ध्यति, तस्मात्प्रत्ययपक्ष आश्रयणीयः । तदेतद् 'ये च तद्धिते' (६.१.६१) इत्यत्र **वामनो** वक्ष्यति—'यदि प्रत्ययः, कथमौदमेधेय इति आपत्याद्विहितः ष्यङ् सोऽप्यापत्य एव, तत्र यलोपे सिद्धम्' इति ।

**जयादित्यस्तु** मेने--शीर्षादेशसन्निपातेन ष्यङ्, स तद्विघातं न करिष्यतीति यद्येवम्, अजादिप्रत्ययनिबन्धः शीर्षादेशः कथं तमजादि विहन्यात् ? ततः किम् ? ष्यङादेशोऽपि न प्राप्नोति, अनित्या सन्निपातपरिभाषा, तेन ष्यङ् भवति, शीर्षादेशश्च न भविष्यति । अयं तर्ह्यादेशपक्षे दोषः--अनुबन्धौ कर्तव्यौ यङश्चाबिति सामान्यग्रहणतदविघातार्थौ, अन्यथाऽणादेशे ष्यङि 'टिड्ढाणञ्' इत्यादिना ङीप्स्यात्, इञादेशे तु 'इञ उपसङ्ख्यानम्' इति ङीष्प्रसङ्गः ? नैष दोषः; 'टिड्ढाणञ्' इत्यत्रात इति वर्तते, तत्र चाणाऽकारो विशेष्यते--अण्योऽकार इति । तत्र ष्यङादेशे 'अनल्विधौ' इति स्थानिवद्भावाभवान्ङीब्न भविष्यति । अणन्तादकारान्तादिति हि विज्ञायमाने स्वाश्रयमकारान्तत्वं स्थानिवद्भावादणन्तत्वं चेति स्यान्ङीपः प्रसङ्गः । 'इञ उपसङ्ख्यानम्' इत्यत्रापि 'इतो मनुष्यजातेः' इत्यत 'इतः' इत्यपेक्ष्यते--इञ्य इकारः तदन्तादिति । इञन्तादिकारान्तादिति वा विज्ञायमाने ष्यङादेशे सति वाराह्येत्यादिविकाराभावान्ङीषभावः सिद्धः । एवमपि स्वरार्थश्चावेष्टव्यः, अन्यथा इञादेशः ष्यङ् स्थानिवद्भावेन ञित्, टाबपि पित्त्वादनुदात्त इति ञित्स्वरेणाद्युदात्तं पदं स्यात् । स्यादेतत्--इञो ञकारस्येत्संज्ञायाः प्रागेव प्रतिपदविधानात् ष्यङादेशः कारिष्यते, तत्र ञित्स्वराभावात् प्रत्ययस्वरे सति टाप्यपि सिद्धः स्वर इति, यथैव तर्हि ञित्स्वरो न भवति एवं वृद्धिरपि न स्याद्, अतो ञकारस्य सत्यामित्संज्ञायामादेश इत्यास्थेयम्, ततश्च स्वरे दोषप्रसङ्गाच्चाबर्थमनुबन्धौ कर्तव्यावेव । प्रत्ययपक्षे तु सति शिष्टे ष्यङः प्रत्ययस्वरे कृते तदन्तादापि सिद्धमिष्टम्, न रूपभेदो न स्वरभेदः । ननु च ष्यङैव स्त्रीत्वस्य द्योतितत्वादाब्न स्यात् ? नैष दोषः; यथा गार्ग्यायणीत्यादौ द्वाभ्यां स्त्रीत्वं द्योत्यते,

भावबोधिनी

यहाँ गुरूपोत्तम आदि सभी कुछ है परन्तु अण् अथवा इञ् नहीं है । इसलिये 'टिड्ढाणञ्' ४।१।१५ से ङीप् ही होता है ।

अनार्ष = ऋषि-अपत्य से भिन्न--इनका क्या फल है ? वासिष्ठी । वैश्वामित्री । [ वसिष्ठ और विश्वामित्र शब्दों से "ऋष्यन्धक०" ४।१।११४ से अण् होने के कारण उसका ष्यङ् आदेश नहीं होता है । ] गुरु उपोत्तम हो--इसका क्या फल है ? औपगवी । कापटवी । [ उपगु और कपटु से अण् होता है । परन्तु इनमें उपोत्तम वर्ण गुरु नहीं है । अतः अण् का ष्यङ् नहीं होता है । ] गोत्र अर्थ में--इसका क्या फल है ? 'तत्र जाता' [ वहाँ उत्पन्न होने वाली--इस अर्थ में विहित अण् का ष्यङ् नहीं होता है । जैसे ] आहिच्छत्री, कान्यकुब्जी । [ अहिच्छत्र में पैदा होने वाली, कन्नौज में पैदा होने वाली--इस अर्थ में "तत्र जातः" ४।३।२५ से अण् है, गोत्र अर्थ में नहीं है । अतः ष्यङ् नहीं होता । ]

### पदमञ्जरी

तथाऽत्रापि द्वयोरेव सामर्थ्यमिति टाबपि भविष्यति । 'ष्यङः सम्प्रसारणम्' इत्यत्र विशेषणार्थं तर्हि त्वयाप्यनुबन्धौ कर्तव्यौ, इह मा भूत्–पाशानां समूहः पाश्या, 'पाशादिभ्यो यः', पाश्यापतिरिति ? एवं तर्ह्येकोऽनुबन्धः करिष्यते, क एकः ? षकारे ङीष्प्रसङ्गः । ङकारे 'यङः सम्प्रसारणम्' इत्युच्यमाने लोलूयापुत्र इत्यत्रापि प्राप्नोति ? अप्रत्ययादित्यकारेऽतो लोपे च सति अकारेण व्यवहितत्वान्न भविष्यति । वाराहीपुत्र इत्यत्रापि तर्हि टापा व्यवधानम् ? एकादेशस्य पूर्वं प्रत्यन्तवत्त्वान्नास्ति व्यवधानम् । ननु 'ष्यङः सम्प्रसारणम्' इत्यत्र 'लिटि धातोः' इत्यतो धातुग्रहणमनुवर्तते, 'आदेच उपदेशेऽशिति' इत्यात्वं धातोर्यथा स्याद्, गोभ्यामित्यादौ मा भूदित्येवमर्थम् । तत्र यङन्तस्य धातोः पुत्रपत्योरनन्तरयोः सम्प्रसारणं भवतीत्युक्ते यो धातुर्लोलूयादिर्नासावनन्तरः, यश्चानन्तरो वाराह्यादिर्न स धातुः, तत्र धातुत्वानन्तर्ययोरन्यतररूपपरित्यागेन भवत्सम्प्रसारणं यथा वाराहीपुत्र इत्यादौ असत्यपि धातुत्वे आनन्तर्यमात्राश्रयणेन भवति, तथा, लोलूयापुत्र इत्यत्रासत्यप्यानन्तर्ये धातुत्वाश्रयणेन स्यात् ।

अथ ब्रूयाः––यङ्धात्वोर्न परस्परेण विशेषणविशेष्यभावः, अपि तर्हि समुच्चयः––पुत्रपत्योरनन्तरस्य यङो धातोश्चेति ? तत्र वाराहीपुत्र इत्यादौ भविष्यति, न तु लोलूयापतिरित्यादौ; धातोर्व्यवधानात् । ततश्च सामर्थ्याद्धातुग्रहणस्योत्तरार्थैवानुवृत्तिः सम्पद्यत इति । यद्येवम्, वाक्पतिरित्यत्र वचेः सम्प्रसारणप्रसङ्गः ? एवं तर्हि धातोरिति निवर्त्तिष्यते, आत्वं पुनर्गवादेः प्रातिपदिकस्य न भवति; उपदेशाभावात् । स्वरूपज्ञापनप्रधानो निर्देशः = उपदेशः । 'गोद्वयचः', 'नौद्वयचः' इत्यादौ तु कार्यान्तरार्थमुच्चारणम्, न स्वरूपज्ञापनार्थम् । तदेवं प्रत्ययपक्ष एक एवानुबन्धः कर्तव्यः । अत्र संग्रहश्लोकाः––

पुंवद्भावाद्यजादौ यलुगणपि परस्मिन् ष्यङि ह्यौदमेधे
स्वार्थे ष्यङ् तद्यलुग्ढे क्रमत इह भवेदौडुलोम्या परस्मिन् ।
ष्यङ्शीर्षाधीनलाभस्तदभिविहतये न प्रभूर्हास्ति शीर्ष्ये
सर्वादेशोऽपि तातङ्ङिव न यङणिञोः स्थानिनोरुक्तिहेतोः ॥
स्त्र्युक्तावप्याप्परस्मिन्निह सुलभ इति ष्ङो विधेयौ न वा ये-
ऽणादेशे ङीनिवृत्त्यैत्वण इञ इति चेद् द्वौ विशेष्यौ न दोषः ।
ञित्त्वादादेरुदात्तः प्रसजति सहजादेशने वृद्ध्यभावः
पाश्यापुत्रे निवृत्त्यै यण इक इह षित्त्वेकके ङीष्यङोऽस्तु ॥
लोलूयापुत्र इत्यद्व्यवहित इतरत्रापि दीर्घोऽन्तवत्स्याद्
धात्वानन्तर्ययोगे विधिरिति स यथानन्तरेऽधौ[1] तथा धोः[1] ।
धात्वानन्तर्ययोश्चेन्मिथ इह न हि तेऽपेक्षिता वाक्पताविक्
धोर्नात्राधिक्रियात्वे ह्युपदिशिरिति गोर्नो तदेवं ममैकः ॥ ७८ ॥

### भावबोधिनी

**विमर्श––**काशिकाकार ने "शार्ङ्गरवाद्यञो ङीन्" ४।१।७३ के उदाहरण में––अञन्तेभ्यः––बैदी, और्वी––यह लिखकर विदादिगण पठित अञन्त से ङीन् प्रत्यय लिखा है । परन्तु प्रस्तुत सूत्र पर "ऋतभागस्यापत्यम्, विदादित्वादञ्––आर्तभागी । ''''''"टिड्ढाणञ्" ( ४।१।१५ ) इति ङीप् एव भवति ।" इसमें परस्पर विरोध हैं । अतः न्यासकार के परामर्शानुसार पाठ शुद्ध कर लेना चाहिये । अथवा सामान्यरूप से अञन्त से ङीप् प्राप्त होता है––यही मानकर लिख दिया गया है ऐसा समझना चाहिये ॥ ७८ ॥

---

१. 'अधातो', 'धातोः' इति वक्तव्ये 'अधौ' 'धोः' इत्युपन्यासश्चिन्त्यः । अथ वा––छन्दोऽनुरोधात् केषांचिद्वा प्राचीनानां तथा पाठसम्प्रदाय एवात्र शरणम् ।

## १३२९. गोत्रावयवात् ॥ ७९ ॥ ( ११९९ )

'अणिञोः' इत्येव। गोत्रावयवाः – गोत्राभिमताः कुलाख्याः पुणिकभुणिकमुखरप्रभृतयः, ततो गोत्रे

न्यासः

**गोत्रावयवात्** ॥ गोत्रञ्च तदवयवश्चेति गोत्रावयवः। इह त्वभिधानेऽभिधेयोपचारं कृत्वा तदभिधायिप्रातिपदिकं गोत्रावयवशब्देनोक्तम्। ननु चैवं विग्रहे विशेषणत्वादवयवशब्दस्य नीलोत्पल इव नीलशब्दस्य पूर्वनिपातः स्यात्। राजदन्तादेराकृतिगणत्वाद् विशेषणस्य परनिपातो भविष्यति। गोत्रं पुनरिह लौकिकं गृह्यते, न पारिभाषिकम्। लोके च प्रधानभूत आदिपुरुषः स्वप्रभवस्यापत्यसन्तानस्य संज्ञाकारी गोत्रमित्युच्यते। तथा हि भरतो नाम कश्चिदाद्यः प्रधानः पुरुषोऽभूत्, तेन सर्व एव तत्पूर्वकाः पुत्रपौत्रादयो भरता इति व्यपदिश्यन्ते। अवयवशब्दोऽयमस्त्येवैकदेशे, तत्सम्बन्धादवयवीति समुदाय उच्यते। अस्ति च पृथग्भावे–अवयुतिः=अवयवः, पृथग्भूत इत्यर्थः। यद्यपि यौतिमिश्रणे पठ्यते, तथाप्यनेकार्थत्वाद् धातूनामवपूर्वः पृथग्भावमाचष्टे। अस्त्यप्रधाने, यथा—कुलावयवोऽयम्, सङ्घावयवोऽयमिति। कुलस्य सङ्घस्य चाप्रधानभूतोऽयमिति गम्यते। तत्र यद्येकदेशवाची गृह्यते तदुपादानमनर्थकं स्यात्, गोत्रादित्येव वक्तव्यम्। गोत्रावयवोऽपि हि गोत्रं

पदमञ्जरी

**गोत्रावयवात्** ॥ गोत्रशब्दोऽयमस्ति पारिभाषिकः 'अपत्यं पौत्रप्रभृति गोत्रम्' इति, अस्ति च लौकिकोऽपत्यमात्रवचनः, अस्ति च व्युत्पन्नः—गूयन्ते शब्द्यन्तेऽनेन स्वसन्तानप्रभवा इति प्रधानभूत आदिपुरुषः, स्वप्रभवस्यापत्यं सन्तानस्य संज्ञाकारी गोत्रमित्युच्यते, यथा—भरतः, रघुः, यदुरिति। अवयवशब्दोऽप्यस्ति एकदेशे यत्सम्बन्धादवयवतोति समुदाय उच्यते; अस्ति च पृथग्भावे अवयुत्यानुवाद इत्यादाववपूर्वस्य यौतेः पृथग्भावेऽपि दर्शनात्; अस्ति चाप्रधाने—अवयवभूतोऽयमस्मिन् ग्राम इति। तत्र पारिभाषिके गोत्रे एकदेशे चावयवे च वचनमनर्थकमिदं स्यात्, कथम्? पौत्रप्रभृत्यपत्यसमुदायो गोत्रं तदवयवश्चतुर्थादिस्तदपि गोत्रमेव, तद्वाचिनोऽणिञन्तात्पूर्वेणैव सिद्धः ष्यङ्। अथ कस्मिंश्चिन्महागोत्रे यान्यवान्तरगोत्राणि, यथा—भार्गवगोत्रस्य च्यवनादीनि, ते गोत्रावयवास्तेष्वगुरूपोत्तमार्थोऽयमारम्भः। यद्येवम्, सप्तर्षीणामगस्त्याष्टमानामष्टौ महागोत्राणि प्रवराध्याये पठ्यन्ते तद्व्यतिरिक्तेभ्यः सर्वेभ्यः ष्यङः प्रसङ्गः; न चैतदिष्टम्, अगुरूपोत्तमेभ्योऽपि पुणिकादिभ्य एवेष्यते। पृथग्भाववचने त्ववयवशब्दे गोत्रादन्यवाचिनोऽणिञन्तात् ष्यङि विधीयमाने पूर्वसूत्रे गोत्रग्रहणमनर्थकम्। अथाप्रधानवचनोऽवयवशब्दः, पारिभाषिकमेव गोत्रं प्रवराध्याये पाठाच्चाप्राधान्यम्, ततोऽयमर्थः स्यात्—येऽणिञन्ता गोत्रापत्यवाचिनः प्रवराध्याये न पठ्यन्ते, तेभ्यः ष्यङिति। तत्रानृषिभ्यो गुरूपोत्तमेभ्यः पूर्वेणैव सिद्धः, अगुरूपोत्तमेभ्यस्तु संज्ञाकारिभ्य एवेष्यते, पारिभाषिके च गोत्रे संज्ञाकारित्वं विशेषो न लभ्यत इति। इहापि प्रसज्येत—तुषजको नाम कश्चित्तस्य गोत्रं स्त्री 'अत इञ्' तौषजकी, अपत्यमात्रे तु गोत्रे यद्येकदेशोऽवयवस्ततोऽपत्यसमुदायस्य पौत्रप्रभृत्यपत्यमवयव इति तद्वाचिनोऽणिञन्तात् पूर्वेणैव सिद्धः। पृथग्भावे त्वपत्यादन्यवाचिन आहिच्छत्रादेरेव प्रसङ्गः। अप्रधाने त्वप्रधानापत्यवाचिनोऽणिञन्ताद् गुरूपोत्तमान्न सर्वत्रेष्यते, किन्तु संज्ञाकारिभ्यः, तत्रापि गोत्रे। व्युत्पन्ने गोत्रे एकदेशवचनोऽवयवशब्दो

भावबोधिनी

'अणिञोः' इसकी अनुवृत्ति होती है। गोत्रावयव=गोत्ररूप से स्वीकृत, कुल को बताने वाले—पुणिक, मुणिक और मुखर आदि शब्द हैं, इन शब्दों से गोत्र अर्थ में विहित अण् और इञ् का ष्यङ् आदेश स्त्रीलिङ्ग में होता है। जिसका उपोत्तम गुरु नहीं है, उसके लिये यह सूत्र बनाया गया है। उदा०—पौणिक्या। [ पुणिक कुल में उत्पन्न स्त्री अर्थ में 'पुणिक' शब्द से 'अत इञ्' ४।१।९५ से इञ् प्रत्यय अलोप आदिवृद्धि करने पर पौणिक+इ में इञ् का ष्यङ् और चाप् प्रत्यय करने पर रूप सिद्ध होता है। ] भौणिक्या। मौखर्या। [ भौणिक कुल में उत्पन्न स्त्री, मुखर कुल में उत्पन्न स्त्री। प्रक्रिया पूर्ववत् है। ]

**विहितयोरणिञोः स्त्रियां ष्यङादेशो भवति । अगुरूपोत्तमार्थ आरम्भः । पौणिक्या । भौणिक्या । मौखर्या ।**

**येषां त्वनन्तरापत्येऽपीष्यते – दैवदत्या, याज्ञदत्येति; ते क्रौड्यादिषु द्रष्टव्याः ।**

**१३३०. क्रौड्यादिभ्यश्च ॥ ८० ॥ ( १२०० )**

**न्यासः**

भवति, यथा—क्षीरावयवः क्षीरमिति । अथापि पृथग्भावे गोत्रादन्यत्र वर्तमानो गृह्यते, एवमपि पुणिकादिभ्यो विहितयोरणिञोः ष्यङादेशो न स्यात्; पुणिकादीनां गोत्रवचनत्वात् । क्व तर्हि स्यात् ? यत्र गोत्रवाचिनः प्रातिपदिकादणिञौ विहितौ, अनिष्टञ्चैतत्; तस्यैकदेशवाचिनि पृथग्भाववाचिनि वावयवशब्दे दोष इत्यत्राप्रधान-वाच्येव गृह्यते । **गोत्रावयवा इति** । पुणिकादिश्रुतीनामेतद्विशेषणम् । अप्रधानगोत्राभिधायिन्य इत्यर्थः । **गोत्राभिमता इति** । गोत्रमित्येवमभिमता गोत्राभिधायिन्य इत्येवं लोके प्रसिद्धाः । न पुनर्गोत्राध्याये पठिता इत्यर्थः । अत एव तासामप्राधान्यम्; गोत्राध्यायेऽपठितत्वात् । **कुलाख्या इति** । कुलम्=गोत्रम्, आख्यायत आभिरित्याख्याः, 'आतश्चोपसर्गे' इत्यङ । कुलस्याख्याः । इह पुणिकादिश्रुतिभिर्हि कुलमाख्यायते पुणिकोऽयं गोत्रेणेत्येवमादि । तत इति । यथोक्तविशेषणविशिष्टाभ्यः पुणिकादिश्रुतिभ्यः । यदि तर्हि ततो गोत्रविहितयोर-णिञोः ष्यङ् भवत्येवं सत्यपार्थकोऽयं योगः, पूर्वेणैव सिद्धत्वात् ? इत्यत आह–**अगुरूपोत्तमार्थ आरम्भ इति । पौणिक्येत्यादि** । पुणिक-भुणिक-मुखरशब्देभ्यः 'अत इञ्' इतीञन्तस्य ष्यङश्चाप् ॥ ७९ ॥

**क्रौड्यादिभ्यश्च ॥ क्रौडीत्येवमादिभ्यश्च स्त्रियां ष्यङ् प्रत्ययो भवतीति** । ननु चादेशपक्षः पूर्वमाश्रितः, तत् किमर्थमिह प्रत्ययपक्ष आश्रीयते ? तदाश्रयणेऽप्यत्र दोषो नास्तीति प्रदर्शनार्थः । **अगुरूपोत्तमार्थ आरम्भ**

**पदमञ्जरी**

न सम्भवति, न हि येन पुरुषेण स्वसन्तानप्रभवा गूयन्ते तदवयवाद्धस्तपादादेर्गोत्रेऽणिञोऽसम्भवः । अथ गोत्रं च तदवयवश्चेति कर्मधारयस्तदा भार्गवादिगोत्रेषु येऽवान्तरव्यपदेशकारिणश्च्यवनादयस्तेभ्यः प्रसङ्गः । पृथग्भावे च ये संज्ञाकारिभ्यः पृथग्भूतास्तुषजकादयस्तेभ्य एव स्यात् । अत एवमेषु पक्षेषु दोषसम्भावाद्व्युत्पन्नो गोत्रशब्दः, अप्रधानवचनोऽवयवशब्दः, कर्मधारयश्च समासः । निपातनाद्विशेषणस्य परनिपातः, प्रवराध्यायेऽपाठाच्चाप्राधान्यम् । तदेतदाह–**गोत्रावयवा गोत्राभिमता इति** । गोत्रमित्येवमभिमताः, गोत्राभिधायिन इत्येव लोके प्रसिद्धाः, न पुनः प्रवराध्याये पठिता इत्यर्थः । काः पुनस्ता इत्यत्राह–**कुलाख्या इति** । कुलमाख्यायते आभिरिति कुलाख्याः, पुणिकादिभिर्हि कुलमाख्यायते–पुणिका वयं गोत्रेणेत्येवमादि । **तत इति** । तथोक्तविशेषणविशिष्टाभ्यः कुलाख्याभ्यः । **अगुरूपोत्तमार्थ आरम्भ इति** । 'गुरूपोत्तमयोः' इति निवृत्तम्, अन्यत्सर्वमनुवर्तत इति भावः । **पौणिक्येत्यादिः** । पुणिक-भुणिक-मुखरशब्देभ्यः 'अत इञ्', तस्य ष्यङादेशः । **ते क्रौड्यादिषु द्रष्टव्या इति** । अवृद्धत्वात्तस्येति भावः ॥ ७९ ॥

**क्रौड्यादिभ्यश्च ॥ ष्यङ् प्रत्ययो भवतीति** । क्रौड्यादिभ्य इति पञ्चमीनिर्देशात् प्रत्ययपक्षेऽप्यत्र दोषाभावाच्चैवमुक्तम् । **अगुरूपोत्तमार्थ इत्यादि** । तत्र क्रौड्यादयः प्राक्चोपयतशब्दादत इञन्ताः,

**भावबोधिनी**

जिन शब्दों से अनन्तर अपत्य अर्थ में प्रत्यय इष्ट होता है—दैवदत्या, याज्ञदत्या; इन्हें क्रौड्यादिगण में मान लेना चाहिये । [ देवदत्त की स्त्री-अपत्य अर्थ में इञ् प्रत्यय, आदिवृद्धि अलोप और अगले सूत्र से ष्यङ् तथा चाप् करने पर रूप सिद्ध होता है ।

**विमर्श**—यहाँ गोत्र शब्द से लोक में प्रसिद्ध कुल वाचक समझना चाहिये । प्रसिद्ध कुलवाचक शब्दों से यदि अण् या इञ् होता है तो उसके स्त्री-अपत्य अर्थ में यह ष्यङ् करता है ॥ ७९ ॥

क्रौडि आदि से स्त्रीलिङ्ग में ष्यङ् प्रत्यय होता है । जिनका उपोत्तम गुरु नहीं है, और जिनसे अण् या इञ् नहीं हुआ है, उनके लिये यह सूत्र बनाया गया है । उदा०—क्रौड्या । लाड्या । [ क्रौडि+ष्यङ्=य, भसंज्ञा,

'क्रौडि' इत्येवमादिभ्यश्च स्त्रियां ष्यङ् प्रत्ययो भवति। अगुरूपोत्तमार्थ आरम्भः, अनणिञर्थश्च। क्रौड्या। लाड्या।

क्रौडि। लाडि। व्याडि। आपिशलि। आपक्षिति। चौपयत। चैटयत। शैकयत। बैल्वयत। वैकल्पयत। सौधातकि। ✽ सूत युवत्याम् ✽ ( ग० सू० ५८ )। ✽ भोज क्षत्त्रिये ✽ ( ग० सू० ५९ )। भौरिकि। भौलिकि। शाल्मलि। शालास्थलि। कापिष्ठलि। गौलक्ष्य। गौकक्ष्य॥

१३३१. दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम्॥ ८१ ॥ ( १२०१ )

दैवयज्ञि, शौचिवृक्षि, सात्यमुग्रि, काण्ठेविद्धि – इत्येतेषामन्यतरस्यां ष्यङ् प्रत्ययो भवति। इञन्ता एते, गोत्रग्रहणं च नानुवर्तते। तेनोभयत्रविभाषेयम्। गोत्रे पूर्वेण नित्यः ष्यङादेशः प्राप्तो विकल्प्यते, अगोत्रे त्वनन्तरेऽपत्ये पक्षे विधीयते। तेन मुक्ते 'इतो मनुष्यजातेः' ( ४.१.६५ ) इति ङीषेव भवति। दैवयज्ञ्या, दैवयज्ञी। शौचिवृक्ष्या, शौचिवृक्षी। सात्यमुग्र्या, सात्यमुग्री। काण्ठेविद्ध्या, काण्ठेविद्धी।

न्यासः

इत्यादि। येऽत्राणन्ता इञन्ताश्च पठ्यन्ते तान् प्रत्ययमगुरूपोत्तमार्थ आरम्भः। ये त्वन्ये, तान् प्रत्ययमणिञर्थः। तत्राद्याः क्रौड्यादयः प्राक् चौपयतशब्दादिञन्ताः। चौपयतप्रभृतयस्त्वणन्ताः प्राक् सौधातकिशब्दाद्। सौधातकिशब्दस्तु 'सुधातोरकङ् च' इतीञन्तः। सूत युवत्यामिति। सूतशब्दाद् युवत्यां प्राप्तयौवनायां ष्यङ् भवति – सूत्या, अन्यत्र टाबेव-सूता। भोज क्षत्त्रिय इति। भोजशब्दात् क्षत्त्रियजातौ वाच्यायां ष्यङ् भवति। जातिलक्षणस्य ङीषोऽपवादः—भोज्या, अन्यत्र टाबेव भवति—भोजा। ततः परे प्राग् गौकक्ष्यशब्दादिञन्ताः। स पुनर्गर्गादियञन्तः॥ ८०॥

दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम्॥ गोत्रे पूर्वेण नित्य इत्यादि। यदा पौत्त्रप्रभृतावपत्य इञ् विधीयते तदा पूर्वेण 'अणिञोः' इत्यादिना नित्ये प्राप्ते विकल्प्यते। यदा त्वनन्तरापत्ये तदाऽप्राप्त एव पक्षे विधीयते॥ ८१॥

पदमञ्जरी

चौपयतप्रभृतयः प्राग् सौधातकिशब्दादणन्ताः, सौधातकिशब्दः 'सुधातुरकङ् च' इति इञन्त। सूत युवत्यामिति। सूतशब्दः ष्यङमुत्पादयति युवत्यां प्राप्तयौवनायामभिधेयायाम्—सूत्या, अन्यत्र क्रियाशब्दाट्टाब् भवति—सूता, जातिवाचिनस्तु ङीष् भवति—सूती। भोज क्षत्त्रिये इति। जातिलक्षणस्य ङीषोऽपवादः—भोज्या, क्रियाशब्दात्तु टाबेव भवति—भोजयतीति भोजा, ततः परे इञन्ताः। गौकक्ष्यशब्दो गर्गादियञन्त॥ ८०॥

दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम्॥ देवा यज्ञा=यष्टव्या अस्य देवयज्ञः, शुचिर्वृक्षोऽस्य शुचिवृक्षः, सत्यमुग्रमस्य सत्यमुग्रः, निपातनाद्विशेष्यस्य पूर्वनिपातो मुमागमश्च, कण्ठे विद्धमस्य कण्ठे

भावबोधिनी

इलोप, चाप् करने पर रूप सिद्ध होता है।] क्रौडि। लाडि। व्याडि। आपिशलिल। आपक्षिति। चौपयत। चैटयत। शैकयत। वैल्वयत। वैकल्पयत। सौधातकि। [ अणन्त और इञन्त भी जिनमें उपोत्तम गुरु नहीं हैं उनसे ष्यङ् करने के लिये पाठ है।] * युवती अर्थ में सूत शब्द से ष्यङ् प्रत्यय होता है। [ उदा० – सूत्या = प्राप्तयौवना सूतस्त्री। अन्य अर्थ में तो टाप् ही होता है—सूता।] * क्षत्रिय अर्थ में भोज से ष्यङ् होता है। [ उदा० – भोज + ष्यङ् = य, चाप्—भोज्या। अन्य अर्थ में टाप् होने से भोज्जा।] भौरिकि। भौलिकि। शाल्मलि। शालास्थलि। कापिष्ठलि। [ ये इञ् प्रत्ययान्त है ] गौलक्ष्य। गौकक्ष्य। [ ये यञ् प्रत्ययान्त हैं।]॥ ८०॥

दैवयज्ञि, शौचिवृक्षि, सात्यमुग्रि, काण्ठेविद्धि—इन शब्दों से विकल्प से ष्यङ् प्रत्यय होता है। ये शब्द इञ्-प्रत्ययान्त हैं। गोत्रग्रहण की अनुवृत्ति नहीं होती है। अतः यह उभयत्र विभाषा है। गोत्र अर्थ में पूर्वसूत्र से नित्य

## १३३२. समर्थानां प्रथमाद् वा ॥ ८२ ॥ ( १०७२ )

**त्रयमप्यधिक्रियते – समर्थानामिति च, प्रथमादिति च, वेति च। स्वार्थिकप्रत्ययावधिश्चायमधिकारः—**

**न्यासः**

**समर्थानां प्रथमाद्वा ॥ स्वार्थिकप्रत्ययावधिश्चायमधिकार इति।** स्वार्थेप्रकृत्यर्थे भवाः स्वार्थिकाः, अध्यात्मादित्वाट्ठञ्। स्वार्थिकाः प्रत्यया अवधिर्मर्यादा यस्य स तथोक्तः। **प्राग्दिशो विभक्तिरिति यावदिति।** अनेन यतः परेण स्वार्थिकाः प्रत्यया अवधिभूताः प्रवर्त्तन्ते तत् सूत्रं दर्शयन् 'प्राग्दिशो विभक्तिः' इत्येतत्सूत्रात् प्रागयमधिकार इत्याचष्टे। किं पुनः कारणं स्वार्थिकेष्वप्ययमधिकारो न प्रवर्तते ? इत्याह—**स्वार्थिकेष्वित्यादि। समर्थानामिति।** सम्बद्धार्थानामित्येषोऽर्थः। सम्बद्धार्थता च द्विष्ठत्वात् प्रतियोगिनि सति भवति, स्वार्थिकानाञ्च प्रकृत्यर्थादर्थान्तरं न सम्भवति यत्प्रत्यायनाय शब्दान्तरं प्रयुज्येत, यदपेक्षया च समर्थता स्यात्। तस्मात् समर्थताया अभावात् स्वार्थिकेषु समर्थानामित्येतत् तावन्नोपयुज्यते। अत एव प्रतियोगिनोऽभावात् प्रथमादि-

**पदमञ्जरी**

वा विद्धः, 'अमूर्द्धमस्तकात्' इत्यलुक्। **काण्डेविद्धिभ्य** इत्यन्ये पठन्ति, काण्डेन विद्धः, 'कर्तृकरणे कृता बहुलम्' इति समासः, निपातनात् काण्डशब्दस्यैकारः। सर्वे इञन्ताः ॥ ८१ ॥

**समर्थानां प्रथमाद्वा ॥** प्रत्येकमत्र पदानां स्वरितत्वं प्रतिज्ञायते, न समुदायस्यैकमित्याह—**त्रयमपीति।** अत्र च प्रयोजनम्—एकस्य निवृत्तावपरस्य निवृत्तिर्मा भूदिति। एतदेव स्पष्टयति—**समर्थानामिति चेति। स्वार्थिकप्रत्ययावधिश्चायमिति।** स्वस्याः प्रकृतेरर्थे भवाः स्वार्थिकाः, अध्यात्मादिः, **भाष्यकार**प्रयोगाद् द्वारादिकार्याभावः, स्वशब्दस्य तु द्वारादिषु पाठादस्ति प्रसङ्गः। तदादिविधिर्हि तत्र भवति; आद्यज्विशेषणत्वाद् द्वारादीनाम्, यथा—द्वारपालस्येदं दौवारपालमिति। **प्राग्दिशो विभक्तिरिति यावदिति।** तत आरभ्य हि स्वार्थिकाः प्रत्यया विधीयन्ते, किं पुनः कारणं स्वार्थिकेष्वेष न प्रवर्तते ? इत्याह—**स्वार्थिकेष्वित्यादि।** तत्र समर्थानामिति सम्बद्धार्थानां चेत्यर्थः। तत्र वाक्ये सम्बद्धार्थता, व्यपेक्षा हि तत्र सामर्थ्यम्, अपेक्षा आकाङ्क्षा, अन्योऽन्यापेक्षा = व्यपेक्षा। अनयाऽऽकाङ्क्षासन्निधियोग्यत्वेषु सत्सु यः सम्बन्धः स लक्ष्यते। वृत्तौ संसृष्टार्थता। एकार्थीभावो हि तत्र सामर्थ्यम्। वृत्तौ ह्युपसर्जनपदानि स्वार्थमुपसर्जनीकृत्य प्रधानार्थपराणि

**भावबोधिनी**

ष्यङ् आदेश प्राप्त होता है, उसका विकल्प किया जाता है, गोत्रभिन्न में तो अनन्तर अपत्य अर्थ में पक्ष में विधान किया जाता है। [ इस प्रकार प्राप्त और अप्राप्त रहने पर विकल्प होने से उभयत्रविभाषा स्पष्ट है। इस ष्यङ् से मुक्त रहने पर अर्थात् इसके अभावपक्ष में 'इतो मनुष्यजातेः' ४।१।६५ से ङीप् ही होता है। उदा०—दैवयज्ञ्या, दैवयज्ञी [ देवाः यज्ञाः = यष्टव्याः अस्य सः—देवयज्ञः, तस्य अपत्यम् इस अर्थ में इञ् प्रत्यय, आदिवृद्धि, भसंज्ञा अ का लोप—दैवयज्ञि + ष्यङ् = य, इलोप, चाप् = आ—(१) दैवयज्ञ्या। पक्ष में दैवयज्ञि + ङीष् = ई—(२) दैवयज्ञी। देवयज्ञ की स्त्री अपत्य ] शौचिवृक्ष्या, शौचिवृक्षी। [ शुचिः वृक्षः अस्य सः—शुचिवृक्षः, तस्य अपत्यम्—इञ् प्रत्यय, आदिवृद्धि आदि सभी पूर्वोक्त कार्य होते हैं। ] सात्यमुग्र्या, सात्यमुग्री [ सत्यम् उग्रमस्य सः—इस समास में निपातनात् विशेष्य सत्य का पूर्वनिपात और मुम् = म् आगम—सत्यमुग्र। तस्य अपत्यम्—इञ्, शेष प्रक्रिया पूर्ववत। ] काण्ठेविद्ध्या, काण्ठेविद्धी। [ कण्ठे विद्धम् अस्य सः—विग्रह में समास करने पर 'अमूर्द्धमस्तकात्' ६।३।१२ से सप्तमी का अलुक्—कण्ठेविद्ध। तस्य अपत्यम् अर्थ में इञ्, शेष प्रक्रिया पूर्ववत् ॥ ८१ ॥

(१) समर्थानाम्, (२) प्रथमात्, (३) वा—इन तीनों का अधिकार चलता है, इनकी अनुवृत्ति होती है। "प्राग्दिशो विभक्तिः" ५।३।१ इस स्वार्थिक प्रत्यय तक यह अधिकार चलता है। स्वार्थिक प्रत्ययों में इसका उपयोग नहीं है, विकल्प भी उनमें अवस्थित है। [ अर्थात् कहीं होता है और कहीं नहीं होता है। ] कुछ प्रत्यय नित्य ही होते हैं ॥

**'प्राग्दिशो विभक्तिः' ( ५.३.१ ) इति यावत् । स्वार्थिकेषु ह्यस्योपयोगो नास्ति, विकल्पोऽपि तत्रानवस्थितः । केचिन्नित्यमेव भवन्ति ।**

**लक्षणवाक्यानि – 'तस्यापत्यम्' ( ४.१.९२ ), 'तेन रक्तं रागात्' ( ४.२.१ ), 'तत्र भवः' (४.३,५३ ) –**

**न्यासः**

त्येतदपि नोपयुज्यत एव । यदि हि प्रतियोगिशब्दान्तरं स्यात्, तत आशङ्का स्यात्—किं प्रथमात् प्रत्ययः ? उत द्वितीयादिति ? ततश्च तन्निवृत्तये प्रथमादिति वचनमनुवर्त्तमानमर्थवत् स्यात् । असति तु द्वितीये प्रतियोगिनि तदनुवृत्तिर्नोपयुज्यते । **विकल्पोऽपि तत्रानवस्थित इति ।** अनियत इत्यर्थः । यतः केचित् स्वार्थिका नित्यमेव भवन्ति । तथा च 'अषडक्षाशितङ्ग्वलंकर्मालम्' इत्यादौ सूत्रे **भाष्यकारः** परिगणनं करिष्यति—'के पुनर्नित्याः प्रत्ययाः ? तमबादयः प्राक् कात्, ञ्यादयः प्राग्वुनः, आमादयः प्राङ्मयटः, बृहत्या जात्यन्तात् समासान्ताश्च' इति । तत्र 'अतिशायने तमबिष्ठनौ' इति तमप्प्रभृतयो ये प्रत्ययाः 'प्रागिवात् कः' इत्येतस्मात् प्राक् ते नित्याः । तथा 'पूगाञ्ञ्योऽग्रामणीपूर्वात्' इत्यतो ञ्यप्रत्ययात् प्रभृति 'पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च' इत्यतो वुनः प्राग् ये ते नित्याः । तथा 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्यत आम्प्रभृति प्राक् तत्प्रकृतवचने मयटो ये प्रत्ययास्ते नित्याः । तथा 'बृहत्या आच्छादने' इति यो विहितः कप्रत्ययः 'जात्यन्ताच्छो बन्धुनि' इति च यश्छप्रत्ययो ये समासान्ता डजादयस्ते सर्वे नित्याः । तस्माद् विकल्पः स्वार्थिकेष्वनवस्थितः । ततश्च वाग्रहणमपि तत्रानवस्थितमेव क्वचिदनुवर्त्तते, क्वचिन्नेत्युक्तं भवति ।

इह प्रथमादिति विशेषणं प्रयोगवाक्यस्य ? लक्षणवाक्यस्य वा ? यदि प्रथमः, ततो लौकिके वाक्ये पदानां

**पदमञ्जरी**

भवन्ति, यथा—गङ्गायां घोष इति गङ्गापदं गङ्गोपसर्जनं तीरमाह । तथोपगव इत्यत्रोपगुशब्दः स्वार्थोपसर्जनमपत्यमाह । अत एव ऋद्धस्योपगव इति ऋद्धत्वमुपगोर्विशेषणं न भवति । यत्र हि शब्दः पर्यवस्यति तत्रैव विशेषणसम्बन्धः । यदि च वाक्यवद् वृत्तावपि स्वार्थ एव पर्यवस्येत्तद्वदेव विशेषणसम्बन्धो भवेत्, प्रधानपदान्यप्युपसर्जनविशिष्टमेव स्वार्थं ब्रुवते । यदि तु वाक्यवद् वृत्तावपि प्रधानपदानि स्वार्थमेव ब्रूवीरन् ततो यथोपगोरपत्यं देवदत्तः कल्याणश्चेत्युभाभ्यामपत्यार्थस्य सम्बन्धः, तथौपगवः कल्याणश्चेत्यप्युक्ते स्यात्, न चैवम् । अतो यादृशस्य सम्बन्धस्य भावादयं विशेषः स एकार्थीभावः । न च स्वार्थिकेषु प्रकृत्यर्थादर्थान्तरं सम्भवति यत्प्रत्यायनाय शब्दान्तरं प्रयुज्येत, येन सह समर्थता स्यात् । एतेन प्राथम्यं व्याख्यातम् । अतः प्रतियोग्यपेक्षया सामर्थ्यप्राथम्ययोरभावात् स्वार्थिकेषु नास्योपयोग इति सिद्धम् । **विकल्पोऽपि तत्रानवस्थित इति ।** क्वचित्प्रवर्तते । एतच्चाषडक्षादिसूत्रे वक्ष्यते । इह 'प्रथमात्' इत्येतद्विशेषणं शास्त्रवाक्यगतमाश्रीयते, न विग्रहवाक्यगतम्; अनियतत्वात् । वाक्ये हि प्रयोगोऽनियत इति सर्वेषां प्राथम्यसम्भवात् । कदाचिदपत्यवद्वाचिनोऽपत्ये प्रत्ययः स्यात्, कदाचिदपत्यवाचिनस्तद्वति । अयं च प्रकारोऽसत्यपि 'प्रथमात्' इत्यस्मिंल्लभ्यत इत्यनर्थकं तत्स्यात् ।

ननु च यस्मिन् वाक्ये यत्प्रथमोच्चारितं तस्मिस्तत एव यथा स्यात्, चरमोच्चारितान्मा भूदित्येतत् प्रयोजनं स्यात् ? तन्न; न हि वृत्तिवाक्ययोः सहप्रयोगः, ततश्च वाक्यगते प्राथम्ये व्यवस्थापके सति वृत्तेः प्रयोगो न नियत इति व्यर्थमेव 'प्रथमात्' इति विशेषणं स्यात्, तस्माच्छास्त्रवाक्यगतमेव प्राथम्यं व्यवस्थापकमित्याह—**लक्षणवाक्यानीत्यादि ।**

**भावबोधिनी**

लक्षण वाक्य=सूत्र--"तस्यापत्यम्" ४।१।९२ [ उसका अपत्य--अर्थ में अण् आदि होते हैं । ] "तेन रक्तं रागात्" ४।२।१ [ उससे रंगा गया इस अर्थ में रागवाची से अणादि प्रत्यय होते हैं । ] "तत्र भवः" ४।३।५३ [ उस

**इत्येवमादीनि भविष्यन्ति। तेषु सामर्थ्ये सति प्रथमनिर्दिष्टादेव विकल्पेन प्रत्ययो भवतीति वेदितव्यम्।**

**'समर्थानाम्' इति निर्द्धारणे षष्ठी। समर्थानां मध्ये प्रथमः प्रत्ययप्रकृतित्वेन निर्धार्यते। तस्येति सामान्यं विशेषलक्षणार्थम्। तदीयं प्राथम्यं विशेषाणां विज्ञायते। उपगोरपत्यम् औपगवः।**

**न्यासः**

प्रयोगे नियमो नास्तीति; पात्रमाहर, आहर पात्रमिति प्रयोगात्। ततश्च यदापत्यमुपगोरिति प्रयुज्यते, तदापत्यशब्दात् प्रथमासामर्थ्यात् प्रत्ययः स्यात्। ननु च तस्येत्यनेन सूत्रोपात्तेनानुकरणपदेन षष्ठ्यन्तेन प्रथमेनालौकिकवाक्यसमवायि पश्चान्निर्दिष्टमपि पदमनुक्तम्, तत् प्रथमत्वात् प्रथमव्यपदेशमासादयति। तेन यदाप्यपत्यमुपगोरिति लौकिकं वाक्यं प्रयुज्यते, तदोपगुशब्दादेव यथोक्तेनैव प्रकारेण लब्धप्रथमव्यपदेशात् प्रत्ययो भविष्यति; नापत्यशब्दात्। तदाद्येऽपि पक्षे समाश्रीयमाणे न दोष इति चेद्? वार्त्तमेतत्; न हि मुख्ये प्रथमे सम्भवति सति गौणस्य ग्रहणं युक्तम्। अतः सत्यप्युपगुशब्दस्य गौणेन प्रथमत्वे मुख्यात् प्रथमादपत्यशब्दादेव प्रत्ययः स्यात्, नोपगुशब्दात्। प्रतिपत्तिगौरवञ्च। द्वितीये तु पक्ष एष दोषो नावतरति; लक्षणवाक्येषु पदानां प्रयोगस्य नियतत्वात्। अतस्तमाश्रित्याह—**लक्षणवाक्यानीत्यादि**। समर्थानां मध्ये प्रथमः प्रत्ययप्रकृतित्वेन निर्धार्यत इति, यथा—कृष्णा गवां सम्पन्नक्षीरतमेति, गवां मध्ये कृष्णा गौः सम्पन्नक्षीरतमात्वेन। यदि तर्हि समर्थानां प्रथमात् प्रत्ययो भवति, एवं सति 'तस्यापत्यम्' इत्यत्र तस्येत्येतत्सर्वनाम सामान्यवाचि प्रथमं निर्दिष्टमिति सामान्यवाचिन एव प्रत्ययः स्यात्, न विशेषवाचिनः; प्रातिपदिकादुपग्वित्यादेः, न हि तल्लक्षणवाक्ये

**पदमञ्जरी**

**समर्थानामिति निर्धारणे षष्ठीति**। ततश्च निर्धारणस्य तुल्यजातीयविषयत्वात् प्रथमात् समर्थात् प्रत्ययो भवति, तत्र 'समर्थात् प्रथमात्' इति वक्तव्ये 'समर्थानां प्रथमात्' इति वचनं प्रधानपदस्याप्युपसर्जनपदेनैकार्थीभावप्रतिपादनार्थम्; अन्यथा वाक्यवद् वृत्तावपि प्रधानपदस्यान्येनापि सम्बन्धः शङ्क्येत। यदि तर्हि लक्षणवाक्ये प्रथमोच्चारितात् प्रत्ययः, एवं सति 'तस्यापत्यम्' इत्यादौ सर्वनाम प्रथमनिर्दिष्टमिति तत एव प्रत्ययः स्यात्, नोपग्वादेः, न हि तल्लक्षणवाक्ये प्रथमनिर्दिष्टमित्यत आह—**तस्येति**। सामान्यमित्यादि विशेषलक्षणम्,[1] विशेषोपलक्षणमित्यर्थः। 'तस्यापत्यम्' इत्यादौ हि विशेषा एव निर्देष्टुमिष्टाः, तेषां तु सर्वेषां प्रत्येकमुपादाने गौरवं स्याद्, एकस्योपादानेऽनुपात्ताद्विशेषान्तरान्न स्याद्, यथा—अद्भिः संस्कृतमित्यादाविति सर्वेषामुपलक्षणत्वेन तस्येत्यादिकमुपात्तम्। **तस्योपग्वादेरिति**। न तु स्वयं कार्यितया। न हि तस्येत्यस्य सामान्यवचनस्य प्रकरणाद्यभावेन विशेषेऽनवस्थितस्यापत्यं प्रति सम्बन्धिविशेषप्रतिपादनेन सम्बन्ध्यन्तरव्यवच्छेदाख्य उपकारः सम्भवति। सम्बन्धिसामान्यं त्वपत्यशब्दस्य सम्बन्धिशब्दत्वादेवावगतम्, अतो यत्सूत्रे साक्षात् प्रथमोच्चारितं सामान्यवाचि न तस्मात् प्रत्ययः, यस्माच्च प्रत्ययो न तत्सूत्रे साक्षात्प्रथमोच्चारितमिति अगत्या उपलक्षणगतं प्राथम्यमुपलक्ष्याणां विज्ञायते। तदाह—**तदीयं प्राथम्यं विशेषाणां विज्ञायत इति**।

**भावबोधिनी**

स्थान पर होनेवाला—इस अर्थ में अणादि प्रत्यय होते हैं। ]—आदि होंगे। इन सूत्रवाक्यों मे सामर्थ्य रहने पर प्रथम निर्दिष्ट [ प्रथम उच्चारित ] से ही विकल्प से प्रत्यय होता है—यह समझना चाहिये।

'समर्थानाम्' यह निर्धारण अर्थ में षष्ठी है। समर्थों के मध्य में प्रथम को प्रत्यय की प्रकृतिरूप से निर्धारित किया जाता है। [ तस्यापत्यम् ४।१।९२ आदि में ] तस्य = उसका अपत्य—यह सामान्यनिर्देश विशेष का लक्षण = सूचक = उपलक्षण है। विशेषों के मध्य में उस [ प्रथम उच्चारित का प्राथम्य ज्ञात होता है। उपगोः अपत्यम्। [ उपगु नामक व्यक्तिविशेष का अपत्य = सन्तान। यहाँ 'तस्य' इससे सामान्यसर्वनाम नहीं अपितु व्यक्तिविशेष का ज्ञान होता है ]

---

१. विशेषलक्षणार्थमिति क्वचित् पाठः, स तु पदमञ्जरीकारानभिप्रेतः।

**समर्थानामिति किम् ? कम्बल उपगोरपत्यं देवदत्तस्य । प्रथमादिति किम् ? षष्ठ्यन्ताद् यथा स्यात्,**

न्यासः

प्रथमं निर्दिष्टम् ? इत्याह आह—**तस्येत्यादि । विशेषलक्षणार्थमिति ।** विशेषोपलक्षणार्थमित्यर्थः । यदि हि तस्येत्येतद् विशेषोपलक्षणार्थं न स्यात् तदा समर्थता तस्य न स्यात् । न हि तस्येत्येतत् प्रकरणाद्यनपेक्षं विशेषेष्ववतिष्ठते । न च विशेषेष्वनवस्थितेनानेनापत्यस्य कश्चिदुपकारः क्रियते । सम्बन्धिसामान्यं हि सामान्यवाचिनोऽपत्यस्य प्रतिपादनेनावगतमिति । तस्येत्यनेनास्यापूर्वः कश्चिदुपकारः कृतो भवति; सम्बन्धिसामन्यस्य सम्बन्धिशब्दत्वात्, अपत्यशब्देनैव गमितत्वात् । ततश्चोपकाराभावात् समर्थता न स्यात् । उच्यते चेदम्—तस्येति । तस्मात् सामर्थ्याद् विशेषोपलक्षणार्थत्वं तस्येत्यस्य । तेन ये विशेषा उपलक्षिताः = प्रतिपादितास्ते सम्बन्ध्यन्तरव्यवच्छेदेन विशिष्टं सम्बन्धिनं प्रतिपादयन्त उपकारिणो भवन्तीत्युपपद्यते तैः सह सामर्थ्यम् । तस्मात् तस्येत्येतत् सामान्यं विशेषोपलक्षणार्थं द्रष्टव्यम् । तेन तस्य यत् प्राथम्यं तद्विशेषाणामुपगुशब्दादीनां विज्ञायते । ततश्च तत एव प्रत्ययो भवति, न च सामान्यवाचिनः ।

**कम्बल उपगोरपत्यं देवदत्तस्येति ।** अत्रोपगुशब्दः कम्बलेन सह सम्बद्धः, नापत्येन । अपत्यशब्दस्यापि देवदत्तशब्देन, नोपगुशब्देन । तस्मादपत्यशब्देन सहोपगुशब्दस्य सम्बन्धो नास्तीति न ततः प्रत्ययो भवति ।

पदमञ्जरी

**कम्बल उपगोरित्यादि ।** यथापत्यशब्दस्य पूर्वपराभ्यां यथेष्टमभिसम्बन्धो भवति, एवमणोऽपि सम्भाव्येतेति भावः । अत्र च प्रत्यये सत्यनर्थकस्यापि समुदायस्य तद्धितान्तत्वेन प्रातिपदिकसंज्ञायामेकत्वाद्यभावेऽपि अव्ययेभ्य इव स्वादयः स्युः । ननु 'तस्यापत्यम्' इति श्रूयमाणसम्बन्ध्यपेक्षायां विभक्तौ विज्ञायमानायां नात्र प्रसङ्गः ? नैतदेवम्; न हि लक्षणवाक्ये विभक्त्युच्चारणम्, सम्बन्धप्रतिपदानार्थसामान्यस्य सम्बन्धासम्भवात्, किं तर्हि ? षष्ठ्यन्तात्प्रत्ययविध्यर्थम् । तथापि विशेषोपलक्षणद्वारेण सम्बन्धः स्याद् ? एवमपि ऋद्धस्योपगोरपत्यमित्यादौ सापेक्षादपि स्यादेव । समर्थपरिभाषया तर्हि व्यवस्था भविष्यति ? स्यादेवं यद्येतस्मात् सूत्रात् प्रागेव सुबन्तात्तद्धिता इति व्यवस्थितं स्यात् । इह तु ङ्याप्प्रातिपदिकाधिकारात् षष्ठ्यादिविभक्त्यर्थवृत्तेस्तत एव तद्धिताः स्युः । सति त्वस्मिन्सम्बन्धप्रतिपत्तेर्विभक्त्यायत्तत्वात् सुबन्तादेव तद्धिता भवन्ति, न चैवं सति पदकार्यप्रसङ्गः । तथा हि राजन्ये वार्त्रघ्न इत्यादौ भसंज्ञयोपजातया लुप्तविभक्त्याश्रयापि पदसंज्ञा एकसंज्ञाधिकाराद् बाधिष्यते । राजत्वं राजतेत्यादौ तु प्रातिपदिकादप्युत्पत्तौ 'स्वादिषु' इति पदसंज्ञा भवत्येव । ननु तद्धितलुकि सर्वनामस्थाने दोषः, काश्यपेन प्रोक्तमधीयते 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिः', 'छन्दोब्राह्मणानि' इति तद्विषयतायाम् । 'तदधीते तद्वेद' इति द्वितीयान्तात् काश्यपिन्शब्दादुत्पन्नास्याणः प्रोक्ताल्लुकि यद्यपि काश्यपिन इत्यादौ भसंज्ञाया लुप्तविभक्तिनिमित्ताया अपि पदसंज्ञाया बाधाददोषः, काश्यपिभ्यामित्यादौ तु भवत्येव पदसंज्ञा; तथापि काश्यपिनौ, काश्यपिन इत्यादौ सर्वनामस्थाने भसंज्ञाया अभावाल्लुप्तामन्तर्वर्तिनीं विभक्तिमाश्रित्य पदसंज्ञा स्यात् । न चासर्वनामस्थान

भावबोधिनी

समर्थों के मध्य में—इसके ग्रहण का क्या फल है ? कम्बल उपगोः अपत्यं देवदत्तस्य । [ उपगुनामक व्यक्ति का कम्बल और देवदत्त का अपत्य है—इसलिये अपत्य का सम्बन्ध उपगु के साथ नहीं है । इस कारण उपगु से प्रत्यय नहीं होता है । ]

प्रथम [ उच्चारित ] से हो—इसका क्या प्रयोजन है ? षष्ठ्यन्त से हो, प्रथमान्त से न हो । [ "तस्य अपत्यम्" ४।१।९२ इस सूत्र में तस्य इस षष्ठ्यन्त का पहले उच्चारण है । अतः उससे बोधित 'उपगोः'—उपगु से ही प्रत्यय होता है, अपत्य से नहीं । ]

**प्रथमान्तान्मा भूत् ।**

**वाग्रहणं किम् ? वाक्यमपि हि यथा स्यात् – उपगोरपत्यमिति । यद्येवम्, समासवृत्तिस्तद्धितवृत्त्या**

**न्यासः**

**वाक्यमपि हि यथा स्यादिति ।** असति हि वाग्रहणे वाक्येनापत्यस्याभिधाने प्राप्ते तस्मिन्नर्थे विधीयमानः प्रत्ययस्तन्निवर्तयेत् । ननु च समानेऽर्थे शास्त्रान्वितोऽशास्त्रान्वितस्य निवर्तको भवति, यथा—'गमेर्डोः'

**पदमञ्जरी**

इति प्रतिषेधः, किं कारणम् ? स्वादिष्विति या प्राप्तिस्तस्या एव स निषेधः । एवं तर्हि 'असर्वनामस्थाने' इति विभज्यते, प्रसज्यप्रतिषेधश्चाश्रीयते, तत्सामर्थ्याद् 'अनन्तरस्य विधिर्वा' इत्येतन्नाश्रीयते, तेन सर्वनामस्थाने परतः पूर्वस्यावधेर्या च यावती पदसंज्ञा स्वादिष्विति वा सुबन्तमिति वा सा सर्वा प्रतिषेत्स्यते । यद्येवम्, राजा दण्डीत्यादौ सावपि न स्यात्, 'यचि भम्' इत्यतोऽचीत्येतदसर्वनामस्थाने इत्यत्रापेक्ष्यते, तेनाजादावेव सर्वनामस्थाने सर्वा पदसंज्ञा निषेत्स्यते ? सौ हलादौ स्वादिष्विति वा सुबन्तमिति वा भविष्यतीत्यदोषः । तदेवं सत्यस्मिन् वचने सुबन्तात्तद्धिते न कश्चिद्दोष इति स्थितम् ।

अत एव पूर्वाह्णेतरां पूर्वाह्णेतमामित्यादौ 'घकालतनेषु' इत्यलुक् विधास्यते । ननु सत्यप्यस्मिन् स्वार्थिकेष्वस्याव्यापारात् कथं सुबन्तात्तरप् स्यात् ? एवं तर्ह्यर्थक्रम एवायमीदृशो यदुत पूर्वं विभक्त्या योगः, पश्चात्तरपा । उक्तं हि प्रियकुत्सनादिषु ततः प्रवर्त्ततेऽसौ विभक्त्यन्त इति । एवं च कृत्वाऽलुग्विधानमप्युपद्यते । यदि तु तदेवालुग्विधानं ज्ञापकम्, तस्यापत्यमित्यादौ न विभक्त्यर्थमात्रे तात्पर्यम्, किन्तु षष्ठ्यादिविभक्त्यन्ता एवोपलक्षयितुमिष्टाः । ङ्याप्प्रातिपदिकाधिकारस्तु वृद्धादिविशेषणत्वेनैवोपयुज्यत इति, तथा सति पदविधित्वात् समर्थपरिभाषयैव व्यवस्था सिद्ध्यति । किञ्च—अनभिधानादसामर्थ्ये न भविष्यति, नार्थः समर्थवचनेन ।

इदं तर्हि प्रयोजनम्—यदर्थाभिधानसमर्थं तस्माद्यथा स्यात् । किं पुनस्तत् ? कृतवर्णानुपूर्वीकं पदम्—सौत्थितिः, वैक्षमाणिरिति, अत्र सवर्णदीर्घत्वे कृते प्रत्ययो भवति, सु+उत्थित वि+ईक्षमाण—इत्यस्यामवस्थायां न भवति । यदि स्यात्, सावुत्थितिः वायीक्षमाणिरिति प्राप्नोति, 'वार्णादाङ्गं बलीयः' इति वृद्धिप्रसङ्गात् । नन्वन्तरङ्गत्वाद्वार्णेषु कृतेषु प्रत्ययो भविष्यति ? एवं तर्ह्येतदर्थं समर्थवचनं कुर्वन्नेतज्ज्ञापयति—अस्तीयं परिभाषा 'अकृतव्यूहाः पाणिनीयाः' कृतमपि शास्त्रं निवर्तयन्तीति । व्यूहः = शास्त्रकार्यम्, तदन्तरङ्गत्वात् प्राप्तमपि पश्चादस्य निमित्तविघातो भविष्यतीति बुद्ध्या न कृतं यैस्तेऽकृतव्यूहाः, एवंभूता भवन्ति पाणिनीया इत्यर्थः । कृतमपीत्यत्र वाशब्दोऽध्याहार्यः, कृतमपि वा शास्त्रकार्यं निवर्तयन्ति निमित्ताभाव उत्पत्स्यमाने इत्यर्थः । तेन पपुष इत्यादि सिद्धं भवति । अत्रान्तरङ्गत्वात् पूर्वकृतोऽपीडागम एतत्परिभाषा-वशान्निवर्तते, पूर्वमेव वा न क्रियते, ततः शसि सम्प्रसारणे कृते वलादित्वादिडभावः । **प्रथमान्तादिति ।** प्रथमानिर्दिष्टादपत्यविशेषवाचिनो देवदत्तादिशब्दादित्यर्थः । अन्यथा 'सास्य देवता' इति यथा इन्द्रो देवतास्य ऐन्द्रः स्थालीपाक इति प्रथमान्तात् षष्ठ्यर्थे प्रत्ययो भवति, एवमिहापि स्यात्—देवदत्तोऽपत्यमस्य दैवदत्तिरुपगुरिति ।

**वाग्रहणं किमिति ।** वृत्तिवाक्ययोर्व्यपेक्षैकार्थीभावलक्षणादर्थभेदादेव बाध्यबाधकभावो न भविष्यतीति प्रश्नः । **वाक्यमिति यथा स्यादिति ।** तद्यथा गोशब्देन गावीशब्दो निवर्तते सत्यामपि स्त्रीत्वप्रतिपत्तौ,

**भावबोधिनी**

वा—का ग्रहण किस लिये हैं ? 'उपगोः अपत्यम्—यह वाक्य भी जिससे बन सके, उसके लिये 'वा' का ग्रहण है । यदि ऐसी बात है तो 'उपगवपत्यम्—' आदि में तद्धितवृत्ति समासवृत्ति का बाध कर लेगी; समास नहीं हो सकेगा ? यह दोष नहीं है; पूर्ववर्त्ती [ "दैवयज्ञि·······अन्यतरस्याम्" ४।१।८१ ] सूत्र से 'अन्यतरस्याम्' की अनुवृत्ति होती है, इससे

**बाध्येत – उपग्वपत्यमिति ? नैष दोषः; पूर्वसूत्रादन्यतरस्यांग्रहणमनुवर्तते, तेनैतदपि भविष्यति ॥**

### न्यासः

इत्यनेन शास्त्रान्वितो गोशब्दोऽशास्त्रान्वितस्य गावीशब्दस्य समानार्थस्यैव, न तु भिन्नार्थस्य डित्थादेः । न च वृत्तिवाक्ययोः समानोऽर्थः, वृत्तौ ह्येकार्थीभावः सामर्थ्यम्, वाक्ये तु व्यपेक्षा ? नैतदेवम्, सत्यपि ह्येतस्मिन्नर्थभेदे प्रधानार्थो न भिद्यते तथा हि–उपगोरपत्यमानयेत्युक्ते य एवार्थोऽपत्यापत्यवत्सम्बन्ध-विशिष्टः स आनीयते । औपगवमानयेत्युक्ते स एव । प्रधानापेक्षयैव च समानार्थः शास्त्रान्वितोऽशास्त्रान्वितं निवर्तयति, अन्यथा हि गोशब्दोऽपि गावीशब्दं न निवर्तयेत् । अस्ति हि तयोरप्यर्थभेदः, तथा हि—गोशब्दो गोत्वमाचष्टे, गावीशब्दस्तु तथा; अशास्त्रीयत्वञ्च । तस्मादसति वाग्रहणे यथा गोशब्दः सत्यप्यप्रधानार्थभेदे प्रधानार्थस्य समानार्थाद् गावीशब्दं निवर्तयति, तथा तद्धितोऽपि शास्त्रान्वितोऽशास्त्रान्वितं वाक्यं निवर्तयेत् । तस्माद्वाक्यमपि यथा स्यादिति वाग्रहणं क्रियते । **यद्येवमित्यादि** । यदि वाग्रहणेन तद्धितस्य भावाभावौ कुर्वता वाक्यस्य भावः क्रियते, एवं सति यदा वाक्यं नास्ति तदा तद्धितेनैव भवितव्यम् । समासवृत्तिरुपग्वपत्यमित्येषा तद्धितवृत्त्या बाध्येत । **नैष दोष इत्यादि** । गतार्थम् ॥ ८२ ॥

### पदमञ्जरी

तथेहाप्यौपगवमानयेत्युक्ते य एवानीयते 'उपगोरपत्यमानय' इत्युक्ते स एवेति प्रधानार्थभेदाद् वृत्त्या वाक्यं बाध्येतेति भावः । **यद्येवं समासवृत्तिस्तद्धितवृत्त्या बाध्येतेति** । 'यत्रोत्सर्गापवादौ विभाषा तत्रापवादेन मुक्ते उत्सर्गो न प्रवर्तते' इति राज्ञोऽनन्तरो राजानन्तर इत्यादिषु सावकाशा समासवृत्तिस्तद्धितवृत्त्या बाध्येत, यथा—दाक्षिरित्यण् प्रत्यय इञेति भावः । **एतदपीति** । समासवृत्त्याख्यं कार्यमित्यर्थः ॥ ८२ ॥

### भावबोधिनी

यह समासवृत्ति भी हो जायगी । [ अर्थात् (१) औपगवः—यहाँ तद्धितप्रत्यय, (२) उपग्वपत्यम्—समास और (३) उपगोः अपत्यम्—यह वाक्य—ये तीनों हो जाते हैं । ]

विमर्श—प्रस्तुत सूत्र अधिकार सूत्र होने से अग्रिम सभी सूत्रों में इसके तीनों पदों (१) समर्थानाम्, (२) प्रथमात् (३) वा—की अनुवृत्ति होती है । समर्थ=सामर्थ्यविशिष्ट । यद्यपि एकार्थीभावरूप सामर्थ्य लिया जाता है परन्तु उसका ज्ञान "समर्थः पदविधिः" २।१।१ से ही हो जाता है । अतः इस सूत्र में समर्थ=शक्त=कार्योत्पादन में समर्थ लिया जाता है । शब्द का कार्य है—अर्थ का प्रतिपादन, यह तभी होता है जब शब्द के सन्धिकार्य आदि किये जा चुके हों, वह परि-निष्ठित बन चुका हो । इसलिये जिसके सन्धिकार्य आदि किये जा चुके हैं उसी समर्थ से प्रत्यय समझना चाहिये ।

समर्थानाम्—यहाँ निर्धारण अर्थ में षष्ठी है और निर्धार्य का बोधक 'प्रथमात्' यह है। इस प्रकार समर्थों के मध्य में प्रथम उच्चारित जो होता है, उसी से प्रत्यय होता है । इसलिये 'उपगोः अपत्यम्' आदि में दोनों के समर्थ होने पर भी 'तस्य = उपगोः' ही प्रथम उच्चारित है, उसी उपगु से प्रत्यय होता है, अपत्य से नहीं । "तस्यापत्यम्" ४।१।९२ आदि में प्रथम उच्चारित 'तस्य' से षष्ठ्यन्त ही प्रकृतिरूप से निर्धारित होती है क्योंकि सूत्र में 'तस्य = यही प्रथम उच्चारित है । 'कम्बलम् उपगोः अपत्यं देवदत्तस्य—आदि में उपगु का सम्बन्ध अपत्य के साथ नहीं है, अतः उससे प्रत्यय नहीं होता है ।

इस सूत्र में 'वा' है और पूर्ववर्ती सूत्र 'दैवयज्ञि०" ४।१।८१ से अन्यतरस्याम् की अनुवृत्ति होने से दो विकल्प सिद्ध होते हैं । इसलिये तीन प्रकार के प्रयोग होते हैं—( १ ) तद्धित--औपगवः; ( २ ) समास--उपग्वपत्यम्; ( ३ ) वाक्य--उपगोः अपत्यम् ।

चतुर्थ अध्याय के प्रारम्भ में 'प्रातिपदिकात्' का अधिकार है और यहाँ समर्थात् = सुबन्तात् का अधिकार है । इन दोनों का परस्पर सम्बन्ध किस प्रकार बन सकता है ? इस शंका का समाधान यह है-'तस्यापत्यम्' ४।१।९२ आदि में षष्ठी-समर्थ प्रातिपदिक से प्रत्यय हो-यह अर्थ होता है । ऐसा प्रातिपदिक जिससे षष्ठी की गयी है । इस प्रकार दोनों का साम-

## १३३३. प्राग्दीव्यतोऽण् ॥ ८३ ॥ ( १०७३ )

**'तेन दीव्यति' ( ४.४.२ ) इति वक्ष्यति। तदेकदेशो दीव्यच्छब्दोऽवधित्वेन गृह्यते, प्राग्दीव्यत्संशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामोऽण्प्रत्ययस्तत्र भवतीति वेदितव्यम्। अधिकारः, परिभाषा, विधिर्वेति त्रिष्वपि दर्शनेष्वपवादविषयं परिहृत्याण् प्रवर्तते। वक्ष्यति – 'तस्यापत्यम्' ( ४.१.९२ ) औपगवः, कापटवः ॥**

**न्यासः**

**प्राग्दीव्यतोऽण्**। 'प्राग्दीव्यत्' इत्ययुक्तोऽयं निर्देशः, यावता 'दीव्यति' इति वक्ष्यति, न तु दीव्यदिति, तत्र दीव्यतिशब्दस्यावधित्वेनोपादाने दीव्यतेरिति निर्देशेन भवितव्यम्? इत्यत आह—**तदेकदेश इत्यादि**। समस्तस्य दीव्यतिशब्दस्यावधित्वेनोपादाने सति न युज्येतायं निर्देशः, न तु समस्तस्योपादानम्, अपि तु तदेकदेशस्य दीव्यच्छब्दस्येत्यदोषः। अथ किमर्थं दीव्यद्ग्रहणं प्राग्ग्रहणञ्च, नाणित्येवाधिकारः क्रियताम्? नैवं शक्यम्; एवं हि क्रियमाणे 'स्त्रीभ्यो ढक्' इत्येवमादिनाऽधिकारान्तरेण विच्छिन्नस्याणः 'तेन रक्तं रागात्' इत्येवमादिषु पुनरण्ग्रहणं कर्तव्यं जायेत। अवधिनाधिकारपरिमाण आख्याते तदवधिकेष्वर्थेषु सर्वेष्वयमभ्यनुज्ञायत इति पुनरण्ग्रहणं कर्तव्यं न भवति। तस्मादधिकारपरिमाणज्ञापनार्थं दीव्यद्ग्रहणं तावत् कर्तव्यम्। प्राग्ग्रहणमपि कर्तव्यमेव तस्यैवावधित्वद्योतनार्थम्। असति हि तस्मिन् 'दीव्यतोऽण्' इत्युच्यमाने प्रकृतिरणो दीव्यच्छब्दो विज्ञायेत। **त्रिष्वपि दर्शनेष्वित्यादि**। कथं पुनरियमपवाद-विषयपरिहारेणाणः प्रवृत्तिर्लभ्यते, यावताधिकारे तस्मिन् सति प्रतियोगमुपस्थानादपवादविषयेऽप्यण् प्राप्नोति—'अत इञ् अण् च' इति, अन्यथा हि तस्य तत्रोपादानमनर्थकं स्यात्? परिभाषापक्षेऽपि प्राग्दीव्यतोऽर्थेष्वणित्यविशेषेण परिभाषिते सामान्येन परिभाषा प्रवर्तमाना केनापवादविषयं परिहरेत्? विधावपि प्राग्दीव्यतो याः प्रकृतयस्ताः सर्वा इहैकध्यमुपनीयाण् विधीयमानः सर्वतः प्रवर्तेत, अन्यथा सर्वतो विधानमनर्थकं स्यात्? एव मन्यते—ज्ञापकादपवादविषये न भविष्यतीति, यदयं क्वचिद्वाग्रहणमन्यतरस्यांग्रहणञ्च करोति—'पीलाया वा', 'उदश्वितोऽन्यतरस्याम्' इति,

**पदमञ्जरी**

**प्राग्दीव्यतोऽण्॥ तेन दीव्यतीति वक्ष्यतीति**। यदि तस्येदमनुकरणं प्राग्दीव्यतेरिति वक्तव्यम्, कथं प्राग्दीव्यत इति निर्देशः? अत आह—**तदेकदेश इति**। भवति हि समुदायगुणीभूतस्याप्येकदेशस्य पृथक्कृत्यानुकरणम्, यथा—अस्यवामीयमित्यत्रेति भावः। 'प्रत्ययः' इत्यादिवदणित्येवाधिकारे सति 'अत इञ्' इत्यादिनापवादप्रकरणेन विच्छिन्नस्याणः 'तेन रक्तं रागात्' इत्यादिष्वर्थेषूपस्थानं न स्यात्। तस्मादधिकारपरिमाणख्यापनार्थं प्राग्दीव्यत इत्युक्तम्। **त्रिष्वपि दर्शनेष्वित्यादि**। नन्वधिकारपक्षेऽपि प्रतियोगमुपस्थानादत इञ् अण्वेत्यणपि प्राप्नोति, परिभाषापक्षेऽपि प्राग्दीव्यतीयाः प्रकृतयस्ताभ्यः सर्वाभ्योऽण् परिभाष्यमाणः केनापवादविषये न स्यात्, एवं विधिपक्षेऽपि सर्वत्र प्रसङ्गः? एवं मन्यते—यदयं 'पीलाया वा' इति सूत्रमारभते, तद् ज्ञापयति—नापवादविषयेऽण् भवतीति; अन्यथा 'द्व्यचः' इति ढक् सिद्धः, अनेन चाणित्यनर्थकं तत्स्यादिति। 'उदश्वितोऽन्यतरस्याम्' इति विकल्पवचनमप्यस्मिन्नर्थे लिङ्गम्।

वयं तु ब्रूमः—'प्राग्दीव्यतः' इति नेदं दीव्यतीतिशब्दैकदेशस्य दीव्यच्छब्दस्यानुकरणम्, किं तर्हि? तत्रत्योऽर्थो निर्दिश्यते—दीव्यतोऽर्थात् प्रागिति। तत्र दिवेर्लटि कृतेऽर्थादित्यनेन गम्यमानार्थत्वादप्रयुक्तेनाप्य-

**भावबोधिनी**

ञ्जस्य हो जाता है। सूत्रों में जो पञ्चम्यन्त पद हैं वे प्रातिपदिक के विशेषण बनते हैं; जैसे 'अतः इञ्' ४।१।९५ अकारान्त प्रातिपदिक से इञ् होता है। यह अकारान्तत्व प्रातिपदिक में देखना चाहिये। केवल प्रातिपदिक से प्रत्यय न हो इसके लिये समर्थ=सुबन्त का सम्बन्ध आवश्यक है ॥ ८२ ॥

"तेन दीव्यति०" ४।४।२ यह सूत्र आगे कहा जायगा। उसका एकदेश दीव्यत् शब्द यहाँ अवधिरूप से लिया जाता है। दीव्यत् शब्द के उच्चारण के पहले यहाँ से आगे जिनको कहेंगे उनमें अण् प्रत्यय होता है—यह समझना

## १३३४. अश्वपत्यादिभ्यश्च ॥ ८४ ॥ ( १०७४ )

**अश्वपत्यादिभ्यः प्रातिपदिकेभ्यः प्राग्दीव्यतीयेष्वर्थेष्वण् प्रत्ययो भवति। पत्युत्तरपदाद् ण्यं वक्ष्यति, तस्यापवादः। आश्वपतम्। शातपतम्।**

**अश्वपति। शतपति। धनपति। गणपति। राष्ट्रपति। कुलपति। गृहपति। धान्यपति। पशुपति। धर्मपति। सभापति। प्राणपति। क्षेत्रपति[1]।**

**न्यासः**

तज्ज्ञापयति—नापवादविषयेऽण् भवतीति। विधौ तु भूयान् परीहारः। न हि प्राग्दीव्यतो याः प्रकृतयस्ताभ्योऽण् विधीयते, किं तर्हि? प्राग्दीव्यतो येऽर्थास्तेषु। तत्र समानार्थे प्रकृतिविशेषादुत्पद्यमान इञणं बाधिष्यत इति। अथ किमर्थमियानवधिरुपादीयते, न प्राक् ठक इत्येवोच्येत, 'प्राग्वहतेष्ठक्' इत्येतस्मात् ठकः प्रागित्यर्थः? नैवं शक्यम्; 'दध्नष्ठक्' इत्येवमादिरपि ठगवधित्वेन विज्ञायेत। 'प्राक् कंसीयात्' इत्येवं तर्हि वक्तव्यम्—'कंसीयपरशव्ययोर्यञञौ लुक् च' इति, तत्र यः कंसीयशब्दस्ततः प्रागित्यर्थः? एवमप्यशक्यं वक्तुम्; 'द्विगोर्लुगनपत्ये' इत्येतयापि कंसीयादुत्पद्येत, ततश्च द्वयोः कंसीययोर्विकारो द्विकंस इत्यत्र लुङ् न स्यात्। तस्माद् यथान्यासमेवास्तु ॥ ८३ ॥

**अश्वपत्यादिभ्यश्च ॥ ८४ ॥ दित्यदित्यादित्यपत्युपत्तरपदाण्यः ॥ पत्युत्तरपदाच्चेति**। एतेनोत्तरपदशब्दः पतिशब्देनैव सम्बध्यते, नान्यैर्दित्यादिभिरिति दर्शयति। एतच्च प्रत्यासत्तेर्व्याख्यानाद् वा लभ्यते।

**पदमञ्जरी**

प्रथमान्तेन सामानाधिकरण्याल्लटः शत्रादेशः कृतः। तत्रावधेरर्थत्वादवधिमन्तोऽप्यर्था एव प्रतीयन्ते, सजातीयविषयत्वेन प्रसिद्धतरत्वादवध्यवधिमद्भावस्य, ततश्च प्राग्दीव्यतो येऽर्थास्तेष्वेवास्य त्रिष्वपि पक्षेषु व्यापारः। तत्र समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानोऽपवादोऽणं बाधत इति सिद्धमिष्टम् ॥ ८३ ॥

**अश्वपत्यादिभ्यश्च ॥ प्राग्दीव्यतीयेष्विति**। 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावाद्भवार्थे 'वृद्धाच्छः'। 'अव्ययानां भमात्रे' इति टिलोपो न भवति; 'लुङ्मुखस्वरोपचाराः' इति परिगणनात्। अत एवाव्ययात्त्यबपि न भवति, 'अमेहक्वतसित्रेभ्यः' इति परिगणनाद्वा। गणपतिशब्दस्यात्र पाठाद्गाणपत्यो मन्त्र इत्यपशब्दः। एतेन क्षैत्रपत्यं व्याख्यातम्। 'क्षैत्रपत्यं चरुं निर्वपेत्' इति तु छान्दसम्। क्षैत्रपत्यं प्राश्नन्तीति, छन्दोवदृषयः कुर्वन्ति ॥ ८४ ॥

**भावबोधिनी**

चाहिये। (१) अधिकार, (२) परिभाषा अथवा (३) विधि—इन तीनों ही दर्शनों = पक्षों में अपवादविषय को छोड़कर अण् की प्रवृत्ति होती है। आगे कहा जायगा "तस्यापत्यम्" ४।१।९२ [ उसका अपत्य—इस अर्थ में षष्ठ्यन्त समर्थ सुबन्त से अण् प्रत्यय होता है। ] उदा०—औपगवः। कापटवः। [ उपगु + अण्, कपटु + अण्, आदिवृद्धि, उकार का गुण, अवादेश ] ॥ ८३ ॥

प्राग्दीव्यतीय [ "तेन दीव्यति०" ४।४।२ सूत्र से पहले जितने अर्थों में प्रत्यय किये गये हैं उन सभी ] अर्थों में अश्वपति आदि समर्थ प्रातिपदिकों से अण् प्रत्यय होता है। पति जिसका उत्तर पद है उससे ण्य प्रत्यय [ अगले सूत्र से ] कहा जायगा, उसका अपवाद यह है। उदा०—आश्वपतम्। [ अश्वपति का अपत्य, अश्वपतियों का समूह आदि अर्थों में अण् प्रत्यय अश्वपति + अण् = अ, आदिवृद्धि, भसंज्ञा, इकारलोप। ] शातपतम्। [ शतपति का अपत्य—आदि अर्थों में अण्, प्रक्रिया पूर्ववत् ]।

[ अश्वपत्यादिगण में इनका पाठ है— ] अश्वपति। शतपति। धनपति। गणपति। राष्ट्रपति। कुलपति। गृहपति। धान्यपति। पशुपति। धर्मपति। सभापति। प्राणपति। क्षेत्रपति।

---

१. स्थानपति, यज्ञपति, धन्वपति, अधिपति, बन्धुपति – एतेऽत्र गणे क्वचिदधिकाः।

२. पदमञ्जरीकारसमये 'यमाच्चेति' 'वाङ्मत्ति' इत्येतद्वार्त्तिकद्वयस्य पाठव्यत्यासो जातः, इति स्पष्टं प्रतिभाति।

## १३३६. दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ॥ ८५ ॥ ( १०७७ )

'प्राग्दीव्यतः' इत्येव। दिति, अदिति, आदित्य – इत्येतेभ्यः पत्युत्तरपदाच्च प्रातिपदिकात्प्राग्दीव्यतीयेष्वर्थेषु ण्यः प्रत्ययो भवति। दैत्यः। आदित्यः। आदित्यम्। पत्युत्तरपदात् – प्राजापत्यम्। सैनापत्यम्।

❀ यमाच्चेति वक्तव्यम् ❀। याम्यम्।

**न्यासः**

**यमाच्चेति वक्तव्यमिति**। यमशब्दाच्च ण्यप्रत्ययो भवतीत्येतदर्थरूपं व्याख्येयम्। तत्रेयं व्याख्या – इह लाघवार्थं पत्यन्तादिति वक्तव्ये पत्युत्तरपदादिति वचनमधिकविधानार्थम्। ग्रन्थाधिक्यादर्थाधिक्यं भवतीति।

**पदमञ्जरी**

**दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः**॥ पतिशब्दस्योत्तरपदशब्देन बहुव्रीहौ कृते पश्चाद् द्वन्द्वः, न तु द्वन्द्वस्योत्तरपदशब्देन बहुव्रीहिरित्याह—**पत्युत्तरपदाच्चेति**। एतच्च प्रत्यासत्तेर्व्याख्यानाद्वा लभ्यते। अदितिग्रहणं तु तदुत्तरपदपरिग्रहार्थं स्यात्, न ह्यदित्युत्तरपदं दित्युत्तरपदं भवति। पत्यन्तादिति नोक्तम्, बहुच्पूर्वान्मा भूदिति।

**वाङ्मतिपितृमतामिति**[1]। कुर्वादिषु मतिपितृमच्छब्दयोः पाठोऽपत्यार्थो भाषायामपि ण्यो यथा स्यादिति। अनेन तु छन्दसि सर्वेष्वेव प्राग्दीव्यतीयेषु ण्यविधिः। केचिद्वाक्शब्दमपि तत्रैव पठन्ति, तेन 'याना वाच्या एते वत्साः' इति प्रयोगोपपत्तिः।

**यमाच्चेति**। यमशब्दोऽपि सूत्रे पठितव्य इत्यर्थः।

**भावबोधिनी**

**विमर्श**—यह अण् प्रत्यय प्राग्दीव्यतीय अर्थों में कहा गया है। 'तेन दीव्यति खनति जयति जितम्' ४।४।२ से पहले जितने अर्थों में प्रत्यय हैं, उनमें अपवादों को छोड़कर सर्वत्र अण् होता है। प्रमुख अर्थों के सूत्रों का उल्लेख करना उपयोगी होगा। (१) तस्यापत्यम् ४।१।९२। (२) तेन रक्तं रागात् ४।२।१। (३) नक्षत्रेण युक्तः कालः ४।२।३ (४) संस्कृतं भक्षाः ४।२।१६ (५) साऽस्मिन् पौर्णमासीति संज्ञायाम् ४।२।२१। (६) साऽस्य देवता ४।२।२४। (७) तस्य समूहः १४।२।३७। (८) विषयो देशे ४।२।५२। (९) तदधीते तद्वेद ४।२।५९। (१०) तदस्मिन्नितिदेशे तन्नाम्नि ४।२।६७। (११) तेन निर्वृत्तम् ४।२।६८। (१२) तस्य निवासः ४।२।६९। (१३) अदूरभवश्च ४।२।७०। (१४) तत्र जातः ४।३।२५। (१५) तत्र भवः ४।३।५३। (१६) तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ४।३।६६। (१७) तत आगतः ४।३।७४। (१८) सोऽस्य निवासः ४।३।८९। (१९) अभिजनश्च ४.३।९०। (२०) तेन प्रोक्तम् ४।३।१०१। (२१) कृते ग्रन्थे ४।३।११६। (२२) तस्येदम् ४।३।१२०। (२३) तस्यविकारः ४।३।१३४ ॥ ८४ ॥

'प्राग्दीव्यतः' इसकी अनुवृत्ति होती है। प्राग्दीव्यतीय = "तेन दीव्यति०" ४।४।२ तक कहे गये सभी अर्थों में – दिति, अदिति, आदित्य और पत्युत्तरपद [ जिनके उत्तरपद में पति शब्द है ]—इन समर्थ प्रातिपदिकों से ण्य प्रत्यय होता है। उदा०—दैत्यः [ दिति का अपत्य आदि ] आदित्यः [ अदिति का अपत्य आदि ]। आदित्यम् [ आदित्य का अपत्य आदि। ] पति जिनके उत्तरपद है—प्राजापत्यम् [ प्रजापति का अपत्य आदि। ] सैनापत्यम् [ सेनापति का अपत्य आदि। [ दिति + ण्य, "चुटू" १।३।७ से ण् की इत्संज्ञा और लोप करने पर "यचि भम्" १।४।१८ से भसंज्ञा और "यस्येति च" ६।४।१४८ से इ का लोप, "तद्धितेष्वचामादेः" ७।२।११७ से आदि अच् की वृद्धि—दैत् य=दैत्यः। आदित्य + ण्य=य, भसंज्ञा अलोप के बाद "हलो यमांयमि लोपः" ८।४।६४ से य का लोप होता है। इसी प्रकार अन्य में भी समझना चाहिये। ]

* यम शब्द से कहना चाहिये। * उदा०—याम्यम् [ यम का अपत्य आदि। यम + ण्य प्रक्रिया पूर्ववत् ]

---

१. पदञ्जरीकारसमये 'यमाच्चेति' 'वाङ्मति' इत्येतद्वार्त्तिकद्वयस्य पाठव्यत्यासो जातः, इति स्पष्टमेव प्रतिभाति।

❈ वाङ्मतिपितृमतां छन्दस्युपसंख्यानम् ❈ (म० भा० ४.१.८५ वा० १)। वाच्यम् (वा० सं० १३.५८)। मात्यम् ( मै० सं० २.१७.१९ )। पैतृ_मत्यम् ( वा० स० ७.४६ )।

❈ पृथिव्या ञाञौ ❈ ( वा० २ )। पार्थिवा ( ऋ० १.६४.३ )। पार्थिवी ( अथर्व० पै० १६.४६.३ )

❈ देवाद्यञञौ ❈ ( वा० ३ )। दैव्यम् ( ऋ० १.३१.१७ )। दैवम् ( पै० १.३१.४ ) ❈ बहिषष्टिलोपश्च ❈ ( वा० ४ )। बाह्याः ( अथर्व १९.४४.६ )। ❈ ईकक् च ❈ ( वा० ५ )। बाहीकः। ❈ ईकञ् छन्दसि ❈ (वा० ६)। बाहीकः[1]। स्वरे विशेषः। टिलोपवचनमव्ययानां भमात्रे टिलोपस्यानित्यत्वज्ञापनार्थम्-आरातीयः।

न्यासः

तेन यमशब्दादपि ण्यो भविष्यतीति। अथवा--पूर्वसूत्राच्चकारोऽनुवर्त्तते, तस्मादनुक्तसमुच्चयार्थत्वाद् भविष्यतीति।

**वाङ्मतिपितृमतामित्यादि**।। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। प्रतिपादनं तु तदेव ग्रन्थाधिक्यादर्थाधिक्यमाश्रित्य चकारस्यानुक्तसमुच्चयार्थस्यानुवृत्तेर्वा कर्त्तव्यम्। **याम्यमित्यादिषु** यथायोगं प्राग्दीव्यतीयेऽपत्यादावर्थे ण्यप्रत्ययः।

**पृथिव्या ञाञाविति**। 'एते ञादयस्तद्धिताः' इति बहुवचनेनानुक्ततद्धितपरिग्रहार्थेन सिद्ध्यन्तीति न वक्तव्याः। तत्र पृथिवीशब्दाद् यदा ञस्तदा टाप्--पार्थिवा, यदा त्वञ् तदा 'टिड्ढाणञ्' इति ङीप्—पार्थिवी। **बहिषष्टिलोपश्चेत्यादि**। ननु च 'अव्ययानां भमात्रे टिलोपः सायंप्रातिकाद्यर्थः' इत्यनेनैव टिलोपे सिद्धिः, तत् किमर्थं पुनरुच्यते? इत्यत आह—**टिलोपवचनमित्यादि**। **आरातीय इति**। अनित्यत्वज्ञापनस्य प्रयोजनम्। आराद् भवतीति 'वृद्धाच्छः'।

पदमञ्जरी

**पृथिव्या ञाञाविति**। ञाञोः स्त्रियां विशेष इत्याह—**पार्थिवा, पार्थिवीति**।

भावबोधिनी

* वाच्, मति और पितृमति से कहना चाहिये। * वाच्यम् [ वाचा प्रोक्तम् आदि अर्थ है। वाच्+ण्य ] मात्यम् [ मत्या निर्वृत्तम्, मतौ वा भवम् आदि अर्थ है। मति+ण्य ] पैतृमत्यम् [ पितृमति+ण्य, प्रक्रिया पूर्ववत्। किसी का नाम है। उसका अपत्य आदि। ]

* पृथिवी से ञ और अञ् प्रत्यय होते हैं। * पार्थिवा पार्थिवी [ पृथिव्यां भवा आदि अर्थ है। पृथिवी+ञ, आदिवृद्धि, टाप् आदि। अञ् करने पर 'टिड्ढाणञ्' ४।१।१५ से ङीप् होता है। ] * देव से यञ् और अञ् होते हैं। दैव्यम्, देवम् [ देव+यञ्, देव+अञ् आदिवृद्धि भसंज्ञा, अलोप, देव का अपत्य, या देव से आने वाला आदि अर्थ हैं ] * बहिष् से यञ् प्रत्यय होता है और टिलोप होता है। बाह्यः [ बहिर्भवः आदि अर्थ है। बहिष्+यञ्, आदिवृद्धि, टि=इष् का लोप बाह्य=बाह्यः ] * और ईकक् प्रत्यय तथा टिलोप होता है। * बाहीकः [ बहिष्+ईकक्=ईक, टिलोप, कित् होने से "किति च" ७।२।११८ से आदिवृद्धि। ] * वेद में बहिष् से ईकञ् प्रत्यय और टिलोप होता है। * बाहीकः [ बहिष्+ईकञ्=ईक, शेष प्रक्रिया पूर्ववत् ] ञ् की इत्संज्ञा होने पर "ञ्नित्यादिर्नित्यम्" ६।१।१९७ से आद्युदात्त हो जाता है। ] स्वर में अन्तर है। इसमें टिलोप कहना अव्ययों की भसंज्ञामात्र में टिलोप की अनित्यता ज्ञापित करने के लिये है। [ भाव यह है कि बहिष् अव्यय है। अतः 'अव्ययानां भमात्रे टिलोपः' से टिलोप सम्भव रहने पर भी जो यहाँ टिलोप का पुनर्विधान किया गया है वह इस टिलोप की अनित्यता ज्ञापित करने के लिये है। अतः यहाँ लोप नहीं होता है—आरातीयः [ आरात् भवः—इसमें छ प्रत्यय ईय आदेश करने पर टिलोप नहीं होता

---

१. 'बाहीकमस्तु भद्रं वः' इति भाष्ये।

**❀ स्थाम्नोऽकारः ❀** ( वा० ७ ) । अश्वत्थामः ।

**❀ लोम्नोऽपत्ये बहुषु ❀** ( वा० ८ ) । उडुलोमाः । शरलोमाः । बहुष्विति किम् ? औडुलोमिः । शारलोमिः ।

**❀ सर्वत्र गोरजादिप्रत्ययप्रसङ्गे यत् ❀** ( वा० ९ ) । गव्यम् । अजादिप्रत्ययप्रसङ्ग इति किम् ? गोभ्यो

**न्यासः**

**स्थाम्नोऽकारः** । स्थामन्शब्दस्य केवलस्यापत्यार्थे प्रयोगो नास्तीति तदन्तस्याकारप्रत्ययो विज्ञेयः । अश्वस्येव स्थामास्येत्यश्वत्थामा, पृषोदरादित्वात् सकारस्य तकारः । अश्वत्थाम्नोऽपत्यमश्वत्थामः 'नस्तद्धिते' इति टिलोपः ।

**लोम्नोऽपत्य इति** । लोमशब्दो बाह्वादिषु पठ्यते, तस्य केवलस्यापत्येन सम्बन्धो नास्तीति तदन्तविधिर्विज्ञायते । अत्रापत्यविवक्षायां बहुष्विञि प्राप्ते तदपवाद एवाकारो विधीयते । उडुलोम्नोऽपत्यानि बहून्युडुलोमाः ।

**सर्वत्रेति** । अपत्ये च अन्यत्र च । अथ वा—प्राग्दीव्यतीये चान्यत्र चार्थेऽजादिप्रत्ययप्रसङ्ग इति ।

**पदमञ्जरी**

**स्थाम्न इति** । बलवचनोऽयम् । तस्य केवलस्य यद्यप्यपत्येन योगो नास्ति, जातादिना तु योगः सम्भवत्येव । सर्वेषु च प्राग्दीव्यतीयेष्वयं विधिः, तस्मादश्वत्थाम इति भाष्योदाहरणादत्र तदन्तविधिर्भवति । **अश्वत्थाम इति** । अश्वस्येव स्थाम यस्येति बहुव्रीहौ अकारष्टिलोपः, पृषोदरादित्वात् सकारस्य तकारः ।

**लोम्नोऽपत्ये बहुष्विति** । बाह्वादिष्वयं पठ्यत इतीञि प्राप्ते बहुष्वकारः, केवलस्यापत्येनायोगात् सामर्थ्यात्तदन्तविधिः । **उडुलोमा इति** । उडूनीव लोमान्यस्य, शरा इव लोमान्यस्येति बहुव्रीहिः । ननु बाह्वादिलक्षणे इञ्यपि कृते तस्य बह्वच इति लुकि सुबन्तादिञुत्पन्न इति प्रत्ययलक्षणेन 'सुबन्तं पदम्' इति पदसंज्ञायां नलोपेन सिद्धम् ? सिद्ध्यतु नामेदम्; उडुलोमेः, उडुलोमेभ्य इत्येवमादौ सुब्विधौ नलोपस्यासिद्धत्वादैसादिर्न स्यात्, इञो लुगपि प्राच्यभरतगोत्रादन्यत्र न सिध्यति, न वात्र पदसंज्ञा, 'असर्वनामस्थाने' इति निषेधात् । यथा च प्रत्ययलक्षणेन प्राप्तायाः सुबन्तमित्यस्या अपि पदसंज्ञायाः स निषेधस्तथोक्तं पुरस्तात् ।

**सर्वत्रेति** । नापत्य एव । यद्वा प्राग्दीव्यतीयेऽन्यत्र च, तेन गवा चरतीत्यत्रापि गव्य इति भवति ।

**भावबोधिनी**

है – आरात् + ईय=आरातीयः ] । * स्थामन् शब्द से अकार प्रत्यय होता है । अश्वत्थामः [ अश्वस्य इव स्थामा = बलं यस्य सः—अश्वत्थामा, "पृषोदरादीनि यथोपदिष्टम्" ६।३।१०९ से सकार का तकार होता है । अश्वत्थाम्नः अपत्यम्—इस अर्थ में अ प्रत्यय, अश्वत्थामन् + अ, "नस्तद्धिते" ६।४।१४४ से टि=अन् का लोप, अश्वत्थामा का अपत्य अश्वत्थामः । ]

* अपत्य अर्थ में बहुवचन में लोमन् शब्दान्त से अकार प्रत्यय होता है । उडुलोमाः [ उडूनि इव लोमानि यस्य सः, इस बहुव्रीहि उडुलोमन् से बहुत अपत्य अर्थ में अ प्रत्यय और टिलोप करने पर उडुलोमाः । इसी प्रकार ] शरलोमाः [ बनते हैं ] । बहुवचन में—इसका क्या फल है ? औडुलोमिः । शारलोमिः [ उडुलोमन् से एक अपत्य की विवक्षा में 'बाह्वादिभ्यश्च' ४।१।९६ से इञ् प्रत्यय, आदिवृद्धि, टिलोप होता है । इसलिये एकवचन और द्विवचन में इञ् प्रत्यय तथा बहुवचन में अप्रत्यय के रूप होते हैं—औडुलोमिः, औडुलोमी, उडुलोमाः । ] * गो शब्द से सभी अर्थों में, अजादिप्रत्यय के प्रसङ्ग में यत् प्रत्यय होता है । * उदा०—गव्यम् [ गाय का अपत्य आदि । ] अजादिप्रत्यय का प्रसङ्ग रहने पर—इसका क्या प्रयोजन है ? गोभ्यः=हेतुभ्यः आगतम् गोरूप्यम् । गोमयम् । [ गोरूप हेतुओं से आया हुआ—इस अर्थ में 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' ४।३।८१ 'मयट् च' ४।३।८२ इन सूत्रों से रूप्य और मयट् प्रत्यय होते हैं; क्योंकि ये दोनों अजादि नहीं है । ]

**हेतुभ्य आगतं गोरूप्यम् । गोमयम् ।**

*** ण्यादयोऽर्थविशेषलक्षणादपवादात् पूर्वविप्रतिषेधेन * ( वा० १० ) । दितेरपत्यं दैत्यः । वनस्पतीनां समूहो वानस्पत्यम् ( म० भा० ) ।**

न्यासः

अजादेः प्रत्ययस्य प्रसङ्गः = प्राप्तिः । तत्र गोशब्दात् सर्वत्र यद् भवति । यद्येवम्, 'उगवादिभ्यो यत्' इत्यत्र गोग्रहणं किमर्थम् ? अस्यैव प्रपञ्चार्थम् । **गव्यमिति** । गोरपत्यम्, गवा चरतीति वा । अणष्ठको वाऽजादेर्यत्रार्थे प्रसङ्गस्तत्र यद्भवति, नान्यत्र । **गोरूप्यम्, गोमयमिति** । 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः', 'मयट् च' ।

**ण्यादय इत्यादि** । लक्षणशब्दो निमित्तवचनः, चिह्नवचनो वा । अर्थविशेषो लक्षणं यस्य सोऽर्थविशेषलक्षणोऽणपवादः । तस्मात् पूर्वविप्रतिषेधेन ण्यादयो भवन्ति । न चेदं वक्तव्यम्; परशब्दस्येष्टवाचित्वात् तेनैव सिद्धत्वात् । आदिशब्देन 'उत्सादिभ्योऽञ्' इत्येवमादयः प्रत्यया गृह्यन्ते । तत्र ण्यस्यावकाशः—दितिर्देवतास्य स्थालीपाकस्येत्याद्यर्थविवक्षायां नात्राणोऽपवादः कश्चिदन्योऽस्तीति निष्प्रतिद्वन्द्वी ण्य एवाणपवादो भवति—दैत्यः, वानस्पत्यमिति । ण्यश्चायं सर्वेष्वपत्यादिष्वर्थेषु विधीयत इति सामान्यप्रत्ययो भवतीति, अतो नार्थविशेषलक्षणः । अर्थविशेषलक्षणस्याणपवादस्यावकाशः—दुलेरपत्यमिति 'इतश्चानिञः' इति ढक्—दौलेयः, ढगयमपत्य एवार्थविशेषे विधीयत इत्यर्थविशेषलक्षणो भवति । इहोभयं प्राप्नोति—दितेरपत्यं दैत्यः, वनस्पतीनां समूहो वानस्पत्यमिति वा, ण्यप्रत्ययो भवति पूर्वविप्रतिषेधेन । अर्थविशेषलक्षणादिति किम् ? योऽणपवादोऽर्थसामान्येनार्थविशेषे विहितः स परत्वाण्ण्यादीन् बाधित्वा भवत्येव । उष्ट्रपतिर्नाम पत्त्रम्, तस्योष्ट्रपतेरिदमिति

पदमञ्जरी

**गोरूप्यमिति** । 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः', 'मयड् च' इति रूप्यमयटौ । **ण्यादय इति** । येन नाप्राप्तिन्यायेनाण एव ण्यादयोऽपवादाः, अणापवादैस्तु ढगादिभिः सह सम्प्रधारणायां परत्वात्त एव स्युरिति वार्तिकारम्भः । अर्थविशेषोऽपत्यादिलक्षणं निमित्तं यस्य सोऽर्थविशेषलक्षणः । यस्तु तस्येदमित्यर्थसामान्यलक्षणोऽणपवादः स परत्वाद्भवति. उष्ट्रपतिर्नाम पत्त्रं तस्येदमौष्ट्रपतम् 'पत्त्राध्वर्युपरिषदश्च' इत्यञ् भवति,

भावबोधिनी

* अर्थविशेषलक्षण = अर्थविशेष को निमित्त मान कर होने वाले से, अण् का अपवाद होने से पूर्वविप्रतिषेध से ण्य आदि ही होते हैं । दितेः अपत्यम्—दैत्यः । [ दिति की सन्तान ] वनस्पतियों का समूह—वानस्पत्यम् ।

विमर्श—यहाँ समस्या यह है कि अण् प्रत्यय, ण्य प्रत्यय और आगे वाले प्रत्ययों में बाध्यबाधकभाव कैसा होना चाहिये । उसका उत्तर इस वार्त्तिक से है । अर्थविशेष को मानकर होने वाले ण्य आदि प्रत्यय पूर्वविप्रतिषेध से अण् के ही बाधक होते हैं अन्य प्रत्ययों के नहीं । उदाहरणार्थ—दितिः देवताऽस्य—आदि में ण्य प्रत्यय का विषय है । और अर्थविशेष को मान कर होने वाले अणपवाद का विषय है—दुलेः अपत्यम् आदि में "इतश्चानिञः" ४।१।१२२ से ढक् होता है । परन्तु—दितेः अपत्यम्—यहाँ ण्य और ढक् दोनों प्राप्त हैं, कौन किया जाय ? यहाँ पूर्वविप्रतिषेध मानकर ण्य ही होता है । इस प्रकार ये ण्य अञ् आदि प्रत्यय ही होते हैं ।

भाष्यकार ने इस वार्तिक का प्रत्याख्यान कर दिया है—"स तर्हि पूर्वविप्रतिषेधो वक्तव्यः । न वक्तव्यः । इष्टवाची परशब्दः । विप्रतिषेधे परम् = यदिष्टं तद्भवति ।" ( म० भा० ४।१।८५ ) प्रस्तुत सूत्र के भाष्य में 'यमाच्चेति वक्तव्यम्' यह वार्तिक नहीं है । काशिकाकार ने कहाँ से लिख दिया ज्ञात नहीं होता है । न्यास और पदमञ्जरी में इस विषय में कोई उल्लेख नहीं है । यहाँ तक कि सिद्धान्तकौमुदीकार भट्टोजिदीक्षित को भी इसका मूल नहीं मिल सका । और उन्होंने इस प्रकार निर्देश किया—"यमाच्चेति काशिकायाम् ।" ( प्रस्तुत सूत्र पर सिद्धान्तकौमुदी ) ।

"ण्यादयोऽर्थविशेषलक्षणादणपवादात् पूर्वविप्रतिषिद्धम्" यह वार्तिकस्वरूप भाष्य में हैं । काशिकाकार ने अथवा सम्पादकों ने 'अण्' को छोड़ कर वार्तिक लिखा है, जो उचित नहीं है । न्यास एवं पदमंजरी में 'अणपवाद' ऐसा संकेत है ।

**कथं दैतेयः ? दितिशब्दात् 'कृदिकारादक्तिनः', ( ग० सू० ५० ) सर्वतोऽक्तिन्नर्थादित्येके' ( ग० सू० ५१ ) इति ङीषं कृत्वा 'स्त्रीभ्यो ढक्' ( ४.१.१२० ) क्रियते । लिङ्गविशिष्टपरिभाषा चानित्या[1] ॥**

**१३३६. उत्सादिभ्योऽञ् ॥ ८६ ॥ ( १०७८ )**

**'प्राग्दीव्यतः' इत्येव । उत्सादिभ्यः प्राग्दीव्यतीयेष्वर्थेष्वञ् प्रत्ययो भवति, अणस्तदपवादानां च बाधकः ।**

**न्यासः**

तस्येदंविवक्षायां पत्त्राध्वर्युपरिषदश्च' इत्यञ्—औष्ट्रपतम्, तस्येदंलक्षणो ह्ययमञणोऽपवादः, न योऽर्थविशेषलक्षणस्तस्य । अर्थविशेषा ह्यपत्यादयोऽर्थाः । तस्येदमर्थस्तु सामान्यम्, नार्थविशेषः ।

**कथं दैतेयः इति ।** यदि ण्यादयोऽर्थविशेषलक्षणादणपवादात् पूर्वविप्रतिषेधेन भवन्ति दैतेय इति न सिध्यति । अत्रापि हि ण्यप्रत्ययेनैव भवितव्यमिति भावः । **दितिशब्दादित्यादि ।** दितिशब्दोऽयं 'दो अवखण्डने' इत्यस्मात् क्तिच्क्तौ' इति क्तिच्, 'द्यतिस्यति' इत्यादिनेत्वमित्येवं यदा व्युत्पाद्यते तदा 'कृदिकारादक्तिनः' इति ङीष् । अथाव्युत्पन्नं प्रातिपदिकं तदा 'सर्वतोऽक्तिन्नर्थादित्येके' इति । ननु 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति' इति दितिशब्दो गृह्यमाणो दितीशब्दमपि ग्राहयति, ततश्च यथा दितिशब्दाण्ण्यप्रत्ययः पूर्वविप्रतिषेधेन भवति, तथा दितीशब्दादपि तेन भवितव्यमित्यत आह—**लिङ्गविशिष्टपरिभाषाऽनित्येति ।** अनित्यत्वं पुनरस्याः 'अच्प्रकरणे शक्तिलाङ्गलांकुशयष्टितोमरघटघटीधनुःषु ग्रहेरुपसंख्यानम्' इति घटशब्दमुच्चार्यं घटीशब्दोच्चारणाद्वेदितव्यम् ॥ ८५ ॥

**उत्सादिभ्योऽञ् ॥ तदपवादानाञ्चेति ।** इञादीनाम् । **वष्कयास इति** गणे पठ्यते । तस्यायमर्थः—वष्कयशब्दादञ् भवति, असे असमासे इत्यर्थः । पूर्वाचार्यैः समासस्य 'स' इत्येषा संज्ञा कृता । वष्कयस्यापत्यं

**पदमञ्जरी**

न तु ण्यः । **दितेरपत्यमिति ।** अत्र 'इतश्चानिञः' इति ढग्न भवति, डौलेय इत्यादावेव तु भवति । **वानस्पत्यमिति ।** अचित्तादिलक्षणष्ठग्न भवति, आपूपिकादावेव तु भवति ।

**कथं दैतेय इति ।** अत्र **तर्हीति ।** गम्यमानत्वान्न प्रयुक्तम् । यदि ण्यादयोऽर्थविशेषलक्षणादणपवादात् पूर्वविप्रतिषेधेन भवन्ति, कथं तर्हि दैतेयः सिध्यतीत्यर्थः । **दितिशब्दादित्यादि ।** ननु 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति ङीषन्तादपि ण्य एव प्राप्नोति ? तत्राह—**लिङ्गविशिष्टपरिभाषा चानित्येति ।** अन्ये तु भाष्यवार्त्तिकयोरनुक्तत्वाद् दैतेय इत्यसाधुरिति स्थिताः ॥ ८५ ॥

**उत्सादिभ्योऽञ् ॥ तदपवादानां चेति ।** इञादीनाम् । **बष्कयास इति ।** बष्कयशब्दोऽञमुत्पादयति, असे, असमास इत्यर्थः । पूर्वाचार्यसंज्ञेयम्, बाष्कयः । अस इति किम् ? गोबष्कयिः । ग्रहणवता प्रातिपदिकेन

**भावबोधिनी**

[ अनु० ] दैतेयः यह कैसे होगा ? [ भाव यह है कि यहाँ भी ण्य प्रत्यय ही होना चाहिये क्योंकि ण्य जो है वह ढक् का अपवाद है । ] ''कृदिकारादक्तिनः'' या ''सर्वतोऽक्तिन्नर्थादित्येके'' इन वार्त्तिकों से ङीष् प्रत्यय करके [ दिती बनाकर ण्य की प्राप्ति सम्भव न रहने पर ] ''स्त्रीभ्यो ढक्'' ४।१।१२० से ढक् प्रत्यय किया जाता है । [ 'प्रातिपदिक के ग्रहण में लिङ्गविशिष्ट का भी ग्रहण होता है, इस नियम से स्त्रीलिङ्ग दिती का ग्रहण हो जाने से ण्य की प्राप्ति है ? ] लिङ्गविशिष्ट परिभाषा अनित्य है । [ अतः स्त्रीलिङ्ग का ग्रहण नहीं होगा ] ॥ ८५ ॥

'प्रादीव्यतः' इसकी अनुवृत्ति होती है । उत्स आदि [ गण में पठित ] शब्दों से प्राग्दीव्यतीय अर्थों में अञ् प्रत्यय होता है । यह अञ् अण् और इसके अपवाद प्रत्ययों का बाधक है । उदा०—औत्सः [ उत्सका अपत्य आदि ] । औदपानः [ उदपान नामक व्यक्ति का अपत्य आदि । उत्स + अञ्, आदिवृद्धि, भसंज्ञा, अलोप होता है । उदपान + अञ् शेष पूर्ववत् ] ।

---

१. 'विधानसामर्थ्यादेव टिलोपाभावः' इत्यधिकं क्वचित् ।

औत्सः। औदपानः।

उत्स। उदपान। विकर। विनोद। महानद। महानस। महाप्राण। तरुण। तलुन। ※ बष्कयाऽसे ※ ( ग० सू० ६० )। धेनु। पृथिवी। पङ्क्ति। जगती। त्रिष्टुप्। अनुष्टुप्। जनपद। भरत। उशीनर। ग्रीष्म। पीलु। कुल। ※ उदस्थानाद् देशे ※ ( ग० सू० ६१ )। ※ पृषदंशे ※ ( ग० सू० ६२ )। भल्लकीय। रथन्तर। मध्यन्दिन। बृहत्। महत्। ※ सत्वन्तु ※। सच्छब्दो मतुबन्त आगतनुङ्को गृह्यते – सत्वन्त्विति। कुरु। पञ्चाल। इन्द्रावसान। उष्णिक्। ककुभ्। सुवर्ण। देव।

※ ग्रीष्मादच्छन्दसीति वक्तव्यम् ※ (ग० सू० ६३)। इह मा भूत् – 'ग्रैष्मी' त्रिष्टुप्' (काठ० स० १९.१८)

**न्यासः**

वाष्कयः। अस इति किम्? गौवष्कयिः। 'अत इञ्' इतीञेव भवति। **उदस्थानाद्देशे इति**। उदस्थानशब्दाद्देशे वाच्येऽञ् भवति। उदस्थाने भवो देश औदस्थानः। देश इति किम्? उदस्थानो नाम कश्चित् पुरुषः, तस्यापत्यमौदस्थानिः। **पृषदंश इति**। पृषच्छब्दादंशेऽभिधेयेऽञ् भवति। पृषदोंऽश पार्षदः। अंश इति किम्? पार्षदोऽन्यः[1]। अणेव भवति। **कुरुशब्दोऽत्र** पठ्यते, तस्यापत्यविवक्षायां कौरव इति न सिध्यति, यस्मात् 'कुर्वादिभ्यो ण्यः' 'कुरुनादिभ्यो ण्यः' इति च ण्यप्रत्ययः प्राप्नोति। अञ्प्रत्ययो हि सामान्यविहितः, ण्यप्रत्ययस्तु विशेषविहितः। सामान्यविहितश्च विशेषविहितेन बाध्यते? नैष दोषः; अयं योगस्तयोर्योगयोरनुवर्तिष्यते; तत्राप्यपत्येऽर्थे कुरुशब्दोऽनवकाश इत्यञपि ततो भविष्यति। अपत्यार्थस्य 'तस्येदम्' इत्यर्थविवक्षायां वा कौरव इति भविष्यति।

**ग्रीष्मादच्छन्दसीति वक्तव्यम्**। ग्रीष्मशब्दादच्छन्दस्यभिधेयेऽञ् भवतीत्येतदर्थंरूपं व्याख्येयमित्यर्थः। किमर्थमित्याह—**इह मा भूदित्यादि**। छन्दसि त्रिष्टुबादौ वाच्ये सन्धिवेलादिसूत्रेण ऋत्वणेव यथा स्याद्, अञ् मा

**पदमञ्जरी**

तदन्तविधिप्रतिषेधादेवात्र न भविष्यति? ज्ञापनार्थं तु। एतज्ज्ञापयति—भवत्यत्र तदन्तविधिरिति। किं सिद्धं भवति? धेनुशब्दोऽत्र पठ्यते, तदन्तादपि भवति—अधेनूनां समूह आधेनवमिति। **उदस्थान देश इति**। उदस्थानशब्दोऽञमुत्पादयति देशे वाच्ये—औदस्थानो देशः। देशादन्यत्र यदृच्छया कश्चिदुदस्थानः, तस्यापत्यमौदस्थानिः **पृषदंश इति**। पृषच्छब्दोऽञमुत्पादयति अंशे वाच्ये–पार्षतोंऽशः, अंशादन्यत्राणेव भवति। **ग्रैष्मी त्रिष्टुबिति**। ग्रीष्मो देवता आस्या इत्यशेषार्थविवक्षायामौत्सर्गिकोऽणेव भवति, ग्रीष्मे भवेत्यादिशेष-विवक्षायां तु ऋत्वणेव सिद्धम्। न ह्यनेनाञा शैषिकस्याणो बाधप्रसङ्गः अर्थविशेषलक्षणानामेव प्रत्ययानां

**भावबोधिनी**

[ गण में पठित शब्द —] उत्स। उदपान। विकर। बिनोद। महानद। महानस। महाप्राण। तरुण। तलुन। * असे = असमास में वस्कय शब्द से अञ् होता है। [ असे—यह समास की संज्ञा प्राचीनों ने मानी है। उससे भिन्न असे = असमासे। ] धेनु। पृथिवी। पङ्क्ति। जगती। त्रिष्टुप्। अनुष्टुप्। जनपद। भरत। उशीनर। ग्रीष्म। पीलु। कुल। * देश अर्थ वाच्य रहने पर उदस्थान शब्द से अञ् प्रत्यय होता है। * अंश = भाग अर्थ में पृषत् शब्द से अञ् प्रत्यय होता है। [ अन्य अर्थ में अण् होता है। दोनों में पार्षदः यही रूप बनता है। परन्तु ञित् में आद्युदात्त होता है। अन्य प्रत्यय में प्रत्यय उदात्त होता है। ] भल्लकीय। मध्यन्तर। मध्यन्दिन। बृहत्। महत्। सत्वन्तु। मतुप्प्रत्ययान्त और आगतनुङ्कः = जिसे नुम् का आगम हो चुका है ऐसे सत्वन्तु का ग्रहण है [ सत् + मतुप्—सत् + वतु, म् का व्, नुम् आगम, अनुस्वार परसवर्ण· सत्वन्तु ] कुरु। पञ्चाल। इन्द्रावसान। उष्णिक्। ककुप्। सुवर्ण। देव।

[ 'कुर्वादिभ्यो ण्यः' ४।१।१५१ 'कुरुनादिभ्यो ण्यः' ४।१।१७२ इन सूत्रों से कुरु शब्द से ण्य प्रत्यय प्राप्त है और

१. स्वरे विशेषः—अञन्तस्य ञित्वादाद्युदात्तत्वम्, अणन्तस्य तु प्रत्ययस्वरेणान्तोदात्तत्वम्।

छन्दश्चेह वृत्तं गृह्यते, न वेदः[1] ॥

**१३३७. स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ॥ ८७ ॥ ( १०७९ )**

'धान्यानां भवने क्षेत्रे खञ्' ( ५.२.१ ) इति वक्ष्यति। तस्य 'प्राक्' इत्यनेनैव संबन्धः। प्राग्भवनसंशब्दनाद् येऽर्थास्तेषु स्त्रीशब्दात् पुंस्शब्दाच्च यथाक्रमं नञ्स्नञौ प्रत्ययौ भवतः। स्त्रीषु भवं स्त्रैणम्। पौंस्नम्।

**न्यासः**

भूदित्येवमर्थम्। तेन ग्रैष्मी त्रिष्टुबित्यञ् न भवति तत्रेदं व्यास्यानम्—वेति वर्तते, सा च व्यवस्थितविभाषा। तेन ग्रीष्मशब्दाच्छन्दसि वाच्येऽञ् न भवतीति। **वृत्तं गृह्यत इति**। यस्य त्रिष्टुब्जगतीत्यादयो विशेषास्तदिह वृत्तम्; अतश्छन्दो गृह्यते, न वेदः ॥ ८६ ॥

**स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्** ॥ अत्र तावत् स्त्रीशब्दस्य स्वरूपग्रहणम्, न टाबादिस्त्रीप्रत्ययान्तस्य शब्दस्य। ततो हि 'स्त्रीभ्यो ढक्' इति ढकं वक्ष्यति, तत्साहचर्यात् पुंशब्दोऽपि तद्धर्मैव विज्ञायते। तस्यापि स्वरूपग्रहणमेव। **पौंस्नमिति**। 'संयोगान्तस्य लोपः' इति लोपः।

**पदमञ्जरी**

ण्यादिभिर्बाधनात्। ऋत्वण् तु शेषमात्रे विधानान्नार्थविशेषलक्षणः, कक्षान्तरप्राप्तश्च। कथम्? 'कालाट्ठञ्' अणोऽपवादः तस्याप्यृत्वण्। **छन्दश्चेह वृत्तं गृह्यत इति**। यस्य त्रिष्टुबादयो विशेषाः। **न वेद इति**। तेन वेदविषयेऽपि वृत्तेऽभिधेयेऽञः प्रतिषेधादणेव भवति--ग्रैष्मी त्रिष्टुबिति ॥ ८६ ॥

**स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्** ॥ स्त्रीशब्दात्पुंस्शब्दाच्चेति। स्त्र्यधिकारविहितानां टाबादीनां 'पुंसि संज्ञायां घः' इत्येतदधिकारविहितानां च प्रत्ययानां ग्रहणं न भवति, स्त्रीपुंस्शब्दयोरस्वरितत्वात्। नापि स्त्रीपुंसार्थग्रहणम्, 'स्वं रूपं शब्दस्य' इति वचनात्। **पौंस्नमिति**। संयोगान्तस्य लोपः इति पुंस्शब्दसकारस्य लोपः, तत्र कर्त्तव्येऽनुस्वारस्यासिद्धत्वात् सकारस्य संयोगान्तत्वात्। अत एव संयोगान्तलोपप्रसङ्गान्नञेवोभाभ्यां न विधीयते। एवं हि मा भून्नञ्, मा च भूत्स्नञ्, अञ् प्रकृतस्तत्रैतावदस्तु स्त्रीपुंसयोर्नुक्चेति; तत्रायमप्यर्थः—स्त्रैणी पौंस्नी वञ इतीकारः सिद्धो भवति? नैवं शङ्क्यम्; स्त्रैणाः, पौंस्नाः—'यञञोश्च' इति बहुषु लुक् प्राप्नोति। इह च स्त्रैणानां सङ्घः 'सङ्घाङ्कलक्षणेष्वञ्यञिञाम्' इत्यण् प्राप्नोति? नैष दोषः; उभयत्रापि गोत्र इति वर्तते, लौकिकस्य च गोत्रस्य ग्रहणं ऋषिप्रजनं च लोके गोत्रमुपचरन्ति, न च स्त्र्यर्षिणापि पुंशब्दवाच्यं सामान्यम्। 'नस्तद्धिते' इति टिलोपस्तर्हि प्राप्नोति? 'प्रकृत्यैकाच्' इति प्रकृतिभावो भविष्यति, 'इष्ठेमेयस्सु' इति तत्रानुवर्तते। एवं तर्हि नुग्विधानसामर्थ्याट्टिलोपो न भविष्यति? यं विधिं प्रत्युपदेशोऽनर्थकः स

**भावबोधिनी**

इससे अञ् भी प्राप्त है। इस सामान्य अञ् का अपवाद ण्य होना चाहिये। अपत्य अर्थ में अञ् प्रत्यय होकर-कौरवः और अन्य अर्थों में कौरव्यः रूप होता है। ]

* छन्द से भिन्न में ग्रीष्म से अञ् प्रत्यय होता है। * यहाँ न हो--ग्रैष्मी त्रिष्टुप्। [ यहाँ ग्रीष्मो देवता अस्या आदि अर्थों में "सन्धिवेला०" ४।३।१६ से औत्सर्गिक अण् ही होता है। ङीष् करने पर ग्रैष्मी बनता है। ] यहाँ छन्द = वृत्त लिया जाता है, वेद नहीं ॥ ८६ ॥

"धान्यानां भवने" ५।२।१ यह आगे कहा जायगा। उसका 'प्राक्' इसके साथ ही सम्बन्ध होता है। भवन--शब्द के कथन के पहले जो अर्थ कहे गये हैं, उन अर्थों में स्त्री शब्द और पुंस् शब्द से क्रमशः नञ् और स्नञ् अर्थात् स्त्री से नञ् और पुंस् से स्नञ् प्रत्यय होते हैं। स्त्रीषु भवम्--स्त्रैणम्। [ स्त्री + नञ् आदिवृद्धि, न का णत्व। ] पौंस्नम् [ पुंस्सु भवम्--इस अर्थ में पुंस् + स्नञ्, आदिवृद्धि "संयोगान्तस्य लोपः" ८।२।२३ से सकार का लोप ]। स्त्रियों का समूह--

१. छन्दसि इति। इह न भवति 'ग्रैष्मी भक्तिः'—इत्यधिकः क्वचित्।

**स्त्रीणां समूहः स्त्रैणम् । पौंस्नम् । स्त्रीभ्य आगतं स्त्रैणम् । पौंस्नम् । स्त्रीभ्यो हितं स्त्रैणम् । पौंस्नम् । 'स्त्रियाः पुंवत्' ( ६.३.३४ ) इति ज्ञापकाद् वत्यर्थे न भवति । योगापेक्षं च ज्ञापकमिति स्त्रीवदित्यपि सिद्धम् ॥**

**१३३८. द्विगोर्लुगपनपत्ये ॥ ८८ ॥ ( १०८० )**

न्यासः

यदि प्राग् भवनसंशब्दनात् स्त्रीपुंसाभ्यां नञ्स्नञौ भवतः, वत्यर्थेऽपि तौ स्याताम्, ततश्च स्त्रीवत्, पुंवदिति न सिध्येदित्याह—**स्त्रियाः पुंवदित्यादि** । यदयम् 'स्त्रियाः पुंवत्' इति निर्देशं करोति ततो ज्ञायते—वत्यर्थे नञ्स्नञौ न भवतः । ननु चैतस्मान्निर्देशात् स्नञ्प्रत्ययो वत्यर्थे न भवतीति शक्यं विज्ञातुम्, न तु नञ्प्रत्ययो न भवतीति, ततश्च स्त्रीवदिति न सिध्यति ? इत्यत आह—**योगापेक्षञ्चेत्यादि** । 'पुंवत्' इति निर्देशादयं योगो वत्यर्थे न प्रवर्तते—इत्येवमर्थमिदं योगापेक्षं ज्ञापकम्, न तु स्नञ्प्रत्ययापेक्षम् । तेन स्त्रीवदित्येतदपि सिध्यति ॥ ८७ ॥

**द्विगोर्लुगनपत्ये ॥ प्राग्दीव्यत इति** । तस्य स्वरितत्वात् । **न भवनादिति** । विपर्ययात् । द्विगोरिति पञ्चमी चेयं स्यात् ? षष्ठी वा ? तत्र यदि पञ्चमी, तदायमर्थः स्यात्—द्विगोः परस्यानपत्यप्रत्ययस्य प्राग्दीव्यतीयस्य लुग् भवतीति । ततश्च यथा द्विगुसंज्ञानिमित्तस्य लुग् भवति—पञ्चकपालेषु संस्कृतः पुरोडाशः पञ्चकपाल इति, तथा यो द्विगोर्निमित्तं न भवति तस्यापि स्यात्—पञ्चकपालस्य पुरोडाशस्येदं खण्डम् । 'तस्येदम्' इत्यण्—

पदमञ्जरी

विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते, तत्र टिलोपार्थमेव नुग्विधानं स्यात् । स्त्रीशब्दस्यापि नुगेव लोपस्य निमित्तम्, अन्यथा यस्येति लोपात् परत्वाद् वृद्धिः स्यात्, यथा—श्रीर्देवता अस्य श्रायं हविरिति । तस्माद्यथान्यासमेवास्तु ।

**योगापेक्षं चेति** । स्त्रीपुंसाभ्यामित्ययं योगो वत्यर्थे न प्रवर्तत इत्येवं ज्ञापनशरीरम्, न तु स्नञ् वत्यर्थे न प्रवर्तत इत्यर्थः । कथं स्त्रीत्वं स्त्रीता पुंस्त्वं पुंस्ता चेति ? 'आ च त्वात्' इत्यत्र परिहारो भविष्यति ॥ ८७ ॥

**द्विगोर्लुगनपत्ये ॥ द्विगोरिति षष्ठीति** । आनन्तर्यलक्षणायां तु पञ्चम्यां पञ्चकपालस्य पुरोडाशस्येदम् 'तस्येदम्' इत्यण्, पाञ्चकपालमित्यत्रापि प्राप्नोतीति भावः । षष्ठ्यपि यद्यानन्तर्ययोगे स्यात् स एव दोषो यः

भावबोधिनी

स्त्रैणम् [ 'तस्य समूहः' ४।२।३७ से समूह अर्थ में प्रत्यय होता है यह सूत्र नञ् ही करता है ] पौंस्नम् [ पुंसां समूहः—अर्थ में स्नञ् ही होता है । ] स्त्रियों से आया हुआ [ इस अर्थ में "तत आगतः" ४।३।७४ से ये प्रत्यय होते हैं ]—स्त्रैणम् । पौंस्नम् [ पुंभ्यः आगतम् पुरुषों से आया हुआ—अर्थ में स्नञ् है ] । स्त्रीभ्यः हितम्—[ स्त्रियों के लिये हितकारक, पुंभ्योहितम्—पुरुषों के लिये हितकारक अर्थ में क्रमशः नञ् स्नञ् होने पर ] स्त्रैणम् । पौंस्नम् रूप बनते हैं ।

"स्त्रियाः पुंवत्०" ६।३।३४ इस निर्देश के कारण वत्यर्थ में ये प्रत्यय नहीं होते हैं । और ज्ञापक योगापेक्ष होता है, अर्थात् एक प्रत्यय के लिये नहीं अपितु सूत्रबोधित दोनों के लिये है; अतः 'स्त्रीवत्' यहाँ भी नहीं होता है ।

विमर्श—पूर्वसूत्र का अधिकार "तेन दीव्यति०" ४।४।२ तक ही है । परन्तु प्रस्तुत सूत्र का अधिकार और आगे "धान्यानां भवने" ५।२।१ तक है । अतः पहले वाले सूत्र से बोधित अर्थों की अपेक्षा और अधिक अर्थों में स्त्री से नञ् और पुंस् से स्नञ् प्रत्यय ही होते हैं । इसमें यद्यपि वति प्रत्यय भी है परन्तु उसका बाध नहीं होता है क्योंकि "स्त्रियाः पुंवत्" ६।३।३४ यह पाणिनि का निर्देश ही वत् के विधान का ज्ञापक है ॥ ८७ ॥

'प्राग्दीव्यतः' इसी की अनुवृत्ति होती है, 'भवनात्' इसकी नहीं । द्विगोः यह षष्ठी है [ पञ्चमी नहीं ] । अपत्य [ अर्थवाले ] प्रत्यय को छोड़ कर प्राग्दीव्यतीय अर्थ में होने वाला, द्विगु का सम्बन्धी = द्विगु के निमित्तरूप से जो तद्धित प्रत्यय, उसका लुक् हो जाता है । उदा०—पञ्चसु कपालेषु संस्कृतः—पञ्चकपालः । दशकपालः । इनमें विग्रह प्रदर्शित अर्थ की विवक्षा में "तद्धितार्थोत्तरपद०" २।१।५१ से द्विगु समास और "संस्कृतं भक्षाः" ४।२।१६ से अण् करने पर प्रस्तुत सूत्र से

**'प्राग्दीव्यतः' इति वर्तते, न 'भवनात्' इति। 'द्विगोः' इति षष्ठी। द्विगोर्यः सम्बन्धी निमित्तत्वेन तद्धितः प्राग्दीव्यतीयोऽपत्यप्रत्ययं वर्जयित्वा तस्य लुग् भवति। पञ्चसु कपालेषु संस्कृतः पञ्चकपालः। दशकपालः। द्वौ वेदावधीते द्विवेदः। त्रिवेदः।**

**अनपत्य इति किम्? द्वैदेवदत्तिः। त्रैदेवदत्तिः। प्राग्दीव्यत इत्येव – द्वैपारायणिकः।**

**द्विगुनिमित्तविज्ञानादिह न भवति – पञ्चकपालस्येदं पाञ्चकपालम्। अथ वा – द्विगोरेवायं लुग्विधीयते, 'द्विगोः' ( ४. १. २१ ) इति स्थानषष्ठी।**

**न्यासः**

स्यान्तरङ्गत्वाल्लभ्यते। स हि द्विगोराद्यस्तद्धितेन सम्बद्धः; तस्मात् स गृह्यते। पौर्वापर्यभावस्तूत्तरकालमपि भवतीति बहिरङ्गो भवति. अतो न तस्य ग्रहणम्। **पञ्चकपाल इति**। पञ्चसु कपालेषु संस्कृत इति 'तद्धितार्थ' इति समासः, 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञा, 'संस्कृतम्' इत्यण्, तस्य लुक्। **द्विवेद इति। द्वौ वेदावधीत** इति पूर्ववत् समासः, 'तदधीते तद्वेद' इत्यण्।

**द्वैदेवदत्तिरिति**। द्वयोर्देवदत्तयोरपत्यमिति 'अत इञ्'। **पञ्चकपालस्येदमिति पाञ्चकपालमिति**। अत्र संस्कृतार्थे यः प्रथमः प्रत्यय उत्पन्नः स एव द्विगोर्निमित्तम्, न तु य उत्तरकालं तस्येदमित्यर्थविवक्षायाम्। न हि तस्यार्थे विषयभूते द्विगुर्विहितः, किं तर्हि? संस्कृतार्थे यो विहितस्तस्य। तेनाद्विगुनिमित्तत्वात् 'तस्येदम्'

**पदमञ्जरी**

पञ्चम्याम्, ततश्च षष्ठ्याश्रयणमनर्थकं स्यादिति मत्वाऽऽह—**द्विगोर्यः सम्बन्धी निमित्तत्वेनेति**। यस्य पाञ्चकपालमिति। तमिमं पञ्चमीपक्षे दोषं दृष्ट्वा, षष्ठीपक्षमाश्रित्याह—**द्विगोरिति षष्ठीति। द्विगोर्यः सम्बन्धीति**। यस्य तद्धितस्यार्थे 'तद्धितार्थोत्तरपदसमाहारे च' इति समाहारद्विगुर्विधीयते स द्विगोः सम्बन्धीति; अर्थद्वारेण तदर्थस्य द्विगुसम्बन्धित्वात्। सोऽपि तद्द्वारेण द्विगुसम्बन्धी। **निमित्तत्वेनेति**। अनेन निमित्तनैमित्तिकभावेन यः सम्बन्धो तस्य लुग् भवति, न तु पौर्वापर्यभावेन यस्तस्येति दर्शयति। एतच्च निमित्तनैमित्तिकभावतद्धितस्यार्थे 'तद्धितार्थोत्तरपद' इति द्विगुविहितः स निमित्तत्वेन सम्बन्धी। **पञ्चकपाल इति**। 'संस्कृतं भक्षाः' इत्यत्रार्थे विवक्षिते द्विगुः, अण्, तस्य लुक्। **द्विवेद इति**। 'तदधीते तद्वेद' इत्यत्रार्थे द्विगुः।

**द्वैदेवदत्तिरिति**। द्वयोर्देवदत्तयोरपत्यम्, 'अत इञ्', अपतनादपत्यम्, यस्य मित्रादिषु द्वौ देवदत्तसंज्ञकौ स एवमुच्यते, एकस्य वा दत्तपुत्रोऽन्यस्य साक्षात्पुत्रः।

**द्विगुनिमित्तविज्ञानादिति**। द्विगुनिमित्तस्य प्रत्ययस्य लुग्विधानादित्यर्थः। **पञ्चकपालस्येदमिति**। अत्र संस्कृतार्थे यः प्रथममुत्पन्नः प्रत्ययः स एव द्विगोर्निमित्तं न द्वितीय इति तस्य लुग्न भवति। **अथ वेत्यादि**। पूर्वं लुगित्यनेनोपस्थापितस्य प्रत्ययस्य द्विगोरित्यनेन वैयधिकरण्यमाश्रित्य व्याख्यातम्, इदानीं

**भावबोधिनी**

उस प्रत्यय का लुक् हो जाता है। प्रत्ययलक्षण न होने से वृद्धि नहीं होती है। पाँच और दश कपालों = मिट्टी के पात्रों में संस्कृत = पकाया गया पुरोडाश आदि।] द्वौ वेदौ अधीते—द्विवेदः त्रिवेदः [उक्त विग्रह में तद्धितार्थ की विवक्षा में द्विगु समास करने पर "तदधीते तद्वेद" ४।२।५९ से अण् प्रत्यय और प्रस्तुत सूत्र से लुक् करने पर रूप सिद्ध होता है। दो वेद पढ़नेवाला। तीन वेद पढ़नेवाला।]

अपत्य भिन्न अर्थ में—इसका क्या फल है? द्वैदेवदत्तिः त्रैदेवदत्तिः। [द्वयोः देवदत्तयोः अपत्यम्, त्रयाणां देवदत्तानाम् अपत्यम्—इस अर्थ में "अत इञ्" ४।१।९५ से इञ् प्रत्यय होता है। लुक् नहीं होने से आदिवृद्धि, भसंज्ञा, अलोप होता है।] प्राग्दीव्यतीय अर्थों में ही। [लुक् होता है]—द्वैपारायणिकः। [द्वे पारायणे वर्तयति—इस अर्थ की विवक्षा में द्विगु समास और "पारायणतुरायणचान्द्रायणं वर्तयति" ५।१।७२ से ठञ् प्रत्यय होता है। यह "दीव्यति०" ४।४।२ से आगे अर्थ में है। अतः लुक् न होने से आदिवृद्धि, ठ का इक आदेश होता है। दो पारायण करनेवाला]।

**ननु च प्रत्ययादर्शनस्यैषा संज्ञा ? सत्यमेतत्; उपचारेण तु लक्षणया द्विगुनिमित्तभूतः प्रत्यय एव द्विगुस्तस्य लुग्भवति । द्विगुनिमित्तकोऽपि तर्हि गुणकल्पनया कस्मान्न द्विगुरुच्यते—पाञ्चकपालमिति ? न तस्य**

न्यासः

इति यो विहितस्तस्येह लुग् न भवति । **अथ वेत्यादि** । पूर्वं हि द्विगोर्यस्तद्धितो निमित्तं तस्य लुग् विहितः, इदानीं द्विगोरेव विधीयत इत्यस्ति विशेषः । कथं पुनर्द्विगोरेव लुग्भवति ? इत्यत आह—**द्विगोरिति स्थानषष्ठीति** ।

**ननु चेत्यादि**नान्तरोक्तव्याख्यानं विघटयति । 'प्रत्ययस्य लुक्श्लुलुपः' इति लुगादिकाः प्रत्ययादर्शनस्यैताः संज्ञा विहिताः, ततो लुगुच्यमानोऽनेन न शक्यो द्विगोरेव लुकं विधातुमित्यभिप्रायः । **सत्यमेतदिति** । यदनन्तरमुक्तम् । यद्येवम्, कथं लुक्संज्ञाया द्विगोर्लुग् लभ्यते ? इत्यत आह—**उपचारेण त्वित्यादि** । अतथाभूते वस्तुनि योऽध्यारोपिततथाभावो ज्ञानविशेषः स उपचारः । लक्ष्यतेऽनयेति लक्षणा, सा पुनरिहोपचार एव । एतेन ह्यद्विगुरूपस्तद्धितो द्विगुरूपतया लक्ष्यते । यथा 'मञ्चाः क्रोशन्ति' इत्यत्रामञ्चरूपा अपि पुरुषा मञ्चरूपतया लक्ष्यन्ते, तथेहाप्यद्विगुरूपस्तद्धितो द्विगुरूपतया । उपचारस्य तु निबन्धनं द्विगुनिमित्तभूतत्वम्, यदाह—**द्विगुनिमित्तभूतःप्रत्यय एव द्विगुरिति** । भवति हि कारणे कार्योपचारः, यथा—आयुर्घृतमिति **द्विगुनिमित्तकोऽपि तर्हीत्यादि** । द्विगुर्निमित्तं यस्य स तथोक्तः । यो धर्मं उपचारस्य निबन्धनं स इह गुणशब्देन विवक्षितः । गुणनिमित्ता कल्पना = गुणनिमित्तकल्पना, सा पुनरुपचारात्मिकैव वेदितव्या । यद्युपचारेण द्विगोर्निमित्तं प्रत्ययोऽपि द्विगुरुच्यते, द्विगुर्यस्य निमित्तम्, सोऽपि गौण्या कल्पनया कस्माद् द्विगुरिति नोच्यते ? कार्येऽपि हि कारणशब्द उपचारात् प्रयुज्यमानो विद्यत एव, यथा—पुरातनं सर्वमिदं शुभाशुभं कर्म भुज्यत इति । **पाञ्चकपालमिति** ।

पदमञ्जरी

सामानाधिकरण्यमित्येष विशेषः । कथं पुनर्द्विगोरेव लुग् लभ्यत इत्याह—**द्विगोरिति स्थानषष्ठीति** ।

**ननु चेत्यादि** । 'प्रत्ययस्य लुक्श्लुलुपः' इति प्रत्ययादर्शनस्य लुगादयः संज्ञा विहिताः ततश्च द्विगोर्लुगिति नैव समञ्जसमिति भावः । **उपचारेण त्वित्यादि** । अतस्मिंस्तद्रूपारोपः = उपचारः, परत्र परशब्दप्रयोगः = लक्षणा, उपचारेण निमित्तेन या लक्षणा तयेत्यर्थः । अन्ये तूपचारेणेत्यस्य विवरणं लक्षणयेत्येतदित्याहुः । अद्विगुरूपस्तद्धितो द्विगुरूपतया यथा बुद्धया विवक्ष्यते सा लक्षणा उपचार एवेति । उपचारस्य निबन्धनं द्विगुनिमित्तत्वम् । भवति हि कारणे कार्योपचारः—आयुर्घृतमिति यथा । **द्विगुनिमित्तकोऽपि तर्हीत्यादि** । कार्येऽपि कारणवदुपचारो दृश्यते, यथा—पुरातनं कर्म भुज्यत इति, ततश्च द्विगुर्यस्य प्रत्ययस्य निमित्तं सोऽपि गुणकल्पनया गुणशब्देनोपचारस्य निमित्तभूतो धर्मो विवक्षितः, तन्निमित्ता कल्पना गुणकल्पना, ना पुनरुपचारात्मिका बुद्धिः, तया कस्मान्न द्विगुरित्युच्यते ? अर्हत्येवायमेवंविधं वचनमित्यर्थः परिहरति—**न**

भावबोधिनी

द्विगु के निमित्तभूत का ज्ञान होने के कारण अर्थात् द्विगुनिमित्त प्रत्यय के लुक् का विधान किया गया है अतः—पञ्चकपालस्येदम्—पाञ्चकपालम् [ ही होता है ]। अथवा—'द्विगोः' यह स्थानषष्ठी है, द्विगु का ही यह लुक् होता है। [ अन्य का नहीं ]।

**विमर्श**—पञ्चसु कपालेषु संस्कृतः—इस अर्थ की विवक्षा में "तद्धितार्थोत्तरपद" से समास और 'संख्यापूर्वो द्विगुः" २।१।५२ से वह द्विगु होता है। अतः "संस्कृतंभक्षाः" ४।२।१६ से होने वाले अग् प्रत्यय का लुक् प्रस्तुत सूत्र से हो जाने पर—पञ्चकपालः आदि बनता है। इसके बाद 'पञ्चकपालस्य इदम्' इस अर्थ में "तस्येदम्" ४।३।१२० से अण् होने पर इसका लुक् नहीं होता है क्योंकि यह अण् प्रत्यय द्विगु के निमित्त रूप से नहीं माना गया है। अतः पहले विग्रह में संस्कृत = संस्कार किया गया—इस अर्थ में विहित प्रत्यय ही द्विगु का निमित्त होने से लुक् होता है। सम्बन्ध अर्थ का प्रत्यय द्विगु का निमित्त नहीं है। अतः बाद वाला अण् रहता ही है। अतः आदिवृद्धि होकर पाञ्चकपालम् बनता है।

**द्विगुत्वं निमित्तम्, इतरस्तु द्विगुत्वस्यैव निमित्तमित्यस्ति विशेषः।**

**यद्येवम्, इह कथं पञ्चकपाल्यां संस्कृतः पञ्चकपाल इति ? नैवात्र तद्धित उत्पद्यते, वाक्यमेव भवति।**

**न्यासः**

पञ्चकपालस्य पुरोडाशस्येदं खण्डमित्यण्, स च द्विगोरुत्पन्नत्वाद् द्विगुनिमित्तक इत्यभिप्रायः। न तस्य द्विगुत्वं निमित्तमिति निष्पन्नत्वाद् द्विगोस्तद्धितस्योत्पद्यमानस्य न द्विगुत्वं निमित्तम्, किं तर्हि ? प्रातिपदिकम्। तथा हि—नासौ द्विगुरित्येवं विधीयते, किं तर्हि ? प्रातिपदिकादित्येवम्। तस्मात् सन्निहितापि द्विगुता न प्रत्ययस्य निमित्तमिति, न च प्रत्ययो द्विगुरित्युपचारेण व्यपदेष्टुं शक्यत इति। इतरस्त्विति। तद्धितप्रत्ययः, यस्य मूलोदाहरणे लुग् दर्शितः। **द्विगुत्वस्यैव निमित्तमिति**। एवकारेण प्रातिपदिकस्य व्यवच्छेदः क्रियते - द्विगुत्वस्यैव निमित्तम्, न तु प्रातिपदिकत्वस्य; यतस्तदर्थे द्विगुसमासो विधीयते, न तु प्रातिपदिकत्वमित्यस्ति विशेषः। ततश्च द्विगोर्यो निमित्तं तत्रैव द्वित्वव्यपदेश उपचाराद्भवति। न तु निष्पन्नाद् द्विगोर्य उत्पद्यते तत्रापि।

**यद्येवमित्यादि**। यदि द्विगोर्यो निमित्तं तद्धितः सोऽत्र निमित्तत्वादुपचारेण द्विगुरुच्यते तस्य लोपो भवति। एवं सतीह कथं लोपः—पञ्चकपाल्यां संस्कृतः पञ्चकपाल इति ? अत्र हि पञ्चानां कपालानां समाहार

**पदमञ्जरी**

**तस्येति**। तत्र हि सन्निहितमपि द्विगुत्वं प्रत्ययोत्पत्तौ नोपयुज्यते, न ह्यसौ द्विगोरित्येवं विधीयते, किं तर्हि ? प्रातिपदिकादित्येवमित्यर्थः। **इतरस्त्विति**। प्रत्ययः, यस्य लुग्दर्शितः। **द्विगुत्वस्यैव निमित्तमिति**। तदर्थे हि समासो विधीयते, तस्यैव च द्विगुसंज्ञा, तेनासौ द्विगुत्वस्यैव निमित्तम्।

**यद्येवमित्यादि**। उभयोरपि पक्षयोरेतच्चोद्यम्। न ह्यत्र द्विगोर्निमित्तत्वेन सम्बन्धी तद्धितः, नापि द्विगुनिमित्तत्वादुपचारेण तद्व्यपदेशार्हः, अत्र हि समाहारे द्विगौ निष्पन्ने पश्चात्तद्धित उत्पद्यते, स च

**भावबोधिनी**

अथवा 'द्विगोः' यह स्थानषष्ठी है। द्विगु के स्थान पर लुक् होता है अन्य के स्थान पर नहीं। अतः सम्बन्धार्थ में विहित प्रत्यय रहता ही है।

यह लुक् संज्ञा तो प्रत्यय के अदर्शन की की गयी है ? [ अतः द्विगु का लुक् यह कैसे होगा क्योंकि द्विगु तो समास-विशेष है प्रत्यय नहीं ? ]—यह कथन सत्य है; परन्तु उपचार से लक्षण द्वारा द्विगु का निमित्तभूत प्रत्यय ही द्विगु है उसका लुक् होता है। तब तो द्विगुनिमित्तक को भी गुणकल्पना से द्विगु क्यों नहीं कहते हो—पाञ्चकपालम् ? इस [ सम्बन्ध अर्थ में विहित प्रत्यय ] का द्विगुत्व 'निमित्त नहीं है, किन्तु दूसरा [ जिस प्रत्यय का लुक् हुआ है वह ] तो द्विगुत्व का ही निमित्त है—यह दोनों में भेद है।

[ द्विगु का निमित्त तद्धित यहाँ लिया जाता है ] ऐसी बात यदि है तो—'पञ्चकपाल्यां संस्कृतः पञ्चकपालः' यह कैसे बनता है ? यहाँ तद्धित प्रत्यय ही नहीं होता है, केवल वाक्य ही होता है। यहाँ तीन शब्द साध्य हैं—(१) पञ्चसु कपालेषु संस्कृतः (२) पञ्चकपाल्यां संस्कृतः, (३) पञ्चकपालः। इनमें [ समाहार में द्विगु वाला और तद्धितार्थ में द्विगु और प्रत्यय वाला—इन ] दो समानार्थक शब्दों में एक अर्थात् समाहार में द्विगु वाले पञ्चकपाली से विग्रह वाक्य ही रहता है; और दूसरे अर्थात् तद्धितार्थ में द्विगु वाले पञ्चकपाल से तद्धित प्रत्यय होता है।

पञ्चभ्यः गर्गेभ्य आगतम्—पञ्चगर्गरूप्यम्, पञ्चगर्गमयम् [ यहाँ "हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यप्" ४।३।८१ और "मयट् च" ४।३।८२ से रूप्य और मयट् प्रत्यय होने पर उक्त रूप बनते हैं ]—इनमें प्रत्यय का लुक् क्यों नहीं होता है ? [ "समर्थानां प्रथमाद् वा" ४।१।८२ इससे ] 'वा' की अनुवृत्ति होती है। और वह व्यवस्थितविभाषा मानी जाती है। [ अतः पञ्चकपालः आदि में नित्य लुक् होता है। पञ्चगर्गरूप्यम् आदि में नहीं होता है ]।

**त्रैशब्द्यं हि साध्यम्—(१) पञ्चसु कपालेषु संस्कृतः, (२) पञ्चकपाल्यां संस्कृतः (३) पञ्चकपाल इति; तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः, अपरस्मादुत्पत्तिर्भविष्यति ।**

**न्यासः**

इति समाहारे द्विगौ निष्पन्ने ततस्तूत्तरकालं तद्धितो विधीयमानो न द्विगोर्निमित्तं भवति । **नैवात्रेत्यादि** परिहारः । कस्मान्नोत्पद्यत इत्याह—**त्रैशब्द्यं हीत्यादि** । त्रय एव शब्दाः = त्रैशब्द्यम् । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । इहास्माभिस्त्रैशब्द्यं साध्यम् । पञ्चकपालीशब्दस्तद्धितोत्पत्तिमन्तरेणापि सिध्यतीति न तस्मात् तद्धित उत्पद्यते । **पञ्चसु कपालेषु संस्कृत इत्यादिना** त्रैशब्द्यं दर्शयति । **द्वयोः शब्दयोरित्यादि** । यश्च समाहारे पञ्चकपालीशब्दः, यश्च तद्धितार्थविषये समासे पञ्चकपालशब्दस्तौ द्वावपि समानार्थौ, तयोरेकेन पूर्वेण विग्रह एवेति तस्मान्न तद्धितोत्पत्तिर्विज्ञेया । **अपरस्मादुत्पत्तिरिति** । पञ्चकपालशब्दात् । अव्यविकन्यायेन । यथा ऽवेर्मांसमाविकमित्यविशब्देन विग्रहः, अविकशब्दस्तु प्रत्ययमुत्पादयति तद्वदिहापि ।

**पदमञ्जरी**

द्विगोर्निमित्तं न भवतीति चोद्यार्थः । परिहरति —**नैवात्र तद्धित उत्पद्यत इति** । अनभिधानादिति भावः । यदि नोत्पद्यते, कथमस्मिन्नर्थे पञ्चकपाल इति रूपसिद्धिस्तस्मादुत्पद्यत एवात्र तद्धितः, तस्य च लुग्विधेयः ? इत्यत आह—**त्रैशब्द्यं हीति** । त्रय एव शब्दास्त्रैशब्द्यम् = चातुर्वर्ण्यादिः । इह ह्यस्माभिस्त्रैशब्द्यं साध्यम्, तच्च पञ्चकपालीशब्दात्तद्धितोत्पत्तिमन्तरेणापि सिद्ध्यतीति नास्मात्तद्धित उत्पद्यते । तानेव त्रीन् शब्दान् दर्शयति—**पञ्चसु कपालेष्विति । द्वयोः शब्दयोरिति** । यः समाहारे द्विगुः, यश्च तद्धितार्थे, द्वावपि तौ समानार्थौ, तयोरेकेन पूर्वेण विग्रहः । अवधारणमत्र द्रष्टव्यं विग्रह एव, न तद्धितोत्पत्तिः; अनभिधानात् । **अपरस्मात्** पञ्चकपालादुत्पत्तिः । **सोऽयम् अव्यविकन्याय** उच्यते, तद्यथा अवेर्मांसमित्यविशब्देन विग्रह एव, अविकशब्दादुत्पत्तिर्विग्रहश्च आविकमविकस्य मांसमिति ।

**भावबोधिनी**

**विमर्श**—द्विगोः—इस षष्ठी को निमित्त अर्थ में समझना चाहिये—द्विगु के निमित्त तद्धित का लोप होता है । अतः पञ्चषु कपालेषु संस्कृतः—इस अर्थ में द्विगुसमास और "संस्कृतं भक्षाः" ४।२।१६ से अण् करनेपर यह अण् द्विगु का निमित्त है अतः प्रस्तुतसूत्र से इसका लुक् कर देने पर—पञ्चकपालः बनता है । इसके बाद पञ्चकपालस्य इदम्—इस अर्थ में "तस्येदम्" ४।३।१२० से पुनः अण् प्रत्यय होता है । परन्तु इस अण् का लुक् नहीं होता क्योंकि यह द्विगु का निमित्त नहीं है । अतः पञ्चकपाल + अण्, आदि वृद्धि करने पर—पाञ्चकपालम् बना है ।

काशिकाकार ने 'द्विगोः' इसे स्थानषष्ठी माना है और द्विगु के स्थान पर लुक् का विधान किया है । परन्तु "प्रत्ययस्य लुक् श्लुलुपः" १।१।६१ सूत्र से प्रत्यय के लोप = अदर्शन की ही लुक् आदि संज्ञाये की गयीं हैं । अतः द्विगु के लुक् को कहना सम्भव नहीं है । इस शंका का समाधान यह है कि उपचार से यह हो सकता है । जिसमें जो नहीं है उसका आरोप = उपचार करके लक्षणा वृत्ति से काम चल सकता है । जैसे 'गंगायां घोषः' आदि में गंगा का अर्थ गंगातट मानने में लक्षणावृत्ति ही हैं । उसी प्रकार द्विगु के निमित्तभूत प्रत्यय को भी द्विगु कहा जाता है, उसका लुक् होता है । अतः दोष नहीं है ।

यदि उपचार द्वारा लक्षणा से द्विगु का निमित्त द्विगु कहा जा सकता है तो द्विगुनिमित्तक = द्विगु है निमित्त जिसका उस प्रत्यय को भी द्विगु क्यों नहीं कह सकते । भाव यह है कि कारण में यदि कार्य का आरोपितव्यवहार होता है तो कार्य में भी कारण का आरोपित व्यवहार मान कर प्रत्यय को भी द्विगु मानना चाहिये । अतः पञ्चकपालस्य इदम् इस अर्थ में होने वाला अण् प्रत्यय द्विगु से उत्पन्न हो रहा है । अतः द्विगुनिमित्तक हो जाने के कारण इसका भी लुक् हो जाना चाहिये ?

**अथेह कस्मान्न भवति—पञ्चभ्यो गर्गेभ्य आगतं पञ्चगर्गरूप्यम्, पञ्चगर्गमयमिति ? वेत्यनुवर्तते, सा च व्यवस्थितविभाषा विज्ञायते ।**

## १३३९. गोत्रेऽलुगचि ॥ ८९ ॥ ( १०८१ )

**न्यासः**

अथेह कस्मान्न भवतीत्यादि । रूप्यमयटावपि हि द्विगोर्निमित्तभूतौ, अतस्तयोरपि लुका भवितव्यमिति भावः । वेत्यनुवर्त्तत इति । 'समर्थानां प्रथमाद्वा' इत्यतः । नन्वेवमपि सर्वत्र विकल्पेन लुक् प्राप्नोतीत्यत आह—सा चेत्यादि । चशब्दो हेतौ । यस्मात् सा व्यवस्थितविभाषा विज्ञायते, तेन पञ्चकपाल इत्यादौ नित्यं लुग् भवति । पञ्चगर्गरूप्यमित्यादौ न भवत्येव ॥ ८८ ॥

गोत्रेऽलुगचि ॥ अचीति । यद्येषा परसप्तमी स्याच्छविधावितरेतराश्रयता प्रसज्येत । कथम् ? गर्गस्या-

**पदमञ्जरी**

सा च व्यवस्थितविभाषेति । एवं कृत्वा त्रैविद्यः, पाञ्चनदम्, षाट्कुलं इत्यत्रापि लुग्न भवति । अथ वा—त्र्यवयवा विद्या त्रिविद्या, शाकपार्थिवादिः, तामधीते त्रैविद्यः, विद्यात्रयरूपस्य च समुदायस्य विद्यात्वं विवक्षितमित्यर्थभेदाभावः । पञ्चानां नदीनां समाहारः पञ्चनदम्, 'नदीभिश्च' इत्यव्ययीभावः 'गोदावर्याश्च नद्याश्च' इत्यचसमासान्तः, पञ्चनदे भवः पाञ्चनदः । अथ वा—अभिधाने हि सति समाहारद्विगोरपि भवत्येव तद्धितः । तथा षण्णामादिपुरुषाणां कुलानि तत्र भावः षाट्कुलः । अव्यविकन्यायाच्च तिस्रो विद्या अधीते, पञ्चसु नदीषु भवः, षट्सु कुलेषु भव इति विग्रह एव; न द्विगुः, नापि तद्धितः ॥ ८८ ॥

गोत्रेऽलुगचि ॥ पूर्वत्रोत्तरत्र च लुग्विधानादिह नञ् प्रश्लिष्यते । **यस्कादिभ्यो गोत्र इत्यादिनेति ।**

**भावबोधिनी**

इस शंका का समाधान यह है "तस्येदम्" ४।३।१२० से होने वाले प्रत्यय के लिये द्विगुत्व निमित्त नहीं है, द्विगु हो तभी प्रत्यय हो, ऐसा नहीं है । अतः आरोप का विषय नहीं बन सकता । इसके विपरीत पञ्चसु कपालेषु संस्कृतः—इस अर्थ में जो पहला प्रत्यय 'संस्कृतं भक्षाः' ४।२।१६ से होता है वह प्रत्यय ही द्विगुत्व का निमित्त है, उस प्रत्यय की विवक्षा में ही द्विगु समास सम्भव है । पहले वाले अण् और बाद वाले अण् की उत्पत्ति में यही भेद है ।

द्विगु के निमित्तभूत तद्धित को उपचार से द्विगु मान लिया जाता है और उसका लोप किया जाता है तो—पञ्चकपाल्यां संस्कृतः—पञ्चकपालः—यह कैसे बनता है । क्योंकि पञ्चानां कपालानां समाहारः—इस विग्रह में द्विगु करके "द्विगोः" ४।१।२१ से ङीप् करने पर पञ्चकपाली बना कर तद्धित प्रत्यय करना है । इस प्रकार यह तद्धित प्रत्यय द्विगु का निमित्त नहीं बनता है । इसका लुक् किस प्रकार होगा ? इसका समाधान यह है कि इस विग्रह में तद्धित प्रत्यय होता ही नहीं है, विग्रह वाक्य ही रहता है । अतः लुक् का प्रश्न ही नहीं है ।

भाष्य में यहाँ तीन प्रकार के प्रयोग प्रस्तुत किये हैं । (१) पञ्चसु कपालेषु संस्कृतः । (२) पञ्चकपाल्यां संस्कृतः । (३) पञ्चकपालः ।

इनमें समाहार द्विगु में जो पञ्चकपाली शब्द है और तद्धितार्थ विषय में समास में जो पञ्चकपाल शब्द है; इन दोनों का समान ही अर्थ है । (१) परन्तु प्रथम से सदा वाक्य ही होता है—पञ्चकपाल्यां संस्कृतः । तद्धित प्रत्यय की उत्पत्ति ही नहीं होती है । अतः लुक् का प्रश्न नहीं है । (२) इसके विपरीत तद्धितार्थ विषय में जो द्विगु होता है—पञ्चसु कपालेषु संस्कृतः—इसमें "संस्कृतं भक्षाः" ४।२।१६ से अण् होता है, उसका लुक् किया जाता है—पञ्चकपालः । (३) यह अण् भी वैकल्पिक है । अतः पक्ष में वाक्य भी होता है—पञ्चसु कपालेषु संस्कृतः । इससे स्पष्ट है कि एक अर्थ के लिये तीन प्रकार के शब्दों का प्रयोग किया जा सकता है ॥ ८८ ॥

"प्राग्दीव्यतः" इसकी अनुवृत्ति होती है । "यस्कादिभ्यो गोत्रे" २।४।६३ आदि सूत्रों से जिन गोत्र प्रत्ययों का लुक् कहा गया है, अजादि प्रत्यय परे रहते प्राग्दीव्यतीय विषय रहने पर, उनके लुक् का प्रतिषेध किया जाता है । उदा०—

**'प्राग्दीव्यतः' इत्येव। 'यस्कादिभ्यो गोत्रे' ( २.४.६३ ) इत्यादिना येषां गोत्रप्रत्ययानां लुगुक्तस्तेषाम-**

**न्यासः**

पत्यानि बहूनि 'गर्गादिभ्यो यञ्', तस्य यदि लुक् स्याच्छो न स्यात्। लुप्तेऽपि तस्मिन् 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति चेत् ? 'न लुमताङ्गस्य' इति प्रत्ययलोपप्रतिषेधाद् वृद्धयभावेन वृद्धसंज्ञा न स्यात्, ततश्च वृद्धलक्षणाच्छो न स्यात्। तस्माद् वृद्धत्वं प्रातिपदिकस्य वाञ्छतोऽलुक् पूर्वं स्यात्। स चालुक् छे परतो यदि भवति ततश्चालुग्निमित्तश्छः, तन्निमित्तश्चालुगिति व्यक्तमितरेतराश्रयत्वम्। तदिमं परसप्तम्यां दोषं दृष्ट्वा विषयसप्तमीयमिति

**पदमञ्जरी**

'प्राग्दीव्यतः' इत्युपजीवनाय तु प्रकरणोत्कर्षः, प्रसज्यप्रतिषेधश्चायम्। अचीति। यद्येषा परसप्तमी स्याच्छविधावितरेतराश्रयं प्राप्नोति—गार्गीया वात्सीया इतिच्छे परतोऽलुका भवितव्यम्, अलुकि च सति वृद्धत्वाच्छेन भवितव्यमिति। ननु न छे परतोऽलुग्विधीयते, किं तर्हि ? 'अजादिमात्रे, तत्र य एवाजादिः सम्भवति तत्रैवालुग्भविष्यति, तद्यथा—'गर्गाणां छात्राः, 'प्राग्दीव्यतोऽण्', तत्र परतः 'यञञोश्च' इति प्राप्तस्य लुकः प्रतिषेधे गर्गा इति भवति। यद्यप्यत्र सत्यसति वा लुकि नास्ति विशेषः, 'आपत्यस्य च तद्धिते' इति यलोपविधानात्। इह त्वत्रेरपत्यानि बहूनि 'इतश्चानिञः' इति ढकः 'अत्रिभृगु' इति लुकि कृतेऽत्रीणां छात्रा इत्यणि परतः प्रतिषेधे सति आत्त्रेया इति भवति, असति तु प्रतिषेधे आत्त्रा इति स्यात् ? स्यादेतदेवं यदि लुप्तस्य प्रत्ययस्य पुनः प्रादुर्भावो विधीयेत, इह त्वलुगिति वचनाल्लुकः प्रतिषेधो विधेयः, प्राप्तस्य चानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्यते कर्तुम्, ततश्च यद्यत्राणजादिरभिप्रेतः स्यात्, प्रागेव लुकः प्रवृत्तिरभ्युपगन्तव्या; अन्यथा वृद्धत्वाच्छ एव स्यात्, लुक् चेत्प्रवृत्तः प्रतिषेधः किं करिष्यति ? यो हि भुक्तवन्तं प्रति ब्रूयान्मा भुङ्क्था इति, किं तेन कृतं स्यात् ? तदिहाजादौ प्रवृत्तेऽलुका भवितव्यम्, अलुकि च प्रवृत्तेऽजादिना भवितव्यमिति व्यक्तमितरेतराश्रयम्। विप्रतिषेधात्सिद्धम्, लुकोऽवकाशो यत्र प्राग्दीव्यतीयार्थो न विवक्ष्यते—गर्गा वत्सा इति, छस्यावकाशः—शालीय इति; गार्गीय इत्यत्रोभयप्रसङ्गे परत्वाच्छो भविष्यति। तत्र परतो लुकः प्रतिषेधः, अन्तरङ्गो लुग् अपत्यबहुत्वमात्रापेक्षत्वात्, बहिरङ्गश्छः प्राग्दीव्यतीयार्थपेक्षित्वात्, अन्तरङ्गबहिरङ्गयोश्चायुक्तो विप्रति-

**भावबोधिनी**

गर्गाणां छात्राः—गार्गीयाः। [ गर्गस्य बहूनि अपत्यानि इस अर्थ में गर्ग शब्द से "गर्गादिभ्यो यञ्" से यञ् प्रत्यय होता है। गर्गाणां छात्रः इस अर्थ की विवक्षा में अजादि प्रत्यय के न आने पर केवल बुद्धिविषय हो जाने पर "यञिञोश्च" ४।१।१०१ से उस यञ् प्रत्यय का लुक् प्राप्त होने पर इस प्रस्तुत सूत्र से निषेध हो जाता है। अतः आदिवृद्धि करके गार्ग्य बनाकर "वृद्धाच्छः" ४।२।११४ से छ और उसका ईय करने पर भसंज्ञा अलोप और "आपत्यस्य च तद्धितेऽनाति" ६।२।१५१ से य् लोप होकर रूप सिद्ध होता है—गार्ग् ईय = गार्गीयाः ] वात्सीयाः [ वत्सानामिमे छात्राः इस अर्थ में वत्स + यञ् शेष प्रक्रिया पूर्ववत् ]। आत्त्रेयीयाः [ अत्रीणां छात्राः—इस अर्थ में अत्रि से "इतश्चानिञः" ४।१।१२२ से ढक् होता है, उसका एय आदेश, शेष प्रक्रिया पूर्ववत् ]। खारपायणीयाः [ खरपाणानां छात्राः—इस अर्थ में खरप से फक् = फ = आयन, आदिवृद्धि और शेष प्रक्रिया पूर्ववत् है। ] गोत्र अर्थ में—इसका क्या फल है ? कौबलम्। बादरम्। [ कुबल्याः विकारः फलम्, बदर्याः विकारः फलम्—इस अर्थ की विवक्षा में "अनुदात्तादेरञ्" ४।२।४४ से अञ् प्रत्यय होता है। कुबलस्य इदम्, बदरस्य इदम्—इस अर्थ की विवक्षा में अजादि छ ( ईय ) प्रत्यय विषयभूत रहने पर उक्त अञ् प्रत्यय के लोप का प्रतिषेध नहीं होता है, अपितु "फले लुक्" ४।३।१६३ से लुक् हो जाता है, क्योंकि गोत्र अर्थ में यह प्रत्यय नहीं है। अपितु विकार अर्थ में है। जब अञ् प्रत्यय का लुक् हो जाता है तो 'लुक् तद्धितलुकि' १।२।४९ से स्त्री प्रत्यय ङीप् का भी लोप हो जाता है। और आदिवृद्धि भी नहीं होती है; अतः "वृद्धाच्छः" ४।२।११४ से छ न होकर "तस्येदम्" ४।३।१२० से अण् ही होता है—कुबल + अण्, बदर + अण्, आदिवृद्धि होकर कौबलम्, बादरम् बनते हैं। 'अजादि

**जादौ प्राग्दीव्यतीये विषयभूते प्रतिषिद्धयते। गर्गाणां छात्त्रा गार्गीयाः। वात्सीयाः। आत्त्रेयीयाः। खारपायणीयाः।**

गोत्र इति किम्? **कौबलम्। बादरम्। अचीति किम्? गर्गेभ्य आगतं गर्गरूप्यम्। गर्गमयम्।**

**न्यासः**

दर्शयन्नाह- **अजादौ प्राग्दीव्यतीये विषयभूत इति।** विषयभूते=अनुत्पन्न एव बुद्धिस्थ इत्यर्थः। **गार्गीया इति।** गर्गस्यापत्यानि बहूनि। गर्गादित्वाद् यञ्। तस्य गर्गाणाञ्छात्त्रा इत्यर्थविवक्षायामजादावनुत्पन्ने बुद्धयभिमुखीकृते विषयभूते 'यञिञोश्च' इति यो लुक् प्राप्नोति तस्यानेन प्रतिषेधः क्रियते, ततश्चादिवृद्धौ कृतायां तन्निबन्धनायां च वृद्धसंज्ञायाम् 'वृद्धाच्छः' इतिच्छः, ईयादेशः, 'यस्येति च' इत्यकारलोपः, 'आपत्यस्य च तद्धितेऽनाति' इति यकारस्य। **वात्सीया इति।** पूर्वेण तुल्यम्। **आत्त्रेयीया इति।** अत्त्रेरपत्यानि बहूनि। 'इतश्चानिञः' इति ढक्, तस्य 'अत्त्रिभृगुकुत्स' इत्यादिना लुकि प्राप्तेऽत्त्रीणां छात्त्रा इति च्छे विषयभूते तस्य प्रतिषेधः। **खारपायणीया इति।** खरपस्यापत्यानि बहूनि। 'नडादिभ्यः फक्', 'यस्कादिभ्यो गोत्रे' इति तस्य प्राप्तस्य लुकः खरपाणां छात्त्रा इति च्छे विषयभृते प्रतिषेधः।

**कौबलम्, बादरमिति।** कुबलीबदरीशब्दौ गौरादिङीषन्तौ प्रत्ययस्वरेणान्तोदात्तौ, तयोः शेषमनुदात्तम्। तेन कुबल्या विकारः फलम्, बदर्या विकारः फलमित्यर्थविवक्षायाम् 'अनुदात्तादेरञ्' तस्य 'फले लुक्' इति तयोर्लुग् यः प्राप्नोति तस्य कुबलस्येदं बदरस्येदमित्यर्थविवक्षायामजादौ छे विषयभूते प्रतिषेधो न भवति; गोत्रग्रहणात्। गोत्रे यः प्रत्ययो वाचकत्वेन वर्त्तते, तस्य लुकः प्रतिषेधेन भवितव्यम्। न चायमञ् गोत्रे

**पदमञ्जरी**

षेधः। एवं तर्ह्युच्यते चेदमजादौ परतो लुग्भवतीति, यदि च तावत्येव निमित्तमस्तीति बहुत्वमात्रापेक्षो लुक् प्रवर्तेत प्रतिषेधविधानमनर्थकं स्यादिति यावत्प्राग्दीव्यतीयोऽजादिर्नोत्पद्यते तावल्लुग् न प्रवर्तत इति कल्प्यते, ततश्च वृद्धत्वाच्छे सति लुकि प्रतिषिद्धे गार्गीय इति सिद्धमिष्टम्। विषयसप्तम्यां तु न किञ्चिद्यत्नसाध्यम्, गर्गाणां छात्त्रा इत्यर्थविवक्षायामजादौ प्रत्यये विवक्षिते बुद्धिस्थेऽनुत्पन्न एव लुकि प्रतिषिद्धे वृद्धत्वाच्छो भवतीति, तस्माद्विषयसप्तमीमाश्रित्याह—**प्राग्दीव्यतीये प्रत्यये विषयभूत इति। खारपायणीया इति।** खरपस्यापत्यानि बहूनि 'नडादिभ्यः फक्', तस्य 'यस्कादिभ्यो गोत्रे' इति प्राप्तस्य लुकः प्रतिषेधः।

**कौबलम्, बादरमिति।** कुबली-बदरीशब्दौ गोरादिङीषन्तावन्तोदात्तौ, ताभ्यां फले विकारे 'अनुदात्तादेश्च' इत्यञ्, तस्य 'फले लुक्' इति प्राप्तस्य लुक। तस्येदमित्यर्थविवक्षायां प्रतिषेधो न भवति, तेनावृद्धत्वा-

**भावबोधिनी**

विषयभूत रहने पर—इसका क्या फल है? गर्गेभ्य आगतम्—गर्गरूप्यम्। गर्गमयम्। [ गर्गस्य बहूनि अपत्यानि—इसमें यञ् प्रत्यय होता है। इसके बाद गर्गेभ्य आगतम्—इस अर्थ की विवक्षा में "हेतुमनुष्येभ्योऽन्यतरस्याम् रूप्यप्" ४।३।८१ और "मयट् च" ४।३।८२ से रूप्यप् और मयट् प्रत्यय करने पर "यञिञोश्च" ४।१।१०१ से यञ् का लुक् हो जाता है। इस सूत्र से प्रतिषेध नहीं होता है क्योंकि यहाँ अजादि प्रत्यय नहीं हैं—गर्ग + यञ् + रूप्य, यञ् का लुक् करने पर गर्गरूप्यम्। इसी प्रकार गर्गमयम् ] 'तेन दीव्यति' ४।४।२ से पहले वाले अर्थ विषयभूत रहें तभी लुक् का निषेध होता है—गर्गेभ्यः हितं गर्गीयम् [ गर्ग + यञ् यहाँ आगे के हित अर्थ में "तस्मै हितम्" २।१।५ "प्राक् क्रीताच्छः" ५।१।१ से छ = ईय प्रत्यय होता है। अपत्य प्रत्यय के लुक् का निषेध नहीं होता है और लुक् हो जाता है। भसंज्ञा और अलोप करने पर गर्गीयम् यह बनता है।

**विमर्श**—काशिका के उपलब्ध सभी संस्करणों में—"प्रागदीव्यत इत्येव—गर्गेभ्यो हितं गार्गीयम्। यह पाठ है। न्यास और पदमंजरी में भी यही पाठ है सिद्धान्तकौमुदी की तत्त्वबोधिनी टीका में भी गार्गीयम् ही पाठ है। परन्तु यहाँ प्रत्यय का लुक् हो जाने पर वृद्धि का प्रसंग ही नहीं है। इसीलिये सिद्धान्तकौमुदी—बालमनोरमाकार ने स्पष्ट लिखा है—

**प्राग्दीव्यत इत्येव - गर्गेभ्यो हितं गर्गीयम् ।**[1]

❀ **गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक् ।** ❀ **( म० भा० ४.१.८९ वा० २ )**

न्यासः

वाचकत्वेन वर्तते, अपि तु विकारे, तेन तस्य लुग् भवत्येव तस्मिन् सति 'लुक् तद्धित लुकि' इति स्त्रीप्रत्ययस्यापि लुक् । अञि लुप्ते वृद्धयभावाद् वृद्धत्वं नास्तीत्यणेव भवति न तु च्छ । **गर्गरूप्यम्, गर्गमयमिति** । पूर्ववद्रूप्यमयटौ । यद्यत्रालुक् स्याद् **गार्ग्यरूप्यं** गार्ग्यमयमिति स्यात् । **गर्गीयमिति** । 'तस्मै हितम्' इति 'प्राक्क्रीताच्छः' इतिच्छः, स च प्राग्दीव्यतीयो न भवति; दीव्यतः परेण विधानात् । **गोत्रस्येति** । गोत्रप्रत्ययस्य । **बहुषु लोपिन इति** । बहुष्वर्थेषूत्पन्नस्य यस्य लोपो विधीयते स बहुषु लोपी । **बहुवचनान्तस्य प्रवृत्ताविति** । प्रवृत्तिः = अर्थान्तरसंक्रान्तिः । एतदुक्तम्भवति--बहुवचनान्तस्यार्थान्तरसंक्रान्ताविति । सा चार्थान्तरसंक्रान्तिस्तदन्ताद् यदा यूनि प्रत्यय उत्पद्यते तदा भवतीति वेदितव्यम्; तदा गोत्रान्तस्य यूनि प्रवृत्तेः । **द्व्येकयोरिति** । यदा गोत्रप्रत्यान्तादेकस्मिन्नर्थे यूनि द्वयोर्वा यूनोः उत्पद्यते तदाऽर्थान्तरसंक्रान्तौ सत्यामलुग् भवति । बिदस्यापत्यानि बहूनि । 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' इत्यञ् स च 'यञञोश्च' इति बहुषु लुग्विधानाद् बहुषु लोपी भवति, तदन्ताद् युवविवक्षायामेकस्मिन् यूनि द्वयोर्वा 'अत इञ्', तस्य ण्यक्षत्त्रियादिसूत्रेण लुकि कृते गोत्रप्रत्ययान्तस्य तस्यार्थान्तरसंक्रान्तौ सत्यां गोत्रप्रत्ययस्यात्र इहापि बहुषूत्पन्नस्य लुग् न भवति । कथं पुनर्न भवति, यावताऽलुको विषयाभावात् प्राग्दीव्यतीयोऽजादिरिञ् प्रत्यय उपनीतः ? प्रत्ययलक्षणेन भविष्यतीति चेत् ? नैतदस्ति; 'अचि' इति वचनाद् । वर्णाश्रयोऽसौ, 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति च परिभाषा । यथा गवे हितं गोहितमिति चतुर्थीसमासे सुब्लुकि कृते प्रत्ययलक्षणेन चतुर्थीविभक्तिमाश्रित्य गोशब्दस्य 'एचोऽयवायावः' इत्यवादेशो न भवति; वर्णाश्रयत्वात् । वर्णाश्रयत्वं तु तस्याचि विधानात् । यथा च 'वर्णा-

पदमञ्जरी

दणेव भवति । **गर्गरूप्यमिति** । यद्यत्रालुक् स्याद्, गार्ग्यरूप्यमिति स्यात् ।

**गर्गीयमिति** । 'तस्मै हितम्' इति प्राक्क्रीताच्छः ।

विषयसप्तम्या एव फलं दर्शयति—**गोत्रस्येत्यादि** । गोत्रस्येति गोत्रप्रत्ययस्येत्यर्थः । **बहुषु लोपिन इति** । बहुष्वर्थेषु विधीयमानलोपस्येत्यर्थः । **बहुवचनान्तस्य प्रवृत्ताविति** । प्रवृत्तिः = अर्थान्तरसंक्रान्तिः, बहुवचनान्तस्य सतोऽर्थान्तरसंक्रान्तौ सत्यामित्यर्थः । **द्व्येकयोरिति** । यत्रार्थान्तरे संक्रान्तस्य द्वित्वैकत्वयोः सतोरित्यर्थः । सा चार्थान्तरसंक्रान्तिस्तदन्ताद्यदा यूनि प्रत्यय उत्पद्यते तस्य च लुक् क्रियते तदा भवति । लुप्ते हि युवप्रत्यये

भावबोधिनी

"तस्मै हितम्.. २।१।५ इति गार्ग्यशब्दाच्छः । तस्य प्राग्दीव्यतीयत्वाभावात् तस्मिन् परे "यञञोश्च" ४।१।१०१ इति यञो लुग्भवत्येवेति नादिवृद्धिरिति भावः ।" बृहच्छब्देन्दु शेखर में भी गर्गीयम् यही पाठ है । [ द्रष्टव्य बृ० शे० पृ० १२३२ ]।

[ **अनु०** ] * गोत्रप्रत्यय, बहुत अर्थों में उत्पन्न होने वाले जिसका लोप हो जाता है, बहुवचनान्त उसकी अन्य अर्थ में प्रवृत्ति होने पर एकत्वविशिष्ट अर्थ में और द्वित्वविशिष्ट अर्थ में लुक् नहीं होता है । [ बहुवचन में गोत्र प्रत्यय का लोप होता है इस प्रकार के गोत्रप्रत्ययान्त से जब युवा अर्थ में एकवचन या द्विवचन में प्रत्यय होता है तब उस गोत्र प्रत्यय का लुक् नहीं होता है । ] उदा०—बिदानाम् अपत्यं युवा—इस अर्थ में बैदः; बिदानाम् अपत्ये युवानौ—इस अर्थ में बैदौ । [ बिदस्य अपत्यानि बहूनि—इस अर्थ में "अनृष्यानन्तर्ये बिदादिभ्योऽञ्" ४।१।१०४ इस सूत्र से अञ् प्रत्यय होता है, इसका लोप "यञञोश्च" २।४।६४ से होता है । अतः यह अञ् प्रत्यय 'बहुषु लोपी' हुआ । अञन्त से युवा अर्थ की विवक्षा में एकत्वविशिष्ट अर्थ में ] बैद—शब्द से "अत इञ्" ४।१।८५ से इञ् प्रत्यय करने पर और इस इञ् का "ण्यक्षत्रियार्षञितः" २।४।५८ से लुक् करने पर [ बैदः और द्विवचन में बैदौ—ये ] रूप [ सिद्ध होते हैं ] । [ बहुत से बैद = बिद के अपत्यों का एक युवा अपत्य कैसे होगा—यह व्यावहारिक नहीं लगता ]।

**बिदानामपत्यं युवा युवानौ – बैदः, बैदौ। बैदशब्दाद् 'अत इञ्' ( ४. १. ९५ ) कृते तस्य च इञः 'ण्यक्षत्रियार्षञितोयूनिलुगणिञोः' ( २. ४. ५८ ) इति लुकि रूपम्।**

**न्यासः**

श्रये नास्ति प्रत्ययलक्षणम्' इति परिभाषा, तथा बैदः, बैदौ—इत्यत्राप्यलुका वर्णाश्रयतया न भवितव्यम्? नैतदस्ति; न ह्यलुगत्र वर्णाश्रयः, किं तर्हि? तद्धिताश्रयः। अचीत्येतत् त्विह सूत्रे विशेषणत्वेनोपात्तम्। अत एव वृत्तावुक्तम्—**अजादौ प्राग्दीव्यतीये प्रत्यय** इति। तस्मात् तस्याः परिभाषाया इहोपस्थानेऽसति 'गोत्रेऽलुगचि' इति भवतीति, अनेनैवात्रालुक् सिद्धः। स च बहुषु युवसु मा भूदिति द्व्येकयोरेवेत्युपसंख्यानम्। तत्र बिदा इत्येव भवति।

**पदमञ्जरी**

प्रकृतिरेव तदर्थमाहेति भवति संक्रान्तिः। **बिदानामिति**। बिदस्यापत्यानि बहूनि, 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्', बिदाः, तेषां बिदानामपत्यं युवा युवानौ वेति विवक्षायाम् 'अतः' इति इञि विवक्षिते गोत्रप्रत्ययस्याञो लुकः प्राप्तस्यानेन प्रतिषेधः। इञः 'ण्यक्षत्रियार्ष' इति लुकि बैदः, बैदाविति भवति। परसप्तमीपक्षे त्वलुग्न प्राप्नोति; अजादेरभावात्।

इदमिह सम्प्रधार्यम्—इञो लुक् क्रियतामयं वाऽलुगिति? परत्वादलुग्भवति। इञो लुग्नित्यः, कृतेऽप्यस्मिन्नलुकि प्राप्नोति अकृतेऽपि, अयं पुनरलुगनित्यः, न हीञो लुकि कृते प्राप्नोति; अजादेरभावात्? प्रत्ययलक्षणेन भविष्यति। वर्णाश्रये नास्ति प्रत्ययलक्षणम्? नात्र वर्णो निमित्तम्, किं तर्हि? प्रत्ययः; तस्यैव तु विशेषणमचीति। तत्र यथा हलादौ पिति सार्वधातुके विधीयमानः 'तृणह इम्' अतृणेडित्यत्रापि भवति प्रत्ययलक्षणेन तद्वदिहापि भविष्यति? सत्यम्; विषयसप्तमीपक्षे नैवं क्लेशोऽनुभवनीयो भवति। ननूभयोरपि पक्षयोरिहापि न प्राप्नोति—बिदानामपत्यं बहवो माणवका बिदा इति? नैष दोषः; द्वे अत्र बहुत्वे—युवबहुत्वं गोत्रबहुत्वं च, तत्रगोत्रबहुत्वाश्रयस्य लुकः प्रतिषेधोऽस्तु पुनर्युवबहुत्वाश्रयो लुग्भविष्यति। लुग्विधौ हि लौकिकस्य गोत्रस्य ग्रहणम्, युवापि च लोके गोत्रमित्युपचर्यंते—गार्ग्यायणोऽस्मि गोत्रेणेति।

अथ युवबहुत्वाश्रयस्यापि लुकः पुनः प्रतिषेधः कस्मान्न भवति? विषयसप्तम्यां तावद् यस्यामवस्थायां लुक् प्राप्तः तस्यामवस्थायां यदि कश्चिदजादिर्विषयभूतस्ततोऽलुका भवितव्यम्, इह चाजादिर्विषयभूत उत्पन्नो लुप्तश्च, पश्चाद्युवसु बहुषु संक्रान्तौ सत्यां लुक् प्राप्तः, न चास्यामवस्थायां कश्चिदजादिर्विषयभूत इति पुनर्लुग्न भविष्यति। परसप्तम्यामपि गोत्रे वर्तमानस्यालुग्भवत्यजादौ परतः। कस्मिन्नजादौ? प्राग्दीव्यतो येऽर्थान्तेषु योऽजादिस्तस्मिन्नित्युच्यमाने यस्मिन् गोत्रे वर्तमानस्य लुक् प्राप्तस्तद्व्यतिरिक्ते प्राग्दीव्यतीयेऽर्थे योऽजादिस्तत्रेति गम्यते। इह चेञेवाजादिस्तदर्थ एव च गोत्रे लुगिति प्रतिषेधो न भविष्यति।

यद्वा—'समर्थानां प्रथमात्' इत्यतः प्रथमादिति वर्तते, तच्च षष्ठ्यन्तं विपरिणम्यते, प्रथमार्थवृत्तित्वाच्च प्राथम्यमाश्रीयते, तदयमर्थो भवति—प्रथमस्य गोत्रप्रत्ययस्य लुग्न भवति, यस्मिन्नर्थे प्रत्यय उत्पन्नस्तत्रैवार्थे वर्तमानस्य यो लुक् प्राप्तः स न भवति। इह तु द्वितीयमर्थमुपसंक्रान्तस्य लुक् प्राप्त इति न प्रतिषिध्यते।

**भावबोधिनी**

* एकवचनान्त अथवा द्विवचनान्त गोत्रप्रत्यय का बहुत्वविशिष्ट युवसंज्ञक अर्थ रहने पर लुक् कहना चाहिये।"*
उदा०—बैदस्य अपत्यं बहवः माणवकाः अथवा बैदयोरपत्यं बहवः माणवकाः—इन अर्थों में—बिदाः—यही रूप होता है, बहुवचन में अञ् प्रत्यय हुआ ही नहीं है।

[ बिदस्य गोत्रापत्यम्—इस अर्थ में बिद शब्द से "अनृष्यानन्तर्ये बिदादिभ्योऽञ्" ४।१।१०४ से अञ् प्रत्यय और आदिवृद्धि आदि कार्य होने पर—बैदः, बैदौ—ये शब्दरूप होते हैं। इनसे युवापत्य बहुत्व की विवक्षा में 'अत इञ्' से इञ्

❀ **एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि** ❀ – ( म० भा० ४. १. ८९ वा० ३ ) **बैदस्य बैदयोर्वाऽपत्यं बहवो माणवका बिदाः, न ह्यत्राञ् बहुषूत्पन्नः ॥**

**न्यासः**

**एकवचनद्विवचनान्तस्येत्यादि** । एकवचनान्तस्य गोत्रप्रत्ययस्य द्विवचनान्तस्य च बहुष्वर्थेषु युवसंज्ञकेषु प्रवृत्तौ संक्रान्तौ सत्यां लुग्वक्तव्यः । तत्र **बैदस्येत्येकवचनान्तं** गोत्रम्, **बैदयोरिति** द्विवचनान्तम् । अत्र च पूर्ववदञ्, तयोर्युवापत्यबहुत्वविवक्षायाम् 'अत इञ्' । तस्य ण्यक्षत्त्रियादिसूत्रेण लुकि कृतेऽञोऽपि गोत्रप्रत्यय लुगिष्यते । स च न प्राप्नोति, तस्मादुपसंख्यायते । किं पुनः कारणं न प्राप्नोति ? इत्याह—**न ह्यत्रेत्यादि** । 'यञञोश्च' इति अनेन हि बहुषूत्पन्नयोर्लुग् विधीयते, न चाञ् बहुषूत्पन्नः, किं तर्हि ? एकस्मिन् द्वयोश्च, तस्मान्न प्राप्नोतीति । तदेवं सर्वथा बहुषु बिदा इत्येवं भवितव्यमिति स्थितम् ॥ ८९ ॥

**पदमञ्जरी**

अवश्यं चैतदेवं विज्ञेयम्—प्रथमस्य लुक् प्रतिषिध्यत इति, अन्यथा अत्त्रेरपत्यम् 'इतश्चानिञः' इति ढक्, तस्यापत्यं बहवो युवानः, अत इञः 'ण्यक्षत्त्रियार्ष' इति लुक्, ढकः 'अत्त्रिभृगु' इति लुक्, अत्त्रयः; भरद्वाजशब्दाद् बिदाद्यञ्, तदन्ताद्युवबहुत्वे इञो लुक्, अञः 'यञञोश्च' इति लुक्, अत्त्रयश्च भरद्वाजाश्च अत्त्रिभरद्वाजास्तेषां मैथुनिकाद् द्वन्द्वाद् वुन्—अत्त्रिभरद्वाजिकाः; तत्रालुक् प्राप्नोति; कुत्सादृष्यणः 'अत्त्रिभृगु' इति लुक्, कुशिकादञन्तादिञो लुकि कुशिकाः, कुत्सकुशिकिकाः, वसिष्ठकश्यपिकाः, भृग्वङ्गिरसिकाः । अथ वा—गोपवनादिषु गर्गभार्गविकाशब्दः पठ्यते, भार्गवशब्दस्य युवबहुत्वे प्राप्तस्य लुकः प्रतिषेधार्थं तन्नियमार्थं भविष्यति—एतस्यैव द्वितीयमर्थमुपसंक्रान्तस्यालुग्भवतीति । नैव वा पुनरत्र युवबहुत्वे वर्तमानस्यालुक्प्राप्नोति, किं कारणम् ? गोत्र इत्युच्यते, यद्यप्यपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यते, इह तु पारिभाषिकस्य ग्रहणम्, युवशब्दसाहचर्यात्; अन्यथा गोत्रयुवसंज्ञयोः समावेशे योऽयं दोषो वक्ष्यते—शालङ्केरपत्यं 'यञिञोश्च' इति फक्, तस्य 'पैलादिभ्यश्च' इति लुक्, शालङ्कैर्यूनश्छात्रा इत्यर्थविवक्षायाम् 'गोत्रेऽलुगचि' इत्यलुक् प्राप्नोति, ततश्च 'यूनि लुक्' इत्यस्य 'फक्फिञोरन्यतरस्याम्' इति विकल्पितत्वात् पक्षे फकः श्रवणं प्राप्नोतीति स तदवस्थ एव स्यात्, असमावेशेऽपि यूनो लौकिकगोत्रत्वादेवालुक्प्रसङ्गात् । तदेवं गोत्रस्य बहुषु लोपिन इत्यादि न वक्तव्यमिति स्थितम् ।

**एकवचनद्विवचनान्तस्येत्यादि** । एकवचनान्तस्य गोत्रप्रत्ययस्य द्विवचनान्तस्य वा बहुष्वर्थेषु युवसंज्ञकेषु **प्रवृत्तौ** संक्रान्तौ सत्यामित्यर्थः । **लोप इति** । लुगित्यर्थः । लोपे हि प्रत्ययलक्षणेन वृद्धिस्वरप्रसङ्गः । ननु च युवबहुत्वाश्रयो 'यञञोश्च' इत्येवात्र लुक् सिद्धस्तत्राह—**न ह्यत्राञ्बहुषूत्पन्न इति** । अञ्यो बहुषु, यञ्यो बहुष्विति विज्ञायमाने लुग्न सिध्यतीत्यर्थः । यदा त्वञन्तं यद्बहुषु, यञन्तं यद्बहुष्विति विज्ञायते; तदाञन्तस्य बहुषु युवसु वृत्तेर्लौकिकस्य च गोत्रस्यापत्यमात्रस्य तत्र ग्रहणात्सिद्ध एव लुक् । तथा च—गार्ग्यश्च वात्स्यश्च वाज्यश्च गर्गवत्सवाजाः, बैदश्च और्वश्च भारद्वाजश्च बिदोर्वभारद्वाजा इति यञञोरुत्पत्तिवेलायामबहुत्वेऽपि द्वन्द्वे युगपदधिकरणवचनतया यञन्तस्याञन्तस्य बहुत्वोपजनाल्लुग्भवति । न चैवं काश्यपस्यैकस्य बह्व्यः प्रतिकृतयः काश्यपा इति 'इवे प्रतिकृतौ' इति विहितस्य कनः 'जीविकार्थे चापण्ये' इति लुप्, 'हरीतक्यादिषु व्यक्तिः' इति वचनाद् युक्तवद्वचनाभावेऽञन्तस्य बहुषु वृत्तेर्लुक्प्रसङ्गः; गोत्रबहुत्वे लुग्विधानात् ॥ ८९ ॥

**भावबोधिनी**

प्रत्यय होता है । इस प्रत्यय का लुक् "ण्यक्षियार्ष०" २।४।५८ आदि सूत्र से होता है । तब "यञञोश्च" २।४।६५ से अञ् का भी लुक् प्राप्त होता है । परन्तु प्रस्तुत वचन के आधार पर नहीं होता है क्योंकि यह अञ् प्रत्यय एकत्वविशिष्ट और द्वित्वविशिष्ट अर्थ में है बहुत्वविशिष्ट अर्थ में नहीं । अतः इन दोनों वचनों में बैदः और बैदौ रूप होते हैं । बहुवचन में लुक् हो जाने से बिदाः—यह बनता है ॥ ८९ ॥

## १३४०. यूनि लुक् ॥ ९० ॥ ( १०८३ )

'प्राग्दीव्यतः' इति वर्तते, 'अचि' इति च। प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षिते बुद्धिस्थेऽनुत्पन्न एव युवप्रत्ययस्य लुग्भवति। तस्मिन्निवृत्ते सति यो यतः प्राप्नोति स ततो भवति। फाण्टाहृतस्यापत्यं फाण्टाहृतिः, तस्यापत्यं युवा, 'फाण्टाहृतिमिमताभ्यां णफिञौ', ( ४. १. १५० ) फाण्टाहृतः, तस्य छात्रा इति विवक्षितेऽर्थे बुद्धिस्थे युवप्रत्ययस्य लुग्भवति, तस्मिन्निवृत्ते इञन्तं प्रकृतिरूपं सम्पन्नम्, तस्मात् 'इञश्च' ( ४. २. ११२ ) इत्यण् भवति – फाण्टाहृताः।

भागवित्तस्यापत्यं भागवित्तिः, तस्यापत्यं युवा 'वृद्धाट्ठक्सौवीरेषु बहुलम्' ( ४. १. १४८ ) इति ठक्—भागवित्तिकः, तस्य छात्राः – पूर्ववद् युवप्रत्यये निवृत्ते 'इञश्च' ( ४. २. ११२ ) इत्यण् – भागवित्ताः।

### न्यासः

**यूनि लुक्॥ यूनीति** 'व्यत्ययो बहुलम्' इति षष्ठ्यर्थे सप्तमी। अत एव वृत्तावाह—**युवप्रत्ययस्येति**। अजादौ प्रत्यये विवक्षिते बुद्धिस्थ इत्यादिनाऽचीति विषयसप्तमीत्वं दर्शयति। यद्येषा परसप्तमी स्याद्, यत्रापि च्छप्रत्ययो नेष्यते तत्रापि स्यात्। युवप्रत्ययान्तस्य वृद्धत्वादित्यभिप्रायः।

### पदमञ्जरी

**यूनि लुक्॥** अत्रापि यद्यचीति परसप्तमी स्यात्, प्रत्ययस्य यथेष्टप्रसङ्गः। युवप्रत्यये श्रूयमाणे यः प्राप्नोति स तावत्कर्त्तव्यः, तत्र कृते युवप्रत्ययस्य लुकि तस्य श्रवणं प्राप्नोति, विषयसप्तम्यां त्वजादौ विषयभूत एव युवप्रत्यये लुप्ते यो यतः प्राप्नोति ततः स स भवतीति सिद्धमिष्टम्। एतच्चोदाहरणेषु व्यक्तीकरिष्यते, तदेतदाह—**अजादौ प्रत्यये विवक्षित इत्यादि। इञश्चेत्यण् भवतीति।** परससप्तम्यां तु वृद्धाच्छ एव स्यात्।

### भावबोधिनी

'प्राग्दीव्यतः' इसकी और 'अचि' इसकी अनुवृत्ति होती है। प्राग्दीव्यतीय अजादि प्रत्यय के विवक्षित होने पर बुद्धिस्थ = अनुत्पन्न रहने पर ही युव प्रत्यय का लुक् हो जाता है। उस युवार्थक प्रत्यय का लुक् हो जाने पर जिससे जो प्राप्त होता है, उससे वह होता है।

[ सूत्र में 'यूनि' यहाँ सप्तमी विभक्ति षष्ठी के अर्थ में है, अर्थात् यूनः = युवप्रत्ययस्य लुक् यह भाव है। ]

उदा०—फाण्टाहृत का अपत्य—इसमें [ "अत इञ्" ४।१।९५ से इञ् प्रत्यय, आदिवृद्धि करने पर ] फाण्टाहृतिः बनता है, इसका युवा अपत्य—इस अर्थ में "फाण्टाहृतिमिमताभ्यां णफिञौ" ४।१।१५० [ से ण प्रत्यय करने पर फाण्टाहृति + ण = अ, इ का लोप करने पर ] फाण्टाहृतः, [ बनता है ] उस [ फाण्टाहृत ] के छात्र—इस विवक्षित अर्थ के बुद्धिस्थ रहते युव प्रत्यय [ ण प्रत्यय ] का लुक् हो जाने पर इञन्त [ फाण्टाहृति ] प्रकृतिरूप हो जाता है, उस इञन्त से [ तस्य छात्राः इस अर्थ की विवक्षा में ] "इञश्च" ४।२।११२ से अण् होता है—[ फाण्टाहृति + अण् = ] फाण्टाहृताः।

**विमर्श**—भाव यह है कि फाण्टाहृत का अपत्य इस अर्थ में इञ् करके फाण्टाहृति बन जाता है। इस फाण्टाहृति का युवा अपत्य इस अर्थ में ण प्रत्यय करके जब 'युवा अपत्य के छात्र' इस अर्थ की विवक्षा करते हैं तो युवार्थक प्रत्यय ण का लुक् प्रस्तुत सूत्र से हो जाता है। इस प्रकार 'फाण्टाहृत + इञ् + ण' की प्रकृति फाण्टाहृत + इञ् = फाण्टाहृति यह इञ् प्रत्ययान्त शब्दरूप ही शेष बचता है जिससे 'इञश्च' ४।२।११२ से अण् होने पर—फाण्टाहृताः बनता है।

इसी प्रकार आगे के उदाहरणों में भी (१) अपत्यार्थक प्रत्यय, (२) युवा अपत्यार्थक प्रत्यय जिसका लुक् होना है, (३) तस्य छात्राः आदि सम्बन्धि अर्थवाले प्रत्यय होते हैं। तीसरे प्रत्यय की कल्पना करते समय ही मध्यवर्त्ती = युवा प्रत्यय का लुक् हो जाने पर प्रथम प्रत्यय का रूप शेष बचता है, उसी से तृतीय प्रत्यय किया जाता है।

[अनु०]—भागवित्त का अपत्य—(१) भागवित्ति [इसमें "अत इञ्" से इञ् होता है], (२) इसका युवा अपत्य—

तिकस्यापत्यम् 'तिकादिभ्यः फिञ्' (४. १. १५४) – तैकायनिः, तस्यापत्यं युवा – 'फेश्छ च' (४. १. १४९) इति छः, तैकायनीयः, तस्य छात्राः – युवप्रत्यये निवृत्ते 'वृद्धाच्छः' (४. २. ११४)— तैकायनीयाः।

कपिञ्जलादस्यापत्यं कापिञ्जलादिः, तस्यापत्यं युवा – 'कुर्वादिभ्यो ण्यः' (४. १. १५१) – कापिञ्जलाद्यः। तस्य छात्राः – ण्ये निवृत्ते 'इञश्च' (४. २. ११२) इत्यण्—कापिञ्जलादाः।

ग्लुचुकस्यापत्यम् 'प्राचामवृद्धात्फिन्बहुलम्' (४. १. १६०) इति ग्लुचुकायनिः, तस्यापत्यं युवा— 'प्राग्दीव्यतोऽण्' (४. १. ८३) – ग्लौचुकायनः, तस्य छात्राः – युवप्रत्यये निवृत्ते स एवाण् – ग्लौचुकायनाः।

### पदमञ्जरी

फेश्छ चेति। 'यमुन्दश्च सुयामा च वार्ष्यायणिः फिञः स्मृताः' इति परिगणनं भाष्यकारेण नाश्रितम्, तेन तैकायनेरपिच्छो भवति। तैकायनीया इति। अत्र परसप्तम्यामप्यदोषः, 'ण्यक्षत्रियार्षञितः' इत्यत्र तु वृत्तिकारेणाणो लुगुदाहृतः—तैकायनिः पिता तैकायनिः पुत्र इति, स परिगणनाश्रयेण द्रष्टव्यः, तदा च तैकायनीया इत्यनुदाहरणम्।

कापिञ्जलादा इति। अत्रापि परसप्तम्यां वृद्धाच्छः स्यात्। एवं ग्लौचुकायना इत्यत्रापि द्रष्टव्यम्। इह तु औपगवेर्यूनश्छात्रा इञो लुकि वृद्धाच्छो भवति, परसप्तम्याम् 'इञश्च' इत्यण् स्यात्। नैतदस्य योगस्योदाहरणम्, कथम्? 'इञश्च' इत्यत्र 'गोत्रे' इति वर्तते, तेनेञं विशेषयिष्यामः—गोत्रे य इञ् विहित इति। पारिभाषिकं च गोत्रं गृह्यते, कथम्? 'कण्वादिभ्यो गोत्रे' इत्यत्र तावद् 'गोत्रे कुञ्जादिभ्यः' इत्यस्य गोत्रस्यानुवादः—कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तादण् भवतीति, तत्र च पारिभाषिकं गृह्यते तस्यैव चानुवादः, तदेव च 'इञश्च' इत्यत्राप्यनुवर्तते, तत्कुतो युवप्रत्ययान्तादणः प्रसङ्गः? अवश्यं चैतदेवं विज्ञेयम्, अन्यथा लुप्तेऽपीञि प्रत्ययलक्षणेनाण् स्यादेव।

इमानि तर्ह्यत्रोदाहरणानि—यत्खच्छान्ताः। यत्—'राजश्वशुराद्यत्' श्वशुरस्यापत्यं श्वशुर्यः, तस्यापत्यं श्वाशुरिस्तस्य छात्रा इति लुकि 'प्राग्दीव्यतोऽण्' भवति श्वाशुरः, अन्यथा 'वृद्धाच्छः' स्यात्; 'कुलात्खः' कुलीनः, तस्यापत्यं कौलीनिः, तस्य छात्राः, इञो लुकि कौलीनः; 'स्वसुच्छः' स्वस्रीयः, तस्यापत्यं स्वास्रीयः, तस्य छात्रा इञो लुकि स्वस्रीयाः? नैतान्युदाहरणानि; 'अब्राह्मणाद् गोत्रमात्राद्युवप्रत्ययस्योपसङ्ख्यानम्' इतीञो लुकि कृते श्वशुर्यः पिता श्वशुर्यः पुत्रः, कुलीनः पिता कुलीनः पुत्रः, स्वस्रीयः पिता स्वस्रीयः पुत्र इति भवितव्यम्। न च ब्राह्मणगोत्रे कश्चिदवृद्धिनिमित्तः प्रत्ययः सम्भवति, यत इञि कृते छः प्राप्नोति; वृद्धिनिमित्ते तु गोत्रप्रत्यये नास्ति विशेषः, यतः श्रूयमाणेऽपीञि छेन भवितव्यम्। लुप्तेऽपि तस्मिन् गोत्रप्रत्ययान्तस्यापि वृद्धत्वाच्छेन भवितव्यम्, तद्यथा—औपगवीया इति। तदेवमिञ उदाहरणं न सम्भवतीति स्थितम्।

### भावबोधिनी

इस अर्थ में "वृद्धाट्ठक् सौवीरेषु बहुलम्" ४।१।१४८ इससे ठक् [ ठ का इक करने पर ]—भागवित्तिकः [ यह होता है ], तस्य छात्राः—भागवित्ति के अजादि प्रत्यय की कल्पना करते ही ] पहले के समान युव प्रत्यय = ठक् का लुक् हो जाने पर [ भागवित्ति + ठक् का ठक् हट जाने पर इञन्त मूलरूप बच जाने पर ] "इञश्च" ४।२।११२ से अण् प्रत्यय करने पर (३) भागवित्ति + अण् = भागवित्ताः—यह रूप होता है।

तिक का अपत्य—"तिकादिभ्यः फिञ्" ४।१।१५४ से फिञ् [ प्रत्यय, आदिवृद्धि, फ का आयन आदि करने पर ]- (१) तैकायनिः रूप होता है, (२) इसका युवा अपत्य—इस अर्थ में "फेश्छ च" ४।१।१४९ से छ = इय करनेपर [तैकायनि +

**अचीत्येव – फाण्टाहृतरूप्यम् । फाण्टाहृतमयम् ।**

**प्राग्दीव्यतः ( ४. १. ८३ ) इत्येव – भागवित्तिकाय हितं भागवित्तिकीयम् ॥**

**न्यासः**

**फाण्टाहृतरूप्यम्, फाण्टाहृतमयमिति ।** यद्यत्र लुक् स्यात् फाण्टाहृतरूप्यं फाण्टाहृतमयमिति न स्यात् । **भागवित्तिकीयमिति** । प्राक्क्रीतीयच्छः पूर्ववत् ॥ ९० ॥

**पदमञ्जरी**

यदि पूर्वसूत्रे लौकिकस्य गोत्रस्य ग्रहणं तदा स्यादेवेञ उदाहरणम् । तथा हि—श्वशुर्यादिभ्य उत्पन्नस्येञः सत्यप्यौपसङ्ख्यानिके लुकि तस्य प्राग्दीव्यतीयविवक्षायाम् 'गोत्रेऽलुगचि' इति प्रतिषेधेन पुनः प्रादुर्भावादिञाश्रयः 'वृद्धाच्छः' स्यात्, यदि तस्य 'यूनि लुक्' इति लुग्न क्रियेत । अतोऽस्मादिञ उदाहरणत्वप्रतिषेधादवसीयते—पारिभाषिकं गोत्रं पूर्वसूत्रे भाष्यकारस्याभिमतमिति ।

किमर्थं पुनरिदमुच्यते, यावता यूनोऽपि गोत्ररूपे विवक्षिते गोत्रप्रत्ययेनाभिधानात्तन्निबन्धन एव प्रत्ययो भविष्यति, अर्थप्रकरणादिना च युवविशेषसिद्धिः, अवश्यं चार्थप्रकरणादिनैव विशेषोऽवसातव्यः, आरब्धेऽप्यस्मिन्सूत्रे शब्दस्य साधारणत्वात् । न हि ज्ञायते—किं भागवित्तेश्छात्त्रा भागवित्ताः ? आहोस्विद्भागवित्तिकस्येति ? यदा तर्हि विशेषविवक्षा, तदापि भागवित्ता इत्येव यथा स्याद्, भागवित्तिकीया इति जातुचिन्मा भूदित्येवमर्थमिदम् ॥ ९० ॥

**भावबोधिनी**

छ ]—तैकायनीयः बनता है, 'इसके छात्र' [ इस अर्थ में प्रत्यय की विवक्षा में ही ] युव प्रत्यय = छ का लुक् हो जाने पर (३) "वृद्धाच्छः" ४।२।११४ से छ प्रत्यय [ और इसका ईय आदेश करने पर ]—तैकायनीयाः रूप होता है ।

कपिञ्जलाद का अपत्य [ इस अर्थ में इञ् प्रत्यय करने पर ]—(१) कापिञ्जलादि, इसका युवा अपत्य इस अर्थ में "कुर्वादिभ्यो ण्यः" ४।१।१५१ से ण्य प्रत्यय करने पर [ कापिञ्जलादि + ण्य = य, भसंज्ञा, इलोप करने पर ] (२) कापिञ्जलाद्यः—यह होता है । इसके छात्र—इस अर्थ में [ प्राग्दीव्यतीय प्रत्यय करने की कल्पना में ही युव प्रत्यय ण्य का लुक् हो जाने पर [ इञन्त कापिञ्जलादि से ] "इञश्च" ४।२।११२ से अण् हो जाने पर (३) कापिञ्जलादि + अण् = कापिञ्जलादाः यह रूप होता है ।

ग्लुचुक का अपत्य—इस अर्थ में "प्राचामवृद्धात् फिन् बहुलम्" ४।१।१६० [ से फिन् प्रत्यय फ् का आयन् करने पर ]—(१) ग्लुचुकायनिः होता है; इसका युवा अपत्य—इस अर्थ में "प्राग्दीव्यतोऽण्" ४।१।८१ [ से अण् होने पर ग्लुचुकायनि + अण् ] (२) ग्लौचुकायनः; इसके छात्र—इस अर्थ में [ प्रत्यय के बुद्धिस्थ होते ही ] युव प्रत्यय = अण् का लुक् हो जाने पर [ ग्लुचुकायनि—इसी से ] वही अण् होता है, (३) ग्लौचुकायनाः । [ यहाँ युव प्रत्यय अण् का लुक् हो जाने पर ग्लुचुकायनि यह वृद्धसंज्ञक नहीं रह पाता है, अतः "वृद्धाच्छः" ४।२।११४ से छ नहीं होता है । यदि युव प्रत्यय का लुक् न होता तो—ग्लौचुकायन—यह वृद्धसंज्ञक रहता, इससे छ प्रत्यय करने पर ग्लौचुकायनीयाः—ऐसा अनिष्ट रूप होने लगता । इसी प्रकार के अनिष्ट रूप सर्वत्र होने लगते । इसी लिये युव प्रत्यय के लोप का विधान करना पड़ा । ]

अजादि प्रत्यय में ही—फाण्टाहृतरूप्यम् । फाण्टाहृतमयम् [ यहाँ नहीं होता है । (१) फाण्टाहृत का अपत्य (१) फाण्टाहृति, इसका युवा अपत्य, (२) फाण्टाहृत; इससे आया हुआ—इस अर्थ में "हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यप्" ४।३।८१ से रूप्यप् और मयट् प्रत्यय होते हैं । ये अजादि नहीं हैं । अतः युव प्रत्यय ण का लुक् नहीं होता है । [

'प्राग्दीव्यतीय' अर्थों में ही—भागवित्तिकाय हितम्—भागवित्तिकीयम् । [ भागवित्त का अपत्य—भागवित्ति, इसका युवा अपत्य—भागवित्तिक, इसके लिये हित—इसमें छ प्रत्यय करने पर युवा प्रत्यय ठक् का लुक् नहीं होता है क्योंकि यह 'हित' अर्थ "तेन दीव्यति०" ४।४।२ के आगे के सूत्र से ज्ञात होता है । फलतः "यूनि लुक्" ४।१।९० की प्रवृत्ति नहीं होती है ॥ ९० ॥

**१३४१. फक्फिञोरन्यतरस्याम् ॥ ९१ ॥ ( १०८७ )**

'यूनि' इत्येव। पूर्वसूत्रेण नित्ये लुकि प्राप्ते विकल्प उच्यते। फक्फिञोर्युवप्रत्यययोः प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षितेऽन्यतरस्यां लुग्भवति। गर्गादिभ्यो यञि ( ४. १. १०५ ) कृते 'यञिञोश्च' ( ४. १. १०१ ) इति फक्, गार्ग्यायणः, तस्य छात्राः गार्गीयाः, गार्ग्यायणीयाः। वात्सीयाः, वात्स्यायनीयाः।

फिञः खल्वपि - यस्कस्यापत्यम्, 'शिवादिभ्योऽण्' ( ४. १. ११२ ), यास्कः, तस्यापत्यं युवा—'अणो द्व्यचः' ( ४. १. १५६ ) इति फिञ् - यास्कायनिः। तस्य छात्राः यास्कीयाः। यास्कायनीयाः॥

**१३४२. तस्यापत्यम् ॥ ९२ ॥ ( १०८८ )**

**न्यासः**

**फक्फिञोरन्यतरस्याम् ॥ गार्गीयाः, वात्सीया इति।** पूर्ववदकारयकारलोपः। 'वा' ति वर्तमानेऽन्यतरस्यां-ग्रहणम् 'पूर्वसूत्रे नित्यो विधिः' इति ज्ञापनार्थम् ॥ ९१ ॥

**तस्यापत्यम् ॥ पूर्वैरुत्तरैश्च प्रत्ययैरभिसम्बध्यत इति।** तत्र पूर्वैस्तावदणादिभिः सम्बध्यते; असंयुक्त-

**पदमञ्जरी**

**फक्फिञोरन्यतरस्याम् ॥** किमर्थमिदम्, यावता युवरूपविवक्षायां गार्ग्यायणीया इति, गोत्ररूपविवक्षायां च गार्गीया इति, अर्थप्रकरणादिना च विशेषावसायः, आरब्धेऽप्यस्मिन्सूत्रेऽयमाश्रयणीयः गार्गीया इति शब्दस्य साधारणत्वात् ? इत्यत आह—**पूर्वसूत्रेणेति।** 'यूनि लुक्' इत्येतदारम्भणीयमित्युक्तम्, तस्मिंश्चारभ्यमाणे यदीदं नोच्येत, फक्फिञोरपि नित्यमेव लुक् स्यात्, ततश्च गार्ग्यायणीया इति न स्यात्। तस्मादिदमप्यारम्भणीय-मित्यर्थः ॥ ९१ ॥

**तस्यापत्यम् ॥ अर्थनिर्देशोऽयमिति।** प्रकृत्यर्थविशिष्टः षष्ठ्यर्थोऽपत्यरूपः प्रत्ययार्थोऽनेन निर्दिश्यत

**भावबोधिनी**

'यूनि' इसकी अनुवृत्ति होती है। पूर्वसूत्र से नित्य लुक् प्राप्त रहने पर इस सूत्र से वैकल्पिक लुक् का विधान किया गया है। प्राग्दीव्यतीय अजादि प्रत्यय विवक्षित रहने पर फक् और फिञ् इन युवार्थक प्रत्ययों का विकल्प से लुक् होता है। गर्ग आदि शब्दों से यञ् करने पर "यञिञोश्च" ४।१।१०१ से फक् होने पर—गार्ग्यायणः, 'इसके छात्र'—इस अर्थ में [ विकल्प से युव प्रत्यय फक् = आयन् का लुक् होने पर ] गार्गीयाः, गार्ग्यायणीयाः [ दो रूप होते हैं ]। वात्सीयाः, वात्स्यायनीयाः।

[ गर्ग का अपत्य इस अर्थ में "गर्गादिभ्यो यञ्" ४।१।१०५ से यञ् प्रत्यय करके गार्ग्य बनता है, इसका युवा अपत्य—इस अर्थ में "यञिञोश्च" ४।१।१०१ से फक = फ = आयन् करने पर—गार्ग्यायणः बनता है। 'इसके छात्र'—इस अर्थ में छ प्रत्यय की कल्पना में ही उस युवप्रत्यय का वैकल्पिक लोप हो जाने से गार्ग्य + छ = ईय, भसंज्ञा, अलोप, "आपत्यस्य च तद्धितेऽनाति" ६।४।१५१ से य् लोप करने पर गार्ग् + ईय = गार्गीयाः। युवप्रत्यय फक् का लुक् न होने पर गार्ग्यायण + ईय = गार्ग्यायणीयाः—ये दो रूप बनते हैं। ]

फिञ् [ युव प्रत्यय ] का भी वैकल्पिक लुक् होता है—यस्क का अपत्य—इस अर्थ में "शिवादिभ्योऽण" ४।१।११२ [ से अण् प्रत्यय आदिवृद्धि ]—यास्कः; इसका युवा अपत्य—इस अर्थ में "अणो द्व्यचः" ४।१।१५६ से फिञ् = फ् का आयन् = आयनि—यास्कायनिः; 'इसके छात्र' [—इस अर्थ में छ प्रत्यय करने पर प्रस्तुत सूत्र से युव प्रत्यय का वैकल्पिक लोप होने पर यास्क + छ = ईय—यास्कीयाः, [ युव प्रत्यय फिञ् का लुक् न होने पर ] यास्कायनीयाः ॥ ९१ ॥

यह अर्थ का निर्देश है, पूर्ववर्ती और उत्तरवर्ती सूत्रों से इसका सम्बन्ध होता है। [ अतः पूर्व सूत्रों से भी अण् और ण्य आदि प्रत्यय अपत्य अर्थ में होते हैं और उत्तर सूत्रों से भी अपत्य अर्थ में होते हैं।] तस्य–यह [षष्ठी समर्थ का बोधक है,

**अर्थनिर्देशोऽयम्, पूर्वैरुत्तरैश्च प्रत्ययैरभिसम्बद्धयते। 'तस्य' इति षष्ठीसमर्थादपत्यमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। प्रकृत्यर्थविशिष्टः षष्ठयर्थोऽपत्यमात्रञ्चेह गृह्यते। लिङ्गवचनादिकमन्यत् सर्वम-**

**न्यासः**

विधानात्। अस्य यदि पूर्वैरभिसम्बन्धो न भवेत् 'तस्यापत्यमत इञ्' इत्येकयोगमेव कुर्यात्। यतस्तु 'अत इञ्' इत्यनेन 'तस्यापत्यम्' इत्येतदसंयुक्तं करोति, ततोऽसंयुक्तविधानात्पूर्वार्थमेतद्विज्ञायत इत्येवं तावत्पूर्वैरभि-सम्बध्यते। उत्तरैरप्यभिसम्बध्यते; तेष्वस्य स्वरितत्वात्। **तस्येति**। पुंल्लिङ्गेन निर्देशः क्रियते, एकवचनेन च। तेन पुंल्लिङ्गादेवोत्पत्तिः स्यात्, एकवचनान्ताच्च। स्त्रीलिङ्गान्नपुंसकाच्च न स्यात्—देवदत्ताया अपत्यम्, कुलस्यापत्यमेवमादौ न स्यात्। द्विवचनबहुवचनान्ताच्च—द्वयोर्मात्रोरपत्यम्, तिसृणां मातॄणामपत्यमेवमादौ न स्यात्। अथ नपुंसकलिङ्गेनायं निर्देशः? स्त्रीलिङ्गात् पुंल्लिङ्गाच्च न स्यात्। अपत्यमित्येकवचनेऽत्र निर्देश क्रियते, तेनैकस्मिन्नेवापत्ये स्यात्, न द्वयोर्नापि बहुषु—उपगोरपत्ये औपगवौ; उपगोरपत्यान्यौपगवा इति। एतस्मिन् पूर्वपक्ष इदमाह—**प्रकृत्यर्थविशिष्ट इत्यादि**। 'गृह्यते' इति वक्ष्यमाणेन सम्बन्धः। प्रकृत्यर्थं उपग्वादि-शब्दानामर्थः, तेन विशिष्टः षष्ठयर्थोऽपत्यापत्यवत्सम्बन्धः। ननु च तस्यात्र तच्छब्दस्य सामान्यवाचिनो ग्रहणम्, तस्य कुत उपग्वादिरर्थविशेषः, येन षष्ठ्यर्थो विशिष्यते? तस्येत्यस्य विशेषोपलक्षणत्वाददोषः। विशेषोप-लक्षणत्वं चास्य प्रागेव प्रतिपादितम्। तस्माद् विशेष एवोपग्वादिः प्रकृत्यर्थः। **अपत्यमात्रञ्चेति**। मात्रशब्दोऽधिकस्य लिङ्गादेर्व्यवच्छेदाय।

**लिङ्गवचनादिकमिति**। आदिशब्देन कालस्य ग्रहणम्। वर्त्तमानेन हि कालेनायं निर्देशः क्रियते। यथोक्तम्—'यत्रापि साक्षादन्यक्रियापदं न श्रूयते तत्राप्यस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति गम्यते' इति। तत्र वर्त्तमानकालविवक्षायां कालान्तरे न स्यात्। किं पुनः कारणं लिङ्गवचनादि न विवक्ष्यते?

**पदमञ्जरी**

इत्यर्थः। तेन समर्थविभक्तेरपि षष्ठ्या निर्देशो दर्शित एव। **पूर्वैरुत्तरैश्चेति**। पूर्वैस्तावदणादिभिः सम्बद्धयते; असंयुक्तविधानात्, अन्यथा 'तस्यापत्यमत इञ्' इत्येकं योगमेव कुर्यात्, यतस्त्वसंयुक्तं करोति, ततो ज्ञायते—पूर्वैः सम्बध्यत इति। उत्तरैरपि सम्बध्यते; स्वरितत्वात्साकांक्षत्वाच्च तेषाम्। **तस्येति षष्ठीसमर्थादिति**। तस्येति सामान्यं षष्ठ्यन्तविशेषोपलक्षणार्थम्, 'समर्थानाम्' इति च निर्द्धारणे षष्ठी। तत्र तुल्यजातीयस्य निर्द्धारणादयमर्थः सम्पद्यते–षष्ठ्यन्तात्समर्थादिति। **अपत्यमित्येतस्मिन्नर्थ इति**। प्रथमान्तस्यापत्यशब्दस्यान्यथा-सम्बन्धानुपपत्तेरयमध्याहारो लब्धः। **यथाविहितमिति**। 'यथार्थे यदव्ययम्' इति वीप्सायामव्ययीभावः। 'प्राग्दीव्यतोऽण्' इत्यादिभिर्यो यतो विहितः स तस्मादित्यर्थः इह 'तस्य' इति पुंनपुंसकयोरन्यतरेणायं निर्देशः क्रियते, एकवचनान्तेन च, तेन लिङ्गान्तराद्वचनान्तराच्च न स्यात्—सुमातुरपत्यं सौमात्रः, क्षत्त्रस्यापत्यं क्षात्त्रिः, उपगोरपत्यमौपगव इति। अपत्यमिति चैकवचनेन नपुंसकेन च निर्देशः क्रियते, तेनैकस्मिन्नेवापत्ये स्यात्, न द्वयोः, नापि बहुषु, नपुंसक एव स्यात्, न स्त्रीपुंसयोरित्याशङ्कयाह-**प्रकृत्यर्थेत्यादि**। प्रकृत्यर्थं उपग्वा-दिर्विशेषः; तस्येत्यस्य विशेषोपलक्षणार्थत्वात्। **अपत्यमात्रं चेति**। मात्रशब्दोऽयं लिङ्गवचनयोर्व्यवच्छेदाय। **लिङ्गवचनादिकमिति**। आदिशब्देन कालस्य ग्रहणम्; अत्र हि वर्तमानकालेन निर्देशोऽस्तीति प्रतीतेः, यथोक्तम्—

**भावबोधिनी**

स्वरूप का नहीं। अतः]—षष्ठ्यन्त समर्थ से अपत्य अर्थ में यथाविहित = जिस-जिस के लिए विधान किया गया है, वह प्रत्यय होता है। प्रकृत्यर्थ से विशिष्ट षष्ठयर्थ और अपत्यमात्र का ग्रहण यहाँ होता है। [ भाव यह है कि 'तस्य' इसमें तत् शब्द से उपगु आदि प्रकृति लेनी चाहिये, उन प्रकृतियों से विशिष्ट षष्ठयर्थ = सम्बन्ध का ग्रहण है। अपत्यम्—यह लिङ्ग और संख्या को छोड़कर सर्वविध अपत्य का ग्रहण कराता है। ] लिङ्ग, वचन आदि जो भी है, वह सब अविवक्षित है। [ तस्य—

**विवक्षितम् । उपगोरपत्यमौपगवः । आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः ।**

**तस्येदमित्यपत्येऽपि बाधनार्थं कृतं भवेत् ।**
**उत्सर्गः शेष एवासौ वृद्धान्यस्य प्रयोजनम् ॥ ( म० भा० ४. २. ९२ )**

**न्यासः**

तस्याप्राधान्यात् । अवश्यं हि येन केनचिल्लिङ्गादिना निर्देशः कर्त्तव्य इति, नान्तरीयकत्वात् । तस्येहोपादानम्, यथा—धान्यार्थिनः पलालादेरप्रधानस्यापि ।

**तस्येदमित्यादि** । 'तस्येदम्' इत्येतत् सूत्रमपत्यार्थेऽपि वर्त्तते । यो ह्युपगोरपत्यमुपगोरसावयमिति शक्यते व्यपदेष्टुम् । तस्येदमित्यस्य विशेषा ह्येते—अपत्यम्, समूहः, निवासः, विकार इति । ततश्च 'तस्येदम्' इत्यनेनैवापत्यार्थेऽप्यण् सिद्धः, तत् किमर्थं तस्यापत्यमित्येतत् सूत्रं कृतम् ? **बाधनार्थं कृतं भवेदिति** । 'तस्येदम्' इत्यनेन विधीयमानस्याणो यो बाधकः 'वृद्धाच्छः' इति च्छः प्राप्नोति, तद्बाधनार्थमिदं कृतम् । एतत्सूत्रविहितेनाणा छप्रत्ययस्य बाधनं यथा स्यात् । कथं पुनरशैषिकः शैषिकं बाधते ? अपत्यादिभ्यश्चतुर्थीपर्यन्तेभ्योऽन्योऽर्थः शैषिकाणां विषयः । अयं चापत्याण्छविषये नास्त्येव । तदसन्नयं कथं छप्रत्ययं बाधिष्यत इत्यत आह—**उत्सर्गः शेष एवासाविति** । असत्यस्मिन् योग इत्यभिप्रायः । असावित्यनेन प्रकृतत्वात् तस्यापत्य-

**पदमञ्जरी**

यत्रान्यत्क्रियापदं नास्ति तत्रास्तिर्भवतिपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति गम्यत इति । ततश्च तस्य कालस्य विवक्षायां कालान्तरे न स्यात् । **सर्वमविवक्षितमिति** । नान्तरीयकत्वादुपादानस्यावश्यं हि केनचिल्लिङ्गादिना निर्देशः कर्तव्यः ।

**तस्येदमित्यपत्येऽपीति** । अणादीनां विधानं सिद्धमिति शेषः । तस्येदंविशेषा ह्यपत्यसमूहविकारादयः; सम्बन्धसमान्येऽपि सर्वविशेषान्तर्भावात्, ततश्च 'तस्येदम्' इत्यनेनैवापत्येऽप्यणादीनां विधानं सिद्धम्, तत्किं योगविभागेनापत्येऽणादयो विधीयन्ते, न 'तस्यापत्यम्' 'अत इञ्' इत्यपवादैः संयुक्त एवापत्यार्थो निर्दिश्यते इति चोद्यार्थं परिहरति—**बाधनार्थं कृतं भवेदिति** । 'तस्येदम्' इत्यनेन विधीयमानानामणादीनां यो बाधकश्छः, तस्य बाधनार्थमपत्येऽणादीनां विधानं कृतं भवेदित्यर्थः । ननु शैषिकश्छः, अपत्यादिचतुर्थपर्यन्तेभ्यो योऽन्योऽर्थः स शेषः, तत्कथमपत्ये छस्य प्रसङ्गो येन तद्बाधनार्थमिदम् ? इत्याह—**उत्सर्गः शेष एवासविति** । यदि योगविभागमकृत्वा 'तस्यापत्यमत इञ्' इत्युच्येत तदा प्रकृतिविशेषसम्बद्धस्यैवापत्यार्थस्योपयोगः, अतोऽन्योऽपत्यार्थः शेष एव स्यादिति स्यादेव वृद्धादपत्ये छः । योगविभागे तु—अपत्यार्थस्याणादिविधावुपयोगाच्छेषत्वाभावाच्छस्या-

**भावबोधिनी**

यह तीनों लिङ्गों और तीनों वचनों का सूचक है । अपत्य सभी प्रकार के अपत्य का सूचक है । ] उदा०—उपगोः अपत्यम् औपगवः [ उपगु शब्द से अण् , आदिवृद्धि—औपगु + अ, 'ओर्गुणः'' ६।४।२४६ से उ का गुण, अव् आदेश—औपगवः ] आश्वपतः [ अश्वपति का अपत्य । अश्वपति + अण् ] दैत्यः [ दिति का अपत्य । दिति + ण्य, प्रक्रिया पहले लिखी जा चुकी है ] । औत्सः [ उत्स का अपत्य । उत्स + अञ् ] । स्त्रैणः [ स्त्री का अपत्य । स्त्री + नञ् ] । पौंस्नः [ पुंसः अपत्यम् । पुंस् + स्नञ् ] ।

[ श्लोकवार्तिक द्वारा प्रस्तुत सूत्र की उपयोगिता सिद्ध की जा रही है । इसमें चार वार्तिक हैं ]

( १ ) तस्येदमित्यपत्येऽपि । 'तस्येदम्' ४।३।१२० से होने वाला अण् प्रत्यय 'अपत्य' अर्थ में भी हो सकता है । [ अतः इस सूत्र की उपयोगिता नहीं है, क्योंकि अपत्य भी सम्बन्धी होता ही है ।

( २ ) बाधनार्थं कृतं भवेत् । बाध करने के लिए यह हो जायेगा । [ यदि केवल 'तस्येदम्' ४।३।१२० सूत्र रहेगा तो इसके अण् का बाध कर अपत्य अर्थ में भी 'वृद्धाच्छः' ४।२।११४ से छ होने लगेगा । इसको पृथक् सूत्र बनाने पर यह ''वृद्धाच्छः'' ४।२।११४ का बाध कर लेगा । इसको पृथक् सूत्र बनाने का यही फल है । ]

भानोरपत्यं भानवः। श्यामगवः॥

## १३४३. एको गोत्रे॥ ९३॥ ( १०९३ )

न्यासः

मित्येषोऽर्थः प्रत्यवमृश्यते। उत्सर्गं उत्पन्नेनाप्यणा स एवार्थं उत्सर्गसाहचर्यादुच्यते। उत्सर्गसाहचर्यं तु तस्य तत्रोत्सर्गस्याणादेर्विधानात्। इहापि क्रियमाणे 'तस्यापत्यम्' इत्येतस्मिन् योगे 'तस्येदम्' इत्येतस्मिन्ननुप्रवेशाद् यथान्यस्तद्विशेषः शेषो भवति, तथापत्यार्थोऽपि। अस्ति तस्याप्युपयुक्तापेक्षमन्यत्वम्; चतुरर्थीपर्यन्तेष्वनन्तर्भावात्। ततश्च शेषत्वादपत्यार्थे च्छप्रत्ययः प्राप्नोति। अस्मिंस्तु योगे सत्यपत्यार्थः 'तस्येदम्' इत्यत्र शेषे नानुप्रविशति; उपयुक्तत्वात्। ततश्चाशेषत्वादपत्ये छप्रत्ययस्य प्राप्तिर्नास्त्येव। सैवाप्राप्तिर्बाधनशब्देनोक्ता। अथ बाधनार्थस्यास्य किं प्रयोजनमित्याह—**वृद्धान्यस्य प्रयोजनमिति**। वृद्धानि प्रातिपदिकान्यस्य योगस्य प्रयोजनम्। भानोरपत्यं भानवः, श्यामगोरपत्यं श्यामगव इत्यत्राण् सिद्धो भवति। असति त्वस्मिन् योगेऽपत्यार्थः पूर्वोक्तरीत्या शेषः स्यात्। ततश्च तत्र वृद्धेभ्यः 'वृद्धाच्छः' प्रसज्येत॥ ९२॥

**एको गोत्रे**॥ 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः' इति पारिभाषिकस्यैव गोत्रस्य ग्रहणम्। अपत्याधिकारे गोत्रग्रहणाच्च। अपत्यमात्रं हि लौकिकं गोत्रम्, तस्य यदीह ग्रहणमभिमतं स्यादेक इत्येवं ब्रूयात्,

पदमञ्जरी

प्राप्तिरेव, सैवात्राप्राप्तिर्बाधेत्युच्यते। उत्सर्ग इति प्रकृतिसामान्यसम्बद्धः सामान्यभूतोऽपत्यार्थ उक्तः। बाधनार्थस्योदाहरणमाह—**वृद्धान्यस्य प्रयोजनमिति**। **श्यामगव इति**। श्यामा गावोऽस्य श्यामगुरिति॥ ९२॥

**एको गोत्रे**॥ एकशब्दोऽयमन्यप्रधानासहायसङ्ख्याप्रथमसमानसाधारणवाची, अन्यार्थे तावद्— 'एकान्याभ्यां समर्थाभ्याम्', 'प्रजामेका रक्षत्यूर्जमेका', 'एकान् बन्धुरपरान्निरासुः', 'इत्येके मन्यन्ते', 'यजुष्ये-

भावबोधिनी

( ३ ) उत्सर्गः शेष एवासौ। जो उत्सर्ग प्रत्यय होता है, वह भी शेष माना जाता है। [ भाव यह है कि "तस्यापत्यम्" ४।१।९२ यह अशैषिक सूत्र है और "वृद्धाच्छः" ४।२।११४ यह शैषिक ( शैषिकाः ४।२।९२ के अधिकार में पठित ) है, अतः भिन्न-भिन्न अर्थों में विहित होने के कारण इनमें परस्पर बाध्यबाधकभाव सम्भव नहीं है। इस शंका का समाधान इस वार्त्तिक से किया जा रहा है—यह अपत्यार्थ, उत्सर्ग है, शेष है, अतः बाध्यबाधकभाव सम्भव है। 'तस्यापत्यमत इञ्' ऐसा एक सूत्र रहता, योगविभाग करते हुए पृथक्-पृथक् दो सूत्र नहीं रहते, तब तो अकारान्त प्रकृतिविशेष से सम्बद्ध ही अपत्यार्थ का उपयोग सम्भव होता है, इससे भिन्न जो अपत्यार्थ होता, वह 'शेष' ही माना जाता। इस स्थिति में वृद्धसंज्ञक शब्द से अपत्य अर्थ में 'छ' प्रत्यय होने ही लगता, उसका बाध करने के लिए इसकी उपयोगिता थी, परन्तु जब योगविभाग कर दिया गया = अलग-अलग सूत्र बना दिये गये, तब तो प्रकृतिसामान्य से सम्बद्ध अपत्य अर्थ का अणादि विधि में उपयोग हो चुका है, अतः वह शेष नहीं माना जा सकता। तब 'छ' प्रत्यय की प्राप्ति ही नहीं है, अतः अप्राप्त बाध कहना चाहिये। इसलिए अग्रिम वार्त्तिक है—]

( ४ ) 'वृद्धानि अस्य प्रयोजनम्' वृद्धसंज्ञक शब्द इस सूत्र के प्रयोजन हैं। [ भाव यह है कि भानो अपत्यम् आदि में वृद्धसंज्ञक भानु आदि प्रातिपदिक हैं और नामधेय होने से उपगु आदि जो वृद्धसंज्ञक प्रातिपदिक हैं, उनसे 'वृद्धाच्छः' से छ प्रत्यय न हो, अण् आदि प्रत्यय ही हो'—इसके लिए यह सूत्र आवश्यक है।] भानोः अपत्यम्— भानु + अण्,— भानवः। [ श्यामः गौः यस्य सः——श्यामगुः, तस्य अपत्यम्—इस अर्थ में श्यामगु + अण: ] श्यामगवः [ रूप होते हैं। इनमें छ प्रत्यय न हो—यही इस पृथक् सूत्र का प्रयोजन है। ]॥ ९२॥

"पौत्र आदि [ पौत्र और उसके बाद के प्रपौत्र आदि ] अपत्य गोत्र कहे जाते हैं, उनकी गोत्र संज्ञा होती है।" इस गोत्र प्रत्यय के विवक्षित होने पर भेद से प्रत्येक अपत्य के लिए प्रत्यय की उत्पत्ति का प्रसङ्ग आने पर नियम किया

पदमञ्जरी

केषाम्' इति; केचित्त्वनयोः प्रयोगयोः केचिच्छब्दपर्याय एकशब्द इत्याहुः। 'एकः पार्थो धनुष्मताम्' इति प्रधानार्थे। 'आद्यन्तवदेकस्मिन्', 'एकहलादौ', 'एकहल्मध्ये' इत्यसहायार्थे। 'एक द्वौ बहवः' इति सङ्ख्यार्थे। 'एकेऽल्पप्राणः' इति प्रथमार्थे। 'तेनैकदिक्' इति समानार्थे। 'देवदत्तयज्ञदत्तावेकधनौ' इति साधारणार्थे तत्र सङ्ख्यावचनः साधारणवचनः, प्रथमवचनो वा गृह्यते; अर्थान्तराणामसम्भवात्। गोत्रं पारिभाषिकम्; कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययात्, अपत्याधिकारे गोत्रग्रहणाच्च।

किमर्थमिदमुच्यते, पौत्रप्रभृतावपत्ये विवक्षिते मूलप्रकृतेरुपग्वादेरेव प्रत्ययो यथा स्याद्, औपगवादेः प्रत्ययान्तान्मा भूदिति। नैतदस्ति प्रयोजनम्, सन्विधिवदेतद्भविष्यति, तद्यथा—धातोर्विधीयमानः सन् सनन्तान्न भवति, तत् कस्य हेतोः? आकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्त्तते, न च सनि विधीयमाने सन्नन्तो धातुः सम्भवति, तद्वदिहाप्यपत्यप्रत्यये विधीयमानापत्यप्रत्ययान्ता प्रकृतिः सम्भवतीति ततः प्रत्ययो न भविष्यति? विषम उपन्यासः; एकः सन् प्रत्ययः, विधायकं च लक्षणमेकमेव तत्र युक्तम्, न तस्मिन्विधीयमाने तदन्ता प्रकृतिः सम्भवतीति।

इह पुनः 'तस्यापत्यम्' 'अत इञ्' 'यञिञोश्च' इति बहूनि लक्षणानि, प्रत्ययाश्च बहवः; तत्र कस्मिंश्चित्प्रत्यये विधीयमाने प्रत्ययान्तरेण तदन्ता प्रकृतिः सम्भवत्येव, तथा च गुपादीनां सनः सन् भवति—जुगुप्सिषते इति? किं पुनः स्याद्यद्येतन्नारभ्येत? उच्यते; इह केचिन्मन्यन्ते—पुत्रशब्दपर्यायोऽपत्यशब्दः; निघण्टुषु तथा पाठाल्लोके च दृष्टत्वात्। तद्यथा पितामहस्योत्सङ्गे दारकमासीनं दृष्ट्वा कश्चित्पृच्छति—कस्य पुत्रोऽयमिति, कस्यापत्यमिति? स देवदत्तस्य यज्ञदत्तस्य वेत्युत्पादयितारं व्यपदिशति, नात्मानम्, ततश्च यथा पितामहं प्रति पुत्रो न भवति तथापत्यमिति। उत्पादयितैवैकोऽपत्येन युज्यते, न तु पितामहादयोऽपीति। अन्ये तु—क्रियानिमित्तकोऽपत्यशब्दः, न पतन्त्यनेनेत्यपत्यमिति औणादिको यत्प्रत्ययः, यस्य च येनापतनं तत्तस्यापत्यम्। व्यवहितजनितोऽपि पौत्रादिः पितामहादेरपतनहेतुर्भवति, श्रूयते हि—'जायमाना वै ब्राह्मणस्त्रिभिर्ऋणवा न् जायते ब्रह्मचर्येणर्षिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः, एष वा अनृणो यः पुत्री' इति, एतेन पुत्रमुत्पाद्य पितृणामनृणो भवतीति प्रतिपादनात् पुत्रोत्पादितया प्रजया पितॄणामुपकारी दृश्यते। स्मर्यते च—

पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम्॥ इति॥ (मनु० ९. १३७)

इतिहासेषु च जारत्कारवादिषु महती वार्ता—व्यवहितजनितोऽप्युपकारक इति। सूत्रकारश्च शब्दविदां मूर्द्धाभिषिक्तः सूत्रयति—'अपत्यं पौत्रप्रभृति गोत्रम्' इति, ततो विज्ञायते क्रियानिमित्तकोऽप्यपत्यशब्द इति; अन्यथा यथा पौत्रप्रभृतिः पुत्र इत्यनुपपन्नं तादृगेव तत्स्यात्। एवं सति साक्षात्परम्परया वा यस्य य उत्पाद्यः

भावबोधिनी

जाता है—"गोत्र अर्थ में एक ही प्रत्यय होता है [ प्रत्येक के लिए लगातार प्रत्यय नहीं होते रहते हैं ]; सभी पूर्व पुरुष अपत्य से सम्बद्ध हो जाते हैं। अपतन के कारण अपत्य होता है। जो व्यवहित पुरुष से उत्पन्न हुआ है, वह भी प्रथम प्रकृति = आदिपुरुष का अपत्य होता ही है। उदा०—गर्ग का अपत्य—[ "अत इञ्" ४।१।९५ से इञ् होकर ] गार्गिः। गार्गि का अपत्य [ यहाँ भी गर्ग से ही यञ् होकर ]—गार्ग्यः। इस गार्ग्य का पुत्र भी गार्ग्यः [ यहाँ गार्ग्य से यञ न होकर परमप्रकृति गर्ग से ही यञ् होता है ]। व्यवहित उत्पन्न सभी गोत्रापत्य में [ परमप्रकृति ] गर्ग शब्द से यञ् होता है और यह प्रत्यय नियमित किया जाता है।

अथवा—गोत्रापत्य विवक्षित रहने पर एक ही शब्द प्रथम प्रकृति प्रत्यय को उत्पन्न कराती है, इस प्रकार प्रकृति का नियम किया जाता है। उदा०—[ गर्ग का गोत्रापत्य—इस अर्थ में गर्ग से ही यञ् होता है, गार्गि से नहीं ]—गार्ग्यः। [ नड का पुत्र नाडायन, उसका पुत्र = गोत्रापत्य भी नाडायन और उसका पुत्र भी ] नाडायनः।

पदमञ्जरी

स तं प्रत्यपत्यमिति सर्वेऽपि पितामहादयोऽप्यपत्येन युज्यन्ते, न तूत्पादयितैवेति । तत्राद्ये पक्षे यद्येतन्नारभ्येत, ततस्तत्र तत्रापत्ये तत्तत्पितृवचनात् स स प्रत्ययः स्यात्, तद्यथा—उपगोरौपगवः, तस्यौपगविः, तस्यौपगवायनः । एवं शततमेऽपत्ये एकोनशतमपत्यप्रत्ययाः--इत्यनिष्टं प्राप्नोति, इष्टं च न सिद्ध्यति--औपगव इति, तृतीयादेरुपगुं प्रत्यनपत्यत्वात् । द्वितीये तूपगोः पञ्चमः पूर्वेषां चतुर्णामपत्यं ततो यदोपगोः प्रत्ययस्तदौपगव इतीष्टं तावत्सिद्ध्यति; अनिष्टमपि च प्राप्नोति, तच्चानिष्टमनियतमौपगविः, तत औपगवायनः, तत औपगवायनिरिति । पञ्चमे त्रीण्यनिष्टानि, षष्ठे चत्वारीत्येवं यावतिथमपत्यमभिधित्सितम्, तावन्ति द्व्यूनान्यनिष्टानि प्राप्नुवन्ति, तद्यथा शततमेऽष्टौ नवतिश्चेति । एवं स्थिते इदमारभ्यते ।

आरभ्यमाणेऽप्येतस्मिन्यदि प्रथमः पक्ष आश्रीयते ततो विध्यर्थमेतत् स्याद्, नियमार्थं वा ? कथं चेदं विध्यर्थं कथं वा नियमार्थम् ? यदि गोत्रशब्देन पौत्रप्रभृत्यपत्यसमुदाय एकैकमपत्यमभिधीयते ततो विध्यर्थम्, तर्हि तथा नियमार्थः सम्भवति, एकस्मिन्नपत्येऽनेकप्रत्ययप्रसङ्गस्याभावाद् । न तावदेकस्मिन्प्रयोगे एकस्याः प्रकृतेरनेकप्रत्ययप्रसङ्गः; एकेनैवोक्तत्वात्तस्यार्थस्य । नापि प्रयोगभेदेन नानाप्रकृतिभ्यो नानाप्रत्ययप्रसङ्गः, सर्वदा स्वपितृवचनादेव प्रसङ्गादिति परमप्रकृतेस्तृतीयादावपत्येऽप्राप्तः प्रत्ययो विधीयते । कथं पुनः 'एको गोत्रे' इत्येतावति वचने परमप्रकृतेः प्रत्ययो विधीयत इति शक्यं विज्ञातुम्, यावता यथा परमप्रकृतेरयोगादप्राप्तः, एवमौपगवाच्चतुर्थादाविति, ततः किं न विधीयते वचनव्यक्तिभेदात् ? एवं ह्यत्र वचनं व्यज्यते—गोत्र एकः प्रत्ययो भवति, यत एक एव प्रत्ययः कर्तुं शक्यते, तत एव प्रत्ययो भवतीत्यर्थः । एकग्रहणसामर्थ्याच्चायमर्थो लभ्यते । ननु विधीयमानेऽपि प्रत्यये प्रकृतिप्रत्ययावसम्बन्धौ स्याताम् ? वचनसामर्थ्यादपत्यापत्यस्यापत्यत्वोपचारात् प्रत्ययो भविष्यतीत्यदोषः ।

मुख्येऽपत्ये चरितार्थः प्रत्ययो न स्यादिति विधातव्यमपि, अस्मिन्पक्षे सर्वेष्वौपगव इतीष्टं सिद्ध्यति, प्रत्ययमालाप्रसङ्गस्तदवस्थ एव । न ह्यनेन तत्तत्पितृवचनात् प्राप्तः प्रत्ययः प्रतिषिद्ध्यते । तथा पञ्चमेऽपत्ये उपगुशब्दादनेन प्रत्यये विहिते तस्यापत्यमिति षष्ठ औपगविः स्यात् । यदा तु 'अपत्यं पौत्रप्रभृतिगोत्रम्' इत्यपत्यशब्देन पौत्रप्रभृत्यसमुदायं लक्षयित्वा तस्यैव गोत्रसंज्ञा विधीयते, एकैकस्मिन्नपत्ये गोत्रशब्दप्रयोगः, समुदायेषु वृत्ताः शब्दा अवयवेष्वपीति न्यायात् । अत्रत्येन वा गोत्रशब्देनावयवधर्मेण समुदायव्यपदेशात् पौत्रप्रभृत्यपत्यसमुदायोऽभिधीयते तदा नियमार्थम्--गोत्रसमुदाये एक एव प्रत्ययो भवतीति ।

यद्यप्येकैकस्मिन्नपत्ये एकैकः प्रत्ययः प्राप्नोति, तथापि पौत्र एकस्तदपत्ये चापर इति सकलनिरूपणे समुदाये बहवः प्रत्ययाः कृताः स्युरिति नियम उपद्यते । अस्मिन्पक्षे दोषः--अनन्तरापत्यप्रत्ययान्तात्तृतीये प्रत्ययः प्राप्नोति, गोत्रशब्दोपादानेन हि नियमः क्रियते--गोत्र एक एवेति, ततश्च गोत्रेऽनेकः

भावबोधिनी

विमर्श—यहाँ का विषय स्पष्ट समझने के लिए कुछ अन्य सूत्रों का तात्पर्य समझना आवश्यक है । अपत्य शब्द पुत्र, पौत्र और प्रपौत्र आदि सभी सन्तानों के लिए प्रयुक्त होता है । यह यौगिक शब्द है—अपतनात् अपत्यम् । जिसके कारण पाप में अपतन हो, पतन न हो, वह अपत्य कहा जाता है । यह यौगिक अर्थ सभी सन्ततियों में लागू हो सकता है, क्योंकि पितामह के अपतन में पौत्र और प्रपितामह के अपतन में प्रपौत्र इसी प्रकार आगे की सन्तानें पूर्व पूर्व पुरुषों के अपतन में कारण होतीं हैं, अतः ये सभी अपत्य कहे जाते हैं । इसी अभिप्राय को पाणिनि ने "अपत्यं पौत्रप्रभृति गोत्रम्" ४।१।१६२ सूत्र से प्रकट किया है । अब समस्या यह आती है कि ( १ ) गर्ग का अपत्य गार्गि, ( २ ) गर्ग का गोत्रापत्य—गार्ग्य, ( ३ ) गर्ग का युवापत्य गार्ग्यायण—यहाँ तक तो अलग-अलग प्रत्यय है । इसके आगे के अपत्यों के लिए क्या करना चाहिये, इसकी व्यवस्था प्रस्तुत सूत्र ही करता है ।

'अपत्यं पौत्रप्रभृति गोत्रम्' ( ४. १. १६२ ) तस्मिन् विवक्षिते भेदेन प्रत्यपत्यं प्रत्ययोत्पत्तिप्रसङ्गे नियमः

**न्यासः**

लौकिकस्य गोत्रस्यापत्याधिकारादेव लब्धत्वात् । तस्माद् गोत्रग्रहणाच्च पारिभाषिकस्य ग्रहणमित्याह--**अपत्यं पौत्रप्रभृति गोत्रमिति** । **भेदेनेत्यादि** । भेदेन = विभागेन, अपत्यमपत्यं प्रति = प्रत्यपत्यम् । यावन्त्यपत्यानि सम्भवन्ति तेभ्योऽपि सर्वेभ्यः प्रत्ययानामुत्पत्तेः प्रसङ्गे प्राप्तौ सत्यामित्यर्थः । सर्वेषामपत्येन योगेन गर्गगार्गिगार्ग्यगार्ग्यायणानामन्यतमस्य यदपत्यं तत्सर्वेषामपत्यं भवतीति परमप्रकृतेरनन्तरगोत्रयुवलक्षणाः प्रत्ययाः प्राप्नुवन्ति । गर्गस्य यदपत्यं तत्सर्वेषां गार्गिगार्ग्यायणानामपि सम्बन्धि भवति । तथा हि--गार्गिगार्ग्यगार्ग्या-

**पदमञ्जरी**

प्रत्ययो मा भूत् । अनन्तर एकस्तृतीये चापर इत्येवमनेकः कस्मान्न स्यात् ? एवमपि गोत्रे एक एव हि कृतो भवति । अथ वा—गोत्रसमुदाये एक एवेत्यनेन किं क्रियते ? तृतीयादेश्चतुर्थादौ प्राप्तः प्रतिषिध्यते । यदि तृतीयादेः स्यात्समुदायेऽनेकः प्रत्ययः कृतः स्यादिति । यस्त्वनन्तरस्तृतीये प्राप्तः सोऽभ्यनुज्ञायते—एक एवेतीतरव्यावृत्तौ नियमेषु तात्पर्यम् । ततश्च यतः प्रत्यये क्रियमाणे समुदायेऽनेकः प्रत्ययः कृतो भवति ततो न भवतीत्येव वचनार्थो भवति । एवं चतुर्थस्यापत्यप्रत्ययेनाभिधानं न प्राप्नोति, द्वितीयादुत्पन्नस्तृतीयमेवाचष्टे न तृतीयादुत्पद्यत इति, किन्तु औपगवेरपत्यमिति वाक्यमेव । पञ्चमादेस्तु वाक्येनाप्यभिधानं न प्राप्नोति, न हि तत्तत्पितृवचनः कश्चिदपत्यप्रत्ययान्तः शब्दोऽस्ति येन विगृह्येत । परमप्रकृतेश्च तृतीयादौ न कुत्रचित्प्रत्ययः प्राप्नोति, अयोगात् । तदेवमस्मिन्पक्षे परमप्रकृतेश्चोत्पत्तिर्वक्तव्या, अनन्तराच्च तृतीये प्राप्तस्य प्रतिषेधो वक्तव्यः ।

स्यादेतत्—न परमप्रकृतेरुत्पत्तिर्वक्तव्या, अभेदोपचारेणैव । अभेदोपचारश्चोपग्वौपगवयोरौपगवतदपत्ययोर्वा । तदेवं शततमेऽप्यपत्येऽभेदोपचारपरम्परया औपगव इत्यभिधानं सिध्यति, न चैवमभेदोपचारेणैवेष्टस्य सिद्धे सूत्रस्य वैयर्थ्यम्, भेदविवक्षायां प्रत्ययमालाप्रसङ्गनिवृत्त्यर्थत्वादिति ? एवमप्यनन्तरस्य तृतीयस्य च भेदविवक्षायां तृतीय औपगविः स्यात्, तथाऽनन्तरे तृतीयादौ च यत्र प्रत्ययो भिद्यते, यथा-गर्गादौ, तत्राप्यनिष्टप्रसङ्गः । यदि तावद् गार्ग्ये गर्गोपचारस्तदा तदपत्यमपि गार्गिः स्याद्, गार्ग्यश्चेष्यते । अथापि गार्गेस्तदपत्यस्य चाभेदोपचारः, एवमपि गार्गिः स्यादितीत्यादौ विषये दोषवानेवाभेदोपचारः । तदेवं प्रथमपक्षे विधौ नियमे च दोषप्रसङ्गाद् द्वितीयः पक्ष आश्रीयते, तत्रापि नियमः । यद्यप्येकैकस्मिन्प्रयोगे एकस्याः प्रकृतेरेक एव प्रत्ययः प्राप्नोति, तथाप्युपगोः पञ्चमे पूर्वाभ्यश्चतसृभ्यः प्रकृतिभ्यः प्रयोगभेदेन नानाप्रत्ययप्रसङ्गे नियमः क्रियते—

**भावबोधिनी**

दो प्रकार के नियम होते हैं—( १ ) प्रत्यय-नियम और ( २ ) प्रकृति-नियम । जब गोत्र अर्थ में एक ही प्रत्यय होता है, अनेक बार प्रत्यय नहीं होता है, उसी का सम्बन्ध सभी से हो जाता है । इसलिए बीच के अपत्यों से मूलपुरुष और पाँचवीं या आगे की पीढ़ी में उत्पन्न व्यक्ति का व्यवधान रहने पर यह अपत्य माना जाता है और मूलपुरुष वाचक से एक ही प्रत्यय होता है, वही आगे की सन्ततिपरम्परा को बताता रहता है । अतः गर्ग का अपत्य गार्गि है, गार्गि का अपत्य अर्थात् गर्ग का गोत्रापत्य गार्ग्य है, इस गोत्रापत्य का अपत्य=पुत्र भी गार्ग्य ही होता है । एक बार गोत्रापत्य अर्थ में यञ् कर देने के बाद पुनः पुनः यञ् नहीं होता रहता है, प्रत्ययमाला नहीं जोड़ी जाती है । इसमें—एकः एव प्रत्ययो भवति—इस प्रकार प्रत्यय का नियम कर दिया जाता है ।

प्रकृति-नियम में प्रकृति का नियम किया जाता है । गोत्रापत्य अर्थ विवक्षित रहने पर एक ही शब्द प्रथम प्रकृति बनता है, उसी से प्रत्यय होते रहते हैं, दूसरा शब्द प्रकृति नहीं बनता है । जैसे—गर्ग से इञ् = गार्गि, गर्ग से यञ्—

**क्रियते – गोत्रे एक एव प्रत्ययो भवति, सर्वेऽपत्येन युज्यन्ते । अपतनादपत्यम् । योऽपि व्यवहितेन जनितः,**

**न्यासः**

यणानामन्यतमस्य यदपत्यं तत्सर्वेषां गर्गप्रभृतीनां सम्बन्धि भवति। तथा ह्यत्र यद्यपि गर्गस्यापत्यमिति गर्गशब्देन विग्रहः क्रियते, तथापि नायं नियमो लभ्यते--गर्गशब्दादेवोत्पत्तिरिति, अपि तु कामचारः। ततश्च यदा गर्गशब्दादुत्पत्तिर्भवति तदा गर्गादित्वाद् यञ्, यदा गार्गिशब्दात् तदा 'यञिञोश्च' इति फक्, यदापि गार्ग्यशब्दात् तदापि स एव फक्, यदा गार्ग्यायणशब्दात् तदा 'अत इञ्'। एवं प्रत्यपत्यं विभागेन प्रत्ययानामुत्पत्तौ प्रसक्तायामनेन नियमः क्रियते--**एक एव प्रत्ययो भवतीति**। एतेन प्रत्ययनियम इति दर्शयति। प्रत्ययनियमस्त्वेकशब्दस्य प्रत्ययशब्दसामानाधिकरण्याल्लभ्यते। एकशब्दश्चास्मिन्नियमे संख्यावचनो वेदितव्यः, यथा –एकः, द्वौ, बहव इति। एवकारेण द्व्यादिव्यवच्छेदः क्रियते—एक एव प्रत्ययो भवति, न द्वौ, नापि बहव इति। स चैकः प्रत्ययो भवन्नेकग्रहणात् परमप्रकृतेरेव भवतीति सामर्थ्यादुक्तं भवतीति। यदि हि गार्गिशब्दादुत्पद्येत, द्वौ स्याताम्--इञ्फकौ, नैकः? अथ गार्ग्यशब्दादेवमपि द्वावेव-यञ्फकौ? अथ गार्ग्यायणशब्दात्, त्रयः स्युः--यञ्फगिञः। तस्मान्मूलप्रकृतेरेवोत्पत्तावेकः प्रत्ययः सिध्यतीत्येकग्रहणं कुर्वता सामर्थ्याद् मूलप्रकृतेरेव गोत्रप्रत्ययस्योत्पत्तिरुक्ता भवति। ननु चोत्पादयितैवापत्येन सम्बध्यते, एवं हि लोके दृश्यते--पितामहस्योत्सङ्गे दारकमासीनं दृष्ट्वा कश्चित् पृच्छति—कस्यायमिति? स आह—देवदत्तस्येति; तेनोत्पादयितारं व्यपदिशति, नात्मानम्। ततः सर्वेषामपत्येन योगाभावात् प्रत्यपत्यं भेदेन प्रत्ययोत्पत्तिप्रसङ्गो नास्त्येवेति निर्वर्त्याभावादिदं नियमार्थं नारब्धमित्यत आह--**सर्वेऽपत्येन युज्यन्त इति**।

**अत्रैवोपपत्तिमाह--अपतनादपत्यमिति**। यन्निमित्तं हि यस्य पापेष्वपतनं तदपतनात् तस्यापत्यं भवति। तस्माद् यो व्यवहितेन जनितः सोऽपि परमप्रकृतिवाच्यस्यार्थस्यापत्यं भवति, तस्यापि येनापतनात्। परमप्रकृतिग्रहणञ्चोपलक्षणं वेदितव्यम्। इतरप्रकृतिवाच्यस्यापि ह्यर्थस्याव्यवहितजनितोऽपत्यं भवत्येव। यत्पुनरुक्तम्—

**पदमञ्जरी**

एक एवेति। तदिदमुक्तम्—**भेदेन प्रत्ययप्रसङ्गे नियमः क्रियते**।

ननु न ज्ञायते–क्व एको भवतीति, यो वा परमप्रकृतेर्यो वा प्रत्ययान्तादिति? नन्वेक इत्युच्यते, यदि च प्रत्ययान्तात् प्राप्तः प्रत्ययः स्यादनेकः कृतः स्यात्। क्व? न तावत्पञ्चमे; पूर्वेषां प्रत्ययानामस्मिन्प्रयोगे प्रसङ्गोऽपत्यान्तरविषयत्वात्। अथ गोत्रसमुदाये केनासौ निवार्येत? न तावदनेनैव, न हि गोत्रसमुदायो गोत्रग्रहणेन गृह्यते। अथापि गृह्येत, एवमपि न ज्ञायते—यो वा परमप्रकृतेः, यो वाऽनन्तरादिति? यदि पुनर्गोत्रग्रहणं न क्रियते, क्रियमाणं वाऽपत्यमात्रपरं विज्ञायते, न स्यादेष दोषः; अपत्ये समुदाये एक एवेति नियमात्। अपत्याधिकारे गोत्रग्रहणात्त्वेष दोषो जायते? नैष दोषः; अपत्यमिति वर्तते, गोत्रेऽपत्ये एक एवापत्यप्रत्ययो भवतीति वचनव्यक्तिः। यदि च प्रत्ययान्तात् प्रत्ययः स्यादपत्यप्रत्ययोऽनेको गोत्रे कृतः स्यात्, सामर्थ्येन वा प्रत्ययो विशेष्यते—गोत्राभिधाने समर्थानां मध्ये एक एवेति। यदि च प्रत्ययान्तात् प्रत्ययः स्याद् गोत्राभिधानसमर्थोऽनेकः कृतः स्यात्प्रथमस्यापि समर्थत्वात्। यद्यप्यस्मिन्प्रयोगेऽपत्यान्तरे वर्तते पञ्चमं प्रत्यपि सामर्थ्यं तावदस्ति, यदि वा 'तस्यापत्यम्' इत्यादिलक्षणैरेक एव प्रत्ययः कर्तव्यः, क्व? गोत्रे, यस्मिन् प्रत्यये गोत्रमभिधित्सितं तत्रेत्यर्थः। प्रत्ययान्ताच्च प्रत्यये तस्मिन्नेव प्रयोगे प्रकृतिरूपसम्पादनायापि तावदनेकः कृतः स्यात्।

**भावबोधिनी**

गार्ग्य। आगे भी अपत्य अर्थों में गर्ग ही प्रकृति मानी जाती है। फलतः गार्ग्यः वही शब्दरूप पौत्र, प्रपौत्र और आगे वाले अपत्यों का वाचक होता है॥ ९३॥

**सोऽपि प्रथमप्रकृतेरपत्यं भवत्येव। गर्गस्यापत्यं गार्गिः। गार्गेरपत्यं गार्ग्यः। तत्पुत्रोऽपि गार्ग्यः। सर्वस्मिन् व्यवहितजनितेऽपि गोत्रापत्ये गर्गशब्दाद् यञेव भवतीति प्रत्ययो नियम्यते।**

**अथ वा – गोत्रापत्ये विवक्षिते एक एव शब्दः प्रथमा प्रकृतिः प्रत्ययमुत्पादयतीति प्रकृतिर्नियम्यते— गार्ग्यः। नाडायनः॥**

## १३४४. गोत्राद् यून्यस्त्रियाम् ॥ ९४ ॥ ( १०९४ )

**न्यासः**

कस्यायमित्युक्ते उत्पादयितारं व्यपदिशति, नात्मानमिति, न तेनोत्पादयितुरेवापत्येन योगः शक्यते प्रतिपादयितुम्। यस्मान्न तत्र यस्य तेनापतनं स जिज्ञासितः स्यात्, किं तर्हि ? य उत्पादयिता स एव; अत उत्पादयितारं व्यपदिशति, नात्मानम्। यदि यस्य तु तेनापतनं स जिज्ञासितः स्यात् तदाऽऽत्मानमपि व्यपदिशेदेव। यदि च सर्वेऽपत्येन न युज्येरन्, 'अपत्यं पौत्रप्रभृति गोत्रम्' इति योऽयमपत्यपौत्रप्रभृतिशब्दयोः सामानाधिकरण्येन निर्देशः, स नोपपद्यते; यदपेक्षया पौत्रादिव्यपदेशमासादयन्ति पुमांसस्तं प्रति तेषामनपत्यत्वात्। तस्मादतोऽपि निर्देशात्—सर्वेऽपत्येन युज्यन्त इति विज्ञायते। **तत्पुत्रोऽपि गार्ग्य इति**। अपिशब्दात् तत्पौत्रादिरपि। किं पुनः कारणं तत्पुत्रोऽपि गार्ग्य इत्याह—**सर्वस्मिन्नित्यादि**। यदपि गार्ग्यायण इत्यत्रैकेन व्यवहितेन जनितं गोत्रापत्यं यस्मात् तत्रापि गर्गशब्दाद् यञेव भवति, तस्मात् तत्पुत्रोऽपि गार्ग्यो भवति। गर्गशब्दादित्यनेन परमप्रकृतेर्भवतीति दर्शयति। एतच्चैकग्रहणाल्लभ्यत इत्युक्तम्।

**अथ वेत्यादिना** प्रकृतिनियमं दर्शयति। प्रकृतिनियमस्त्वेकशब्दस्य प्रकृतिसामानाधिकरण्याल्लभ्यते। एकशब्दोऽत्र प्राथम्यनियमे वर्तत इति वेदितव्यम्, यथा—वर्गाणां प्रथमद्वितीयाः संवृतकण्ठाः श्वासानुप्रदाना अघोषा एकेऽल्पप्राणा इतरे सर्वे महाप्राणा इति। अत्र हि प्रथमेऽल्पप्राणा इति गम्यते। एकशब्दस्येदं विवरणम्—**प्रथमा प्रकृतिरिति**। का च प्रथमा ? या परमप्रकृतिरप्रत्ययान्ता 'गर्ग नड'—इत्येवमादिका। **प्रकृतिर्नियम्यत इति**। प्रथमैव प्रकृतिः प्रत्ययमुत्पादयति, नाप्रथमा – गार्गिगार्ग्यगार्ग्यायणप्रभृतिशब्दाः प्रत्ययान्ताः। गर्गस्यापत्यं गार्ग्यः, तत्पुत्रोऽपि गार्ग्यः। नडस्यापत्यं नाडायनः, तत्पुत्रोऽपि नाडायनः। सर्वत्र व्यवहितजनितेऽपि गोत्रापत्ये प्रथमा प्रकृतिः प्रत्ययमुत्पादयति ॥ ९३ ॥

**गोत्राद् यून्यस्त्रियाम् ॥ अयमपि नियम इति**। न केवलं पूर्वः – इत्यपिशब्देन दर्शयति। सर्वेषां ह्यपत्येन

**पदमञ्जरी**

यदि वा प्रथमवचन एकशब्दः, कश्च प्रथमः ? यमकृत्वा प्रत्ययान्तरं कर्तुं न शक्यते। साधारणवचनो वा, अपत्याधिकाराच्च यः सर्वापत्यसाधारणः स एव गोत्रे भवतीति, गर्गशब्दाद्यञेव भवतीति। गर्गशब्दाद्यो यञ् प्राप्तः स एव भवति, न प्रकृत्यन्तरेभ्यः प्राप्ताः प्रत्यया इत्यर्थः, तदाह—**प्रत्ययो नियम्यत इति**। प्रत्ययान्तरं वार्यत इत्यर्थः। एतेन प्रकृतिर्नियम्यते इत्यपि व्याख्यातम्।

**अथ वेत्यादि**। अस्मिन्पक्षे प्रथमवचन एक शब्द इति दर्शितम्। **प्रथमा प्रकृतिरिति**। सूत्रे तु शब्दापेक्षया पुंल्लिङ्गनिर्देश इति दर्शितम्। **एक एव शब्द इति**। अथ वा-अस्मिन्पक्षे साधारणवचन एकशब्दः परमप्रकृतिश्च सर्वप्रत्ययसाधारणी, सङ्ख्यावचनो वा प्रथमातिक्रमे कारणाभावात्परमप्रकृतिरेकशब्देन गृह्यते। **अनयोः पक्षयोः प्रथमा प्रकृतिरिति**। एकशब्दस्यार्थतो विवरणं द्रष्टव्यम् ॥ ९३ ॥

**गोत्राद्यून्यस्त्रियाम्** ॥ अत्राप्यनारभ्यमाणेऽस्मिन्योगे उत्पादयितर्यपत्ययुक्ते गोत्रसंज्ञाया युवसंज्ञया

**भावबोधिनी**

यह भी नियम है। युवा अपत्य विवक्षित रहने पर गोत्र से = गोत्र प्रत्ययान्त से ही प्रत्यय होता है, न कि परम प्रकृति = मूलपुरुषवाचक से और उससे अव्यवहित अपत्यप्रत्ययान्त युवप्रत्ययान्त से। उदा०—गार्ग्यस्य युवा

**अयमपि नियमः। यून्यपत्ये विवक्षिते गोत्रादेव प्रत्ययो भवति, न परमप्रकृत्यनन्तरयुवभ्यः। गार्ग्यस्यापत्यं युवा गार्ग्यायणः। वात्स्यायनः। दाक्षायणः। प्लाक्षायणः। औपगविः। नाडायनिः।**

**अस्त्रियामिति किम्? दाक्षी। प्लाक्षी।**

**न्यासः**

योगे परमप्रकृत्यनन्तरयुवभ्योऽपि युवापत्यविवक्षायां प्रत्ययः प्राप्नोति, अतस्तन्निवृत्त्यर्थं नियमः क्रियते। **गोत्रादेवेति**। गोत्रप्रत्ययान्तादेवेत्यर्थः। अनेन नियमस्वरूपं दर्शयति। **न परमेत्यादिना** नियमस्य व्यवच्छेद्यम्। **गार्ग्यायणः, दाक्षायण इति**। गोत्रे यौ यञिञौ विहितौ तदन्ताद् 'यञिञोश्च' इति फक्। **औपगविः, नाडायनिरिति**। गोत्रे यावण्फकौ विहितौ तदन्ताद् 'अत इञ्'।

**दाक्षीति**। दक्षस्यापत्यं चतुर्थं स्त्री। 'अत इञ्', 'इतो मनुष्यजातेः' इति ङीष्।

**पदमञ्जरी**

बाधितत्वादसति पूर्वसूत्रव्यापारे चतुर्थे तृतीयात्पञ्चमे चतुर्थात्षष्ठे पञ्चमादित्येवं प्रत्ययान्तादेव प्रत्ययप्रसङ्ग इत्यनिष्टमेव प्राप्नोति। व्यवहिते च पञ्चमादौ यूनि तृतीयादुत्पत्तिर्न प्राप्नोति, तं प्रत्यनपत्यत्वादितीष्टं न सिध्यति। सर्वेषु त्वपत्ययुक्तेषु पञ्चमे यूनि पूर्वेभ्यश्चतुर्भ्यः प्रत्ययः प्राप्नोति। तत्र यदा तृतीयात्तदा गार्ग्यायण इतीष्टं तावत्सिध्यति, अनिष्टमपि प्राप्नोति; प्रकृत्यन्तरेभ्योऽपि प्रत्ययप्रसङ्गादित्यत इदमारभ्यते।

अत्रापि यदि पूर्वः पक्ष आश्रीयते ततो विध्यर्थमेतत्स्यात्, नियमार्थं वा? यदि युवशब्देनैकमपत्यमुच्यते, तत एकस्मिन्यूनि गोत्रादगोत्राच्च प्राप्त्यभावात् चतुर्थेन व्यवहिते पञ्चमादौ यूनि गोत्राद्विध्यर्थं भवति। अथ चतुर्थप्रभृत्यपत्यसमुदायो युवशब्देनोच्यते, ततो गोत्राच्चतुर्थे चतुर्थादगोत्रात्पञ्चम इति गोत्रादगोत्राच्च युवसमुदाये प्रत्ययप्रसङ्गे गोत्रादेवेति नियमार्थं भवति। तत्र विधौ गार्ग्यायण इतीष्टं सिध्यति, प्रत्ययमालाप्रसङ्गदोषः स्यादेव; तत्पितृवचनात्प्राप्तस्य प्रत्ययस्यानिषिद्धत्वात्। नियमे चतुर्थादेः प्राप्तस्य प्रत्ययस्य प्रतिषेधोऽयं सम्पद्यते—यदि चतुर्थादेः स्याद् युवसमुदाये गोत्रादपि प्रत्ययः कृतः स्यादिति, ततश्च नानिष्टप्रसङ्गः; किन्तु पञ्चमादौ यूनि गोत्रादुत्पत्तिर्न प्राप्नोति, तं प्रत्यनपत्यत्वादिति पञ्चमस्य वाक्येनाभिधानं स्याद्—गार्ग्यायणस्यापत्यमिति। षष्ठस्य तु वाक्येनापि न सिद्ध्यति, न हि तत्पितृवचनोऽपत्यप्रत्ययान्तः शब्दोऽस्ति, येन विगृह्येत। तदेवमत्रापि द्वितीयः पक्ष आश्रीयते, नियमश्च, तदाह—**अयमपि नियम इति**। **गोत्रादेवेति**। यून्येवेत्येष विपरीतं नियमो न भवति; 'एको गोत्रे' इति नियमाद्यूनोऽन्यत्र गोत्रप्रत्ययस्य प्रसङ्गाभावात्। **न परमप्रकृत्यनन्तरयुवभ्य इति**। अन्यथा प्रयोगभेदेन तेभ्योऽपि स्यात्।

**भावबोधिनी**

अपत्यम्—गार्ग्यायणः। वात्स्यायनः [ वत्स का युवा अपत्य ]। दाक्षायणः [ दक्ष का युवा अपत्य ] प्लाक्षायणः [ प्लक्ष का युवा अपत्य ]। औपगविः [ उपगु का युवा अपत्य ]। नाडायनिः [ नड का युवा अपत्य ]।

**विमर्श**—गर्ग का अपत्य गार्गि। गर्ग का गोत्रापत्य—गार्ग्य है, इसीसे "यञिञोश्च" ४।१।१०१ से फक्-फ=आयन होता है। गर्ग का युवा अपत्य गर्ग की तीसरी पीढ़ी की सन्तान—गार्ग्य। इस गार्ग्य का युवापत्य=तीसरी पीढ़ी अर्थात् गर्ग की पाँचवीं पीढ़ी का अपत्य विवक्षित होने पर गोत्रप्रत्ययान्त गार्ग्य शब्द से ही "यञिञोश्च" ४।१।१०१ से फक् होकर गार्ग्यायणः आदि बनते हैं। यही प्रक्रिया और अर्थ आगे के सभी शब्दों में समझना चाहिये। यहाँ ध्यान रखना चाहिये छठे या सातवें आदि युवापत्य की विवक्षा में गार्ग्य से ही फक् होकर गार्ग्यायणः यही रूप सर्वत्र होता है। इस प्रकार पहले वाले सूत्रोक्त नियमानुसार गोत्रापत्य अर्थ में सदैव मूल शब्द से प्रत्यय होकर गार्ग्यः यही एक रूप होता है, और युवापत्य अर्थ की विवक्षा में सर्वदा गोत्रप्रत्ययान्त से प्रत्यय होकर गार्ग्यायणः यही एक रूप होता है। प्रत्ययमाला नहीं जोड़ी जाती है।

**[अनु०]**—स्त्री युवा अपत्य में नहीं—इसका क्या फल है? दाक्षी। प्लाक्षी। [ दक्ष की चतुर्थ पीढ़ी की स्त्री

**किं पुनरत्र प्रतिषिद्ध्यते ? यदि नियमः, स्त्रियामनियमः प्राप्नोति ? अथ युवप्रत्ययः, स्त्रियां गोत्रप्रत्ययेनाभिधानं न प्राप्नोति गोत्रसंज्ञाया युवसंज्ञया बाधितत्वात् ? तस्माद् योगविभागः कर्त्तव्यः—**

न्यासः

**किं पुनरत्र प्रतिषिध्यत इति ।** सर्वस्मिन् प्रतिषिध्यमाने दोषं मन्यते । तमेव दोषमाविष्कर्तुमाह— **यदीत्यादि । स्त्रियामनियमः प्राप्नोतीति ।** परमप्रकृत्यनन्तरयुवभ्योऽपि स्त्रियां युवप्रत्ययः प्राप्नोतीत्यर्थः । **गोत्रसंज्ञाया युवसंज्ञया बाधितत्वादिति ।** 'जीवति तु वंश्ये युवा' इत्यत्र तुशब्दोऽवधारणार्थः कृतः । तेन युवसंज्ञैव भवति, न गोत्रसंज्ञा; ततश्च गोत्रसंज्ञाया अभावात् स्त्रियां गोत्रप्रत्ययो न सम्भवत्येव, तेन तस्या अभिधानं न प्राप्नोति । **तस्मादित्यादि ।** यत एव च नियमयुवप्रत्यययोरुभयोरपि प्रतिषेधे दोषः, तस्मात् तन्निरासाय योगविभागः कर्त्तव्यः । तत्र 'गोत्राद् यूनि' इत्येको योगः, अनेन च नियमः क्रियते, यदाह—

पदमञ्जरी

**किं पुनरत्र प्रतिषिध्यत इति ।** सर्वस्मिन्नपि प्रतिषिध्यमाने दोषदर्शनात्प्रश्नः । तमेव दोषमाविष्करोति— **यदि नियम इति ।** तदेकवाक्यत्वात्प्रतिषेधस्येति भावः । **स्त्रियामनियमः प्राप्नोतीति ।** परमप्रकृत्यनन्तरयुवलक्षणाः प्रत्ययाः प्रयोगभेदेन पर्यायेण स्युरित्यर्थः । **अथ युवप्रत्ययः प्रतिषिध्यत इति ।** अस्त्रियामिति योगविभागेन प्रसज्यप्रतिषेधाश्रयेण चेति भावः । **गोत्रप्रत्ययेनाभिधानं न प्राप्नोतीति ।** तद्यथा 'गर्गादिभ्यो यञ्' गार्गी गार्ग्यायणी, अपत्यसामान्यलक्षण एव तु प्रत्ययः स्यात् । किं कारणमनभिधानं प्राप्नोतीत्यत आह—**गोत्रसंज्ञाया युवसंज्ञया बाधितत्वादिति ।** यथा च बाधस्तथा तत्रैव वक्ष्यते । स्यादेतत्—युवप्रत्ययस्य स्त्रियां लुक्करिष्यते, कथम् ? 'यूनि लुक्' इत्यस्यानन्तरं स्त्रियां चेति वक्ष्यामि, यूनि लुगित्येव, 'प्राग्दीव्यतः' इत्येतन्निवृत्तम् । यद्वा 'वतण्डाच्च, लुक् स्त्रियाम्, यूनि च' इति वक्ष्यामि, लुक् स्त्रियामित्येव, ततश्च गार्ग्यशब्दादुत्पन्नस्य फको लुकि कृते लुप्तस्याप्यर्थं प्रकृतिरेवाहेति यञन्तात्स्त्रियां वर्तमानान्ङीष्ष्फौ भविष्यत इति ? एवमप्यौपगवशब्दादत इञो लुकि कृते, अनुपसर्जनाधिकारादण्योऽनुपसर्जनमित्युच्यमान ईकारो न प्राप्नोति; अणर्थस्याप्रधानत्वात्, यूनि संक्रान्तत्वात् । मा भूदेवमण्योऽनुपसर्जनमिति, अणन्तादनुपसर्जनादित्येवं भविष्यति ? नैवं शक्यम्; इह हि दोषः स्याद्—आपिशलिना प्रोक्तं व्याकरणम्, 'इञश्च' इत्यण्, तदधीते आपिशला ब्राह्मणी, 'तदधीते' इत्यणः प्रोक्ताल्लुकि अणन्तस्याध्येत्र्यां प्रधानस्त्रियां संक्रान्तत्वान्ङीष्प्राप्नोति, तस्मादण्योऽनुपसर्जनमित्येवाश्रयणीयम्, स्त्रियां योऽण्विहित इति वा । तथा च सत्यौपगवीतीकारो न प्राप्नोति । यद्यप्यत्र प्रत्ययलक्षणेन इञ उपसङ्ख्यानमितीकारः स्यात्, इह तु ग्लुचुकायनेरपत्यमौत्सर्गिकस्याणो लुकि ङीन्न प्राप्नोति, 'इतो मनुष्यजातेः' इति ङीष् भविष्यति । इह तर्हि यस्कस्यापत्यं शिवाद्यण् यास्कः, तस्यापत्यं स्त्री, 'अणो द्व्यचः' इति फिञ्, स्त्रियां लुकि ईकारो न प्राप्नोति ?

भावबोधिनी

सन्तान—यहाँ सूत्रोक्त नियम नहीं लागू होता है क्योंकि स्त्री अपत्य की युवसंज्ञा नहीं होती है । अतः यहाँ गोत्रप्रत्ययान्त से नहीं अपि तु मूल प्रकृति से ही इञ् करके "इतो मनुष्यजातेः" ४।१।६५ से ङीष् होता है । ]

[ अस्त्रियाम्—यहाँ नञ् से ] किसका प्रतिषेध किया जा रहा है ? यदि [ सूत्रोक्त ] नियम का प्रतिषेध किया जा रहा है तो स्त्रीलिङ्ग में अनियम प्राप्त होता है । [ फलतः परमप्रकृति से और अनन्तरापत्य से युवलक्षण प्रत्यय की अतिप्रसक्ति होगी ] ? यह कहें कि—युवप्रत्यय का प्रतिषेध किया जा रहा है; तो स्त्रीलिङ्ग में गोत्रप्रत्यय से अभिधान नहीं प्राप्त होगा । [ फलतः अपत्यसामान्य लक्षण में ही प्रत्यय होने लगेगा । ] क्योंकि युवसंज्ञा द्वारा गोत्रसंज्ञा का बाध हो जायगा ? [ फलतः केवल युवसंज्ञा होगी । गोत्रसंज्ञा नहीं होगी, इसलिये स्त्रीलिङ्ग में गोत्रप्रत्यय की सम्भावना ही नहीं है; उसका अभिधानकथन किस प्रकार हो सकेगा ? ] इस कारण [ अर्थात् नियम करने पर और युवप्रत्यय का निषेध करने पर—दोनों में दोष होने के कारण ]—योग का विभाग करना चाहिये—"गोत्रप्रत्ययान्त से युवा अर्थ में प्रत्यय होता है ।

**गोत्राद् यूनि प्रत्ययो भवति । ततोऽस्त्रियाम्—यूनि यदुक्तं स्त्रियां तन्न भवति । युवसंज्ञैव प्रतिषिद्ध्यते, तेन स्त्री गोत्रप्रत्ययेनाभिधास्यते ॥**

**१३४९. अत इञ् ॥ ९५ ॥ ( १०९९ )**

**'तस्यापत्यम्' इत्येव । अकारान्तात् प्रातिपदिकाद् इदञ् प्रत्ययो भवति । अणोऽपवादः । दक्षस्यापत्यं दाक्षिः । तपरकरणं किम् ? शुभंयाः, कीलालपाः – इत्यतो मा भूत् ।**

**न्यासः**

**गोत्राद् यूनि प्रत्ययो भवतीति । ततोऽस्त्रियामिति** द्वितीयो योगः । तेन च यूनीत्यत्र यदुक्तं कार्यं तस्य प्रतिषेधः क्रियते, यदाह—**यूनि यदुक्तं स्त्रियां तन्न भवतीति । युवसंज्ञैव प्रतिषिध्यत इति ।** कथम् ? 'अस्त्रियाम्' इत्यत्र हि योगे यूनीत्येतदनुवर्त्तते, तेनैवं विज्ञायते— यूनि यदुक्तं कार्यं स्त्रियां तन्न भवतीति । युवसंज्ञा च यून्येव कार्ययुक्तेत्यतः सैव प्रतिषिध्यते । **युवसंज्ञैवेति ।** एवकारेण नियमयुवप्रत्यययोर्व्यवच्छेदः क्रियते । **तेन स्त्री गोत्रप्रत्ययेनाभिधास्यत इति ।** तस्यां युवसंज्ञायां प्रतिषिद्धायां गोत्रसंज्ञाया अविचलत्वात् ॥ ९४ ॥

**अत इञ् ॥** अत इत्यनेन प्रकृतं प्रातिपदिकं विशिष्यते, विशेषणेन च तदन्तविधिर्भवतीत्यत आह—**अकारान्तात् प्रातिपदिकादिति ।** अथात इति 'अत सातत्यगमने' इत्यस्य विवबन्तस्य ग्रहणं कस्मान्न विज्ञायते ? 'शिवादिभ्योऽण्' इति वचनात् । तद्धीञो बाधनार्थं क्रियते । यदि चेह स्वरूपग्रहणं स्यात्, शिवादिभ्यः प्रसङ्ग एव नास्तीति तेभ्यस्तद्बाधनार्थमण्विधानमनर्थकं स्यात्, क्रौड्यादीनाञ्चेञन्तानां पाठात् । तस्मादकारान्तस्यैवेदं ग्रहणम् । यद्येवम्, अस्यापत्यमिरित्यत्र न प्राप्नोति; अनकारान्तत्वात् ? एतदपि व्यपदेशिवद्भावेनाकारान्तं भवतीत्यदोषः । **शुभंयाः, कीलालपा इति ।** यातेः, पिबतेश्च 'आतो मनिन्क्वनिब्वनिपश्च' इत्यत्र हि

**पदमञ्जरी**

न ह्यत्र लुप्तः प्रत्यय ईकारस्य निमित्तम्, यश्च श्रूयते न स स्त्रियां विहित उपसर्जनं च । तर्हि का गतिः ? इत्यत आह –**तस्मादिति । युवसंज्ञैव प्रतिषिध्यत इति ।** ननु 'यूनि यदुक्तं तत्स्त्रियां न भवति' इत्युक्तम्, न च **युवसंज्ञा** यून्युक्ता, न हि युवसंज्ञायाः प्राग्युवसंज्ञास्ति ? चतुर्थादेर्जीवद्वंश्यस्यापत्यस्योपलक्षणं युवशब्द इत्यदोषः ।

अपर आह—**स्वरूपपरो** युवशब्दः, परिभाषा चेयम्—यत्र युवशब्दः श्रूयते तत्र 'अस्त्रियाम्' इत्युपतिष्ठते । 'जीवति तु वंश्ये युवा अस्त्रियाम्' इति वा व्यक्तमेव पठितव्यमिति ॥ ९४ ॥

**अत इञ् ॥ अकारान्तात् प्रातिपदिकादिति ।** 'अत सातत्यगमने' इत्यस्य वाऽच्छब्दान्तानां वा कुर्वदादीनां ग्रहणं न भवति, यदि स्याच्छिवादिषु येषामस्येञो बाधनार्थः पाठः, शिवप्रोष्ठप्रोष्ठिकप्रभृतीनां तेषां पाठोऽनर्थकः स्यात् । व्यपदेशिवद्भावादिहापि भवति—अस्यापत्यमिरिति, यस्येति लोपे प्रत्ययमात्रस्य श्रवणम् । इह तु—

**भावबोधिनी**

[ यह प्रथम सूत्र है ] इसके बाद—"युवा अर्थ में जो कार्य कहा गया है वह स्त्रीलिङ्ग में नहीं होता है । [ यह दूसरा सूत्र होगा ] । [ अतः युवा अर्थ में युव संज्ञा कही गयी है । वह स्त्रीलिङ्ग में नहीं होती है—] युवसंज्ञा का ही प्रतिषेध किया जाता है, [ नियम और युवप्रत्यय का प्रतिषेध नहीं किया जाता है ] इस कारण स्त्री अर्थ का कथन गोत्रप्रत्यय से होगा । [ युवप्रत्यय से नहीं । अतः दाक्षि से ङीष् होगा–दाक्षी ] ॥ ९४ ॥

"तस्यापत्यम्" [ उसका अपत्य ] इस की अनुवृत्ति होती है । [ षष्ठीसमर्थ ] अकारान्त प्रातिपदिक से [ अपत्यमात्र अर्थ में ] इञ् प्रत्यय होता है । यह [ "प्राग्दीव्यतोऽण्" ४।१।८१ से प्राप्त ] अण् प्रत्यय का अपवाद है । उदा०—दक्षस्य अपत्यं दाक्षिः । [ दक्ष + इञ्, आदिवृद्धि, अलोप होता है । ] [ 'अतः'—इसमें एकमात्रिक का बोध कराने के लिये ] तपरकरण का फल क्या है ? शुभंयाः, कीलालपाः— इन दो मात्रिक दीर्घ आकारान्त से न हो ।

**कथं 'प्रदीयतां दाशरथाय मैथिली' ( वा० रा० युद्ध० ९.२२ ) ? शेषविवक्षया भविष्यति ॥**

## १३४६. बाह्वादिभ्यश्च ॥ ९६ ॥ ( १०९६ )

**'बाहु' इत्येवमादिभ्यः शब्देभ्योऽपत्ये इञ्प्रत्ययो भवति । बाहविः । औपबाहविः । अनकारार्थ आरम्भः । क्वचिद्बाधकबाधनार्थः ।**

**बाहु । उपबाहु । विवाकु । शिवाकु । वटाकु । उपबिन्दु । वृक । चूडाला । मूषिका । बलाका । भगला । छगला । ध्रुवका । धुवका । सुमित्रा । दुर्मित्रा । पुष्करसत् । अनुहरत् । देवशर्मन् । अग्निशर्मन् । कुनामन् ।**

**न्यासः**

'विजुपेच्छन्दसि' इत्यतश्चकारेण विजप्यनुकृष्यते ।

कथमित्यादि । दशरथशब्दादप्यकारान्तत्वादिञा भवितव्यम् । ततः 'दाशरथाय' इत्यणन्तस्य प्रयोगो नोपपद्यत इति भावः । **शेषविवक्षायामित्यादि ।** एतेन दशरथस्यायमित्यर्थविवक्षायामत्राण् विहितः, न तु 'तस्यापत्यम्' इत्यर्थविवक्षायामिति दर्शयति । यदा तु दशरथस्यापत्यमिति विवक्ष्यते, तदेञ्भवत्येव— दाशरथिरिति ॥ ९५ ॥

**बाह्वादिभ्यश्च ॥ बाहविरिति ।** 'ओर्गुणः' ।

**क्वचिदिति ।** अजीगर्त्तादिष्वकारान्तेषु । बाहुप्रभृतीनां वटाकुपर्यन्तानामनकारान्तत्वात् प्राप्त्यर्थः पाठः । चूडाशब्दस्य च 'द्व्यचः' इति ढकि प्राप्ते । वृकलादीनां प्राक् पुष्करसच्छब्दाद् 'अवृद्धाभ्यो नदीमानुषीभ्यः' इत्यणि प्राप्ते । पुष्करसदित्येवमादीनां लोमशब्दपर्यन्तानां प्राप्त्यर्थः, अनकारान्तत्वात् ।

**पदमञ्जरी**

एरपत्यमस्य युवेति, 'यञिञोश्च' इति फकि यस्येतिलोपं बाधित्वा परत्वादादिवृद्धौ कृतायाम्—आयायन इति भवति ॥ ९५ ॥

**बाह्वादिभ्यश्च ॥ क्वचिदिति ।** अजीगर्त्तादिषूदङ्कपर्यन्तेष्वदन्तत्वात् पूर्वेणेञ् प्राप्तः, तस्य 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण् बाधकः प्राप्तः । अन्ये सर्वेऽनकारान्ताः, तेषु च बाहुप्रभृतिषूवर्णान्तेषु, पुष्करसदादिषु हलन्तेषु चाण् प्राप्तः । चूडाशब्दाद् 'द्व्यचः' इति ढक्, वृकलादिभ्यस्तन्नामिकण्प्राप्तः । शिरस्, लोमन्निति तदन्तयोर्ग्रहणम् । 'सम्भूयोम्भोमितौजसां सलोपश्च' इत्येव वक्तव्ये पृथक् सलोपश्चेति वचनं वैचित्र्यार्थम् । उदञ्चु इति पठ्यते, तत्र नायमुकारान्तात्प्रत्ययः किन्तु क्विन्नन्तात्प्रत्ययः, नलोपाभावस्तु निपात्यते—उदीचोऽपत्यमौदञ्चिः । एतत्सर्वं पैलादिष्वौदञ्चिशब्दपाठाद्विज्ञायते ।

**भावबोधिनी**

"प्रदीयतां दाशरथाय मैथिली" [ दशरथ का अपत्य—अर्थ में इञ् न होकर अण् प्रत्यय ]—यह कैसे होता है ? शेषविवक्षा मानकर [ "तस्येदम्" ४।३।१२० से अण् ] हो जायगा ॥ ९५ ॥

बाहु—आदि प्रातिपदिकों से भी अपत्य अर्थ में इञ् प्रत्यय होता है । उदा०—बाहविः । उपबाहविः । [ बाहु का अपत्य, उपबाहु का अपत्य ] । बाहु + इञ्, 'ओर्गुणः' से उकार का गुण, अव् आदेश ] । अकारान्त से भिन्न लक्ष्यों के लिये यह सूत्र बनाया गया है । कहीं-कहीं [ अजीगर्त आदि में ] बाधक का बाध करने के लिये है ।

[ इस गण में इन शब्दों का पाठ है—] बाहु । उपबाहु । विवाकु । शिवाकु । वटाकु । उपबिन्दु । वृक । चूडाला । मूषिका । भगला । छगला । ध्रुवका । धुवका । सुमित्रा । दुर्मित्रा । पुष्करसत् । अनुहरत् । देवशर्मन् । अग्निशर्मन् । कुनामन् । सुनामन् । पञ्चन् । सप्तन् । अष्टन् । * अभितौजस से इञ् प्रत्यय और स का लोप भी होता है। * उदञ्चु । शिरस् । शराविन् । क्षेमवृद्धिन् । शृङ्खलातोदिन् । खरनादिन् । नगरमर्दिन् । प्रकारमर्दिन् । लोमन् । अजीगर्त । कृष्ण । सलक । युधिष्ठिर । अर्जुन । साम्ब । गद । प्रद्युम्न । राम । * संज्ञा में उदङ्क से इञ् कहना चाहिये । * सम्भूय और अम्भस् से सलोप तथा इञ् प्रत्यय कहना चाहिये । * बाहु आदि में, लौकिक गोत्रभाव = संज्ञाकारित्व अर्थात् आदि पुरुषत्व में जिनकी

**सुनामन्। पञ्चन्। सप्तन्। अष्टन्। ॐ अमितौजसः सलोपश्च ॐ ( ग० सू० ६४ )। उदञ्चु। शिरस्। शराविन्। क्षेमवृद्धिन्। शृङ्खलातोदिन्। खरनादिन्। नगरमर्दिन्। प्राकारमर्दिन्। लोमन्। अजीगर्त्त। कृष्ण। सलक। युधिष्ठिर। अर्जुन। साम्ब। गद। प्रद्युम्न। राम**[1]**। ॐ उदङ्कः संज्ञायाम् ॐ ( ग० सू० ६५ )। ॐ सम्भूयोम्भसोः सलोपश्च ॐ ( ग० सू० ६६ )। ॐ बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोऽन्यत्र तेषां प्रतिषेधः ॐ ( म० भा० ४.१.९६ वा० १ )। बाहुर्नाम कश्चित्तस्यापत्यं बाहव। ॐ सम्बन्धिशब्दानां च**

### न्यासः

**अमितौजसः सलोपश्चेति।** अमितौजस्शब्दादिञ् भवति, सलोपश्च। आमितौजिः। उदञ्च्विति पठ्यते, तत्राञ्चतेर्धातोश्चकारो वेदितव्यः। नायं पुनरकारान्तः, किं तर्हि ? क्विन्नन्ता, प्रत्ययवेलायां निपातनादनुनासिकलोपो न भवति। उदीचोऽपत्यमौदञ्चिः। शिरःशब्दस्तदन्तविधिं प्रयोजयति, केवलस्य नपुंसकस्यापत्येन सम्बन्धाभावात्। हस्तिशिरसोऽपत्यं हास्तिशीर्षिः, 'ये च तद्धिते' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाद् शीर्षभावः। लोमशब्दोऽपि पूर्ववत् तदन्तविधिं प्रयोजयति—उडुलोम्नोऽपत्यम् औडुलोमिः, ऊर्ध्वलोम्नोऽपत्यम् और्ध्वलोमिः। अजीगर्त्तादीनां प्रागुदङ्कशब्दाद् 'ऋष्यन्धकवृष्णि' इत्यादिनाणि बाधके प्राप्ते। **उदङ्कः संज्ञायामिति।** उदङ्को नाम कश्चित्, तस्यापत्यमौदङ्किः। **सम्भूयोऽम्भसोः सलोपश्च।** सम्भूयस्, अम्भसित्येतयोरिञ् भवति, सकारलोपश्च—साम्भूयिः, आम्भिः **बाह्वादिप्रभृतिष्विति।** प्रभृतिशब्देनेत ऊर्ध्वं ये वक्ष्यन्ते ते परिगृह्यन्ते। **येषां दर्शनं गोत्रभावे लौकिक इति।** दर्शनम् = प्रसिद्धिः। लौकिके गोत्रे भावः = संज्ञाकारित्वम्। येषां लौकिकगोत्रभावे प्रसिद्धिस्तेषां बाह्वादिषु परिग्रहो द्रष्टव्यः। **ततोऽन्यत्र तेषां प्रतिषेध इति।** येषां लौकिके गोत्रभावे न दर्शनमपि तु ततोऽन्यत्र दर्शनम्, तेषां प्रतिषेधो वेदितव्यः। तेन बाहुर्नाम कश्चिदादिपुरुषो

### पदमञ्जरी

**बाह्वादिप्रभृतिष्विति।** प्रभृतिग्रहणेन वक्ष्यमाणानां कुञ्जादीनां ग्रहणम्। लोके विदितो लौकिको गोत्रभावः, संज्ञाकारित्वम् आदिपुरुषत्वमित्यर्थः। एतच्च न्यायसिद्धम्, कथम् ? अर्थवद्ग्रहणे नानर्थकस्येति अर्थवतां बाह्वादीनां ग्रहणम्, स चार्थः प्रसिद्धः; झटिति प्रतीतेः। स्मृतिशास्त्रस्य चार्थतोऽनादित्वादनाद्यर्थाभिधायिनामेव ग्रहणं न्याय्यम्। **बाहुर्नाम कश्चिदिति।** एवं कुञ्जो नाम नडो वा, तस्मादिञेव भवति —कौञ्जिः, नाडिरिति। यत्तु कार्यं न स्वरूपोपादानेन विधीयते, किन्तु प्रकारान्तरेण; तदिदानीन्तनार्थाभिधायिनामपि भवति, 'अत इञ्', दैवदत्तिरिति। **सम्बन्धिशब्दानां चेति** कार्यापेक्षया षष्ठी, सम्बन्धिशब्दानां श्वशुरा-

### भावबोधिनी

प्रसिद्धि है, उससे भिन्न अर्थ में [ अर्थात् लौकिक गोत्रभाव = आदि पुरुषत्व में नहीं अपितु इस भिन्न अर्थ में देखे जाते हैं उसमें ] उनका प्रतिषेध कहना चाहिये। * इसलिये [ इस समय का ] बाहु नाम का कोई पुरुष है, उसका अपत्य—बाहवः [ है, यहाँ "तस्यापत्यम्" ४।१।९२ से अण् ही होता है। जो प्रसिद्ध गोत्र के लिये बाहु शब्द है, उसी से अपत्य अर्थ में इञ् होता है—बाहविः ]। * सम्बन्धिवाचक शब्दों को, उसके सदृश [ संज्ञावाचक के सदृश ] से प्रतिषेध कहना चाहिये। * संज्ञाश्वशुर का अपत्य—श्वाशुरिः। [ संज्ञया श्वशुरः—संज्ञाश्वशुरः अर्थात् जिसका नाम श्वशुर है, उससे इञ् होकर—श्वाशुरिः बनता है। और जो सम्बन्धिवाचक श्वशुर शब्द है उससे "राजश्वशुराद् यत्" ४।१।१३७ से यत् होकर—श्वशुर्यः [ = साला ] होता है। [ सूत्रस्थ ] चकार अनुक्त = अपठित शब्दों के समुच्चय के लिये है, इसका आकृतिगण होना सूचित करता है। [ अतः इन से भी इञ् होता है ] जाम्बिः [ जम्ब + इञ् ]। ऐन्द्रशर्मिः। आजधेनविः। आजबन्धविः। औडुलोमिः॥

---

१. निवाकु। अवाकु। बिन्दु। चूडा। वृकला। भद्रशर्मन्। सुशर्मन्। सुधावन्। माष—अत्र ते शब्दा अधिकाः पुस्तकान्तरे।

**तत्सदृशात्प्रतिषेधः** ❀ ( वा० २ ) । **संज्ञा श्वशुरस्यापत्यं श्वाशुरिः**[1] । **चकारोऽनुक्तसमुच्चयार्थः, आकृतिगणतामस्य बोधयति । जाम्बिः । ऐन्द्रशर्मिः । आजधेनविः । आजबन्धविः । औडुलोमिः ॥**

## १३४७. सुधातुरकङ् च ॥ ९७ ॥ ( १०९७ )

**सुधातृशब्दादपत्ये इञ्प्रत्ययो भवति, तत्सन्नियोगेन च तस्याकङादेशो भवति । सुधातुरपत्यं सौधातकिः ॥**

**❀ व्यासवरुडनिषादचण्डालबिम्बानामिति वक्तव्यम् ❀ ( म० भा० ४.१.९७ ) । वैयासकिः । बारुडकिः ।**

**न्यासः**

यः संज्ञाकारित्वेन प्रसिद्धो यदपत्यसंतानान्तःपतिनः पुमांसो बाहुव्यपदेशमासादयन्ति, तत एवेञ् भवति । यस्त्विदानीन्तनो बाहुर्नाम कश्चित् ततोऽणेव भवति—बाहव इति । एतच्च वेत्यनुवृत्तेर्व्यवस्थितविभाषाविज्ञानाच्च लभ्यते । सम्बन्धिशब्दानाञ्च श्वशुरादीनाञ्च यत्कार्यमुच्यते तस्य तत्सादृश्यात् प्रतिषेधो भवति । अत्रापि पूर्वोक्त एव हेतुर्वेदितव्यः । तेन 'राजश्वशुराद्यत्' इति श्वशुरशब्दाद् यत्प्रत्ययः सम्बन्धिशब्दादेव भवति, न संज्ञाशब्दात् । तेन श्वशुरो नाम कश्चित्, तस्यापत्यं श्वाशुरिरितीञेव भवति । **संज्ञाश्वशुरस्येति ।** संज्ञया यः श्वशुरः, न सम्बन्धेन स संज्ञाश्वशुरः ॥ ९६ ॥

**सुधातुरकङ् च ॥ व्यासवरुडेत्यादि ।** व्यासादीनामिञ् तत्सन्नियोगेन चाकङादेशो भवतीत्येतदर्थंरूपं

**पदमञ्जरी**

दीनां यत्कार्यमुच्यते तस्य तत्सदृशे प्रतिषेधो भवति । **संज्ञाश्वसुरस्येति ।** संज्ञया यः श्वसुरः, न सम्बन्धेन । **श्वासुरिरिति ।** उणादिषु नावश्यं व्युत्पत्तिकार्यं भवति, तेन; 'सावसेराप्तौ' इति व्युत्पन्नस्य श्वसुरशब्दस्य 'न य्वाभ्याम्' इत्येष विधिर्न भवति । तथा 'मातृपितृभ्यां स्वसा' इति षत्वं धान्यमातरि न भवति । इदमपि न्यायसिद्धम्; संज्ञाश्वशुरस्यादिमत्त्वात् सम्बन्धिशब्दस्यानादित्वात् । मातृपितृभ्यामित्यत्रापि प्रसिद्धतरत्वाज्जननीवाचिनो ग्रहणम् । उक्तं च—

अभिव्यक्तपदार्था ये स्वतन्त्राः लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु ॥ इति ।

**चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयतीति ।** पठितशब्दापेक्षः समुच्चय इति भावः ॥ ९६ ॥

**सुधातुरकङ् च ॥ व्यासवरुडेत्यादि ।** वेदं व्यस्यतीति वेदव्यासः, **'कर्मण्यण्'**, तस्यैकदेशप्रयोगः—व्यास

**भावबोधिनी**

**विमर्श**—'प्रस्तुत सूत्र के तीन उद्देश्य प्रतीत होते हैं—( १ ) अकारान्त शब्दों से इञ् करना । ''अत इञ्'' ४।१।९५ से ज्ञात होता है, अतः अनकारान्त शब्दों से इञ् करना । ( २ ) अकारान्त अजीगर्त आदि से इञ् प्राप्त होता है उसका बाध करके ''ऋष्यन्धक-वृष्णि-कुरुभ्यश्च'' ४।१।११४ से अण् प्राप्त है, परन्तु इस बाधक का बाध करके पुनः इञ् करना । ( ३ ) जो शब्द इसमें पठित नहीं है, किन्तु गोत्रभाव = आदिपुरुष के वाचक रूप से प्रसिद्ध हैं, लक्ष्यानुसार उनसे भी इञ् करके इसे आकृतिगण सिद्ध करना ॥ ९६ ॥

अपत्य अर्थ में सुधातृ शब्द से इञ् प्रत्यय होता है, और इसके सन्नियोग से इस शब्द को अकङ् आदेश भी होता है । उदा०—सुधातुः अपत्यम्—सौधातकिः । सुधातृ + इञ्, अकङ् आदेश ङित् होने के कारण अन्त्य ऋ के स्थान पर ही होता है—सुधात् अक् + इ, आदिवृद्धि—सौधातकिः । * व्यास, वरुण, निषाद, चण्डाल और बिम्ब शब्दों को अकङ् आदेश और इञ् प्रत्यय होता है । * उदा०—वैयासकिः [ व्यासस्य अपत्यम् । व्यास + इञ्, अकङ् = व्यासक् + इ,

१. 'राश्वशुरादिति यन्न भवति' इत्यधिकं क्वचित् ।

**नैषादकिः । चाण्डालकिः । बैम्बकिः ॥**

## १३४८. गोत्रे कुञ्जादिभ्यश्च्फञ् ॥ ९८ ॥ ( १०९९ )

**'तस्यापत्यम्' इत्येव । गोत्रसंज्ञकेऽपत्ये वाच्ये कुञ्जादिभ्यश्च्फञ् प्रत्ययो भवति । इञोऽपवादः । चकारो विशेषणार्थः, 'व्रातच्फञोरस्त्रियाम्' ( ५.३.११३ ) इति । ञकारो वृद्धयर्थः । कौञ्जायन्यः, कौञ्जायन्यौ, कौञ्जायनाः । ब्राध्नायन्यः, ब्राध्नायन्यौ, ब्राध्नायनाः ।**

**गोत्र इति किम् ? कुञ्जस्यापत्यमनन्तरं कौञ्जिः । एकवचन-द्विवचनयोः सतिशिष्टत्वाद् ञित्स्वरेणैव**

**न्यासः**

व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—पूर्वसूत्रादिह चकारोऽनुवर्तते, स चानुक्तसमुच्चयार्थः, तेन व्यासादीनामपि भविष्यति । **वैयासकिरिति ।** 'न य्वाभ्याम्' इत्यादिनैज्वृद्धिप्रतिषेधौ । अथ बाह्वादिष्वेव सुधातृशब्दमधीत्य तत्र चाकङादेशः कस्मान्न कृतः, यथा अमितौजसः सलोपश्चेति गणे पठ्येत ? सूत्रे वा, न तत्र कश्चिल्लाघवाभावाद् विशेषो लभ्यत इति यत्किञ्चिदेतत् ॥ ९७ ॥

**गोत्रे कुञ्जादिभ्यश्च्फञ् ॥ इञोऽपवाद इति ।** अकारान्तत्वात् कुञ्जादीनाम् । चकारो विशेषणार्थ इति । यद्यत्र चकारो न क्रियेत ततः 'व्रातच्फञोरस्त्रियाम्' इत्यत्रापि नैव क्रियते; च्फञ्प्रत्ययस्याभावात् । ततश्च 'व्रातच्फञोरस्त्रियाम्' इत्युच्यमाने 'अश्वादिभ्यः फञ्' इत्यस्यापि ग्रहणं स्यात् । **कौञ्जायन्यः, कौञ्जायन्याविति ।** 'पूगाञ्ञ्योऽग्रामणीपूर्वात्' इत्यतः 'ञ्यः' इत्यनुवर्तमाने 'व्रातच्फञोरस्त्रियाम्' इति स्वार्थे ञ्यः । **कौञ्जायाना इति ।** 'ञ्यादयस्तद्राजाः' इति तद्राजसंज्ञकत्वात् 'तद्राजस्य बहुषु' इत्यादिना लुक् । किं पुनरत्र ञित्वस्वरेण भवितव्यम् ? उत चित्स्वरेण ? इत्यत आह—**एकवचनद्विवचनयोरित्यादि ।** एकवचनद्विवचनयोस्तावत् सति तस्मिन् चित्स्वरे पश्चाद् ञ्ये विहिते समुपजायमानो ञित्स्वरः सतिशिष्टो भवतीति तेनैव भवितव्यम् । बहुवचने

**पदमञ्जरी**

इति, भीमसेनो भीम इतिवत् । वरुडादयो जातिविशेषाः; तर्त्हि वक्तव्यम् ? न वक्तव्यम्; प्रकृत्यन्तराण्येवैतानि स्वार्थिककन्-प्रत्ययन्तानि, अव्यविकन्यायेन च कन्, न हि तैर्वाक्यमेव भवति । व्यासशब्दादृषिवाचिनोऽपि बाह्वादेराकृतिगणत्वादिञ् भवति ॥ ९७ ॥

**गोत्रे कुञ्जादिभ्यश्च्फञ् ॥ चकारो विशेषणार्थ इति ।** यद्यत्र चकारो न क्रियेत ततो 'व्रातच्फञोरस्त्रियाम्' इति वक्तव्यम्, ततो 'अश्वादिभ्यः फञ्' इत्यस्याग्रहणं स्यात् । **कौञ्जायन्य इति ।** स्वार्थे ञ्यः, बहुषु तु 'ञ्यादयस्तद्राजाः' इति तद्राजत्वात् 'तद्राजस्य बहुषु' इत्यादिना लुक् ।

किं पुनरत्र ञित्स्वरो भवति ? उत चित्स्वरः ? इत्यत्राह—**एकवचनद्विवचनयोरिति ।** तत्र हि ञ्यप्रत्ययः श्रूयते, स च पश्चाद्भावीति तन्निबन्धनो ञित्स्वरः सतिशिष्टः । बहुवचने तु ञ्ये निवृत्ते सम्प्रधारणा—ञित्स्वरो

**भावबोधिनी**

आदिवृद्धि प्राप्त होती है, उसका अपवाद ऐज् आगम "न य्वाभ्याम्" ७।३।३ से होने पर व् ऐ यासक् + इ = वैयासकिः । ] वारुडकिः । नैषादकिः । चाण्डालकिः । बैम्बकिः ॥ ९७ ॥

'तस्यापत्यम्' की अनुवृत्ति होती है । गोत्रसंज्ञक अपत्य वाच्य रहने पर कुञ्ज आदि शब्दों से च्फञ् प्रत्यय होता है । यह इञ् का अपवाद है । चकार विशेषणार्थ है "व्रातच्फञोरस्त्रियाम्" ५।३।११३ में [ च्फञ् कहा गया है, इसी लिये यहाँ कहना पड़ा ] । ञकार वृद्धि के लिये है । [ अर्थात् च् और ञ् स्वर के लिये नहीं हैं । ] उदा०—कौञ्जायन्यः कौञ्जायन्यौ [ कुञ्जस्य अपत्यम्—इस अर्थ में कुञ्ज + च्फञ् = फ = आयन, आदिवृद्धि—कौञ्जायन बनने पर "व्रात-च्फञोरस्त्रियाम्" ५।३।११३ से स्वार्थ में ञ्य प्रत्यय होने पर भसंज्ञा अलोप करने पर कौञ्जायन्यः, द्विवचन में कौञ्जायन्यौ, बहुवचन में ] कौञ्जायनाः [ कौञ्जायन + ञ्य, यहाँ "ञ्यादयस्तद्राजाः" ५।३।११९ से तद्राज संज्ञा होने

**भवितव्यम्। बहुवचने तु कौञ्जायना इति, परमपि ञित्स्वरं त्यक्त्वा चित्स्वर एवेष्यते। गोत्राधिकारश्च 'शिवादिभ्योऽण्' ( ४.१.११२ ) इति यावत्।**

**कुञ्ज। ब्रध्न। शङ्ख। भस्मन्। गण। लोमन्। शठ। शाक। शाकट। शुण्डा। शुभ। विपाश। स्कन्द। स्तम्भ[1] ॥**

**न्यासः**

तु ञ्ये निवृत्ते चकारञकारयोर्विशेषणे वृद्धौ च यथायोगं चरितार्थयोः परत्वाद् 'ञ्नित्यादिर्नित्यम्' इति ञित्स्वरे प्राप्ते तं त्यक्त्वा चित्स्वर एवेष्यते। कथं पुनरिष्यमाणोऽपि स लभ्यते, चित्करणसामर्थ्यादिति चेत्? न; ञित्करण-सामर्थ्याद् ञित्स्वरोऽपि लभ्यते। एवं तर्हि स्वरविधौ योगविभागः करिष्यते, इदमस्ति—'चितः' इति; ततः 'तद्धितस्य' इति, तत्र 'चितः' इत्येवानुवर्तते। किमर्थमिदम्? परत्वात् 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वं प्राप्नोति, तद्बाधनार्थम्। ततः 'कितः' इति, कितश्च तद्धितस्यान्त उदात्तो भवति ॥ ९८॥

**पदमञ्जरी**

वा, चित्स्वरो वेति? तत्र परत्वाद् ञित्स्वरः प्राप्नोति, चित्करणसामर्थ्याच्चित्स्वरो भविष्यति। ञित्करण-सामर्थ्याद् ञित्स्वरः प्राप्नोति? अस्त्यन्यत् ञित्करणस्य प्रयोजनम्, किम्? वृद्ध्यर्थो ञकारः। चित्करणेऽपि तर्ह्यस्त्यन्यत्प्रयोजनम्, किम्? विशेषणम्। शक्योऽत्र विशेषणार्थोऽन्योऽनुबन्ध आसंक्तुम्। तत्र चकारानु-रोधाच्चित्स्वरो भविष्यति। वृद्ध्यर्थोऽपि तर्ह्यन्योऽनुबन्धः शक्य आसंक्तुम्, तत्र ञकारानुरोधाद् ञित्स्वरः प्राप्नोति? एवं स्थिते इदमुच्यते—**परमपि ञित्स्वरं त्यक्त्वा चित्स्वर एवेष्यत इति।** एवं मन्यते—स्वरे योगविभागः कर्त्तव्यः, इदमस्ति 'चितः'—चितोऽन्त उदात्तो भवति, ततः 'तद्धितस्य' चित इत्येव, तद्धितस्य चितोऽन्त उदात्तो भवति। किमर्थमिदम्? परत्वात् प्राप्तस्य ञित्स्वरस्य बाधानार्थम्। ततः 'कितः' कितश्च तद्धितस्यान्त उदात्तो भवतीति। यदि तु च्फप्रत्ययः क्रियते, तद्धितस्येति योगविभागः शक्योऽकर्तुम्। अथैवं कस्मान्न क्रियते—'गोत्रे कुञ्जादिभ्यश्च्फञ्, बहुषु फक् नडादिभ्यश्च' इति? नैवं शक्यम्; इह हि दोषः स्यात्—कौञ्जायनानामपत्यं माणवकः कौञ्जायन्यः, कौञ्जायन्यौ; एकेन यशब्दः श्रूयते, द्वयेकयोर्हि च्फञ्विधीयते। यदा तु च्फञन्तात् ञ्यो विधीयते तदा यून्युत्पन्नस्येञः 'ण्यक्षत्रियार्षञितः' इति लुकि कृते 'तद्राजस्य' इति ञ्यस्य लुकि प्राप्ते 'गोत्रेऽलुगचि' इति प्रतिषेधाद्यशब्दस्य श्रवणं भवति। तथा कौञ्जायन्यस्यापत्यानि बहूनि, अत इञो लुकि तद्राजस्यैव बहुषु वर्त्तमानत्वाद् ञ्यस्य लुकि कौञ्जायना इति भवति ॥ ९८ ॥

**भावबोधिनी**

पर "तद्राजस्य बहुषु तेनैवास्त्रियाम्" २।४।६२ से तद्राजसंज्ञक ञ्य का लुक् हो जाता है। ] ब्राध्नायन्यः, ब्राध्नायन्यौ [ ब्रध्नस्य अपत्यम्—ब्रध्न + च्फञ्, शेष सभी प्रक्रिया पूर्ववत्। बहुवचन में ञ्य का लुक् ] ब्राध्नायनाः। गोत्रसंज्ञक अपत्य अर्थ में—इसका क्या फल है? कुञ्जस्य अनन्तरम् अपत्यम्—कौञ्जिः। [ यहाँ कुञ्ज का अपत्य = पुत्र अर्थ है, जबकि 'अपत्यं पौत्रप्रभृति गोत्रम्" ४।१।१६२ से तीसरी या आगे की पीढ़ी की सन्तान गोत्र कही जाती है। अतः यहाँ च्फञ् न होकर "अत इञ्" ४।१।९५ से इञ् ही होता है। [ कौञ्जायन्यः कौञ्जायन्यौ—इन ] एकवचन और द्विवचन में सतिशिष्ट होने के कारण ञित् स्वर ही होना चाहिये। किन्तु [ कौञ्जायनाः इस ] बहुवचन में परवर्त्ती भी ञित् स्वर को छोड़कर चित् स्वर ही इष्ट है। "शिवादिभ्योऽण्" ४।१।११२ तक गोत्र का अधिकार चलता है। [ गोत्रसंज्ञक अपत्य अर्थ में प्रत्यय होते हैं। ] [ इस गण में पठित शब्द—] कुञ्ज। ब्रध्न। शङ्ख। भस्मन्। गण। लोमन्। शठ। शाक। शाकट। शुण्डा। शुभ। विपाश। स्कन्द। स्तम्भ।

---

१. अत्र—शुम्भा, शिव, शुभंया,—एतेऽपिशब्दाः क्वचित्।

## १३४९. नडादिभ्यः फक् ॥ ९९ ॥ ( ११०१ )

**नड – इत्येवमादिभ्यः प्रातिपदिकेभ्यो गोत्रापत्ये फक् प्रत्ययो भवति । नाडायनः । चारायणः । गत्रो इत्येव – नाडिः ।**

*** 'शलङ्कु शलङ्कं च' * ( ग० सू० ६७ ) इति, अत्र पठ्यते – शालङ्कायनः, पैलादिषु च शालङ्किशब्दः पठ्यते—शालङ्किः पिता, शालङ्किः पुत्रः; तत्कथम् ? गोत्रविशेषे कौशिके फकं स्मरन्ति, इञेवान्यत्र—शालङ्किरिति । अथ वा - पैलादिपाठ एव ज्ञापक इञो भावस्य ।**

न्यासः

**नडादिभ्यः फक् ॥** नडादिषु **शलङ्कु शलङ्कञ्चेति पठ्यते ।** तस्यायमर्थः—शलङ्कुशब्दः प्रत्ययमुत्पादयति शलङ्कभावं चापद्यते, तेन शालङ्कायन इति भवति । **पैलादिष्विति ।** पैलादिषु शालङ्किशब्द इञन्तः पठ्यते, तत उत्पन्नस्य युवप्रत्ययस्य लुग् यथा स्यात्—**शालङ्किः पिता, शालङ्किः पुत्र इति ।** तत्र हि 'ण्यक्षत्त्रियार्षञितः' इत्यादेः सूत्राद् 'यूनि लुक्' इति चानुवर्तते, तस्य शालङ्किशब्दस्य तत्र पाठो न युज्यते नडादिषु पाठात् फका भवितव्यमिति कृत्वा, तत् कथमिञन्तस्तत्र पठ्यत इति चोद्यम् । तस्य परिहारमाह—**गोत्रविशेष इत्यादि ।** कौशिकं यद् गोत्रं तत्रैव शलङ्कुशब्दादाचार्याः फकं स्मरन्ति, ततोऽन्यत्र त्विञेव भवतीत्यदोषः । स त्विञ् बाह्वादेराकृतिगणत्वाल्लभ्यते । अभ्युपेत्यापि गोत्रमात्रे फको विधानम् । परिहारान्तरमाह- **अथ वेत्यादि ।** इञो भाव उपलक्षणम् । शलङ्कभावस्यापि हि पैलादिपाठ एव ज्ञापकम् । पूर्वत्रापि परिहारे तस्य स एव ज्ञापकं

पदमञ्जरी

**नडादिभ्यः फक् ॥ शलङ्कु शलङ्कं चेति ।** द्वे अपि प्रथमान्ते । शब्दरूपापेक्षया नपुंसकनिर्देशः । 'शलङ्कु' इत्येतच्छब्दरूपं शलङ्कं भवति, तद्रूपेण परिणमते इत्यर्थः । **इञेवान्यत्रेति ।** बाह्वादेराकृतिगणत्वादिति भावः । अभ्युपेत्यापि गोत्रमात्रे फको विधानम्, परिहारमाह—**अथवेति । इञो भावस्येति ।** शलङ्कभावापत्तेरप्युपलक्षणमेतत्, पूर्वत्र परिहारे तस्याः स एव पाठो ज्ञापको वेदितव्यः ।

भावबोधिनी

**विमर्श**—कौञ्जायन्यः यहाँ पहले चित् स्वर 'चितः' ६।१।१६३ से अन्तोदात्त हो जाने पर ञ्य प्रत्यय करने पर ञित् मानकर होने वाला 'ञ्नित्यादिर्नित्यम्'' ६।१।१९७ से आद्युदात्त सतिशिष्ट स्वर है, ''सतिशिष्टस्वर बलीयस्त्वमन्यत्र विकरणेभ्यः'' नियम से पूर्व स्वर के रहते हुये जो स्वर किया जाता है वह सतिशिष्ट होता है, वही बलवान् माना जाता है, अतः उसे छोड़कर अन्य सभी ''अनुदात्तं पदमेकवर्जम्'' ६।१।१५८ से अनुदात्त होते है । परन्तु बहुवचन में ञ्य का लुक् हो जाता है । अतः च्फञ् चित् और ञित् दोनों के स्वर प्राप्त होने पर परवर्त्ती भी ञित् स्वर को छोड़कर चित् स्वर ''चितः'' ६।१।१६३ से अन्तोदात्त ही अभीष्ट है कहीं कुञ्ज और कहीं कुञ्ज पाठ है ॥ ९८ ॥

नड—आदि प्रातिपदिकों से गोत्रापत्य अर्थ में फक् प्रत्यय होता है । उदा०—नाडायनः । चारायणः । [ नडस्य गोत्रापत्यं पुमान्, चरस्य गोत्रापत्यं पुमान्—इस विग्रह में फक् = आयन, आदिवृद्धि होती है । यह गोत्र = पौत्र आदि अपत्य के लिए ही है—नाडिः [ नडस्य अनन्तरम् अपत्यम् = पुत्र में फक् न होकर सामान्य प्रत्यय इञ् ही होता है । शलङ्कु का शलङ्कम् आदेश है और फक् प्रत्यय होता है—यह पढ़ा जाता है । उदा०—[ शलङ्कोः गोत्रापत्यम्—अर्थ में शलङ्कु + फक, शलङ्क आदेश, आयन आदि करने पर ]—शालङ्कायनः और पैलादिगण में शालङ्कि शब्द पठित है । शालङ्कि पिता । शालङ्कि पुत्र । [ ये दोनों ] कैसे होते हैं ? कौशिक नाम गोत्रविशेष अर्थ में फक् होता है, इससे भिन्न में इञ् ही होता है—शालङ्किः अथवा पैलादिगण में पाठ ही इञ् होने का ज्ञापक है । [ पैलादिगण २।४।५९ में शालङ्कि पिता है । उसका पुत्र भी शालङ्कि है, क्योंकि ''पैलादिभ्यश्च'' २।४।५९ प्रस्तुत सूत्र युव प्रत्यय का लुक् कर देता है । ]

**नड । चर । बक । मुञ्च । इतिक । इतिश । उपक । लमक । ❀ शलङ्कु शलङ्कं च ❀ ( ग०सू० ६७ ) । सप्तल । वाजप्य । तिक । ❀ अग्निशर्मन् वृषगणे ❀ ( ग० सू० ६८ ) प्राण । नर । सायक । दास । मित्त्र । द्वीप । पिङ्गर । पिङ्गल । किङ्कर । किङ्कल । कातर । कातल । काश्य । काश्यप । काव्य । अज । अमुष्य । ❀ कृष्णरणौ ब्राह्मणवाशिष्ठयोः ❀ ( ग० सू० ६९ ) । अमित्त्र । लिगु । चित्र । कुमार । ❀ क्रोष्टु क्रोष्टञ्च ❀ ( ग० सू० ७० ) । लोह । दुर्ग । स्तम्भ । शिंशपा । अग्र । तृण । शकट । सुमनस् । सुमत । मिमत । ऋक् । जत् । युगन्धर । हंसक । दण्डिन् । हस्तिन् । पञ्चाल । चमसिन् । सुकृत्य । स्थिरक । ब्राह्मण । चटक । बदर । अश्वक । खरप । कामुक । ब्रह्मदत्त । उदुम्बर । शोण । अलोह । दण्ड[1] ।।**

### न्यासः

वेदितव्यम् । **अग्निशर्मन् वृषगणे इति** । अग्निशर्मञ्शब्दाद् वृषगणे गोत्रे फग्भवति-अग्निशर्मायणः । अन्यत्राणेव-आग्निशर्मः । **अमुष्येति** पठ्यते । तत्र निपातनाद् विभक्तेरलुक् —आमुष्यायण इति । **कृष्णरणौ ब्राह्मणवाशिष्ठयो-रिति** । कृष्णरणशब्दौ यथाक्रमं ब्राह्मणे वाशिष्ठे चाभिधेये फकमुत्पादयतः । कार्ष्णायनो ब्राह्मणः । राणायनो वाशिष्ठः । वशिष्ठगोत्र इत्यर्थः । अन्यत्रेञेव भवति— कार्ष्णिः, राणिरिति । **क्रोष्टु क्रोष्टञ्चेति** पठ्यते । क्रोष्टुशब्दः फकमुत्पादयति, क्रोष्टञ्चापद्यते—क्रौष्टायनः ।। ९९ ।।

### पदमञ्जरी

**अग्निशर्मन्वृषगण इति** । अग्निशर्मशब्दः फकमुत्पादयति वृषगणे गोत्रे, **आग्निशर्मायणो भवति** वार्षगण्यश्चेद्, आग्निशर्मोऽन्यः । **अमुष्येति** पठ्यते, तत्रादःशब्दे प्रातिपदिकमात्रे पठितव्ये विभक्त्यन्तस्य पाठादुत्पन्नेऽपि फकि लुग्न भवति । आमुष्यायणा, आमुष्यपुत्रिकेत्यलुग्विधावस्य ग्रहणं न कर्त्तव्यं भवति । **कृष्णरणौ ब्राह्मणवासिष्ठयोरिति** । कार्ष्णायनो भवति ब्राह्मणश्चेत्, कार्ष्णिरन्यः । राणायनो भवति वासिष्ठश्चेद्, राणिरन्यः । **क्रोष्टु क्रोष्टं चेति** । क्रौष्टायनः ।। ९९ ।।

### भावबोधिनी

[ इस गण में इन शब्दों का पाठ है—] नड । चर । बक । मुञ्च । इतिक । इतिश । उपक । लमक * शलङ्कु का शलङ्कम्—यह आदेश भी होता है । * सप्तल । वाजप्य । तिक । * वृषगण गोत्र में अग्निशर्मन् से फक् होता है—[ आग्निशर्मायणः । अन्य अर्थ में अण् ही होता है—आग्निशर्मः ] । प्राण । नर । सायक । दास । मित्र । द्वीप । [ इसी से फक्=आयन करने पर द्वैपायन बनता है । ] पिङ्गर । पिङ्गल । किङ्कर । किङ्गल । कातर । कातल । काश्य । काश्यप । काव्य । अज । अमुष्य । * ब्राह्मण अर्थ में कृष्ण से और वासिष्ठ = वसिष्ठगोत्र अर्थ में रण शब्द से फक् होता है । [ कार्ष्णायणो ब्राह्मणः । राणायनीयः वसिष्ठः [ वसिष्ठ गोत्र ] । अमित्र । लिगु । चित्र । कुमार । * क्रोष्टु का, क्रोष्टम् आदेश भी होता है । [ क्रोष्टु + फक् = आयन, कोष्टु का क्रौष्ट—कोष्टायनः ] लोह । दुर्ग । स्तम्भ । शिंशपा । अग्र । तृण । शकट । इसी से फक्=आयन करने पर प्रसिद्ध 'शाकटायन' शब्द निष्पन्न होता है । ] सुमनस् । सुमत । मिमत । ऋक् । जत् । युगन्धर । [ इसी से यौगन्धरायण बनता है । ] हँसक । दण्डिन् । हस्तिन् । पञ्चाल । चमसिन् । सुकृत्य । स्थिरक । ब्राह्मण । चटक । बदर । [ इसी से बादरायण बना है । ] अश्वक । खरप । कामुक । ब्रह्मदत्त । उदुम्बर । [ इसी से प्रसिद्ध आचार्य वाचक शब्द औदुम्बरायण सिद्ध होता है । ] शोण । अलोह । दण्ड । [ यहाँ यह ध्यान रखना चाहिये कि यह फक् प्रत्यय गोत्रापत्य = तीसरी पीढ़ी = पौत्र आदि के लिए है । ] ।।९९।।

---

१. एक, वाभ्रव्य, शावक, नाव्य, अन्वजत्, अन्तजन, इत्वरा, अशक, अश्वला, अध्वरा, दण्डय,—अत्रैते शब्दा पुस्तकान्तरेऽधिकाः ।

## १३५०. हरितादिभ्योऽञः ॥ १०० ॥ ( ११०२ )

हरितादिर्बिदाद्यन्तर्गणः । हरितादिभ्योऽञन्तेभ्योऽपत्ये फक् प्रत्ययो भवति । इञोऽपवादः । हरितस्यापत्यं हारितायनः । कैन्दासायनः ।

ननु च 'गोत्रे' इति वर्तते । न च गोत्रादपरो गोत्रप्रत्ययो भवति, 'एको गोत्रे' (४.१.९३) इति वचनात् ? सत्यमेतत्; इह तु गोत्राधिकारेऽपि सामर्थ्याद्यूनि प्रत्ययो विज्ञायते । गोत्राधिकारस्तूत्तरार्थः ॥

## १३५१. यञिञोश्च ॥ १०१ ॥ ( ११०३ )

**न्यासः**

**हरितादिभ्योऽञः** ॥ न चेत्यादि चोद्यम् । सत्यमेतदित्यादि परिहार उच्यते । गोत्रे योऽञ् विहितस्तदन्तेभ्यो हरितादिभ्यः फक् । न च गोत्रप्रत्ययादपरो गोत्रप्रत्ययः सम्भवति । तत्र सामर्थ्याद् गोत्राधिकारेऽपि यूनि प्रत्ययो विज्ञायते । यद्येवम्, गोत्राधिकारः किमर्थः ? इत्याह—**गोत्राधिकार उत्तरार्थ इति** ॥ १०० ॥

**यञिञोश्च** ॥ अथ 'द्वीपादनुसमुद्रं यञ्' इति यो यञ् विहितः, यश्च 'वुञ्छण्' इत्यादिना सूत्रेण सुतङ्गमा-

**पदमञ्जरी**

**हरितादिभ्योऽञः** ॥ 'हरितादिभ्यः', 'अञः' इति व्यधिकरणे पञ्चम्यौ । हरितादिभ्यः परो योऽञ् तदन्तात्प्रातिपदिकादित्यर्थः । **वृत्तिकारोऽप्येतदेव वस्तुतो व्याचष्ट—हरितादिभ्योऽञन्तेभ्य इति** । 'हरितादिभ्यो गोत्रापत्येऽञ्प्रत्ययो भवति' इत्ययं त्वर्थो न भवति; बिदादिषु पाठात् ।

**सामर्थ्यादिति** । गोत्रप्रत्ययान्तादपरो गोत्रप्रत्ययो न भवतीत्येतत्सामर्थ्यम् । तस्माद् गोत्राधिकारेऽपि यूनि प्रत्ययो विज्ञायते । न चैवं गोत्राधिकारस्य विच्छेद इत्याह—**गोत्राधिकार इति** । उत्तरार्थं गोत्रग्रहणमनुवर्त्तत एवेत्यर्थः ॥ १०० ॥

**यञिञोश्च** ॥ **गोत्रग्रहणेन यञिञौ विशेष्येते इति** । गोत्रे यौ यञिञौ विहितावित्येवम् । न चैवं प्रत्ययार्थं-

**भावबोधिनी**

हरितादि शब्द विदादिगण के अन्तर्गत पठित है । अञ्प्रत्ययान्त हरित आदि शब्दों से अपत्य अर्थ में फक् प्रत्यय होता है । यह इञ् का अपवाद है । हरितस्य अपत्यम्—हारितायनः [ हरित से पहले "अनृष्यानन्तर्ये विदादिभ्योऽञ्" ४।१।१०४ से अञ् करके आदिवृद्धि, तब फक् = फ = आयन करने पर हारितायनः अर्थात् हरित का प्रपौत्र ] । कैन्दासायनः [ किन्दास + अञ् + फक् । ]

इसमें 'गोत्रे' की अनुवृत्ति होती है [ और "अनृष्यानन्तर्ये विदादिभ्योऽञ्" ४।१।१०४ में भी 'गोत्रे' की अनुवृत्ति होने के कारण अञ् प्रत्यय भी गोत्र अर्थ में ही किया जा चुका है ] इस स्थिति में गोत्रप्रत्ययान्त से दूसरा गोत्र प्रत्यय नहीं किया जा सकता क्योंकि "एको गोत्रे" यही व्यवस्था है । गोत्र अर्थ में एक ही प्रत्यय होता है, अतः यहाँ 'गोत्रे' की अनुवृत्ति का क्या फल है ? यह सत्य है; इस सूत्र में 'गोत्रे इसका अधिकार रहने पर भी सामर्थ्यवश युवा अपत्य में प्रत्यय समझना चाहिये । गोत्र का अधिकार तो उत्तर सूत्रों में अनुवृत्ति के लिये है ।

**विमर्श**—हरित आदि प्रातिपदिक विदादिगण में पठित हैं । अनृष्यानन्तर्ये विदादिभ्योऽञ्" ४।१।१०४ में गोत्रे का अधिकार होने से अञ् प्रत्यय ही गोत्र अर्थ में हो जाता है । पुनः इस सूत्र से गोत्र अर्थ में फक् करना सम्भव नहीं है, क्योंकि 'एको गोत्रे' ४।१।९३ यह व्यवस्था है । तब इससे होने वाले फक् को किस अर्थ में माना जाय ? इसका उत्तर है कि सामर्थ्य = सगति या उपपत्ति करने के लिए युवा अर्थ में ही यह फक् समझना चाहिये । यहाँ 'गोत्रे' इसकी अनुवृत्ति इसलिए है कि आगे के सूत्रों में इसका सम्बन्ध किया जा सके । इस प्रकार यह सूत्र प्रपौत्र अर्थ में फक् करता है । हरित का प्रपौत्र हरितायन है ॥ १०० ॥

यञ्प्रत्ययान्त और इञ्प्रत्ययान्त प्रातिपदिक से अपत्य अर्थ में फक् प्रत्यय होता है । उदा० गार्ग्यायणः ।

यञन्तादिञन्ताच्च प्रातिपदिकादपत्ये फक्प्रत्ययो भवति। गार्ग्यायणः। वात्स्यायनः। इञन्तात् – दाक्षायणः। प्लाक्षायणः। 'द्वीपादनुसमुद्रं यञ्' (४.३.१०), 'सुतङ्गमादिभ्य इञ्' (४.२.८०), इत्यतो न भवति। गोत्रग्रहणेन यञिञौ विशेष्येते। तदन्तात्तु यून्येवायं प्रत्ययः; 'गोत्राद्यूनि' इति वचनात्॥

१३६२. शरद्वच्छुनकदर्भाद् भृगुवत्साग्रायणेषु ॥ १०२ ॥ (११०४)

'गोत्रे' इत्येव। शरद्वत्, शुनक, दर्भ – इत्येतेभ्यो गोत्रापत्ये फक् प्रत्ययो भवति यथासंख्यं भृगुवत्सा-

न्यासः

दिभ्य इञिति तदन्तात् कस्मान्न भवति, न ह्यत्र कश्चिद् विशेष उपात्तः? इत्यत आह—**द्वीपादनुसमुद्रं यञित्यादि**। गोत्रग्रहणेन ह्यत्र यञिञौ **विशेष्येते**—गोत्रे यौ यञिञाविति। न च 'द्वीपात्' इत्यादिना गोत्रे यञ् विहितः, किं तर्हि? जातादावर्थविशेषे। नापि **सुतङ्ग**मादिभ्यो गोत्रे इञ् विहितः, किं तर्हि? 'तदस्मिन्नस्तीति देशे' इत्येवमादिषु चतुर्ष्वर्थेषु, तेन तदन्तान्न **भवति**। यदि तर्हि गोत्रग्रहणेनेह यञिञौ विशेष्येते, न प्रत्ययार्थः, एवं सति क्वायं प्रत्ययो भवतीति न विज्ञायत इत्यत आह—**तदन्तादित्यादि**। कस्मात् तदित्याह- **गोत्राद् यूनीति वचनादिति**॥ १०१॥

**शरद्वच्छुनकदर्भाद् भृगुवत्साग्रायणेषु। गोत्र इत्येतदिति**। यदि तर्हि गोत्र इति वर्तते, भृगुवत्साभ्यां मूलप्रकृतिभ्यां प्रत्ययार्थस्य विशेषणं नोपपद्यते, गोत्रप्रत्ययान्ताभ्यामेव हि ताभ्यां गोत्रापत्यं प्रत्ययार्थः शक्यो विशेषयितुम्, अत एव युक्तं स्याद्वक्तुम्—भार्गववात्स्यायनाग्रायणेष्विति? नैष दोषः; गोत्राधिकारसामर्थ्याद्धि

पदमञ्जरी

स्यापत्यस्याविशेषितत्वादपत्यमात्रे प्रत्ययप्रसङ्ग इत्याह—**तदन्ताद्यून्येवायं प्रत्यय इति**। एवकारः पौनर्वचनिकः— न केवलं पूर्व एव प्रत्ययो यूनि भवति, अयमपि यून्येवेति। कस्मात्? इत्याह—**गोत्राद्यूनीति वचनादिति**॥ १०१॥

**शरद्वच्छुनकदर्भाद् भृगुवत्साग्रायणेषु**॥ शरद्वदादीनां भृग्वादिवंशप्रभवानां कृत्रिमा अपि पुत्राः सन्ति, स्ववंशप्रभवा अपि, तत्रापत्यविशेषणं क्रियते। तत्र भृगुः शरद्वतोऽपत्यं न भवति; पूर्वभावित्वात्। एवं शुनकस्य वत्सः, तस्माद्भार्गवश्च वात्स्यश्च आग्रायणश्चेति द्वन्द्वे युगपदधिकरणवचनतया वर्त्तिपदस्य बहुषु

भावबोधिनी

वात्स्यायनः [ गर्ग का गोत्रापत्य, वत्स का गोत्रापत्य—इस अर्थ में "गर्गादिभ्यो यञ्" ४।१।१०५ से यञ् प्रत्यय करके—गार्ग्य, वात्स्य बनने पर प्रस्तुत सूत्र से फक् = फ = आयन होने पर उक्त रूप बनते हैं। गर्ग का प्रपौत्र, वत्स का प्रपौत्र ] इञ् प्रत्ययान्त से [ फक् का उदा० ]—दाक्षायणः। प्लाक्षायणः। [ दक्ष से इञ् करने के बाद यह फक् होता है। दक्ष + इञ्, दाक्षि + फक् ] [ "द्वीपादनुसमुद्रं यञ्" ४।३।१० "सुतङ्गमादिभ्य इञ्" ४।२।८० इनसे जहाँ यञ् और इञ् होते हैं, तदन्त से यह फक् नहीं होता है क्योंकि ] गोत्र के ग्रहण से यञ् और इञ् विशेषित किये जाते हैं [ अर्थात् गोत्र अर्थ में होने वाले जो यञ् और इञ् तदन्त से ही गोत्र अर्थ में फक् करता है। गोत्र से दूसरा गोत्र प्रत्यय नहीं होता है अतः ] गोत्रप्रत्ययान्त से युवा अपत्य अर्थ में ही यह फक् प्रत्यय समझना चाहिये; क्योंकि 'गोत्रप्रत्ययान्त से युवा अपत्य में प्रत्यय होता है-ऐसा वचन है। [ यहाँ भी पूर्व सूत्र में उपस्थापित शंका और समाधान के आधार पर युवा अर्थ की ही प्रतीति होती है ]॥ १०१॥

'गोत्रे' इसकी अनुवृत्ति होती है। गोत्रापत्य अर्थ में (१) शरद्वत् (२) शुनक और (३) दर्भ—इन तीन प्रातिपदिकों से क्रमशः (१) भृगु, (२) वत्स और (३) आग्रायण—इन अपत्य विशेष अर्थों की प्रतीति रहने पर फक् प्रत्यय होता है। उदा०—भार्गव अर्थ हो तो शारद्वतायनः [ शरद्वत् + फक्, आदिवृद्धि, फ = आयन ], इससे भिन्न अर्थ में [ अनृष्यानन्तर्ये विदादिभ्योऽञ् ४।१।१०४ से अञ् होने पर ]—शारद्वतः। वात्स्यः [ वत्स का गोत्रापत्य ] अर्थ हो तो शौनकायनः [ शुनक = फक् = आयन, आदिवृद्धि ]। इससे भिन्न अर्थ में शौनकः [ शुनक + अञ् ]। आग्रायण अर्थ हो तो दार्भायणः

ग्रायणेष्वर्थेष्वपत्यविशेषेषु । शारद्वतायनो भवति भार्गवश्चेत्, शारद्वतोऽन्यः । शौनकायनो भवति वात्स्यश्चेत्, शौनकोऽन्यः । दार्भायणो भवति आग्रायणश्चेत्, दार्भिरन्यः । शरद्वच्छुनकशब्दौ बिदादी, ताभ्यामञोऽपवादः फक् ॥

१३९३. द्रोणपर्वतजीवन्तादन्यतरस्याम् ॥ १०३ ॥ ( ११०५ )

'गोत्रे' इत्येव । द्रोणादिभ्यः प्रातिपदिकेभ्यो गोत्रापत्येऽन्यतरस्यां फक् प्रत्ययो भवति । इञोऽपवादः । द्रौणायनः, द्रौणिः । पार्वतायनः, पार्वतिः । जैवन्तायनः, जैवन्तिः ।

कथमनन्तरोऽश्वत्थामा द्रौणायन इत्युच्यते ? नैवात्र महाभारतद्रोणो गृह्यते, किं तर्हि ? अनादिः, तत इदं गोत्रे प्रत्ययविधानम् । इदानीन्तनात्तु श्रुतिसामान्यादध्यारोपेण तथाभिधानं भवति ॥

न्यासः

गोत्रापत्य एव वर्तमानाविह गृह्येते, कार्ये कारणोपचारं कृत्वा । तामेव गोत्रापत्ये तयोर्वृत्तिं दर्शयितुं वृत्ताविल्युक्तम्—शारद्वतायनो भवति भार्गवश्चेद्, शौनकायनो भवति वात्स्यश्चेदिति ॥ १०२ ॥

द्रोणपर्वतजीवन्तादन्यतरस्याम् ॥ कथमित्यादि । यदि गोत्रापत्ये द्रोणादिभ्यः फग् भवति, तत् कथं द्रौणायनः, द्रोणतः प्रतीत्येवमादिषु प्रयोगेष्वनन्तरोऽश्वत्थामा द्रौणायन इत्युच्यते । नैवात्रेति । नात्रेदानीन्तनो द्रोणस्तदनन्तरापत्ये फका द्रौणायन इति, किं तर्हि । अनादिरिति । श्रुतिसम्भवदर्शनार्थमिदमुक्तम् । येन हेतुनाश्वत्थामा द्रौणायन इत्युच्यते तमिदानीन्तनेत्यादिना दर्शयति । इदानीन्तनात् त्वित्यादि । अनादिद्रोणव्यवच्छेदपरमेतद् वेदितव्यम् । न हि तावद् भारतद्रोण इदानीन्तनो भवति; चिरातीतत्वात् । चिरातीतोऽप्यर्थो बुद्धौ परिभाव्यमानो वर्तमानतां प्रतिपद्यते, यथा—अद्य कंसो हन्यताम् । इदानीन्तनाद् द्रोणादप्यश्वत्थाम्नि द्रोणायन इत्येवं गोत्रप्रत्ययेन यदभिधानं तदध्यारोपेण भवति । अविद्यमानस्यैव तत्रासञ्जनमध्यारोपः । कस्याध्यारोपः । गोत्रस्य । श्रुतिसामान्यादिति । अध्यारोपे हेतुः । अनादेर्द्रोणास्याश्वत्थाम्नः पितुश्च द्रोण इति समाना श्रुतिः ।

पदमञ्जरी

वृत्तेरत्त्रिभृग्विति 'यञञोश्च' इति च गोत्रप्रत्ययस्य लुक्, तदाह—भार्गवश्चेद्वात्स्यश्चेदिति । दार्भिरिति । दर्भशब्द ऋषिवचनो न भवति, बाह्वादिषु वा पाठ्यः ॥ १०२ ॥

द्रोणपर्वतजीवन्तादन्यतरस्याम् ॥ पूर्वमुक्तम्-गोत्राधिकारश्च शिवादिभ्योऽण् इति यावदिति, इहाप्युक्तम्-गोत्र इत्येवेति, तत्र नोदयति—कथमिति । नैवात्रेति । यस्य ग्रहणमूरीकृत्य भवानानन्तर्ये दोषमाह, स नैव गृह्यत इत्येवशब्दस्यार्थः । महाभारते द्रोणो महाभारतद्रोणः । अनादिरिति । इदानीमेव ह्युक्तम्-बाह्वादिप्रभृतिष्वित्यादि । नन्वेवं प्रयोगस्यात्यन्तमनुपपत्तिः ? इत्यत आह—इदानीं त्विति । अर्वाचीनादित्यर्थः, न पुनर्महाभारतद्रोणो वृत्तिकारेण समानकालः, अनादेरिदानीन्तनस्य च द्रोण इति श्रुतिः समाना । तत्रानादिद्रोणस्य ये

भावबोधिनी

[ दर्भ नामक ऋषि का गोत्रापत्य ] दर्भ+फक्=आयन, आदिवृद्धि ] इससे भिन्न अर्थ में—दार्भिः [ दर्भ+इञ् ]। शरद्वत् और शुनक शब्द बिदादिगण में पठित है । इन दोनों से अञ् का अपवाद फक् होता है ॥ १०२ ॥

'गोत्रे' इसकी अनुवृत्ति होती है । द्रोण आदि प्रातिपदिक शब्दों से गोत्रापत्य अर्थ में विकल्प से फक् प्रत्यय होता है । यह [ "अत इञ्" ४।१।९५ से प्राप्त ] इञ् का अपवाद है । उदा०—द्रौणायनः, द्रौणिः । [ द्रोण का गोत्रापत्य=पौत्र । द्रोण+फक्, फ=आयन, आदिवृद्धि । फक् न होने पर इञ्—द्रौणिः । ] पार्वतायनः, पार्वतिः [ पर्वत नामक व्यक्ति का गोत्रापत्य=पौत्र । पर्वत+फक्=फ=आयन, आदिवृद्धि । पक्ष में इञ् ] जैवन्तायनः, जैवन्तिः । [ जीवन्त नामक पुरुष का गोत्रापत्य=पौत्र ] ।

[ यदि गोत्र अपत्य=व्यवहित अपत्य=पौत्र अर्थ में द्रोण से यह प्रत्यय होता है तो ] अनन्तर=पुत्र अश्वत्थामा='द्रौणायनः' यह कैसे कहा जाता है, अर्थात् अश्वत्थामा तो द्रोण का पुत्र है और यह फक् प्रत्यय गोत्र=

१३५४. अनृष्यानन्तर्ये बिदादिभ्योऽञ् ।। १०४ ।। ( ११०६ )

'गोत्रे' इत्येव। बिदादिभ्यो गोत्रापत्येऽञ्प्रत्ययो भवति। बैदः। और्वः। ये पुनरत्रानृषिशब्दाः पुत्रादयस्तेभ्योऽनन्तरापत्य एव भवति – पौत्रः, दौहित्रः।

'अनृष्यानन्तर्ये' इत्यस्यायमर्थः – अनृषिभ्योऽनन्तरे भवतीति। यद्ययमर्थः, ऋष्यपत्येषु नैरन्तर्यप्रतिषेधो

न्यासः

अतः श्रुतिसामान्यादनादिद्रोणापत्यस्य यो धर्मो गोत्रत्वं तद्भावं भारतद्रोणापत्येऽश्वत्थाम्न्यपि श्रुतिसामान्याच्चलितबुद्धयः प्रतिपत्तार अध्यारोपयन्ति। तेनाध्यारोपेण द्रौणायन इति तत्राभिधानं प्रवर्तते ।। १०३ ।।

अनृष्यानन्तर्ये बिदादिभ्योऽञ् ।। ये पुनरत्रानृषिशब्दा इत्यादि। ननु च सूत्रे आनन्तर्यशब्दो भावप्रत्ययान्त उपात्तः, तत्रैवं विवरितव्यम्--ये पुनरत्रानृषिशब्दाः पुत्रादयस्तेभ्योऽपत्यानन्तर्य एव भवति। नैतदस्ति; न ह्ययं भावे ष्यञ् विहितः, किं तर्हि। स्वार्थ एव, चातुर्वर्ण्यवत्; अन्यथापत्यस्य धर्म आनन्तर्ये प्रत्ययः स्यात्, नापत्ये, तत्रेष्यते च।

कथं पुनर्गोत्राधिकारे सत्यनृषिभ्योऽनन्तरापत्य एव प्रत्ययो लभ्यते। अत्र गोत्रग्रहणं निवर्तते। ऋषिशब्देभ्योऽनन्तरापत्य एव स्यादित्याह--अनृष्यानन्तर्य इत्यस्यायमित्यादि। यद्ययमर्थ इत्यादि। अस्मिन् ह्यर्थे सत्यनृष्यानन्तर्य इत्येतद् विध्यर्थम् भवति; अनृषेरनन्तरापत्ये प्रत्ययविधानात्। ततश्च ऋष्यपत्य आनन्तर्यप्रतिषेधो न कृतः स्यादित्याह–ऋषिशब्दोऽत्र ऋषिजातावृषित्वे वर्तते। अपत्येषु नैरन्तर्यमिति। 'सप्तमी' इति योग-

पदमञ्जरी

वंश्या अश्वत्थाम्ना समानकालास्ते द्रोणायना इत्युच्यन्ते। तत्र यद् दृष्टं गोत्रत्वं तदश्वत्थाम्न्यपि द्रोणशब्दवाच्यापत्यत्वात् स्खलितबुद्धयः प्रतिपत्तारोऽध्यारोपयन्ति। तेनाध्यारोपेणाश्वत्थामनि तथा द्रौणायन इत्येतद् गोत्रप्रत्ययेनाभिधानं भवति ।। १०३ ।।

अनृष्यानन्तर्ये बिदादिभ्योऽञ् ।। गोत्र इत्येवेति। एतेन येऽत्र ऋषिशब्दा बिदौर्वप्रभृतयस्तेभ्यो गोत्र एवान्यथा स्यादिति गोत्र इत्येतदिहानुवर्त्तनीयमिति दर्शयति—ये पुनरित्यादि।

कथं पुनर्गोत्राधिकारे सत्ययमर्थो लभ्यते? इत्यत्राह—अनृष्यानन्तर्य इत्यस्यायमर्थ इति। 'अनृषि' इति पञ्चम्या लुका निर्देशः, 'आनन्तर्ये' इति स्वार्थे ष्यञ्। एवं च पौत्रा इत्यादावनन्तरस्यैवाभिधानम्, न गोत्रस्य, नापत्यसामान्यस्य च। यद्ययमर्थ इति। अस्मिन् ह्यर्थेऽनृषिभ्योऽनन्तरापत्ये विध्यर्थमिदं भवति, ततश्च ऋष्यपत्यनैरन्तर्ये, ऋषयश्च तेऽपत्यानि च ऋष्यपत्यानि, तेषां नैरन्तर्ये, ऋषिरूपाण्यपत्यानि निरन्तराणि यत्र

भावबोधिनी

पौत्र अर्थ में होता है, अतः यह प्रयोग नहीं होना चाहिये ? यहाँ महाभारत में वर्णित द्रोण शब्द नहीं लिया जाता है। तो कौन लिया जाता है ? अनादि द्रोण लिया जाता है। इसी शब्द से गोत्र अर्थ में प्रत्यय का विधान है। अर्वाचीन द्रोण से तो श्रुतिसामान्य [ एक प्रकार की आनुपूर्वी सुनाई देने के कारण ] अध्यारोप के कारण वैसा [ द्रोण का ] अभिधान होता है। [ आशय यह है कि अनादि द्रोण और महाभारतीय द्रोण शब्द एक प्रकार के हैं, अतः अनादि द्रोणापत्य का जो गोत्रापत्य रूप धर्म है, उसे साधारण लोग महाभारत के द्रोणापत्य में आरोपित कर देते हैं, अतः वह प्रमाणित प्रयोग नहीं है ] ।। १०३।।

'गोत्रे' की अनुवृत्ति होती है। बिद आदि [ समर्थ प्रातिपदिकों ] से गोत्र अपत्य अर्थ में अञ् प्रत्यय होता है। उदा०–बैदः [बिदस्य गोत्रापत्यम् बिद + अञ्, आदिवृद्धि] । और्व : [ उर्व का गोत्रापत्य = पौत्र, उर्व = अञ् ]। इस गण में जो ऋषिभिन्न पुत्र आदि शब्द हैं, उनसे अनन्तर अपत्य = अव्यवहित अपत्य अर्थात् साक्षात् सन्तान पुत्र अर्थ में ही यह प्रत्यय होता है। उदा०–पौत्रः [ पुत्रस्य पुत्रः ]। दौहित्रः [ दुहितुः पुत्रः, कन्या का पुत्र = नाती ]।

अनृषि-आनन्तर्य—इसका यह अर्थ है—अनृषि = ऋषिभिन्न शब्दों से अनन्तर = अव्यवहित = साक्षात् अपत्य

**न कृतः स्यात्, तत्रेदं न सिद्धयति – 'इन्द्रभूः सप्तमः काश्यपानाम्' ( वंश ब्रा० २.२४ ) अनन्तरापत्यरूपेणैव ऋष्यणाभिधानं भविष्यति । अवश्यं चैतदेवं विज्ञेयम् । ऋष्यपत्ये नैरन्तर्यविषये प्रतिषेधे विज्ञायमाने कौशिको विश्वामित्र इति दुष्यति ।**

**गोत्रे इत्येव – बैदिः । ननु च ऋष्यणा भवितव्यम् ? बाह्वादिराकृतिगणः, तेनेञेव भवति ।**

**बिद । उर्व । कश्यप । कुशिक । भरद्वाज । उपमन्यु । किलालप । किदर्भ । विश्वानर । ऋष्टिषेण ।**

**न्यासः**

विभागात् समासः । पश्चादृषेरपत्यनैरन्तर्यमिति षष्ठीसमासः । तदायमर्थो भवति - ऋषित्वस्यापत्येषु नैरन्तर्यविषयेऽञः प्रतिषेधो न कृतः स्यात् । अथ वा-ऋषयश्च तेऽपत्यानि च ऋष्यपत्यानि, तेषां नैरन्तर्यं तद्विषये प्रतिषेधोऽञः प्रत्ययस्य न कृतः स्यादित्यर्थः । तत्र को दोषः ? इत्याह—**तत्रेदमित्यादि** । सप्त काश्यपा ऋषयोऽपत्यापत्यवत्सम्बन्धेन परस्परं सम्बद्धाः, येषां मित्रहूर्नाम काश्यपः सप्तमः, तेषामृषित्वस्यापत्येषु नैरन्तर्यम् । तत्र ऋष्यपत्यानां वा नैरन्तर्ये विषयेऽञः प्रतिषेध इष्यते, काश्यपानामित्येद्रूपं यथा स्यात् । अञि सति तस्य बहुषु लोपात् कश्यपानामिति प्राप्नोति । स च प्रतिषेधोऽस्मिन्नर्थे सति न प्राप्नोति, ततश्च काश्यपानामिति न सिध्यति । तस्माद् 'अनृष्यानन्तर्ये' इत्यस्य ऋष्यपत्यनैरन्तर्येण न भवतीत्येषोऽर्थो विज्ञायत इत्यभिप्रायः । **अनन्तरापत्यरूपेणैवेति** । न चात्र गोत्रापत्यं विवक्षितम् । किं तर्हि ? अनन्तरापत्यम् । अतोऽनन्तरापत्यरूपेणैव ऋष्यणा ऋष्यन्धकादिसूत्रविहितेन काश्यपानामित्यभिधानं भविष्यति । एतदेव द्रढयितुमाह—**अवश्यञ्चेत्यादि** । ऋष्यपत्यं नैरन्तर्यं विषयो यस्य प्रतिषेधस्य स तथोक्तः । ऋषित्वस्यापत्येषु ऋष्यपत्यानां वा यन्नैरन्तर्यं विषयो तद्विषये प्रतिषेधे विज्ञायमान इत्यर्थः । **कौशिको विश्वामित्र इति दुष्यतीति** । किं कारणम् ? विश्वामित्रस्तपस्तेपे—नानृषिः स्यामिति, तत्रभवानृषिः सम्पन्नः; स पुनस्तपस्तेपे—नानृषेः पुत्रः स्यामिति, तत्रभवान्

**पदमञ्जरी**

तस्मिन्विषये प्रतिषेधो न कृतः स्यात्, तत्र को दोषः ? इत्यत्राह—**तत्रेदमिति** । कश्यप ऋषिस्तस्यापत्यमप्यृषिः, एवम् 'सप्त नैरन्तर्येण ऋषयस्तेषां सप्तम इन्द्रभूर्नाम तत्र काश्यपानाम्' इति प्रयोगो नोपपद्यते; अञि सति 'यञञोश्च' इति लुक्प्रसङ्गात् । तस्माद् 'अनृष्यानन्तर्ये' इत्यस्य ऋषीणामानन्तर्येऽव्यवधाने प्रत्ययो न भवतीत्ययमर्थो व्याख्येय इति भावः । प्रयोगं तावदुपपादयति—**अनन्तरापत्यरूपेणेति** । अपत्यसामान्यरूपेणेत्यर्थः । न पुनरृष्यणनन्तरापत्ये विधीयते । तत्र यथा 'अभूत्नृपः' इत्यादौ वस्तुतो भूतविशेषेऽपि सामान्यविवक्षया लुग् भवति, तद्वदिहापि वस्तुतो गोत्रेऽपि तद्रूपतिरस्कारेणापत्यसामान्यरूपविवक्षया ऋष्यण् भवतीत्यर्थः । किं पुनः कारणमियं क्लिष्टकल्पनाऽऽश्रीयते ? इत्याह—**अवश्य चैतदेवं विज्ञेयमिति** । ऋषीणामपत्यानां नैरन्तर्यं विषयो यस्य प्रतिषेधस्य स तथोक्तः । **कौशिको विश्वामित्र इति दुष्यतीति** । किं कारणम् ?

**भावबोधिनी**

अर्थात् पुत्र अर्थ में यह प्रत्यय होता है । यदि यह पूर्वोक्त अर्थ है, तो ऋषि रूप अपत्य में नैरन्तर्य = अव्यवधान का प्रतिषेध नहीं किया जा सकता [ अर्थात् ऋषि-अपत्यों में भी आनन्तर्य = अव्यवधान = साक्षात् पुत्र अर्थ में ही प्रत्यय होने लगेगा ]—तब यह प्रयोग नहीं उपपन्न होगा—"इन्द्रभूः सप्तमः काश्यपानाम् ।" [ कश्यप ऋषि थे, उनका अपत्य भी ऋषि था । इस प्रकार लगातार सात पीढ़ियाँ ऋषि ही रहे । उनमें सातवीं पीढ़ी में इन्द्रभूः नाम का अपत्य हुआ । यहाँ 'काश्यपानाम्'—यह अञ् प्रत्ययान्त प्रयोग नहीं हो सकता क्योंकि "यञञोश्च" २।४।६४ से बहुवचन में अञ् का लुक् हो जाने से कश्यपानाम् यह आदिवृद्धि-रहित होना चाहिये । इसका समाधान कर रहे हैं—] अनन्तर अपत्य रूप अर्थात् अपत्य सामान्यरूप से ही "ऋष्यन्धक०" ४।१।१०४ आदि सूत्र से विहित अण् के द्वारा अभिधान हो जायगा । [ अर्थात् यहाँ गोत्रापत्य अर्थ में अञ् न करके सामान्य अर्थ में अण् है । उसका लुक् नहीं होता है, अतः काश्यपानाम्—यह शुद्ध है । यह अवश्य समझना चाहिये कि ऋषि-अपत्य में नैरन्तर्य विषयक = अव्यवधानविषयक प्रतिषेध का ज्ञान कराने पर—कौशिकः

**ऋतभाग । हर्यश्व । प्रियक । आपस्तम्ब । कूचवार । शरद्वत् । शुनक । धेनु । गोपवन । शिग्रु । बिन्दु । भाजन । अश्वावतान । श्यामाक । श्यमाक । श्यापर्ण । हरित । किन्दास । वह्यस्क । अर्कलूष । वध्योष । विष्णुवृद्ध । प्रतिबोध । रथन्तर । रथीतर । गविष्ठिर । निषाद । मठर । मृद । पुनर्भू । पुत्र । दुहितृ । ननान्दृ । ॐ परस्त्री परशुं च[1] ॐ ( ग० सू० ७१ ) ॥**

**न्यासः**

गाधिरपि ऋषिः सम्पन्नः; स पुनस्तपस्तेपे--नानृषेः पौत्रः स्यामिति; तत्रभवान् कुशिकोऽपि ऋषिः सम्पन्नः। तदेतद्भवति— ऋषित्वस्यापत्येषु नैरन्तर्यम्, ऋष्यपत्यानां वानन्तर्यम् । ततश्च ऋष्यपत्यनैरन्तर्ये न भवतीत्येवं विज्ञायमाने कौशिको विश्वामित्र इति न सिध्यति ।

**परस्त्री परशुञ्चेति** । परस्त्रीशब्दः प्रत्ययमुत्पादयति परशुभावञ्चापद्यते । परस्त्रिया अपत्यं पारशवः ॥ १०४ ॥

**पदमञ्जरी**

विश्वामित्रस्तपस्तेपे—नानृषिः स्यामपि तु ऋषिरेव स्यामिति, तत्र भवानृषिः सम्पन्न; स पुनस्तपस्तेपे-- नानृषेः पुत्र स्यामिति, तत्र भवान् गाधिरप्यृषिः सम्पन्नः; स पुनस्तपस्तेपे—नानृषेः पौत्रः स्यामिति, तत्र भवान्कुशिकोऽपि ऋषिः सम्पन्नः । तदेतदृष्यानन्तर्यं सम्भवति ।

**परस्त्री परशुं चेति** । द्वितीयानिर्देशादापद्यते इति शेषः । परस्त्रीशब्दः प्रत्ययमुत्पादयति, परशुं चादेशमापद्यते, परस्त्रिया अपत्यं पारशवः, ब्राह्मणस्य शूद्रायामूढायामुत्पन्नः, सा च जातितः परस्त्री भवति । यस्तु परभार्यायामुत्पन्नः पारस्त्रैणेयः स भवति कल्याण्यादिः, अनुशतिकादिश्च । पारशव इत्यत्र पूर्वोत्तरपदसम्प्रमोहादनुशतिकादिकार्याभावः ॥ १०४ ॥

**भावबोधिनी**

विश्वामित्रः--यह प्रयोग अशुद्ध होने लगेगा । [ विश्वामित्र ने तपस्या की थी कि मैं अनृषि न रहूँ, अपितु ऋषि हो जाऊँ । वे ऋषि हो गये । फिर तपस्या की कि--अनृषि का पुत्र न रहूँ, ऋषि का पुत्र हो जाऊँ । तो इनके पिता गाधि भी ऋषि बन गये, ये ऋषिपुत्र भी हो गये । फिर तपस्या की कि अनृषि का पौत्र हो जाऊँ । तब इनके पितामह कुशिक भी ऋषि हो गये । इस प्रकार ऋषि-आनन्तर्य सम्भव हो गया । यदि आनन्तर्य का प्रतिषेध माना जायगा तो--'कौशिकः = कुशिक का व्यवहित अपत्य विश्वामित्र--यहाँ अञ् सम्भव न होने से कौशिकः नहीं बन सकता । ]

**विमर्श**—इस सूत्र में अनृष्यानन्तर्ये--इसके दो अर्थ हो सकते हैं—(१) ऋषियों के आनन्तर्य = अव्यवधान में नहीं होता है । अथवा स्वार्थ में ष्यञ् मानकर अनन्तरम् एव आनन्तर्यम् । और अनृषि—यहाँ लुप्तपञ्चमी हैं । अतः (२) ऋषियों से अनन्तरे = अव्यहित अपत्य में प्रत्यय नहीं होता है । सूत्र के दो वाक्य बनाकर अर्थ करने चाहिये— (१) प्रथम वाक्य में पूरा सूत्र है—विदादिगण पठित ऋषिवाचक से भिन्न प्रातिपदिक से अनन्तर अपत्य साक्षात् पुत्र अर्थ में अञ् होता है । (२) दूसरा वाक्य है—विदादिभ्योऽञ् ।···· विदादि ऋषिवाची से गोत्र = व्यवहित अपत्य में ही अञ् होता है । इससे यह निष्कर्ष निकला कि अनृषि से गोत्र अर्थ में नहीं होता है और ऋषि से अनन्तर = साक्षात् पुत्र अर्थ में नहीं होता है । काश्यपानाम्—यहाँ ''ऋष्यन्धक'' ४।१।१०४ से अण् है, उसका लुक् नहीं होता है, और अपत्यसामान्य अर्थ में अण् होने से व्यवहित अव्यवहित सभी अपत्य प्रतीत होते हैं । दो वाक्य मानकर ही काशिकाकार ने पहले—विदस्य गौत्रापत्यम्—बैदः । विद का पौत्र—यह उदाहरण दिया है । आगे निरन्तर = साक्षात् अपत्य पुत्र मानकर अनृषिवाची पुत्र से अञ् करके—पौत्रः, दुहितृ से अञ् करके दौहित्रः ये उदाहरण दिये हैं । पुत्र का पुत्र = पौत्र । दुहिता का पुत्र = नाती ] ।

---

१. किलात, संबक, शाबली, श्यायक, अलस—एतेऽत्राधिकाः शब्दा क्वचित् ।

## १३५५. गर्गादिभ्यो यञ् ॥ १०५ ॥ ( ११०७ )

**'गोत्रे' इत्येव । गर्गादिभ्यो गोत्रापत्ये यञ् प्रत्ययो भवति । गार्ग्यः । वात्स्यः ।**

**मनुशब्दोऽत्र पठ्यते, तत्र कथम्—मानवी प्रजा ? 'गोत्रे' इत्युच्यते, अपत्यसामान्ये भविष्यति ।**

**कथमनन्तरो रामो जामदग्न्यः, व्यासः पाराशर्य इति ? गोत्ररूपाध्यारोपेण भविष्यति । अनन्तरापत्य-विवक्षायां तु ऋष्यणैव भवितव्यम्—जामदग्नः, पाराशर इति ।**

**गर्ग । वत्स । ॐ वाजाऽसे[1] ॐ ( ग० सू० ७२ ) । संकृति । अज । व्याघ्रपात् । विदभृत् । प्राचीनयोग ।**

**न्यासः**

**गर्गादिभ्यो यञ् ॥ कथं मानवी प्रजेति** । गर्गादिषु पाठाद् यञा भवितव्यम्, ततश्च मानवीति न सिध्यतीति । लोहितादिलक्षणे हि यञन्तात् तु ष्फे विहिते मानव्यायनीति भवितव्यमित्यभिप्रायः । **गोत्र-मित्युच्यते**, गोत्रे हि यञ् प्रत्यय उच्यते, नापत्यसामान्ये । तेन तत्रौत्सर्गिकोऽण् मानवीति भविष्यति । **कथमित्यादि** । यदि गोत्रमित्युच्यते, ततो यथा गर्गशब्दादनन्तरापत्ये यञ् न भवति, तथा च जमदग्निपराशर-शब्दाभ्यामपि न भवितव्यम्, तत्कथमनन्तरो रामो जामदग्न्यः, व्यासः पाराशर्य इत्यत्र यञ् भवति ?

**पदमञ्जरी**

**गर्गादिभ्यो यञ् ॥ अपत्यसामान्ये भविष्यतीति** । अन्ये तु—'मनुतन्तुशब्दसमुदाय एकः, न तु द्वौ शब्दौ पठितौ इति वदन्ति, तथा च ब्राह्मणे—मानुतन्तव्यमुवाचेति प्रयोगः । कालवमनुतन्तुकुशिकानामिति च प्रवरे ।

**कथं मानवीति** । लोहितादिपाठान्नित्येन ष्फेण भाव्यमिति भावः । **अनन्तरापत्यविवक्षायां त्विति** । गोत्रस्यापीति बोद्धव्यम्, तथा च जामदग्नाः, वात्सा इति प्रवरे प्रयोगः । **वाजाऽसे इति** । वाजशब्दो

**भावबोधिनी**

ऋषिवाची से गोत्र अर्थ में ही होता है अतः—बैदिः [ बिदस्य अपत्यम् अर्थ में इञ् है । ] यहाँ "ऋष्यन्धक" सूत्र से अण् होना चाहिये ? 'बाह्वादिगण' आकृतिगण माना गया है । अतः उससे इञ् ही होता है । [ इस बिदादिगण में इन शब्दों का संग्रह है—] बिद । उर्व । कश्यप । कुशिक । भरद्वाज । उपमनु । कीलालप । किदर्भ । विश्वानर । ऋषिषेण । ऋतभाग । हर्यश्व । प्रियक । आपस्तम्ब । कूचवार । शरद्वत् [ अभिज्ञान-शाकुन्तल का शारद्वत इसी से सम्बद्ध है ] । धेनुक । गोपवन । शिग्रु । बिन्दु । भाजन । अश्वावतान । श्यामाक । श्यमाक । श्यापर्ण । हरित । किन्दास । वह्यस्क । अर्कलूष । वध्योष । विष्णुवृद्ध । प्रतिबोध । रथन्तर । रथीतर । गविष्ठिर । निषाद । मठर [ न्याय में प्रचलित माठर इसी से सम्बद्ध है ] । मृद । पुनर्भू । पुत्र । दुहितृ । ननान्दृ । * परस्त्री को परशु आदेश और अञ् प्रत्यय होता है ।"* [ परस्त्रियाः अपत्यम् इस अर्थ में परस्त्री का परशु आदेश और अञ् प्रत्यय, आदिवृद्धि, उकार का गुण अवादेश करने पर—पारशवः बनता है । ब्राह्मण ने शूद्रा स्त्री में जो सन्तान उत्पन्न की है वह परस्त्री में ही है । अतः उसी के वाचक रूप में यह शब्द है ] ॥ १०४ ॥

'गोत्रे' इसकी अनुवृत्ति होती है । गर्ग आदि [ षष्ठीसमर्थ प्रतिपदिकों ] से गोत्रापत्य [ पौत्र आदि अर्थों ] में यञ् प्रत्यय होता है । उदा०—गार्ग्यः [ गर्ग का गोत्रापत्य = पौत्र ] । वात्स्यः [ वत्स का गोत्रापत्य = पौत्र । यञ् = य प्रत्यय, भसंज्ञा और अलोप करने पर गार्ग्य, वात्स्य शब्द सिद्ध होते हैं । ] इस गण में मनु शब्द भी पठित है, तब—मानवी प्रजा—यह कैसे होता है ? [ अर्थात् यञ् होना चाहिये ? ] उत्तर यह है कि यहाँ गोत्र अपत्य अर्थ में यञ् कहा गया है । 'मानवी' यहाँ अपत्यसामान्य अर्थ में [ "तस्यापत्यम्" ४।१।९२ से अण् ] हो जायगा । रामः जामदग्न्यः, व्यासः पाराशर्यः—ये अव्यवहित अपत्य अर्थात् साक्षात् पुत्र अर्थ में कैसे होते हैं [ क्योंकि यह यञ् तो गोत्र = व्यवहित अपत्य पौत्र आदि में ही होता है ] ? गोत्ररूप का अध्यारोप करके हो जायगा । [ अर्थात् अनन्तर अपत्य में गोत्रापत्य

---

१. 'असमासे । असे इति किम् ? सौवाजिः'—इत्यधिकं पुस्तकान्तरे ।

**अगस्ति । पुलस्ति । रेभ । अग्निवेश । शङ्ख । शठ । धूम । अवट । चमस । धनञ्जय । मनस । वृक्ष । विश्वावसु । जनमान । लोहित । संशित । बभ्रु । मण्डु । मक्षु । अलिगु । शङ्कु । लिगु । गुलु । मन्तु । जिगीषु । मनु । तन्तु । मनायी । भूत । कथक । कष । तण्ड । वतण्ड । कपि । कत । कुरुकत । अनडुह् । कण्व । शकल । गोकक्ष । अगस्त्य । कुण्डिन । यज्ञवल्क । उभय । जात । विरोहित । वृषगण । रहूगण । शण्डिल । वण । कचुलुक । मुद्गल । मुसल । पराशर । जतूकर्ण । मन्त्रित । संहित । अश्मरथ । शर्कराक्ष । पूतिमाष । स्थूण । अररक । पिङ्गल । कृष्ण । गोलुन्द । उलूक । तितिक्ष । भिषज् । भडित । भण्डित । दल्भ । चिकित । देवहू । इन्द्रहू । एकलू । पिप्पलू । वृदग्नि । जमदग्नि । सुलोभिन् । उकत्थ । कुटीगु[1] ।**

### न्यासः

**गोत्ररूपाध्यारोपेण भविष्यतीति** । यदानन्तरापत्ययोरपि गोत्ररूपयो रामव्यासयोर्विवक्षितत्वाद् गोत्ररूपाध्यारोपः क्रियते, तदा यञ् भवतीत्यदोषः । असतो न युक्ता विवक्षेत्येतच्च न सम्भावनीयम्; दृश्यते ह्यसतोऽपि विवक्षा, यथा--विन्ध्यो वर्द्धितकः[2], समुद्रः कुण्डिकेति । यदा तर्ह्यनन्तरापत्यविवक्षा भवति, तदा केन भवितव्यमित्याह- **अनन्तरापत्यविवक्षायां त्वित्यादि** । **वाजाऽसे इति** । वाजशब्दो यञमुत्पादयति । असे, असमास इत्यर्थः । वाज्यः । असमास इति किम् ? सौवाजिः ।। १०५ ।।

### पदमञ्जरी

यञमुत्पादयति, असे=असमासे । समासे तु सौवाजिः, 'ग्रहणवता प्रातिपदिकेन' इत्यस्यानित्यत्वज्ञापनार्थः-- 'असे' इति प्रतिषेधः ।। १०५ ।।

### भावबोधिनी

का आरोप करके जामदग्नि से यञ् करके जामदग्न्य और पराशर से यञ् करके पाराशर्य शब्दों की सिद्धि कर लेनी चाहिये । ] यदि अनन्तर अपत्य=पुत्र अर्थ की विवक्षा रहती है तो "ऋष्यन्धक०" ४।१।१०४ सूत्र से अण् ही होना चाहिये--जामदग्नः, पाराशरः ।

[ इस गण 'में' पठित शब्द--] गर्ग । वत्स । * वाज शब्द से असे=असमास में ही यञ् होता । * संकृति । अज । व्याघ्रपात् [ भीष्मपितामह का वैयाघ्रपद्य गोत्र और सांकृत्य प्रवर था--"वैयाघ्रपदगोत्राय सांकृत्यप्रवराय च । अपुत्राय ददाम्येतज्जलं भीष्माय वर्मणे ।।" विदामृत् । प्राचीनयोग । अगस्ति । पुलस्ति । [ रावण इसी गोत्र में हुआ-- पौलस्त्य ] रेभ । अग्निवेश । शङ्ख । शठ । धूम । अवट । चमस । धनञ्जय । मनस । वृक्ष । विश्वावसु । जनमान । लोहित । संशित । बभ्रु । मण्डु । भक्षु । अलिगु । शङ्कु । लिगु । गुलु । मन्तु । जिगीषु [ इसी से जैगीषव्य बनता है । ] मनु । तन्तु । मनायी । भूत । कथक । कष । तण्ड । वतण्ड । कपि । कत । कुरुकत । अनडुह् । कण्व । शकल [ इसी से प्रसिद्ध 'शाकल्य' शब्द बना है ] गोकक्ष्य । अगस्त्य । कुण्डिन [ प्रसिद्ध कौण्डिन्य का मूल शब्द ] । यज्ञवल्क [ याज्ञवल्क्य का मूल शब्द ] उभय । जात । विरोहित । वृषगण । रहूगण । शण्डिल [ शाण्डिल्य का मूल शब्द ] । वण । कचुलुक । मुद्गल [ मौद्गल्य, मौद्गल्यायन का मूल शब्द ] । मुसल । पराशर । जतूकर्ण । मन्त्रित । संहित । अश्मरथ । शर्कराक्ष । पूतिमाष । स्थूण । अररक । पिङ्गल । कृष्ण । गोलुन्द । उलूक [ इसी से औलूक्य बना है । ] तितिक्ष । भिषज् । मडित । मण्डित । दल्भ । चिकित । देवहू । इन्द्रहू । एकलू । पिघलू । वृदग्नि । जमदग्नि [ इसी से जामदग्न्य बनता है ] । सुलोभिन् । उकत्थ । कुटीगु ।

**विमर्श**—इन सभी शब्दों से गोत्रापत्य अर्थात् पौत्र आदि अर्थ में ही यञ् होता है । यदि पुत्र अर्थ में इस प्रत्यय का प्रयोग कहीं मिलता है तो उसे आरोपित मान कर ही उपपादन करना चाहिये ।। १०५ ।।

---

१. पथ, कन्थु, ध्रुव, सुनु, कर्कटक, रुक्ष, तरुक्ष, तलुक्ष, प्रचुल, विलम्ब, विष्णुज--एतेऽप्यत्र शब्दाः क्वचित् ।

२. 'वल्मीकः' इत्यपि क्वचित् ।

## १३५६. मधुबभ्र्वोर्ब्राह्मणकौशिकयोः ॥ १०६ ॥ ( ११०९ )

**मधुशब्दाद् बभ्रुशब्दाच्च गोत्रापत्ये यञ् प्रत्ययो भवति यथासंख्यं ब्राह्मणे कौशिके च वाच्ये । माधव्यो भवति ब्राह्मणश्चेत्, माधव एवान्यः । बाभ्रव्यो भवति कौशिकश्चेत्, बाभ्रव एवान्यः । बभ्रुशब्दो गर्गादिषु पठ्यते, ततः सिद्धे यञि कौशिके नियमार्थं वचनम् । गर्गादिषु पाठोऽप्यन्तर्गणकार्यार्थः – 'सर्वत्र लोहितादिकतन्तेभ्यः' ( ४.१.१८ ) इति । बाभ्रव्यायणी ॥**

## १३५७. कपिबोधादाङ्गिरसे ॥ १०७ ॥ ( १११० )

**कपिबोधशब्दाभ्यामाङ्गिरसेऽपत्यविशेषे गोत्रे यञ् प्रत्ययो भवति । काप्यः । बौध्यः । आङ्गिरस इति किम् ? कापेयः । बौधिः । कपिशब्दो गर्गादिषु पठ्यते, तस्य नियमार्थं वचनम् – आङ्गिरसे यथा स्यात् । लोहितादिकार्यार्थश्च गणे पाठः – काप्यायनी ॥**

### न्यासः

**मधुबभ्र्वोर्ब्राह्मणकौशिकयोः** ॥ यदि तर्हि बभ्रुशब्दस्य गर्गादिपाठादेव सिद्धे कौशिके नियमार्थमिह ग्रहणम्, एवं सति नार्थो गर्गादिषु पाठेन, कौशिके विध्यर्थमेव ग्रहणमस्तु, नास्य ? इत्यत आह—**गर्गादिषु पाठोऽपीत्यादि** । गर्गादिषु पाठोऽपि कर्तव्यः । 'सर्वत्र लोहित' इत्यादिनान्तर्गणकार्यं ष्फो यथा स्यात् । अथ गण एव कौशिकग्रहणं कस्मान्न कृतम्, कः पुनरेवं सति गुणो भवति, सूत्रे पुनर्बभ्रुग्रहणं न कर्तव्यं भवति ? सत्यमेतत्; अपाणिनीयत्वाद् गणस्य । नैवं चाकरणे पाणिनिरुपालम्भमर्हति । गणकारेणापि हि किं न कृतम् ? वैचित्र्यार्थम् । विचित्रा हि गणस्य कृतिर्गणकारेण ॥ १०६ ॥

**कपिबोधादाङ्गिरसे** ॥ **कापेय इति** । 'इतश्चानिञः' इति ढक् । यदि कपिशब्दो गर्गादिषु पठ्यते, नियमार्थं त्विह तस्य ग्रहणम्, एवं सत्याङ्गिरसे विध्यर्थमेवास्य ग्रहणमेवास्तु, नार्थो गर्गादिषु पाठेन ? इत्यत आह—**लोहितादिकार्यार्थश्चेत्यादि** ॥ १०७ ॥

### पदमञ्जरी

**मधुबभ्र्वोर्ब्राह्मणकौशिकयोः** ॥ गण एव बभ्रु कौशिक इति वक्तव्यम्, एवं हि द्विर्बभ्रुग्रहणं न कर्तव्यं भवति ? तथा तु न कृतमित्येव ॥ १०६ ॥

**कपिबोधादाङ्गिरसे** ॥ **कापेय इति** । 'इतश्चानिञः' इति ढक् । **बौधिरिति** । अनृषित्वादिञ्, बाह्वादिर्वा ॥ १०७ ॥

### भावबोधिनी

मधु और बभ्रु शब्द से, क्रमशः ब्राह्मण और कौशिक अर्थ वाच्य रहने पर गोत्रापत्य अर्थ में यञ् प्रत्यय होता है। उदा०—माधव्यः यह होता है यदि ब्राह्मण अर्थ हो तो [ मधु + यञ्, आदिवृद्धि, उकार का गुण और अव् आदेश ]। अन्य अर्थ हो तो माधवः [ मधु + अण् ] ही होता है। बाभ्रव्य :—यह होता है यदि कौशिक अर्थ हो तो [ बभ्रु + यञ् आदिवृद्धि, उकार का गुण, अवादेश ]। अन्य अर्थ हो तो बाभ्रवः [ बभ्रु + अण् ] ही होता है। बभ्रु शब्द गर्गादिगण में पठित है। अतः उसीसे यञ् सिद्ध रहने पर यह वचन कौशिक अर्थ में नियम करने के लिये है, अर्थात् कौशिक अर्थ में ही यह यञ् प्रत्यय होता है। अन्य अर्थ में अण् होता है। गर्गादिगण में बभ्रु का पाठ अन्तर्गण मानकर होने वाले कार्य के लिये है—'सर्वत्र लोहितकतादिन्तेभ्यः' ४।१।१८ [ इससे ष्फ करके ] बाभ्रव्यायणी—यह बनाना है ॥ १०६ ॥

कपि और बोध इन शब्दों से, आङ्गिरस गोत्र अपत्यविशेष वाच्य रहने पर, यञ् प्रत्यय होता है। उदा०—काप्यः। बौध्यः। आङ्गिरस गोत्र वाच्य हो—इसका क्या फल है ? कापेयः। [ कपि शब्द से "इतश्चानिञः" ४।१।१२२ से ढक् = ढ = ए, आदिवृद्धि, इकार का लोप होता है। ] बौधिः [ बुध + इञ् आदिवृद्धि। ] कपि शब्द गर्गादिगण में पठित है, उसका नियम करने के लिये यह सूत्र है—'आङ्गिरस गोत्र वाच्य रहने पर ही हो।' गर्गादिगण में पाठ तो लोहितादि

## १३६८. वतण्डाच्च ॥ १०८ ॥ ( ११११ )

**'आङ्गिरसे' इत्येव। वतण्डशब्दादाङ्गिरसेऽपत्यविशेषे गोत्रे यञ् प्रत्ययो भवति। वातण्ड्यः। आङ्गिरस इति किम्? वातण्डः। किमर्थमिदम्, यावता गर्गादिष्वयं पठ्यते? शिवादिष्वप्ययं पठ्यते। तत्राङ्गिरसे शिवाद्यणोऽपवादार्थं पुनर्वचनम्। अनाङ्गिरसे तूभयत्र पाठसामर्थ्यात् प्रत्ययद्वयमपि भवति – वातण्ड्यः, वातण्डः॥**

## १३६९. लुक् स्त्रियाम् ॥ १०९ ॥ ( १११२ )

'आङ्गिरसे' इत्येव। वतण्डशब्दादाङ्गिरस्यां स्त्रियां यञ्प्रत्ययस्य लुग्भवति। लुकि कृते शार्ङ्गरवादिपाठान्ङीन् भवति - वतण्डी। आङ्गिरस इति किम्? वातण्ड्यायनी। शिवाद्यणि तु वातण्डी॥

### न्यासः

**वतण्डाच्च॥** किमर्थमिदम्? अनर्थकमिदमित्यर्थः। किं कारणमित्याह—**यावतेत्यादि**। **शिवादिष्वपीत्यादिना** प्रयोजनं दर्शयति। यदीदं नोच्येत, ततो गर्गादिपाठादाङ्गिरसे यथा यञ् भवति, तथा शिवादिषु पाठादणपि स्यात्। तस्मादाङ्गिरसे यञा शिवाद्यणो बाधनं यथा स्यादित्येवमर्थं पुनर्वचनम्। अथ गर्गादिपाठादेव सिद्धे, आङ्गिरसे नियमार्थमेतदिति कस्मान्नोक्तम्? अशक्यमेवं वक्तुम्; प्रयोजनाभावे हि नियमार्थं भवति। इह चास्ति प्रयोजनम्, तच्च दर्शितमेव॥ १०८॥

**लुक् स्त्रियाम्॥ वातण्ड्यायनीति**। लोहितादिलक्षणः ष्फः॥ १०९॥

### पदमञ्जरी

**वतण्डाच्च॥ किमर्थमिति**। 'वतण्डाल्लुक् स्त्रियाम्' इत्येव कस्मान्नोक्तम्, किमर्थो योगविभाग इति प्रश्नः। परिहरति—**शिवादिष्वपीति**। वतण्डो नाम ऋषिः, तत ऋषित्वादेवाणि सिद्धे शिवादिषु तस्य पाठो गोत्रे गर्गादियञा समावेशार्थः। तत्र यथाऽनाङ्गिरसे समावेशो भवति, एवमाङ्गिरसेऽपि स्यादिति तन्निवृत्त्यर्थो योगविभाग इत्यर्थः॥ १०८॥

**लुक् स्त्रियाम्॥ वातण्ड्यायनीति**। लोहितादिलक्षणः ष्फः। **वातण्डीति**। ऋषित्वात् ष्यङ् न भविष्यति॥ १०९॥

### भावबोधिनी

अन्तर्गण मानकर [ सर्वत्र लोहितादिकतन्तेभ्यः' ४।१।१८ से ] ष्फ करने के लिये है—काप्यायनी। [ कपि + यञ् + ष्फ = आयन, = काप्यायन + ङीष् करने पर काप्यायनी। ]॥ १०७॥

'आङ्गिरसे' इसकी अनुवृत्ति होती है। आङ्गिरस अपत्यविशेष वाच्य रहने पर गोत्र में वतण्ड शब्द से यञ् प्रत्यय होता है। उदा०—वातण्ड्यः। आङ्गिरस गोत्र वाच्य रहने पर—इसका क्या फल है? वातण्डः [ वतण्ड + अण् ]। यह सूत्र किसलिये है, क्योंकि यह शब्द तो गर्गादिगण में पठित है? शिवादिगण में भी पठित है। अब आङ्गिरस अर्थ में शिवादिगण मानकर प्राप्त अण् का अपवाद करने के लिये यह सूत्र पुनः बनाया गया है। आङ्गिरस से भिन्न अर्थ में तो दोनों गणों में पाठ होने के कारण ये दोनों ही प्रत्यय होते हैं—वातण्ड्यः [ वतण्ड + यञ् ], वातण्डः [ वतण्ड + अण् ]॥ १०८॥

'आङ्गिरसे' इसकी अनुवृत्ति होती है। आङ्गिरसी स्त्री अर्थ वाच्य रहने पर वतण्ड शब्द से यञ् प्रत्यय का लुक् होता है। लुक् हो जाने पर 'शार्ङ्गरवादिगण में पाठ होने से ङीन् होता है—वतण्डी [ वतण्ड + ङीन् ]। आङ्गिरस गोत्र की स्त्री अर्थ रहने पर—इसका क्या फल है? वातण्ड्यायनी [ वातण्ड्य से ष्फ और ङीष् होता है ] शिवादिगण से अण् करके—वातण्डी रूप भी होता है॥ १०९॥

## १३६०. अश्वादिभ्यः फञ् ॥ ११० ॥ ( ११११ )

**'आङ्गिरसे' इति निवृत्तम् । अश्वादिभ्यो गोत्रापत्ये फञ् प्रत्ययो भवति । आश्वायनः । आश्मायनः । ये त्वत्र प्रत्ययान्ताः पठ्यन्ते, तेभ्यः सामर्थ्याद्यूनि प्रत्ययो विज्ञायते ।**

**अश्व । अश्मन् । शङ्ख । बिद । पुट । रोहिण । खर्जूर । खर्जूल । पिञ्जूर । भडिल । भण्डिल । भडित । भण्डित । भण्डिक । प्रहृत । रामोद । क्षत्र । ग्रीवा । काश । गोलाङ्क्य । अर्क । स्वन । ध्वन । पाद । चक्र । कुल । पवित्र । गोमिन् । श्याम । धूम । धूम्र । वाग्मिन् । विश्वानर । कुट । वेश[1] । * शप आत्रेये[1] * ( ग० सू० ७३ ) । नत्त । तड । नड । ग्रीष्म । अर्ह । विशम्य । विशाला । गिरि । चपल । चुनम । दासक । वैल्य । धर्म । आनडुह्य । पुंसिजात । अर्जुन । शूद्रक । सुमनस् । दुर्मनस् । क्षान्त । प्राच्य । कित । काण ।**

**न्यासः**

**अश्वादिभ्यः फञ् ॥ ये त्वत्रेत्यादि ।** 'एको गोत्रे' इति वचनाद् गोत्रप्रत्ययान्तादपरो गोत्रप्रत्ययो नोपपद्यते । तत्र सामर्थ्याद् गोत्राधिकारेऽपि ये गोत्रप्रत्ययान्ताः पठ्यन्ते तेभ्यः 'गोत्राद् यून्यस्त्रियाम्' इति यूनि प्रत्ययो विज्ञायते । **शप आत्रेये इति ।** शपशब्दाद् फञात्रेयश्चेद् भवति शापायन आत्रेयः, अन्यत्र शापिः । वैल्यशब्दो गोत्रप्रत्ययान्तः, तस्माद् यूनि भवति विलिर्नाम राजर्षिः, तस्यापत्यं गोत्रम्, 'वृद्धेत्कोसलाजादाञ् ञ्यङ्' वैल्यः, तस्यापत्यं वैल्यायनो युवा । आनडुह्यशब्दोऽपि गोत्रप्रत्ययान्तो गर्गादिषु, यञन्तत्वात्; तस्मादपि यून्येव फञ्—आनडुह्यायनो युवा । **पुंसि जात इति ।** जातात् पुंसि वर्तमानात् फञ् भवति—जातस्यापत्यं जातायनः । पुंसीति किम् ? स्त्रियां ढगेव भवति—जाताया अपत्यं जातेयः । **आत्रेय भारद्वाज इति ।** आत्रेयशब्दात् फञ् भारद्वाजश्चेदपत्यार्थो भवति—आत्रेयायणो

**पदमञ्जरी**

**अश्वादिभ्यः फञ् ॥ ये त्वत्र गोत्रप्रत्ययान्ताः पठ्यन्त इति ।** वैल्य, आनडुह्य, आत्रेय—इत्येते । तत्र वैल्यशब्दः 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' इति ञ्यङन्तः, विलिर्नाम राजर्षिः, आनडुह्यशब्दो गर्गादियञन्तः, आत्रेयः 'इतश्चानिञः' इति ढगन्तः ।

**शय आत्रेये इति ।** शयशब्दात् फञ् भवति आत्रेयश्चेत्, शायायनः । आत्रेयादन्यत्र शायिः, अनृषित्वादिञ्, बाह्वादिर्वा । अन्ये त्वणमेव प्रत्युदाहरन्ति । **पुंसि जात इति ।** पुंसीति प्रकृतिविशेषणम्, जातस्यापत्यं जातायनः । स्त्रियां तु जाताया अपत्यं जातेय इति ढगेव भवति, अन्यथा लिङ्गविशिष्टपरिभाषया फञेव स्यात् । **आत्रेय भरद्वाजे इति ।** आत्रेयायनो भवति भारद्वाजश्चेत्, अन्यत्रात इञः 'ण्यक्षत्रिय' इति लुक् ।

**भावबोधिनी**

"'आङ्गिरसे'' इसकी निवृत्ति हो जाती है । अश्व आदि से गोत्रापत्य अर्थ में फञ् प्रत्यय होता है । उदा०— आश्वायनः । [ अश्वस्य गोत्रापत्यम्, इस विग्रह में अश्व + फञ् = फ = आयन, आदिवृद्धि ] । आश्मायनः [ अश्मन् + फञ् = फ = आयन, टिलोप ] । इस गण में जो प्रत्ययान्त शब्द पढ़े गये हैं उनसे सामर्थ्यवशात् युवा अर्थ में प्रत्यय ज्ञात होता है । [ भाव यह है कि 'एको गोत्रे' ४।१।९३ इस नियम के अनुसार गोत्रार्थक एक ही प्रत्यय होता है । अतः गोत्रप्रत्ययान्त से पुनः प्रत्यय करने का तात्पर्य है, युवा अर्थ में प्रत्यय करना । अतः चौथी पीढ़ी = प्रपौत्र आदि अर्थ में उनसे प्रत्यय का विधान है । ]

[ इस गण में पठित शब्द—] अश्व । अश्मन् । शङ्ख [ शाङ्खायन-स्मृति-प्रणेता के मूल पुरुष ] बिद । पुट । रोहिण । खर्जूर । खर्जूल । पिञ्जूर । भडिल । भण्डिल । भण्डिक । प्रहृत । रामोद । क्षत्र । ग्रीवा । काश । गोलाङ्क्य । अर्क । शयवन । ध्वन । पाद । चक्र । कुल । पवित्र । गोमिन् । श्याम । धूम । धूम्र । वाग्मिन् । विश्वानर । कुट । वेश । * आत्रेय अर्थ वाच्य रहने पर [शप] शब्द से फञ् होता है । * नत्त । तड । नड । ग्रीष्म । अह । विशम्य । विशाला । गिरि । चपल । चुनम । दासक । वैल्य । धर्म । आनडुह्य । पुंसिजात । अर्जुन । शूद्रक । सुमनस् । दुर्मनस् । क्षान्त । प्राच्य । कित । काण ।

---

१–१. 'वेश आत्रेय' इति वङ्गसंस्करणे मुद्रितः पाठः ।

**चुम्प । श्रविष्ठा । वीक्ष्य । पविन्दा । ※ आत्रेय भारद्वाजे ※ ( ग० सू० ७४ ) । कुत्स । आतव । कितव । शिव । खदिर । ※ भारद्वाज आत्रेये[1] ※ ( ग० सू० ७५ ) ।**

१३६१. भर्गात्त्रैगर्त्ते ॥ १११ ॥ ( १११४ )

**भर्गशब्दादपत्ये विशेषे त्रैगर्ते गोत्रे फञ् प्रत्ययो भवति । भार्गायणो भवति त्रैगर्त्तश्चेत्, भार्गिरन्यः ॥**

१३६२. शिवादिभ्योऽण् ॥ ११२ ॥ ( १११५ )

**'गोत्रे' इति निवृत्तम् । अतः प्रभृति सामान्येन प्रत्यया विज्ञायन्ते । शिवादिभ्योऽपत्येऽण् प्रत्ययो भवति । यथायथमिञादीनामपवादः । शैवः । प्रौष्ठः ।**

**न्यासः**

भारद्वाजः, अन्यत्र आत्रेयिः । **भारद्वाज आत्रेय इति** । भारद्वाजशब्दात् फञ् आत्रेयेऽपत्यविशेषे—भारद्वाजायन आत्रेयः, अन्यत्र—ऋष्यण् ॥ ११० ॥

**भर्गात् त्रैगर्ते ॥ १११ ॥ शिवादिभ्योऽण् ॥ यथायथमिति** । यथास्वम् यस्य य इञादिरात्मीयप्रत्ययस्तदपवादोऽण् विधीयते । अथाणग्रहणं किमर्थम्, न 'शिवादिभ्यः' इत्येवोच्येत ? 'शिवादिभ्यः' इत्येतावत्युच्यमाने यथाविहितमिञादिरेव प्रत्ययो मा भूद्, अणेव यथा स्यादित्येवमर्थमिति चेत् ? नैतदस्ति; यथाविहितमिञादीन् प्रत्ययान् प्रत्येतद्वचनमनर्थकम्; विनाप्यनेन तत्सिद्धेः । तस्मादनन्तरेणाप्यण्ग्रहणमेव भविष्यति । ननु चासत्यण्ग्रहणे फञः प्रकृतत्वात् तस्यैव विधिर्विज्ञायते ? नैतदस्ति; यदि हि शिवादिभ्यः फञ् विधातुमिष्टः स्यात्, ततोऽश्वादिष्वेव तेषां पाठं कुर्यात् । इदं तर्हि प्रयोजनम्—अयमृष्टिषेणशब्दः शिवादिषु पठ्यते, तस्य 'सेनान्तलक्षणकारिभ्यश्च' इति ण्यप्रत्ययः प्राप्नोति । तत्रासत्यण्ग्रहणे पुनर्विधानमिदं तद्बाधने कृतार्थमिति ततो यथा विहितमिञेव स्यात्, नाण्; ततोऽणेव यथा स्यादित्यण्ग्रहणम् ।

**पदमञ्जरी**

**भारद्वाजात्रेये इति** । अत्रिगोत्रजो यदा भारद्वाजगोत्रजेन पुत्रत्वेन स्वीक्रियते तदा प्रत्ययः । स ह्यात्रेयश्च भवति भारद्वाजस्य च गोत्रं भवति । भारद्वाजायन आत्रेयश्चेद्, भारद्वाजोऽन्यः, बिदाद्यञेव भवति ॥ ११० ॥ १११ ॥

**शिवादिभ्योऽण् ॥ यथायथमित्यादि** । तत्रादन्तेष्विञोऽपवादः, मुनि-सन्धिभूमिप्रभृतिषु 'इतश्चानिञः' इति ढकः, स्त्रीप्रत्ययान्तेषु 'स्त्रीभ्यो ढक्' 'द्व्यचः' इति प्राप्तस्य ढकः, गङ्गाविपाट्शब्दयोस्तु यस्मिन्प्राप्ते स वृत्तिकारणैवोक्तः, जरत्कारुशब्दस्य तु पाठे प्रयोजनं चिन्त्यम् । केचिदाहुः—शुभ्रादिष्वयं पठनीयः, जारत्कारेय इति यथा स्यात्, तत्र तु ढका समावेशार्थोऽस्य पाठ इति ।

**भावबोधिनी**

चुम्प । श्रविष्ठा । वीक्ष । पविन्दा । * 'भारद्वाज अर्थ में आत्रेय से फञ् होता है ।' * कुत्स । आतव । कितव । शिव । खदिर । * 'आत्रेय अर्थ में' भारद्वाज से फञ् होता है' * ॥ ११० ॥

त्रैगर्त [ त्रिगर्त देश में उत्पन्न ] वाच्य रहने पर, गोत्र अर्थ में भर्ग शब्द से फञ् प्रत्यय होता है । उदा०—यदि त्रैगर्त वाच्य हो तो भार्गायणः होता है [ भर्ग = फञ् = फ = आयन, आदिवृद्धि, णत्व ]; अन्य अर्थ हो तो भार्गिः [ भर्ग + इञ् ] ॥ १११ ॥

'गोत्रे' इसका निवृत्ति हो जाती है । इससे लेकर आगे सामान्य [ अपत्य सामान्य ] अर्थ में अण् प्रत्यय होता है । यहाँ लक्ष्यों में प्राप्त होने वाले इञ् आदि का अपवाद अण् है । उदा०—शैवः [ शिव का पुत्र, या पौत्र या सम्बन्धी ] । प्रौष्ठः प्रष्ठ का पुत्र या पौत्र, अपत्यसामान्य ]

---

१. जन, वह, खड, जड, ओजस्—एतेऽप्यत्र गणे दृश्यन्ते क्वचित् ।

तक्षन्शब्दोऽत्र पठ्यते कारिलक्षणमुदीचामिञं बाधितुम् । ण्यप्रत्ययस्य तु बाधा नेष्यते । ताक्ष्णः, ताक्षण्यः ।

गङ्गाशब्दः पठ्यते तिकादिफिञा शुभ्रादिढका च समावेशार्थम् । तेन त्रैरूप्यं भवति – गाङ्गः, गाङ्गायनिः, गाङ्गेयः ।

विपाशशब्दः पठ्यते कुञ्जादिलक्षणेन च्फञा समावेशार्थम् । वैपाशः, वैपाशायन्यः ।

शिव । प्रौष्ठ । प्रौष्ठिक । चण्ड । जम्भ[1] । भूरि । सन्धि । मुनि । कुठार । अनभिम्लान[2] । ककुत्स्थ । कहोड । लेख । रोध । खञ्जन । कोहड । पिष्ट । हेहय । खञ्जार । खञ्जाल । सुरोहिका । पर्ण । कहूष । परिल । वतण्ड । तृण । कर्ण । क्षीरह्रद । जलह्रद । परिषिक । जटिलिक । गोफिलिका । बधिरिका । मञ्जीरक । वृष्णिक । रेख । आलेखन । विश्रवण । रवण । वर्त्तनाक्ष । पिटक । पिटाक । तृक्षाक । नभाक । ऊर्णनाभ । जरत्कारु । उत्क्षिपा । रोहितिक । आर्यश्वेत । सुपिष्ट । खर्जूरकर्ण । मसूरकर्ण । तूणकर्ण । मयूरकर्ण । खडरक ।

**न्यासः**

उदीचामिञं बाधितुमिति । 'उदीचाम्' इत्यनेनेञ् प्राप्नोति, ततस्तं बाधितुं तक्षन्शब्दोऽत्र पठ्यते । यथा तर्हि तक्षन्शब्दस्यात्र पाठादुदीचामिञ् बाध्यते, तथा 'सेनान्तलक्षणकारिभ्यश्च' इति यो ण्यस्तस्यापि बाधा प्राप्नोति । ततश्च 'ताक्षण्यः' इति न सिध्यति ? इत्याह—ण्यप्रत्ययस्य तु बाधो नेष्यते । कथमनिष्यमाणापि न भवति ? सुपिष्टशब्दादिभिः साहचर्यात् । इह यस्तक्षन्शब्दः सुपिष्टमयूरखरदूरतक्षन्नित्येवं सुपिष्टादिभिः सह पठ्यते, यथा तेषाञ्चेञपवादार्थोऽत्र पाठः, तैः साहचर्यादस्यापीञपवादार्थ एव पाठो विज्ञास्यते । तत्र शिवादीनां प्राग् भूरिशब्दादिञपवादार्थं वचनम् । भूरि, सन्धि, मुनि—इत्येतेषाम् 'इतश्चानिञः' इति ढकि प्राप्ते । कुठार, अनभिम्लान—इत्येतयोः ककुत्स्थ—इत्येवमादीनां प्राग् जरत्कारुशब्दादिञो बाधनार्थम् । जरत्कारुप्रभृतीनां प्राक् सुपिष्टशब्दात् 'स्त्रीभ्यो ढक्' इति ढकि प्राप्ते । सुपिष्टादीनां प्राक् तक्षन्शब्दादिञः । तक्षन्नित्यस्य कारिलक्षणोदीचामिञः । ऋष्टिषेणस्य सेनान्तलक्षणस्य ण्यस्य च बाधनार्थम् । गङ्गाविपाट्-

**पदमञ्जरी**

ण्यप्रत्ययस्य तु बाधो नेष्यत इति । अत्रा हेतुम् 'उदीचामिञ्' इत्यत्र वक्ष्यति ।

शुभ्रादिढका चेति । 'शुभ्रादिभ्यश्च' इत्यत्र वक्ष्यति—'चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयति, तेन गाङ्गेयः पाण्डवेय इत्यादिसिद्धं भवति' इति, तदभिप्रायेणेदमुक्तम् । रवणविश्रवणशब्दौ पठ्येते, तौ विश्रवःशब्दस्यादेशौ प्रकृत्यन्तरे वा वृत्तिविषये तत्समानार्थे, विश्रवसोऽपत्यं वैश्रवणो रावणः ।

**भावबोधिनी**

इस गण में तक्षन् शब्द का पाठ इसलिये है कि "सेनान्तलक्षणकारिभ्यश्च" ४।१।१५२ से ण्य का अपवाद "उदीचामिञ्" ४।१।१५३ से प्राप्त इञ् का बाध कर सके । ण्य प्रत्यय का बाध करना इष्ट नहीं है । उदा०—ताक्ष्णः [ तक्षन् + अ, अकार लोप, ], ताक्षण्यः [ तक्षन् + ण्य = य, आदिवृद्धि, न का णत्व ] ।

विमर्श—सेनान्तलक्षणकारिभ्यश्च" ४।१।१५२ सूत्र, कारी = तन्तुवाय, बढ़ई आदि के वाचक शब्दों से अपत्य अर्थ में ण्य प्रत्यय करता है । इसके आगे "उदीचामिञ्" ४।१।१५३ इस सूत्र से इञ् प्रत्यय का विधान है । तक्षन् शब्द भी कारिवाची है । अतः ण्य और इञ् दोनों प्रत्यय प्राप्त हैं । शिवादिगण में पाठ करने से इञ् का ही बाध होता है, ण्य का नहीं । इस प्रकार अण् और ण्य के रूप होते हैं—ताक्ष्णः [ तक्षन् + अ, "षपूर्वहन्धृतराज्ञामणि" ६।४।१३५ से अलोप, न् का णत्व, आदिवृद्धि होती है । जब ण्य होता है तो—ताक्षण्यः । [ तक्षन् + ण्य + य, "ये चाभावकर्मणोः" ६।१।१६८ से प्रकृतिभाव होने के कारण टिलोप नहीं होता है । ]

१. 'भण्ड' इति पाठा० ।

२. 'अनभिग्लान' इति वा पाठा ।

**तक्षन् । ऋष्टिषेण । गङ्गा । विपाश । यस्क । लह्य । द्रुघ । अयःस्थूण । भलन्दन । विरूपाक्ष । भूमि । इला । सपत्नी । ※ द्वयचो नद्याः ( ग० सू० ७६ ) । ※ त्रिवेणी त्रिवणं च[1] ※ ( ग० सू० ७७ ) ॥**[2]

**न्यासः**

शब्दयोर्यस्मिन्नप्राप्त इह पाठः **स वृत्तिकारेणैव** व्याख्यातः। यस्कादिभ्यः प्राग् भूमिशब्दादिञि प्राप्ते भूमिशब्दस्य 'इतश्चानिञः' इति ढकि। इलाशब्दस्यापि 'द्वयचश्च' इति ढकि। एवमेव सपत्नीशब्दस्यापि 'स्त्रीभ्यो ढक्' इति ढक्येव। **द्वयचो नद्या इति**। नदीवाचका ये द्वयचस्तेभ्योऽण् भवति, सन्ध्या—सान्ध्यम्, कुल्या—कौल्यम्। ननु चात्र तन्नामिकोऽणस्त्येव ? सत्यमस्ति; स तु 'द्वयचः' इति ढका बाध्यते। तस्मात् तद्बाधनार्थं वचनम्। **त्रिवेणी त्रिवणञ्चेति**। त्रिवेणीशब्दः प्रत्ययमुत्पादयति, त्रिवणञ्चापद्यते। त्रिवेण्या अपत्यं त्रैवणः॥ ११२॥

**पदमञ्जरी**

**द्वयचो नद्या इति**। नदीवाचिनो ये द्वयचः कुल्याप्रभृतयस्तेभ्यस्तन्नामिकाणोऽपवादे 'द्वयचः' इति ढकि प्राप्तेऽण् भवति। **त्रिवेणी त्रिवणं चेति**। त्रिवेण्या अपत्यं त्रैवणः, तन्नमिकाणि सिद्धे आदेशार्थं वचनम्। अथाण्ग्रहणं किमर्थम्, न यथाविहितमित्येवोच्येत, एवमुच्यमाने इञादय एव स्युस्ते विहिताः, पुनरारम्भसामर्थ्याद्यो विहितो न च प्राप्नोति स एवाण् भविष्यति ? इदं तर्हि प्रयोजनम्—ऋष्टिषेणशब्दोऽत्र पठ्यते, तत्र यथाविहितमित्युच्यमाने 'अत इञ्' प्राप्तः, तस्य सेनान्तलक्षणो ण्यो बाधकः प्राप्तः, तत्रारम्भसामर्थ्यादिञ् प्रसज्येत, पुनरण्ग्रहणादणेव भवति॥ ११२॥

**भावबोधिनी**

[ अनु० ] इस गण में गंगा शब्द का पाठ "तिकादिभ्यो फिञ्" ४।१।१५४ से फिञ् और "शुभ्रादिभ्यश्च" ४।१।१२३ से ढक् का समावेश करने के लिये है अर्थात् तीनों प्रत्यय होते हैं। इसलिये तीन रूप होते हैं--गाङ्गः [ गङ्गा + अण् ], गाङ्गायनिः [ गङ्गा + फिञ् ], गाङ्गेयः [ गङ्गा + ढक् ]।

"कुञ्जादिभ्यश्च्फञ्" ४।१।९८ से च्फञ् का समावेश करने के लिये विपाश शब्द का पाठ है। उदा०—वैपाशः [ विपाश = अण् ]। वैपाशायन्यः [ विपाश + च्फञ् = फ = आयन, आदिवृद्धि, वैपाशायन--से "व्रातच्फञोरन्यतरस्याम्" ५।३।११३ से ञ्य करने पर रूप सिद्ध होता है। ]

[ इस गण में पठित शब्द--] शिव। प्रौष्ठ। प्रौष्ठिक। चण्ड। जम्भ। भूरि। सन्धि। मुनि। कुठार। अनभिम्लान। ककुत्स्थ। कहोड [ऋषि का नाम]। लेख। रोध। खञ्जन। कोहड। पिष्ट। हेहय। खञ्जार। खञ्जाल। सुरोहिका। पर्ण। कहूष। परिल। वतण्ड। तृण। कर्ण। क्षीरह्रद। जलह्रद। परिषिक। जटिलिक। गोफिलिक। बधिरिका। मञ्जीरक। वृष्णिक। रेख। आलेखन। विश्रवण। रवण। वर्तनाक्ष। पिटक। पिटाक। तृक्षाक। नभाक। ऊर्णनाभ। जरत्कारु। उत्क्षिपा। रोहितिक। आर्यश्वेत। सुपिष्ट। खर्जूरकर्ण। मसूरकर्ण। तूणकर्ण। मयूरकर्ण। खडरक। तक्षन् [ इसके पाठ का प्रयोजन पहले लिखा जा चुका है ]। ऋष्टिषेण। गङ्गा [ इसके पाठ का भी प्रयोजन ऊपर लिखा जा चुका है ]। विपाश। यस्क। निरुक्तकार यास्क के मूल पुरुष]। लह्य। द्रुघ। अयःस्थूण। भलन्दन। विरूपाक्ष। भूमि [इसी से भौम बनता है। ] इला [ इससे ऐल बनता है ] सपत्नी [ इससे सापत्नः बनता है ] * दो अचों वाले नदी संज्ञक शब्दों से अण् होता है। * [ जैसे--कुल्या से कौल्यम् ]। * त्रिवेणी का त्रिवण आदेश और अण् प्रत्यय होता है। * [ उदा० त्रिवेण्या अपत्यम्---त्रैवणः--त्रिबेणी = त्रिबण + अण्, आदिवृद्धि॥ ११२॥

---

१. "त्रिवेणीरेवाप्रभृतेस्तन्नामिकाणोऽपवादस्य 'द्वयचः' इति ढकोऽपवादः" इत्यधिकं पुस्तकान्तरे।

२. कह्य। कबोध। परल। ग्रीवाक्ष। गोभिलिक। राजल। तडाक। वडाक—एते शब्दाः क्वचिदत्राधिकाः।

## १३६३. अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ॥ ११३ ॥ ( १११६ )

'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' ( १.१.७३ )। 'अवृद्धाभ्यः' इति शब्दधर्मः, 'नदीमानुषीभ्यः' इत्यर्थधर्मः, तेनाभेदात् प्रकृतयो निर्दिश्यन्ते। 'तन्नामिकाभ्यः' इति सर्वनाम्ना प्रत्ययप्रकृतेः परामर्शः। अवृद्धानि यानि नदीनां

### न्यासः

**अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ॥** शास्त्रान्तरे परिभाषितमपि वृद्धमस्ति – अपत्यमन्तर्हितं वृद्धमिति; इह शास्त्रेऽपि परिभाषितं वृद्धमस्ति 'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' इति अतो वृद्धप्रतिषेधे कस्यचित् सन्देहः स्यात्—कस्य वृद्धस्यायं प्रतिषेधः, किंस्वित् यदिह परिभाषितं तस्यायं प्रतिषेधः ? उत यच्छास्त्रान्तरेण परिभाषितं तस्येति ? अतस्तन्निरासाय 'वृद्धिर्यस्य' इत्यादिनेह शास्त्रे यत् परिभाषितं तस्यायं प्रतिषेध इति दर्शयति। कुतः पुनरेतदवसितम्—इह वृद्धं यत् परिभाषितं तस्यायं प्रतिषेध इति ? नदीमानुषीनामधेयस्य गोत्रप्रत्ययान्तस्यासम्भवात्। नदीग्रहणे त्विह लौकिक्येव नदी गृह्यते, न तु पारिभाषिकी। कुत एतत् ? लौकिकार्थवृत्तिना मानुषीशब्देन साहचर्यात्। अथ स्वरूपग्रहणमेव नदीमानुषीशब्दयोः कस्मान्न भवति ? वृद्धप्रतिषेधात्। स्वरूपग्रहणे हि वृद्धप्रतिषेधोऽनर्थकः स्यात्; प्रसङ्गाभावात्। बहुवचननिर्देशाच्च न स्वरूपग्रहणम्। स्वरूपग्रहणे हि नदीमानुषीशब्दयोर्द्वित्वाद् द्विवचनेनैव निर्देशं कुर्यात्। **अवृद्धाभ्य इति शब्दधर्म इति।** वृद्धसंज्ञकप्रतिषेधे सति नञिवयुक्तन्यायेन च वृद्धसदृशस्यावृद्धस्यैव ग्रहणात्। **नदीमानुषीत्यर्थधर्म इति।** पारिभाषिक्या नद्याः स्वरूपस्य चाग्रहणार्थस्यैव ग्रहणं युक्तम्। तयोर्हि ग्रहणे शब्दधर्मः स्यात्। यदि तर्ह्यर्थधर्मोऽयम्, कथं नदीमानुषीभ्य इत्यनेन प्रकृतयो निर्दिश्यन्ते, अर्थधर्म एव ह्येवं निर्दिष्टो भवति, न प्रकृतयः ? इत्यत आह – **तेनेत्यादि।** तेनार्थेनाभेदोपचारात्। नदीमानुष्यभिधायिन्यः प्रकृतयो निर्दिश्यन्ते। प्रत्ययप्रकृतिरिति। प्रत्ययस्य प्रकृतिरिति षष्ठीसमासः।

### पदमञ्जरी

**अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ॥** अपत्यमन्तर्हितं वृद्धमिति शास्त्रान्तरे यत्परिभाषितं तस्यापि ग्रहणं दृष्टम्, वृद्धस्य च पूजायाम् 'वृद्धो यूना इति, इह तु प्रत्यासत्तेरेतच्छास्त्रसिद्धस्यैव वृद्धस्य ग्रहणमित्याह—**वृद्धिर्यस्येति।** **अवृद्धाभ्य इति शब्दधर्म इति।** वृद्धपर्युदासे सति नञिवयुक्तन्यायेन तत्सदृशस्यैव शब्दस्य सम्प्रत्ययात्। स्त्रीलिङ्गनिर्देशस्तु 'नदीमानुषीभ्यः' इत्यनेन सामानाधिकरण्यात्। कथं पुनरर्थवृत्तेः शब्दवृत्तिना सामानाधिकरण्यम् ? अभेदोपचारात्। अवृद्धशब्दवाच्यत्वान्नदीमानुष्य एवावृद्धा उक्ताः। **नदीमानुषीभ्य इत्यर्थधर्म इति।** स्वरूपग्रहणं तु न भवति, बहुवचननिर्देशात्, वृद्धपर्युदासाच्च संज्ञानद्या अपि ग्रहणं न भवति; लौकिकार्थवृत्तिना मानुषीशब्देन साहचर्यात्। **तन्नामिकाभ्य इति सर्वनाम्ना प्रत्ययप्रकृतेः परामर्श इति।** ता अवृद्धाः प्रकृतयो नामानि यासां नदीमानुषीणामिति बहुव्रीहिः। तदेवं त्रिभिरपि पदैरर्थ एव निर्दिश्यते, तत्रार्थात्प्रत्ययविधानानुपपत्तेस्तद्वाचिनीभ्यः प्रकृतिभ्यः प्रत्ययो विज्ञायते। तदिदमुक्तम्—**तेनाभेदात्प्रकृतयो निर्दिश्यन्त इति।** तेनार्थेनाभेदात्। एतदुक्तं भवति—अवृद्धशब्दवाच्यास्तन्नामिका या

### भावबोधिनी

जिस शब्दसमुदाय के अचों में आदि अच् वृद्धसंज्ञक होता है, उस शब्द को वृद्ध कहा जाता है। 'अवृद्ध'—यह शब्द में रहने वाला धर्म है, 'नदी मानुषी' यह अर्थ का धर्म है [अर्थात् वृद्ध और अवृद्ध—यहाँ शब्द के लिये हैं, नदी और मानुषी ये पदार्थ हैं ]। अर्थ के साथ अभेद से प्रकृतिरूप शब्द का निर्देश है। 'तन्नामिकाभ्यः' [ उस नामवाली से ] यहाँ तत् इस सर्वनाम से प्रत्यय की प्रकृति का परामर्श होता है। अवृद्ध [ जिनका आदि अच् वृद्ध नहीं है, ] जो नदियों और मानुषी स्त्रियों के नाम, उनसे अपत्य अर्थ में अण् होता है। यह ढक् का अपवाद है। उदा०—यमुनायाः अपत्यम्—यामुनः [ यमुना + अण्, आदिवृद्धि, आलोप ]। इरावत्या अपत्यम्—ऐरावतः [ इरावती + अण्, आदिवृद्धि, ईलोप ]। वैतस्तः [ वितस्ता + अण् ] नार्मदः [ नर्मदा+अण् ]।

**मानुषीणां च नामधेयानि तेभ्योऽपत्येऽण्प्रत्ययो भवति। ढकोऽपवादः। यमुनाया अपत्यं यामुनः। इरावत्या अपत्यम् ऐरावतः। वैतस्तः। नार्मदः। मानुषीभ्यः खल्वपि – शिक्षिताया अपत्यं शैक्षितः। चिन्तिताया अपत्यं चैन्तितः।**

**अवृद्धाभ्यः किम्? चान्द्रभागाया अपत्यं चान्द्रभागेयः। वासवदत्तेयः।**

**नदीमानुषीभ्य इति किम्? सौपर्णेयः। वैनतेयः। तन्नामिकाभ्य इति किम्? शोभनायाः – शौभनेयः॥**

**१३६४. ऋष्यन्धकवृष्णिकुरुभ्यश्च ॥ ११४ ॥ ( १११७ )**

**ऋषयः प्रसिद्धा वसिष्ठादयः। अन्धकाः, वृष्णयः, कुरव इति वंशाख्याः। ऋष्यादिकुर्वन्तेभ्यः प्रातिपदिकेभ्योऽपत्येऽण्प्रत्ययो भवति। इञोऽपवादः। अत्र्यादिभ्यस्तु परत्वाड्ढगादिभिरेव भवितव्यम्। ऋषिभ्यस्तावत् –**

**न्यासः**

**ढकोऽपवाद इति।** अवृद्धादीनां नदीनां मानुषीणां नामधेयानां स्त्रीप्रत्ययान्तत्वात्। वैतस्तः, **नार्मद इति।** वितस्तानर्मदाशब्दाभ्यामण्। **शैक्षित इति।** शिक्षिताशब्दात्।

**सौपर्णेयः, वैनतेय इति।** सुपर्णाविनताशब्दौ पक्षिणीनामभिधेये, न नदीमानुष्यौ। **शौभनेय इति।** शोभनाशब्दो वर्तते नदीमानुष्यर्थः, न तु संज्ञात्वेन, किं तर्हि? विशेषणत्वेन ॥ ११३ ॥

**ऋष्यन्धकवृष्णिकुरुभ्यश्च ॥ इञोऽपवाद इति।** ननु चानकारान्तेभ्योऽत्र्यादिभ्यो ये ढगादयः प्राप्नुवन्ति तदपवाद एव युक्त इत्यत आह—**अत्र्यादिभ्यस्त्वित्यादि।** एकेनादिशब्देन ऋषयो जातसेनादयोऽन्धकादिषु च

**पदमञ्जरी**

नदीमानुष्यस्ताभ्योऽण् प्रत्ययो भवति, कोऽर्थः? तद्वाचिनीभ्यः प्रत्ययो भवतीति। तदेतदाह—**अवृद्धानि यानीत्यादि।** एवं च कृत्वा—अवृद्धेभ्यो नदीमनुषीनामभ्य इति वक्तव्यम्, तथा तु न कृतमित्येव। **ढकोऽपवाद इति।** स्त्रीलिङ्गनिर्देशात् भिद्योद्ध्यशोणादिष्वयं विधिर्न भवतीति भावः ॥ ११३ ॥

**ऋष्यन्धकवृष्णिकुरुभ्यश्च ॥ ऋषयः प्रसिद्धा वसिष्ठादय इति।** ऋषयः = मन्त्रदर्शिनः, ते च प्रसिद्धा वसिष्ठादयः, यथा इन्द्रादयो देवताः, तेन ते न परिभाषणीया इति भावः। **वंशाख्या इति।** केषाञ्चिद्वंशानामेता आख्या इत्यर्थः। एवं केचिद्वंशा आख्यायन्त इति यावत्। 'मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान्' इत्यभिप्रायेणाह--**इञोऽपवाद इति। अत्र्यादिभ्य इति।** तत्र ऋष्यणोवकाशः—वासिष्ठः, 'इतश्चानिञः' इति;

**भावबोधिनी**

मानुषी स्त्री नाम से भी--शिक्षिताया अपत्यम् [ शिक्षिता नामवाली स्त्री का अपत्य। शिक्षिता+अण् ] चिन्तिता का अपत्य [ चिन्तिता+अण्, आदिवृद्धि, आलोप ]।

अवृद्ध [ जिसका आदि अच् वृद्ध न हो उनसे ]--इसका क्या फल है? चान्द्रभागा का अपत्य--चान्द्रभागेयः [ यहाँ चन्द्रभागा का आदि अच् वृद्ध है अतः अण् न होकर "स्त्रीभ्यो ढक्" ४।१।१२० से ढक् = एय होता है। ] वासवदत्तेयः [ वासवदत्ता का अपत्य ]। नदी और मानुषी स्त्रियों से--इसका क्या फल है? सौपर्णेयः [ सुपर्णा पक्षी स्त्री का अपत्य ] वैनतेयः [ विनता पक्षी स्त्री का अपत्य--गरुड ] उस नाम वाली से--इसका क्या फल है? शोभनायाः अपत्यम्--शोभनेयः [ शोभना किसी का नाम नहीं है। अतः अण् न होकर ढक् ही होता है] ॥ ११३ ॥

ऋषि--प्रसिद्ध वसिष्ठ आदि। अन्धक, वृष्णि और कुरु--ये विभिन्न वंशों के नाम हैं। ऋषि--वाचक से लेकर कुरु-पर्यन्त प्रातिपदिकों से अपत्य अर्थ में अण् प्रत्यय होता है। यह इञ् का अपवाद है। अत्रि आदि शब्दों से तो, परवर्त्ती होने के कारण ढक् आदि ही होने चाहिये। उदाहरण--(१) ऋषिवाचक--वासिष्ठः [ वसिष्ठ + अण्, आदिवृद्धि, अलोप, वसिष्ठ का अपत्य ]। वैश्वामित्रः [ विश्वामित्र + अण् ]। (२) अन्धक आदि वंशवाची शब्दों से--श्वाफल्कः [ श्वफल्क + अण् ]। रान्धसः [ रन्धस + अण्। ये दोनों अन्धक वंश के अपत्य हैं ] वृष्णि--वासुदेवः [ वसुदेव + अण्, वसुदेव वृष्णि कुल के थे, उनके अपत्य वासुदेव = श्रीकृष्ण ]। आनिरुद्धः [ अनिरुद्ध के पुत्र ]। कुरुवंशवाची से--नाकुलः। साहदेवः [ नकुल की सन्तान, सहदेव की सन्तान ]।

**वासिष्ठः । वैश्वामित्रः । अन्धकेभ्यः – श्वाफल्कः । रान्धसः । वृष्णिभ्यः – वासुदेवः । आनिरुद्धः । कुरुभ्यः – नाकुलः । साहदेवः ।**

**कथं पुनर्नित्यानां शब्दानामन्धकादिवंशसमाश्रयणेनान्वाख्यानं युज्यते ? केचिदाहुः – कथमपि काकतालीयन्यायेन कुर्वादिवंशेष्वसंकरेणैव नकुलसहदेवादयः शब्दास्सुबहवः संकलिताः, तानुपादाय पाणिनिना स्मृतिरुपनिबद्धेति ।**

**अथ वा – अन्धकवृष्णिकुरुवंशा अपि नित्या एव, तेषु ये शब्दाः प्रयुज्यन्ते – नकुलसहदेवादयः; तत्रेदं प्रत्ययविधानमित्यदोषः ॥**

**न्यासः**

वर्तमाना उग्रसेनादयः परिगृह्यन्ते, द्वितीयेत्र ण्यादयः प्रत्ययाः । तत्र ऋष्यणोऽवकाशः—वासिष्ठः, 'इतश्चानिञः' इति ढकोऽवकाशः—दौलेयः; अत्रिशब्दादुभयप्राप्तौ परत्वाद् ढग् भवति—आत्रेयः । ऋष्यणोऽवकाशः स एव, सेनान्तलक्षणस्य ण्यस्यावकाशः कारिषेण्यः, हारिषेण्यः; जातसेनो नाम ऋषिः, तस्मादुभयप्राप्तौ परत्वाण् ण्यो भवति—जातसेन्यः । अन्धकाणोऽवकाशः—श्वाफल्कः, ण्यस्य स एव; उग्रसेनो नामान्धकः, तस्मादुभयप्राप्तौ परत्वाण्ण्यो भवति—औग्रसेन्यः । वृष्ण्यणोऽवकाशः—वासुदेवः, ण्यस्य स एव; शूरसेनो विष्वक्सेनो नाम वृष्णिः, तस्मादुभयप्राप्तौ परत्वाण् ण्यो भवति—शौरसेन्यः, वैष्वक्सेन्यः । कुर्वणोऽवकाशः—नाकुलः, ण्यस्य स एव; भीमसेनो नाम कुरुः, तस्मादुभयप्राप्तौ परत्वात् ण्यो भवति—भैमसेन्यः ।

**कथं पुनरित्यादि चोद्यम्** । **केचिदाहुरित्यादि चोद्यपरिहारः** । **काकतालीयमिति** । अबुद्धिपूर्वकमित्यर्थः । **सङ्कलिता इति** । समुच्चिताः । **नित्या एवेति** । अन्धकादीनां वंशानामनादित्वात् ॥ ११४ ॥

**पदमञ्जरी**

ढकोऽवकाशः—डुलेरपत्यं डौलेयः; आत्रेय इत्युभयप्रसङ्गे परत्वाड्ढग् भवति । सेनान्तलक्षणस्य ण्यस्यावकाशः—हारिषेण्यः, अत्र हि 'एति संज्ञायामगात्' इति षत्वस्यासिद्धत्वात् सेनान्तमेतद्भवति, ऋष्यणः स एव; जातसेनो नाम ऋषिः, तस्मादुभयप्रसङ्गे परत्वाद् ण्यो भवति—जातसेन्यः । एवमुदीचामिञ्—जातसेनिः, अन्धकाणोऽवकाशः—श्वाफल्कः, ण्यस्य स एव, उग्रसेनादन्धकादुभयप्रसङ्गे परत्वाण्ण्यो भवति—औग्रसेन्यः । वृष्ण्यणोऽवकाशः—वासुदेवः, ण्यस्य स एव; विष्वक्सेनाद् वृष्णेर्वैष्वक्सेन्यः । कुर्वणोऽवकाशः—नाकुलः, ण्यस्य स एव, भीमसेनात्कुरोर्भैमसेन्यः ।

**काकतालीयन्यायेनेति** । यदृच्छया । **असङ्करेणेति** । शब्दान्तरैरसङ्कीर्णा इत्यर्थः । सङ्कलिताः= संहृताः । **सुबहव इति** । व्युत्पिपादयिषिताः सर्वे इत्यर्थः । अनित्योऽपाश्रयेणापि नित्यस्यान्वाख्यानं दृष्टम्, यथा—शकाश्रयेण कालस्य । **अथ वेत्यादि** । 'त्रिपुरुषानूकं नाम कुर्यात्' इत्यनेन न्यायेनान्धकादिवंशा अपि नित्या एव । **तेषु ये शब्दा इति** । अन्धकादिष्वेवाद्यत्वेऽपि ये शब्दाः प्रयुज्यन्ते तेभ्य इत्यर्थः ॥ ११४ ॥

**भावबोधिनी**

नित्य शब्दों का, अन्धक आदि वंशों का आश्रय लेकर अन्वाख्यान करना कैसे संगत है ? [ अर्थात् अन्धक आदि वंश तो व्यक्तिविशेष को मानकर चलते हैं, और वैयाकरणों के मत में शब्द नित्य हैं, तब यहाँ अन्वाख्यान की संगति कैसे है ? ] इसके समाधान में कुछ लोग कहते हैं—'किसी प्रकार काकतालीय न्याय से कुरु आदि वंशवाचकों के साथ नकुल, सहदेव आदि सभी शब्द [ व्युत्पादन के लिये ] संकलित हो गये, उन्हीं को लेकर पाणिनि ने अपनी व्याकरणस्मृति बना डाली । [ अतः शब्दों की नित्यता भंग नहीं होती है । ]

अथवा—[ संसार के अनादि अनन्त होने के कारण ] अन्धक, वृष्णि, कुरुवंश भी नित्य ही है, उनमें जो नकुल, सहदेव आदि शब्द प्रयुक्त होते हैं, उनके लिये यह प्रत्ययविधान किया जा रहा है, अतः कोई दोष नहीं है ॥ ११४ ॥

## १३६७. मातुरुत्संख्यासम्भद्रपूर्वायाः ॥ ११५ ॥ ( १११८ )

**मातृशब्दात् संख्यापूर्वात् सम्पूर्वाद्भद्रपूर्वाच्चापत्येऽण् प्रत्ययो भवति, उकारश्चान्तादेशः। द्वयोर्मात्रोरपत्यं द्वैमातुरः। षाण्मातुरः। साम्मातुरः। भाद्रमातुरः।**

**उकारादेशार्थं वचनम्, प्रत्ययः पुनरुत्सर्गेणैव सिद्धः। स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः, तेन धान्यमातुर्ग्रहणं न भवति।**

### न्यासः

**मातुरुत्संख्यासम्भद्रपूर्वायाः॥ द्वैमातुर इति।** प्राक् तद्धितार्थे विषये द्विगुः, पश्चात् तद्धितः। **साम्मातुर इति।** पूर्वं प्रादिसमासः, पश्चात् तद्धितः। **भाद्रमातुर इति।** पूर्वं विशेषणसमासः, ततस्तद्धितः।

अथ प्रत्ययार्थं वचनं कस्मान्न भवति? इत्याह—**प्रत्ययः पुनरित्यादि।** उत्सर्गलक्षणेनैव 'तस्यापत्यम्' इत्यनेन। ननु च संख्यादिपूर्वत्वं मातृशब्दस्य विशेषणम्, तत्र मातृशब्दापेक्षया निर्देशः क्रियमाणः पुंल्लिङ्ग एव युज्यते, तत् कथं 'संख्यासंभद्रपूर्वायाः' इति स्त्रीलिङ्गेन निर्देशः? इत्यत आह—**स्त्रीलिङ्गनिर्देशोऽर्थापेक्ष इति।** मातुः शब्दस्य योऽर्थस्तदपेक्षोऽयं निर्देशः, स चार्थः स्त्रीलिङ्गः। तेन स्त्रीलिङ्गेन निर्देशः कृतः। **तेनेत्यादिनार्थापेक्षस्य** फलं दर्शयति। अर्थापेक्षे हि स्त्रीलिङ्गनिर्देशे स्त्रीलिङ्गो यस्यार्थो मातृशब्दस्य, तस्यैव ग्रहणेन भवितव्यम्। तेन धान्यमातुर्ग्रहणं न भवति। न हि तस्य स्त्रीलिङ्गोऽर्थः, किं तर्हि? पुंल्लिङ्गः। धान्यं मिमीते यो भृतकः स धान्यमातेत्युच्यते।

### पदमञ्जरी

**मातुरुत्संख्यासम्भद्रपूर्वायाः॥ द्वैमातुर इति।** तद्धितार्थे द्विगुः, पश्चात्तद्धितः। एकस्या औरसः सुतोऽपरस्याः कृत्रिम इति द्वैमातुरत्वम्। **साम्मातुर इति।** प्रादिसमासात्तद्धितः। **भाद्रमातुर इति।** विशेषणसमासादण्।

**तेनेत्यादिनाऽर्थापेक्ष्यस्य स्त्रीलिङ्गनिर्देशस्य फलं दर्शयति। धान्यमातुरिति।** धान्यं यो मिमीते स धान्यमाता, याजकादित्वात् षष्ठीसमासः। धान्यमातरि यो मातृशब्दस्तस्य ग्रहणं न भवतीत्यर्थः, तेन सम्मिमीते तस्यापत्यं साम्मात्र इत्युत्वं न भवति, न्यायानुवादश्चायं स्त्रीलिङ्गनिर्देशः। सम्बन्धिशब्दस्य हि प्रसिद्धतरत्वात्तस्यैव ग्रहणं न्याय्यम्।

**सङ्ख्यासम्भद्रपूर्वाया इति किमिति।** न तावत्केवलात्प्रसङ्गः, न हि मातुरपत्यमिति विशेषणं सम्भवति; अपत्ये मातृसम्बन्धस्याव्यभिचारात्। तेन तदन्तस्य ग्रहणात् सङ्ख्यादिपूर्वस्य तावत्सिद्धमिति प्रश्नः। अन्यपूर्वस्यापि स्यादित्युत्तरम्। **सौमात्र इति।**

### भावबोधिनी

संख्यापूर्वक, सम्पूर्वक और भद्रपूर्वक मातृ शब्द से अपत्य अर्थ में अण् प्रत्यय होता है और ऋकार के स्थान पर उकार अन्त आदेश होता है। उदा०––द्वयोः मात्रोः अपत्यम् [ तद्धितार्थ में द्विगु समास करके द्विमातृ + अण्, ऋ का उकार और रपर, आदिवृद्धि करने पर––द्वैमातुर् + अ। एक जन्मदात्री और दूसरी पालनकर्त्री माता की सन्तान ]। षाण्मातुरः [ षण्णां मातॄणाम् अपत्यम्––यहाँ भी द्विगु समास करके अण् प्रत्यय शेष प्रक्रिया पूर्ववत्। छह माताओं की सन्तान। छह कृत्तिकाओं से परिपालित होने के कारण स्वामिकार्त्तिकेय षाण्मातुर कहे जाते हैं। ] साम्मातुरः [ संमाता की सन्तान ] भाद्रमातुरः [ कल्याणिनी मा की सन्तान ]।

उकार आदेश करने के लिये यह सूत्र है, अण् प्रत्यय तो 'तस्यापत्यम्' ४।१।९२ इस उत्सर्ग सूत्र से ही सिद्ध है। [ ...पूर्वायाः मातुः––यह ] स्त्रीलिङ्ग का निर्देश अर्थ की अपेक्षा रखने वाला है [ अर्थात् स्त्री अर्थवाचक मातृ से ही यह प्रत्यय होता है ] इस लिये धान्यमाता [ धान्य को तौलने वाले पुरुष ] का ग्रहण नहीं होता है।

**संख्यासम्भद्रपूर्वाया इति किम् ? सौमात्रः ।**

**१३६६. कन्यायाः कनीन च ॥ ११६ ॥ ( ११११९ )**

**कन्याशब्दादपत्येऽण्प्रत्ययो भवति । तत्सन्नियोगेन कनीनशब्द आदेशो भवति । ढकोऽपवादः । कन्याया अपत्यं कानीनः कर्णः । कानीनो व्यासः ॥**

**१३६७. विकर्णशुङ्गच्छगलाद् वत्सभरद्वाजात्रिषु ॥ ११७ ॥ ( ११२० )**

**विकर्णशुङ्गच्छगलशब्देभ्यो यथासंख्यं वत्सभरद्वाजात्रिष्वपत्यविशेषेष्वण्प्रत्ययो भवति । वैकर्णो भवति**

**न्यासः**

**सौमात्र इति** । प्राक् प्रादिसमासः । तत औत्सर्गिकोऽण् ॥ ११५ ॥

**कन्यायाः कनीन च ॥ ११६ ॥**

**विकर्णशुङ्गच्छगलाद् वत्सभरद्वाजात्रिषु ॥** अत्र वत्सभरद्वाजात्रिशब्दा वात्स्यभारद्वाजात्रेयेषु लब्ध-

**पदमञ्जरी**

क्वचिदस्यानन्तरं ग्रन्थः—**शुभ्रादिपाठाद्वैमात्रेय इति** । तेन विपूर्वो मातृशब्दो न प्रत्युदाहर्तव्य इति भावः । वयं ब्रूमः—'स्त्रीभ्यो ढक्' इत्यत्र स्त्रीप्रत्ययविज्ञानादसत्यर्थग्रहणे इह न भवति । ऐडविडो दारदः (४.१.१२० सूत्रे) इत्यस्यानन्तरमयं ग्रन्थः, इह तु लेखकैः प्रमादाल्लिखित इति ॥ ११५ ॥

**कन्यायाः कनीन च ॥ ढकोऽपवाद इति** । 'द्व्यचः' इति प्राप्तस्य । **कन्याया अपत्यं कानीन इति** । शास्त्रोक्तविवाहसंस्कारपूर्वस्य पुरुषसम्प्रयोगस्याभावः कन्याशब्दनिमित्तं नाक्षतयोनित्वम् । या तु विवाहसंस्कारेण विना पुरुषेण सम्प्रयुज्यते सा कन्यात्वं न जहाति । तेनैतन्न नोदनीयम्—यदि कन्या नापत्यम्, अथापत्यं न सा कन्या, कन्या चापत्यं चेति विप्रतिषिद्धमिति । अपर आह—मुनिदेवतामाहात्म्याद्या पुंयोगेऽपि न कन्यात्वं जहाति, यथा—कुन्ती, यथा—सत्यवती, सात्रोदाहरणमिति, तदाह—**कानीनः कर्णः, कानीनो व्यास इति** ॥ ११६ ॥

**विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु ॥** अत्र वत्सादीनां मूलप्रकृतीनां विकर्णादीन्प्रत्यपत्यत्वायोगाद-

**भावबोधिनी**

संख्या, सम् और भद्र जिसके पूर्व में हो उसी मातृ का ग्रहण होता है—यह किस लिये है ? सौमात्रः [ सुमाता की सन्तान । यहाँ उक्त तीन शब्दों में कोई भी नहीं है । अतः इससे अण् और उकारान्त आदेश नहीं होते हैं । उत्सर्ग सूत्र से अण् और आदवृद्धि ही होती है ॥ ११५ ॥

कन्या शब्द से अपत्य अर्थ में अण् होता है, और इसके संनियोग से कन्या का कनीन आदेश भी होता है । [ "द्व्यचः" ४।१।१२१ से प्राप्त ] ढक् का अपवाद है । उदा०—कन्याया अपत्यम् [ कन्या की सन्तान—इस विग्रह में कन्या से अण् प्रत्यय, और कन्या का कनीन आदेश करके आदिवृद्धि होती है ]—कानीनः = कर्ण और व्यास ।

**विमर्श**—जहाँ विवाहसंस्कार से पूर्व पुरुष-संसर्गवश सन्तान उत्पन्न होती है उसे कन्या की सन्तान कहा जाता है । कुन्ती की प्रथम सन्तान—कर्ण और सत्यवती की सन्तान व्यास इसी प्रकार के थे । अतः इनको कानीन कहा जाता है ॥ ११६ ॥

(१) विकर्ण, (२) शुङ्ग, (३) छगल इन शब्दों से क्रमशः (१) वत्स, (२) भरद्वाज और (३) अत्रि—इन अपत्य-विशेष अर्थों में अण् प्रत्यय होता है । उदा०—(१) यदि वात्स्य = वत्सकुलोत्पन्न हो तो वैकर्णः [ विकर्ण + अण् आदि-वृद्धि ], अन्य कोई हो तो [ अण् न होकर "अत इञ्" ४।१।९५ से इञ् करने पर ]—वैकर्णिः होता है । (२) यदि

वात्स्यश्चेत्, वैकर्णिरन्यः । शौङ्गो भवति भारद्वाजश्चेत्, शौङ्गिरन्यः । छागलो भवत्यात्रेयश्चेत्, छागलिरन्यः ।

शुङ्गाशब्दं स्त्रीलिङ्गमन्ये पठन्ति, ततो ढकं प्रत्युदाहरन्ति – शौङ्गेय इति ।

द्वयमपि चैतत्प्रमाणम्; उभयथा सूत्रप्रणयनात् ।

**१३६८. पीलाया वा ॥ ११८ ॥ ( ११२१ )**

तन्नामिकाणो बाधके 'द्व्यचः' ( ४.१.११८ ) इति ढकि प्राप्तेऽण्प्रत्ययः पक्षे विधीयते । पीलाया अपत्ये वाऽण्प्रत्ययो भवति । पीलाया अपत्यं पैलः । पैलेयः ॥

**१३६९. ढक्च मण्डूकात् ॥ ११९ ॥ ( ११२२ )**

मण्डूकशब्दादपत्ये ढक् प्रत्ययो भवति । चकारादण् च वा । तेन त्रैरूप्यं भवति – माण्डूकेयः, माण्डूकः, माण्डूकिः ॥

**१३७०. स्त्रीभ्यो ढक् ॥ १२० ॥ ( ११२३ )**

**न्यासः**

वृत्तय उपात्ता इति । अत एवाह —**वैकर्णो भवति वात्स्यश्चेत्, शौङ्गो भवति भारद्वाजश्चेत्, छागलो भवत्यात्रेयश्चेदिति** । सा पुनस्तेषां गोत्रापत्ये वृत्तिः कार्ये कारणोपचाराद् वेदितव्या ।

**द्वयमपि चैतत् प्रमाणमिति** । कथं पुनः परस्परविरुद्धमपि प्रमाणं भवति ? इत्याशङ्क्याह—**उभयथा सूत्रप्रणयनादिति** । उभयथा ह्येतत् सूत्रमाचार्येण प्रणीतम्, तस्मात् को विरोधः ? ॥ ११७ ॥

**पीलाया वा ॥ ११८ ॥ ढक् च मण्डूकात् ॥ ११९ ॥**

**पदमञ्जरी**

पत्यप्रत्ययान्तानां वात्स्यादीनां शब्दानां द्वन्द्वे युगपदधिकरणवचनतया प्रत्येकं बहुत्वोपजननात्तस्य बहुत्वस्य लोपिभिरेव कृतत्वादपत्यप्रत्ययस्य लुका निर्देशः, तदाह—**वैकर्णो भवति वात्स्यश्चेदित्यादि** ॥ ११७ ॥

**स्त्रीभ्यो ढक् ॥ स्त्रीग्रहणेनेत्यादि** । स्वरूपग्रहणं तु न भवति; बहुवचननिर्देशात् । स्त्र्यर्थस्यापि ग्रहणं

**भावबोधिनी**

भारद्वाज—भरद्वाज कुलोत्पन्न हो तो—शौङ्गः [ शुङ्ग + अण्, आदिवृद्धि ], दूसरा हो तो [ इञ् करने पर ] शौङ्गिः—यह होता है। (३) अत्रिकुलोत्पन्न हो तो छागलः [ छगल + अण् ] अन्य कोई हो तो—[ इञ् करने पर ] छागलिः । कुछ लोग शुङ्गा यह स्त्रीलिङ्ग शब्द मानते हैं, अतः प्रत्युदाहरण में ढक् प्रत्ययान्त—शौङ्गेयः [ शुङ्गा + ढक् = एय, आदिवृद्धि, आलोप ]—यह मानते हैं। [ शुङ्ग और शुङ्गा ] ये दोनों प्रमाण हैं क्योंकि आचार्य ने दोनों प्रकार के सूत्र बनाये हैं। [ अर्थात् शुङ्ग यह पुंल्लिग और शुङ्गा यह स्त्रीलिङ्ग दोनों सूत्रों में हैं। ] ॥ ११७ ॥

[ अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ४।१।११३ से ] नामवाचक से प्राप्त अण् के बाधक "द्व्यचः" ४।१।१२१ से ढक् की प्राप्ति रहते यह पाक्षिक अण् प्रत्यय किया जा रहा है। पीला—से अपत्य अर्थ में विकल्प से अण् प्रत्यय होता है। उदा०—पीला का अपत्य—पैलः, पैलेयः [ पीला + अण्, आदिवृद्धि, भसंज्ञा, आलोप, पीला + ढक् = एय, आदिवृद्धि, आलोप । पीला किसी स्त्री का नाम है। उसकी सन्तान ] ॥ ११८ ॥

मण्डूक शब्द से अपत्य अर्थ में ढक् प्रत्यय होता है। चकार के बल से विकल्प से अण् होता है। [ अतः इञ् भी होता है ] इस लिये तीन रूप होते हैं—(१) माण्डूकेयः [ मण्डूक + ढक् = एय, आदिवृद्धि ], (२) माण्डूकः [ मण्डूक + अण् ], (३) माण्डूकिः [ मण्डूक + इञ् ] ॥ ११९ ॥

इस सूत्र में 'स्त्री' के ग्रहण से टाप् आदि प्रत्यय जिनके अन्त में हैं वे शब्द लिये जाते है। [ बहुवचन का निर्देश होने के कारण 'स्त्री' शब्द से ढक् का विधान नहीं समझना चाहिये। ] स्त्रीवाची शब्दों से अपत्य अर्थ में ढक् प्रत्यय होता

**इह स्त्रीग्रहणेन टाबादिप्रत्ययान्ताः शब्दा गृह्यन्ते। स्त्रीभ्योऽपत्ये ढक् प्रत्ययो भवति। सौपर्णेयः। वैनतेयः।**

**स्त्रीप्रत्ययविज्ञापनादसत्यर्थग्रहणे इह न भवति – इडबिडोऽपत्यम् ऐडबिडः, दरदोऽपत्यम् दारद इति।**

❀ **वडवाया वृषे वाच्ये** ❀ ( म० भा० ४.१.१२० वा० १ )। **वाडवेयो वृषः स्मृतः। अपत्ये प्राप्तस्ततोऽपकृष्य विधीयते, तेनापत्ये वाडव इति भवति।**

❀ **अण् क्रुञ्चाकोकिलात् स्मृतः** ❀ ( म० भा० ४.१.१२० वा० २ )। **क्रुञ्चाया अपत्यं क्रौञ्चः। कौकिलः॥**

**न्यासः**

**स्त्रीभ्यो ढक्॥ इह स्त्रीग्रहणेन टाबादिस्त्रीप्रत्ययान्ताः शब्दा गृह्यन्त इति।** अथ स्वरूपग्रहणं कस्मान्न भवति? बहुवचननिर्देशात्। स्वरूपग्रहणे हि तस्यैकत्वादेकवचनेनैव निर्देशं कुर्यात्। स्त्र्यर्थमात्रस्य ग्रहणं कस्मान्न भवति? विमातृशब्दस्य स्त्र्यर्थस्य शुभ्रादिषु पाठात्। यद्यत्र स्त्र्यर्थमात्रस्य स्त्रीशब्दस्य ग्रहणं स्यात्, तस्य शुभ्रादिषु पाठोऽनर्थकः स्यात्, अनेनैव ढकः सिद्धत्वात्। **ऐडविडः, दारद इति।** इडविडोऽपत्यं दरदोऽपत्यमित्यणेव भवति। ढगिति वर्तमाने ढकः पुनर्ग्रहणं नित्यार्थम्।

**वडवाया वृषे वाच्य इति।** यस्तस्या गर्भे बीजं प्रक्षिपति स वृषो वाडवेय इत्युच्यते।

**अण्क्रुञ्चाकोकिलात् स्मृत इति।** वृष इति नापेक्ष्यते। अपत्ये विधिरेवायम्। ढकोऽपवादः॥ १२०॥

**पदमञ्जरी**

न भवति; विमातृशब्दस्यार्थस्य शुभ्रादिषु पाठात्। तस्य तु स्त्र्यर्थत्वं विधवाशब्दसाहचर्याद्विज्ञेयम्। किञ्च—स्त्रीशब्दस्य स्वरितत्वं प्रतिज्ञायते, स्वरितेन चाधिकारावगतिर्भवति, तेन टाबादिस्त्रीप्रत्ययान्तानामेव ग्रहणं युक्तम्। क्तिन्नादयस्तु व्यवधानान्न गृह्यन्ते। **ऐडविडः, दारद इति।** इडविट्शब्दात् 'जनपदशब्दात् क्षत्रियादञ्', दरच्छब्दाद् 'द्व्यच्मगध' इत्यण्, तयोः स्त्रियाम् 'अतश्च' इति लुक्, ततस्तदपत्येऽणेव भवति।

**वृषे वाच्ये इति।** वृषः = बीजाश्वः, तेन चार्थेन विशेषविहितेनापत्यलक्षणेऽर्थे ढका बाध्यते, तेनापत्येऽणेव भवति। **वाडव इति।** चतुष्पाल्लक्षणो ढञपि न भवति; अचतुष्पाद्वाचित्वात्।

**अण् क्रुञ्चेति।** वृष इति नापेक्ष्यते, अपत्य एवायं विधिः। ढकोऽपवादः क्रुञ्चा च कोकिला च समाहारद्वन्द्वे नपुंसकह्रस्वत्वम्[1]॥ १२०॥

**भावबोधिनी**

है। उदा०—सौपर्णेयः, वैनतेयः [ सुपर्णा नामक पक्षी स्त्री और विनता नामक पक्षी स्त्री की सन्तान। सुपर्णा + ढक् ढ = एय, आदिवृद्धि, भसंज्ञा, आलोप। इसी प्रकार विनता + ढक्। गरुड पक्षी यह अर्थ है। ]

स्त्री-से-स्त्रीप्रत्ययान्त का ग्रहण है—ऐसा ज्ञापन हो जाने से स्त्री-अर्थ का ग्रहण न होने पर इनमें [ ढक् ] नहीं होता है—इडविड् का अपत्य, दरद् का अपत्य—ऐडविडः, दारदः। [ इडविट् शब्द जनपदवाची है। अतः "जनपद" ४।२।१२४ से अञ् प्रत्यय तथा दरद् शब्द द्व्यच् है अतः "द्व्यच्मगध०" ४।१।१७० से अण् होता है। स्त्रीलिङ्ग में "अतश्च" ४।१।१७७ से इन दोनों का लुक् हो जाता है। तब ये शब्द स्त्रीवाचक होने पर भी स्त्रीप्रत्ययान्त नहीं हैं। अतः प्रस्तुत सूत्र से ढक् न होकर "तस्यापत्यम्" ४।१।९२ से अण् ही होता है। आदिवृद्धि करने पर रूप बनते हैं।

* वृष अर्थ में वडवा से ढक् होता है। [ जो वडवा के गर्भ में बीज-निक्षेप करता है उस वृष को वाडवेय कहा जाता है ]—वाडवेयः वृषः स्मृतः। [ वडवा + ढक्, ढ = एय, आदिवृद्धि ] अपत्य अर्थ में ढक् प्राप्त है उसे हटा कर वृष = बीजनिक्षेप्ता अर्थ में किया जाता है। इस लिये अपत्य अर्थ में [ अण् होने से ] वाडवः—यही बनता है। * क्रुञ्चा और कोकिला से अण् होता है। * क्रुञ्चा का अपत्य—क्रौञ्चः [ पक्षीविशेष, जिसकी मृत्यु से दुखी होकर वाल्मीकि ने रामायण लिखी थी ] कौकिलः। [ दोनों में अण् प्रत्यय, आदिवृद्धि, भसंज्ञा, आ का लोप होता है ]॥ १२०॥

---

१. 'क्रुञ्चाकोकिलादिति समाहारद्वन्द्वनिर्देशः। एवं च शिवादिगणे क्रुञ्चाकोकिलपाठोऽनार्ष इति बोध्यम्'—इति महाभाष्योद्योते नागेशः।

१३७१. द्व्यचः ॥ १२१ ॥ ( ११२४ )

'स्त्रीभ्यः' इत्येव । द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक्प्रत्ययो भवति । तन्नामिकाणोऽपवादः । दत्ताया अपत्यं दात्तेयः । गौपेयः । द्व्यच इति किम् ? यामुनः ॥

१३७२. इतश्चानिञः ॥ १२२ ॥ ( ११२५ )

स्त्रीग्रहणं निवृत्तम् । चकारः 'द्व्यचः' इत्यस्यानुकर्षणार्थः । इकारान्तात् प्रातिपदिकादनिञन्तादपत्ये ढक्प्रत्ययो भवति । आत्रेयः । नैधेयः ।

इत इति किम् ? दाक्षिः । प्लाक्षिः । अनिञ इति किम् ? दाक्षायणः । प्लाक्षायणः । द्व्यच इत्येव—मारीचेरपत्यं मारीचः ॥

१३७३. शुभ्रादिभ्यश्च ॥ १२३ ॥ ( ११२६ )

न्यासः

द्व्यचः ॥ तन्नामिकाणोऽपवाद इति । ये द्व्यचः स्त्रीप्रत्ययान्ता नदीमानुषीनामधेयभूतास्तेभ्यो विशेषविहितत्वात् तन्नामिकाण् भवति । ततस्तद्बाधनार्थं ढग् विधीयते ॥ १२१ ॥

इतश्चानिञः ॥ १२२ ॥ शुभ्रादिभ्यश्च ॥ यथायोगमित्यादि । ये तावदकारान्तास्तेभ्य इञोऽपवादः ।

पदमञ्जरी

द्व्यचः ॥ तन्नामिकाणोऽपवाद इति । अन्यत्र पूर्वेणैव सिद्धत्वात् ॥ १२१ ॥ १२२ ॥

शुभ्रादिभ्यश्च ॥ यथायोगमित्यादि । तत्रादन्तेष्विञोऽपवादः, शलाकादिषु तन्नामिकाणः, विधवाशब्दात्तु

भावबोधिनी

"स्त्रीभ्यः" [ स्त्रीप्रत्ययान्त से ] इसकी अनुवृत्ति होती है । स्त्रीप्रत्ययान्त, दो अचों वाले शब्द से अपत्य अर्थ में ढक् प्रत्यय होता है । [ "अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः" ४।१।११३ से ] नदी मानुषी नामवाली से प्राप्त होने वाले अण् का अपवाद है । उदा०—दत्तायाः अपत्यम्—दात्तेयः । [ दत्ता + ढक्, ढ = एय, आदिवृद्धि, दत्ता नामक स्त्री की सन्तान ] गौपेयः [ गोपानामक स्त्री का अपत्य । ढक् प्रत्यय और प्रक्रिया पूर्ववत् । ] दो अचों वाले से इसका क्या फल है ? यामुनः [ यमुना + अण्, यहाँ तीन अच् हैं । अतः इससे ढक् न होकर सामान्य सूत्र से अण् ही होता है । ] ॥ १२१ ॥

स्त्रीग्रहण की निवृत्ति हो जाती है । चकार यह 'द्व्यचः' [ दो अचों वाले से ] इसकी अनुवृत्ति के लिए है । जिसके अन्त में इञ् प्रत्यय नहीं है, ऐसे इकारान्त प्रातिपदिक से अपत्य अर्थ में ढक् प्रत्यय होता है । उदा०—आत्रेयः । नैधेयः । [ अत्रि का अपत्य । अत्रि + ढक् = ढ = एय, आदिवृद्धि, भसंज्ञा, इत्यलोप । इसी प्रकार निधि + ढक् इकारान्त से—इसका क्या फल है ? दाक्षिः । प्लाक्षिः । [ दक्ष और प्लक्ष अकारान्त हैं । अतः इनसे ढक् न होकर "अत इञ्" ४।१।९५ से इञ् ही होता है । दक्ष और प्लक्ष की सन्तान ] इञ् प्रत्ययान्त से नहीं—इसका क्या फल है ? दाक्षायणः । प्लाक्षायणः । [ दक्ष से अपत्य अर्थ में इञ् करने के बाद "यञिञोश्च" ४।१।१०१ से फक् फ = आयन ही होता है, इससे ढक् नहीं होता है क्योंकि यह इञ्प्रत्ययान्त है । इसी प्रकार प्लाक्षायणः में भी है । ] दो अचों वाले से—इसका क्या फल है ? मारीचि का अपत्य मारीचः [ इसमें तीन अच् हैं । अतः इस सूत्र से ढक् न होकर अण् होता है ।] ॥ १२२ ॥

शुभ्र—आदि प्रातिपदिकों से ढक् प्रत्यय होता है । लक्ष्यानुसार प्राप्त होने वाले इञ् आदि प्रत्ययों का अपवाद है । उदाहरण—शौभ्रेयः [ शुभ्र का अपत्य । शुभ्र + ढक् = ढ = एय, आदिवृद्धि ] । वैष्टपुरेयः [ विष्टपुर + ढक् ] । चकार [ गण में ] न कहे गये भी शब्दों का समुच्चय करने के लिये होता हुआ इसका आकृतिगण होना बोधित करता है । इस लिये गाङ्गेयः, पाण्डवेयः आदि सिद्ध होते हैं । [ गङ्गा + ढक् = ढ = एय, आदिवृद्धि, पाण्डव + ढक् = ढ = एय ] ।

[ इस गण में पठित शब्द—] शुभ्र । विष्टपुर । ब्रह्मकृत । शतद्वार । शतावर । शलाका । शलाचल । शलाकाभ्रू । विमातृ [ इससे वैमात्रेयः बनता है, विमाता का पुत्र ] । विधवा [ इससे वैधवेयः = विधवा का पुत्र ] । किंकसा । रोहिणी

**'शुभ्र' इत्येवमादिभ्यः प्रातिपदिकेभ्यो ढक् प्रत्ययो भवति। यथायोगमिञादीनामपवादः। शौभ्रेयः। वैष्टपुरेयः। चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयति, तेन गाङ्गेयः पाण्डवेय इत्येवमादि सिद्धं भवति ।**

शुभ्र। विष्टपुर। ब्रह्मकृत। शतद्वार। शतावर। शलाका। शलाचल। शलाकाभ्रू। लेखाभ्रू। विमातृ। विधवा। किंकसा। रोहिणी। रुक्मिणी। दिशा। शालूक। अजबस्ति। शकन्धि। ❀ लक्षणश्यामयोर्वासिष्ठे ❀ ( ग० सू० ७८ )। गोधा। कृकलास। अणीव। प्रवाहण। भरत। भारम[1]। मृकण्डु। मघष्टु। मकष्टु। कर्पूर। इतर। अन्यतर। आलीढ। सुदत्त। सुचक्षस्। सुनामन्। कद्रु। तुद। अकशाप। कुरेका[2]। किशोरिका। कुवेणिका। जिह्वाशिन। परिधि। वायुदत्त। ककल। खट्वा। अम्बिका। अशोका। पिङ्गला[3]। खण्डोन्मत्ता। अनुदृष्टि। जरतिन्। बलिर्वादिन्। विग्रज। बीज। श्वन्। अश्मन्। अश्व। अजिर[4]॥

### न्यासः

शलाका, कुरेका, अम्बिका, अशोका, खट्वा, पिङ्गला, खण्डोन्मत्ता—इत्येतेभ्यस्तन्नामिकाणः। विधवा-शब्दात् क्षुद्रालक्षणस्य ढ्रकः। किंकसा, रोहिणी, अजबस्ति, शकन्धि, कृकलास, सुदत्त, परिधि—एतेभ्यश्च-तुष्पाल्लक्षणस्य ढञः। गोधाशब्दाद् गोधाया ढ्रकः. वचनसामर्थ्यात् सोऽपि भवत्येव। शेषेभ्य औत्सर्गिकोऽण इत्येष यथायोगार्थः **लक्षणश्यामयोर्वासिष्ठे इति**। लक्षण, श्याम—इत्येतयोर्वासिष्ठेऽपत्यविशेषे ढग् भवति। लाक्षणेयो वासिष्ठः, लाक्षणिरन्यः। श्यामेयो वासिष्ठः, श्यामायनोऽन्यः। अश्वादित्वात् फञ्॥ १२३॥

### पदमञ्जरी

क्षुद्रालक्षणस्य ढ्रकः, चतुष्पाद्वाचिषु चतुष्पाल्लक्षणस्य ढञः, गोधाशब्दाद्गोधाया ढ्रकः, वचनात् सोऽपि भवति। क्वचिदौत्सर्गिकस्याणः। **पाण्डवेय इति**। 'ढे लोपोऽकद्र्वा' इति लोपो न भवति, कद्रूपर्युदासेन स्त्रीलिङ्गस्य ग्रहणात्, पाण्डवशब्दाद्वा प्रत्ययः।

**लक्षणश्यामयोर्वासिष्ठ इति**। लाक्षणेयो भवति वासिष्ठश्चेत्, लाक्षणिरन्यः, श्यामेयो वासिष्ठः,

### भावबोधिनी

[ इससे रौहिणेयः बनता है ]। रुक्मिणी [ रौक्मणेयः बनता है। ] दिशा। शालूक। अजवस्ति। शकन्धि। * वासिष्ठ अपत्यविशेष अर्थ रहने पर लक्षण और श्याम शब्दों से ढक् प्रत्यय होता है। * [ वासिष्ठ अर्थ में लाक्षणेयः, अन्य अर्थ में इञ् करने पर लाक्षणिः। इसी प्रकार वासिष्ठ अपत्यविशेष अर्थ में श्यामेयः, अन्य अर्थ में—श्यामायनः; श्याम शब्द अश्वादिगणीय है, अतः "अश्वादिभ्यः फञ्" ४।१।११० से फञ् = फ = आयन ] होता है। गोधा। कृकलास। अणीव। प्रवाहण। भरत। भरम। मृकण्डु [ इससे मार्कण्डेयः बनता है ]। मघष्टु। मकष्टु। कर्पूर। इतर। अन्यतर। आलीढ। सुदत्त। सुचक्षस्। सुनायन्। कद्रु। तुद। अकशाप। कुरेका। किशोरिका। कुवेणिका। जिह्वाशिन। परिधि। वायुदत्त। ककल। खट्वा। अम्बिका। अशोका। पिङ्गला। खण्डोन्मत्ता। अनुदृष्टि। जरतिन्। बलिर्वादिन्। विग्रज। बीज। श्वन्। अश्मन्। अश्व। अजिर।

**विमर्श**—इस गण में अकारान्त शब्दों से "अत इञ्" से इञ् प्राप्त रहता है। शलाका, कुरेका, अम्बिका, अशोका, खट्वा, पिङ्गला और खण्डोन्मत्ता—ये सभी मानुषी स्त्रियों के नाम हैं अतः "अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः"

---

१. भारतेति वा पाठः।

२. 'कुमारिका' इति वा पाठः किन्तु 'कुरेका' इति न्याससम्मतः।

३. 'शुद्धपिङ्गला' इति वा पाठः। किन्तु न न्याससम्मतोऽयं पाठः।

४. स्थूल। सृकण्डु। मकथु। यमष्टु। कष्टु। सृकण्ड। मृकण्ड। गुद। रुद। कुशोरिका। शकल। शबल। उग्र। अजिन—अत्रैते शब्दा अधिकाः क्वचित्।

**१३७४. विकर्णकुषीतकात् काश्यपे ॥ १२४ ॥ ( ११२७ )**

विकर्णशब्दात् कुषीतकशब्दाच्च काश्यपेऽपत्यविशेषे ढक् प्रत्ययो भवति। वैकर्णेयः। कौषीतकेयः। काश्यप इति किम् ? वैकर्णिः। कौषीतकिः ॥

**१३७५. भ्रुवो वुक्च ॥ १२५ ॥ ( ११३० )**

भ्रूशब्दादपत्ये ढक् प्रत्ययो भवति, तत्सन्नियोगेन च वुगागमः। भ्रौवेयः ॥

**१३७६. कल्याण्यादीनामिनङ् ॥ १२६ ॥ ( ११३१ )**

'कल्याणी' – इत्येवमादीनां शब्दानामपत्ये ढक् प्रत्ययो भवति, तत्सन्नियोगेन च इनङादेशः। स्त्रीप्रत्ययान्तानामादेशार्थं ग्रहणम्; प्रत्ययस्य सिद्धत्वात्। अन्येषामुभयार्थम्। काल्याणिनेयः। सौभागिनेयः। दौर्भागिनेयः। 'हृद्भगसिन्ध्वन्त' ( पा० सू० ७।३।१९ ) इत्युभयपदवृद्धिः।

कल्याणी। सुभगा। दुर्भगा। बन्धकी। अनुदृष्टि। अनुसृष्टि। जरती। बलीवर्दी। ज्येष्ठा। कनिष्ठा। मध्यमा। परस्त्री ॥

न्यासः

विकर्णकुषीतकात् काश्यपे ॥ १२४ ॥ भ्रुवो वुक् च ॥ १२५ ॥ कल्याण्यादीनामिनङ् ॥ १२६ ॥

पदमञ्जरी

श्यामायनोऽन्यः, अश्वादित्वात् फञ् ॥ १२३ ॥ १२४ ॥ १२५ ॥ १२६ ॥

भावबोधिनी

४।१।११३ से अण् प्राप्त रहता है। विधवा शब्द से "क्षुद्राभ्यो वा" ४।१।१३१ से ढक् प्राप्त रहता है। गोधा--शब्द से ढक् प्राप्त रहता है। किंकसा, रोहिणी, अजवस्ति, शकन्धि, क्रकलास, सुदत्त, परिधि--इनसे चतुष्पादवाची होने के कारण "चतुष्पाद्भ्यो ढञ्" ४।१।१३५ से ढञ् प्राप्त रहता है। शेष शब्दों से "तस्यापत्यम्" ४।१।९२ से अण् प्राप्त रहता है। उपर्युक्त सभी प्रत्ययों का अपवाद यह ढक् प्रत्यय है ॥ १२३ ॥

काश्यप अपत्यविशेष अर्थ रहने पर विकर्ण शब्द और कुषीत शब्द से ढक् प्रत्यय होता है। उदा०—वैकर्णेयः। कौषीतकेयः [ विकर्ण + ढक् = ढ = एय, आदिवृद्धि। कुषीत + ढक् = ढ = एय, आदिवृद्धि ]। काश्यप = कश्यप वंश की सन्तान—इस अर्थ में ही—इसका क्या फल है ? वैकर्णिः। कौषीतकिः। [ इञ् प्रत्यय होता है। ] ॥ १२४ ॥

भ्रू शब्द से अपत्य अर्थ में ढक् प्रत्यय होता है और इसके सन्नियोग से वुक् का आगम होता है। उदा०—भ्रौवेयः। [ भ्रू + ढक् = ढ = एय, आदिवृद्धि भ्रौ+एव, वुक् = व् आगम करने पर—भ्रौवेयः बनता है। यदि वुक् न होता तो ऊकार की वृद्धि और आव् आदेश करने पर भ्रावेयः—ऐसा रूप बनने लगता। ] ॥ १२५ ॥

कल्याणी--आदि शब्दों से अपत्य अर्थ में ढक् प्रत्यय होता है और इसके सन्नियोग से इनङ् [ अन्तादेश ] होता है। स्त्रीप्रत्ययान्तों का [ इनङ् ] आदेश करने के लिये ग्रहण है क्योंकि ढक् प्रत्यय तो [ "स्त्रीभ्यो ढक्" ४।१।१२० से ] सिद्ध ही है। अन्य शब्दों का ग्रहण दोनों = ढक् प्रत्यय और इनङ् आदेश करने के लिये ग्रहण है। उदा०--काल्याणिनेयः [ कल्याणी की सन्तान। कल्याणी+ढक् = ढ = एय, इनङ् = इन् अन्तादेश, कित् होने से आदिवृद्धि, काल्याण्+इन् + एय = काल्याणिनेयः ]। सौभागिनेयः [ सुभगाया अपत्यम्--इस अर्थ में सुभगा + ढक्; इनङ् अन्तादेश, उभयपद की वृद्धि--सौभागिनेयः ] दौर्भागिनेयः [ दुर्भगाया अपत्यम् यहाँ भी ढक् प्रत्यय, इनङ् अन्तादेश ] "हृद्भगसिन्ध्वन्ते च" ७।३।१९ इस सूत्र से दोनों पदों की वृद्धि होती है।

[ इस गण में पठित शब्द-- ] कल्याणी। सुभगा। दुर्भगा। बन्धकी। अनुदृष्टि। अनुसृष्टि। जरती। बलीवर्दी। ज्येष्ठा। कनिष्ठा। मध्यमा। परस्त्री। [ विदादिगण में पठित परस्त्री शब्द को परशु आदेश होता है। वहाँ परा चासौ स्त्री--यह कर्मधारय है। इस सूत्रस्थ परस्त्री में--परस्य स्त्री--यह षष्ठीतत्पुरुष है। अतः पारस्त्रैणेयः--यह बनता है।

## १३७७. कुलटाया वा ॥ १२७ ॥ ( ११३२ )

**कुलान्यटतीति कुलटा; पररूपं निपातनात् । कुलटाया अपत्ये ढक् प्रत्ययो भवति, तत्सन्नियोगेन च वा इनङादेशो भवति । आदेशार्थं वचनम्, प्रत्ययः पूर्वेणैव सिद्धः । कौलटिनेयः, कौलटेयः ।**

**या तु कुलान्यटन्ती शीलं भिनत्ति, ततः 'क्षुद्राभ्यो वा' इति परत्वाड् ढ्रका भवितव्यम् – कौलटेरः ॥**

**न्यासः**

**कुलटाया वा ॥** कुलान्यटतीति कुलटा । नन्वकः सवर्णे दीर्घत्वे कृते कुलाटेति भवितव्यमित्यत आह **पररूपमित्यादि । पूर्वेणैवेति । 'स्त्रीभ्यो ढक्'** इत्यनेनैव । व्यवहितेऽपि पूर्वव्यपदेशः प्रवर्तते, यथा— मथुरायाः पाटलिपुत्रं पूर्वमिति ।

**कौलटेर इति ।** एयादेशे कृते वलि यलोपः ॥ १२७ ॥

**पदमञ्जरी**

**कुलटाया वा ॥ कुलान्यटतीति कुलटेति ।** मूलविभुजादिषु दर्शनात्कः प्रत्ययः । पचाद्यच् तु न लभ्यते, अकारादनुपपदात्कर्मोपपदे विप्रतिषेधेनेत्यणप्रसङ्गात् ।

**या तु कुलान्यटन्ती शीलं भिनत्तीति ।** एकत्र कुले प्रविष्टा स्वैरिणी या कुलान्तरमटति सा दुःशीला कुलटेत्यर्थः । **क्षुद्राभ्यो वेति परत्वादिति ।** क्षुद्राः = अङ्गहीनाः शीलहीनाश्च । या पुनर्भिक्षालिप्सया सुशीलापि कुलान्यटति, तस्या इह ग्रहणम् ॥ १२७ ॥

**भावबोधिनी**

'अनुशतिकादीनां च'' ७।३।२० से उभयपद की वृद्धि होती है । इस प्रकार दूसरे की स्त्री में उत्पन्न सन्तान यह अर्थ यहाँ है । और अपनी जाति से भिन्न जाति की स्त्री के साथ विवाहादि करके उत्पन्न सन्तान को—पारशवः—कहा जाता है ॥ १२६ ॥

कुलानि अटति = घर-घर घूमने वाली—कुलटा, यहाँ निपातन से [ अथवा शकन्ध्वादि गण में मानकर ] पररूप होता है [ कुल + अटा = कुलटा ] । कुलटा शब्द से अपत्य अर्थ में ढक् प्रत्यय होता है और इनके सन्नियोग से विकल्प से इनङ् [ अन्त ] आदेश होता है । इनङ् आदेश करने के लिये यह सूत्र है क्योंकि ढक् प्रत्यय तो [ "स्त्रीभ्यो ढक्" ४।१।१२० से ] सिद्ध ही है । उदा०—कुलटाया अपत्यम् – इस विग्रह में कुलटा + ढक् = एय्, आदिवृद्धि, इनङ् अन्तादेश—कौलटिनेयः, पक्ष में औत्सर्गिक ढक् होने पर—कौलटेयः दो रूप होते हैं । जो घर-घर घूमती हुई अपना शील = सदाचार समाप्त कर डालती है, व्यभिचारिणी है, उसके वाचक कुलटा शब्द से "क्षुद्राभ्यो वा" ४।१।१३१ से परवर्त्ती होने के कारण विकल्प से ढ्रक् प्रत्यय होता है—कौलटेरः ।

**विमर्श**—कुलटा + ढ्रक् = ढ् र में ढ् का एय आदेश और कित् होने से आदिवृद्धि, भसंज्ञा आलोप करने पर—कौलट् एय् र—में "लोपो व्योर्वलि" ६।१।६६ से य का लोप होने से रूप सिद्ध होता है ।

यहाँ दो प्रकार के अर्थों में कुलटा शब्द प्रयुक्त हुआ है । ( १ ) सती है, किन्तु निर्धन होने के कारण भिक्षुकी बनकर घर-घर घूमती है । उसकी सन्तान अर्थ में प्रस्तुत सूत्र से वैकल्पिक ढक् और इनङ् अन्तादेश करने पर ( क ) कौलटिनेयः । इससे ढक् न करने पर इनङ् भी न होने से औत्सर्गिक ढक् करने पर ( ख ) कौलटेयः । ( २ ) किन्तु जो व्यभिचारिणी होकर घर-घर घूमने वाली है, उसका वाचक कुलटा शब्द क्षुद्रोवाची है । अतः परवर्त्ती "क्षुद्राभ्यो वा" ४।१।१३१ से ढ्रक् होता है और ( ग ) कौलटेरः यह रूप बनता है ॥ १२७ ॥

## १३७८. चटकाया ऐरक् ॥ १२८ ॥ ( ११३४ )

**चटकाया अपत्ये ऐरक् प्रत्ययो भवति। चाटकैरः। * चटकाच्चेति वक्तव्यम् * ( म० भा० ४.१.१२८ वा० )। चटकस्यापत्यं चाटकैरः। * स्त्रियामपत्ये लुग्वक्तव्यः * ( वा० )। चटकाया अपत्यं स्त्री चटका[1] ॥**

## १३७९. गोधाया ढ्रक् ॥ १२९ ॥ (११३५ )

गोधाया अपत्ये ढ्रक् प्रत्ययो भवति। गौधेरः। शुभ्रादिष्वयं पठचते, तेन गौधेयः – इत्यपि भवति ॥

## १३८०. आरगुदीचाम् ॥ १३० ॥ ( ११३६ )

गोधाया अपत्ये उदीचामाचार्याणां मतेन आरक् प्रत्ययो भवति। गौधारः। आचार्यग्रहणं पूजार्थम्,

### न्यासः

**चटकाया ऐरक् ॥ चटकाया अपत्यं स्त्री चटकेति।** 'लुक् तद्धितलुकि' इति लुकि कृते पुनष्टाप् कर्तव्यः। पुंल्लिङ्गादपि स्त्रियामिष्यत एव लुक्। एवम् 'चटकादैरक्' इत्येतत् सूत्रमासीत्, इदानीं प्रमादाच्च 'चटकायाः' इति पाठः ॥ १२८ ॥

**गोधाया ढ्रक् ॥ गौधेर इति।** पूर्ववद् यलोपः ॥ १२६ ॥

**आरगुदीचाम् ॥ आचार्यग्रहणं पूजार्थमिति।** ननु चासत्याचार्यग्रहणे नित्य एवायं विधिः स्यात्, तथा

### पदमञ्जरी

**चटकाया ऐरक् ॥** स्त्रीलिङ्गनिर्देशात्पुंल्लिङ्गान्न प्रसज्यत इत्याह—**चटकाच्चेति वक्तव्यमिति।** एवं च पुंल्लिङ्गनिर्देश एव कर्त्तव्यः, लिङ्गविशिष्टपरिभाषया स्त्रीलिङ्गादपि भविष्यति, तथा तु न कृतमित्येव।

**स्त्रियामपत्ये लुग्वक्तव्य इति। चटकाया अपत्यमिति।** चटकस्यापीति द्रष्टव्यम्। **चटकेति।** 'लुक्तद्धितलुकि' इति टापो लुकि कृते पुनरजादिलक्षणष्टाप् कर्तव्यः ॥ १२८-१२९ ॥

**आरगुदीचाम् ॥ रका सिद्धत्वादिति।** 'न लक्षणेन पदकारा अनुवर्त्याः' इत्यवग्रहेऽपि नास्ति विशेषः।

### भावबोधिनी

चटका से अपत्य अर्थ में ऐरक् प्रत्यय होता है। उदा०—चाटकैरः [ चटकायाः अपत्यम्—अर्थ में चटका + ऐरक्, आदिवृद्धि, आलोप। गौरैया चिड़िया का बच्चा। ] * चटक से भी कहना चाहिये * चटक का अपत्य इस अर्थ में—चाटकैरः [ चटक + ऐरक् प्रक्रिया पूर्ववत्, चटक की संतान ]। * स्त्री अपत्य रहने पर प्रत्यय का लुक् कहना चाहिये * चटका की स्त्री सन्तान—चटका। [ यहाँ सूत्र से होने वाले ऐरक् का लुक् हो जाने पर मूल शब्द ही रहता है। इस प्रकार पुरुष संतान के लिये चाटकैरः और स्त्री के लिये चटका ये अलग-अलग शब्दरूप होते हैं ॥ १२८ ॥

अपत्य अर्थ में गोधा से ढ्रक् प्रत्यय होता है। उदा०—गौधेरः [ गोधा का अपत्य—इस अर्थ में गोधा + ढ्रक्, आदिवृद्धि, ढ् का एय्, आलोप, गौधेरः ]। शुभ्रादिगण में यह पढ़ा जाता है। अतः [ "शुभ्रादिभ्यश्च" ४।१।१२३ से ढक् करने पर ] गौधेयः यह भी बनता है ॥ १२९ ॥

उत्तर के आचार्यों के मत में गोधा से अपत्य अर्थ में आरक् प्रत्यय होता है। उदा०—गौधारः [ गोधा + आरक्, आदिवृद्धि, आलोप ]। आचार्य [ उदीचाम् ] का ग्रहण पूजा सम्मान के लिये है। इस सूत्र को बनाने के फलस्वरूप ही पूर्ववर्त्ती सूत्र से समावेश हो जायगा [ अतः दोनों रूप बन जायेंगे। इसलिये आचार्य का ग्रहण पूजा + सम्मान के लिये ही है ]। [ गोधा से ] आरक् कहना अनर्थक है, केवल रक् प्रत्यय से ही सिद्ध होता है। [ क्योंकि गोधा शब्द आकारान्त

---

१. चटकेत्यस्याग्रे 'अजादित्वाट्टाप्' इत्यधिकं पुस्तकान्तरे।

**वचनसामर्थ्यादेव पूर्वेण समावेशो भविष्यति । आरग्वचनमनर्थकम्, रका सिद्धत्वात् ? ज्ञापकं त्वयम्—अन्येभ्योऽपि भवतीति[1] । जाडारः । पाण्डारः ॥**

## १३८१. क्षुद्राभ्यो वा ॥ १३१ ॥ ( ११३७ )

**ढ्रगनुवर्तते, न आरक् । क्षुद्राः=अङ्गहीनाः शीलहीनाश्च । अर्थधर्मेण तदभिधायिन्यः स्त्रीलिङ्गाः प्रकृतयो निर्दिश्यन्ते । क्षुद्राभ्यो वापत्ये ढ्रक् प्रत्ययो भवति । ढकोऽपवादः । काणेरः, काणेयः । दासेरः, दासेयः ॥**

## १३८२. पितृष्वसुश्छण् ॥ १३२ ॥ ( ११३८ )

**पितृष्वसृशब्दादपत्ये छण्प्रत्ययो भवति । अणोऽपवादः । पैतृष्वस्रीयः ॥**

### न्यासः

चारकः पूर्वेण ढ्रका समावेशो न स्यात् । तद्विकल्पार्थमेवाचार्यग्रहणं कस्मान्न भवतीत्याह—**वचनसामर्थ्यादिति** । ढ्रगपि ह्युच्यते, आरगपि, तत्र वचनसामर्थ्यात् समावेशो भविष्यति । तस्मात् पूजार्थमेवाचार्यग्रहणम् । **ज्ञापकं त्वित्यादि** । रका सिद्धे यदारग्वचनं तद् ज्ञापनार्थम् । तेनैवं ज्ञायते—अन्येभ्योऽप्ययं भवति; अन्यथा ह्यारग्वचनमनर्थकं स्यात्, रकि सिद्धेः । तेन जडस्यापत्यं जाडारः, पाण्डार इति सिद्धं भवति, न ह्येतद्रका सिध्यति ॥ १३० ॥

**क्षुद्राभ्यो वा ॥ अर्थधर्मेणेति** । अर्थस्य क्षुद्रत्वात्तदभिधायिन्योऽपि प्रकृतय उपचारेण क्षुद्रा इति निर्दिश्यन्ते ॥ १३१ ॥

**पितृष्वसुश्छण्** ॥ १३२ ॥

### पदमञ्जरी

**ज्ञापकार्थं त्विति** । भावप्रधानो ज्ञापकशब्दः । ज्ञापनार्थमिति वा पाठ्यम् । **जाडारः, पाण्डार इति** । ह्रस्वान्तादयं प्रत्यय इति रका नास्ति सिद्धिः ॥ १३० ॥

**क्षुद्राभ्यो वा ॥ अङ्गहीना इति** । काणादयः । **शीलहीना इति** । अनियतपुंस्का दासीप्रभृतयः ॥ १३१-१३२ ॥

### भावबोधिनी

है ही । ] तब यह इसका ज्ञापक होता है कि—गोधा से भिन्न शब्दों से भी आरक् होता है; जैसे—जाडारः । पाण्डारः । [ जड और पण्ड शब्द आकारान्त नहीं हैं । अतः इनसे आरक् करने पर ही इन रूपों की सिद्धि होती है । ] ॥ १३० ॥

ढ्रक् की अनुवृत्ति होती है, आरक् की अनुवृत्ति नहीं होती है । क्षुद्र = अङ्ग से रहित और शील = सदाचार से रहित । अर्थधर्म से उसको कहने वाली स्त्रीलिङ्ग प्रकृतियों का निर्देश किया जा रहा है । [ भाव यह है कि क्षुद्रात्व = अङ्गहीन होना और शीलहीन होना यह तो पदार्थ = स्त्री में रहने वाला धर्म है, शब्द में रहने वाला नहीं । परन्तु यहाँ अर्थधर्म से उसकी वाचक प्रकृति का निर्देश किया जा रहा है । अतः शब्दों से प्रत्यय होना संगत होता है । ] क्षुद्राओं से अपत्य अर्थ में ढ्रक् प्रत्यय होता है । यह ढक् का अपवाद है । उदा०—काणेरः, काणेयः [ काणत्व दोष आँख में रहता है, एक आँख से हीन को काणा कहा जाता है । अतः यह क्षुद्रवाची है । विकल्प से ढ्रक् होता है । काणा + ढ्रक् = ढ = एय्, र आलोप य का लोप—काणेरः, पक्ष में ढक् होने पर आलोप—काणेयः । कानी स्त्री की सन्तान ] दासेरः, दासेयः [ दासी का अपत्य । दासी + ढ्रक्, ढ् का एय, भसंज्ञा, ई का लोप, य् का लोप दासेरः । पक्ष में ढक् होने पर दासेयः ] ॥ १३१ ॥

पितृस्वसृ शब्द से अपत्य अर्थ में छण् प्रत्यय होता है । यह अण् का अपवाद है । उदा०—पितृष्वसुः अपत्यम् [ इस विग्रह में पितृष्वसृ + छण्, णित् होने से आदिवृद्धि, छ का ईय आदेश—पैतृष्वसृ + ईय, यण् करने पर ] पैतृष्वस्रीयः [ बुआ का लड़का ] ॥ १३२ ॥

---

१. 'जडस्य पुत्रः जाडारः । पण्डः क्लीबः । तत्पुत्रः पाण्डारः' इत्यधिकोऽयं पाठः दृश्यते पुस्तकान्तरे ।

## १३८३. ढकि लोपः ॥ १३३ ॥ ( ११३९ )

**पितृष्वसुरपत्यप्रत्यये ढकि परतो लोपो भवति । पैतृष्वसेयः ।**
**कथं पुनरिह ढक् प्रत्ययः ? एतदेव ज्ञापकं ढको भावस्य ॥**

## १३८४. मातृष्वसुश्च ॥ १३४ ॥ ( ११४० )

**'पितृष्वसुः' इत्येतदपेक्षते, पितृष्वसुर्यदुक्तं तन्मातृष्वसुरपि भवति - छण्प्रत्ययो ढकि लोपश्च । मातृष्वस्रीयः, मातृष्वसेयः ॥**

### न्यासः

**ढकि लोपः ॥ कथं पुनरित्यादि ।** ढग्विधौ टाबादिस्त्रीप्रत्ययान्तग्रहणात् पितृष्वसृशब्दस्य चास्त्रीप्रत्ययान्तत्वात् । ततो ढको भावमसम्भावयतः प्रश्नः । **एतदेवेत्यादि ।** यदेतत् पितृष्वसृशब्दं प्रति ढको निमित्तत्वेनाश्रयणम, एतदेव पितृष्वसृशब्दात् तस्य भावं ज्ञापयति । न ह्यसतो निमित्तभाव उपपद्यते ॥ १३३ ॥

**मातृष्वसुश्च ॥ पितृष्वसुरित्येतदपेक्षत इति ।** इहापि 'अनन्तरस्य पितृष्वसुर्विधिर्वा भवति प्रतिषेधो वा' इति लोप एवानन्तरः प्राप्नोति, न छण्; व्यवहितत्वात् । उभयमपि चैतदिष्यते, तत्र यतो हेतोरेतद् द्वयमपि लभ्यते तमनेन दर्शयति—**पितृष्वसुरिति ।** एतदिहापेक्ष्यमाणं ह्यर्थात् षष्ठ्यन्तं ज्ञायते यथा लोपविधौ, 'पितृष्वसु' इति च षष्ठी, तेनायमर्थः सम्पद्यते—पितृष्वसुर्यदुक्तं तन्मातृष्वसुरपि, तेन छण् ढकि लोपश्च लभ्यते उभयमपि ह्येतत् पितृष्वसुरुक्तम् ॥ १३४ ॥

### पदमञ्जरी

**ढकि लोपः ॥ कथं पुनरित्यादि ।** ढग्विधौ टाबादिस्त्रीप्रत्ययान्तानां ग्रहणाच्छुभ्रादिष्वस्यापाठात् प्रश्नः । **एतदेवेत्यादि ।** न ह्यसतो निमित्तभावः सम्भवति ॥ १३३ ॥

**मातृष्वसुश्च ॥ पितृष्वसुरित्येतदपेक्ष्यते इति ।** चकारेणानुकृष्यत इत्यर्थः । तदनुवृत्तौ योऽर्थः सम्पद्यते, तं दर्शयति—**पितृष्वसुर्यदुक्तमिति ।** किं पुनस्तदित्याह—**छण् प्रत्ययो ढकि लोपश्चेति ।** तेन 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति ढकि लोप एव प्राप्नोति, न तु छणिति न चोदनीयमिति भावः ॥ १३४ ॥

### भावबोधिनी

पितृष्वसृ से परे अपत्य प्रत्यय ढक् का लोप हो जाता है । [ "अलोऽन्त्यस्य" १।१।५२ के अनुसार अन्त्य वर्ण ऋ का लोप होता है । ] उदा०—[ पितृष्वसृ + ढक् = ढ = एय्, आदिवृद्धि, प्रस्तुत सूत्र से ऋ का लोप करने पर ] पैतृष्वसेयः [ बुआ का लड़का ] ।

यहाँ [ पितृष्वसृ से ] ढक् किस प्रकार होता है ? यह सूत्र ही ढक् होने का ज्ञापक है । [ क्योंकि जब तक ढक् नहीं किया जाता, लोप का विधान संगत नहीं हो सकता । ]

**विमर्श**—इस सूत्र को ही ढक् प्रत्ययविधान में ज्ञापक मानना ठीक नहीं है । पहले शुभ्रादिगण को आकृतिगण कहा गया है । अतः पितृष्वसृ को भी उसमें मानकर "शुभ्रादिभ्यश्च" ४।१।१२३ से ही ढक् करना युक्तिसंगत है और * 'पितृष्वसुश्छण्' ४।१।१३२ में 'वा' की अनुवृत्ति मानकर विकल्प से छण् और पक्ष में ढक् करने पर इस सूत्र से लोप करना संगत हो जाता है । अतिरिक्त कल्पना की आवश्यकता नहीं है ॥ १३३ ॥

'इस सूत्र को 'पितृष्वसुः' इसकी अपेक्षा है, अतः 'पितृष्वसृ' से अपत्य अर्थ में जो भी कहा गया है वह 'मातृष्वसृ' शब्द से भी होता है—छण् प्रत्यय और ढक् परे रहते लोप । [ इसलिये इसके भी दो रूप होते हैं ] उदा०—मातृष्वस्रीयः [ मातृष्वसृ+छण्, छ् का ईय् आदेश, ऋ का यण् । ] मातृष्वसेयः [ मातृष्वसृ=ढक्=ढ्=एय्, ऋ का लोप करने पर मातृष्वसेयः । मौसी का लड़का ] ॥ १३४ ॥

## १३८५. चतुष्पाद्भ्यो ढञ् ॥ १३५ ॥ ( ११४१ )

**चतुष्पादभिधायिनीभ्यः प्रकृतिभ्योऽपत्ये ढञ्प्रत्ययो भवति । अणादीनामपवादः । कामण्डलेयः । शौन्तिबाहेयः । जाम्बेयः ॥**

## १३८६. गृष्ट्यादिभ्यश्च ॥ १३६ ॥ ( ११४३ )

**गृष्टयादिभ्यः शब्देभ्योऽपत्ये ढञ्प्रत्ययो भवति । अणादीनामपवादः । गार्ष्टेयः । हार्ष्टेयः[1] ।**

**गृष्टिशब्दो यश्चतुष्पाद्वचनस्ततः पूर्वेणैव सिद्धः, अचतुष्पादर्थं वचनम् ।**

**गृष्टि । हृष्टि । हलि । बलि । विश्रि । कुद्रि । अजबस्ति । मित्रयु[2] ॥**

### न्यासः

**चतुष्पाद्भ्यो ढञ् ॥** **चतुष्पाद्भ्य इति ।** चत्वारः पादा आसामिति तास्तथोक्ताः । 'पादस्य लोपोऽहस्त्यादिभ्यः' इति लोपः । इहाप्यर्थधर्मेण तदभिधायिन्यः प्रकृतयो निर्दिश्यन्ते । अत एवाह— **चतुष्पादभिधायिनीभ्यः प्रकृतिभ्य इति ।** बहुवचननिर्देशः स्वरूपविधिनिरासाय । **अणादीनामिति ।** आदिशब्देन ढगादीनां ग्रहणम् । **कामण्डलेय इत्यादि ।** कमण्डलू-शुन्तिबाहू-जम्बुशब्दाश्चतुष्पाज्जातिवाचिनः, तेषाम् 'ढे लोपोऽकद्र्वाः' इत्युवर्णलोपः ॥ १३५ ॥

**गृष्टयादिभ्यश्च ॥** अणादीनामपवादः । आदिशब्देन ढकः । बहुवचननिर्देशस्तु प्रकृतिभेदेन तयोर्भेदस्य विवक्षितत्वात् । तत्राजबस्ति—मित्रयुशब्दयोरणोऽपवादः, शेषाणाम् 'इतश्चानिञः' इति ढकः ॥ १३६ ॥

### पदमञ्जरी

**चतुष्पाद्भ्यो ढञ् ॥** कमण्डलुशब्दश्चतुष्पाद्वचनोऽस्ति, दृश्यते हि—कमण्डलुपद आदधीतेति । जम्बुः = शृगालः ॥ १३५ ॥

**गृष्टयादिभ्यश्च ॥** **अणादीनामिति ।** आदिशब्देन ढकः । बहुवचनं तु प्रकृतिभेदेन तयोरेव बहुत्वात् तत्राजबस्ति मित्रयुशब्दयोरणोऽपवादः, शेषाणाम् 'इतश्चानिञः' इति ढकः ।

**गृष्टिशब्दो य इति ।** सकृत्प्रसूता स्त्री सर्वैव गृष्टिर्न धेन्वादिश्चतुष्पादेवेति भावः । अपर आह— सकृत्प्रसूतत्वसाधर्म्येणाचतुष्पदीष्वपि गौणो गृष्टिशब्द इति ॥ १३६ ॥

### भावबोधिनी

चतुष्पात् = चार पैरों वाले पशु अर्थ की वाचक प्रकृतिभूत शब्दों से अपत्य अर्थ में ढञ् प्रत्यय होता है । यह अण् आदि [ = ढक् ] का अपवाद है । उदा०—कामण्डलेयः । [ कमण्डलू पशुविशेष की सन्तान कमण्डलू+ढञ्, ञित् होने से आदि वृद्धि, ढ का एय "ढे लोपोऽकद्र्वाः' ६।४।१४७ से ऊकार का लोप करने पर कामण्डलेयः ] शौन्तिबाहेयः [ शुन्तिबाहू+ढञ्, शेष प्रक्रिया पूर्ववत् ] जाम्बेयः [ जम्बु+ढञ्, ] । शेष पूर्ववत्, शृगाल की सन्तान ]॥ १३५ ॥

गृष्टि आदि शब्दों से अपत्य अर्थ में ढञ् प्रत्यय होता है । यह अण् आदि का अपवाद है । उदा०—गार्ष्टेयः । हार्ष्टेयः [ गृष्टि+ढञ्, आदिवृद्धि, रपर, भसंज्ञा, इलोप । इसी प्रकार हृष्टि+ढञ्, शेष पूर्ववत् । गृष्टि की सन्तान । हृष्टि की सन्तान ] । चतुष्पाद्वाची जो गृष्टि शब्द है उससे पूर्वसूत्र से ही प्रत्यय सिद्ध है, अतः चतुष्पाद्वाचक से भिन्न से ढञ् के लिये यह सूत्र है । [ इस गण में पठित शब्द—] गृष्टि । हृष्टि । हलि । बलि । विश्रि । कुद्रि । अजबस्ति । मित्रयु । [इनमें अजबस्ति और मित्रयु से अण् प्राप्त होता है । अन्य शब्दों से ढक् प्राप्त होता है । इनका अपवाद यह ढञ् है ।] ॥१३६॥

---

१. 'मार्ष्टेयः' इति वा पाठः ।

२. फलि, अलि, दृष्टि—एतेऽत्राधिकाः पुस्तकान्तरे ।

## १३८७. राजश्वशुराद् यत् ॥ १३७ ॥ ( ११५३ )

**राजन्-श्वशुरशब्दाभ्यामपत्ये यत्प्रत्ययो भवति । यथाक्रममणिञोरपवादः । राजन्यः । श्वशुर्यः ।**

**❀ राज्ञोऽपत्ये जातिग्रहणम् ❀ ( म० भा० ४.१.१३७ वा० १ ) । राजन्यो भवति, क्षत्त्रियश्चेत् । राजनोऽन्यः ॥**

## १३८८. क्षत्त्राद् घः ॥ १३८ ॥ ( ११६१ )

**क्षत्त्रशब्दादपत्ये घः प्रत्ययो भवति । क्षत्त्रियः । अयमपि जातिशब्द एव । क्षात्त्रिरन्यः ॥**

### न्यासः

**राजश्वशुराद् यत् ॥ क्षत्त्रियजातिश्चेदिति ।** प्रत्ययान्तेन यदि क्षत्त्रियजातिर्गम्यते एवं यद् भवति । यो ह्यपत्यमेव राज्ञो न क्षत्त्रियजातिस्तत्राणेवौत्सर्गिको भवति । एतच्च 'वा' इत्यस्येहानुवृत्तस्य व्यवस्थित-विभाषात्वविज्ञानाल्लभ्यते । **राजन्य इति ।** 'ये चाभावकर्मणोः' इति प्रकृतिभावः । **राजन इति ।** अत्रापि 'अन्' इति प्रकृतिभावः ॥ १३७ ॥

**क्षत्त्राद् घः ॥ घप्रत्ययो भवतीति ।** घशब्द एव, न तु तरप्तमपा इति वेदितव्यम् । कथं पुनरेतल्लभ्यते, यावता 'घः' इति तरप्तमपोरियं संज्ञा, संज्ञा चोच्चारिता संज्ञिनं सम्प्रत्याययतीति तयोरेव ग्रहणं युक्तम् ? नैष दोषः, प्रत्ययविधौ यत्र 'घः' इति श्रूयते, तत्र स्वरूपस्य ग्रहणं भवति; ज्ञापकाद् । यदयं प्रत्ययादेर्घकारस्येयादेशं शास्ति, तज् ज्ञापयति – यत्र प्रत्ययविधौ घः श्रूयते तत्र स्वरूपमेव गृह्यत इति । न हि संज्ञिनोर्ग्रहणेन प्रत्ययादेर्घः सम्भवति ॥ १३८ ॥

### पदमञ्जरी

**राजश्वशुराद्यत् ॥ क्षत्त्रियजातिश्चेदिति ।** प्रकृतिप्रत्ययसमुदायेन क्षत्त्रियजातिश्चेद् गम्येतेत्यर्थः । **राजन्य इति ।** 'ये चाभावकर्मणोः' इति प्रकृतिभावः । **राजनोऽन्य इति ।** स पुनर्वैश्याशूद्रयोरुत्पन्नः, 'अन्' इति प्रकृतिभावः ॥ १३७ ॥

**क्षत्त्राद् घः । घप्रत्ययो भवतीति ।** घशब्द एव, न तरप्तमपौ; अन्यथा सर्वत्रैव प्रत्ययविधौ घ इति तरप्तमपोर्ग्रहणात्प्रत्ययादेर्घकारस्येयादेशवचनमनुपपन्नं स्यात्, न च 'तुग्राद्घन्', 'घच्छौ च' इति घन्घचावबकाशौ, तत्रापि संज्ञाशब्दः सानुबन्ध उपात्तः । अनुबन्धस्तु संज्ञ्यर्थ इति सम्भवात्, 'ङमुण्नित्यम्' इतिवत् । 'किमिदम्भ्यां वो घः' इत्यत्रापि तरप्तमपोरेवादेशत्वं विज्ञायेत । **अयमपि जातिशब्द एवेति ।** राजन्यजात्यभिधाने घो भवति, वैश्याशूद्रयोरुत्पादिते तु इञेवेत्यर्थः ॥ १३८ ॥

### भावबोधिनी

राजन् और श्वशुर शब्द से अपत्य अर्थ में यत् प्रत्यय होता है । यह क्रमशः अण् और इञ् का अपवाद है । उदाहरण—राजन् + यतः = राजन्यः [ "ये चाभावकर्मणोः" ६।१।१६८ से प्रकृतिभाव होता है अतः टिलोप नहीं होता है । श्वशुर + यत्, भसंज्ञा, अलोप करने पर ] श्वशुर्यः । [ श्वशुर का पुत्र = साला ] । * राजन् से अपत्य अर्थ में जाति का ग्रहण करना चाहिये । * यदि क्षत्रिय हो तभी 'राजन्यः' होता है अन्य हो तो [ अण् होने पर ] राजनः—यही होता है ॥ १३७ ॥

क्षत्त्र शब्द से अपत्य अर्थ में घ प्रत्यय होता है । उदाहरण—क्षत्त्रियः [ क्षत्त्र + घ = इय, भसंज्ञा, अलोप ] यह भी जातिवाचक है । अन्य अर्थ में 'क्षात्त्रिः' [ क्षत्त्र + इञ्, आदिवृद्धि, भसंज्ञा, अलोप ] होता है ॥ १३८ ॥

**१३८९. कुलात् खः ॥ १३९ ॥ ( ११६२ )**

**उत्तरसूत्रे पूर्वपदप्रतिषेधादिह तदन्तः केवलश्च दृश्यते । कुलशब्दान्तात् प्रातिपदिकात् केवलाच्चापत्ये खः प्रत्ययो भवति । आढ्यकुलीनः । श्रोत्रियकुलीनः । कुलीनः ॥**

**१३९०. अपूर्वपदादन्यतरस्यां यड्ढकञौ ॥ १४० ॥ ( ११६३ )**

**'कुलात्' इत्येव । अविद्यमानं पूर्वपदं यस्य तदपूर्वपदम्, समाससम्बन्धिपूर्वपदस्याभावेन कुलशब्दो विशेष्यते । अपूर्वपदात् कुलशब्दादन्यतरस्यां यत्, ढकञ् - इत्येतौ प्रत्ययौ भवतः । ताभ्यां मुक्ते खोऽपि भवति । कुल्यः, कौलेयकः, कुलीनः ।**

न्यासः

**कुलात् खः ॥ उत्तरसूत्र इत्यादि ।** उत्तरसूत्रे हि पूर्वपदप्रतिषेधाद् यस्यां परिभाषायां प्रातिपदिकश्रुतिरस्ति, साऽत्र नोपतिष्ठत इत्येषोऽर्थो ज्ञायते । यदि ह्युपतिष्ठेत, तदा ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधादेव स पूर्वपदान्न भविष्यतीत्यपूर्वपदादिति प्रतिषेधोऽनर्थकः स्यात् । सामान्यापेक्षञ्च ज्ञापकम्; तेन 'व्यपदेशिवद्भावोऽप्रातिपदिकेन', 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नेष्यते'—इत्येतयोर्द्वयोरपीह परिभाषयोरुपस्थानं न भवति । ततश्च कुलशब्दान्तं प्रातिपदिकं केवलश्च कुलशब्दो गृह्यते ॥ १३९ ॥

**अपूर्वपदादन्यतरस्यां यड्ढकञौ ॥** ननु पूर्वशब्दोऽवयववचनः; न च कुलशब्दस्य पदान्तरमवयव उपपद्यते; पृथग्भूतत्वात्, अनारम्भकत्वाच्च, ततो व्यवच्छेद्याभावादपूर्वपदादित्ययुक्तमेतत्कुलशब्दस्य विशेषणम् । इत्याह—**समाससम्बन्धीत्यादि ।** समासे सत्येतद् भवति—पूर्वपदम्, उत्तरपदमिति । तस्मात् समाससम्बन्धिनः पूर्वपदस्याभावेन कुलशब्दो विशेष्यते—अविद्यमानं समाससम्बन्धि पूर्वपदं यस्येति । कस्य चाविद्यमानम् ? यः समासस्यान्तर्भूतो न भवति केवलः कुलशब्दः, तेन केवलात् कुलशब्दादयं विधिरित्युक्तं भवति । अथ

पदमञ्जरी

**कुलात् खः ॥ उत्तरसूत्र इत्यादि ।** पूर्वपदप्रतिषेधस्यैतत्प्रयोजनम्— आढ्यकुलादेर्मा भूदिति । ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधादेवाढ्यकुलादेर्न भविष्यति, पश्यति त्वाचार्यः—नायं प्रतिषेधः कुलशब्दे प्रवर्त्तत इति । तेनात्र तावत्तदन्तस्य ग्रहणम् 'येन विधिस्तदन्तस्य' इत्यत्र स्वरूपमित्यनुवृत्तेः केवलस्यापि ग्रहणम् । सामान्यापेक्षं च ज्ञापकम्—'प्रातिपदिकश्रुतिमती परिभाषा कुलशब्दे न प्रवर्तते' इति, तेन 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इत्यस्या अप्यप्रवृत्तिः । **कुलीन इति** उत्तरसूत्रेऽन्यतरस्यांग्रहणात्केवलादप्यनेन खो भवति । प्रशस्तो वंशः = कुलम्, तस्यापत्यं तत्प्रभवस्यापत्यमित्यर्थः ॥ १३९ ॥

**अपूर्वपदादन्यतरस्यां यड्ढकञौ ॥** ननु च पूर्वपदशब्दः समासावयवे रूढः, न तस्य कुलशब्दे प्रसङ्गः ? इत्यत आह—**समाससम्बन्धिन इत्यादि ।** समाससम्बन्धिपूर्वपदं कुलशब्दस्यापि कथञ्चित्सम्बन्धि भवति,

भावबोधिनी

अग्रिम सूत्र में पूर्वपद का प्रतिषेध होने के कारण इस सूत्र में कुलशब्दान्त और केवल कुल शब्द देखा जाता है । कुलशब्दान्त प्रातिपदिक से और केवल कुल शब्द से अपत्य अर्थ में ख प्रत्यय होता है । उदाहरण—आढ्यकुलीनः [ आढ्यकुलस्य अपत्यम्—इस अर्थ में आढ्यकुल + ख = ईन, भसंज्ञा, अलोप ] । श्रोत्रियकुलीनः [ श्रोत्रियकुल का अपत्य ] कुलीनः [ उच्च कुल का अपत्य ] ॥ १३९ ॥

'कुलात्' इसकी अनुवृत्ति होती है । अविद्यमान है पूर्वपद जिसका वह—अपूर्वपद है, समाससम्बन्धी पूर्वपद के अभाव से कुल शब्द विशेषित किया जाता है । जिसका पूर्वपद नहीं है ऐसे कुल शब्द से विकल्प से 'यत्' और 'ढकञ्' ये दो प्रत्यय होते हैं । इनके न होने पर 'ख' प्रत्यय भी होता है । उदा०—(१) कुल्यः [ कुल + यत्, भसंज्ञा, अलोप ] । (२) कौलेयकः [ कुल + ढकञ्, ढ का एय्, आदिवृद्धि, भसंज्ञा अलोप कौल् एय् क, य् का लोप ] । कुलीनः [ कुल +

**पदग्रहणं किम् ? बहुच्पूर्वादपि यथा स्यात् । बहुकुल्यः । बाहुकुलेयकः । बहुकुलीनः ॥**

**१३९१. महाकुलादञ्खञौ ॥ १४१ ॥ ( ११६४ )**

**'अन्यतरस्याम्' इत्यनुवर्त्तते । महाकुलशब्दादञ्खञौ प्रत्ययौ भवतः, पक्षे खः[1] । माहाकुलः, माहाकुलीनः, महाकुलीनः ॥**

**१३९२. दुष्कुलाड्ढक् ॥ १४२ ॥ ( ११६५ )**

**दुष्कुलशब्दादपत्ये ढक् प्रत्ययो भवति । 'अन्यतरस्याम्' इत्यनुवृत्तेः खश्च । दौष्कुलेयः, दुष्कुलीनः ॥**

**१३९३. स्वसुश्छः ॥ १४३ ॥ ( ११६६ )**

**स्वसृशब्दादपत्ये छः प्रत्ययो भवति । अणोऽपवादः । स्वसुरपत्यं स्वस्रीयः ॥**

न्यासः

व्यवस्थावाच्येत्र पूर्वशब्दः कस्मान्नाश्रीयते ? अशक्यत्वात् । तत्र ह्याश्रीयमाणेऽविद्यमानं पूर्वपदं यस्मात् कुलशब्दात् सोऽपूर्वपदशब्देनोच्यते । ततश्च देवदत्तः कुल्यो देवदत्तः कौलेयक इति वाक्ये यड्ढकञौ न स्याताम्; देवदत्तशब्दस्येह पूर्वपदस्य विद्यमानत्वात् ।

**पदग्रहणं किमिति** । अपूर्वादित्येवं कस्मान्नोक्तम्, एवमपि हीष्टं सिध्यति, लघु च सूत्रं भवतीति मन्यते । **बहुच्पूर्वपदादपि यथा स्यादिति** । 'अपूर्वात्' इत्युच्यमाने बहुच् पूर्वं यत् प्रातिपदिकं बहुजस्य पूर्वं इति ततः प्रत्ययो न स्यात् । पदग्रहणे तु सति ततोऽपि भवति; तस्यापूर्वपदत्वात् । **बहुकुल्य इति** । ईषदसमाप्तं कुलमिति 'विभाषा सुपो बहुच् पुरस्तात्तु' इति बहुच् । बहुकुलस्यापत्यं बहुकुल्यः ॥ १४० ॥

**महाकुलादञ्खञौ ॥ १४१ ॥ दुष्कुलाड् ढक् ॥ १४२ ॥ स्वसुश्छः ॥ १४३ ॥**

**पदमञ्जरी**

द्वयोरप्येकसमासावयवत्वात् । व्यवस्थावचनस्तु नैवात्र शङ्कनीयः; पूर्वपरशब्दस्य समासावयवे रूढत्वात् । तेन 'देवदत्तः कुलीनः' इत्यादौ वाक्ये प्रतिषेधशङ्का न कार्या ।

**बहुच्पूर्वादपीति** । अपूर्वादित्युच्यमाने बहुकुलशब्दो बहुचा सपूर्व इति, ततो प्रत्ययो न स्यात् । **किञ्च--**

**भावबोधिनी**

ख = ईन, उच्चकुल की सन्तान ] [ अपूर्वात् यह न लिखकर ] पद ग्रहण अर्थात् अपूर्वपदात्—यह क्यों कहा ? जिससे कि बहुच् पूर्व वाले कुल से भी हो जाय । [ "ईषदसमाप्ति अर्थ में "विभाषा सुपो बहुच् पुरस्तात्तु" ५।३।६८ से बहुच् प्रत्यय प्रकृति के पहले होता है । किन्तु यह पद नहीं है । अतः बहुकुल यहाँ पूर्व में पद नहीं है, बहुच् प्रत्यय है । इस प्रकार इस सूत्र की प्रवृत्ति हो जाती है—] बहुकुल्यः [ ईषदसमाप्तं कुलम्—इस अर्थ में पूर्व में बहुच् प्रत्यय करने पर बहुकुल बनता है । बहुकुलस्य अपत्यम्—इस अर्थ में यत् होता है । ] बाहुकुलेयकः [ बहुकुल + ढकञ् ] । बहुकुलीनः । [ बहुकुल + ख = ईन ] ॥ १४० ॥

'अन्यतरस्याम्' [ विकल्प ] इसकी अनुवृत्ति होती है । महाकुल शब्द से 'अञ्' और 'खञ्' प्रत्यय होते हैं, पक्ष में 'ख' प्रत्यय भी होता है । उदा०—[ महाकुलस्य अपत्यम्—इस अर्थ में ]—माहाकुलः [ महाकुल + अञ्, आदिवृद्धि ], माहाकुलीनः [ महाकुलीन + खञ्, ख का ईन, आदिवृद्धि ] महाकुलीनः [ महाकुल + ख = ईन ] ॥ १४१ ॥

दुष्कुल शब्द से अपत्य अर्थ में 'ढक्' प्रत्यय होता है । "अन्यतरस्याम्" [ विकल्प ] इसकी अनुवृत्ति होने से 'ख' प्रत्यय भी होता है । उदा०—दौष्कुलेयः । दुष्कुलीनः [ दुष्कुलस्य अपत्यम्—इस अर्थ में दुष्कुल + ढक्, आदिवृद्धि, ढ् का एय् । दुष्कुल + ख = ईन ] ॥ १४२ ॥

स्वसृ शब्द से अपत्य अर्थ में 'छ' प्रत्यय होता है । यह अण् का अपवाद है । उदा०—स्वसुः अपत्यम्—स्वस्रीयः । [ स्वसृ + छ = ईय, ऋ का यण् । बहिन का लड़का, भाँजा ] ॥ १४३ ॥

---

१. 'अन्यतरस्यांग्रहणानुवृत्तेः खश्च' इति वा पाठः ।

१३९४. भ्रातुर्व्यच्च ॥ १४४ ॥ ( ११६७ )

**भ्रातृशब्दादपत्ये व्यत् प्रत्ययो भवति । चकाराच्छश्च । अणोऽपवादः । भ्रातृव्यः । भ्रात्रीयः । तकारः स्वरार्थः ॥**

१३९५. व्यन् सपत्ने ॥ १४५ ॥ ( ११६८ )

**सपत्नशब्दः शत्रुपर्यायः शब्दान्तरमव्युत्पन्नमेव । सपत्नीशब्दादपरेऽकारमिवार्थे निपातयन्ति । सपत्नीव सपत्नः । भ्रातृशब्दाद् व्यन् प्रत्ययो भवति समुदायेन चेदमित्रः = सपत्न उच्यते । अपत्यार्थोऽत्र नास्त्येव-- पाप्मना भ्रातृव्येण । भ्रातृव्यः कण्टकः ॥**

न्यासः

**भ्रातुर्व्यच्च ॥ तकारः स्वरार्थ इति ।** 'तित्स्वरितम्' इति स्वरितत्वं यथा स्यात् ॥ १४४ ॥

**व्यन् सपत्ने ॥** ननु 'नित्यं सपत्न्यादिषु' इति सपत्नीशब्द एव स्त्रीलिङ्गो व्युत्पादितः, तत् कथं सपत्न इति प्रयोगः पुंल्लिङ्गस्य युज्यत इत्याह—**सपत्नशब्दः शत्रुपर्याय इत्यादि । इवार्थे इति ।** इवार्थः = सादृश्यम् । यथैव हि सपत्नी दुःखहेतुः, तथा शत्रुरपीति । यः सपत्नीव, सपत्नः स उच्यते ॥ १४५ ॥

पदमञ्जरी

देवदत्तः कुलीन इत्यादावपि प्रतिषेधः स्यात् । तस्माद्रूढिपरिग्रहार्थमपि पदग्रहणं कर्त्तव्यम् ॥१४०॥ १४१–१४४॥

**व्यन् सपत्ने ।** ननु च 'नित्यं सपत्न्यादिषु' इति सपत्नीशब्द एव स्त्रीलिङ्गो व्युत्पादितः, तत्कथं पुंल्लिङ्गस्य प्रयोगस्तत्राह—**सपत्नशब्द इत्यादि । इवार्थं इति ।** सादृश्ये, यथा पत्नी दुःखहेतुस्तथा शत्रुरपीत्येतत्सादृश्यम् । **समुदायेन चेदिति ।** एतेन समुदायार्थः सपत्नो न प्रकृत्यर्थः, नापि प्रत्ययार्थविशेषणम्, अनर्थकावेवात्र प्रकृतिप्रत्ययाविति दर्शयति । अथानुवृत्तस्यापत्यस्य विशेषणमेव सपत्नः कस्मान्न भवति ? तत्राह—**अपत्यार्थोऽत्र नास्त्येवेति ।** एतदेवोदाहरणेन स्पष्टयति—**पाप्मना भ्रातृव्येणेति ।** न हि पाप्मा भ्रातुष्पुत्रो भवति, अतः सपत्नमात्रे भ्रातृव्यशब्दस्य दर्शनादपत्यार्थोऽत्र नास्ति । किञ्च, योऽपि सपत्नो भ्रातुरपत्यं सम्भवति, सोऽप्याद्युदात्ताद् भ्रातृव्यशब्दात्सपत्नरूपेणैव प्रतीयते, नापत्यरूपेण । तथा च भ्रातृव्यो भ्रातृव्य इति सहप्रयोगोऽपि व्यन्व्यदन्तयोर्भवति, अतः सुष्ठूक्तम्—'अपत्यार्थो नास्त्येव' इति ॥ १४५ ॥

भावबोधिनी

भ्रातृ शब्द से अपत्य अर्थ में 'व्यत्' प्रत्यय होता है । चकार के बल से 'छ' भी होता है । यह अण् का अपवाद है । उदा०—भ्रातृव्यः, भ्रात्रीयः । [ भ्रातुः अपत्यम्—इस अर्थ में—भ्रातृ + व्यत्, भ्रातृ + छ = ईय, ऋ का यण् ] तकार [ "तित्स्वरितम्" ६।१।१८५ से स्वरित ] स्वर के लिये है ॥ १४४ ॥

सपत्न शब्द शत्रु का पर्याय एक स्वतन्त्र अव्युत्पन्न [ रूढ ] ही शब्द है । कुछ लोग 'इव' के अर्थ में सपत्नी शब्द से अकार का निपातन करते हैं—सपत्नी इव = सपत्नः । [ जैसे सपत्नी = सौत कष्ट देती है उसी प्रकार कष्ट देने वाला शत्रु भी सपत्न है । समुदाय से यदि अमित्र = सपत्न अर्थ कहा जा रहा हो तो भ्रातृ शब्द से व्यन् प्रत्यय होता है । यहाँ अपत्य अर्थ पूर्णतया नहीं है । उदा०—पाप्मना भ्रातृव्येण । भ्रातृव्यः कण्टकः । [ भ्रातृ + व्यन् ] ।

**विमर्श**—सपत्न का अर्थ है शत्रु । यदि प्रकृति + प्रत्यय—समुदाय से शत्रु अर्थ की प्रतीति हो रही हो तब भ्रातृ शब्द से व्यन् प्रत्यय करके भ्रातृव्यः बनता है । इसका अर्थ है शत्रु । पूर्व सूत्र से व्यत् प्रत्यय करके और इस सूत्र से व्यन् प्रत्यय करके—भ्रातृव्य—एक ही प्रकार का शब्द रूप होता है । केवल स्वर के आधार पर अर्थ का भेद होता है । व्यत् में तित् होने से "तित्स्वरितम्" ६।१।१८५ से स्वरित होता है और व्यन् होने पर "ञ्नित्यादिर्नित्यम्" ६।१।१९७ आद्युदात्त होता है क्योंकि नित् हो जाता है ॥ १४५ ॥

## १३९६. रेवत्यादिभ्यष्ठक् ॥ १४६ ॥ ( ११६९ )

**रेवतीत्येवमादिभ्योऽपत्ये ठक् प्रत्ययो भवति । यथायोगं ढगादीनामपवादः । रैवतिकः । आश्वपालिकः ।**

**रेवती । अश्वपाली । मणिपाली । द्वारपाली । वृकवञ्चिन् । वृकग्राह । कर्णग्राह । दण्डग्राह । कुक्कुटाक्ष[1] ॥**

## १३९७. गोत्रस्त्रियाः कुत्सने ण च ॥ १४७ ॥ ( ११७१ )

**'अपत्यं पौत्रप्रभृति गोत्रम्' ( ४।१।१६२ ) गृह्यते । गोत्रं या स्त्री तदभिधायिनः शब्दादपत्ये णः प्रत्ययो भवति, चकाराट्ठक्च, कुत्सने गम्यमाने । पितुरसंविज्ञाने मात्रा व्यपदेशोऽपत्यस्य कुत्सा । गार्ग्या अपत्यं गार्गो जाल्मः, गार्गिकः । ग्लुचुकायन्या अपत्यं ग्लौचुकायनः, ग्लौचुकायनिकः । 'गोत्राद्यूनि' इति यूनि प्रत्ययो भवति ।**

### न्यासः

रेवत्यादिभ्यष्ठक् ॥ यथायोगमित्यादि ॥ तत्राद्यानां चतुर्णां स्त्रीप्रत्ययान्तत्वाद् ढकोऽपवादः, वृकवञ्चिन्- इत्यस्याणः, शेषाणामकारान्तत्वादिञः ॥ १४६ ॥

**गोत्रस्त्रियाः कुत्सने ण च ॥ अपत्यं पौत्रप्रभृति गोत्रं गृह्यत इति ।** न लौकिकमपत्यमात्रम्, तद्ग्रहणे हि गोत्रग्रहणमनर्थकं स्यात् । अपत्याधिकारादेव तद्ग्रहणस्य लब्धत्वादिति भावः । **पितुरसंविज्ञान इति ।** अप्रसिद्धौ । तस्य पितुरसंविज्ञानप्रदर्शनार्थं मात्रा यो व्यपदेशोऽस्ति तेन कुत्सा स्यात् । **गार्गो जाल्मो गार्गिक इति ।** गर्गशब्दाद् गोत्रे गर्गादियञन्ताद् 'यञश्च' इति ङीपि 'हलस्तद्धितस्य' इति लोपे[1] सति यकारस्य गार्गी इति स्थिते णठकौ । **ग्लौचुकायन इत्यादि ।** ग्लुचुकस्यापत्यं गोत्रं स्त्री 'प्राचामवृद्धात् फिन् बहुलम्'

### पदमञ्जरी

**रेवत्यादिभ्यष्ठक् ॥ ढगादीनामपवाद इति ।** तत्र रेवतीशब्दो ङीषन्तः, अश्व, मणि, द्वारशब्दोपपदात् पालयतेः कर्मण्यपि ङीप्, तेषु ढक्प्राप्तः । 'वञ्चु प्रलम्भने', अस्माद् वृकोपपदात् 'कर्त्तर्युपमाने' इति णिनिः, अस्मादण् प्राप्तः वृककर्णदण्डोपपदाद् ग्रहेः 'कर्मण्यण्', कुक्कुटस्येवाक्षिणी यस्य स कुक्कुटाक्षः, एष्विञ् प्राप्तः ॥ १४६ ॥

**गोत्रस्त्रियाः कुत्सने ण च ॥** पारिभाषिकस्य गोत्रस्य ग्रहणमित्याह--**अपत्यं पौत्रेति । लौकिकस्य** त्वपत्यमात्रस्य ग्रहणं न भवति, यदि स्यात् 'तत्स्त्रियाः' इत्येव ब्रूयात्, तच्छब्देन प्रकृतस्यापत्यस्य परामर्शादेव तदर्थलाभात् । **गार्ग इति ।** गार्गीशब्दो 'यञश्च' इति ङीबन्तः, तस्य 'भस्याऽढे तद्धिते' इति पुंवद्भावेन पुंशब्दस्यातिदेशात् गार्ग्यशब्दाद् गोत्रस्त्र्यभिधायिनः प्रत्ययः, 'यस्येति च', 'आपत्यस्य च तद्धितेऽनाति' इत्यल्लोपयलोपौ । **ग्लौचुकायन इति ।** ग्लुचुकस्यापत्यम् 'प्राचामवृद्धात्फिन्बहुलम्' इति फिन्, 'इतो मनुष्यजातेः'

### भावबोधिनी

रेवती आदि प्रातिपदिकों से अपत्य अर्थ में ठक् प्रत्यय होता है । यह लक्ष्यानुसार प्राप्त होने वाले ढक् आदि का अपवाद है । उदा०—रैवतिकः । आश्वपालिकः । [ रेवती का अपत्य । रेवती + ठक्, आदिवृद्धि, ठ का इक, भसंज्ञा, ई लोप । अश्वपाली + ठक्, शेष पूर्ववत् । इस गण में इन शब्दों का पाठ है—] रेवती । अश्वपाली । मणिपाली । द्वारपाली । वृकवञ्चिन् । वृकग्राह । कर्णग्राह । दण्डग्राह । कुक्कुटाक्ष ॥ १४६ ॥

'पौत्रप्रभृति अपत्य की गोत्रसंज्ञा होती है' (पा. सू. ४।१।१६२) इसी गोत्र का ग्रहण है [ लौकिक का नहीं ] । गोत्र जो स्त्री उसके वाचक शब्द से अपत्य अर्थ में ण प्रत्यय और 'च' के बल से ठक् प्रत्यय होते हैं, यदि कुत्सन=निन्दा प्रतीत हो रही हो । पिता का ठीक से ज्ञान न रहने पर माता के नाम से अपत्य का कहा जाना कुत्सा होती है । उदा०—गार्गी का अपत्य—गार्गः, गार्गिकः जाल्मः । [ गर्गस्य गोत्रापत्यं स्त्री—गार्गी । गर्ग + यञ्, भसंज्ञा, अलोप, आदिवृद्धि, गार्ग्य,

१. वृकबन्धु, चामरग्राह, ककुदाक्ष—अत्रैते शब्दाः पुस्तकान्तरेऽधिकाः ।

**गोत्रमिति किम्? कारिकेयो जाल्मः। स्त्रिया इति किम्? औपगविर्जाल्मः। कुत्सन इति किम्? गार्गेयो माणवकः॥**

**न्यासः**

इति फिन्, ततः 'इतो मनुष्यजातेः' इति ङीष्, ततो णठकौ।

**कारिकेय इति।** कारकशब्दाण्ण्वुलन्तात् टाप्। कारिकाशब्दोऽयं गोत्रे न वर्त्तते, ततो ढगेव भवति। **औपगविरिति।** उपगोरपत्यं गोत्रं पुमान्, अण्, तदन्तादिञेव भवति। अत्र केनचित् प्रतिषिद्धाचरणादिना कुत्सा वेदितव्या। **गार्गेयो माणवक इति।** अत्र पितरि विज्ञाते मातुः परिज्ञानार्थं तन्मात्रा व्यपदेशः क्रियत इति नास्ति कुत्सा, तेन ढगेव भवति॥ १४७॥

**पदमञ्जरी**

इति ङीष्, तस्य पुंवद्भावेन निवृत्तिः, ततः प्रत्ययः, णस्य णित्करणमत्र वृद्ध्यर्थम्, गार्ग्यादौ प्रकृतेरेव वृद्धत्वात्। इह तु वतण्डस्यापत्यं गोत्रं स्त्री, 'वतण्डाच्च लुक् स्त्रियाम्' वतण्डी, तस्या अपत्यं वातण्डो जाल्म इति पुंवद्भावेन ङीनि निवृत्ते 'लुक् स्त्रियाम्' इत्यस्य 'गोत्रेऽलुगचि' इति प्रतिषेधाद्वातण्ड्यशब्दादेव प्रत्ययः। इह च गार्ग्या अपत्यं स्त्री गार्गी, सा भार्या यस्य स गार्गीभार्य इति 'जातेश्च' इत्येव पुंवद्भावप्रतिषेधसिद्धिः, 'गोत्रं च चरणैः सह' इत्यपत्यमात्रं गृह्यते, तेन वृद्धिनिमित्तस्य चेति पुंवद्भावप्रतिषेधो न प्रयोजनम्। किञ्च — गार्ग्या अपत्यं स्त्रीत्यत्रार्थे नास्ति प्रत्ययः, 'अस्त्रियाम्' इति युवसंज्ञाया निषेधाद् गोत्रसंज्ञैवावतिष्ठते, तत्र 'एको गोत्रे' इति नियमान्नैव गोत्रप्रत्ययान्तादपरो गोत्रप्रत्ययः सम्भवति, तेन नास्ति गार्गी, नतरां गार्गीभार्यः।

अपर आह — अस्ति गार्गी, कथम्? गार्ग्या अपत्यं या स्त्री न सा युवतिर्नापि गोत्रम्; न हि सा गर्गस्यापत्यं पौत्रप्रभृतेश्चापत्यस्य गोत्रसंज्ञा विधीयते, तदभावाद् 'एको गोत्रे' इति नियमाभावः, ततश्च णस्य भावादस्ति गार्गीति।

ये तु नास्ति गार्गीत्याहुः, ते मन्यन्ते — मातृवंशः पितृवंशश्च द्वावपि वंशौ प्रतीयमपत्यं भवति; अपातहेतुत्वात्। ततश्च गार्ग्या अपत्यं या स्त्री सा गर्गस्यापत्यं भवत्येव, 'पौत्रप्रभृतिग्रहणं च व्यवहितापत्योपलक्षणम्, तेन गर्गापेक्षया तस्या गोत्रत्वाद् 'एको गोत्रे' इति नियमात्प्रत्ययान्तराभाव इति। वृत्तौ तु क्वचित्पठ्यते गोत्राद्यूनीति यूनि प्रत्ययो भवतीति। तदप्यस्मिन्नेव पक्षे घटते, तदाह — **गार्ग्या अपत्यं पुमान् युवा भवति गार्गेयो माणवक इति।** मातामहादेरुपलक्षणार्थोऽयं प्रयोग इति नास्ति कुत्सा॥ १४७॥

**भावबोधिनी**

"यञश्च" से ङीप् = ई, भसंज्ञा, अलोप, य् लोप करने पर गार्गी बनता है। पिता का ज्ञान नहीं है। अतः माता वाचक गार्गी से ये दोनों प्रत्यय होते है—(१) गार्गी + ण = अ, भसंज्ञा, ईलोप—गार्गः, (२) गार्गी + ठक् = ठ = इक भसंज्ञा, ई लोप—गार्गिकः जाल्मः।] ग्लुचुक की अपत्य गोत्र स्त्री—इस अर्थ में ["प्राचामवृद्धात् फिन् बहुलम्" ४।१।१६० से फिन्, फ् = आयन् करने पर ग्लुचुकायनि बनाकर "इतो मनुष्यजातेः" ४।१।६५ से ङीष् करके—ग्लुचुकायनी बनता है। ग्लुचुकायनी + ण = अ, आदिवृद्धि, भसंज्ञा, ई लोप] (१) ग्लौचुकायनः, [ग्लुचुकायनी + ठक् = ठ = इक, आदिवृद्धि, भसंज्ञा, ईलोप] (२) ग्लौचुकायनिकः। "गोत्राद् यूनि" ४।१।९४ [गोत्रप्रत्ययान्त से युवा अपत्य अर्थ में प्रत्यय होता है] इसके अनुसार यहाँ युवा अपत्य अर्थ में [प्रपौत्र आदि अर्थ में] प्रत्यय होते है।

गोत्रप्रत्ययान्त हो—इसका क्या फल है? कारिकेयो जाल्मः। [कारिका गोत्र नहीं है। अतः यह प्रत्यय न होकर "स्त्रीभ्यो ढक्" ४।१।१२० से ढक्, ढ = एय, और आदिवृद्धि करने पर कारिकेयः जाल्म = नीच।] स्त्री का अपत्य—इसका क्या फल है? औपगविः जाल्मः। [उपगु का अपत्य गोत्र पुरुष—इसमें अण्, आदिवृद्धि, उकार का गुण और अव् आदेश करने पर—औपगव बनता है। इसका अपत्य—इस अर्थ में अकारान्त से इञ् प्रत्यय ही होता है, ण नहीं, क्योंकि यहाँ स्त्री का नहीं, पुरुष का अपत्य विवक्षित है।] कुत्सन अर्थ में—इसका क्या फल है? गार्गेयः माणवकः।

## १३९८. वृद्धाट्ठक्सौवीरेषु बहुलम् ॥ १४८ ॥ ( ११७२ )

'कुत्सने' इत्येव । 'सौवीरेषु' इति प्रकृतिविशेषणम् । वृद्धात् सौवीरगोत्रादपत्ये बहुलं ठक् प्रत्ययो भवति, कुत्सने गम्यमाने । भागवित्तेर्भागवित्तिकः । तार्णबिन्दवस्य तार्णबिन्दविकः । पक्षे यथाप्राप्तं फक् – भागवित्तायनः । पक्षे – तार्णबिन्दविः । अकशापः शुभ्रादिः – आकशापेयः, तस्यापत्यमाकशापेयिकः । पक्षे – आकशापेयिः ।

भागपूर्वपदो वित्तिर्द्वितीयस्तार्णबिन्दवः ।
तृतीयस्त्वाकशापेयो गोत्राट्ठग्बहुलं ततः ॥

**न्यासः**

**वृद्धाट्ठक्सौवीरेषु बहुलम् ॥ सौवीरेष्विति प्रकृतिविशेषणमिति** । सौवीरेषु यद् वृद्धं सौवीरगोत्राभिधायि यद् वृद्धमित्यर्थः । **भागवित्तेरित्यादि** । भगवित्तस्यापत्यं गोत्रम्, 'अत इञ्', तदन्तात् ठक्-**भागवित्तिकः** । **भागवित्तायन इति** । 'यञिञोश्च' इति फक् । तृणबिन्दोरपत्यमौत्सर्गिकोऽण् तार्णबिन्दवः, ततष्ठक्—**तार्णबिन्दविकः** । पूर्वसूत्रे ठक् चानुकृष्ट इतीह नानुवर्त्तत इति पुनष्ठग्ग्रहणं णस्य निवृत्त्यर्थम् । वापूर्वकं हि ठग्ग्रहणं णप्रत्ययेन सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात् ।

**भागपूर्वपदो वृत्तिरित्यादि** । येभ्योऽनेन सूत्रेण ठगिष्यते, त एतेन श्लोकेन परिगण्यन्ते । 'भाग' इत्येतत् पूर्वपदं यस्य वृत्तिशब्दस्य स तथोक्तः । अयं तावदेको भागवित्तिः, द्वितीयस्तार्णबिन्दवः, तृतीयस्त्वा-

**पदमञ्जरी**

**वृद्धाट्ठक् सौवीरेषु बहुलम्** ॥ अत्र 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इति वृद्धं गृह्यते, न त्वपत्यमन्तर्हितं वृद्धमिति शास्त्रान्तरपरिभाषितम् । उत्तरसूत्रे हि वक्ष्यति--फिञो ग्रहणं न फिनः, वृद्धाधिकारादिति । **सौवीरेष्विति प्रकृतिविशेषणमिति** । 'गोत्रस्त्रियाः' इत्यतो गोत्रग्रहणानुवृत्तेर्गोत्रप्रत्ययान्ता या प्रकृतिस्तस्या विशेषणमित्यर्थः । **वृद्धात्सौवीरगोत्रादिति** । इदमपि पारिभाषिकस्यैव वृद्धस्य ग्रहणे घटते, अन्यथा सौवीरेषु यद्वृद्धं तस्मादिति वक्तव्यम् । **भागवित्तायन इति** । 'यञिञोश्च' इति फक् । तृणबिन्दोरपत्यमिति औत्सर्गिकोऽण् तार्णबिन्दवः, ततष्ठक् । पूर्वठग्ग्रहणं णेन सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति पुनरिह ग्रहणम् ।

**भागपूर्वपदो वित्तिरिति** । विद्यन्त इत्यर्थः । भागवित्तिशब्द इति यावत् । **गोत्राट्ठग्बहुलं तत इति** ।

**भावबोधिनी**

[ यहाँ पिता का ज्ञान है किन्तु नाना आदि मातृसम्बन्धी के घर में माता गार्गी के नाम से बुलाया जा रहा है । अतः कुत्सा की प्रतीति न होने पर इससे ण, ढक् न होकर सामान्य ढक् प्रत्यय ही होता है ] ॥ १४७ ॥

'कुत्सने' इसकी अनुवृत्ति होती है । 'सौवीरेषु' यह प्रकृति का विशेषण है । [ सौवीरों के मध्य में जो वृद्ध-संज्ञक शब्द सौवीरगोत्र का वाचक है । ] वृद्ध जो सौवीरगोत्रवाचक उससे अपत्य अर्थ में बहुलरूप से ठक् प्रत्यय होता है यदि कुत्सन = निन्दा प्रतीत हो रही हो तो । उदा०—भागवित्ति का अपत्य—भागवित्तिकः [ भागवित्त का अपत्य गोत्र—इस अर्थ में इञ् प्रत्यय करने पर भागवित्ति बनता है । इससे ठक् करने पर भागवित्ति + ठक्, ठ = इक भागवित्तिकः ] तृणबिन्दु का अपत्य—इसमें "तस्यापत्यम्" ४।१।९२ से अण्, आदिवृद्धि, उ का गुण, अवादेश करने पर तार्णबिन्दव बनता है । ] तार्णबिन्दव का अपत्य इस अर्थ में ठक्, ठ = इक—तार्णबिन्दविकः । पक्ष में यथाप्राप्त फक् [ "यञिञोश्च" ४।१।१०१ से होता है ] भागवित्ति + फक्, फ = आयन, भागवित्तायनः । पक्ष में तार्णबिन्दव + इञ्—तार्णबिन्दविः । अकशाप शब्द शुभ्रादिगण में है [ अतः अपत्य अर्थ में ढक्, ढ = एय, आदिवृद्धि—] आकशापेयः, इसका अपत्य—इस अर्थ में ठक् करने—आकशापेयिकः । पक्ष में इञ्—आकशापेयिः ।

भाग जिसका पूर्वपद है ऐसा वित्ति अर्थात्—(१) भागवित्ति, (२) तार्णबिन्दव और तीसरा, (३) आकशापेय है, इन तीन गोत्रप्रत्ययान्तों से ही बहुलरूप से ठक् होता है [ अन्य किसी सौवीरगणीय से नहीं ] ।

**वृद्धग्रहणं स्त्रीनिवृत्त्यर्थम् ।**

**सौवीरेष्विति किम् ? औपगविर्जाल्मः । 'कुत्सने' इत्येव – भागवित्तायनो माणवकः ।**

**बहुलग्रहणमुपाधिवैचित्र्यार्थम् । 'गोत्रस्त्रियाः' इत्यारभ्य चत्वारो योगाः – तेषु प्रथमः कुत्सन एव, अन्त्यः सौवीरगोत्रे एव, मध्यमौ द्वयोरपि । तदेतद्बहुलग्रहणाल्लभ्यते ॥**

**न्यासः**

कशायपेयः—य एते त्रयः शब्दाः, गोत्रे ठग् बहुलं तत इति । सौवीरगोत्रवचनान्तात् प्रातिपदिकाद् बहुलं यष्ठगुच्यते स ततस्तेभ्य एव भागवित्तिप्रभृतिभ्यस्त्रिभ्यो भवति, नान्येभ्य इत्यर्थः ।

अथ वृद्धग्रहणं किमर्थम्, यावता पूर्वसूत्राद् गोत्रग्रहणमनुवर्त्तते, सौवीरग्रहणेनैव विशेषयिष्यामः; यच्च सौवीरगोत्रे वर्त्तते प्रातिपदिकं भागवित्यादिकं तद् वृद्धमेव, ततो निवृत्त्यभावादपार्थकं वृद्धग्रहणम् ? इत्याह—**वृद्धग्रहणमित्यादि** । तद्धि गोत्रग्रहणं स्त्रिया विशेषणम्, अतस्तस्मिन्ननुवर्त्तमाने विशेष्यायाः स्त्रिया अनुवृत्तिः स्यात् । तस्मात् तन्निवृत्त्यर्थं वृद्धग्रहणम् । गोत्रग्रहणमेवानुवर्त्तिष्यते; तस्यैव स्वरितत्वात्, न स्त्रीति – एतद्व्याख्येयं भवति । व्याख्यानाच्च लघु वृद्धग्रहणमेव ।

**औपगविरिति** । अणन्तादिञ् । ननु च परिगणनं कृतम्, तत् कथमौपगवशब्दात् ठक्प्रसङ्गः ? सौवीरग्रहणे सति तत्परिगणनम् । तथा हि – भागवित्तिप्रभृतयः सौवीरगोत्राभिधायिन एव परिगणिताः । तत्रासति सौवीरग्रहणे औपगवशब्दादपि प्रसज्यते—**भागवित्तायन इति** । पूर्ववत् फक् ।

अथ बहुलग्रहणं किमर्थम्, न वाग्रहणमेव क्रियेत, तेनापि हि भागवित्तिको भागवित्तिकायन इत्यादि सिध्यत्येव ? इत्यत आह—**बहुलग्रहणमित्यादि** । वाग्रहणाद् विकल्पमात्रं लभ्यते, न तूपाधिवैचित्र्यम् । बहुलग्रहणे तु तदपि । तस्मादुपाधीनां विशेषणानां वैचित्र्यम् = नानाप्रकारता यथा स्यादित्येवमर्थं बहुलग्रहणम् । तदेवोपाधिवैचित्र्यं दर्शयितुमाह—**गोत्रस्त्रिया इत्यारभ्येत्यादि** । सुखावबोधम् ॥ १४८ ॥

**पदमञ्जरी**

'गोत्रस्त्रियाः' इत्यतो गोत्रग्रहणानुवृत्त्या गोत्रवचनात् प्रातिपदिकाद्बहुलं यष्ठगुच्यते, स ततस्तेभ्य एव भागवित्तिप्रभृतिभ्यस्त्रिभ्य एव भवति, नान्येभ्य इति परिगणनश्लोकार्थः ।

ननु गोत्रग्रहणमनुवर्त्तते, यच्च सौवीरगोत्रवृत्तिप्रातिपदिकं तद्वृद्धमेव, तत्किमर्थं वृद्धग्रहणम् ? अत आह – **वृद्धग्रहणं स्त्रीनिवृत्त्यर्थमिति** । तद्धि गोत्रग्रहणं स्त्रिया विशेषणम्, अतस्तदनुवृत्तौ स्त्रीग्रहणमप्यनुवर्त्तेत, वृद्धग्रहणसामर्थ्यात्तु गोत्रग्रहणमेवानुवर्त्तते, न स्त्रीग्रहणमिति व्याचक्षते । अपत्यमन्तर्हितं वृद्धमित्यस्य तु वृद्धस्य ग्रहणेऽसमञ्जसोऽयं ग्रन्थः स्यात् ।

**औपगविरिति** । ननु च परिगणनादेवात्र न भविष्यति ? तन्न; न हि सूत्रकारोऽर्वाचीनपरिगणनाश्रयेणातिप्रसङ्गनिवारणं मन्यते, वाग्रहण एव कर्त्तव्ये यद्बहुलग्रहणं कृतं तस्य प्रयोजनमाह—**बहुलग्रहणमित्यादि** । वैचित्र्यमेव दर्शयति–**गोत्रस्त्रिया इत्यारभ्येति** । **तत्रान्त्यः सौवीरगोत्र एवेति** । अयमेवार्थो यत्नसाध्यः ॥ १४८ ॥

**भावबोधिनी**

वृद्ध का ग्रहण [ पूर्वसूत्र के ] स्त्री अर्थ की निवृत्ति के लिए है। सौवीरों के मध्य में—यह किसलिये है ? औपगविः जाल्मः । [ यह सौवीर में नहीं है। अतः ठक् न होकर इञ् होना है। ] कुत्सन—अर्थ में ही होता है—[ अतः अन्य अर्थ में यथाप्राप्त प्रत्यय होता है ]—भागवित्तायनः । [ भागवित्ति से "यञिञोश्च" ४।१।१०१ से फक्, फ = आयन, भसंज्ञा, इलोप ] ।

बहुलम्—इसका ग्रहण उपाधिविचित्रता के लिये है। 'गोत्रस्त्रियाः' [ पूर्वसूत्र ] से लेकर चार योग हैं, इनमें (१) प्रथम—कुत्सा अर्थ में ही [ प्रवृत्त होता है ]। (२) अन्त्य—सौवीरगोत्र में ही [ होता है ] मध्य के (२) (३) दोनों में दोनों होते हैं यह बहुलग्रहण से सिद्ध होता है।

**१३९९. फेश्छ च ॥ १४९ ॥ ( ११७३ )**

**'कुत्सने' इत्येव, 'सौवीरेषु' इति च । 'फेः' इति फिञो ग्रहणम्, न फिनः; वृद्धाधिकारात् । फिञन्तात् प्रातिपदिकात् सौवीरगोत्रादपत्ये छः प्रत्ययो भवति, चकाराट्ठक् कुत्सने गम्यमाने । यमुन्दस्यापत्यम् – 'तिकादिभ्यः फिञ्' ( ४.१.१५४ ), तस्यापत्यं यामुन्दायनीयः । यामुन्दायनिकः । कुत्सन इत्येव – यामुन्दायनिः । फिञन्ता-दौत्सर्गिकस्याण आगतस्य 'ण्यक्षत्रियार्षञितोः यूनि लुगणिञोः' ( २.४.५८ )' इति लुक् । सौवीरेष्वित्येव – तैकायनिः ।**

**यमुन्दश्च सुयामा च वार्ष्यायणिः फिञः स्मृताः ।**
**सौवीरेषु च कुत्सायां द्वौ योगौ शब्दवित् स्मरेत् ॥**

**न्यासः**

**फेश्छ च ॥ यमुन्दश्चेत्यादि ।** येभ्योऽनेन सूत्रेण छठकाविष्येते, तेषामनेन श्लोकेन परिगणनं क्रियते, तत् तु बहुलग्रहणानुवृत्तेरेव लभ्यत इत्येवं तद्वेदितव्यम् । यमुन्दमुद्दिश्य वृत्तिकारेणैवोदाहरणं दर्शितम् । इतरयोस्तु दर्शयामः - सुयाम्नोऽपत्यं फिञ् - सौयामायनिः, तस्यापत्यं सौयामायनिकः । वृषस्यापत्यं फिञ्, तस्य 'दगुकोशलकर्मारच्छागवृषाणां युड् वादिष्टस्य' इति वचनादायन्नादेशे कृते युडागमः - वार्ष्यायणिः, तस्यापत्यं वार्ष्यायणीयः, वार्ष्यायणिकः । एते यमुन्दादयः शब्दाः फिञः स्मृताः = फिञन्ता विज्ञाताः ।

**पदमञ्जरी**

**फेश्छ च ॥ यमुन्दश्चेत्यादि ।** अत्र वार्ष्यायणीति शब्दरूपापेक्षया नपुंसकनिर्देशः । **फिञ इति ।** फिञन्ता इत्यर्थः । **स्मृता इति ।** एते त्रयः फिञन्ताः प्रकृतयः स्मृता इत्यर्थः । **सौवीरेषु च कुत्सायामिति ।** पुनश्चकारो वृत्तभङ्गभयान्न पठितः । बहुलग्रहणात्सिद्धोऽयमर्थः पूर्वं **वृत्तिकृता** दर्शितः, इदानीं तु **श्लोकवार्त्तिककारेणेत्य-**

**भावबोधिनी**

विमर्श—काशिकाकार ने यहाँ भाष्य का अभिप्राय प्रस्तुत करने का प्रयास किया है किन्तु वह स्पष्ट नहीं है । भाष्यकार ने स्पष्ट लिखा है—(१) गोत्रस्त्रियाः कुत्सने ण च" ४।१।१४७; (२) वृद्धाट्ठक् सौवीरेषु बहुलम् ४।१।१४८, (३) फेश्छ च ४।१।१४९; (४) फाण्टाहृतिमिमताभ्यां णफिञौ ४।१।१५०—ये चार सूत्र है । इनमें अन्तिम को छोड़कर पहले वाले तीन सूत्र कुत्सन में ही प्रवृत्त होते हैं । प्रथम को छोड़कर अन्तिम तीन सौवीर गोत्र में ही प्रवृत्त होते हैं । पहला सूत्र केवल कुत्सन में प्रवृत्त होता है । अन्तिम केवल सौवीर गोत्र में प्रवृत्त है । इसका तात्पर्य यह निकला कि बीच वाले दोनों सूत्र—[ "वृद्धाट्ठक्" और 'फेश्छ' कुत्सा अर्थ में और सौवीर गोत्र में—इन दोनों में प्रवृत्त होते हैं । इसी अभिप्राय को प्रकट करने के लिये यहाँ 'बहुलम्' का ग्रहण है ॥ १४८ ॥

'कुत्सने' इसकी और "सौवीरेषु" इसकी अनुवृत्ति होती है । 'फेः' यह फिञ् का ग्रहण है फिन् का नहीं, क्योंकि 'वृद्ध' का अधिकार है; फिञप्रत्ययान्त, प्रातिपदिक, सौवीरगोत्रवाचक से अपत्य अर्थ में 'छ' प्रत्यय होता है, चकार के बल से ठक् होता है, कुत्सन की प्रतीति होने पर । [ भाव यह है कि कुत्सन की प्रतीति हो रही हो सौवीर गोत्रप्रत्ययान्त में जो फिञ् प्रत्ययान्त है ऐसे प्रातिपदिक से अपत्य अर्थ छ और ठक् दोनों प्रत्यय होते है । उदा०—यमुन्द का अपत्य [ इस अर्थ में , "तिकादिभ्यः फिञ्" ४।१।१५४ [ से फिञ्, फ् का आयन्, आदिवृद्धि यामुन्दायनिः ] इसका अपत्य—इस अर्थ में [ प्रस्तुत सूत्र से छ = ईय करने पर ] (१) यामुन्दायनीयः । [ ठक्, ठ = इक करने पर ] (२) यामुन्दायनिकः । कुत्सन में ही होते हैं [ अन्यत्र नहीं । यामुन्दायनिः [ यामुन्दायनेः अपत्यम् इस अर्थ में ] फिञ् प्रत्ययान्त यामुन्दायनि से 'तस्यापत्यम्' ४।१।९२ से विहित औत्सर्गिक अण् का "ण्यक्षत्रियार्षञितो; यूनि लुगणिञौ" २।४।५८ सूत्र से लुक् हो जाता है । [ अतः फिञन्त ही रहता है । ] सौवीरों में ही होता है—तैकायनिः । [ यह सौवीर में नहीं है । अतः यहाँ भी 'यामुन्दायनिः' के समान ही प्रकिया है ] ।

१. अत्र 'कोसलमीर', 'युड्वादिष्टस्य' इति च मुद्रितः पाठोऽसाधुः ।

## १४००. फाण्टाहृतिमिमताभ्यां णफिञौ ॥ १५० ॥ ( ११७४ )

**सौवीरेषु, इत्येव । 'कुत्सने' इति निवृत्तम् । 'फाण्टाहृति' 'मिमत' - शब्दाभ्यां सौवीरविषयाभ्यामपत्ये णफिञौ प्रत्ययौ भवतः । फकोऽपवादः । अल्पाच्तरस्यापूर्वनिपातो लक्षणव्यभिचारचिह्नम्, तेन यथासंख्यमिह न भवतीति । फाण्टाहृतः, फाण्टाहृतायनिः ( म० भा० ) । मैमतः, मैमतायनिः । सौवीरेष्वित्येव — फाण्टाहृतायनः । मैमतायनः । फाण्टाहृतेः 'यञिञोश्च' ( ४ १.१०१ ) इति फक् । मिमतशब्दोऽपि नडादिषु पठ्यते ।**

### न्यासः

गोत्रस्त्रियाः कुत्सने ण च' इत्यादयश्चत्वारो योगाः । तत्राद्यः कुत्सन एव, अन्त्यः सौवीरेष्वेव । मध्यमौ तु द्वौ सौवीरेषु कुत्सायाञ्च शब्दवित्स्मरेत् = जानीयात् ॥ १४९ ॥

**फाण्टाहृतिमिमताभ्यां णफिञौ ॥ अल्पाच्तरस्येत्यादि ।** मिमतशब्दोऽयमल्पाच्तरः, तस्य 'अल्पाच्तरम्' इति पूर्वनिपाते प्राप्ते यः परनिपातः स लक्षणव्यभिचारचिह्नं सूचयति । यथेदं पूर्वनिपातलक्षणं व्यभिचरति = स्वविषये न प्रवर्त्तते, तथा यथासंख्यलक्षणमपीति यथासंख्यं न भवति । अत एवैकैकस्मात् प्रत्ययद्वयं सिद्धं भवति ॥ १५० ॥

### पदमञ्जरी

**पौनरुक्त्यम् ।** सुयामशब्दोऽपि तिकादिः । वृषस्यापत्यं वार्ष्यायणिः । अयमपि तिकादिरेव, 'दगुकोसलकर्मारच्छागवृषाणां युड् वादिष्टस्य' इति वचनाद् आयनादेशे कृते युडागमः ॥ १४९ ॥

**फाण्टाहृतिमिमताभ्यां णफिञौ ॥ तेन यथासंख्यमिह न भवतीति ।** एवं च कृत्वा णस्य णित्करणमर्थवद्भवति, तद्धि मिमतशब्दे वृद्ध्यर्थम् । यथासंख्ये तु फाण्टाहृतेर्वृद्धत्वाण्णित्करणमनर्थकं स्यात्; इह तु फाण्टाहृताभार्य इति गार्गीभार्य इतिवत्पुंवद्भावप्रतिषेधादिकं द्रष्टव्यम् । यथा तु वार्त्तिकं तथा यथासंख्यमत्रेष्यते, यथाह—'फाण्टाहृतेर्णस्य णित्करणानर्थक्यं वृद्धत्वात्', 'प्रातिपदिकस्य पुंवद्भावप्रतिषेधार्थं तु', 'उक्तं वा' इति ॥ १५० ॥

### भावबोधिनी

यमुन्द, सुयामा और वार्ष्यायणि—इन तीन को फिञन्त माना गया है अर्थात् इन्हीं तीन से फिञ् करके प्रस्तुत सूत्र में लिया गया है । सौवीरों में और कुत्सा में दो सूत्रों [ "वृद्धाट्ठक्" ४।१।१४८ और "फेश्छ" ४।१।४९ ] को वैयाकरण स्मरण करें, प्रवृत्त करें ।

विमर्श—इस श्लोक का तात्पर्य समझने के लिये पूर्ववर्ती सूत्र का 'विमर्श' देखना चाहिये । श्लोक में प्रदर्शित तीन शब्दों में 'यमुन्द' का रूप वृत्ति में प्रतिपादित है । सुयामा का अपत्य—इस अर्थ में फिञ, फ् का आयन्, आदिवृद्धि, टिलोप करने पर सौयामायनिः बनता है । इसका अपत्य इस अर्थ में छ = ईय करने पर सौयामायनीयः और ठक, ठ = इक करने पर सौयामायनिकः ये होते हैं । इसी प्रकार वृष का अपत्य—इस अर्थ में फिञ् प्रत्यय, युट् आगम, फ् का आयन्, आदिवृद्धि करने वार्ष्यायणि बनता है । इसका अपत्य—इस अर्थ में छ = ईय—वार्ष्यायणीयः; ठक् करने पर ठ = इक, वार्ष्यायणिकः रूप होते हैं ॥ १४९ ॥

'सौवीरेषु' [ सौवीरों में ] इसकी अनुवृत्ति है । 'कुत्सने' इसकी निवृत्ति है । फाण्टाहृति और मिमत—इन दो शब्दों सौवीरविषयवालों से अपत्य अर्थ में ण और फिञ् प्रत्यय होते हैं । यह फक् का अपवाद है । अल्प अचों वाले मिमत शब्द का पूर्वनिपात न होना लक्षण के व्यभिचरित होने को सूचित करता है, इसलिये यथासंख्य नहीं होता है । [ भाव है कि प्रकृति शब्द दो हैं और प्रत्यय भी दो है, यथासंख्य से पहले से पहला और दूसरे से दूसरा होना चाहिये था परन्तु 'मिमत' का पूर्वप्रयोग न करके इस सिद्धान्त का न माना जाना प्रकट किया है । अतः दोनों से दोनों प्रत्यय होते हैं । ]

## १४०१. कुर्वादिभ्यो ण्यः ॥ १५१ ॥ ( ११७९ )

**'सौवीरेषु' 'बहुलम्' इति च निवृत्तम्। 'कुरु' इत्येवमादिभ्यः शब्देभ्योऽपत्ये ण्यः प्रत्ययो भवति। कौरव्यः। गार्ग्यः। 'कुरुनादिभ्यो ण्यः' ( ४.१.१७२ ) इति कुरुशब्दादपरो ण्यप्रत्ययो भविष्यति। स तु क्षत्रियात्तद्राजसंज्ञकः, तस्य बहुषु लुका भवितव्यम्; अयं तु श्रूयत एव – कौरव्याः। कौरव्यशब्दस्य क्षत्रियवचनस्य तिकादिषु पाठात् फिञपि भवति। कौरव्यायणिः।**

रथकारशब्दोऽत्र पठ्यते, स जातिवचनः। त्रैवर्णिकेभ्यः किञ्चिन्न्यूना रथकारजातिः। **कारिणस्तु** रथकारशब्दादुत्तरसूत्रेणैव ण्यः सिद्धः।

### न्यासः

**कुर्वादिभ्यो ण्यः॥ कौरव्य इति।** 'ओर्गुणः', 'वान्तो यि प्रत्यये' इत्यवादेशः। **कुरुनादिभ्यो ण्य इत्यादि।** किमर्थं पुनः कुरुशब्दादपरोऽपि ण्यप्रत्ययो भविष्यति, यावतानेनैव सिद्धम्, तदेव हि रूपम्, स एव च स्वरः? इत्यत आह—**स तु क्षत्रियादिति।** अनेनार्थभेदं दर्शयति। स हि 'जनपदशब्दात् क्षत्रियादञ्' इत्यधिकारात् क्षत्रियाद्भवति, अयं तु ततोऽन्यतः। ततश्चैकः क्षत्रियापत्यो भवति, अपरस्त्वक्षत्रियापत्य इति स्पष्ट एवार्थभेदः। रूपविशेषोऽपि बहुषु विद्यत इति दर्शयन्नाह—**तद्राजसंज्ञक इत्यादि।** तस्य हि तद्राजसंज्ञकत्वात् 'तद्राजस्य बहुषु' इत्यादिना **बहुषु लुका भवितव्यम्**—कुरव इति। **अयं तु श्रूयत एव कौरव्या इति।**

रथकारशब्दोऽत्र पठ्यते, तत्र रथकारशब्दश्चास्त्येव जातिवचनः, अस्ति च कारिवचनः, तदिह तयोः कतरः पठ्यते। इत्याह—**रथकारशब्दोऽत्र पठ्यत इत्यादि।** अथ कारिवचनोऽपि कस्मान्न पठ्यते?

### पदमञ्जरी

**कुर्वादिभ्यो ण्यः॥** ननु च 'कुरुनादिभ्यो ण्यः' इत्येव कुरुशब्दाण्ण्यः सिद्धः, किमर्थमिह पठ्यते? अत आह—**कुरुशब्दादपरोऽपीति।** सत्यमपरोऽपि ण्यप्रत्ययो भविष्यति। **स तु क्षत्रियादित्यनेनार्थभेदमाह। तद्राजसंज्ञक** इत्यनेन रूपभेदमाह। **तिकादिषु पाठादिति।** कुरुकौरव्यशब्दो द्वावपि पठ्यते।

**कारिणस्तु रथकारशब्दादिति।** कारिणः = शिल्पिनः। रथकारजातिस्तु शिल्पिवृत्तिर्न भवतीति मन्यते।

### भावबोधिनी

उदा० फाण्टाहृतिः फाण्टाहृतायनिः [ फाण्टाहृति+ण = अ, भसंज्ञा इलोप। फाण्टाहृतः+फिञ्, फ् = आयन् भसंज्ञा, इलोप] मैमतः, मैमतायनिः [ मैमत + ण, मैमत + फिञ् ]। सौवीरों में ही—[ सुवीर देशोत्पन्न में ही ये प्रत्यय होते हैं अन्यत्र तो ] फाण्टाहृतायनः [ फाण्टाहृत + इञ्, फाण्टाहृति से ] "यञिञोश्च" ४।१।१०१ से फक्, फ = आयन होता है ] मिमत शब्द नडादिगण में है अतः अन्य अर्थ में 'नडादिभ्यः फक्' ४।१।९९ से फक्, फ = करके—मैमतायनः ही होता है ॥ १५० ॥

'सौवीरेषु' और 'बहुलम्' इनकी निवृत्ति है। कुरु आदि शब्दों से अपत्य अर्थ में ण्य प्रत्यय होता है। उदा० कौरव्यः, गार्ग्यः। [ कुरु + ण्य = य, आदिवृद्धि, उकार का गुण 'ओर्गुणः' ६।४।२४६। ओ का अव् आदेश 'वान्तो यि प्रत्यये' ६।१।७९। गर्ग + ण्य = य, आदिवृद्धि, भसंज्ञा, अलोप ]। "कुरुनादिभ्यो ण्यः" ४।१।१७२ इस सूत्र से कुरु शब्द से दूसरा ण्य प्रत्यय होगा। वह तो क्षत्रियवाची से है, तद्राजसंज्ञक है, उसका बहुवचन में लुक् हो जाता है किन्तु यह तो सुनाई देता है—कौरव्याः। क्षत्रियवाची कौरव्य शब्द तिकादिगण में है अतः फिञ् प्रत्यय भी होता है—कौरव्यायणिः [ कौरव्य + फिञ्, फ् = आयन्, ]

यहाँ रथकार शब्द पठित है, वह जातिवाची है। त्रैवर्णिक [ब्राह्मण, क्षत्रिय, वैश्य] से कुछ कम [महत्त्ववाली] रथकार जाति होती है। कारिन्=शिल्पीवाचक रथकार शब्द से तो अगले सूत्र से ण्य प्रत्यय सिद्ध ही है। केशिनी शब्द भी पढ़ा गया है,

केशिनीशब्दः पठ्यते, तस्य कैशिन्यः। पुंवद्भावो न भवति; स्त्रीप्रत्ययनिर्देशसामर्थ्यात्।

'वेनाच्छन्दसि' ( ग० सू० ८० ) इति पठ्यते, कथं भाषायां वैन्यो राजेति? छान्दस एवायं प्रमादात् कविभिः प्रयुक्तः।

वामरथशब्दः पठ्यते, तस्य कण्वादिवत्कार्यमिष्यते स्वरं वर्जयित्वा, लुगादिकमतिदिश्यते। बहुषु-

न्यासः

इत्याह—कारिणस्त्वित्यादि। यो हि कारिवचनो रथकारशब्दः, तत उत्तरसूत्रेणैव ण्यः सिद्धः, तत् किमत्र तस्य पाठेन।

**पुंवद्भावो न भवति।** 'भस्याऽढे तद्धिते' इति यः पुंवद्भावः प्राप्नोति, स केशिनीशब्दस्य न भवति। यदि स्यात्, 'नस्तद्धिते' इति टिलोपे कृते 'कैश्यः' इत्यनिष्टं रूपं स्यात्। कस्मान्न भवति? इत्याह- **स्त्रीप्रत्ययस्य निर्देशसामर्थ्यादिति।** यदि हि पुंवद्भावः स्यात्, स्त्रीप्रत्ययेनास्य निर्देशोऽनर्थकः स्यात्, पुंल्लिङ्गमेवैनं पठेद्। पुंल्लिङ्गस्यापि पाठे लिङ्गविशिष्टपरिभाषया केशिनीशब्दादपि प्रत्ययः सिध्यति। ननु च पुंल्लिङ्गनिवृत्त्यर्थः स्त्रीप्रत्ययान्तस्य पाठः स्यात्? नैतदस्ति; अनभिधानादेव हि पुंल्लिङ्गान्न भविष्यति।

**तस्य कण्वादिवदिति।** अपत्याधिकारेऽयमतिदेशो भवन् कण्वादिभिरपत्यप्रत्ययान्तैर्विज्ञायते। कण्वादयश्च गर्गाद्यन्तःपातिनः, तेन यञन्तानां कण्वादीनां यत् कार्यं तद् वामरथ्यस्य स्वरवर्जं भवतीत्ययं भवति। **लुगादिकमिति।** आदिशब्देन ङीबादिकं गृह्यते। कण्वादीनामपत्यप्रत्ययस्य 'यञञोश्च' इति बहुषु लुग् भवति। स्त्रियां 'यञश्च' इति ङीप्। 'प्राचां ष्फ तद्धिते' इति ष्फप्रत्ययः स्त्रियामेव। 'यञिञोश्च' इति

पदमञ्जरी

**तस्य पुंवद्भावो न भवतीति।** 'भस्याऽढे तद्धिते' इति विधीयमानः, यदि हि स्यात् 'नस्तद्धिते' इति टिलोपः स्यात्। कस्मान्न भवतीत्याह—**स्त्रीप्रत्ययनिर्देशसामर्थ्यादिति।** पुंल्लिङ्गस्यापि पाठे लिङ्गविशिष्ट-परिभाषया केशिनीशब्दादपि सिद्धः प्रत्ययः पुंल्लिङ्गात्त्वनभिधानान्न भविष्यतीति भावः।

वामरथस्य कण्वादिवत्स्वरवर्जमिति गणवाक्यं व्याचष्टे—**वामरथशब्द इत्यादि।** तस्येति प्रकरणाण्ण्य-प्रत्ययान्तस्येति विज्ञेयम्। **कण्वादिवदिति।** केवलानां तेषां कस्यचित्कार्यस्याविधानाद्यञन्तानां कण्वादीनां यत्कार्यं तस्यातिदेशः। **लुगादिकमिति।** कण्वादिषु यञन्तेषु दृष्टमात्रस्य कार्यस्यातिदेशः, न तु कण्वादित्व-

भावबोधिनी

उसका—**कैशिन्यः** यह होता है। [ केशिनी + ण्य = य, भसंज्ञा, ईलोप ]। यहाँ केशिनी का पुंवद्भाव नहीं होता है क्योंकि स्त्री-प्रत्यय-विशिष्ट का निर्देश है। 'वेन शब्द से वेदविषय में ण्य होता है। तो भाषा [ लोक ] में 'वैन्यः राजा' यह प्रयोग कैसे होता है? यह वैदिक प्रयोग ही कवियों ने प्रमाद से प्रयुक्त कर दिया है।

वामरथ शब्द पठित है, इसको कण्वादिवत् कार्य इष्ट है अर्थात् "कण्वादिभ्यो गोत्रे" ४।२।१११ से यञ् प्रत्यय होता हैं; किन्तु स्वर को छोड़कर अर्थात् स्वर यञ् का न होकर ण्य का होता है। लुक् [ ङीप् ] आदि का अतिदेश होता है। अतः [ एकवचन में वामरथ्यः, द्विवचन में वामरथ्यौ परन्तु ] बहुवचन में [ "यञञोश्च" २।४।६४ से यञ् का लुक् हो जाने से ] वामरथाः यही होता है। स्त्री—वामरथी [ वामरथ्य + ङीप् "यञश्च" ४।१।१६ से होने पर भसंज्ञा, अलोप, यलोप होता है। ] वामरथ्यायनी [ वामरथ्य से "प्राचां ष्फ तद्धितः" ४।१।१७ से ष्फ और ङीष् होता है, फ् = आयन्। ] युवा अपत्य अर्थ में—वामरथ्यायनः [ वामरथ्य से "यञिञोश्च" ४।१।१०१ से फक् फ = आयन ] वामरथ्य के छात्र इस अर्थ में—वामरथाः। [ बहुवचन में यञ् प्रत्यय का लुक् हो जाता है। ] वामरथ्यस्य इमानि—इस अर्थ में 'वामरथ्यानि संघाङ्कलक्षणानि'। [ संघ, अंक और लक्षण इनकी जब इदन्त्वेन विवक्षा होती है उस समय अञ्, यञ् और इञ् प्रत्ययान्त से अण् प्रत्यय होता है—इस अर्थ वाले "सङ्घाङ्कलक्षणेष्वञ्यञिञाम्" ४।३।१२७ से अण् होता है।

**वामरथाः । स्त्री - वामरथी । वामरथ्यायनी । युवा वामरथ्यायनः । वामरथ्यस्य छात्रा वामरथाः । वामरथानि सङ्घाङ्कलक्षणानि । स्वरस्तु ण्यप्रत्ययस्यैव भवति, नातिदेशिकमाद्युदात्तत्वम् ।**

**कुरु । गर्ग । मङ्गुष । अजमारक[1] । रथकार । वावदूक । ❀ सम्राजः क्षत्रिये ❀ ( ग० सू० ७९ ) । कवि । मति । वाक् । पितृमत् । इन्द्रजालि । दामोष्णीषि । गणकारि । कैशोरि । कापिञ्जलादि । कूट । शलाका । मुर[2] । एरक । अभ्र । दर्भ । केशिनी । ❀ वेनाच्छन्दसि ❀ ( ग० सू० ८० ) । शूर्पणाय । श्यावनाय । श्यावरथ । श्यावपुत्र । सत्यङ्कार । वडभीकार[3] । शङ्कु । शाक । पथिकारिन् । मूढ । शकन्धु । कर्तृ । हर्तृ । शाकिन् । इनपिण्डी[4] ॥ ❀ वामरथस्य कण्वादिवत्स्वरवर्जम् ❀ ॥**

## १४०२. सेनान्तलक्षणकारिभ्यश्च ॥ १५२ ॥ ( ११७६ )

**न्यासः**

फक् । शैषिकेष्वर्थेषु 'कण्वादिभ्यो गोत्रे' इत्यण् 'तस्येदम्' इत्यर्थविवक्षायाम् । 'सङ्घाङ्कलक्षणेष्वञ्यञिञाम्' इत्यण् । एतानि कार्याणि यथा कण्वादीनां भवन्ति तथा वामरथ्यस्यापि । एषां **वामरथा इत्यादीनि** यथाक्रममुदाहरणानि । **नातिदेशिकमाद्युदात्तत्वमिति** । यथा कण्वादीनां यञन्तानां ञित्स्वरेणाद्युदात्तत्वम्, न तथा वामरथ्यस्य, किं तर्हि ? प्रत्ययस्वरेणान्तोदात्तत्वमेव भवति । **सम्राजः क्षत्रिये इति** । सम्राजः क्षत्रिये ण्यो भवति, सम्राजोऽपत्यं साम्राज्यः । अन्यत्राणेव – साम्राजः ॥ १५१ ॥

**सेनान्तलक्षणकारिभ्यश्च** ॥ अत्र ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधाल्लक्षणशब्दस्य

**पदमञ्जरी**

प्रयुक्तस्य, अत एव स्वरवर्जमित्याह । तेन लुगादिकमप्यतिदिश्यते, न तु 'कण्वादिभ्यो गोत्रे' इत्येव प्रत्ययविधिः । **वामरथा इति** । 'यञञोश्च' इति बहुषु लुक् । यञश्च 'प्राचां ष्फ तद्धितः', यूनि 'यञिञोश्च' इति फक्; शैषिकेष्वर्थेषु छे प्राप्ते 'कण्वादिभ्यो गोत्रे' सङ्घाङ्कलक्षणेषु' इति चाण् भवति । **सम्राजः क्षत्रिय इति** । सम्राजोऽपत्यं साम्राज्यो भवति, क्षत्रियश्चेत्; साम्राजोऽन्यः ॥ १५१ ॥

**सेनान्तलक्षणकारिभ्यश्च** ॥ लक्षणेति स्वरूपग्रहणमित्याह—**लक्षणशब्दादिति** । कारीत्यर्थग्रहणमित्याह —

**भावबोधिनी**

भसंज्ञा अलोप और यलोप करने पर—वामरथ बनाकर नपुंसक बहुवचन का रूप है । ] परन्तु स्वर तो ण्य प्रत्यय का ही होता है, अतिदेश को मानकर आद्युदात्त नहीं होता है । [ अपितु प्रत्यय स्वर मानकर अन्तोदात्त ही होता है । ]

[ इस गण में पठित शब्द—] कुरु । गर्ग । मङ्गुष । अजमारक । रथकार । वावदूक । * क्षत्रिय अर्थ में सम्राज् से ण्य होता है । * कवि । मति । वाक् । पितृमत् । इन्द्रजालि । दामोष्णीषि । गणकारि । कैशोरि । कापिञ्जलादि । कूट । शलाका । मुर । एरक । अभ्र । दर्भ । केशिनी । * वेन शब्द से वैदिक विषय में ण्य होता है । * शूर्पणाय । श्यावनाय । श्यावरथ । श्यावपुत्र । सत्यङ्कार । वडभीकार । शङ्कु । शाक । पथिकारिन् । मूढ । शकन्धु । कर्तृ । हर्तृ । शाकिन् । इनपिण्डी । * वामरथ के कण्वादि के समान कार्य किये जाते हैं, केवल स्वर को छोड़कर अर्थात् स्वर प्रस्तुत ण्य प्रत्यय को मानकर अन्तोदात्त ही होता है * ॥ १५१ ॥

सेन जिसके अन्त में है ऐसे प्रातिपदिक से, लक्षण शब्द से और कारिवाचि = शिल्पिवाचक शब्दों से अपत्य अर्थ में ण्य प्रत्यय होता है । कारि शब्द शिल्पी = कारीगर जुलाहा, [ बढ़ई ] आदि का वाचक है । उदाहरण—[ कारिषेण का अपत्य, हरिषेण का अपत्य—इस अर्थ में ण्य प्रत्यय आदिवृद्धि, भसंज्ञा अलोप होने पर ] कारिषेण्यः । हारिषेण्यः । [ यहाँ षत्व असिद्ध हो जाने के कारण सेन अन्त में हो जाता है । ] लाक्षण्यः [ लक्षण + ण्य = य, भसंज्ञा, अलोप । ] कारिवाची

---

१. 'अजमार' इति वा पाठः । २. 'मुदापरक' इति वा पाठः । ३. 'वल्मीकार' इति वा पाठः ।

४. अत्र–विषफोटक, काक, स्फाण्टक, शाकिन्, घातकि, धेनुजि, बुद्धिकार, एतेऽधिकाः शब्दाः पुस्तकान्तरे दृश्यते ।

सेनान्तात् प्रातिपदिकाल्लक्षणशब्दात् कारिवचनेभ्यश्चापत्ये ण्यः प्रत्ययो भवति। कारिशब्दः कारूणां तन्तुवायादीनां वाचकः। कारिषेण्यः। हारिषेण्यः। लाक्षण्यः। कारिभ्यः–तान्तुवाय्यः। कौम्भकार्यः। नापित्यः॥

१४०३. उदीचामिञ् ॥ १५३ ॥ ( ११७७ )

**ण्ये प्राप्ते इञपरो विधीयते। सेनान्तलक्षणकारिभ्योऽपत्ये इञ् प्रत्ययो भवति उदीचां मतेन। कारिषेणिः। हारिषेणिः। लाक्षणिः[१]। तान्तुवायिः[२]। कौम्भकारिः।**

**वचनसामर्थ्यादेव प्रत्ययसमावेशे लब्धे आचार्यग्रहणं वैचित्र्यार्थम्। तक्षन्शब्दः शिवादिः, तेनाणयमिञ् बाध्यते, न तु ण्यः। तक्ष्णोऽपत्यं ताक्ष्णः। ताक्षण्यः॥**

न्यासः

स्वरूपग्रहणम्। अत एवाह—**लक्षणशब्दादिति**। कारीत्यर्थग्रहणम्। तत्रार्थे कार्यस्याभावात् तद्वाचिनः प्रत्ययो विज्ञायत इत्याह—**कारिवचनेभ्यश्चेति**। यथा लक्षणशब्दस्य स्वरूपग्रहणं तथा कारिशब्दस्य कस्मान्न भवति? शिवादिषु तक्षन्निति पाठात्। अस्य हि कारिलक्षणमिञं बाधितुं तत्र पाठः। यदि च कारिशब्दस्येह स्वरूपग्रहणं स्यात्, तक्षन्शब्दादिभ्यः प्राप्तेरसम्भवादुत्सर्गेणैवाणा भवितव्यमिति तस्य शिवादिषु पाठोऽनर्थकः स्यात्। अर्थग्रहणे त्वनेन प्राप्तस्येञो बाधनार्थस्तत्र पाठो युज्यते॥ १५२॥

**उदीचामिञ्॥ वचनसामर्थ्यादित्यादि**। ण्योऽप्युच्यते, इञपि, वचनसामर्थ्यादेवान्तरेणाचार्यग्रहणं तयोः समावेशे सिद्धे यदाचार्यग्रहणं क्रियते तद्वैचित्र्यार्थम्। आचार्यग्रहणस्यातिरिच्यमानत्वादयमर्थो लभ्यते, ग्रन्थाधिक्यादर्थाधिक्यं भवतीति कृत्वा। ननु च पूजार्थमाचार्यग्रहणं स्यात्? नैतदस्ति, एवं हि प्राचामपि ग्रहणं कर्त्तव्यं स्यात्। तेऽपि हि सेनान्तलक्षणकारिभ्य इञं न स्मरन्ति। **तक्षन्शब्द इत्यादिना** वैचित्र्यं दर्शयति। **ताक्ष्ण इति**। शिवाद्यणि कृते 'षपूर्वहन्धृतराज्ञामणि' इत्यल्लोपः। **ताक्षण्य इति**। 'ये चाभावकर्मणोः' इति प्रकृतिभावः॥ १५३॥

पदमञ्जरी

**कारिवचनेभ्यश्चेति**। साधु कुर्वन्तीति कारिणः=शिल्पिनः। **नापित्य इति**। प्राचां मते ण्य उदाहृतः। उदीचां तु मते परत्वाद् 'उदीचां वृद्धात्' इति फिञेव भवति—नापितायनिरिति॥ १५२॥

**उदीचामिञ्. ताक्ष्ण इति**। 'षपूर्वहन्धृतराज्ञामणि' इत्यल्लोपः। **ताक्षण्य इति**। 'ये चाभावकर्मणोः' इति प्रकृतिभावः। इह 'सेनान्तलक्षणकारिभ्यो वा' इति वक्तव्यम्, नार्थोऽनेनेञ्वचनेन, नापि शिवादिषु तक्षन्शब्दस्य पाठेन, ण्ये हि विकल्पिते यो यतः प्राप्नोति स ततो भवतीति, तक्ष्णः 'प्राग्दीव्यतोऽण्', अन्येभ्यश्च 'अत इञ्' भविष्यति? नैवं शक्यम्; एवं हि जातसेनादिभ्य ऋष्यादिलक्षणोऽण् प्राप्नोति॥ १५३॥

भावबोधिनी

से—तान्तुवाय्यः [ तन्तुवाय का अपत्य इस अर्थ में तन्तुवाय + ण्य = य, आदिवृद्धि भसंज्ञा, अलोप ]। कौम्भकार्यः [कुम्भकार का अपत्य—इस अर्थ में ण्य प्रत्यय, शेष पूर्ववत् ] नापित्यः [ नापित = नाई का अपत्य—इस अर्थ में ण्य प्रत्यय, शेष पूर्ववत् ]॥ १५२॥

ण्य प्राप्त रहते यह दूसरा इञ् प्रत्यय किया जा रहा है। उत्तर देश के आचार्यों के मत से सेनशब्दान्त, लक्षण और कारिवाची—इन शब्दों से अपत्य अर्थ में इञ् प्रत्यय होता है। कारिषेणिः। हारिषेणिः। [ करिषेण का अपत्य, हरिषेण का अपत्य—इस अर्थ में इञ् प्रत्यय, आदिवृद्धि, भसंज्ञा अलोप। ] लाक्षणिः [ लक्षण का अपत्य ] तान्तुवायिः। कौम्भकारिः। [ तन्तुवाय + इञ्, कुम्भकार + इञ्, आदिवृद्धि, भसंज्ञा, अलोप ]।

नवीन पृथक् वचन बनाने से ही प्रत्यय का समावेश प्राप्त हो जाने पर अर्थात् अलग सूत्र बनाने से ही ण्य और इञ् ये दोनों प्रत्यय होने सम्भव रहने पर 'उदीचाम्' आचार्य का ग्रहण विचित्रता के लिये है। [ अब विचित्रता लिखते हैं—]

---

१. 'लाक्षायणि' इति वा पाठः।
२. 'तौन्नवायिः' इत्यधिकोऽयं पाठः। पुस्तकान्तरे।

**१४०४. तिकादिभ्यः फिञ् ॥ १५४ ॥ ( ११७८ )**

**'तिक'—इत्येवमादिभ्यः शब्देभ्योऽपत्ये फिञ् प्रत्ययो भवति । तैकायनिः । कैतवायनिः । वृषशब्दोऽत्र पठ्यते, तस्य प्रत्ययसन्नियोगेन यकारान्तत्वमिष्यते । वार्ष्यायणिः । कौरव्यशब्दः पठ्यते, स च क्षत्त्रियवचनः; औरसशब्देन क्षत्त्रियप्रत्ययान्तेन साहचर्यात् ।**

**यस्तु 'कुर्वादिभ्यो ण्यः' ( ४.१.१५१ ), तदन्ताद् इञैव भवितव्यम्; तथा च 'ण्यक्षत्त्रियार्षञितो यूनि लुगणिञोः' ( २.४.५८ ) इत्यत्रोदाहृतम्—कौरव्यः पिता, कौरव्यः पुत्र इति ।**

**तिक । कितव । संज्ञा । बालशिख । उरस् । शाट्य । सैन्धव । यमुन्द । रूप्य । ग्राम्य । नील । अमित्र ।**

**न्यासः**

**तिकादिभ्यः फिञ् ॥ कौरव्यशब्दः पठ्यत इत्यादि** । कौरव्यशब्दोऽयमस्त्येव क्षत्त्रियगोत्रवचनो यः 'कुरुनादिभ्यो ण्यः' इति ण्यप्रत्ययान्तः, अस्ति ब्राह्मणादिगोत्रवचनो यः 'कुर्वादिभ्यः' इति ण्यप्रत्ययान्तः, तयोरिह पूर्वो गृह्यते । कुत एतत् ? औरसशब्देन साहचर्यात् । औरसशब्दोऽयम् 'जनपदशब्दात् क्षत्त्रियादञ्' इत्यञ्प्रत्ययान्तः, तेनासौ क्षत्त्रियवचनः, तत्साहचर्याच्च कौरव्यशब्दो यः क्षत्त्रियप्रत्ययान्तत्वात् क्षत्त्रियवचनः स एव गृह्यते ।

**यस्त्वित्यादि** । यस्तु 'कुर्वादिभ्यो ण्यः' इति ण्यप्रत्ययान्तो ब्राह्मणादिगोत्रवचनः, तस्माद् 'अत इञ्'[1] इतीञैव भवितव्यम्, तत्रैतत् स्यात् ? स्वमनीषिकेयं भवत इत्याह—**तथा चेत्यादि** । यत एवं

**पदमञ्जरी**

**तिकादिभ्यः फिञ् ॥ क्षत्त्रियवचन इति** । यः 'कुरुनादिभ्यो ण्यः' इति व्युत्पादितः । **औरशशब्देनेति** । उरसा शेते उरशः क्षत्रियः, पृषोदरादित्वाद्रूपम्, तस्यापत्यम् 'जनपदशब्दात्क्षत्त्रियात्' इत्यञ् ।

किं पुनरेवं प्रयत्नेन क्षत्त्रियवचनस्य ग्रहणं व्याख्यायते ? इत्यत्राह—**तथा चेति** । **उदाहृतमिति** । पूर्वैरपि वृत्तिकारैरित्यर्थः ।

तिक्नोतेरिगुपधात्कः, तिकः । किं तवास्तीति प्रवर्त्तते **कितवः**, पृषोदरादिः । सम्पूर्वाज्जानातेः 'आतश्चोपसर्गे' इति कः, स्त्रियां टाप्, **संज्ञा** । बालैर्बद्धा शिखास्य स **बालशिखः** । द्वौ शब्दावित्यन्ये, बलतेर्णिजन्तादच् **बाल**, तस्य बालायनिः । **शिखाशब्देन** तद्वान् लक्ष्यते, शैखायनिः । **उरशशब्दो** व्युत्पादितः । 'शट कुत्सायाम्'

**भावबोधिनी**

तक्षण् शब्द शिवादिगण में पठित है । उस ''शिवादिभ्योऽण्'' ४।१।११२ से होने वाले अण् के द्वारा इस इञ् का ही बाध होता है, ण्य का बाध नहीं होता है । उदाहरण—तक्ष्णः अपत्यम् [ बढ़ई का अपत्य इस अर्थ में 'शिवादिभ्योऽण्' से अण् करने पर आदिवृद्धि, उपधालोप होने पर ]—ताक्ष्णः । [ ण्य होने पर ] ताक्षण्यः यह भी होता है ॥ १५३ ॥

तिक आदि शब्दों से अपत्य अर्थ में फिञ् प्रत्यय होता है । उदाहरण—तैकायनिः, कैतवायनिः । [ तिकस्य अपत्यम्, कितवस्य अपत्यम्—इस अर्थ में फिञ् प्रत्यय फ् = आयन्, आदिवृद्धि करने पर तैक + आयनि, कैतव + आयनि ] । इस गण में वृष शब्द भी पठित है । प्रत्ययसन्नियोग से उसका यकारान्त होना इष्ट है । वार्ष्यायणिः । [ वृष + फिञ्, फ् = आयन्, आदिवृद्धि, यकारान्तत्व करने पर वार्ष्य + आयनि, णत्व । वृष का अपत्य ] कौरव्य शब्द पठित है, यह क्षत्रियवाची है क्योंकि क्षत्रियार्थकप्रत्ययान्त औरस शब्द का साहचर्य है ।

[ गणपाठ में औरस यह रूप प्राप्त होता है न्यासकार ने भी उरस् से अञ् करके ऐसा ही माना है । परन्तु पदमञ्जरीकार ने उरसा शेते—इस अर्थ में ''पृषोदरादीनि यथोपदिष्टम्'' ६।३।१०९ से इस की सिद्ध करके—औरश यह शकार घटित रूप माना है । ]

---

१. बाल । शिखा । पाठः ।

**गौकक्ष्य । करु । देवरथ । तैतिल । औरस । कौरव्य । भौरिकि । भौलिकि । चौपयत । शैकयत । क्षैतयत । ध्वाजवत । चन्द्रमस् । शुभ । गङ्गा । वरेण्य । सुयामन् । आरद । वह्यका । खल्या । वृष । लोमका । उदन्य । यज्ञ**[1] ।

**न्यासः**

ब्राह्मणादिगोत्रवचनादिञैव भवितव्यम् । तथा हि ण्यक्षत्त्रियादिसूत्रे पूर्वैरपि वृत्तिकारैः—कौरव्यः पिता, कौरव्यः पुत्र इत्युदाहृतम् । यदि चातः फिञ् स्यात् तदुदाहरणं न युज्येत । न हि ण्यप्रत्ययान्ताद् विहितस्य फिञो यूनि लुगुच्यते अपि त्वणिञोः ।। १५४ ।।

**पदमञ्जरी**

पचाद्यच्, ततो गर्गादित्वाद्यञ्—**शाट्यः**, ततो यूनि फिञ् । सिन्धुशब्दाद् 'द्व्यच्मगध' इत्यण्, **सैन्धवः**, अत्रापि यूनि फिञ् । यममुनत्तीति **यमुन्दः**, शकन्ध्वादि । प्रशस्तं रूपमस्यास्ति 'रूपादाहतप्रशंसयोर्यप्', **रूप्यः** । ग्रामे भवो **ग्राम्यः** । नील वर्णे, इगुपधात्कः **नीलः** । 'अम् रोगे', औणादिक इत्रः, **अमित्रः** । **गौकाक्ष्यो** गर्गादियञन्तः । 'कृग्रोरुः', **कुरुः** । देवस्येव रथोऽस्य **देवरथः** । तिले तिलः, तितिलः, पृषोदरादिः, ततो मत्वर्थीय इनृ, तितिलिनोऽपत्यमौत्सर्गिकोऽण्, 'नस्तद्धिते' इति टिलोपः, **तैतिलः** । **औरसशब्दो** व्युत्पादितः । 'कुरुनादिभ्यो ण्यः', **कौरव्यः** । भूरि अस्यास्ति भूरिको व्रीह्यादिः, तस्यैव पक्षे कपिलकादित्वाल्लत्वं भूलिकः, ताभ्यामत इञ् **भौरिकिः**, **भौलिकिः** । 'चुप मन्दायां गतौ' ण्यन्ताल्लटः शत्रादेशः, तस्यापत्यं **चौपयतः**, एवं **चैतयतः** । 'चिट परप्रेष्ये', ण्यन्ताल्लटः शत्रादेशः, तस्यापत्यं **चैटयतः** । 'शीकृ सेचने', णिजादि पूर्ववत्, **शैकयतः** । क्षितमाचष्टे क्षितयन्, तस्यापत्यं **क्षैतयतः** । ध्वजोऽस्यास्ति ध्वजवान्, तस्यापत्यं **ध्वाजवतः** । द्वौ शब्दावित्यन्ये, 'ध्वज गतौ' ण्यन्तात् पचाद्यच्, ध्वाजः; वनोतेस्तः, वतः । 'चदि आह्लादने', ततो रमस् **चन्द्रमाः**, तस्यापत्यं चान्द्रमसायनिर्बुधः । शोभतेऽसौ **शुभः**, इगुपधात् कः । गमेर्गन्, **गङ्गा** । वृञ एण्यः, **वरेण्यः** । सर्वधातुभ्यो मनिन्, यानं यामा, शोभनं यामास्य **सुयामा** । आरदो नाम जनपदः, ततोऽपत्ये 'जनपदशब्दात्' इत्यञ्—आरदः । वह्यं करणम्, वह्यमेव **वह्यका**, निपातनादित्वाभावः । खलाय हिता **खल्या**, 'खलयव' इति यत् । 'वृषु सेचने' इगुपधात्कः—**वृषः** । लोमानि कामयते **लोमका** । उदकमिच्छत्यात्मन **उदन्यः**, 'अशनायोदन्यधनाय' इत्युदकस्योदन्भावः, ततः **पचाद्यच्** । **यज्ञयोगाद् यज्ञः** । एते तिकादयः ।। १५४ ।।

**भावबोधिनी**

जो कौरव्य शब्द "कुर्वादिभ्यो ण्यः" ४।१।१५१ से ण्य प्रत्ययान्त है, उससे तो "अत इञ्" ४।१।९५ से इञ् ही होता है । जैसा "ण्यक्षत्रियार्षञितो यूनि लुगणिञोः" २।४।५८ में उदाहृत है—कौरव्यः पिता, कौरव्यः पुत्रः ।

**विमर्श**—भाव यह है कि कुरु शब्द से अपत्य अर्थ में "कुर्वादिभ्यो ण्यः" ४।१।१५१ से ण्य करके कौरव्य बनता है । पुनः इससे अपत्य अर्थ में जो इञ् होता है उसका लोप "ण्यक्षत्रियार्ष०" २।४।५८ से हो जाता है । अतः पिता भी कौरव्य है और पुत्र भी कौरव्य ।

**अनुवाद**—[ इस गण में पठित शब्द—], तिक । कितव । संज्ञा । बालशिख । उरस् । शाट्य । सैन्धव । यमुन्द । रूप्य । ग्राम्य । नील । अमित्र । गौकक्ष्य । करु । देवरथ । तैतिल । औरस । कौरव्य । भौरिकि । भौलिकि । चौपयत । चैटयत । शैकयत । क्षैतयत । ध्वाजवत । चन्द्रमस् । शुभ । गङ्गा । वरेण्य । सुयामन् । आरद । वह्यका । खल्या । वृष । लोमका । उदन्य । यज्ञ ।। १५४ ।।

---

१. ऋष्य । भीत । जाजल । रस । लावक । ध्वजवद । वसु । बन्धु । अवन्धका । सुपामन्—अत्रैतेऽधिकाः शब्दाः पुस्तकान्तरे दृश्यते ।

## १४०८. कौसल्यकार्मार्याभ्यां च ॥ १५५ ॥ ( ११७९ )

**कौसल्यकार्मार्यशब्दाभ्यामपत्ये फिञ् प्रत्ययो भवति । इञोऽपवादः । कौसल्यायनिः । कार्मार्यायणिः । परमप्रकृतेरेवायं प्रत्यय इष्यते - कोसलस्यापत्यम्, कर्मारस्यापत्यमिति । प्रत्ययसन्नियोगेन तु प्रकृतिरूपं निपात्यते । तथा च स्मृत्यन्तरम् ❋ 'दगुकोसलकर्मारच्छागवृषाणां युड् वादिष्टस्य'[1] ❋ इति । [ दगु- ] दागव्यायनिः । [ कोसल— ] कौसल्यायनिः । [ कर्मार— ] कार्मार्यायणिः । [ छाग — ] छाग्यायनिः । [ वृष — ] वार्ष्यायणिः ॥**

न्यासः

**कौसल्यकार्मार्याभ्यां च ॥ परमप्रकृतेरेवायं प्रत्यय इष्यत इति ।** कोशलशब्दात्, कर्मारशब्दाच्च । एवकारः 'वृद्धेत्कोशलाजादाञ्ञ्यङ्' इति ञ्यङन्तो यः कौशल्यशब्दः, यश्च 'सेनान्तलक्षणकारिभ्यश्च' इति कारिलक्षणण्यप्रत्ययान्तः कार्मार्यशब्दः, तयोर्व्यवच्छेदाय ।

यदि मूलप्रकृतेरेवेष्यते, कथमिदं विकृतं प्रकृतिरूपं श्रूयते ? इत्याह—**प्रत्ययसन्नियोगेनेत्यादि** । न चेयं स्वमनीषिका, अपि त्वाचार्याणामेव **भाष्यकारप्रभृतीनामिदं** मतमिति दर्शयन्नाह—**तथा चेत्यादि** । कः पुनः परमप्रकृतेः प्रत्ययान्ताद्वोत्पत्तौ विशेषः । परमप्रकृतेरुत्पत्तावपत्यमात्रे प्रत्ययो लभ्यते, प्रत्ययान्तात् तूत्पत्तौ 'गोत्राद् यूनि' इति वचनाद् 'यून्यपत्ये' इत्येव विशेषः । **युड् वादिष्टस्येति** । आदिष्टग्रहणमायन्नादेशे कृते यथा स्यादित्येवमर्थम्; अन्यथा ह्यनादित्वादायन्नादेशो न स्यात् । **दागव्यायनिरिति** । ओगुणे कृते 'वान्तो यि प्रत्यये' इत्यवादेशः ॥ १५५ ॥

पदमञ्जरी

**कौसल्यकार्मार्याभ्यां च ॥** कोसलशब्दाद् 'वृद्धेत्कोसलाजादाञ् ञ्यङ्', कर्मारशब्दात् कारिलक्षणो ण्यः, एतयोरिह ग्रहणमिति शङ्कामपाकरोति—**परमप्रकृतेरेवेति** । कथं तर्हि विकृतं प्रकृतिरूपं श्रूयते ? तत्राह — **प्रत्ययसंयोगेन त्विति** । न चेयं स्वमनीषिकेत्याह—**तथा चेति । युड् वादिष्टस्येति** । पूर्वान्तकरणे दागव्यायनिः, ओर्गुणो न स्यात्, अतः परादिकरणम् । **आदिष्टस्येति** । कृतायनादेशस्येत्यर्थः । एतस्मिन्ननुच्यमानेऽनवकाशत्वाद्युट कृतेऽनादित्वादायनादेशो न स्यात् ॥ १५५ ॥

भावबोधिनी

कौसल्य और कार्मार्य शब्दों से अपत्य अर्थ में फिञ् प्रत्यय होता है । यह इञ् का अपवाद है । उदाहरण—कौसल्यायनिः । कार्मार्यायणिः । [ कोसल का अपत्य, कर्मार का अपत्य इस अर्थ में फिञ्, फ् = आयन्, प्रत्यय, आदिवृद्धि, "फिञ्-प्रकरणे दगुकोसलकर्मारच्छागवृषाणां युट् च" [ म.भा. ४।१।१५५ वा० १ से युट् = य् आगम करने पर कौसल + य् + आयनि, भसंज्ञा, अलोप—कौसल्यायनिः । इसी प्रकार कर्मार + फिञ्, फ् = आयन्, शेष पूर्ववत् ] ।

परमप्रकृति अर्थात् कोसल एवं कर्मार शब्द से ही यह प्रत्यय इष्ट है—कोसलस्य अपत्यम्, कर्मारस्य अपत्यम् । 'प्रत्यय के सन्नियोग से प्रकृतिरूप का निपातन किया जा रहा है । जैसा कि दूसरा वचन है * दगु, कोसल, कर्मार, छाग और वृष शब्दों के आदिष्ट = आदेश को प्राप्त फिञ् = आयनि को युट् = य् आगम होता है । * दागव्यायनिः [ दगु + फिञ्, फ् = आयन्, युट् = य् यायनि, उकार का गुण, अवादेश, आदिवृद्धि दागव्यायनिः ] कौसल्यायनिः । कार्मार्यायणि [ इनकी सिद्धि लिखी जा चुकी है ] । छाग्यायनिः । वार्ष्यायणिः [ छाग + फिञ्, फ् = आयन्, युट् = य् आगम, भसंज्ञा, अलोप, वृष + फिञ्, आदिवृद्धि शेष पूर्ववत् ] ।

**विमर्श**—"वृद्धेत्कोसलाजादाञ्ञ्यङ्" ४।१।१७१ सूत्र द्वारा कोसल से ञ्यङ् कर के कौसल्य शब्द बनता है । और "सेनान्तलक्षणकारिभ्यश्च" ४।१।१५२ इस सूत्र द्वारा कर्मार शब्द से ण्य करके कार्मार्य शब्द बनता है । परन्तु यहाँ इन

---

१. 'युद्धादिष्टस्य' इति काशिकापदमञ्जर्योः मुद्रितः पाठोऽसाधुः;

**१४०६. अणो द्व्यचः ॥ १५६ ॥ ( ११८० )**

**अणन्ताद् द्व्यचः प्रातिपदिकादपत्ये फिञ् प्रत्ययो भवति । इञोऽपवादः । कार्त्रायणिः । हार्त्रायणिः । अण इति किम् ? दाक्षायणः । द्व्यच इति किम् ? औपगविः ।**

**❀ त्यदादीनां वा फिञ् वक्तव्यः ❀ । त्यादायनिः, त्यादः । यादायनिः, यादः । तादायनिः, तादः । अणत्र प्राप्तः ॥**

**न्यासः**

**अणो द्व्यचः ॥ कार्त्रायणिरिति** । कर्तुरपत्यमित्यण्—कार्त्रः, ततः फिञ् । **दाक्षायण इति** । दाक्षिशब्दादिञन्ताद् यूनि 'यञिञोश्च' इति फक् । प्रतिपादनादि सुगमम् ॥ १५६ ॥

**पदमञ्जरी**

**अणो द्व्यचः ॥ कार्त्रायणिरिति** । कर्तुरपत्यमित्यण्, कार्त्रः, ततो यूनि फिञ्, तस्याब्राह्मणगोत्रादिति लुग्न भवति, विधानसामर्थ्यात् । अपर आह—कर्तुश्छात्त्रः कार्त्रः, 'तस्यापत्यम्' इत्यादावगोत्रे चरितार्थं वचनमिति । अपर आह—अपत्यग्रहणमावर्तते, तत्रैकेनाण् विशेष्यते, अपरेण प्रत्ययार्थो निर्दिश्यते, ततश्चापत्यस्यैवाणो ग्रहणादस्त्येव वचनसामर्थ्यमिति ॥ १५६ ॥

**भावबोधिनी**

दोनों प्रत्ययान्त शब्दों का ग्रहण नहीं है अपि तु मूल शब्द कोसल और कर्मार का ही ग्रहण है । इसी लिये काशिकाकार ने 'परमप्रकृति' का ग्रहण लिखा है । परम प्रकृति से प्रत्यय को युट् आगम करने पर मध्य में यकारश्रवण होता है ।

अधिकांश स्थलों पर तालव्य शकारघटित कोशल शब्द का उल्लेख है । परन्तु वह ठीक नहीं प्रतीत होता है क्योंकि देशवाची कोसल शब्द दन्त्य सकारघटित ही शुद्ध है । कुछ विद्वान तो इस अन्तर की उपेक्षा करके सूत्र में तालव्य और उदाहरण में दन्त्य अथवा सूत्र में दन्त्य और उदाहरणों में तालव्य लिख बैठे हैं । न्यासकार ने तालव्य और पदमंजरीकार ने दन्त्य लिखा है ॥ १५५ ॥

अण् प्रत्ययान्त दो अचों वाले प्रातिपदिक से अपत्य अर्थ में फिञ् प्रत्यय होता है । यह इञ् का अपवाद है । उदा०—कार्त्रायणि हार्त्रायणिः । [ कर्तुः अपत्यम्—इस अर्थ में अण् प्रत्यय, आदिवृद्धि, रपर करने पर कार्तृ + अ, यण्—कार्त्र । इसे अणन्त मान कर कार्त्र + फिञ् फ् = आयन्, णत्व—कार्त्रायणिः । इसी प्रकार हर्तृ + अण् = हार्त्र + फिञ् ] अणन्त से—इसका क्या फल है ? दाक्षायणः [ दक्ष + इञ् = दाक्षि, "यञिञोश्च" ४।१।१०१ से फक् ही होता है । ] दो अचों वाले से—इसका क्या फल है ? औपगविः [ औपगव का अपत्य—इसमें दो नहीं चार अचों वाला औपगव शब्द है अतः "अत इञ्" ४।१।९५ से इञ् ही होता है । ]

* त्यद् आदि से अपत्य अर्थ में विकल्प से फिञ् होता है । * त्यादायनिः, त्यादः [ त्यद् + फिञ्, आदिवृद्धि, फ् का आयन् । पक्ष में अण् होता है । [ तादायनिः, तादः [ तद् + फिञ्, तद् + अण् ] इनमें अण् प्राप्त है । [ उसका वैकल्पिक अपवाद फिञ् प्रत्यय होता है । ]

**विमर्श**—प्रस्तुत सूत्र पर भाष्य ही नहीं है । अत एव वार्त्तिक होने की भी सम्भावना कम है । अतः काशिकाकार ने कहाँ से यह वचन लिख दिया, चिन्तनीय है । सिद्धान्तकौमुदी की तत्त्वबोधिनी टीका में भी इसका संकेत नहीं है । और बालमनोरमाकार ने तो इसे प्रामादिक कहा है "त्यदादीनां फिञ् वा वाच्यः । त्यादायनिः, त्यादः ।' इति क्वचित् पुस्तके दृश्यते । तत्तु प्रामादिकम् "त्यदादीनि च" १।१।७४ इति त्यदादीनां वृद्धत्वात् "उदीचां वृद्धादगोत्रात्" ४।१।१५७ इत्येव सिद्धे, भाष्ये अस्य वार्त्तिकस्य अदर्शनाच्च ।" [ द्र० प्रस्तुत सूत्र पर बालमनोरमा ] ॥ १५६ ॥

## १४०७. उदीचां वृद्धादगोत्रात् ॥ १५७ ॥ ( ११८१ )

**वृद्धं यच्छब्दरूपमगोत्रं तस्मादपत्ये फिञ्प्रत्ययो भवति। उदीचामाचार्याणां मतेन। आम्रगुप्तायनिः। ग्रामरक्षायणिः।**

**कारिशब्दादपि वृद्धादगोत्रात् परत्वादनेनैव भवितव्यम्। नापितायनिः।**

**उदीचामिति किम्? आम्रगुप्तिः। वृद्धादिति किम्? याज्ञदत्तिः। अगोत्रादिति किम्? औपगविः॥**

## १४०८. वाकिनादीनां कुक्च ॥ १५८ ॥ ( ११८२ )

**'वाकिन' – इत्येवमादिभ्यः शब्देभ्योऽपत्ये फिञ् प्रत्ययो भवति, तत्सन्नियोगेन चैषां कुगागमः। यदिह वृद्धमगोत्रं शब्दरूपं तस्यागमार्थमेव ग्रहणम्, अन्येषामुभयार्थम्। वाकिनकायनिः। गारेधकायनिः।**

### न्यासः

**उदीचां वृद्धागोत्रात्॥ वृद्धादिति।** इहैव यत्पारिभाषिकं वृद्धं तद् गृह्यते, न शास्त्रान्तरप्रसिद्धम्; अगोत्रादिति प्रतिषेधात्। **कारिशब्दादित्यादि।** कारिलक्षणस्येञोऽवकाशः – तान्तुवायिरिति, फिञोऽवकाशः— आम्रगुप्तायनिरिति; इहोभयं प्राप्नोति–नापितायनिरिति, परत्वात् फिञेव भवति॥ १५७॥

**वाकिनादीनां कुक् च॥ यदिह वृद्धमगोत्रमिति।** वाकिनशब्दादिकाकपर्यन्तम्। इञाद्यपवादो योग इति। आदिशब्देनाणो ग्रहणम्। तत्र चर्मिवर्मिशब्दयोरणोऽपवादः, शेषाणामिञः॥

### पदमञ्जरी

**उदीचां वृद्धादगोत्रात्॥ कारिशब्दादपीति।** कारिलक्षणस्योदीचामिञोऽवकाशः—तान्तुवायिः, फिञोऽवकाशः—आम्रगुप्तायनिः; नापितादुभयप्रसङ्गे फिञ् भवति। **याज्ञदत्तिरिति।** 'वा नामधेयस्य वृद्धसंज्ञा वक्तव्या'। पक्षे याज्ञदत्तायनिरिति भवत्येव॥ १५७॥

**वाकिनादीनां कुक् च॥ यदिह वृद्धगोत्रमिति।** वाकिन-गारेध-काक—इत्येते त्रयः। वचनं वाकः सोऽस्यास्ति वाकिनः, बर्हिणवदुपपाद्यः। अगारे एधते गारेधः, पृषोदरादित्वादादिलोपः, शकन्ध्वादित्वात् पररूपम्। कायतेः काकः, 'अन्येषामपि' इति कः। कर्कटस्यापत्यं कार्कट्यः, गर्गादिः, कुर्वादिर्वा। लंघयतेर्लङ्का, अस्मादेव निपातनाद् घस्य कादेशः। वर्मचर्मशब्दौ व्रीह्यादी।

### भावबोधिनी

वृद्ध जो शब्दरूप गोत्र नहीं है, उससे अपत्य अर्थ में फिञ् प्रत्यय होता है—उदीच्य आचार्यों के मत से। उदा०—आम्रगुप्तायनिः। ग्रामरक्षायणिः। [ आम्रगुप्त का अपत्य, ग्रामरक्ष्य का अपत्य—इस अर्थ में फिञ् = आयनि होता है ]। वृद्ध, अगोत्र [ गोत्रभिन्न ] कारिवाची = शिल्पिवाची शब्द से परत्वात् यही प्रत्यय होता है। उदा०—नापितायनिः [ नापित का अपत्य ]।

उदीच्यों के मत से—यह किस लिये—आम्रगुप्तिः। [ अन्य आचार्यों के मत में इञ् होता है। ] वृद्धसंज्ञक से—इसका क्या फल है? याज्ञदत्तिः [ यज्ञदत्त का अपत्य। यज्ञदत्त का आदि अच् वृद्ध नहीं है। अतः यह प्रत्यय न होकर इञ् होता है। ] गोत्रभिन्न से—यह किस लिये है? औपगविः। [ औपगव का अपत्य। यह गोत्र शब्द है। अतः फिञ् न होकर इञ् होता है। ]॥ १५७॥

वाकिन आदि शब्दों से अपत्य अर्थ में फिञ् प्रत्यय होता है और इस प्रत्यय के सन्नियोग से इन शब्दों को कुक् का आगम होता है। यहाँ जो वृद्ध अगोत्र शब्दरूप हैं, उनका आगम के लिये ही ग्रहण है, [ क्योंकि फिञ् प्रत्यय तो पूर्व सूत्र से ही सिद्ध है। ] अन्य शब्दों का ग्रहण दोनों [ आगम और प्रत्यय ] के लिये है। उदा०—वाकिनकायनिः। गारेधकायनिः। [ वाकिन का अपत्य, गारेध का अपत्य—इस अर्थ में वाकिन + फिञ् = आयनि, कुक् = क् आगम—वाकिनक् + आयनि वाकिनकायनिः। ]

इञाद्यपवादो योगः । 'उदीचाम्' इत्यधिकारात् पक्षे तेऽपि भवन्ति । वाकिनिः । गारेधिः ।

वाकिन । गारेध । कार्कटच । काक । लङ्का । ॐ चर्मिवर्मिणोर्नलोपश्च ॐ ( ग० सू० ८१ ) ॥

## १४०९. पुत्रान्तादन्यतरस्याम् ॥ १५९ ॥ ( ११८३ )

'उदीचां वृद्धात्' इति वर्त्तते । पुत्रान्तमगोत्रमिति पूर्वेणैव प्रत्ययः सिद्धः, तस्मिन्ननेन कुगागमोऽन्यतरस्यां विधीयते । पुत्रान्तात् प्रातिपदिकाद् यः फिञ्प्रत्ययस्तस्मिन् परभूतेऽन्यतरस्यां कुगागमो भवति पुत्रान्तस्य । तेन त्रैरूप्यं सम्पद्यते – गार्गीपुत्रकायणिः, गार्गीपुत्रायणिः, गार्गीपुत्रिः । वात्सीपुत्रकायणिः, वात्सीपुत्रायणिः, वात्सीपुत्रिः ॥

### न्यासः

चर्मिवर्मिणोर्नलोपश्चेति । चर्मिन्, वर्मिन्—इत्येतयोः कुक्फिञौ भवतः, नलोपश्चेति । कुकि कृते प्रातिपदिकस्य नकारान्तत्वात् नलोपोऽत्र न प्राप्नोतीति विधीयते—चार्मिकायणिः, वार्मिकायणिः ॥ १५८ ॥

पुत्रान्तादन्यतरस्याम् ॥ तेनेत्यादि । वचनात् पूर्वसूत्रेणैवोदीचां मतेन यः पक्षे फिञ् विहितस्तस्मिन्ननेनान्यतरस्यां कुगागमोऽपि विधीयते । तेन त्रीणि रूपाणि भवन्ति ॥ १५९ ॥

### पदमञ्जरी

इञाद्यपवाद इति । वर्मिचर्मिणोरण् प्राप्तः, लङ्काशब्दात् 'द्व्यचः' इति ढक् प्राप्तः, यञन्तात् 'यञिञोश्च' इति फक्; शेषेभ्य इञ् प्राप्तः, 'वर्मिचर्मिणोर्नलोपश्च' इति कुकि कृते प्रातिपदिकस्यानकारान्तत्वान्नलोपो न प्राप्नोतीति विधीयते । यदि पुनरयं कुक् परादिः क्रियते, आयनादेशो न स्यात्; फस्यानादित्वात् । यदा च लिङ्गविशिष्टपरिभाषया वर्मिणी-चर्मिणीशब्दाभ्यां प्रत्ययो भवति, तदा 'भस्याऽढे तद्धिते' इति पुंवद्भावो न स्यात् ॥ १५८ ॥

पुत्रान्तादन्यतरस्याम् ॥ पूर्वेणैव प्रत्ययः सिद्ध इति । तेनासाविह विधीयते । कथं तर्हि पञ्चम्या निर्देश इत्याह—पुत्रान्तादित्यादि ॥ १५९ ॥

### भावबोधिनी

यह इञ् आदि का अपवाद है । इसमें 'उदीचाम्' इसका अधिकार = अनुवृत्ति है, अतः पक्ष में वे प्रत्यय भी होते हैं । वाकिनिः [ वाकिन + इञ् ] गारेधिः [ गारेध + इञ् । [ भाव यह है इस सूत्र से जो प्रत्यय हो रहा है वह उदीच्य आचार्यों के ही मत में है । अतः अन्य आचार्यों के मत में सामान्य प्रत्यय 'इञ्' ही होता है । इसमें ये शब्द पठित हैं—] वाकिन । गारेध । कार्कटच । काक । लङ्का । [ चर्मिन् और वर्मिन् से कुक् आगम, फिञ् प्रत्यय और नलोप होते हैं । * [ चर्मिणः अपत्यम्—इसमें—चार्मिकायणिः; वार्मिकायणिः बनते हैं ] ॥ १५८ ॥

'उदीचां वृद्धात्' [ उदीच्यों मत में, वृद्ध से ] इनकी अनुवृत्ति होती है । पुत्रान्त गोत्रभिन्न—इससे पूर्व सूत्र [ "उदीचां वृद्धादगोत्रात्" १।४।१५७ ] से ही प्रत्यय सिद्ध है, उसमें यह सूत्र विकल्प से कुक् आगम का विधान करता है । पुत्रशब्दान्त प्रातिपदिक से जो फिञ् प्रत्यय होता है, उसके परे रहते पुत्रान्त शब्द को विकल्प से कुक् का आगम होता है । इस लिये तीन रूप होते हैं—(१) गार्गीपुत्रकायणिः, (२) गार्गीपुत्रायणिः, (३) गार्गीपुत्रिः । [ गार्गीपुत्रस्य अपत्यम्—इस अर्थ में गार्गीपुत्र + फिञ्, फ् = आयन्, विकल्प से कुक् = क् आगम करने पर गार्गीपुत्रक् + आयनि, णत्व (१) गार्गीपुत्रकायणिः; जब कुक् नहीं होता है तब (२) गार्गीपुत्रायणिः; ये दोनों रूप उदीच्यों के मत में हैं । अन्य आचार्यों के मत में इञ् होने पर (३) गार्गीपुत्रिः । ] (१) वात्सीपुत्रकायणिः, (२) वात्सीपुत्रायणिः, (३) वात्सीपुत्रिः । [ वात्सीपुत्र का अपत्य । प्रक्रिया पूर्ववत् ] ॥ १५९ ॥

**१४१०. प्राचामवृद्धात् फिन् बहुलम् ॥ १६० ॥ ( ११८४ )**

**अवृद्धाच्छब्दरूपादपत्ये फिन् प्रत्ययो भवति बहुलं प्राचां मतेन । ग्लुचुकायनिः । अहिचुम्बकायनिः ।**

**प्राचामिति किम् ? ग्लौचुकिः । अवृद्धादिति किम् ? राजदन्तिः ।**

**उदीचाम्, प्राचाम्, अन्यतरस्याम्, बहुलमिति सर्वं एते विकल्पार्थाः, तेषामेकेनैव सिद्धयति ? तत्राचार्य-ग्रहणं पूजार्थम् । बहुलग्रहणं वैचित्र्यार्थम्, क्वचिन्न भवत्येव – दाक्षिः । प्लाक्षिः ॥**

**१४११. मनोर्जातावञ्यतौ षुक् च ॥ १६१ ॥ ( ११८५ )**

**मनुशब्दादञ् यत् – इत्येतौ प्रत्ययौ भवतः, तत्सन्नियोगेन षुगागमः, समुदायेन चेज्जातिर्गम्यते । मानुषः, मनुष्यः । जातिशब्दावेतौ ।**

**अपत्यार्थोऽत्र नास्त्येव, तथा च मानुषा इति बहुषु न लुग्भवति । अपत्यविवक्षायां त्वणैव भवितव्यम् – मानवी प्रजा ।**

न्यासः

**प्राचामवृद्धात् फिन् बहुलम् ॥ विकल्पार्था इति ।** विकल्पप्रयोजनाय । **एकेनैव सिध्यतीति ।** विकल्पार्थ-त्वादिति । प्रकृतत्वाद्विकल्प इति गम्यते । अत्र च किमर्थं सर्वेषां ग्रहणमित्यध्याहार्यम् । तत्रेत्याद्युत्तरम् । यच्चो-दीचां ग्रहणं यच्च प्राचां ग्रहणम्, तदुभयं पूजार्थम् । **बहुलग्रहणं वैचित्र्यार्थम्** । पारिशेष्यादन्यतरस्यांग्रहणं विकल्पार्थमित्युक्तं भवति । **क्वचिदित्यादिना** बहुलग्रहणस्य वैचित्र्यार्थतां दर्शयति ॥ १६० ॥

**मनोर्जातावञ्यतौ षुक् च ॥ तथा चेत्यादि ।** यस्मादपत्यार्थोऽत्र नास्ति, एवञ्च कृत्वा मानुषा इति बहुषु लुग्न भवति । अपत्यार्थे तु सति 'यञञोश्च' इति बहुषु लुक् प्रसज्येत ।

पदमञ्जरी

**प्राचामवृद्धात्फिन्बहुलम् ॥ विकल्पार्था इति ।** विकल्पप्रयोजनम् । तत्राऽऽचार्योपादानं मतान्तरे प्रत्यय-स्याभावं द्योतयति, बहुलग्रहणं तु क्वचित्प्रवृत्त्यादिकम्, अन्यतरस्यांशब्दस्तु विकल्पमेव, तेषामेकेनैव सिद्धय-तीति प्रकरणाद्विकल्प इति गम्यते । किमर्थं तर्हि सर्वेषां ग्रहणम् ? तत्राह **तत्रेति । बहुलग्रहणं वैचित्र्यार्थमिति ।** पारिशेष्यादन्यस्य ग्रहणं विकल्पार्थमित्युक्तं भवति । वैचित्र्यमेव दर्शयति —**क्वचिदिति ॥ १६० ॥**

**मनोर्जातावञ्यतौ षुक् च ॥ तथा चेति ।** अपत्यार्थे तु सति 'यञञोश्च' इति बहुषु लुक् प्रसज्येत; लौकिकस्य गोत्रस्य तत्र ग्रहणात् ।

भावबोधिनी

प्राग्देशवर्त्ती आचार्यों के मत में अवृद्ध शब्दरूप से अपत्य अर्थ में विकल्प से फिन् प्रत्यय होता है । उदा०— ग्लुचुकायनिः । अहिचुम्बकायनिः । [ ग्लुचुक का अपत्य—इस अर्थ में ग्लुचुक + फिन्, फ् = आयन्, ग्लुचुकायनिः । अहिचुम्बक + फिन् ] ।

प्राग्देशवर्त्ती आचार्यों के मत में—इसका क्या फल है ? ग्लौचुकिः [ अन्यों के मत में इञ् प्रत्यय और आदिवृद्धि होती है । ] वृद्ध न हो—इसका क्या फल है ? राजदन्तिः [ राजदन्त शब्द वृद्ध है । अतः इञ् ही होता है । ]

'उदीचाम्', 'प्राचाम्', 'अन्यतरस्याम्' 'बहुलम्'—ये सभी शब्द विकल्प की सिद्धि के लिये हैं, इनमें से किसी भी एक से यह इष्ट सिद्ध हो जाता है । इस स्थिति में 'आचार्य' का उल्लेख उनके प्रति सम्मान प्रकट करने के लिये है । बहुल—का ग्रहण विचित्रता के लिये है, कहीं पर नहीं भी होता है—दाक्षिः । प्लाक्षिः [ इनमें इञ् ही होता है ] ॥ १६० ॥

मनु शब्द से अञ् और यत्—ये दो प्रत्यय होते हैं, इनके सन्नियोग से षुक् आगम भी होता है । यदि समुदाय [ निष्पन्न ] शब्द के द्वारा जाति की प्रतीति हो रही हो । उदा०—मानुषः, मनुष्यः । मनु + अञ्, षुक् = ष् आगम, आदि-वृद्धि—मानुषः । मनु + यत्, षुक्—मनुष्यः ] ये जातिवाची हैं । यहाँ अपत्य अर्थ नहीं है । इसीलिये मानुषाः इस बहुवचन

**अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः।**
**नकारस्य च मूर्द्धन्यस्तेन सिद्धयति माणवः॥ ( म० भा० ४.१.१६१ )**

## १४१२. अपत्यं पौत्रप्रभृति गोत्रम् ॥ १६२ ॥ ( १०८९ )

**पौत्रप्रभृति यदपत्यं तद् गोत्रसंज्ञं भवति। सम्बन्धिशब्दत्वादपत्यशब्दस्य [ यस्य ][1] यदपत्यं तदपेक्षया**

**न्यासः**

अपत्ये कुत्सित इत्यादि। मूर्धन्योपसंख्यानपरोऽयं श्लोकः। अण्प्रत्ययोऽपत्यविवक्षायाम् 'तस्यापत्यम्' इत्यनेनैव सिध्यति। ननु च मूर्धन्योऽपि च बहुलग्रहणानुवृत्या सिध्यत्येव? एवं तर्हि बहुलग्रहणानुवृत्तेर्लभ्य एवार्थः श्लोकेन कथ्यते। स चापि मूर्धन्यो विशिष्ट एव विषये मूढादावपत्ये भवति, न सर्वत्र। अनधीतवेदत्वादज्ञो मूढः। मूढत्वादेव प्रतिषिद्धाचरणाद्वा कुत्सितो यः स ब्राह्मणजातीयो माणव उच्यते॥ १६१॥

**अपत्यं पौत्रप्रभृति गोत्रम्॥** प्रभृतिशब्द आदिशब्दस्यार्थे। पौत्रः प्रभृतिर्यस्येति बहुव्रीहिः। यदि पौत्रप्रभृति यदपत्यं तद् गोत्रसंज्ञं भवति, गर्गस्यापि गोत्रसंज्ञा प्राप्नोति, सोऽपि कञ्चित् प्रति पौत्रो भवत्येव। सत्याञ्च गोत्रसंज्ञायां गोत्रशब्दादनन्तरापत्ये प्रत्ययो न प्राप्नोतीति चोद्यमाशङ्कयाह—**सम्बन्धिशब्दत्वादि-**

**पदमञ्जरी**

**अपत्ये कुत्सित इति।** णत्वविधानार्थमिदम्, अणः सिद्धत्वात्। न च 'न दण्डमाणवान्तेवासिषु' इति णत्वसिद्धिः, अर्थविशेषस्यानिश्चयाद्। अनधीतवेदत्वान्मूढत्वम्। विहिताकरणात्प्रतिषिद्धसेवनाच्च कुत्सितत्वम्॥ १६१॥

**अपत्यं पौत्रप्रभृति गोत्रम्॥ तद्गोत्रसंज्ञं भवतीति।** अपत्यमात्रस्य लोके गोत्रत्वादपत्यविशेषे गोत्रशब्दस्य नियमात्परिभाषेयं युक्ता, न संज्ञेति चेत्? न लिङ्गवती परिभाषा भवति, यथा—'इको गुणवृद्धी' इति विध्यन्तरशेषभूता वा, यथा—'विप्रतिषेधे परं कार्यम्' इति, न चेयं तथा; किञ्च वृद्धयादयोऽपि सर्वार्थप्रत्यायनयोग्याः संज्ञिविशेषे शक्यवच्छेदेन नियम्यन्ते। अथ च ताः संज्ञास्तथेयमपि भविष्यति। उक्तं च—

व्यवहाराय नियमः संज्ञानां संज्ञिनि क्वचित्।
नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत्॥
वृद्धयादीनां च शास्त्रेऽस्मिन् शक्त्यवच्छेदलक्षणः।
अकृत्रिमो हि सम्बन्धो विशेषणविशेष्यवत्॥ इति। ( वा० प० २.३६५–३६६ )

यदि पौत्रप्रभृतेरपत्यस्य गोत्रसंज्ञा क्रियते, गर्गस्यापि प्राप्नोति, सोऽपि कञ्चित्प्रति पौत्रो भवत्येव, तत्र को दोषः? 'गोत्राद्यून्यस्त्रियाम्' इति यूनि प्रत्ययप्रसङ्गः, गार्ग्यादेव तु यूनीष्यते? नैष दोषः; इहापत्यग्रहणं न कर्तव्यम्, पौत्रस्यापत्यत्वात्तत्प्रभृतेरपत्यस्यैव ग्रहणं सिद्धम्, तत् क्रियते—अपत्यरूपेण प्रतिभासमानस्य यथा

**भावबोधिनी**

में [ "यञञोश्च" २।४।६४ से अञ् का ] लुक् नहीं होता है। अपत्य अर्थ की विवक्षा में तो अण् ही होना चाहिये—मानवी प्रजा। [ मनु + अण्, आदिवृद्धि, उ का गुण, अवादेश—मानव + ङीप् मानवी। मनु की सन्तान ]।

कुत्सित, मूढ अपत्य अर्थ में मनु शब्द से औत्सर्गिक [ अण् ] प्रत्यय और नकार का मूर्धन्य णकार माना गया है, इससे माणवः—यह सिद्ध होता है। [ वेदादि न पढ़ने से मूर्ख और मूर्ख होने से कुत्सित आचारण करने वाला जो अपत्य है उसे 'माणव' कहा जाता है। यह निकृष्ट ब्राह्मण के लिये प्रयुक्त होता है ]॥ १६१॥

पौत्र से लेकर आगे की जो सन्तान है वह गोत्र कही जाती है, उसकी गोत्रसंज्ञा होती है। यह अपत्य शब्द सम्बन्धी शब्द है। अतः जिसका जो अपत्य [ प्रतीत होता है ] उसकी अपेक्षा करके पौत्र आदि की गोत्रसंज्ञा की जा रही है।

---

१. 'यस्य' इति पदमञ्जरी सम्मतोऽयं पाठः।

**पौत्रप्रभृतेर्गोत्रसंज्ञा विधीयते । गर्गस्यापत्यं पौत्रप्रभृति गार्ग्यः । वात्स्यः ।**
**अपत्यमिति व्यपदेशोऽयं पौत्रप्रभृतेः ।**

**न्यासः**

**त्यादि ।** गोत्रसंज्ञा ह्यपत्यस्य पौत्रप्रभृतेर्विधीयते । तेन च यश्चापत्यमिति सम्बन्धिशब्दोऽसौ नियोगतोऽपत्यवन्तमपेक्षते । तेन तस्य यदपत्यं तदपेक्षया गोत्रसंज्ञा विधीयते । न च यस्य गर्गः पौत्रस्तस्यासौ गर्गोऽपत्यमिति शक्यते व्यपदेष्टुम्; अपत्यत्वस्य तत्राप्रतिभासनात् । अप्रतिभासनं पुनस्तस्य तद्वतोऽविवक्षितत्वात् । यदपि हि तत्रापत्यत्वं तदप्यविवक्षितस्वरूपेण नाख्यातम्, ततोऽपत्यस्य पौत्रप्रभृतेर्विधीयते । अतः स्वरूपेण प्रतिभासमानो न भवति गर्गस्य गोत्रसंज्ञायाः प्रसङ्गः । **गर्गस्य पौत्रप्रभृतीति ।** गर्गसम्बन्धि पौत्राद्यपत्यं गार्ग्यं इति गोत्रसंज्ञायां सत्याम् 'गोत्रे कुञ्जादिभ्यश्च्फञ्' इत्यतो गोत्र इत्यनुवर्तमाने 'गर्गादिभ्यो यञ्' इति गोत्रेऽपत्ये यञ् भवति । **अपत्यमिति व्यपदेशोऽयमिति ।** संज्ञिन इति शेषः । तच्चोत्तरसूत्र इत्यभिप्रायः । इह तु पौत्रस्यापत्यत्वाव्यभिचारात् तदपत्यमेव प्रत्ययान्तैः संज्ञित्वेन विज्ञायत इति नार्थः संज्ञिव्यपदेशार्थेनापत्यग्रहणेन । उत्तरसूत्रे तु पौत्रप्रभृत्येतत् षष्ठ्यन्तं विपरिणम्य पौत्रप्रभृतेः सम्बन्धिनोऽपत्यस्य युवसंज्ञेष्यते, सा चापत्यग्रहणमन्तरेण न लभ्यते । अन्यदपि ह्यपत्यात् पौत्रप्रभृतेः सम्बन्ध्यस्ति, तत्र न ज्ञायते—कस्येयं संज्ञेति ? अतस्तत्र संज्ञिनो व्यपदेशाय युक्तमपत्यग्रहणमित्येके ।

**पदमञ्जरी**

स्यात्, वस्तुतोऽपत्यस्य मा भूदित्येवमर्थम् । अतोऽपत्यरूपेण प्रतिभासमानस्य गर्गस्य न भविष्यति । ननु चासत्यप्यपत्यग्रहणे पौत्रप्रभृतिरूपेण प्रतिभासमानस्य संज्ञाया विज्ञानात्तेन रूपेणाप्रतिभासमानस्य गर्गस्य न भविष्यतीति किमपत्यग्रहणेन ? यद्येवम्, औपगवस्यापि न स्यात्, सोऽपि ह्यपत्यरूपेण प्रतिभासते, न तु पौत्रप्रभृतिरूपेण, अपत्यमात्रे प्रत्ययविधानाद् गार्ग्यादेरेव तु स्याद्—यत्र गोत्र एव प्रत्ययः। कुतश्चायमर्थो लभ्यते—पौत्रप्रभृतिरूपेण प्रतिभासमानस्येति ? तद्ग्रहणसामर्थ्यादिति चेत्, सर्वस्यापि यत्किञ्चित्प्रति वस्तुतः पौत्रप्रभृतित्वाव्यभिचारात् पौत्रप्रभृतिग्रहणं न कर्त्तव्यं भवति । तद्ग्रहणसामर्थ्यादयमर्थो लभ्यत इति ? तन्न; संज्ञिनिर्देशार्थत्वादचेतनव्यावृत्त्यर्थत्वाच्च । 'गोत्रम्' इत्येतावति ह्युक्ते कस्य संज्ञा स्यात्, रथादीनां च वस्तुतोऽपि पौत्रप्रभृतित्वं नास्ति । अतो वस्तुतः पौत्रप्रभृतेर्गर्गस्य मा भूत, अपत्यरूपेण प्रतिभासमानस्य यथा स्यादित्येवमर्थं त्वपत्यग्रहणं कर्तव्यम् । सम्बन्धिशब्दत्वाच्च पौत्रप्रभृत्यपत्यशब्दयोर्यं प्रति पौत्रप्रभृतित्वमपत्यत्वं च तमेव प्रति गोत्रसंज्ञा विज्ञायते । तेनाङ्गिरसः पौत्रे गर्गस्यानन्तरे न भवति 'गर्गादिभ्यो यञ्' । तदेतत्सर्वमुक्तम् ।

**सम्बन्धिशब्दत्वादित्यादि । यस्य यदपत्यमिति ।** प्रतिभासत इति भावः । तदयमत्र सूत्रार्थः—वस्तुतः पौत्रप्रभृतिरपत्यरूपेण प्रतिभासमानोऽर्थो यं प्रत्यपत्यरूपेण प्रतिभासते, यं च प्रति वस्तुतः पौत्रप्रभृतिः, तं प्रति गोत्रसंज्ञ इति ।

**अपत्यमिति व्यपदेशोऽयमिति । संज्ञिन इति शेषः ।** अपत्यरूपेण प्रतिभासमानस्य संज्ञिनो व्यपदेशो यथा स्यादित्येवमर्थमित्यर्थः । इह कस्मान्न भवति—गर्गापत्यस्य तृतीयादेरपत्यमिति, अत्र हि गर्गापत्यशब्देन गर्गं प्रत्यपत्यरूपेण प्रतिभासमानस्य वस्तुतः पौत्रप्रभृतेर्गर्गं प्रति गोत्रसंज्ञायां सत्यां गर्गस्य चतुर्थे जीवद्वंश्ये 'गोत्राद्यूनि' इति गर्गापत्यशब्दात् प्रत्ययः प्राप्नोति ? नैष दोषः, संज्ञाप्रकरण एवास्मिन्कर्तव्येऽपत्यप्रत्ययेषु विधीयमानेषु मध्ये संज्ञाकरणं प्रत्ययवाच्यस्यापत्यस्य परिग्रहार्थम् । यदिदं 'तस्यापत्यम्' इत्यारभ्य

**भावबोधिनी**

[ अतः अन्य के पौत्र आदि की गोत्रसंज्ञा नहीं होती है । ] गर्ग का पौत्र प्रभृति अपत्य—गार्ग्यः है । [ गर्ग शब्द से गोत्रापत्य अर्थ में यञ् करने पर आदिवृद्धि, भसंज्ञा, अलोप । ] वात्स्यः [ वत्स का गोत्रापत्य=पौत्र आदि ] । पौत्र आदि

**पौत्रप्रभृतीति किम्? अन्यस्य मा भूत्। कौञ्जिः। गार्गिः।**

**गोत्रप्रदेशाः – 'एको गोत्रे' (४.१.९३) इत्येवमादयः॥**

## १४१३. जीवति तु वंश्ये युवा॥ १६३॥ (१०९०)

**अभिजनप्रबन्धः = वंशः। तत्र भवो वंश्यः = पित्रादिः, तस्मिन् जीवति सति पौत्रप्रभृत्यपत्यं युवसंज्ञं**

**न्यासः**

इह तु संज्ञिव्यपदेशार्थं युक्तमपत्यग्रहणं पश्यामः। असति ह्यपत्यग्रहणे सम्बन्धिशब्दत्वादपत्यशब्दस्येत्यादि यदुक्तं चोद्यनिरासाय तदघटमानं स्यात्। ततश्च गर्गस्यापि गोत्रसंज्ञा स्यादेव। तस्मादिहापि संज्ञिव्यपदेशायापत्यग्रहणं कर्त्तव्यमेव, अपत्यरूपेण प्रतिभासमानस्य संज्ञा यथा स्यात्।

**अन्यस्य मा भूदिति।** ननु तस्मादेव तत्प्रकृतमपत्यग्रहणं तदेव संज्ञिव्यपदेशाय भविष्यति, तत् किमपरेणापत्यग्रहणेन? नैतदस्ति; तद्धि प्रत्ययार्थतया प्रकृतं कथं संज्ञिनो व्यपदेशाय स्यात्, स्यादेतत्—यद्यपि तत्प्रत्ययार्थे कृतं तथापि तस्येहानुवृत्तस्य तत्प्रयोजनं नास्तीत्यतः संज्ञिव्यपदेशाय विज्ञास्यत इति? एतच्च नास्ति; उत्तरार्थं ह्यधिकाराणामनुवृत्तिर्दृश्यते, व्याख्यानञ्चैवं कर्तव्यं स्यात्; व्याख्यानाच्च वचनमेव लघुतरमित्यपत्यग्रहणं कर्तव्यम्। **कौञ्जिः, गार्गिरिति।** अनन्तरस्य गोत्रसंज्ञाया अभावाद् 'गोत्रे कुञ्जादिभ्यश्च्फञ्' 'गर्गादिभ्यो यञ्' इति यश्च गोत्रे विधीयमानो न स भवति॥ १६२॥

**जीवति तु वंश्ये युवा॥ अभिजनप्रबन्ध इति।** अभिजनाः = पितामहादयः, प्रबन्धः = सन्तानः, तत्र भवो वंश्य इति दिगादित्वाद्यत्। **पौत्रप्रभृत्यपत्यमिति।** षष्ठीसमासः। **पौत्रप्रभृतीति चेत्यादि।** यदि पौत्र-

**पदमञ्जरी**

प्रत्ययार्थत्वेन निर्दिष्टमपत्यं तद्गोत्रसंज्ञमिति, तेनापत्यशब्देन प्रतिभासमानस्यापत्यस्य संज्ञा न भविष्यति। ननु च 'ते तद्राजाः' इत्यत्र तच्छब्देनाञादीनामेव परिग्रहो यथा स्यात् पूर्वेषां मा भूदिति मध्ये संज्ञाकरणं स्यात्। यद्येतावत्प्रयोजनं स्याद्, 'अञादयस्तद्राजाः' इत्येव ब्रूयात्, तस्माद्युक्तमेव साक्षात्प्रयोजनमस्मिन् प्रकरणे संज्ञाकरणस्य। स्थिते त्वेवमुक्तमपि प्रयोजनं भवत्येव, अत एव तत्र वक्ष्यति—गोत्रयुवसंज्ञा काण्डेन व्यवहितत्वादिति॥ १६२॥

**जीवति तु वंश्ये युवा॥ अभिजनप्रबन्धो वंश इति।** अभिजनाः = पित्रादयः, अभिजायन्ते येभ्यः पुत्रादय इति कृत्वा। प्रबन्धः = सन्तानः। **तत्र भवो वंश्य इति।** दिगादित्वाद्यत्। पौत्रप्रभृत्यपत्यमिति षष्ठीसमासः, यद्यत्रापि पूर्ववत् 'पौत्रप्रभृति' इत्येतत्सामानाधिकरण्येनापत्यं विशेषयेत्, तृतीयस्यापि जीवद्वंश्यस्य युवसंज्ञा स्यात्; तत्र को दोषः? युवसंज्ञया गोत्रसंज्ञाया बाधितत्वाद्गर्गादिभ्यो यञ् स्यात्, न कश्चिदपत्यप्रत्ययः। किं कारणम्? गोत्रादेव यूनीति नियमात्, नानन्तरान्न मूलप्रकृतेः। तस्माद्वाक्येनैवाभिधानं प्राप्नोति—गर्गस्यापत्यं

**भावबोधिनी**

संज्ञा का 'अपत्य' यह व्यपदेश=संज्ञा है। पौत्रप्रभृति = पौत्र से लेकर—यह किसलिये है? अन्य को न हो। कौञ्जिः। गार्गिः [ कुञ्ज का अपत्य, गर्ग का अपत्य—यहाँ पौत्र से आगे का अपत्य नहीं हैं। अतः गोत्रप्रत्यय न होकर सामान्य इञ् प्रत्यय होता है। ] गोत्रसंज्ञा के प्रयोगस्थल हैं—"एको गोत्रे" ४।१।९३ आदि॥ १६२॥

अभिजन = पिता, पितामह आदि, उनके प्रबन्ध = सन्तान को वंश कहा जाता है। उसमें होने वाला = वंश्य = पिता आदि, उस पिता आदि के जीवित रहने पर पौत्र से लेकर आगे वालों का जो अपत्य वह गोत्रसंज्ञक होता है। पौत्रप्रभृति—यह सामानाधिकरण्येन अपत्य को विशेषित नहीं करता है अर्थात् पौत्र प्रभृति जो अपत्य ऐसा नहीं है; तो कैसा

**भवति। पौत्रप्रभृतीति च न सामानाधिकरण्येनापत्यं विशेषयति, किं तर्हि ? षष्ठ्या विपरिणम्यते – पौत्रप्रभृतेर्यदपत्यमिति। तेन चतुर्थादारभ्य युवसंज्ञा विधीयते। गार्ग्यायणः। वात्स्यायनः।**

**तुशब्दोऽवधारणार्थः – युवैव भवति, न गोत्रमिति ॥**

न्यासः

प्रभृतीत्येतत् सामानाधिकरण्येनापत्यं विशेषयेत् पौत्रप्रभृति यदपत्यमिति तदारभ्य युवसंज्ञा स्यात्, तच्चानिष्टम्; तस्मान्नैतत् सामानाधिकरण्येनापत्यस्य विशेषणम्, किं तर्हि ? अर्थाद् विभक्ति-विपरिणामे कृते षष्ठ्यन्ततामापन्नं वैयधिकरण्येन पौत्रप्रभृतेर्यदपत्यमिति, तथा सति यदिष्टं सम्पद्यते तद् दर्शयितुमाह - **तेनेत्यादि।** यत एवं विभक्तिविपरिणामे कृते पौत्रप्रभृतीत्यनेन षष्ठ्यन्तेनापत्यं विशेष्यते तेन चतुर्थादारभ्य युवसंज्ञा विधीयते, तस्य च विभक्तिपरिणामस्यापत्यं हेतुः। अपत्यशब्दो हि सम्बन्धिशब्दत्वाद्धेत्वाद्यपेक्षते, तत्र षष्ठ्यां हेतुर्भवति। सन्निहितत्वाच्च। पौत्रप्रभृति तस्येत्येतदेवापेक्षते, ततस्तत्रैव षष्ठीं प्रकल्पयति। यदि तर्ह्यपत्यग्रहणसामर्थ्यात् पौत्रप्रभृतेः षष्ठीविपरिणामो भवति, पूर्वसूत्रेऽपि कस्मान्न भवति? तत्र प्रथमाया अनवकाशत्वात्। पूर्वसूत्रे ह्यकृतार्था प्रथमा, ततो न शक्यते तस्याः षष्ठी विपरिणमयितुम्। इह तु कृतार्था शक्यते षष्ठीभावेन विपरिणमयितुम्। **गार्ग्यायण इति।** इह युवसंज्ञायां सत्याम् 'गोत्राद् यून्यस्त्रियाम्' इति गोत्रप्रत्ययान्ताद् यूनि प्रत्ययो भवति।

**तुशब्दोऽवधारणार्थं इति।** कः पुनः संज्ञासमावेशे दोषः कथ्यते? शालङ्केरपत्यं युवा 'यञिञोश्च' इति फक्, पैलस्यापत्यं युवा 'अणो द्व्यचः' इति फिञ्; तयोः 'पैलादिभ्यश्च' इति लुगुच्यते—शालङ्किर्युवा,

पदमञ्जरी

गार्गेरपत्यमिति। एतेनोपगोस्तृतीयो जीवद्वंश्यो व्याख्यातः, तस्माद्वैयधिकरण्येन विशेषणमित्याह-**पौत्रप्रभृतीति। षष्ठी विपरिणम्यत इति।** अत्र च व्याख्यानमेव शरणम्।

**तुशब्दोऽवधारणार्थं इति।** अनेकार्थत्वान्निपातानां भिन्नक्रमो युवशब्दानन्तरं द्रष्टव्य इत्याह—**युवैव भवति, न गोत्रमिति।** असत्यवधारणे एकसंज्ञाधिकारादन्यत्र संज्ञायां समावेशाभ्युपगमात् कृत्यप्रत्ययसंज्ञानामिव गोत्रयुवसंज्ञयोः समावेशः स्यात्। अस्तु, को दोषः? यस्कस्यापत्यं गोत्रम् 'शिवादिभ्योऽण्' तदन्ताद्यूनि 'अणो द्व्यचः' इति फिञ्, वृद्धौ, यस्येति लोपे कृते यास्कायनिरिति। बहुषु 'यस्कादिभ्यो गोत्रे' इति फिञो लुक् प्रसज्येत; एकदेशविकृतस्यानन्यत्वात्। यस्कादिभ्योऽनन्तरस्य गोत्रप्रत्ययस्य लुगुच्यते, न चात्रानन्तरः फिञ्। शिवाद्यणो यस्येति लोपः, तस्य पूर्वस्मादपि विधौ स्थानिवद्भावाद्यस्कादिभ्योऽनन्तरस्य विहितस्येति वा विज्ञास्यते। इह च कण्वस्यापत्यं काण्व्यः, तस्यापत्यं युवा काण्व्यायनः, तस्यच्छात्राः

भावबोधिनी

है ? षष्ठी के रूप में बदल जाता है—पौत्रप्रभृति का अपत्य। इस कारण चौथी पीढ़ी से लेकर आगे की सन्तान की युवा संज्ञा की जाती है। उदा०—गार्ग्यायणः। वात्स्यायनः [ गर्ग का गोत्रापत्य - गार्ग्य, इससे युवापत्य अर्थ में फक् = आयन होता है। इसकी सिद्धि के लिये 'यञिञोश्च' ४।१।१०१ सूत्र की व्याख्या देखें। ]

'तु' शब्द अवधारण के लिये है—युवा संज्ञा ही होती है न कि गोत्रसंज्ञा।

विमर्श—वंश का आशय है—सन्ततिपरम्परा। इसलिये उस वंश में होने वाले पिता, चाचा आदि सभी वंश्य कहे जायेंगे। ये जीवित अवस्था में रहें तब इनके पौत्र आदि का सन्तान को 'युवा' कहा जाता है। इस प्रकार चौथी पीढ़ी और इसके आगे की सन्तति युवा कही जाती है। तीसरी पीढ़ी गोत्र होती है। दूसरी पीढ़ी सामान्य अपत्य। इसलिये (१) गर्ग का पुत्र—गार्गिः [ 'अत इञ्' ४।१।९५ से इञ् ]। (२) गर्ग का पौत्र—गार्ग्य [ 'गर्गादिभ्यो यञ्' ४।१।१०५ से यञ् ] (३) गर्ग का प्रपौत्र—गार्ग्यायणः [ यञिञोश्च ४।१।१०१ से फक् होता है ]॥ १६३॥

## १४१४. भ्रातरि च ज्यायसि ॥ १६४ ॥ ( १०९१ )

**भ्रातरि ज्यायसि जीवति कनीयान् भ्राता युवसंज्ञो भवति पौत्रप्रभृतेरपत्यम् । गार्ग्यस्य द्वौ पुत्रौ, तयोः कनीयान्, मृते पित्रादौ वंश्ये भ्रातरि ज्यायसि जीवति, युवसंज्ञो भवति । अवंश्यार्थोऽयमारम्भः । पूर्वजाः**

**न्यासः**

पैलो युवेति । यदि च गोत्रयुवसंज्ञयोः समावेशः स्यात् तदा शालङ्केर्यूनश्छात्रा इत्यर्थविवक्षायां प्राग्दोव्यतीयेऽजादौ प्रत्यये विषयभूते गोत्राश्रयः 'गोत्रेऽलुगचि' इत्यलुक् स्यात् । ततस्तस्माद् यूनो गोत्रसंज्ञा मा भूदित्यवधारणार्थस्तुशब्दः क्रियते ॥ १६३ ॥

**भ्रातरि च ज्यायसि ॥** भ्रातृशब्दस्य सम्बन्धिशब्दत्वाद् यदपेक्षं भ्रातृत्वं तमेव भ्रातरं संज्ञित्वेनोपक्षिपति । ज्यायानिति प्रशस्यतरो वृद्धतरश्चाभिधीयते । तस्य च ज्यायस्त्वं गुणैर्वयसा वा युवानं प्रतियोगिनमपेक्ष्य भवतीति स एव ज्यायसीत्यनेन प्रतियोगी प्रत्युपस्थाप्यते । तेन भ्रातुरेव कनीयसः संज्ञा विज्ञास्यत इति मत्वाह– **कनीयान् भ्राता युवसंज्ञो भवतीति । पूर्वजा इत्यादिना** अवंश्यार्थतामारम्भस्य

**पदमञ्जरी**

काण्वायनीया इति, 'कण्वादिभ्यो गोत्रे' इत्यण् न भवति, कण्वादिभ्यः परो योऽनन्तरो यो वा तेभ्यो गोत्रे विहितस्तदन्तादित्याश्रयणात् । इह च, औपगवस्यापत्यमौपगविरिति 'गोत्राद्यूनि' इति प्रतिपदविधानात् 'एको गोत्रे' इति नियमो बाधिष्यते । यदि बाध्यते, औपगवेर्यूनोऽपत्यमिति चतुर्थस्य यूनो गोत्रत्वात् पञ्चमे यूनि फक् प्राप्नोति ? नैष दोषः; पञ्चमे यूनि विवक्षिते उत्पन्नस्येञः यूनि 'लुक्' इति लुकि कृते ओपगवशब्दादणन्तात् पुनरपीञेव भविष्यति । इह तर्हि दाक्षेरपत्यं दाक्षायणस्यापत्यमित्यर्थविवक्षायाम् 'फक्फिञोरन्यतरस्याम्' इति फको लुगभावपक्षे तदन्तादिञ् प्राप्नोति ? किञ्च औपगवेरपत्यमित्यत्रापि लुप्तेऽपीञि प्रत्ययलक्षणेन फक्प्राप्नोति ? इवं तर्हि 'गोत्राद्यूनि' इत्यत्र एकग्रहणमनुवर्तिष्यते, तेनानेकः प्रत्ययो न भवित्यति । यस्तर्हि 'गोत्रेऽलुगचि' इत्यलुक् सोऽस्त्रीणां यूनां छात्र इत्यादौ प्राप्नोति, यूनोऽपि गोत्रत्वात् ? प्राप्नोतु, तं बाधित्वा परत्वाद्यूनि लुग्भविष्यति ? नैवं शक्यम्, फक्फिञोर्हि दोषः स्यात् शालङ्केरपत्यं शालङ्किः, पैलादिषु पाठादिञ् शालङ्कादेशश्च, ततः शालङ्केरपत्यं युवा 'यञिञोश्च' इति फक्, 'पैलादिभ्यश्च' इति लुक्, ततः शालङ्केर्यूनश्छात्रा इति प्राग्दीव्यतीयार्थविवक्षायाम् 'गोत्रेऽलुगचि' इति पैलादिषु लुकः प्रतिषेधे सति 'यूनि लुक्' इति लुकि नित्ये प्राप्ते 'फक्फिञोरन्यतरस्याम्' इति पक्षे फकः श्रवणप्रसङ्गः । असत्यां तु यूनो गोत्रसंज्ञायाम् 'गोत्रेऽलुगचि' इत्यस्याप्रवृत्तौ पैलादिषु लुग्भवत्येव । 'फक्फिञोरन्यतरस्याम्' इत्ययं तु विकल्पोः यूनि 'लुक्' इत्यस्यानन्तरस्य, न तु पैलादिषु लुको व्यवहितस्यान्तरङ्गस्य, तत 'इञश्च' इत्यण्—शालङ्का इति भवति । तथा पीलाया अपत्यम्, 'पीलाया वा' इत्याण्, पैलः, तस्यापत्यं युवा, 'अणो द्व्यचः' इति फिञ्, तस्य 'पैलादिभ्यश्च' इति लुक्, ततः पैलस्य यूनश्छात्राः पैलीया इति ॥ १६३ ॥

**भ्रातरि च ज्यायसि ॥ कनीयान् भ्रातेति ।** भ्रातृज्यायः—शब्दयोः सम्बन्धिशब्दत्वादयमर्थो लभ्यते ।

**भावबोधिनी**

बड़े भाई के जीवित रहने पर पौत्र आदि का अपत्य जो छोटा भाई उसकी युवा संज्ञा होती है । उदाहरणार्थ—गार्ग्य [ गर्ग के पौत्र ] के दो पुत्र हों, पिता आदि वंश्यों की मृत्यु हो चुकी है, [ दोनों में केवल ] बड़ा भाई जीवित है, तो छोटे भाई की युवा संज्ञा होती है । जो वंश्य नहीं है उनकी अपेक्षा युवा संज्ञा करने के लिये यह सूत्र अवश्य बनाना चाहिये । पूर्वज पिता आदि को 'वंश्य' कहा जाता है । परन्तु भ्राता वंश्य नहीं होता है क्योंकि वह [ सन्तानपरम्परा का ]

**पित्रादयः 'वंश्याः' इत्युच्यन्ते। भ्राता तु न वंश्यः; अकारणत्वात्। गार्ग्ये जीवति गार्ग्यायणोऽस्य कनीयान्भ्राता। वात्स्यायनः। दाक्षायणः। प्लाक्षायणः॥**

### १४१९. वान्यस्मिन् सपिण्डे स्थविरतरे जीवति ॥ १६५ ॥ ( १०९२ )

**सप्तमपुरुषावधयः सपिण्डाः स्मर्यन्ते। येषाम् –**

**न्यासः**

समर्थयते। **अकारणत्वादित्यनेनापि** भ्रातुरवंश्यत्वम्। यो हि साक्षात् पारम्पर्येण वा कारणं स वंश्यः, न च भ्राता कारणम्, तस्मादसौ वंश्यो न भवतीति। गार्ग्ये जीवति भ्रातरि जीवतीत्यर्थः। एवं वात्स्ये जीवति वात्स्यायनोऽस्य कनीयान् भ्राता, दाक्षौ जीवति दाक्षायणोऽस्य कनीयान् भ्राता वेदितव्यः॥ १६४॥

**वान्यस्मिन् सपिण्डे स्थविरतरे जीवति॥ सप्तमपुरुषावधय इति।** सप्तमः पुरुषोऽवधिर्येषां सपिण्डानां ते तथोक्ताः समानपिण्डाः, निपातनात् सभावः, 'समानस्य' इति योगविभागाद्वा। तस्य च योगविभागस्यैतन्निपातनं लिङ्गम्, तेन सपिण्डाः शास्त्रेष्वासप्तमात् पुरुषात्। परेण ये ते सपिण्डा नोच्यन्ते। **येषामित्यस्याधिकार इति** परेण सम्बन्धः।

**पदमञ्जरी**

**अकारणत्वादिति।** यः साक्षात्परम्परया वा कारणं भवति, स लोके 'वंश्य' इत्युच्यते। **गार्ग्ये जीवतीति।** ज्यायसि भ्रातरि जीवतीत्यर्थः। एवं **वात्स्यायनादावपि** द्रष्टव्यम्॥ १६४॥

**वान्यस्मिन् सपिण्डे स्थविरतरे जीवति॥ सप्तमपुरुषावधय इति।** आत्मनः प्रभृति पित्रादिषु पुत्रादिषु वा गण्यमानेषु सप्तमपुरुषोऽवधिर्येषां ते तथोक्ताः। प्रायेण तु पूरणप्रत्ययो न पठ्यते, **सप्तपुरुषावधय** इत्येव

**भावबोधिनी**

कारण नहीं होता है। गार्ग्य [ बड़े भाई ] के जीवित रहने पर इसका छोटा भाई गार्ग्यायण कहा जाता है। [ इसकी युवा संज्ञा हो जाने से फक् प्रत्यय होता है। इसी प्रकार ] वात्स्यायनः। दाक्षायणः। प्लाक्षायणः।

**विमर्श**—वंश पिता से चलता है। भाई को मानकर वंश का नाम नहीं रहता है। अतः 'जीवति तु वंश्ये युवा' ४।१।१६३ की प्रवृत्ति सम्भव न होने के कारण यह सूत्र बनाया गया है। यदि किसी के पिता आदि वंश्यों की मृत्यु हो चुकी है। उसके दो पुत्र जीवित हैं तो छोटे पुत्र की युवा संज्ञा होगी और बड़े की गोत्रसंज्ञा। इसके फलस्वरूप बड़े से गोत्रसंज्ञक और छोटे से युवसंज्ञक प्रत्यय होते हैं। अतः गार्ग्यः [ गर्ग का बड़ा पौत्र, ] गार्ग्यायणः [गार्ग्य का छोटा पुत्र]। इसीप्रकार सब में समझना चाहिये॥ १६४॥

सातवीं पीढ़ी तक के लोग सपिण्ड कहे जाते हैं। जिनका—

'दोनों अर्थात् सन्तान के जन्म और मरण में दश दिन तक कुल का अन्न नहीं खाया जाता है। [ जिनका दान, प्रतिग्रह = दान लेना, यज्ञ और स्वाध्याय = वेदाध्ययन बन्द हो जाता है। ]—आदि क्रियाओं में अधिकार नहीं रहता है। भाई से भिन्न सपिण्ड=सात पीढ़ियों में से स्थविरतर [ पद और आयु दोनों में सबसे अधिक ] जीवित रहे तो पौत्र आदि का जो अपत्य [ अर्थात् चौथी पीढ़ी की सन्तान ] जीवित ही है, उसकी युवा संज्ञा विकल्प से होती है। प्रकृत [ पूर्वसूत्र से अनुवृत्त ] 'जीवति' ग्रहण सपिण्ड का विशेषण है अर्थात् सपिण्डे जीवति सति; परन्तु इस सूत्र का 'जीवति' तो संज्ञी = अपत्य का विशेषण है। [ स्थविरतर—इसमें ] तरप् प्रत्यय का निर्देश दोनों = पद और अवस्था के उत्कर्ष के लिये है। पद और अवस्था—इन दोनों की दृष्टि से उत्कृष्ट सपिण्ड के विषय में ही हो सके—इसके लिये ही यह तरप् प्रत्यय है। चाचा, बाबा और भाई कोई-भी यदि अधिक अवस्था वाला जीवित हो तो—गर्ग का अपत्य—गार्ग्यायणः या गार्ग्यः होता होता है। [ जब युवा संज्ञा होती है तो फक् होता है। पक्ष में गोत्रप्रत्यय होता है। ] [ वत्स का अपत्य—] वात्स्यायनः, वात्स्यः। [ दक्ष का अपत्य ]—दाक्षायणः, दाक्षिः।

'उभयत्र दशाहानि कुलस्यान्नं न भुज्यते'। ( मनु० ५.३ )

**इत्येवमादिकायां क्रियायामनधिकारः। भ्रातुरन्यस्मिन् सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्यं जीवदेव युवसंज्ञं वा भवति। प्रकृतं जीवतिग्रहणं सपिण्डस्य विशेषणम्, इदं तु संज्ञिनः। तरब्निर्देश उभयोरुत्कर्षार्थः। स्थानेन वयसा चोत्कृष्टे सपिण्डे यथा स्यात्। पितृव्ये पितामहे भ्रातरि च वयसाधिके जीवति गर्गस्यापत्यं गार्ग्यायणः, गार्ग्यो वा। वात्स्यायनः, वात्स्यो वा। दाक्षायणः, दाक्षिर्वा।**

**स्थविरेति किम्? स्थानवयोन्यूने गार्ग्य एव भवति। जीवतीति किम्? मृते मृतो वा गार्ग्य एव भवति॥**

**न्यासः**

**उभयत्रेति**। जन्मनि मरणे च। **इत्येवमादिकायामिति**। आदिशब्देन निवृत्त्यादिकाः क्रियाश्च गृह्यन्ते। तथा चोक्तम्—

उभयत्र दशाहानि कुलस्यान्नं न भुज्यते।
दानं प्रतिग्रहो यज्ञः स्वाध्यायश्च निवर्तते॥ इति मनु० ५.३ [ प्रक्षिप्तश्लोकः ]॥

**जीवतीति**। सप्तम्येकवचनमेतत्। प्रथमायाश्च स्थाने सुब्व्यत्ययेन सप्तमी विहिता, अत एवाह— **जीवदेवेति**। **तरब्निर्देश इत्यादि**। असति हि तरब्निर्देशे स्थविरशब्दाद् वयःप्रकर्षमात्रं गम्यते, तरपा तु स्थानप्रकर्षोऽपि गम्यते। तस्मादुभयोरुत्कर्षार्थस्तरब्निर्देशः कृतः। **पितृव्ये पितामहे भ्रातरि चेति**। द्वावप्येतौ स्थानत उत्कृष्टौ। स्थानशब्देन चेह सम्बन्धविशेष उच्यते; अनेकार्थत्वाद्धातूनाम्।

**गार्ग्य एव भवतीति**। न गार्ग्यायणः। युवसंज्ञायामसत्यां युवप्रत्ययस्य फकोऽनुत्पत्तेः। **मृते इति**। स्थविरतरे सपिण्डे। **मृतो वेति**। पौत्रप्रभृतिरप्यत्र मृतोऽर्थः॥ १६५॥

**पदमञ्जरी**

पठ्यते, न तत्र समीचीनमर्थं पश्यामः। समानः पिण्डो येषामिति सपिण्डाः,[1] निपातनात् सभावः। **स्मर्यन्त इति**। तद्यथा—'सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते' ( मनु० ५.६० ) इति। सप्तमेऽतीते विनिवर्तत इत्यर्थः। **उभयत्रेति**। जनने मरणे चेत्यर्थः।

**एवमादिकायां क्रियायामिति**। आदिशब्देन 'दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते' इत्यादिका क्रिया गृह्यते। **जीवदेवेति**। वस्तुव्याख्यानमेतत्। सूत्रे तु जीवतीत्याख्यातपदम्, तच्चेदपत्यं जीवतीति, प्रथमार्थे वा शत्रन्तात् सप्तमी व्याख्येया। **तरब्निर्देश इत्यादि**। असति तस्मिन्स्थविरशब्दाद्वयःप्रकर्षमात्रं गम्येत, तरपा तु स्थानप्रकर्षो द्योत्यते, ततस्तदुपादानसामर्थ्यात्, यथा गोतरः, अश्वतर इत्यादावप्रवृत्तिनिमित्तभूतस्यापि वाहदोहादेः प्रकृत्यर्थसम्बन्धिनः प्रकर्षे तरब् भवति, तथात्रापि। स्थानम् = पदम्, पितृत्वादिकम्।

**स्थानवयोन्यूने इति**। स्थानेन वयसा च न्यूने इत्यर्थः। ननु च ज्यायसोत्यनुवृत्तेरेवोभयोः प्रकर्षो लभ्यते, 'प्रशस्यस्य श्रः', 'ज्य च', 'वृद्धस्य च' इत्युभयोर्ज्यादेशविधानात्? तन्न; नहि सकृत्प्रयुक्तः शब्दोऽनेकार्थमभिधातुं समर्थः। एवमपि तरब्निर्देशो न कर्तव्यः, ज्यायसीत्यनुवृत्तेरेव स्थानप्रकर्षलाभात्? एतदपि नास्ति; स्थविर इति विशेषणान्तरोपादाने सति ज्यायसीत्यस्यानुवृत्तेरेव दुर्ज्ञानत्वात्। **जीवतीति किमिति**। श्रुतं प्रकृतं चोभयमधिकृत्य प्रश्नः। अत एवोभयोः प्रयोजनं दर्शयति—**मृते मृतो वेति**। तत्र मृत इति स्वपितरि, मृतो वेति पौत्रप्रभृतेरपत्यभूतोऽर्थः॥ १६५॥

**भावबोधिनी**

स्थविर—इसका कथन किस लिये है? पद और अवस्था में न्यून के लिये गार्ग्यः यही होता है। जीवित रहने पर—यह किसलिये है? [ स्थविरतर या अपत्य दोनों में से ] मृत्यु हो जाने पर अथवा मरा हुआ—गार्ग्य—ही होता है॥१६५॥

---

१. 'पिण्डसम्बन्धिनिबन्धना चेयं सपिण्डता'......'सगोत्रत्वे चेयं सपिण्डता'—इति कुल्लूकभट्टः।

**१४१६. वृद्धस्य च पूजायाम् ॥ १६६ ॥ (१०९२ वा०) (म० भा० ४.१.१६३ वा० ३)**

**अपत्यमन्तर्हितं वृद्धमिति शास्त्रान्तरे परिभाषणाद् गोत्रं वृद्धमित्युच्यते। वृद्धस्य युवसंज्ञा वा भवति पूजायां गम्यमानायाम्। संज्ञासामर्थ्याद् गोत्रं युवप्रत्ययेन पुनरुच्यते। 'वृद्धस्य' इति षष्ठीनिर्देशः, 'विचित्रा सूत्रस्य कृतिः' इति। तत्रभवान् गार्ग्यायणः, गार्ग्यो वा। तत्रभवान् वात्स्यायनः, वात्स्यो वा। तत्रभवान् दाक्षायणः, दाक्षिर्वा। पूजायामिति किम् ? गार्ग्यः। वात्स्यः॥**

न्यासः

**वृद्धस्य च पूजायाम्॥ अपत्यमन्तर्हितमित्यादिना** शास्त्रान्तरेण परिभाषितं यद् वृद्धं तत् परिगृह्यते, न तु यदिह शास्त्रे परिभाषितं तदिति दर्शयति। कुतः पुनरेतदवगतम्—शास्त्रान्तरपरिभाषितमिह वृद्धं गृह्यत इति ? अपत्याधिकारात्। शब्दात्मकस्य वृद्धस्यापत्यत्वासम्भवाद् विज्ञायते। **पूजायां गम्यमानायामिति**। का पुनरिह पूजा विवक्षिता ? युवत्वमेव। तद्धि लोके सर्वप्राणिनामभिमतम्। ननु च नेह युवशब्दो वयःपदार्थको गृह्यते, किं तर्हि ? संज्ञापदार्थकः, तत् कथं ह्यनेन पूजा ? नैष दोषः; पूजाग्रहणसामर्थ्याद्धि वयःपदार्थक एवायं युवशब्दो गोत्रे वर्त्तिष्यते। **संज्ञासामर्थ्यादित्यादिना**। संज्ञाप्रणयनस्य प्रयोजनं दर्शयति। गोत्रप्रत्ययेनाभिहितमपि गोत्रम्। संज्ञासामर्थ्यात् पुनर्युवप्रत्ययो विधीयते गार्ग्यायण इति। अथ किमर्थं वृद्धस्येति षष्ठ्या निर्देशः क्रियते, न वृद्धमिति प्रथमान्तं निर्दिश्यते, एवं हि लघु सूत्रं भवति ? इत्याह—**वृद्धस्येत्यादि**। इतिकरणो हेतौ। यस्माद् विचित्रा सूत्रस्य कृतिः; तस्माद् वृद्धस्येति षष्ठ्या निर्देशः। एवं हि सूत्रे कृते वैचित्र्यं सम्भवतीत्यभिप्रायः। **तत्रभवान् गार्ग्यायण इति**। तत्रभवच्छब्दस्य पूजावचनस्य प्रयोगेण पूजां गमयतीति॥ १६६॥

पदमञ्जरी

**वृद्धस्य च पूजायाम्॥ अपत्यमन्तर्हितमित्यादि**। एतच्चापत्यग्रहणेन वृद्धस्य विशेषणाद् इह परिभाषितस्य च शब्दात्मकस्यापत्यत्वासम्भवात् विज्ञायते। **पूजायां गम्यमानायामिति**। का पुनरत्र पूजा ? **यद्युवत्वमेव**। यद्यपि युवशब्दोऽनपेक्षितप्रवृत्तिनिमित्तमेव संज्ञा, तथापि प्रायेणाल्पवयसो जीवद्वंश्यत्वं सम्भवतीति तदध्यारोपे सति तत्सहचरितं वयोऽपि प्रत्यायितं भवतीति पूजा भवति। **संज्ञासामर्थ्यादिति**। गोत्रस्य सतो युवसंज्ञा विधीयते, गोत्रसंज्ञा चेत्प्रवृत्ता 'एको गोत्रे' इति नियमः प्राप्नोति, ततश्च परमप्रकृतेरेवोत्पन्नेन प्रत्ययेनाभिहित-त्वादप्राप्तोऽपि प्रत्ययोऽस्माद्वचनाद्भवतीत्यर्थः। इह पूर्वत्र सामानाधिकरण्येन संज्ञाविधानात् प्रक्रमाभेदाय तथैव संज्ञा विधातुं युक्ता, कोऽयं वृद्धस्येति षष्ठीनिर्देशः इत्यत्राह—**वृद्धस्येति। षष्ठीनिर्देश इति। इतिकरणो हेतौ, वार्त्तिककारीयं** चेदं सूत्रम्। **वृत्तिकारेण तु सूत्रेषु प्रक्षिप्तम्**। एतेनोत्तरसूत्रं व्याख्यातम्॥ १६६॥

भावबोधिनी

**विमर्श**—पूर्वसूत्र से 'जीवति' इसकी अनुवृत्ति होती है और इस सूत्र में भी 'जीवति' है। इन दोनों में अनुवृत्त होने वाला 'जीवति' यह सपिण्डे का विशेषण बनता है अर्थात् 'सपिण्डे जीवति सति'। प्रस्तुत सूत्र का 'जीवति' यह सप्तम्यन्त पद विभक्तिव्यत्यय से प्रथमा के अर्थ में है—जीवत् एव अपत्यं युवसंज्ञं स्यात्। इस प्रकार स्थविरतर भी जीवित हो और अपत्य भी जीवित हो तभी यह युव संज्ञा होती है। वैकल्पिक है अतः पक्ष में गोत्रसंज्ञा का भी प्रत्यय होता है। १६६॥

अन्य शास्त्रों में अन्तर्हित = व्यवहित अपत्य को वृद्ध कहा है। अतः [ इस शास्त्र के अनुसार ] गोत्र को वृद्ध कहा जाता है। पूजा = सम्मान प्रतीत रहने पर वृद्ध की युवा संज्ञा विकल्प से होती है। संज्ञा का विधान करने के फलस्वरूप युवप्रत्यय द्वारा गोत्र को ही दुबारा कहा जा रहा है। 'वृद्धस्य' यह षष्ठीनिर्देश है, सूत्रकार की विचित्र रचना है। [ अर्थात् वृद्धम्—यह न कह कर षष्ठ्यन्त का प्रयोग प्रौढिवादिता है। ] उदा०—तत्रभवान् गार्ग्यायणः, अथवा गार्ग्यः। [ युवसंज्ञा होने पर फक् होता है। ] तत्रभवान् वात्स्यायनः अथवा वात्स्यः। तत्रभवान् दाक्षायणः अथवा दाक्षिः। [ युव संज्ञा करने पर "यञिञोश्च" ४।१।१०१ से फक् होता है। तत्रभवान् यह सम्मानसूचक शब्द है। ] पूजा में—यह किसलिये है—गार्ग्यः। वात्स्यः।[ यहाँ युवसंज्ञक प्रत्यय नहीं होता है। ]

## १४१७. यूनश्च कुत्सायाम् ॥ १६७ ॥ ( १०९२ वा० )

**कुत्सायां गम्यमानायां यूनो वा युवसंज्ञा भवति। निवृत्तिप्रधानो विकल्पः, युवसंज्ञायां प्रतिषिद्धायां पक्षे गोत्रसंज्ञैव भवति; प्रतिपक्षाभावात्। गार्ग्यो जाल्मः, गार्ग्यायणो वा। वात्स्यो जाल्मः, वात्स्यायनो वा। दाक्षिर्जाल्मः, दाक्षायणो वा। कुत्सायामिति किम्? गार्ग्यायणः॥**

**न्यासः**

**यूनश्च कुत्सायाम्** ॥ ननु च युवसंज्ञा पूर्वमेवाभिनिवृ`त्ता, यदाह—**यूनश्चेति**। न ह्यसत्यां तस्यामयं निर्देश उपपद्यते, तदभिनिवृ`त्तायास्तस्याः पुनर्विकल्पेन विधानमनुपपन्नमित्यत आह—**निवृत्तिप्रधानो विकल्प इति**। नायं विधिप्रधानो विकल्पः, किं तर्हि? प्रतिषेधप्रतिपादनपर इत्यर्थः। सिद्धायां संज्ञायां विधानं नोपपद्यत इति सामर्थ्यादनेन पक्षे निवृत्तिः क्रियत इति विज्ञायते। यद्येवम्, पक्षे युवसंज्ञायां प्रतिषिद्धायां गोत्रसंज्ञा वक्तव्या; अन्यथा यूनो गोत्रप्रत्ययेनाभिधानं न स्यात्? इत्यत आह—**युवसंज्ञायामित्यादि**। गोत्रसंज्ञाया युवसंज्ञा प्रतिपक्षः प्रत्यनीकः। सा चेन्निवृत्ता गोत्रसंज्ञैव प्रवर्तते, प्रतिपक्षाभावात्, अतो न वक्तव्येति भावः। **गार्ग्यो जाल्म इति**। जाल्मशब्दस्य कुत्सावचनस्य प्रयोगेण कुत्सां गमयति। कुत्सा पुनरिह यूनो वृद्धतयाभिधानस्यैवानभिमतत्वात्। अत एवाकुत्सिते युवेति वाक्यार्थं पदमन्वाख्यायते। सा च कुत्सा याञ्या वा ततो वेति विशेषो नाश्रीयते, यथा—कदन्नादिविषये देवदत्तादीनाम् ॥ १६७ ॥

**पदमञ्जरी**

**यूनश्च कुत्सायाम्** ॥ **निवृत्तिप्रधानो विकल्प इति**। न पुनः प्रवृत्तिप्रधान इति; पूर्वमेव प्रवृत्तत्वात्। यदाह—**यूनश्चेति**। न ह्यप्रवृत्तायां तस्यामेष निर्देश उपपद्यते। ननु च निवृत्तिरप्यनिर्वृत्ता या न शक्यते कर्तुम्, यो हि भुक्तवन्तं ब्रूयान्मा भुङ्क्था इति किं तेन कृतं स्यात्। तस्माद् 'यूनश्च' इति निर्देशो युवसंज्ञाविषयो लक्षणार्थः। जीवद्वंश्यस्य चतुर्थादेरिति, न तु युवसंज्ञाशिष्टस्य निर्देश इति वक्तव्यम्। एवं च प्रवृत्तिविकल्पोऽप्युपपद्यते, सा तु प्रवृत्तिरसत्यपि सूत्रे लभ्यत इति मत्वा निवृत्तिप्रधान इत्युक्तम्। **युवसंज्ञायां प्रतिषिद्धायामिति**। तस्या अभावपक्ष इत्यर्थः। **गार्ग्यो जाल्म इति**। का पुनरत्र कुत्सा? गोत्रत्वारोपिणामेव, अजीवद्वंश्या हि गोत्रसंज्ञकाः, ते प्रायेण चरमवयसो भवन्तीति तदारोपे भवति कुत्सा ॥ १६७ ॥

**भावबोधिनी**

**विमर्श**—अष्टाध्यायी में यह सूत्र नहीं है। वार्त्तिककार का वचन है। अतः व्याख्या के लिये इसको रखना और "विचित्रा कृतिः सूत्रकारस्य" ऐसा कहना काशिकाकार की महती अनवधानता का सूचक है ॥ १६६ ॥

कुत्सा प्रतीयमान रहने पर युवा की विकल्प से युवा संज्ञा होती है। यह निवृत्तिप्रधान विकल्प है। युवसंज्ञा का प्रतिषेध हो जाने पर पक्ष में गोत्रसंज्ञा ही होती है, क्योंकि प्रतिपक्ष नहीं है। उदा०—जाल्मः गार्ग्यः, गार्ग्यायणः वा। [ जाल्म—यह कुत्सा का सूचक है। जब युवा संज्ञा होती है तो उसका प्रत्यय और पक्ष में गोत्रप्रत्यय होता है। ] जाल्म वात्स्य अथवा वात्स्यायन। जाल्म दाक्षि अथवा दाक्षायण। कुत्सा में—यह किस लिये है?—गार्ग्यायणः।

**विमर्श**—प्रस्तुत वाक्य भी सूत्र नहीं है। भाष्य में 'जीवद्वंश्यञ्च कुत्सितम्' [ ४।१।१६२ वा० २ ] वार्तिक है। उसे ही यहाँ उक्त सूत्ररूप में प्रस्तुत किया है। यह भी काशिकाकार की अनवधानता ही है। इसी लिये कैयट ने पूर्ववर्त्ती वार्तिक पर स्पष्ट लिखा है—"सूत्रेषु तु 'वृद्धस्य च पूजायाम्" इति कैश्चित् वार्त्तिकदर्शनात् प्रक्षिप्तम्।' ( कैयटप्रदीप ४।१।१६३ ) इसी प्रकार प्रस्तुत वार्तिक पर भी—"'यूनश्च कुत्सायाम्' इति सूत्रमनार्षमिति वचनम्।" ( कैयट प्रदीप ४।१।१६२ ) ॥ १६७ ॥

## १४१८. जनपदशब्दात् क्षत्रियादञ् ॥ १६८ ॥ ( ११८६ )

**जनपदशब्दो यः क्षत्रियवाची तस्मादपत्येऽञ् प्रत्ययो भवति । पाञ्चालः । ऐक्ष्वाकः । वैदेहः ।**

**जनपदशब्दादिति किम् ? द्रुह्योरपत्यं द्रौह्यवः । पौरवः । क्षत्रियादिति किम् ? ब्राह्मणस्य पञ्चालस्यापत्यं पाञ्चालिः । वैदेहिः ।**

### न्यासः

**जनपदशब्दात् क्षत्रियादञ् ॥** जनपदवृत्तिशब्दः पञ्चालादिर्जनपद इत्युक्तः; क्षत्रियवृत्तिः क्षत्रिय इत्यभिधानेऽभिधेयोपचारात्, साहचर्याद्वा । ननु पञ्चालादयः शब्दाः क्षत्रियशब्दाः, ते 'तस्य निवासः' इति तद्धिते कृते तस्य 'जनपदे लुप्' इति लुपि च जनपदे वर्तन्ते, तत् कथमवरकालया जनपदशब्दतया नित्याः क्षत्रियशब्दा विशेष्यन्ते ? कथं पुनः क्षत्रियसम्बन्धादेते जनपदे वर्तन्त इत्येतदभिधातुमर्हति विद्वान् । **सूत्रकारेण** हि 'तदशिष्यं संज्ञाप्रमाणत्वाल्लुब्योगाप्रख्यानात्' इति युक्तवद्भावं लुपश्च प्रत्यादिशता जनपदे क्षत्रियेष्विव स्वत एव पञ्चालादिशब्दस्य वृत्तिरुक्ता । यथा शब्दा नित्यास्तथा पञ्चालादिरपि जनपद इति कुतो जनपदवचनान्ताया अवरकालता ? **पाञ्चाल इत्यादि** । पञ्चालादयः शब्दा देशे सन्तः क्षत्रियवाचिनोऽपि **भवन्ति** स्वभावत एव, तेभ्योऽपत्यार्थेऽञ् । **ऐक्ष्वाक इति** । इक्ष्वाकुशब्दस्य 'दाण्डिनायनहास्तिनायन' इत्यादौ **सूत्रे** उकारलोपो निपातितः ।

**द्रौह्यव इति** । द्रुह्युशब्दः क्षत्रियवचन एव, न जनपदशब्दः, तेनाणेव भवति । **पाञ्चालिर्वैदेहिरिति** । **इह** पञ्चालविदेहशब्दौ भवतो जनपदशब्दौ, न तु क्षत्रियवचनौ । अपि तु ब्राह्मणवचनौ, तेनेञेव भवति ।

### पदमञ्जरी

**जनपदशब्दात् क्षत्रियादञ् ॥ जनपदशब्दो यः क्षत्रियवाचीति** । नन्वेते पञ्चालादयः शब्दाः क्षत्रियशब्दा एव, तत्सम्बन्धात्तु 'तस्य निवासः' इति तद्धिते कृते 'जनपदे लुप्' इति च लुपि जनपदे वर्तन्ते, तत्कथमवरकालया जनपदशब्दतया नित्यक्षत्रियशब्दता लक्ष्यते ? कः पुनराह—क्षत्रियसम्बन्धादेव ते जनपदे वर्तन्त इति, सूत्रकारस्तावत् 'लुब्योगाप्रख्यानात्' इति वदन् क्षत्रियेष्विव जनपदेऽपि स्वाभाविका **पञ्चालादिशब्दस्य** प्रवृत्तिरित्याह **पाञ्चाल इति** । यदपि पञ्चालादयः शब्दा जनपदे बहुवचनान्ताः, क्षत्रिये त्वेकवचनान्ताः, तथापि प्रातिपदिकस्य विशेषणं जनपदत्वम्, न सुबन्तस्येत्येकवचनान्तादपि प्रत्ययो भवत्येव । **ऐक्ष्वाक इति** । इक्ष्वाकुशब्दस्य दाण्डिनायनादिसूत्रे टिलोपो निपातितः ।

**द्रौह्यव इति** । क्षत्रियवचन एवायं न जनपदशब्दः । **ब्राह्मणस्य पञ्चालस्येति** । बाह्वादिप्रभृतिषु येषां दर्शनमित्युक्तत्वात्कथमत्र प्रसङ्ग इति चिन्त्यम् ।

### भावबोधिनी

जनपदवाची जो क्षत्रियवाची है उससे अपत्य अर्थ में अञ् प्रत्यय होता है । उदा०—पाञ्चालः [ पञ्चाल का अपत्य ] । ऐक्ष्वाकः [ इक्ष्वाकु का अपत्य ] । वैदेहः [ विदेह का अपत्य । ये तीनों शब्द जनपद और क्षत्रिय दोनों के वाचक हैं । अतः अञ् प्रत्यय होकर आदिवृद्धि होती है । इक्ष्वाकु का टिलोप निपातन से होता है । ]

जनपदवाचक से—यह किस लिये है ? द्रुह्योरपत्यम्—द्रौह्यवः । [ यह केवल क्षत्रियवाची है । अतः अञ् न होकर अण् होता है । ] पौरवः [ पुरु का अपत्य ] । क्षत्रियवाची से—यह किस लिये है ? पञ्चाल देश के ब्राह्मण का अपत्य—पाञ्चालिः [ यहाँ इञ् ही होता है । ] वैदेहिः ।

**❀ क्षत्रियसमानशब्दाज्जनपदशब्दात् तस्य राजन्यपत्यवत् ❀ ( म० भा० ४.१.१६७ वा० ३ )। पञ्चालानां राजा पाञ्चालः वैदेहः । मागधः ॥**

## १४१९. साल्वेयगान्धारिभ्यां च ॥ १६९ ॥ ( ११८७ )

**साल्वेयगान्धारिशब्दाभ्यामपत्येऽञ् प्रत्ययो भवति । जनपदशब्दावेतौ क्षत्रियाभिधायिनौ ताभ्यामञपवादे 'वृद्धात्' इति ञ्यङि प्राप्ते पुनरञ्विधीयते । साल्वेयः । गान्धारः । तस्य राजनीत्येव – साल्वेयो राजा । गान्धारो राजा ॥**

## १४२०. द्व्यञ्मगधकलिङ्गसूरमसादण् ॥ १७० ॥ ( ११८८ )

**जनपदशब्दात् क्षत्रियाभिधायिनो द्व्यचः, मगध, कलिङ्ग, सूरमस – इत्येतेभ्यश्चापत्येऽण् प्रत्ययो भवति । अञोऽपवादः । आङ्गः । बाङ्गः । पौण्ड्रः । सौह्मः । मागधः । कालिङ्गः । सौरमसः । तस्य राजनीत्येव – आङ्गो राजा ॥**

### न्यासः

**क्षत्रियसमानशब्दादित्यादि ।** क्षत्रियवचन एव शब्द उपचारेण क्षत्रिय इत्युक्तः, जनपदशब्दो जनपद इति । क्षत्रियेण समानः शब्दो यस्य स तथोक्तः तस्मात् क्षत्रियसमानशब्दादस्येति षष्ठीसमर्थाद् राजन्यभिधेयेऽपत्यवत् प्रत्ययोत्पत्तिरिति वक्तव्यम् । 'अवृद्धादपि बहुवचनविषयात्' प्राप्तस्य वुञोऽपवादः । यथा पञ्चालस्यापत्यमित्यत्र भवति पाञ्चालः, तथा पञ्चालानां राजा पाञ्चाल इत्यत्रापि । **मागध इति ।** यथा मगधशब्दादपत्ये 'द्व्यञ्मगध' इत्यादिनाण् भवति, तथा तस्य राजेत्यत्रापि ॥ १६८ ॥

**साल्वेयगान्धारिभ्याञ्च ॥ १६९ ॥ द्व्यञ्मगधकलिङ्गसूरमसादण् ॥ १७० ॥**

### पदमञ्जरी

**क्षत्रियसमानशब्दादिति ।** समानः शब्दो यस्य समानशब्दः, क्षत्रियेण यस्य समानशब्दस्तस्माज्जनपदशब्दात् तस्येति षष्ठीसमर्थाद्राजन्यभिधेयेऽपत्यवत् प्रत्ययो भवति । अवृद्धादपीति प्राप्तस्य वुञोऽपवादः । **क्वचित्तु वृत्तावेवायं ग्रन्थः पठ्यते । मागध इति ।** 'द्व्यञ्मगध' इत्यण् ॥ १६८, १६९, १७० ॥

### भावबोधिनी

* क्षत्रिय वाचक शब्द के समान शब्द वाला जो जनपदवाचक, उस षष्ठ्यन्त समर्थ से 'राजा' अर्थ में अपत्य के समान प्रत्यय होते हैं।" * उदा०—पञ्चालानां राजा [ पञ्चाल देश का राजा। देशविशेष के अर्थ में बहुवचनान्त प्रयोग हुआ है । पञ्चाल + अण्, आदिवृद्धि ] वैदेहः [ विदेह का राजा ] । मागधः [ मगध का राजा ] ॥ १६८ ॥

साल्वेय और गान्धारि शब्दों से अपत्य अर्थ में अञ् प्रत्यय होता है । जनपदवाची ये दोनों शब्द क्षत्रियवाची भी हैं, इनसे अञ् का अपवादभूत "वृद्धात् कोसलादाजाञ्ञ्यङ्" ४।१।१७९ से ञ्यङ् प्रत्यय प्राप्त है, पुनः [ प्रस्तुत सूत्र से ] अञ् का विधान किया जा रहा है। उदा०—साल्वेयः [ साल्वेयानाम् अपत्यम्—इस अर्थ में अञ् आदिवृद्धि ] गान्धारः [ गान्धारि + अञ् भसंज्ञा, इलोप । ] 'उनका राजा—' इस अर्थ में ही होता है—साल्वेयो राजा । गान्धारो राजा ॥ १६९ ॥

जनपदवाचक जो क्षत्रियवाची दो अचों वाला है उससे और मगध, कलिङ्ग, सूरमस—इन शब्दों से अपत्य अर्थ में अण् प्रत्यय होता है । यह अञ् का अपवाद है । उदा०—आङ्गः । [ अङ्ग + अण् आदिवृद्धि । ] बाङ्गः । पौण्ड्रः [ पुण्ड्र + अण् ] । सौह्मः [ सुह्म + अण् ] । मागधः । कालिङ्गः । सौरमसः [ सूरमस + अण ] । 'उसका राजा'—इस अर्थ में ही—आङ्गो राजा ॥ १७० ॥

## १४२१. वृद्धेत्कोसलाजादाञ्ञ्यङ् ॥ १७१ ॥ ( ११८९ )

'जनपदशब्दात् क्षत्रियात्' इत्येव । वृद्धाच्च प्रातिपदिकादिकारान्ताच्च कोसल अजादशब्दाभ्यां चापत्ये ञ्यङ् प्रत्ययो भवति । अञोऽपवादः । वृद्धात्तावत् – आम्बष्ठ्यः । सौवीर्यः । इकारान्तात् – आवन्त्यः । कौन्त्यः । कोसलाजादयोरवृद्धार्थं वचनम् । कौशल्यः । आजाद्यः ।

तपरकरणं किम् ? कुमारी नाम जनपदसमानशब्दः क्षत्रियः, तस्यापत्यं कौमारः ।

❀ पाण्डोर्जनपदशब्दात् क्षत्रियाड्ड्यण् वक्तव्यः ❀ (म० भा० ४.१.१६८) । पाण्ड्यः । अन्यस्मात्पाण्डव एव । तस्य राजनीत्येव – आम्बष्ठ्यो राजा । आवन्त्यः । कौन्त्यः । कौशल्यः । आजाद्यः ॥

### न्यासः

वृद्धेत्कोसलाजादाञ्ञ्यङ् ॥ वृद्धग्रहणेनेह 'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' इति गृह्यते, तस्यैव हि जनपदशब्दता क्षत्रियवाचित्वं च सम्भवति, न शास्त्रान्तरपरिभाषितस्य । **आम्बष्ठ्यः, सौवीर्य इति** । आम्बष्ठसौवीरशब्दाभ्यां ञ्यङ् । **आवन्त्यः, कौन्त्य इति** । अवन्तिकुन्तिशब्दाभ्यां ञ्यङ् । **कौमार** इत्यत्राञ् भवति । **ड्यण् वक्तव्य इति** । क्षत्रियञ्यङोऽपवाद इति, डकारष्टिलोपार्थ इति । स च 'वान्यस्मिन् सपिण्डे' इत्यतपो मण्डूकप्लुतिन्यायेन वेत्यनुवृत्तेर्लभ्यते । तथैवमतिप्रसङ्गो भवति ? व्यवस्थितविभाषात्वात् स न भविष्यति । **अन्यस्मात् पाण्डव इति** । यः पाण्डुशब्दः क्षत्रिये वर्तते, तस्मादौत्सर्गिकेऽणि कृते पाण्डव इति भवति ॥ १७१ ॥

### पदमञ्जरी

वृद्धेत्कोसलाजादाञ्ञ्यङ् ॥ **ड्यण्वक्तव्य इति** । डकारष्टिलोपार्थः, णकारो वृद्धिनिमित्तस्येति पुंवद्भाव प्रतिषेधार्थः । **अन्यस्मादिति** । गुणवचनाद्युधिष्ठिरपितृवचनाच्च । **पुरोरण्वक्तव्यः पौरव इति** क्वचित्पठ्यते, तत्र पुरुशब्दस्याजनपदशब्दत्वात् प्राग्दीव्यतीयेऽणि सिद्धे तद्राजसंज्ञार्थं वचनम् । जनपदवाचित्वे 'द्व्यञ्मगध' इत्येव सिद्धम् ॥ १७१ ॥

### भावबोधिनी

'जनपदशब्दात् क्षत्रियात्' [ जनपदवाची जो क्षत्रियवाची हैं उससे–-] इसकी अनुवृत्ति होती है । वृद्धसञ्ज्ञक और इकारान्त प्रातिपदिक से तथा कोसल एवम् अजाद—इन प्रातिपदिकों से अपत्य अर्थ में ञ्यङ् प्रत्यय होता है । यह अञ् का अपवाद है । पहले वृद्धसंज्ञक से [ ञ्यङ् प्रत्यय के ] उदा०—आम्बष्ठ्यः [ आम्बष्ठ + ञ्यङ् = य, भसंज्ञा, अलोप ] । सौवीर्यः [ सुवीर + ञ्यङ्, आदिवृद्धि, भसंज्ञा, अलोप ] । इकारान्त से—आवन्त्यः [ अवन्ति + ञ्यङ् ] । कौन्त्यः [ कुन्ति + ञ्यङ् ] । कोसल और अजाद शब्दों का वृद्ध न होने के कारण ग्रहण है—कौसल्यः [ कोसल + ञ्यङ् ] आजाद्यः [ अजाद + ञ्यङ् ] ।

तपरकरण [ इत् ] किस लिये है ? जनपद के समान क्षत्रियवाची कुमारी शब्द है [ अर्थात् कुमारी यह जनपद और क्षत्रिय दोनों का वाचक है । ] इसका अपत्य-[ इस अर्थ में ] कौमारः [ कुमारी + अण्, आदिवृद्धि, भसंज्ञा, ईलोप यहाँ ञ्यङ् नहीं होता । ]

* पाण्डु जो जनपदवाची क्षत्रियवाची है उससे ड्यण् प्रत्यय होता है । * उदा०—पाण्ड्यः । [ पाण्डु + ड्यण् = य, डित् होने से टिलोप् ] अन्य अर्थात् जो पाण्डु शब्द केवल क्षत्रिय अर्थ में है, उससे—पाण्डवः [ पाण्डु + अण्, उकार का गुण, अवादेश ] । 'उसका राजा' इस अर्थ में ही होता है—आम्बष्ठ्यः राजा । आवन्त्यः राजा । कौन्त्यः राजा । कौसल्यः राजा । आजाद्यः राजा ॥ १७१ ॥

**१४२२. कुरुनादिभ्यो ण्यः ॥ १७२ ॥ ( ११९० )**

**जनपदशब्दात् क्षत्रियादित्येव। कुरुशब्दान्नादिभ्यश्च प्रातिपदिकेभ्यो ण्यः प्रत्ययो भवति। अणञोरपवादः। कौरव्यः। नकारादिभ्यः - नैषध्यः। नैपथ्यः। तस्य राजनीत्येव - कौरव्यो राजा ॥**

**१४२३. साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ॥ १७३ ॥ ( ११९१ )**

**जनपदशब्दात् क्षत्रियादित्येव। सल्वा नाम क्षत्रिया तन्नामिका, तस्या अपत्यम्, 'द्व्यचः' (४.१.१२१) इति ढक्, साल्वेयः। अणपीष्यते - साल्वः 'तस्य निवासः' साल्वो जनपदः। तदवयवा उदुम्बरादयः, तेभ्यः क्षत्त्रियवृत्तिभ्य इदं प्रत्ययविधानम्। साल्वावयवेभ्यः प्रत्यग्रथकलकूटाश्मकशब्देभ्यश्चापत्ये इञ् प्रत्ययो भवति। अञोऽपवादः। औदुम्बरिः। तैलखलिः। माद्रकारिः। यौगन्धरिः। भौलिङ्गिः। शारदण्डिः। प्रात्यग्रथिः। कालकूटिः। आश्मकिः। तस्य राजनीत्येव - औदुम्बरी राजा।**

न्यासः

**कुरुनादिभ्यो ण्यः ॥** अञणोरपवादः। कुरुशब्दस्य तु द्व्यज्लक्षणस्याणः। कुरुशब्दात् 'कुर्वादिभ्यो ण्यः' इति पूर्वमपत्ये उक्तः। तस्य यो जनपदशब्दः क्षत्त्रियो न भवति, सोऽवकाशः यस्तु जनपदशब्दः क्षत्त्रियस्तस्मात् परत्वादञि प्राप्ते तदपवादो द्व्यज्लक्षणोऽण् स्यात्। अतस्तं बाधितुं पुनर्ण्यो विधीयते ॥ १७२ ॥

**साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ॥ अणपीष्यत इति।** तन्नामिकालक्षणः। कुतो विज्ञायते ? साल्व

पदमञ्जरी

**कुरुनादिभ्यो ण्यः ॥** आदिशब्दो नकारेणैव सम्बध्यते, न कुरुशब्देन; तदादेर्जनपदस्याभावात्, तदाह--**कुरुशब्दान्नकारादिभ्यश्चेति। अणञोरपवाद इति।** कुरुशब्दाद् 'द्व्यच्मगध' इत्यणोऽपवादः, नादिभ्यस्त्वञः। **नैषध्य इति।** कथं 'नैषधोऽर्हति चेदघम्' इति ? **स्वच्छन्दवाच** ऋषयः। कथं 'स नैषधस्यार्थपतेः सुतायाम्' इति ? निरङ्कुशाः कवयः। शेषविवक्षायां वोभयत्राणसमर्थनीयः ॥ १७२ ॥

**साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ॥ सल्वा क्षत्त्रियेति** पाठः, तन्नामिकेति वचनात्, इदं हि तन्नामिकाणः प्राप्त्यर्थमुक्तम्। न च साल्वाशब्दात्तस्य प्राप्तिः, वृद्धत्वात्, सलेर्वप्रत्ययः। **अणपीष्यत इति।** साल्वावयवे अपदातौ साल्वादिति निर्देशात्, न च निपातितोऽण् ढकोऽपवादः, 'साल्वेयगान्धारिभ्यां च' इति निर्देशात्। **तेभ्यः क्षत्त्रियवृत्तिभ्य इति।** 'जनपदशब्दात् क्षत्त्रियात्' इत्यनुवृत्तेरेतल्लभ्यते।

भावबोधिनी

'जनपदशब्दात् क्षत्रियात्' [ जनपदवाची जो क्षत्रियवाची उससे ]—इसकी अनुवृत्ति होती है। कुरु इस शब्द से और नकारादि प्रातिपदिकों से ण्य प्रत्यय होता है। यह अण् और अञ् इनका अपवाद है। उदा०—कौरव्यः [ कुरु+ण्य=य, आदिवृद्धि, उकार का गुण अवादेश ]। नकारादि प्रातिपदिक से—नैषध्यः [ निषध+ण्य, आदिवृद्धि, भसंज्ञा, अलोप ]। नैपथ्यः [ निपथ+ण्य, आदिवृद्धि ]। 'उसका राजा' इसी में होता है—कौरव्यो राजा ॥ १७२ ॥

'जनपदशब्दात् क्षत्रियात्' [जनपदवाची जो क्षत्रियवाची है उससे ]—इसकी अनुवृत्ति होती है। उदा०—सल्वा नाम वाली कोई क्षत्रिया है, उसका अपत्य—इस अर्थ में "द्व्यचः" ४।१।१२१ से ढक् होता है। [ सल्वा+ढक्, ढ=एय, आदिवृद्धि, भ-संज्ञा, आलोप। ] 'उसका निवास'—साल्वः जनपद [ सल्वा+अण्, आदिवृद्धि ]। "तस्य निवासः" [ इससे अण् होता है—] साल्वः जनपदः। उसके अवयव उदुम्बर आदि हैं, क्षत्रियवाची उनसे इस प्रत्यय का विधान है। साल्व के अवयव—प्रत्यग्रथ, कलकूट, अश्मक—इनसे अपत्य अर्थ में इञ् प्रत्यय होता है। यह अञ् का अपवाद है। उदा०—औदुम्बरिः [ उदुम्बर+इञ् आदिवृद्धि ] तैलखलिः [ तिलखल+इञ् ]। माद्रकारिः [ मद्रकार+इञ् ] यौगन्धरिः [ युगन्धर+इञ् ]। भौलिङ्गिः [ भुलिङ्ग+इञ् ]। शारदण्डिः [ शरदण्ड+इञ् ]। प्रात्यग्रथिः [ प्रत्यग्रथ+इञ् ]। कालकूटिः [ कलकूट+इञ् ]। आश्मकिः [ अश्मक+इञ् ]। 'उसका राजा' इस अर्थ में—औदुम्बरी राजा [ उदुम्बर+इञ्, आदिवृद्धि, सन्धि के कारण "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ६।३।१११ से इकार का दीर्घ। ]

उदुम्बरास्तिलखला मद्रकारा युगन्धराः ।
भुलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिताः ॥

**१४२४. ते तद्राजाः ॥ १७४ ॥ ( ११९२ )**

**'जनपदशब्दात् क्षत्रियादञ्' ( ४.१.१६८ ) इत्येवमादयः प्रत्ययाः सर्वनाम्ना प्रत्यवमृश्यन्ते, न तु पूर्वे; गोत्रयुवसंज्ञाकाण्डेन व्यवहितत्वात् । तेऽञादयस्तद्राजसंज्ञा भवन्ति । तथा चैवोदाहृतम् ।**

**तद्राजप्रदेशाः – 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' ( २.४.६२ ) इत्येवमादयः ॥**

**१४२५. कम्बोजाल्लुक् ॥ १७५ ॥ ( ११९४ )**

**'जनपदशब्दात् क्षत्त्रियात्' ( ४ १.१६८ ) इत्यनेन विहितस्याञो लुगुच्यते । कम्बोजात् प्रत्ययस्य लुग् भवति । कम्बोजः ।**

*** कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थम्[1] * ( म० भा० ४.१.१७५ वा० १ ) । कम्बोजः । चोलः । केरलः । शकः । यवनः । तस्य राजनीत्येव – कम्बोजो राजा ॥**

**न्यासः**

इति निपातनात् । तदवयवा जनपदानां वाचकाः क्षत्त्रियाणां समाना भवन्ति । अतस्तेऽप्यौपचारिकं साल्वापदेशमासादयन्ति ॥ १७३ ॥

**ते तद्राजाः ॥ गोत्रयुवसंज्ञाकाण्डेन व्यवहितत्वादिति ।** गोत्रयुवसंज्ञाप्रकरणं हि यदन्तरा व्यवधायकं कृतं तस्यैतदेव प्रयोजनम् । तेन ये व्यवहिताः पूर्वेऽणादयस्तेषां 'ते तद्राजाः' इत्यत्र सर्वनाम्ना प्रत्यवमर्शो मा भूदिति । **तथा चैवोदाहृतम् ।** 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इत्यत्र कार्याश्रयमुदाहृतम् । इह तु प्रकरणे रूपाश्रयम् ॥ १७४ ॥

**कम्बोजाल्लुक् ॥ चोलः, शक इति ।** द्व्यज्मगधलक्षणस्याणो लुक् । केरल इत्यञः ॥ १७५ ॥

**पदमञ्जरी**

**'उदुम्बरास्तिलखलाः' इति श्लोकः** प्रदर्शनार्थः । तेन बुस, अजमीढ, आजकन्द—इत्येतेभ्योऽपि भवति, तथा च भाष्य उदाहृतम्—बौसिः, आजमीढिः, आजकन्दिरिति । **साल्वावयवसंज्ञिता इति ।** साल्वावयव— इत्येवं शब्दिता इत्यर्थः ॥ १७३ ॥

**ते तद्राजाः ॥ तथा चैवोदाहृतमिति ।** तत्र 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इत्यत्र कार्याश्रयमुदाहृतम्, इह तु प्रकरणे रूपाश्रयम् ॥ १७४॥

**कम्बोजाल्लुक् ॥ चोलः, शक इति ।** 'द्व्यज्मगध' इत्यस्याणः । केरल इत्यत्राञः ॥ १७५ ॥

**भावबोधिनी**

उदुम्बर, तिलखल, मद्रकार, युगन्धर, भुलिङ्ग, और शरदण्ड इन्हें साल्वायव कहा जाता है ॥ १७३ ॥

'जनपदवाची जो क्षत्रियवाची उनसे अञ् होता है' ४।१।१६८ [आदि से विहित] अञ् आदि प्रत्यय 'ते' [वे प्रत्यय] इस सर्वनाम के द्वारा परामृष्ट = बोधित होते हैं, न कि इससे पूर्व वाले; क्योंकि गोत्र और युवा संज्ञा वाले प्रत्ययों के समुदाय से व्यवहित हो जाते हैं । [ और अव्यवहित का ही परामर्श होता है । ] उन अञ् आदि प्रत्ययों की तद्राज संज्ञा होती है । जैसा कि [ पञ्चाल + अञ् = पाञ्चालः आदि ] उदाहरण दिये जा चुके हैं । इस तद्राज संज्ञा के लक्ष्य—'तद्राजस्य बहुषु तेनैवास्त्रियाम्' २।४।६२ आदि है ॥ १७४ ॥

"जनपदशब्दात् क्षत्रियादञ्" ४।१।१६८ इस सूत्र द्वारा विहित अञ् प्रत्यय का लुक् कहा जाता है । कम्बोज से [ तद्राज ] प्रत्यय का लुक् होता है । उदाहरण—कम्बोजः [ कम्बोज + अञ्, इसका लुक् ] । * चोल आदि के लिये

---

१. 'चोडाद्यर्थम्' इति वा पाठः महाभाष्ये ।

**१४२६. स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ॥ १७६ ॥ ( ११९५ )**

**अवन्ति-कुन्ति-कुरुशब्देभ्य उत्पन्नस्य तद्राजस्य स्त्रियामभिधेयायां लुग्भवति। अवन्तिकुन्तिभ्यां ञ्यङः, कुरोर्ण्यस्य। अवन्ती। कुन्ती। कुरूः। स्त्रियामिति किम् ? आवन्त्यः। कौन्त्यः। कौरव्यः॥**

**१४२७. अतश्च[1] ॥ १७७ ॥ ( ११९६ )**

**'स्त्रियाम्' इत्येव। अकारप्रत्ययस्य तद्राजस्य स्त्रियामभिधेयायां लुग्भवति। तकारो विस्पष्टार्थः। शूरसेनी। मद्री। दरत्।**

**न्यासः**

**स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ॥ अवन्ती। कुन्तीति।** तद्धितलुकि कृते 'इतो मनुष्यजातेः' इति ङीष्। **कुरूरिति।** 'ऊङ्' इत्यूङ् ॥ १७६ ॥

**अतश्च ॥ तकारो विस्पष्टार्थ इति।** तकारे ह्यसति 'अस्य' इति निर्देशेन भवितव्यम्, ततश्च समानत्वाद् निर्देशस्य सन्देहः स्यात्—किमयमवर्णस्य निर्देशः ? आहोस्वित् इदमः ? इति। तकारे तु सत्येष दोषो न भवति; तपरस्य वर्णेष्वेव प्रसिद्धत्वात्। दीर्घनिवृत्त्यर्थस्तु तकारो न भवति, दीर्घस्यासम्भवात्। **सूरसेनी। मद्रीति।** सूरसेनशब्दाद् योऽञ्, मद्रशब्दाद् यो द्व्यज्लक्षणोऽण्—तयोर्लुकि कृते 'जातेरस्त्रीविषयादयोपधात्' इति ङीष्। **दरदिति।** दरच्छब्दाद् द्व्यज्मगधलक्षणस्याणो लुक्।

**पदमञ्जरी**

**स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ॥ अवन्ती, कुन्तीति।** लुकि कृते 'इतो मनुष्यजातेः' इति ङीष्। **कुरूरिति।** 'ऊङुतः' ॥ १७६ ॥

**अतश्च ॥ तकारो विस्पष्टार्थ इति।** असति हि तस्मिन् 'अस्य' इति निर्देशः स्यात्, ततश्च सन्देहः स्यात्— किमयं वर्णनिर्देशः ? आहोस्विदिदम इति ? इदमश्च निर्देशेऽनन्तरस्येञो लुक् प्रसज्येत, तकारे सत्येष दोषो न भवति, तपरनिर्देशस्य भूयसा वर्णेष्वेव प्रसिद्धत्वात् 'तपरस्तत्कालस्य' इति संज्ञाकरणाच्च। कथं 'माद्रीसुतौ पुष्पफले समृद्धे' इति ? स्वच्छन्दवाच ऋषयः, मद्रीसुतावित्येव वा पाठ्यम्।

**भावबोधिनी**

कम्बोजादि से लुक् कहना चाहिये। * उदाहरण—कम्बोजः। चोलः। केरलः। शकः। यवनः। [ इन सभी में जनपद-वाची क्षत्रियवाची मानकर अञ् होता है। उसका लुक् होता है। ] 'उसका राजा—'इस अर्थ में लुक् होता है—कम्बोजः राजा ॥ १७५ ॥

स्त्रीलिङ्ग वाच्य रहने पर अवन्ति, कुन्ति और कुरु—इनसे होने वाले तद्राज प्रत्यय का लुक् होता है। अवन्ति और कुन्ति से ञ्यङ् प्रत्यय का तथा कुरु शब्द से ण्य प्रत्यय का लुक् होता है। उदाहरण—अवन्ती [ अवन्ति + ञ्यङ् लुक् करके "इतो मनुष्यजाते" ४।१।६५ से ङीष् = ई होता है।] कुन्ती [ कुन्ति + ञ्यङ्, शेष पूर्ववत् ] कुरूः [ कुरु + ण्य, लुक्, "ऊङुतः" ४।१।६६ से ऊङ् होता है ]।

स्त्रीलिङ्ग में—इसका क्या फल है ? आवन्त्यः [अवन्ति + ञ्यङ् = य, भसंज्ञा, इलोप, आदिवृद्धि। अवन्ती देश का पुरुष अपत्य। अतः लुक् नहीं होता है ] कौन्त्यः। कौरव्यः ॥ १७६ ॥

'स्त्रियाम्' [ स्त्रीलिङ्ग में ]--इसकी अनुवृत्ति होती है। स्त्रीलिङ्ग अर्थ वाच्य रहने पर तद्राज-संज्ञक अकार प्रत्यय का लुक् होता है। तकार विस्पष्टता = असन्दिग्धता के लिए है। उदा०—शूरसेनी [ शूरसेन की स्त्री अपत्य। शूरसेन + अञ्, लुक् होने से आदिवृद्धि नहीं होती है। ङीप् ] मद्री [ मद्र की स्त्री अपत्य ]। दरत् [ दरद् + अण्, इसका लुक् होता है ]।

---

१. अतिप्राचीनपुरतकद्वये चशब्दरहितं सूत्रं दृश्यते।

**अवन्त्यादिभ्यो लुग्वचनात् तदन्तविधिरत्र नास्ति, तेनेह न भवति – आम्बष्ठ्या । सौवीर्या ॥**

**१४२८. न प्राच्यभर्गादियौधेयादिभ्यः ॥ १७८ ॥ ( ११९७ )**

**प्राच्येभ्यो भर्गादिभ्यो यौधेयादिभ्यश्चोत्पन्नस्य लुग् न भवति । 'अतश्च' ( ४.१.१७७ ) इत्यनेन स्त्रियां लुक् प्राप्तः प्रतिषिध्यते । प्राच्येभ्यः क्षत्त्रियेभ्यस्तावत् – पाञ्चाली । वैदेही । आङ्गी । वाङ्गी । मागधी । भर्गादिभ्यः – भार्गी । कारूषी । कैकेयी । यौधेयादिभ्यः – यौधेयी । शौभ्रेयी । शौक्रेयी ।**

न्यासः

यदि 'अतः' इति वर्णस्येदं ग्रहणम्, एवं सति वर्णग्रहणं तदन्तविधिं प्रयोजयतीतीहापि प्राप्नोति-- आम्बष्ठ्या, सौवीर्या इति ? अत आह--**अवन्त्यादिभ्यो लुगित्यादि** । यद्यत्र तदन्तविधिः स्यादवन्त्यादिभ्यो लुग्वचनमनर्थकं स्यात्; अनेनैव सिद्धत्वात् । तदन्तविधावसत्यकारग्रहणमात्रेण न सिध्यतीत्यवन्त्यादिभ्यो लुग्वचनमर्थवद् भवति ॥ १७७ ॥

**न प्राच्यभर्गादियौधेयादिभ्यः ॥ पाञ्चाली वैदेहीति** । जनपदशब्दादित्यादिनाङ् । 'शार्ङ्गरवाद्यञो ङीन्' । **आङ्गी, मागधीति** । 'द्व्यञ्मगध' इत्यादिनाण् । 'जातेरस्त्रीविषयादयोपधात्' इति ङीष् । भर्गशाल्वशब्दाभ्यां द्व्यञ्मगधलक्षणोऽण् । शेषेभ्यस्त्वञ् । **भार्गीत्यादौ** पूर्ववत् ङीष् । **यौधेयी, शौक्रेयी, शौभ्रेयीति** । यौधेय-शौक्रेय-शौभ्रेयशब्देभ्यः स्वार्थे 'पर्श्वादियौधेयादिभ्योऽणञौ' इत्यञ् । भार्गीत्यादौ पूर्ववद् ङीष् ।

पदमञ्जरी

**अवन्त्यादिभ्यो लुग्वचनादिति** । यद्यत्र तदन्तविधिः स्यादवन्त्यादिभ्यो लुग्वचनमनर्थकं स्याद्; अनेनैव सिद्धत्वाद् । तदन्तविधौ त्वसति अकारमात्रस्य ग्रहणेन सिध्यतीत्यवन्त्यादिभ्यो लुग्वचनमर्थवद् भवति ।।१७७।।

**न प्राच्यभर्गादियौधेयादिभ्यः ॥ पाञ्चालीत्यादि** । पञ्चालादयः शरावत्याः प्राञ्चो जनपदाः । भर्गादिग्रहणमप्रागर्थम् । भृञो गः, भर्गः । कृञ उः, करुः, तमोषति = द्वेष्टि, मूलविभूजादित्वात् कः, करूषाः । चिनोतेः कयः आदेश्च कः, बहुलवचनादित्संज्ञाभावः, केकयः । कशेर्मिरः, कश्मीरः । साल्वशब्दो निरुक्तः । शोभनानि स्थलान्यस्य सुस्थलः । उरसा शेते उरशः । 'कुर्वादिभ्यो ण्यः' कौरव्यः । **यौधेयीत्यादि** । युधाया अपत्यम्, शुभ्राया अपत्यम्, 'द्व्यचः' इति ढक् । शुभ्राशब्दात् 'शुभ्रादिभ्यश्च' इति, ततः स्वार्थे 'पर्श्वादियौधेयादिभ्यः' इत्यञ् । यद्यञो लुक् स्याड्ढग्लक्षणे ङीपि सति उदात्तनिवृत्तिस्वरः स्यात्, लुकि तु प्रतिषिद्धे 'शार्ङ्गरवाद्यञः' इति ङीनि सत्याद्युदात्तं भवति ।

भावबोधिनी

अवन्ति आदि से लुक् का विधान करने के कारण यहाँ तदन्तविधि नहीं होती है । इसलिये यहाँ लुक् नहीं होता है—आम्बष्ठ्या । सौवीर्या ।

**विमर्श**—यहाँ तात्पर्य यह है कि वर्णग्रहण में तदन्तविधि होने के कारण अकार से अकारान्त प्रत्यय का ग्रहण सम्भव हो जाता है । फलतः ञ्यङ्=य प्रत्यय का भी लुक् होने में बाधा नहीं है । फिर भी "स्त्रियामवन्तिकुन्ति०" ४।१।१७६ से जो ञ्यङ्=य प्रत्यय का लुक् किया गया है वही यह ज्ञापित करता है कि प्रस्तुत सूत्र में तदन्तविधि नहीं होती है । केवल अकार प्रत्यय का ही लुक् होता है । इस प्रकार "स्त्रियामवन्ति०" ४।१।१६ से लुग्वचन सार्थक होता है ॥ १७७ ॥

प्राच्य = पूरबवाले, भर्ग आदि और यौधेय आदि से उत्पन्न प्रत्यय का लुक् नहीं होता है । 'अतः' ४।१।१७७ से स्त्रीलिङ्ग में प्राप्त होने वाले लुक् का प्रतिषेध होता है । प्राच्य क्षत्रियवाची से—पाञ्चाली । [ पञ्चाल + अञ्, आदिवृद्धि, ङीप् ] । वैदेही । आङ्गी । वाङ्गी । मागधी । [ पञ्चाल आदि की स्त्री अपत्य—यह अर्थ है । ] भर्ग आदि से—भार्गी कारूषी । कैकेयी [ भर्ग + अण् शेष पूर्ववत् ] यौधेय आदि से—यौधेयी । [ युधाया अपत्यम्—इस अर्थ में "शुभ्रादिभ्यश्च"

**कस्य पुनरकारस्य प्रत्ययस्य यौधेयादिभ्यो लुक् प्राप्तः प्रतिषिद्ध्यते ? पाञ्चमिकस्याञः 'पर्श्वादियौधेयादिभ्यामणञौ' ( ५.३.११७ ) इत्येतस्य । कथं पुनस्तस्य भिन्नप्रकरणस्थस्यानेन लुक् प्राप्नोति ? एतदेव विज्ञापयति – पाञ्चमिकस्यापि तद्राजस्य 'अतश्च' इत्यनेन लुग्भवतीति । किमेतस्य ज्ञापनेन प्रयोजनम् ? पर्श्वाद्यणः स्त्रियां लुक् सिद्धो भवति । पर्शूः । रक्षाः । असुरी । तथा चोक्तम् – 'यौधेयादिप्रतिषेधो ज्ञापकः पर्श्वाद्यणो लुक्' ( म० भा० ४.१.१७७ वा० २ ) इति ।**

**भर्ग । करूष । केकय । कश्मीर[1] । साल्व । सुस्थाल । उरश[2] । कौरव्य । भर्गादिः ।**

**न्यासः**

**कस्य पुनरित्यादि** । येनाभिप्रायेण पृष्टवान् तं **कथमित्यादिना** आविष्करोति । **पर्श्वादीत्यादि** । पर्शूः = क्षत्त्रियः, जनपदेन समानशब्दः, तस्यापत्यं स्त्रीत्वविशिष्टम् । 'द्वयच्मगध' इत्यादिनाण्, तस्य 'अतश्च' इति लुक् । 'पर्श्वादियौधेयादिभ्योऽणञौ' इत्यनेनापि यः स्वार्थिकोऽण्, तस्यापि लुक् । **एवं रक्षाः** । असुरशब्दाज्जन-

**पदमञ्जरी**

**कस्य पुनरिति** । अस्य वक्ष्यमाणोऽभिप्रायः, तमेव प्रकाशयति—**कथं पुनरिति** । परिहरति—**एतदेवेति पर्शुरिति** । पर्शुः क्षत्त्रियो जनपदेन समानशब्दः, तस्यापत्यं सङ्घः, स्त्रीत्वविशिष्टः, 'द्वयच्मगध' इत्यण्, तस्य अतश्च' इति लुक्, पुनः पर्श्वादिलक्षणः स्वार्थिकोऽण्, तस्यापि लुक् । **एवं रक्षा इति** । रक्षसः क्षत्त्रियस्यापत्यम्, स्त्रीत्वविशिष्टः सङ्घः, पूर्ववदण्, द्वयस्यापि लुक्, 'अत्वसन्तस्य' इति दीर्घः । **आसुरीति** । जनपदलक्षणस्याञो लुकि पर्श्वादिलक्षणस्याणो लुक्, जातिलक्षणो ङीष् । ज्ञापकत्वमेव द्रढयति—**तथा चोक्तमिति** । वार्त्तिककारेणैवुक्तम् । यौधेयादिषु त्रयो निरुक्ताः; ज्ययासहितो बाणो यस्याः सा ज्याबाणा, तस्या अपत्यं ज्याबाणेयः । **ज्यावानेय** इत्यन्ये पठन्ति, तत्र ज्यावानो यस्या ज्यावाना । 'घृ क्षरणे' 'धृ धारणे' आभ्यां क्विजन्ताभ्याम्

**भावबोधिनी**

४।१।१२३ से ढक् = ढ = एय आदिवृद्धि, भसंज्ञा आलोप—यौधेय बनाकर ''पार्श्वादियौधेयादिभ्यः'' ५।३।११७ से स्वार्थिक अण् प्रत्यय, लुक् का प्रतिषेध, ङीन् = ई ] शौभ्रेयी । शौक्रेयी । [ शुभ्रायाः स्त्री अपत्यम्, शुक्रायाः स्त्री अपत्यम् । शेष प्रक्रिया पूर्ववत् ] ।

यौधेय आदि शब्दों से किस अकार प्रत्यय के लोप का प्रतिषेध किया जाता है ? पञ्चम अध्याय के ''पार्श्वादियौधेयादिभ्यामणञौ ५।३।११७ से होने वाले अण् प्रत्यय के अकार के लोप का । अन्य प्रकरण में स्थित उस अकार का लोप इस प्रकरण के सूत्र से कैसे प्राप्त होता है ? यह [ निषेध ] ही ज्ञापित करता है—पञ्चम अध्याय वाले भी तद्राजसंज्ञक प्रत्यय का लुक् ''अतश्च'' ४।१।१७७ इस सूत्र से होता है । इसके ज्ञापन का क्या प्रयोजन ? पार्श्वादि से होने वाले अण् का स्त्रीलिङ्ग में लुक् सिद्ध हो जाता है । पर्शूः । रक्षाः । असुरी । जैसा कि कहा गया है—यौधेय आदि से लुक् का प्रतिषेध पार्श्वादि—अण् के लुक् का ज्ञापक है ।'

इस गण में पठित शब्द—भर्ग । करूष । केकय । कश्मीर । साल्व । सुस्थाल । उरश [ उरस ] । कौरव्य । [ ये भर्गादि हैं । ]

---

१. 'काश्मीर' – इति वा पाठः ।

२. 'उरस' इति वा पाठः ।

३. 'ज्यावानेय' इति वा पाठः ।

**यौधेय । शौभ्रेय । शौक्रेय । ज्याबाणेय[3] । घार्त्तेय । धार्त्तेय । त्रिगर्त्त । भरत । उशीनर । यौधेयादिः ॥**

**॥ इति श्रीजयादित्यविरचितायां काशिकावृत्तौ चतुर्थाध्यायस्य प्रथमः पादः ॥**

**न्यासः**

पदशब्दादित्यादिनाञ्, तदन्तात् पूर्ववत् स्वार्थिकोऽण्, तयोर्लुक् । तथा चेत्यादिना ज्ञापकमेव भाष्यकारमतेन द्रढयति ॥ १७८ ॥

**॥ बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां चतुर्थाध्याये प्रथमः पादः समाप्तः ॥**

**पदमञ्जरी**

'इतश्चानिञः' इति ढक्, घार्त्तेयः, धार्त्तेयः । त्रयो गर्त्ता येषां ते त्रिगर्त्ताः । 'भृञोऽतच्', भरतः । वशेः कर्मणि किः, उशिः, उशयः, उष्टा नरा यस्य स उशीनरः, 'अन्येषामपि दृश्यते' इति दीर्घः ॥ १७८ ॥

**॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां चतुर्थाध्यायस्य प्रथमः पादः ॥**

**भावबोधिनी**

यौधेय । शौभ्रेय । शौक्रेय । ज्याबाणेय । घार्तेय । धार्त्तेय । त्रिगर्त्त । भरत । उशीनर । ये यौधेयादि हैं ।

**विमर्श**—युधाया स्त्री अपत्यम्—इस अर्थ में शुभ्रादिगणीय मानकर अथवा दो अचों वाला मानकर ढक् = ढ = एय, आदिवृद्धि, भसंज्ञा आलोप करने पर यौधेय बनता है । इसके बाद स्वार्थ में ही "पर्श्वादियौधेयादिभ्योऽणिञौ" ५।३।११७ से अण् और अञ् ये दो प्रत्यय होते हैं । इसीलिये किसी ने अण् और किसी ने अञ् के लुक् का संकेत किया है । अन्तर यह है कि अञ् करने पर 'शार्ङ्गरवाद्यञो ङीन्' ४।१।७३ से ङीन् होता है और अण् करने पर ङीप् । यदि अञ् प्रत्यय का 'अतश्च' ४।१।१७७ से लुक् हो जाता तो ढक् प्रत्ययान्त मानकर ङीप् होता जिससे उदात्तनिवृत्ति होती । इस सूत्र से लुक् का प्रतिषेध हो जाने के फलस्वरूप अञन्त मानकर 'शार्ङ्गरवाद्यञो ङीन्' ४।१।७३ से ङीन् होने पर "ञ्नित्यादिर्नित्यम्" ६।१।१९७ से आद्युदात्त होता है । इस प्रकार अञ् के लुक् या लुक्निषेध में कोई अन्तर न होने पर भी अञ् प्रत्यय में होता है । चूँकि अञ् की तद्राज संज्ञा होती है उसके लुक् का निषेध होता है । अण् के लुक् का निषेध नहीं होता है । इसलिये पर्शु—इसका अपत्य अर्थ में अण्; इसका भी "अतश्च" ४।१।१७७ से लुक् । पुनः स्वार्थिक अण्; इसका भी "अतश्च" ४।१।१७७ से लुक्, ऊङ् करने पर पर्शूः बनता है । यह जनपद और क्षत्रिय दोनों के लिये हैं । अतः पर्शु की स्त्री अपत्य—यह अर्थ होता है । १७८ ॥

**॥ इस प्रकार जयादित्यविरचित काशिकावृत्ति में चतुर्थ अध्याय का प्रथम पाद समाप्त हुआ ॥**

**॥ इस प्रकार आचार्य जयशङ्करलाल-विरचित-'भावबोधिनी' हिन्दी-व्याख्या में काशिकावृत्ति के चतुर्थ अध्याय का प्रथम पाद समाप्त हुआ ॥**

—:०:—

# पाणिनीय-सूत्र-सूची

## शुद्धाशुद्धिपत्रम्

| पृष्ठानि | पङ्क्तयः | अशुद्धः | शुद्धः |
|---|---|---|---|
| १ | २८ | अनुवृत्ति | अनुवृत्त |
| ७१ | १० | तयति | तयेति |
| ९१ | ५ | अव तस्त्रोर्घञ् | अव तॄस्त्रेर्घञ् |
| १२० | १ | १४७ वा० | १४७ |
| १५७ | ६ | शां | शां० |
| १७३ | १५ | आभीक्ष्ण्येत्त्नाभीक्ष्ण्ये | आभीक्ष्ण्येऽनाभीक्ष्ण्ये |
| १७३ | २४ | चाग्रत्रादिषु | चाग्र्यादिषु |
| १७५ | २० | पर्यायौ | पर्यायौ |
| १८० | १४ | यत्ष्क्षतिवचने | यत्प्रतिवचने |
| १९३ | २४ | तृतीययाम् | तृतीयायाम् |
| १९५ | ८ | परिक्लेशः सर्वतो | परिक्लेशः=सर्वतो |
| २०२ | ३ | स्वाङ्ग | स्वाङ्गे |
| २२० | ३३, ३४, ३५ | ध्रॉव्य | ध्रौव्य |
| २२१ | २ | देवदत्तों | देवदतो |
| २३० | १३ | तमादय | तामादय |
| २३६ | २७ | अयादे | अयाश |
| २३६ | ३७ | उद्धरणोऽयम् | उद्धरणम् । |
| २३८ | ५ | निवृत्ततम् | निवृत्तम् |
| ३११ | १६ | अपरिमाणस्तिबाचित० | अपरिमाणबिस्ताचित० |
| ३३८ | १२ | पात्रम् कुण्डा | पात्रम् । कुण्डा |
| ३४८ | २५ | संविधातृत्वात् | संविधातृतत्वात् |
| ३५८ | ३० | २-१ तत्रदं | १-२. तत्रेदं |
| ३९३ | ४ | स्वार्थेप्रकृत्यर्थे | स्वार्थे=प्रकृत्यर्थे |
| ४३३ | ४ | इदञ् | इञ् |
| ४४९ | ३२ | लोहिकतादिन्तेभ्यः | लोहितादिकतन्तेभ्यः |
| ४५४ | १२ | तन्नमिकाणि | तन्नामिकाणि |
| ४८० | २४ | फाण्टाह्यति | फाण्टाहृतिः |
| ४९१ | २० | शक्यवच्छेदेन | शक्त्यवच्छेदेन |
| ५०१ | २ | पाञ्चालः वैदेहः | पाञ्चालः । वैदेहः |
| ५०२ | १२ | इत्यतपो | इत्यतो |